# विज्ञापना

अनन्तानन्तमहाविभूतेः अनवधिककल्याणगुणगणमहोदधेः भक्तजनासेचनकदिव्यमङ्गलविग्रहस्य परमपुरुषस्य विभूतीनां कल्याणगुणगणानां दिव्यमङ्गलविग्रहस्य चापलापरूपस्य निर्विशेषाद्वैतस्य प्रतिकोटिभूतं सविशेषाद्वैतं जगति प्रतिष्ठापितवस्तु भगवद्रामानुजमुनिषु नूनमास्तिकलोकः सर्व एव सर्वथाऽधमर्ण इति नाभिमानमूलं वचः ।

शाङ्करैः — न तु शङ्करैः — प्रतितिष्ठासितम् अद्वैतं कीदृग्विपत्कारीति खण्डनग्रन्थपरिशीलनपराणां निर्मत्सराणां करबदरायेत तत्त्वं, यः किल ग्रन्थः अद्वैतवादस्य माध्यमिकशून्यवादसोदरत्वं, कण्ठत एव प्रतिष्ठापयति । अत एव खलु तमिमं खण्डनकारं शङ्करमतावलम्बी विद्यारण्यः स्वीयशङ्करविजये शङ्करपराजितं वर्णयति (16–167) ।

परन्त्विदमत्र प्रमोदस्थानं, यद्बहवो विमर्शनविचक्षणाः एतादृशं निर्विशेषवादं शङ्कराचार्यानभिमतं मन्यन्त इति ।

भगवदपचारमात्रफलकस्य नास्तिक्यपरमभूमेः एतादृशवादस्य निरसनेन जगदेव श्रीरामानुजमुनिभिः रक्षितं मन्यमाना देशिकसत्तमा अपि

> यतीश्वरसरस्वतीसुरभिताशयानां सतां
> वहामि चरणाम्बुजं प्रणतिशालिना मौलिना ।
> तदन्यमतदुर्मदज्वलितचेतसां वादिनां
> शिरस्सु निहितं मया पदमदक्षिणं लक्ष्यताम् ॥

इत्युद्घोषयन्ति । सारत. कथने, अत्र पूर्वार्धे भगवद्विभूतिकल्याणगुणदिव्यमङ्गलविग्रहाभ्युपगन्तारः आस्तिकाः उत्तरार्धे च तदनभ्युपगन्तारो नास्तिका एव च विवक्षिताः, न व्यक्तिनिग्रहो व्यक्तिनिन्दा वेति मन्तव्यम् । भगवत्कल्याणगुणाद्यनुभवरसपरिचयवतामेव तदपलापिजनेषु कियानाक्रोशो भवेदिति ऊहितुं वा शक्यम् ।

एतादृशस्य निर्विशेषाद्वैतवादस्य प्रतिकोटिभूतं सविशेषाद्वैतं प्रतिपादयदिदं श्रीभाष्यम् अनितरसाधारणज्ञानानुष्ठानवैराग्यदीक्षिभिः, भगवद्विभूतिविशेषैः, वस्तुतो रामानुजसिद्धान्तनिर्धारणसार्वभौमैः, श्रीमत्कविकथककण्ठीरवचरणनलिनविन्यस्तसमस्तारम्भैः, यतिप्रवरभारतीरसभरेणैव वयो नीतवद्भिः, श्रीलक्ष्मीहयग्रीवदिव्यपादुकासेवकश्रीमदभिनवरङ्गनाथब्रह्मतन्त्रपरकालमहादेशिकैः महाकृपालुभिः स्वीयगूढार्थसंग्रहाख्य-

टिप्पण्या जिज्ञासाधिकरणान्तं प्रथमसंपुटे मुद्रापयित्वा प्रकाशितमिति विदितचरमेव जगतः। द्वितीय-सम्पुटेऽस्मिन् चमसाधिकरणान्तो भागः प्रकाश्यते।

हन्त! विधिविलसितम्! यच्चमसाधिकरणान्तयैव ग्रन्थरचनया सन्तुष्यन्निव तुषारकिरणमण्डलमण्डनो भगवां स्तुरङ्गवदनः व्यतरदमुष्मै स्वाराधकाय यतिवराय स्वकीयं परमं पदम् (१९६६ तमे क्रैस्ताब्दे)।

इदानीम् एतेषां कृपापात्रभूताः श्रीपरकालमठीयश्रीलक्ष्मीहयवदनास्थान्यामभिषिक्ताः श्रीमत्परमहंसेत्यादि-बिरुदाङ्किताः श्रीलक्ष्मीहयवदनदिव्यपादुकासेवाहेवाकाः श्रीमदभिनवश्रीनिवासब्रह्मतन्त्रपरकालमहादेशिकाः श्रीमत्सु संयमिवर्येषु स्वकीयं भावबन्धमभिसन्दधानाः तत्कृतग्रन्थान् साकल्येन प्रकाश्य तेषु कृतज्ञतां निजा-स्थानीधूर्वहनरूपां प्रकटयितुं कृतमहासङ्कल्पा वर्तन्ते।

तमेतं सङ्कल्पं निरवर्तयत्स भगवान्हयास्यः स्वयं सुप्रसन्नः संयमिवरकरकमलयुगलसमर्पितेन निजपद-सरोजयुगलीकाशमानेनानेन श्रीकोशेन स्वमुखोल्लासं प्राचीकशन्महामहिम्नि हयग्रीवजयन्त्याख्ये निजावतार-महोत्सवदिवसेऽस्मिन्निति नितरां प्रमोदहृदनिमग्नो विद्वान् विज्ञापयति।

विदुषामनुचर श्रीमदाचार्यचरणानामन्तेवासी
मैसूरु श्रीमन्महाराजसंस्कृतमहापाठशालाया निवृत्तव्याकरणप्रधानोपाध्याय
विद्वन्मणिः सरगूरु श्रीनिवासवरदाचार्यः



# विषयानुक्रमणिका

## प्रथमाध्याये प्रथमपादे



## द्वितीयपादे



## तृतीयपादे



## चतुर्थपादे





# एतत्संपुटस्थसूत्राणां सूची

## अथ जन्माद्यधिकरणम्.२

### श्रीभाष्यम्

**किं पुनस्तद्ब्रह्म ? यज्जिज्ञास्यमुच्यत इत्यत्राह—**

### श्रुतप्रकाशिका

२.सूत्रम्—'जन्माद्यस्य यतः'। अथ शास्त्रकाण्डद्विकाध्यायपादपेटिकाऽधिकरणरूपसन्निधिभेदेन सप्तविधासु सङ्गतिषु सङ्गत्यन्तराणां स्पष्टत्वादधिकरणसङ्गतिमाह—**किंपुनरिति**। शास्त्रसङ्गतिर्हि वेदार्थविचाररूपतया स्पष्टतरा। वेदान्तार्थविचाररूपत्वात्काण्डसङ्गतिः, कारणविषयत्वाद्द्विकसङ्गतिः, कारणविषयवाक्य*तर्करूपत्वादध्यायसङ्गतिः अयोगव्यवच्छेदविश्रान्तेः पादसङ्गतिः। शास्त्रारम्भार्थत्वात्पेटिकासङ्गतिः, अतोऽवान्तरसङ्गतिः किंपुनरित्यादिभाष्येणोच्यते। जिज्ञास्य विचार्ये * सकलेतरपुरुषार्थतत्साधनपरित्यागपूर्वकं प्राप्यत्वेनोपायत्वेन च यज्जिज्ञास्यमुक्तमित्यर्थः। प्राप्यतया प्रापकतया च हि ब्रह्मापाततःप्रतिपन्नम्। *अनेन जिज्ञास्यमिति पदेन प्रणववेदप्रधानाद्यौपचारिकार्वाचीनब्रह्मशब्दार्थव्यावृत्तिः, तच्च व्यावर्तकस्य लक्षणस्य वक्तव्यतयाऽपि हि सिद्ध्यति ब्रह्मशब्दवाच्य स्वरूपेण गुणैश्च निरतिशयबृहत्त्वयोगि— 'बृहति बृंहयति' 'बृहत्वाद्बृंहणत्वाच्च ब्रह्मेति परिपठ्यते' इति श्रुतिस्मृतिनिर्वचनात्॥

तत्र 'ब्राह्मणोवै सर्वा देवताः' 'नकिरिन्द्रत्वदुत्तरः' 'अग्निस्सर्वादेवताः' 'एक एव रुद्र.' 'सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः। जनिताऽग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः' 'आपो वा इदगॅंसर्वम्' इत्यादिभिर्ब्राह्मणाग्नीन्द्रादीनामपि समाभ्यधिकराहितत्वप्रतीतेरर्थतत्व व्याकुलम् अत स्तेषु तापत्रयातुरजिज्ञास्य तत् ब्रह्म किंलक्षणकमित्यर्थः। सर्वेषां समाभ्यधिकराहित्ये प्रतीतेऽपि तद्व्याहतमन्यतरवाक्याव-गतत्वेत्यनादरणीयम्। तत्त्वप्रधानेषु सृष्टिप्रळयप्रकरणेषु यदेव निरतिशयबृहदुक्तं तदेव जिज्ञास्यमित्यभिप्रायेणाह—'यतोवा इमानि' इत्यादिश्रुतिरितीममर्थं हृदि निधाय सूत्रकारेण जन्मादिसूत्रं प्रणीतमित्यभिप्रायवतोक्तं किंपुनस्तद्ब्रह्म यज्जिज्ञास्यमुच्यतइति नहि किंपुनस्तद्ब्रह्मे युक्तम्॥

### गूढार्थसंग्रह.

#### अथ जन्माद्यधिकरणम्.२

प्रथमसूत्रे अधिकारी निरूपितः। द्वितीयसूत्रं विषयनिरूपणपरम्। यद्यपि 'ब्रह्मेतितावद्विषयः' (ता-टी) इति प्रथमसूत्रे ब्रह्मशब्देन विषयो निर्दिष्टः। अथापि ब्रह्मशब्दार्थव्यक्तिविशेषानिर्णयमन्तरा विषयनिर्णयो न सम्भवति। ब्रह्मशब्दार्थनिरतिशयबृहत्त्वं वेदवाक्येषु बहुषु व्यक्तिषु प्रतिपाद्यते। 'अग्निस्सर्वादेवताः' इत्यादिवेदवाक्यानि व्यासार्यैरुदाहृतानि। व्यक्तिविशेषनिर्णयमन्तरा विषयनिर्णयासम्भवेन तन्निर्णयार्थं द्वितीयसूत्रमित्यभिप्रेत्य अवतारयति— **किं पुनस्तद्ब्रह्म इत्यादिना**। किंपुनर्जिज्ञास्यमित्यनभिधाय किंपुनस्तद्ब्रह्मेत्युक्त्या विषयः प्रथमसूत्रे उद्दिष्टः विशेषनिर्णयः अत्रेति बोधितम्, कः कीदृशः इत्यादिजिज्ञासाक्रमे कइति जिज्ञासा प्रथमसूत्रे शान्ता। कीदृशइति जिज्ञासानुवृत्तिः द्वितीयसूत्रे। उद्देशो लक्षण परीक्षा, इति क्रमे उद्देशः, प्रथमसूत्रे लक्षणं द्वितीयसूत्रे कीदृश इति जिज्ञासा लक्षणेनैव शाम्यति। किंपुनस्तद्ब्रह्म इति सूत्रे किंशब्दस्य ब्रह्मशब्दार्थतावच्छेदकव्याप्यधर्मप्रकारकजिज्ञासाविषय. अर्थः। किंशब्दस्य स्वसमभिव्याहृतपदार्थताऽवच्छेदकव्याप्यधर्मप्रकारकजिज्ञासाविषये शक्तेः गदाधरादिभिर्निर्णयात्। व्याप्यधर्मश्च लक्षणमेव। एवञ्च

श्रीभाष्यम्

## सू.१—जन्माद्यस्य यतः १.१.२

### (जन्मादीति) सृष्टिस्थितिप्रळयम् ।

श्रुतप्रकाशिका

सूत्रमुपादत्ते—**जन्माद्यस्य यत** इति । प्रथम पद व्याचष्टे—**जन्मादीति। सृष्टिस्थितिप्रळयमिति** । अन्यत्पदद्वयं वाक्यार्थयोजनाया व्याख्यास्यते । प्रथमपदव्याख्यानस्य समासार्थनिर्णयार्थं वाक्यान्तरसापेक्षत्वेन वाक्यार्थयोजनायामन्तर्भावयितुमशक्यत्वात्तस्य पृथग्व्याख्यानम्। सृष्टिस्थितिप्रळयमित्यत्र सृष्टिशब्द उत्पत्तिपरः। **'सृष्टिस्थित्यन्तकालेषु' 'सृष्टिस्थित्यन्तरकरणीम्'** इत्यादिप्रयोगात् प्रयोज्यप्रयोजकव्यापारवाचिशब्दाना व्यतिकरेण प्रयोगो ब्रह्मणएव निमित्तोपादानत्वाभिप्रायनिबन्धनः। सृष्टिस्थितिप्रळयमिति समाहारार्थे द्वन्द्वः । एकस्मिन्कार्येऽन्योन्यसापेक्षतया तुल्यनिष्पादकत्वेनान्वय इतरेतरयोगः—यथा दर्शपूर्णमासयोस्स्वर्गप्रति । अत्र समुदितविवक्षा अयमेव समुदायविवक्षाया समाहारः । तत्कृतमेकवचनत्व नपुसकत्वं च । अतोऽत्र सृष्टिस्थितिप्रळयमिति समाहारे द्वन्द्वःकृतः ॥

वाक्यार्थयोजनाया सृष्टिस्थितिप्रळया इतीतरेतरयोगद्वन्द्वःकृतः उभयोरपि फलैक्यात् । जन्मादीतीत्यत्रेतिकरणेन तत्रैकवचने तात्पर्यं गम्यते । तत्र पदार्थयोजनाया सृष्टिस्थितिप्रळयमित्येकवचनान्तपदेन सौत्रपदस्यैकवचनमनुसृत तत्राप्येकवचनं सृष्टिस्थितिप्रळयाना समुदायो लक्षणं नत्वेकैकमिति ज्ञापनार्थम् । समुदायस्य लक्षणत्व श्रुतिस्वारस्यादवसीयते-**'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति'** इत्यत्रहि न प्रतिवाक्यं तद्ब्रह्मेत्युक्तम् अन्यथैकतरलक्षणवैयर्थ्यं च स्यात् ॥

गूढार्थसंग्रह.

लक्षणमुखेन ब्रह्मपदार्थनिर्णयः द्वितीयसूत्रे इति विषयनिर्णयपरत्वमस्य सूत्रस्य सपन्नम् । एतेन शब्दसामान्यस्य सिद्धार्थे व्युत्पत्तिः प्रथमसूत्रे, ब्रह्मपदस्य व्यक्तिविशेषे व्युत्पत्तिः द्वितीये, इत्युभयोरेकपेटिकात्व सिद्ध्यति । यथोक्तमाचार्यपादैः—'द्वाभ्यामादौ प्रतीतिप्रजननमुचितं सिद्धरूपे परस्मिन्' इति ॥

*अत्र अवतरणवाक्ये 'किंपुनस्तद्ब्रह्म' इत्यनेन 'अधीहि भगवो ब्रह्म' इति वाक्य, यत्तच्छब्दाभ्या, ब्रह्मशब्देन,* जिज्ञास्यमुच्यत इत्यनेन च 'तस्मा एतत्प्रोवाच' इति 'यतो वा इमानि भूतानि' इत्यादि 'तद्विजिज्ञासस्व, तद्ब्रह्म' इत्यन्तविषयवाक्यं च विवक्षितमर्थतस्सगृहीत भवति ॥

**जन्मादीति सृष्टिस्थितिप्रळयमिति** । 'यतोवा इमानि भूतानि जायन्ते' इति श्रुतौ जनिधातुप्रयोगेण सूत्रे 'जन्मादि' रयुक्तम् । छान्दोग्ये—'तदैक्षत बहुस्या प्रजायेय' इति 'तत्तेजोऽसृजत' इत्यादौ जनिधात्वर्थस्यैव सृजधातुनाऽभिधानेन तदभिप्रायेण सृष्टिस्थितिप्रळयमिति भाष्ये उक्तम् । एतेन सद्विद्यावाक्यैकार्थ्यमानन्दमयविद्यावाक्यस्य सूचितम्। तेन 'ईक्षतेर्नाशब्दम्' इत्यत्रोपक्रमे सद्विद्यावाक्यविचारः एतदभिप्रायेणेति बोधितम्। एवं छान्दोग्ये भूतत्रयकथनेऽपि अत्र तैत्तरीये भूतपञ्चकोक्तया सद्विद्यायामपि भूतपञ्चकं विवक्षितमिति सूत्रकाराशयो व्यञ्जितः । एवं सूत्रकाराशयाङ्गीकार एव 'न वियदश्रुतेः' इत्यादिसूत्रसङ्गतिः । तत्राकाशस्योत्पत्तिनिरूपणेन ब्रह्मकार्यत्व साध

## गूढार्थसंग्रहः

विध्यते । एवमेव पूर्वं 'सोऽकामयत, बहुस्यां प्रजायेयेति, स तपोऽतप्यत, स तपस्तप्त्वा, इदꣳ सर्वमसृजत, यदिदं किंच तत्सृष्ट्वा, तदेवानुप्राविशत, तदनुप्रविश्य, सच्चत्यच्चाभवत्' इत्यादि श्रूयते । अत्रापि वक्ष्यमाणसृजिधात्वर्थ एव जनिधात्वर्थ इति सर्वसमतम् । अत्र जनिधात्वर्थघटित एव सृजिधात्वर्थः, सृजेस्सकर्मकत्वात् । एवंचानुप्रवेशसहपठितसृष्टिघटिका जनिरेव जन्मादीत्यत्र जन्मशब्देन विवक्षितेति सिद्ध्यति । अनुप्रवेश एव 'सच्चत्यच्चाभवत्' इत्याद्युक्ताभेदे मूलमिति श्रुतावेव व्यक्तम् । उपनिषद्द्वये बहुस्यामित्युक्त्या जनेः भगवत्पर्यन्तत्वं स्फुटम् । सद्विद्यायां नामरूपव्याकरणश्रुत्या तद्दृढीकृतम् । एवं मृत्तत्कार्यदृष्टान्तकथनेन परिणाम्युपादानत्वमपि ब्रह्मणः तत्र बोधितम् । अतश्च सद्विद्यायां मृत्तत्कार्यदृष्टान्तकथनेन 'बहुस्याम्' इत्युभयत्रोक्त्या अनुप्रवेशस्याभेदहेतुताऽभिधानेन च परिणाम्युपादानत्वमेव ब्रह्मणः उभयत्र विवक्षितम् । एतत्तात्पर्येणैव प्रकृत्यधिकरणे परिणामादिति वक्ष्यते । तत्र च 'सच्चत्यच्चाभवत्' इतिश्रुतिः परैरप्युदाहृता । (श)भाष्यादिव्याख्यातृभिः कार्यात्मना परिणामः विवक्षितः सन् मिथ्यापरिणामेऽप्युपपद्यते । सिद्धान्ते 'तस्माद्वा एतस्मात्' इत्यत्र प्रकृतिविशिष्टबोधकपदाभावेन उपपादनकारणत्वविवक्षा नैव सम्भवतीत्युक्तम् । भामत्यां कल्पतरौ च वाक्यकारसिद्धान्तः अयमेवेत्युक्तम् ॥

तथापि 'परिणामात्' इत्यस्य मिथ्यापरिणामबोधकत्वे नैव किञ्चिन्मानम् । कल्पतरूदाहृतवाक्यकारवाक्यानि न परमतसाधकानीति पूर्वाधिकरण एव प्रतिपादितम् । शुक्तिरजतादिदृष्टान्तः भामत्यादिप्रोक्तः । एतदर्थस्य श्रुतौ विवक्षितत्वे कारणत्वपरश्रुतावयं दृष्टान्तः नाभिहितः । किंच परमते रजतंप्रति शुक्तिर्नैवविवर्तोपादानम् । अपितु शुक्त्यवच्छिन्नचिदेव, अस्मिन्नर्थे नप्रमाणं न दार्शनिकसमतिश्च । 'तस्माद्वा एतस्मादात्मनः' इत्यत्र आत्मन्शब्दस्य व्यापकचेतनवाचित्वेन कारणत्वानुगुण्येन सूक्ष्मचिदचिद्व्यापकब्रह्मण एवोपस्थित्या उपादानकारणताऽवच्छेदकरूपं स्फुटम् । तस्मादित्यनेनास्य रूपस्य श्रुत्यन्तरप्रसिद्धत्वमपि व्यक्तम् । एवंचाभेदमूलानुप्रवेशसहपठितसृजिधात्वर्थान्तर्भूतजनिरेव उपनिषद्द्वयप्रमिता जन्मादीत्यत्र जन्मशब्देन विवक्षिता । एतेन कारणवाक्यानामेव परब्रह्मनिर्णायकत्वं अनेनैवाभेदनिर्णयात् । तैत्तिरीये पूर्वमुक्ताभेद एव छान्दोग्ये उपक्रमे मृत्तत्कार्यदृष्टान्तानुसारेण 'सन्मूलाः' इत्याद्युक्तत्वात् 'तत्त्वमसि' इत्यत्रापि विवक्षित इति अभेदवाक्यानां न प्राधान्यं किंतु कारणवाक्यानामेवेति सिद्धया परोक्तामैकत्वप्रतिपत्त्यर्थत्व निरवकाशम् ॥

एतेन 'उपनिषदिति वेद इत्यपीदं समभिवदन्ति महावचो महान्तः । ' 'सर्वत्रैव महागिरामुपनिषच्छब्दो भवेद्वाचकः वेदस्यायमतोऽन्यदस्य निकटं तेनात्र वेदादिगीः ॥' इति सङ्क्षेपशारीरकोक्तिरपि सूत्रकाराशयप्रातिकूल्येव । 'ब्रह्मविदाप्नोति परम्' इति वाक्यस्यब्रह्मपदार्थप्रश्नस्य जगत्कारणत्वेन निर्णयपरप्रतिवचनवाक्यापेक्षया परसमतमहावाक्यानां उत्कर्षस्य सुतरामसंभवात् । अभेदवाक्यानां कारणवाक्योत्तरत्वेन उपक्रमे उपादानकारणतायाः प्रतिपादने तेनैवाभेदोऽपि साधितो भवतीत्युपक्रमादिषड्विधतात्पर्यलिङ्गोपेतत्वेन महावाक्यानां प्राबल्यं न सम्भवतीति व्यासेनैव निर्धारितं भवति । एवमर्थविशेषबोधनायैव 'यतोवा' इति श्रुत्यनुसारेण सूत्रे जन्मशब्दप्रयोगेऽपि एतच्छ्रुतिपूर्ववाक्यश्रुत्यन्तरार्थपर्यालोचनेन जन्मशब्दार्थनिर्धारणाय सृष्टिस्थितिप्रळयमिति सृष्टिशब्दःप्रयुक्तः । श्रुतौ 'येन जातानि जीवन्ति' इतिजीवधातुः प्रयुक्तः. 'जीवन्ति प्राणान् धारयन्ती'ति परेषां (उ) भाष्यम् । एवम् 'इमानि ब्रह्मादिस्तम्बपर्यन्तानि भूतानि जायन्ते' इत्यर्थः. इति च । बहुत्र सर्वभूतशब्दः गी.भा.प्राणिपरः परैर्व्याख्यातः । श्रुतौ जीवधातुप्रयोगेण शरीरसम्बद्धजीवरूपार्थप्रतीत्या अत्र जीवविवक्षा स्फुटा । छान्दोग्ये 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इत्यत्र तैत्तिरीये 'तदेवानुप्राविशत् तदनुप्रविश्य' इत्यत्र च अन्वित्युपसर्गेण सर्वव्यापकस्य प्रवेशः परिमितकार्याणां परिणामकाले तादृशपरिणामविशिष्ट

## श्रीभाष्यम्

### तद्गुणसंविज्ञानो बहुव्रीहिः

### श्रुतप्रकाशिका

न च समुदितलक्षणत्वे व्यावर्त्याभावात्। नहि जगदुत्पत्तौ निमित्तोपादानभूतं स्थित्यादिकारणत्वव्यवच्छेद्यं किमपि वस्तु स्तीति चेत्—सत्यम्, व्यवच्छेद्यं नेष्यते। तथाऽपि श्रुत्यनुरोधात् सूत्रकारेणैवमुक्तम्। श्रुतिश्च 'तद्विजिज्ञासस्व' इति विधि त्सितोपासनोपयोगिनिरतिशयबृहत्त्वविपरीतात्वृद्धहशङ्काव्यवच्छेदार्थं समुदायमाह—शङ्कितव्यवच्छेदेनापि हि सप्रयोजनत्व स्यात् लक्ष्याकारविपरीतशङ्कानिराकरणेन विना लक्ष्याकारनिश्चयायोगात्। न च जन्मादिष्वेकैककारणत्व लक्ष्याकारविपरी-तशङ्कानिराकरणक्षमम्। तथाहि उत्पत्तिकारणत्वेऽभिहितेऽपि स्थित्यादिकारणान्तरचेत् तदनुगुणज्ञानशक्तिविरहात्, स्थितिप्र लयकारणभूतवस्त्वन्तरसद्भावाच्च जन्ममात्रकारणस्य निरतिशयबृहत्त्वं न स्यात्। मुक्तेर्लयान्तर्भावान्मोक्षप्रदतयोपास्यस्यैव प्राप्यत्वाच्च, मोक्षप्रदत्वप्राप्यत्वानुगुणैर्गुणैश्च बृहत्त्वं न। अतो जन्मकारणत्वमात्रस्य समस्तवस्तुव्यवच्छेदक्षमत्वेऽपि जन्मादि-समुदायकारणत्वस्यैव निरतिशयबृहत्त्वौपयिकत्वात् सृष्टिस्थितिप्रळयसमुदायकारणत्वं लक्षणमिति ज्ञापितम्॥

समुदायस्य लक्षणत्वमिहाविवक्षितं जन्मादीति बहुव्रीहेरन्यपदार्थप्रधानत्वेन जन्मनोऽनन्तर्भूतत्वादित्यत आह—तद्गुणेति।

### गूढार्थसंग्रहः

व्याप्तितात्पर्येण प्रयुक्त इति निश्चीयते। व्याप्तिश्च स्थित्यर्थः। जन्मादीत्यत्र जन्मशब्द अनुप्रवेशकालिकजनेर्विवक्षितत्वे व्याप्तिप्रतीत्या व्याप्तिफलभूतस्थितिरेव आदिशब्दार्थतया सूत्रे विवक्षित इत्यभिप्रेत्य सृष्टिस्थितिप्रळयमित्यत्र स्थितिशब्द। अन्तर्यामित्वकृतसत्तानुवृत्तिलक्षणा स्थितिः बहिर्भूतमातापित्रादिमुखेन इष्टानिष्टप्राप्तिपरिहारलक्षणा स्थितिश्चेति द्विविधा स्थितिः अन्तर्बहिर्व्याप्तिफलभूताऽत्र विवक्षिता। एतत्स्थितिद्वयस्यैव एव जीवधात्वर्थप्राणधारणमिति प्रसिद्धम्। व्याप्त अनुग्रहार्थं च 'यद्भूतेषु वसत्यपि, सर्वानुग्राहकत्वतः' इति (व्र वि) उपनिषदि प्रसिद्धम्। श्रुतौ वास 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इति श्रुत्यन्तरानुसारात् व्याप्तिनिबन्धनं श्रुतौ जन्मस्थित्यो क्रमेणोक्त्या प्रयन्तीत्यत्रैव प्रलयो विवक्षित इति परे नवीना अपि। 'अभिसंविशन्ति' इत्यत्र मुक्तिर्विवक्षितेति नवीनाः। वस्तुतस्तु 'ब्रह्मवि दाप्नोति परम्' इति प्राप्यत्वेनोक्तब्रह्मण एवात्र कारणत्वलक्षणस्य विवक्षितत्वेन प्रयन्तीत्यत्र धातो आप्नोतिसमानार्थकत्वेन च प्रयन्तीत्यत्र प्राप्तिरेव विवक्षिता। प्राप्तिश्च मुक्तकर्तृकेति पूर्वमेव निर्णीतम्॥

धातोः प्राप्त्यर्थप्रसिद्ध्यभावेन उपसर्गबलादेवार्थान्तरप्रतीतेरावश्यकतया 'प्रयन्ति' इत्यत्र धातोरेव प्राप्त्यर्थप्रसि द्ध्या तत्र प्राप्तिविवक्षणं स्वरसम्। अत 'अभिसंविशन्ति' इत्यत्र लय इत्येव विवक्षितम्। प्रयन्तीत्यत्र लय अभिसं भव तीत्यत्र मुक्तिश्चेति विवक्षा न युक्ता। सृष्टिस्थित्योः करुणामूलकत्वेन सृष्टिवाक्यानां साफल्यमिति प्रागेव निरूपितम्। करुणामूलकफलपर्यवसानत्तु मुक्तावेवेति करुणामूलकवाक्यान्तरफलप्रतिपादनानन्तरं परमफलप्रतिपादनमेव युक्तम्। मुक्तेरात्य न्तिकलयत्वेनापि व्यवहारात् आत्यन्तिकलय तदतिरिक्तलयश्च एकयच्छब्दघटितवाक्य एव सगृहीतइति 'अभिसंविशन्ति' इत्यत्र विवक्षितप्रलय एव सृष्टिस्थितिप्रळ्यामत्यत्र प्रलयशब्दार्थ। सृष्टेः फलस्य मुक्तिपर्यन्तत्वेन सृष्टिवाक्यानां प्राधान्य अभे दवाक्यानां चाप्राधान्य दृढीकृतं भवति। 'अभिसंविशन्ति' इत्यत्र मुक्तिरप्यवगाऽऽङ्गीकारपक्षेऽपि सिद्धान्तोक्तार्थप्रतिपत्ते नानुपपत्तिः। 'जन्मादीति' नपुंसकलिङ्गनिर्देशानुसारेण सृष्टिस्थितिप्रळयम् इत्युक्तिः॥

तद्गुणसंविज्ञानो बहुव्रीहिरिति। जन्मादीत्यत्रेतिशेषः। अन्यपदार्थप्रधानतया जन्मन अत्रबोध

## श्रुतप्रकाशिका

बहुव्रीहिर्द्विविधः तद्गुणसंविज्ञानोऽतद्गुणसंविज्ञानश्चेति । तत्र प्रथमस्योदाहरणं—'सर्वादीनि सर्वनामानि, लम्बकर्णमानय' इत्यादि । द्वितीयस्योदाहरणं चित्रगुमानय इति । तच्छब्देन विशेष्य गुणशब्देन विशेषणं च विवक्षितम् । संविज्ञानशब्देन संविज्ञानं कार्यान्वितत्वेन सहप्रत्यायनमित्यर्थः । एवमपि बहुव्रीहेरन्यपदार्थप्रधानत्वभङ्गः—स्वपदार्थविशिष्टसमुदायस्य तत्समुदायिनोऽन्यपदार्थतया विवक्षितत्वोपपत्तेः । समासस्वपदार्थग्रहणेऽपि विशिष्टसमुदायान्तर्गताकारेणान्यपदार्थानां ग्रहणं । स्वपदमात्रस्य तेनाकारेण तद्वाचकत्वाभावात् ॥

अस्मिन् व्याख्येयपदोपादानम् अचिन्त्येत्यादिना तद्व्याचष्टे । अस्येति पदस्य जगत इत्येतावन्मात्रे वक्तव्ये किमर्थो विस्तार इति चेत् सूत्रकाराभिमतार्थकथनार्थः, तद्विरुद्धा च श्रुतिविरोधात् । श्रुतिविरोधः कथं स्यादिति चेत्; उच्यते—'यतो वा इमानि भूतानि जायन्ते' इत्यत्र भूतशब्देन कार्यवर्गेऽभिहितेऽपि इमानीतिपदं कार्यवर्गस्य धर्मिग्राहकप्रमाणसिद्धाकारविशेषपरम् तत्र जगत आभासतावरत्व ब्रह्मणो जिज्ञास्यतानुपयोगीति वैचित्र्यपरमिमानीतिपदं ईदृशकार्यनिष्पादनानुगुणगुणोत्कर्षं वदतीति भावार्थम् । श्रुतिवाक्यस्थेदंशब्देन निर्दिष्टमस्सूत्रकारस्याप्ययमेव विवक्षा । जगतः इमानीति श्रुतौ बहुवचनेऽप्यत्र सौत्रमेकवचनं कृत्स्नस्य भुवनस्यैककार्यतया विशेषणैककर्तृकत्वज्ञापनार्थं भूतशब्दस्य देवादिचतुर्विधभूतमात्रपरत्वाद्वर्तनेन भवनक्रियायोगित्वस्य कार्यसमुदायान्तर्गतत्वज्ञापनार्थं च । अत एव हि भाष्ये जगत इत्युक्तम् । तत्र कार्यवर्गस्य विचित्रत्वात् तत्प्रकारसिद्धचिदचिद्वैचित्र्यमचिन्त्येत्यादिपदद्वयेनाह ॥

ननु गुहाधिकरणे गुहां प्रविष्टावित्यत्र उद्देश्यगतविशेषणे विवक्षाऽभावादेकवचने तात्पर्याभाव उक्तः तेन न्यायेन प्रसिद्धवन्निर्देशरूपतया अनुवादरूपस्य इदंशब्दस्याप्यविशेषणे तात्पर्याभावेनैव व्याख्यातव्यम् । नैवम् गुहाधिकरणोद्देश्यविशेषणमात्रविवक्षा न विषिद्धा अपि त्वनुवादस्य मूलभूतप्रापकवाक्यात्तार्थविरुद्धविशेषणेहि तात्पर्याभाव उक्तः । उत्पत्तिवाक्यसिद्धस्य गृहबहुत्वस्य विरुद्धैकत्वम् अन्यथा 'अष्टवर्षं ब्राह्मणमुपनयीत' इत्यत्राप्यष्टवर्षत्वादिविशेषणे तात्पर्याभावप्रसङ्गात् । अत्र तु प्रापकवाक्येषु जगद्वैचित्र्यमेव स्पष्टम् । यद्वा यत्र प्रयुक्तस्य शब्दस्यार्थाविवक्षायामन्यथानुपपत्त्या आनर्थक्यं तत्रोद्देश्यविशेषणविवक्षा तदनपाङ्गीकृता तस्मादेव व्याख्यातुं युक्तम् ॥

## गूढार्थसङ्ग्रहः

एवं न स्यादिति शङ्काया नावकाशः । उक्तं च 'सर्वादीनि सर्वनामानि' (१.१.२६) इति सूत्रे महाभाष्ये सर्वशब्द आदिः येषां तानीमानि' इति बहुव्रीहिकथनानन्तरं 'यद्येवं सर्वशब्दस्य सर्वनामसंज्ञा न प्राप्नोति । किं कारणम् ? अन्यपदार्थत्वाद्बहुव्रीहेः । बहुव्रीहिरयमन्यपदार्थे वर्तते । तेन यदन्यत्सर्वशब्दात्तस्य सर्वनामसंज्ञा प्राप्नोति । तद्यथा । चित्रगुरानीयतामिति युक्तं यस्य ता गावो भवन्ति स आनीयते न गावः, नैष दोषः भवतिहि बहुव्रीहौ तद्गुणसंविज्ञानमपि । तद्यथा 'चित्रवाससमानय' लोहितोष्णीषा ऋत्विजः प्रचरन्ति इति तद्गुण आनीयते तद्गुणाश्च प्रचरन्ति' इत्युक्तम् ॥

अत्र प्रदीपे—'तस्य अन्यपदार्थस्य गुणाः—उपलक्षणानि तेषामपि कार्ये संविज्ञानं तद्गुणसंविज्ञानम् । तत्र चित्रगुरानीयतामिति स्वस्वामिभावसम्बन्धः षष्ठ्यर्थ इति स्वविशेषोपलक्षितस्य स्वामिन एवानयनं न गवाम् । 'दण्डी विषाणी चानीयताम्' इत्यत्र तु संयोगसमवायलक्षणसम्बन्धेन सन्निधाने कार्ये विज्ञायमाने उपलक्षणस्याप्यन्तर्भावो भवति । इहाप्यादिशब्दस्यावयववाचित्वाद्दुद्भूतावयवभेदसमुदायः समासार्थः तस्य च समुदायस्य युगपल्लक्ष्यं प्रयोगाभावात्तदन्तर्भूताना-

### श्रीभाष्यम्

**(अस्य) अचिन्त्यविविधविचित्ररचनस्य नियतदेशकालफलभोगब्रह्मादिस्तम्बपर्यन्तक्षेत्रज्ञमिश्रस्य जगतः (यतः)**

### श्रुतप्रकाशिका

तत्रानिदर्शवैचित्र्यमाह—**अचिन्त्येत्यादिना पदेन**। जीवकर्तृकतया चिन्तयितुमशक्यत्वमचिन्त्यत्वम्। आकाशवाय्वादिभेदेन विविधत्वम् प्रत्येक तत्तद्व्यष्टियादुत्येन विचित्रत्वम्, ईदृशरचनस्येत्यर्थः। अत्र रचना सस्थानम्। अथ चिद्वैचित्र्यमाह—**नियतेति**। अस्मिन्देशे अस्मिन्काले इदफलमनेन भोक्तव्यमिति नियमो ब्रह्मादिपिपीलिकान्तानामविशेषेण भवति। ब्रह्मणोहि स्वमानपरिमितवर्षशताधिक जीवितु अण्डान्तरे प्रवेष्टुमण्डाधिपत्यादधि फल भोक्तुंचाशक्यम्। एव चिदचिद्वैचित्रीकथनेन क्षेत्रज्ञमात्रस्य कर्तृत्वानुपपत्तिस्सूचिता॥

तृतीय पदमुपादत्ते—**यतइति**। पूर्वस्य पदस्य श्रुतिविवक्षाऽनुसारेण व्यख्यान कृतम्। अत्रतु तादृशपदश्रवणाभावेऽपि कथमनेकाविशेषणोक्तिः। 'यतो' 'येन' 'यत्' इति प्रसिद्धवन्निर्देशोहि प्रापकवाक्यसापेक्षः तत्र प्रापकवाक्येषु जगत्कारणत्वजिज्ञासत्वोपयोगियादृशविशेषणविशिष्टो योधर्मिविशेषउक्तः तादृगविशेषणविशिष्टस्स एवात्र श्रुतायच्छब्देन विवक्षितइति सूत्रकाराभिप्रायइति कृत्वा तत्तद्विशेषणविशिष्टतद्धर्मिविशेषपरत्व सौत्रस्य यतइशब्दस्योक्तम्। यतः इत्यत्र * तसिल्प्रत्ययस्य सार्वविभक्तिकत्वाद्विभक्त्यन्तरशङ्का स्यात् तेन जगज्जन्मादयो यत्र भवन्तीति देशकालादिवदाधिकरणमेव ब्रह्मलक्षणमित्यपि शङ्कितु शक्यम्। * एव तसिलेप्येकद्विबहुवचनसाधारण्या कारणवाक्येषु सद्ब्रह्माद्यनेकशब्दैरभिधानाच कारणानेकत्वशङ्का स्यादिति तदुभयव्युदासार्थं यस्मादित्युक्तम्॥

### गूढार्थसङ्ग्रह

मेव पृथक्प्रयोगत्वात्कार्यार्थया सञ्ज्ञया प्रवर्तितव्यमिति सर्वशब्दस्यापि सा सिद्ध्यति। यथा 'देवदत्तशालाया ब्राह्मणा आनीयन्ताम्' इत्युक्ते देवदत्तोऽपि यदिब्राह्मणो भवति स्वशालास्थश्च तदा सोऽप्यानीयत एव' इति॥

अत्र उद्योतः—'उपलक्षणानीति। प्रकारतया अन्वयिनीत्यर्थः। कार्ये सविज्ञानमिति। तस्य द्वेधा क्वचिद्विशिष्टस्य क्रियाया सन्निधानमात्रेण यथा क्रियायोगाभावेऽपि शुक्लवाससं भोजयतीति। क्वचित्तु विशेषणस्यापि क्रियायोगेन यथा शुक्लवाससं परयेति। कार्यं यत्र तद्भावमापि तत्र तद्गुणत्वमित्यर्थःफलितः। एव तद्गुणसविज्ञाने तद्विशिष्टस्येतरान्वयः अन्यत्र तदुपलक्षितस्येत्यपि भेदः अयशब्दशक्तिस्वभावगम्योऽन्तर्भावः कार्येन कार्यसन्निहितत्व वा। एव च यत्र सयोग समवायान्तरसबन्धेन सबध्यन्यपदार्थस्तत्र तद्गुणः। अन्यथातद्गुणइत्युसर्ग इतिगोलार्थ। ननु प्रकृते न सयोगो नापि समवाय इत्यत्राह—इहापीति। एवच समवायेन सबन्धिनोऽन्यपदार्थत्वेन तद्गुणत्वमेवोचितमित्यर्थः' इति॥

'इमानिभूतानि' इत्यत्रेदंशब्दप्रयोगेण तदनुसारेण 'अस्य' इति इदशब्द एव सूत्रे प्रयुक्तः। 'इदमस्तु सन्निकृष्टम्' इति महाभाष्यानुसारेण बुद्ध्या सन्निकृष्टपरः इदशब्दः तत्तत्प्रमाणसिद्धपर्यवसितः। 'भूतानि' इत्यत्र भूत शब्दः पञ्चमहाभूततात्पर्येण न प्रयुक्तः इमानीत्यस्य वैयर्थ्यात्। किंतु योगेन परिणामिकार्यसामान्यपर इत्यभिप्रेत्याह—**अचिन्त्यविविधविचित्ररचनस्येत्यादि**। परैरपि श्रुतौ ब्रह्मादिस्तम्बपर्यन्तविवक्षा उपनिषद्भाष्ये उक्ता। सूत्रभाष्येऽपि रूपाभ्या व्याकृतस्य अनेककर्तृभोक्तृसयुक्तस्य मनसाऽप्यचिन्त्यरचनरूपस्य' इत्युक्तम्। एतेन जीवानामपि कार्यको-

## श्रीभाष्यम्

**यस्मात्सर्वेश्वरान्निखिलहेयप्रत्यनीकस्वरूपात्सत्यसङ्कल्पात् ज्ञानानन्दाद्यनन्तकल्याणगुणात्**

## श्रुतप्रकाशिका

उपायतयोपेयतयाऽपि जिज्ञास्ये कारणत्वेनोपयुक्तानि तत्प्रापकवाक्यसिद्धान्येतच्छ्रुतिविवक्षितानि विशेषणानि दर्शयति। सर्वेत्यादिना। तिस्रो मूर्तयो अंशाः ब्रह्माशीनि वादप्रकाशात्मः। प्रधानपुरुषयोःकारणत्वं केषाञ्चिन्मतम् ईदृशन्यूनाधिकतरत्वव्युदासार्थं 'तमीश्वराणां परमं महेश्वरम्' 'सकारणं करणाधिपाधिप' इत्यादिश्रुत्यनुसारेण सर्वेश्वरादित्युक्तम्। कारणवाक्यशेषभूतशोधकवाक्यसिद्धं जिज्ञास्यत्वोपयोगिनं चिदचिद्व्यावर्तकाकारमाह—निखिलहेयप्रत्यनीकस्वरूपादिति। निखिलशब्देनाचिद्गतहेयाःषड्भावविकाराश्चिद्गतहेयाः क्लेशकर्मविपाकाशयाश्च विवक्षिताः। हेयाः हेयत्वेन तद्वियुक्तत्वं व्युदस्यते प्रत्यनीकशब्देन प्रत्यनीकत्वेऽजगदुपादानत्वं नोपपद्यत इत्यत आह—स्वरूपादिति। आद्यारकहेयसम्बन्धो व्युदस्तः न तु सद्वारक इत्यर्थः। हेयप्रत्यनीकत्वे विशेषणत्वेऽपि हेयसम्भवः तत्सम्बन्धाविरोधित्वात् स्वप्रतिकूलोत्पादकत्वायोगाच्चेत्यत्राह—सत्यसङ्कल्पादिति। स्वसङ्कल्पानुरूपं हेयसम्बन्धं स्वाश्रितेषु तद्वियोगं च कर्तुं समर्थः। न च हेयं सर्वनीश्वरापेक्षया हेयं तत्सङ्कल्पनिवृत्त्यर्थेन तच्छीलत्वरसात् त्वादितिभावः। सत्यसङ्कल्पत्वं हेयप्रत्यनीकत्वोपपादकं, कारणत्वाज्जिज्ञास्यत्वोपयोगि च। हेयप्रत्यनीकात्सत्यसङ्कल्पादिति पदद्वयेन 'अपहतपाप्मा' इत्यादिवाक्यं स्मारितम्॥

जिज्ञास्यत्वोपयोगिनो * धर्मिस्वरूपस्य कल्याणतामाह—ज्ञानेति। आनन्दत्वं स्वानुकूलत्वम्। * आदिशब्देन सत्यत्वमानन्त्यं च विवक्षितम्। * हेयप्रत्यनीकत्वं पूर्वमुक्तम् ज्ञानानन्देति भावप्रधाननिर्देशः 'द्व्येकयोर्द्विवचनैकवचने' इतिवत् ज्ञानत्वानन्दत्वसत्यत्वानि न प्रादेशिकानीत्यनन्तशब्दार्थः। * आदिशब्देनानन्त्यस्य गृहीतत्वेऽपि सर्वव्यापित्वस्य कालानन्त्यकथनं नित्यत्वस्य सार्वत्रिकत्वकथनं सर्ववस्तुसामानाधिकरण्यार्हत्वस्य च नित्यत्वक्लृप्तप्रदेशवृत्तित्वकथनं ह्यनिरुद्धम्। * कल्याणत्वमन्येषामनुभवितॄणामप्यनुकूलत्वं ज्ञानत्वादयः यस्य कल्याणगुणा यस्य तस्मादित्यर्थः। यथा प्रभाऽऽश्रये दीपे प्रभाविना आश्रयाशस्यैव चतुरङ्गुलत्वरूपवत्तोज्ज्वलत्वगुणाः तथा ब्रह्मणोऽपि ज्ञानत्वानन्दत्वसदेकरूपाणि स्वरूपस्य गुणाः। धर्मिणो धर्मस्य च ज्ञानत्वे व्यक्तिभेदादविरोधः। धर्मधर्मिणोस्साधारणाकारो ज्ञानत्वानन्दत्वादिः यथा नरस्यैव सतो राज्ञो नराः परिकरा इत्युक्ते व्यक्तिभेदादविरोधः नरत्वञ्चोभयसाधारणाकारः तद्वत्॥

## गूढार्थसङ्ग्रहः

टिनिवेशास्सिद्धः। श्रुतौ 'यत' इत्यत्र यच्छब्दस्य प्रापकश्रुत्यन्तरप्रमाणसिद्धार्थबोधकत्वेन सूत्रे 'यत' इत्यत्रापि स एवार्थो विवक्षित इत्यभिप्रेत्य 'यतः यस्मात्सर्वेश्वरात्' इत्यादिभाष्यम्॥

'किं कारणं ब्रह्म देवात्मशक्तिम्' 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' 'प्रधानक्षेत्रज्ञपतिर्गुणेशस्संसारमोक्षस्थितिबन्धहेतुः।' 'सकारणं करणाधिपाधिपः' 'यस्य देवे परा भक्तिः—प्रकाशन्ते महात्मनः' इत्यादिश्रुत्यभिप्रायेण यस्मात्सर्वेश्वरादिति। ईश्वरत्वमानियकमिति भ्रमनिरासाय 'य ईशेऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय' 'निरवद्यं निरञ्जनम्' इत्यादिश्रुत्यभिप्रायेणाह—निखिलहेयप्रत्यनीकस्वरूपादिति। 'अपहतपाप्मा' सत्यकामस्सत्यसङ्कल्पः' इति श्रुतिविरोधेन निर्गुणश्रुतिः प्रागुक्तदिशा (प्रथमाधिकरणोपपादितदिशा) गुणसामान्यं न निषेधति किंतु गुणविशेषमेवेति तात्पर्येण सत्यसङ्कल्पात् ज्ञानानन्दाद्यनन्तकल्याणगुणगणादित्युक्तम्। 'सर्वज्ञात्सर्वेश्वरादिति

## श्रीभाष्यम्

**सर्वज्ञात्सर्वशक्तेः परमकारुणिकात्परस्मात्पुंसः सृष्टिस्थितिप्रळयाः प्रवर्तन्ते तद्ब्रह्मेति सूत्रार्थः**

## श्रुतप्रकाशिका

धर्मभूतज्ञानवत्तामाह—**सर्वज्ञादिति** । सर्वज्ञत्वं निमित्तत्वोपयोगि सर्वशक्तित्वमुपादानत्वोपयोगि, अनेन चिदचिच्छरीरकत्वमभिप्रेतं भवति अन्यथोपादानत्वायोगात् । किंच सर्वज्ञत्वमुपासकापेक्षिततत्प्रतिबन्धकतन्निरसनप्रकारज्ञानोपयोगि, सर्वशक्तित्वं तद्विरोधिनिरसनोपयोगि । परमकारुणिकत्वं च जिज्ञास्यत्वकारणतोपयोगि प्रळयदशायामसत्कल्पं चेतनजातं निरीक्ष्य दययाहि सृष्टिः * संश्रितसौलभ्यं च दययैव यथा '**माता पिता भ्राता निवासश्शरणं सुहृद्गतिर्नारायणः**' इति ॥

ईदृशेश्वर उपायभूतः । उपेयमन्यदित्यत्राह—**परस्मादिति** । अत्र मातापितेत्यनुसन्धेयम् । देवताविशेषनिर्णयार्थमाह—**पुंस इति** । कारणवाक्येषु '**छागो वा मन्त्रवर्णात्**' इति न्यायात् सद्ब्रह्मात्मादिसामान्यशब्दानां पुरुषान्नारायणादिति विशेषपर्यवसायित्वात् सर्वश्रुतीनां नारायण एव पर्यवसानभूमिरिति '**यतो वा इमानि**' इत्यादिश्रुतेर्हृदयमिति सूत्रकारस्य भाव इति भाष्यकाराभिप्रायः । पुंस इत्यनेन कारणभूतस्य वस्तुनस्त्रिपाद्विभूतिमत्त्वमपि सूचितं पुरुषसूक्ते '**त्रिपादस्यामृतं दिवि**' इति श्रवणात् । **सूत्रार्थ इति** । अक्षरार्थस्तात्पर्यार्थश्चेत्यर्थः ॥

**ननु** यदीश्वरो लिलक्षयिषितः तर्हि तदसाधारणसर्वज्ञत्वादिप्रतिपादकसत्यज्ञानादिवाक्यानादरेण जन्मादिकारणत्वं किमर्थं सूत्रितम् । उच्यते गुणैस्स्वरूपस्य लक्ष्यमाणत्वे तदपेक्षया बहिष्ठाया विभूतेरुपास्यानन्तर्भावः प्रतीयेत सर्गादिवि-

## गूढार्थसंग्रहः

परभाष्येऽप्युक्तम् । 'यस्सर्वज्ञस्सर्ववित्' इत्यत्र सर्वज्ञत्वं, 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इत्यत्र श्रुतौ उभयञ्च प्रतिपादितम् । सृष्ट्यादीनां प्रयोजनाभावात् 'फलवत्सन्निधावफलं तदङ्गम्' इति न्यायेन अभेदवाक्यशेषत्वेन आत्मैकत्वप्रतिपत्त्यर्थत्वमिति भ्रमनिरासाय—**परमकारुणिकादिति** ॥ उत्तरत्र सूत्रे 'लोकवत्तु लीलाकैवल्यम्' इत्यादौ स्वप्रयोजनपरप्रयोजनयोरभिधानेऽपि अन्तर्यामित्वस्य मुक्तिपर्यन्ततायाः 'हन्ताहम्' इत्यादिश्रुतिसिद्धत्वेन 'हार्दानुगृहीतश्शताधिकया' 'संपद्याविर्भावस्स्वेन शब्दात्' 'अनावृत्तिश्शब्दात्' इत्युपसंहारेऽप्युक्तस्य फलस्य '**जन्माद्यस्य यतः**' इति सूत्रेऽपि विवक्षितत्वेन उपक्रमोपसंहारयोरैकरस्यं वृत्तिकारमतमेवेति बोधनाय **परमकारुणिकात्** इत्युक्तम् । 'यत्प्रयन्त्यभिसंविशन्ति' इत्यत्र सृष्टेः मुक्तिपर्यन्तफलप्रतिपत्तिः स्फुटा । उक्तगुणविशिष्टस्यापरब्रह्मत्वमेवेति भ्रमनिरासाय **परस्मात्** इति । 'तं त्वौपनिषदं पुरुषम्' इति श्रुत्या पुरुषस्योपनिषत्तात्पर्यविषयत्वमित्यभिप्रेत्य **'पुंसः'** इत्युक्तम् । पुरुषश्च वासुदेव एवेति पूर्वाधिकरणे एवोक्तम् । 'स्वरेण संधयेद्योगम्' इत्युपक्रम्य 'सर्वभूताधिवासं च यद्भूतेषु वसत्यपि सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेवः' इति ब्रह्मबिन्दूपनिषदुपसंहारे उक्त्या नादार्थो वासुदेव एवात्र विवक्षितः । तेन अकारोकारमकारार्थानां ब्रह्मविष्णुरुद्राणां सृष्ट्यादिषु एकैककर्तृत्वेन त्रितयकर्तृत्वं न संभवतीति विष्णुर्नात्र विवक्षित इति शङ्काया नावकाशः । व्यष्टिसृष्ट्यादावेव त्रिमूर्तीनां हेतुत्वं न समष्टिसृष्टौ, अतः समष्टिसृष्टिविषयपदार्था अपि 'इमानि भूतानि' इत्यत्र अभिप्रेता इति व्यष्टिसमष्ट्यादिपदार्थकर्ता वासुदेवोऽत्र विवक्षित इति स एवाद्यसूत्रे ब्रह्मशब्दार्थत्वेनाभिप्रेतः । तदेतदाह—**तद्ब्रह्मेति सूत्रार्थ इति** । ब्रह्मजिज्ञासेति समासघटकब्रह्मशब्दस्य पृथक्करणेनानुपक्रममभिप्रेत्य तद्ब्रह्मेत्युक्तम् । श्रुतावपि यतो वेत्युपक्रमेण तद्ब्रह्म इत्युपसंहारेण च अयं सूत्रार्थः श्रुत्यनुगुण इति भावः ॥

## श्रुतप्रकाशिका

प्रयभूतयाद्व विभूत्या स्वरूपे लक्ष्यमाणे तन्नियमनधारणाद्यपेक्षित्वादेव गुणानन्तर्भावो न शङ्क्यशङ्कः । अतो गुणानामिव * विभूतेश्च जिज्ञास्यान्तर्भावज्ञापनार्थं जन्मादिलक्षणं विभूतेश्च जिज्ञास्यान्तर्भावः * उपासनाविध्यत क्रतुन्यायाभ्यां सेत्स्यति ॥ नन्वेवमपि कृत्स्नविभूतेर्जिज्ञास्यान्तर्भावो न सिद्ध्यति त्रिपाद्विभूतेर्जन्माद्यस्पृष्टत्वात् । नैवम् । तस्याः जन्माद्यस्पृष्टत्वेऽपि 'यत्प्रयन्ति' इति प्रळयवाक्यस्थयच्छब्दनिर्दिष्टे मुक्तप्राप्ये ब्रह्मण्यन्तर्भावसिद्धेः । तथाहि 'प्रयन्ति' इत्येतदविशेषेणात्यन्तिकलयरूपं मोक्षमपि प्रतिपादयतीति यच्छब्देन मुक्तप्राप्यतयाऽपि ब्रह्मनिर्दिष्टं भवति । प्राप्याकारविशिष्टं च ब्रह्म प्रमाणान्तरसिद्धमिहानूद्यते । प्रमाणान्तराणि च विभूतिद्वयविशिष्टं ब्रह्म प्राप्यं वदन्ति ; प्राप्याकारस्यचोपास्यत्व तत्क्रतुन्यायसिद्धं तदेव लक्षणान्तर्भूतेन लयांशेनोपलक्षितायास्त्रिपाद्विभूतेरपि जिज्ञास्यान्तर्भावसिद्धिस्सूचिताभवति॥

ननु यतइति सूत्रपदस्थाया. पञ्चम्या उपादानार्थत्वात् ब्रह्मोपादानमिति निमित्तान्तरसद्भावात् 'उपादानं तु, भगवान्निमित्तंतु महेश्वर.' इत्युक्तव्योमानीनपक्षावकाशः प्रसजेत् ! नैवम्—यतइति पञ्चम्या हेतुमात्रविषयत्वात् * हेत्वर्थत्व च जनिस्थितिलयसाधारणत्वादवगम्यते । ननु 'जनिकर्तुः प्रकृतिः' इत्यपादानसंज्ञाविधानवत् स्थितिकर्तुर्लयस्थानस्यचापादानसंज्ञाविधान दृश्यते, तस्मादियं * हेतौ पञ्चमी । ततश्च निमित्तोपादानयोरुभयोरपि हेतुत्वाविशेषात्, यतइति पदेनोभयविधकारणत्वमपि क्रोडीकृत भवति । 'यतोवा इमानि' इत्यादिवाक्ये यतइति पदस्योभयविषयत्वात् सौत्रपदस्याप्युभयविषयत्वोपपत्तेः ॥

ननु 'यतोवा इमानि' इति वाक्ये यतो येन यदिति यच्छब्दस्यावृत्तत्वाद्यत इति पदस्य जनिस्थितिलयसाधारण्य नास्तीति तत्र यतइति पञ्चम्युपादानमात्रविषया, जायन्त इत्यनेनैवान्वयात् । पञ्चम्यर्थोहि 'जनिकर्तुः प्रकृतिः' इत्येव प्रतीयते, किंतु हेतुमात्रविषयायाअपि सौत्रपदपञ्चम्याश्श्रुतिवाक्यस्थपञ्चम्यभिहितोपादानरूपहेतुविशेषे पर्यवसानस्यात् सूत्रस्य श्रुत्यैकार्थ्योपपत्तेः । अतश्श्रुतिसूत्रयोरपि पञ्चम्या उपादानमात्रविषयत्वात् ब्रह्मोपादानं नतु निमित्तमिति । नैवम् श्रुतौ यत इति पदस्य जनिस्थितिलयसाधारण्याभावेऽपि यच्छब्दस्यानुवादरूपत्वादनुवादस्य च प्रापकवाक्यसापेक्षतया तद्विरुद्धार्थपरत्वासंभवात् । प्रापकवाक्येषु च 'एकमेवाद्वितीयम्' 'तदैक्षत बहुस्याम्' 'तत्तेजोऽसृजत' इत्युपादानभूतस्यैव ब्रह्मणो निमित्तान्तरं निषिध्याहमेव जगद्रूपेण 'बहुस्याम्' इति सङ्कल्पमुक्त्वा यथासङ्कल्पं तत्कर्तृकसृष्टेश्च प्रतिपादनात्तदनुवादिनि लक्षणवाक्ये यत इतिपदमुभयविषयम् । श्रुत्यनुविधायित्वाज्जन्मस्थितिलयसाधारणं वाच्यं सौत्रं च पदमुभयविषयमेवेति निमित्तान्तरवादो वेदविरुद्धत्वादनादरणीय एवेति ॥

एवतर्हि प्रकृत्यधिकरणपौनरुक्त्यं स्यादितिचेन्न तत्रहि निमित्तोपादानैक्यस्य श्रुतिप्रतिपाद्यत्वं समर्थ्यते अत्रतु निमित्तोपादानैक्यसिद्धवत्कारेण तस्योभयविधकारणत्वस्य लक्षणत्वानुपपत्तिः परिह्रियत इति वैषम्यात् । * नन्वीश्वर एव ब्रह्मचेत् सत्यज्ञानादि लक्षणत्वेन वक्तव्यं नतु जन्मादि ईश्वरस्य सर्वविधकारणत्वायोगात् । निमित्तकारणमुपादानंचैकमेवहि वेदान्तेषु मतम् । तस्मादीश्वरादतिरिक्तं ब्रह्माभ्युपगच्छतो भेदाभेदवादिनोऽनुकूलमिदं जन्मादिलक्षणकथनम् ॥

नैवम्—चिदचिद्विशिष्टतया सत्यसङ्कल्पतयाचेश्वरस्यैव बहुस्यामितीक्षणक्षमत्वेन सर्वविधकारणत्वोपपत्ते । सन्मात्रस्य चिन्मात्रस्य सत्यसङ्कल्पत्वायोगादीश्वरस्य च ब्रह्माज्ञतयाऽध्यस्ततयाचाभिमतस्याज्ञान्तराध्यस्तान्तरसमानाधिकरणशब्दवाच्यत्वायोगाच्च । भेदाभेदपक्षे मृषावादिपक्षे च 'बहुस्याम्' इति सङ्कल्पपूर्वककारणत्वं नघटत इत्येतल्लक्षणं परेषामेवानुपपन्नम् । किंच बुभुत्सितस्य लक्षणं वाच्यम् बुभुत्सितंचोपास्यम् ईश्वरएवोपास्य. प्राप्यश्च । * उपासनं च विशिष्टविषयं उपासनाविध्यस्य वक्ष्यमाणत्वात् । * प्राप्तिश्च विशिष्टविषया यथोपासनभावित्वात्तस्या. । जन्मादिश्चोपास्यलक्षणं 'तद्वि

### श्रीभाष्यम्

**' भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्म ' इत्यारभ्य ' यतोवाइमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति '**

### श्रुतप्रकाशिका

**जिज्ञासस्वेति '** प्रतिपादनात् । सत्यज्ञानादितु विशेष्यांशस्य लक्षण नतु विशिष्टस्य अतो विशिष्टस्यैवोपास्यत्वाज्जिज्ञास्य ब्रह्मलक्षण जन्माद्येव । यतइत्यस्यानुवादरूपत्वात् ' विजिज्ञासस्वेति ' जिज्ञास्यत्ववचनाच्च, जिज्ञास्यत्वोपयोगि*शोधकया क्यार्थश्च यच्छब्दे गर्भित । तस्मात्सत्यादित्यादिविशेषणान्युक्तानि ॥

अथ जन्मादीना लक्षणत्वे तत्र जन्मनोऽन्तर्भाव तत्रापि समुदितस्य लक्षणत्वे च किंते प्रमाणमित्याकाङ्क्षाया सूत्रकारैर्विषयत्वनाभिप्रेता श्रुति दर्शयति । **भृगुरिति** । * शास्त्र प्रणाड्याविषय **' यतोवा इमानि '** इत्यादिमात्रे उदाहर्तव्येऽपि अर्थवादरूपता पर्यलिङ्गज्ञापनार्थ, प्रकरणस्य ब्रह्मोपक्रमत्वेनानन्यपरत्वज्ञापनार्थ च **भृगुर्वा** इत्याद्युदाहृतम् । अग्नीन्द्रादिवस्तुषु सर्वोत्कृष्टतया आपातप्रतीतेषु सर्वेषा सर्वोत्कृष्टत्वस्यानुपपन्नत्वेन तत्त्वस्य दुर्निश्चयतया निरतिशयबृह वाश्रय व्यक्तिविशेषजिज्ञासयाहि **' अधीहि भगवो ब्रह्म '** इति प्रश्न । तत्र व्यक्तिविशेषस्य लक्षणमुच्यते **' यतोवा इमानि '** यतो, यत, यदिति यद्वृत्तयोगात्कारणत्वमनूद्यते तद्ब्रह्मेति कारणस्य ब्रह्मत्व विधीयते तेन कारणत्वस्य ब्रह्मलक्षणत्व सिद्ध भवति **' तद्विजिज्ञासस्व '** इति न विचारस्योपासनस्य वा विधि. । विचारात्मकज्ञान रागप्राप्तत्वान्नविधेयम् । उपासनात्मकस्यतु ज्ञानस्य **' ब्रह्मविदाप्नोति '** इति प्राकरणिकवाक्यान्तरसिद्धत्वात्, उपक्रमे **' अधीहि भगवो ब्रह्म '** इति प्रश्नस्य तत्त्वपरत्वेनोपायविषयत्वाभावाच्च नोपासनात्मकज्ञानमिह विधेयम् । अतो **विजिज्ञासस्वे**त्युपदिश्यमानार्थे अवधानार्थं सन्देहनिवृत्त्यर्थमेवोक्तम् । या गन्धवती सा पृथिवी विद्धीतिवत् । अत कारणत्वस्य ब्रह्मलक्षणत्वमेवास्य वाक्यस्य विधेय यथा—यत्र सारसस्सदेवदत्तकेदारइत्युक्ते सारससम्बन्धस्य देवदत्तकेदारलक्षणत्वमुक्तस्यात् । तद्वत् * देवदत्तकेदारो बुभुत्सितो * धीस्थ सारससम्बन्धश्च दृष्ट. । * तस्य देवदत्तकेदारलक्षणत्वमज्ञात अतस्तदेव वाक्यस्य विषयम्, एवं निरतिशयबृहत्व बृहत्यर्थेऽप्यापातत प्रतीतम् । कारणत्व च प्रापकवाक्यावगतम् । * तस्य निरतिशयबृहद्वस्तुलक्षणत्वम नवगतमिति तदत्र विधेय, लक्षणस्य च सजातीयविजातीयव्यावर्तनस्वभावत्वादन्येषा निरतिशयबृहत्त्वशङ्काव्युदास फलि. । अतो नारायणादिविशेषशब्दवाच्यवस्तुविशेषस्यैव निरतिशयबृहत्वसिद्धि. । अतएवहि परस्मात्पुंस इत्युक्तम् ॥

### गूढार्थसंग्रह.

भृगुर्वैवारुणि इत्यादि । अत्र **' यतो वा इमानि '** इत्यादिश्रुत्यर्थ एव सूत्रेऽभिहित इति तावन्मात्रोपादानेनैव प्रकृतसूत्रार्थनिष्कर्षस्सम्भवति, अथापि **' ब्रह्मविदाप्नोतिपरम् '** इत्युपक्रमे प्राप्यत्वेनोक्तस्य ब्रह्मण **'यतोवा'** इत्यादिना लक्षणमुखेन निर्णय । तस्यैव प्रश्न प्रतिवचनरूपेण प्रश्नवाक्योपादानेन **' सत्यज्ञानमनन्तं ब्रह्म '** इति वाक्यत: **' यतोवा इमानि भूतानि जायन्त '** इति वाक्यस्य प्राधान्यबोधनाय **'भृगुर्वा'** इत्यादिकमुपात्तम् । अत्र ग्रहणेन गृहस्थस्य ब्रह्मविद्यायामेव सन्न्यासिन एव ब्रह्मविद्यायामधिकारइति परमतार्थ. नयन्न इत्येतेन सूचितम् ॥

एव पुत्रेण पितु ज्ञानसम्पादनेनोपकारवत् परमात्मनो जीवानामुपत्तिनिरूपणेन राजकुमारनयेन सुप्तिसमकालिकानर्थनिरासस्य ज्ञापनसम्पादनार्थतया ज्ञानमुखेनोपकारोऽप्यनेन सूचित । तेन ' यत्प्रयन्ति ' इत्यत्र विवक्षितप्रलो. पूर्णानन्दिकावस्थायां राजकुमारनयेन पितुरेव ताद्दशोपकारकत्वमिति सूचनेन सुप्तिमुक्तिवाक्यैकरस्यमपि द्रढीकृत भवति ॥

## श्रीभाष्यम्

**(तै.उ.भृगु) श्रूयते । तत्र संशय. किमस्माद्वाक्यात् ब्रह्म लक्षणत प्रतिपत्तुं शक्यते नवेति किंप्राप्तम् । न शक्यमिति ।**

## श्रुतप्रकाशिका

प्रापकवाक्यैरेव कारणभूतवस्तुविशेषस्य निरतिशयबृहत्त्व ज्ञायत इति किमनेन लक्षणवाक्येनेतिचेत्? न, अग्न्यादीनामपि कर्मभागवाक्यैस्सर्वोत्कृष्टत्वावगमात् तेषु बृहत्त्वशङ्काव्युदासाय कारणवाक्यानामपि तद्वदन्यपरत्वाभावेन तत्त्वपरत्व ज्ञापनपरत्वादस्यवाक्यस्य । अथ श्रुतिरेव लक्षण प्रतिपादयतिचेत् किंसूत्रेणेति शङ्काया सूत्रतात्पर्यार्थं विवक्षु संशयदर्शयितु श्रुतिगतहेतुनैव संशयोत्पत्ति दर्शयति । तत्रेति । तत्र तादृश इत्यर्थ । *पूर्वपक्षानुगुणेन विशेषणबहुत्वेन सिद्धान्तानुगुणेनैकवचनान्तब्रह्मशब्दैक्येन च विशिष्टस्य संशयहेतुत्वेनाभिप्रेत्य तत्रेत्युक्तम् ॥

संशयस्वरूप दर्शयति । किमस्मादिति । ब्रह्ममीमांसा किमारम्भणीया उतानारम्भणीयेति प्रथमविचार । तदर्थं वेदान्ता ब्रह्मणि प्रमाण उत नेति द्वितीयविचारश्च चतुस्सूत्रीसाधारण । सिद्धस्वरूप ब्रह्म न शास्त्रप्रतिपादयतीत्याशङ्क्याह–तच्छास्त्रप्रमाणत्व ब्रह्मणस्सम्भवत्येव इति समन्वयाधिकरणोपक्रमे तस्याधिकरणस्य शास्त्रारम्भहेतुभूतप्रामाण्यसमर्थनार्थत्वस्य भाष्यकारैरेव वक्ष्यमाणत्वात् । तथाचाहु·—

> व्युत्पत्त्यभाव प्रतिपत्तिदौस्थ्यमन्येन सिद्धत्वमथाफलत्वम् ।
> एतानिवै सूत्रचतुष्टयेनानारम्भमूलानि निराकृतानि ॥

इति । अतस्तद्विचारयुगळमत्रार्थसिद्धमभिप्रेत्यैतदधिकरणासाधारण संशयशरीर दर्शित किमस्मादिति । यतोवा इमानीत्यादिवाक्य ब्रह्म लक्षणत प्रतिपादयितु शक्नोति उत नेति संशय तदर्थं संशय्यते, किं सृष्ट्यादीना विशेषणत्वेनोपलक्षणत्वेन च ब्रह्म लक्षण व सम्भवति नेति तदर्थं विशेषणपक्षे किं विशेषणभेदेन विशेष्यभेदोऽस्ति नेति, तदर्थं किं विशेषणस्य विशेषणत्व *स्वाश्रयसर्वधर्मव्यावर्तकतया उत विरोधिधर्मव्यावर्तकतयेति । उपलक्षणपक्षे किमाकारान्तरप्रतिपत्तिरस्ति उत नास्तीति सर्वधर्मव्यावर्तकतया विशेषणत्व, आकारान्तरप्रतिपत्तिश्च नास्तीति पूर्व पक्ष । विरोधिधर्मव्यावर्तकतयैव विशेषणत्वमाकारान्तरप्रतिपत्तिश्च नास्तीति राद्धान्त । सर्वधर्मव्यावर्तकतया विशेषणत्वे विशेष्यभेदप्रसङ्गेन जन्मादीना विशेषणत्वायोगादाकारान्तरप्रतिपत्त्यभावेचोपलक्षणत्वायोगादुभयथाऽपि लक्षणत्वासम्भवादिद वाक्य ब्रह्म लक्षणत प्रतिपादयितु नशक्नोतीति लक्षणदौस्थ्येन ब्रह्मणि शास्त्रप्रामाण्याभावात्तद्विचारो नारम्भणीय इति पूर्वपक्षे फलितम् । विरोधिधर्मव्यावर्तकतयैव विशेषणत्वे विशेष्यभेदाभावाज्जन्मादीना विशेषणत्वोपपत्तेराकारान्तरप्रतिपत्तिसद्भावादुपलक्षणत्वोपपत्तेश्चोभयथाऽपि लक्षणत्वसम्भवादिदवाक्य ब्रह्म लक्षणत प्रतिपादयितु शक्नोतीति लक्षणसौष्ठवेन ब्रह्मणि शास्त्रप्रामाण्योपपत्तेस्तद्विचारस्यारम्भणीयत्व सिद्धान्ते फलितम् ॥

तत्र पूर्वपक्षमुपपादयितु प्रतिजानीते । नशक्यमिति । जन्मादीना ब्रह्मलक्षणत्व किं विशेषणतया उतोपलक्षण-

## गूढार्थसंग्रह

नशक्यमिति । आरम्भणाधिकरण जन्माद्यधिकरण(प.११) विवरणोक्तरीत्या कार्यप्रपञ्चस्यासत्यत्वपूर्वपक्षकथनावसरे कार्यकारणभावासम्भवेन परिणामवादोऽपि पूर्वपक्षे दूषित । कार्यकारणभावो न सम्भवतीति माध्यमिकोक्तरीति गौडपादाचार्यादिभिरप्याहृता । तथाहि तत्र कार्यकारणभाव एव नसम्भवतीति माध्यमिका वदन्ति । किंच जगत प्रत्यक्षवि

## श्रीभाष्यम्

**न तावज्जन्मादयो विशेषणत्वेन ब्रह्म लक्षयन्ति अनेकविशेषणव्यावृत्तत्वेन ब्रह्मणोऽनेकत्व-**

## श्रुतप्रकाशिका

तयेति विकल्पमभिप्रेत्य प्रथमं दूषयति । **नतावदिति** । कथं विशेषणत्वेन न लक्षयन्तीत्यत्राह—**अनेकेति** । अनेकत्व-

## गूढार्थसंग्रहः

पयस्यापि परमार्थत्वासम्भवात् । 'इन्द्रियैरुपलब्धं यत् तत्तत्त्वेन प्रदर्श्यते । जातास्तत्त्वविदो बालाः तत्त्वज्ञानेन किं फलम्' इति । (नागार्जुनकारिका) कार्यकारणभावस्यापि पारमार्थिकत्वं नास्तीति कार्यकारणभावमुखेन कथं ब्रह्म व्यवस्थापयितुं शक्यम् । तथोक्तम्–'न स्वतो नापि परतः न द्वाभ्यां नाप्यहेतुकः । नसन्नुत्पद्यते भावो नाप्यसन्सदसन्न च । उत्पन्ना जातु विद्यन्तेभावाः क्वचन केचन ॥ (ना.का) विद्यमानस्य भावस्य हेतुना किं प्रयोजनम् । अजातमनिरुद्धं च तस्मात्सर्वमिदं जगत् ॥ मायया निर्मितं यच्च हेतुभिर्यच्च निर्मितम् । आयाति तत्कुत. कुत्र यातिचेति निरूप्यताम्' 'ईश्वरो जगतो हेतुः वद कस्तावदीश्वरः । कस्मात्सदा न कुरुते नहि सोऽन्यमपेक्षते ॥ अपेक्षोऽपि सामग्री हेतुर्न पुनरीश्वरः । नाकर्तुमीशस्सामग्री नकर्तुं तदभावतः करोत्ययमनीशश्चेत् परायत्तः प्रसज्यते । इच्छनपीच्छायत्तश्चेत् कुर्वन कुत ईशता ॥' (बोधिचर्यावतारे ९.परिच्छेद.) 'यथा माया यथास्वप्नो गन्धर्वनगरं यथा । तथोत्पत्तिस्तथास्थानं तथाभङ्ग उदाहृतः ॥' (ना.का) इति ॥

'स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा । तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः ॥ स्वतो वा परतो वाऽपि न किञ्चिद्वस्तु जायते । सदसत्सदसद्वाऽपि न किञ्चिद्वस्तु जायते ॥ उत्पादस्याप्रसिद्धत्वादजं सर्वमुदाहृतम् । नच भूतादभूतस्य सम्भवोऽस्ति कथञ्चन ॥ नास्त्यसद्धेतुकमसत् सदसद्धेतुकं तथा । सच्च सद्धेतुकं नास्ति सद्धेतुकमसत्कुतः ॥ संवृत्या जायते सर्वं शाश्वतं नास्ति तेनवै । योऽस्ति कल्पितया वृत्त्या परमार्थेन नास्त्यसौ ॥ परतन्त्राभिसंवृत्या स्यान्नास्ति परमार्थतः ।' इति गौडपादाचार्यैः माध्यमिकप्रक्रियामवलम्ब्यैव उत्पत्त्यादेस्सांवृतत्वं निरूप्य 'मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्याचोदिता पुरा । उपायस्सोऽवताराय नास्ति हेतुःकथञ्चन ॥' 'नैतद्बुद्धेन भाषितम्' इति स्वयंप्रकाशचितः उपनिषत्तात्पर्यविषयत्वमुक्तम् ॥ सुरेश्वराचार्यैरपि 'नासतो जन्मना योगः सतस्सत्वान्नचेष्यते । कूटस्थेऽपि क्रिया नास्ति तस्मादज्ञानतो जनिः ॥ अस्तीशोऽप्यतिरिक्तश्चेत् सोऽपि केन प्रवर्तित. । जगन्निर्मितुयादेतत् स्वतश्चेत्सर्वदा न किम् ॥ जगदुत्पत्तिसंहारा. तद्वदात्मनि कल्पिता. । वस्तुवृत्तिंसमालोच्य कुतस्सृष्ट्यादिसम्भवः । उत्पत्तिस्थितिनाशास्स्युः जगतोऽत प्रतिक्षणम् ॥ अविद्यामात्रहेतुत्वात्सामीषा विद्यतेक्रम. ।' इति गौडपादसिद्धान्त प्रतिष्ठापित. ॥

अत्र मतद्वयेऽपि प्रत्यक्षस्य न तात्विकं प्रामाण्यम् । व्यवहारसत्यमेव विषयः । तच्च संवृतिसत्यापरनामकम् । परमार्थसत्यंतु निर्विशेषं अभिधानाभिधेयज्ञानज्ञेयादिविगतं इत्यादिकं समम् । उत्तरमते स्वप्रकाशचितोऽङ्गीकारेण तदंशे नास्ति प्रत्यक्षनिषेधः । निरधिष्ठानकनिषेधासम्भवात् अधिष्ठानमपेक्षितम् । पूर्वमते निषेधप्रतियोगितुल्यसत्ताकमेवाधिष्ठानमिति विशेषोऽस्ति । अतश्च कार्यकारणभावस्यैवासम्भवे स्वेतरजगत्कारणत्वेनैकव्यक्तौ निरवग्रहमहत्त्वं तत्त्वतो नसिद्ध्यति ब्रह्मप्रवृत्तिनिमित्तस्य तत्त्वतोऽभावे तदाश्रितस्यापि नसिद्धिस्स्यात् । आरम्भणाधिकरणे विवेचयिष्यमाणोऽर्थः अत्राप्यभिप्रेत. अत: स्फुटमनुक्तिस्तु तत्र सूत्रेषु आक्षेपपरिहारस्फुटः अत्र नस्फुट इत्यभिप्रायेणेति बोध्यम् । कार्यकारणभावस्य तात्विकत्वाङ्गीकारेऽपि विशेषणत्वोपलक्षणत्वपक्षद्वयेऽपि लक्षणं न सम्भवतीत्यभिप्रेत्याह—**न तावज्जन्मादयइत्यादिना** । अविरुद्ध-

## श्रीभाष्यम्

प्रसक्तेः, विशेषणत्वं हि व्यावर्तकत्वम् । ननु देवदत्तश्श्यामो युवा लोहिताक्षस्समपरिमाण इत्यत्र विशेषणबहुत्वेऽप्येक एव देवदत्तः प्रतीयते। एवमत्राप्येकमेव ब्रह्म भवति? नैवम्; तत्र प्रमाणान्तरेणैक्यप्रतीतेरेकस्मिन्नेव विशेषणानामुपसंहारः। अन्यथा तत्रापि व्यावर्तकत्वेनानेकत्वमपरिहार्यम्। अत्रत्वनेनैव विशेषणेन लिलक्षयिषितत्वात् ब्रह्मणः प्रमाणान्तरेणैक्यमनवगतमिति व्यावर्तकभेदेन ब्रह्मबहुत्वमवर्जनीयम्। ब्रह्मशब्दैक्यादत्राप्यैक्यं प्रतीयत इति चेन्न अज्ञातगोव्यक्तेः जिज्ञासोः पुरुषस्य खण्डो मुण्डः पूर्णशृङ्गो गौरित्युक्ते गोपदैक्येऽपि खण्डत्वादिव्यावर्तकभेदेन गोव्यक्तिबहुत्वप्रतीतेः ब्रह्मव्यक्तयोऽपि बहवस्स्युः। अतएव

## श्रुतप्रकाशिका

प्रसक्तिः व्यावर्तकत्वं वा कथमित्यत्राह–विशेषणत्वंहीति । विशिष्यतेऽनेनेति निर्वचनानुसारेण भेदकं विशेषणं भेद्यं विशेष्यमिति प्रसिद्धेः खण्डो मुण्डः पूर्णशृङ्गः नीलं शुक्लं पीतं अजो गजो महिष इत्यादिषु तथा दर्शनाच्चेति भावः ॥

सिद्धान्तिच्छायया चोदयति । नन्विति । परिहरति । नैवमिति । उपसंहारः पर्यवसानम् । अन्यथा प्रमाणान्तरेणैक्यप्रतीत्यभावे सतीत्यर्थः तत्रापि देवदत्तादावपि पक्षवैधर्म्यमाह–अत्रत्विति । प्रमाणान्तरेणैक्यमनवगतमिति तात् अयोऽयंभावः 'एकमेवाद्वितीयम्' इत्यादिभिरपि नैकत्वनिश्चयः तत्राप्येकत्वादिविशेषणभेदेन बहुत्वापत्तेः, एकमित्यादिपदानामेको व्रीहिरित्यादिवन्निर्वाहसम्भवाच्चेति ॥

ननु न केवल प्रमाणान्तरेणैवैक्यप्रतीतिः शाब्दी च विद्यते तस्यां सत्यां धर्मिबहुत्वं नस्यात् । अत्रैकवचनान्तधर्मिवाचिपदैक्यं विशेष्यैक्यज्ञानकमिति शङ्कते । ब्रह्मशब्देति । तद्ब्रह्मतद्ब्रह्मेति मुहुर्मुहुरुक्तिर्वा तानि ब्रह्माणीति बहुवचनं वा नास्तीति भावः । परिहरति नेति । तत्कथमित्यत्राह—अज्ञातेति । एकवचनान्तधर्मिवाचिपदैक्यं विशेषणबहुत्वाधीनं विशेष्यबहुत्वं न बाधते खण्डो मुण्डो पूर्णशृङ्गो गौरित्यत्र बहुत्वप्रतीतेः । एकवचनान्तधर्मिवाचिपदैक्यं स्वतो विशेष्यैक्यप्रतिपादकं खण्डादिषु प्रत्यक्षबाधात् बहुत्वप्रतीतिरिति चेन्न अप्रत्यक्षेष्वपि गोषु खण्डइत्यादिवाक्ये प्रयुक्ते बहुत्वप्रतीतेः तस्माद्विशेषणबहुत्वं चेद्विशेष्यभेदापादकमित्यभिप्रायेणोक्तम् । अज्ञातगोव्यक्तेरिति । अज्ञातगोव्यक्तेः *प्रत्यक्षेणादृश्यमानगोव्यक्तेरित्यर्थः ; खण्डो मुण्ड इत्यादि*वाक्यप्रयोगासम्भवव्युदासाय जिज्ञासोरित्युक्तम् गोसामान्यज्ञाने सत्यदृष्टगोव्यक्तिन्वा जिज्ञासासम्भवात्प्रयोगसम्भवः । सृष्टिस्थितिप्रलयाः किंप्रत्येकलक्षणानि । उत सम्भूयेति विकल्पमभिप्रेत्य प्रत्येकपक्षे दूषणमुक्तम् । संभूयेति पक्षे दूषणमाह—अतएवेति । अतएव विशेषणभेदस्य स्वतो विशेष्यभेदापादकत्वादित्यर्थः ॥

## गूढार्थसंग्रहः

विशेषणद्वयप्रभवत्वेऽपि विशिष्टयोर्द्वयोः । घटते न यदैकता तथा नितरां तद्विपरीतरूपयोः ॥' (स.शा) इति इह भाष्यम् ॥

सूत्रे 'जन्मादि' इत्येकवचननिर्देशेऽपि श्रुतौ सृष्टिस्थितिलयानां पृथगुक्तिमनुसृत्य 'जन्मस्थितिलयाःप्रवर्तन्ते तद्ब्रह्मेति' इति सूत्रार्थ इति पूर्वं भाष्ये उक्तम् । तेन एकस्यैव ब्रह्मणः लक्षणत्रयमत्र विवक्षितमिति प्रतीत्या खण्डत्वमुण्डत्वादिवत् सृष्टिस्थितिलयानां भिन्नकालिकत्वेन परस्परं विरुद्धतया ब्रह्मबहुत्वप्रसङ्गेन जन्मादीनां कारणत्वस्य लक्षणत्वं न सम्भवतीति प्रागभिहितम् । जन्मादीत्येकवचननिर्देशेन समुदायकारणत्वं वा कारणत्वसमुदायो वा लक्षणमिति प्रतीत्या श्रुतावप्ययमेवार्थो विवक्षित इत्यभ्युपगन्तव्यम् । एवं च श्रुतिबलात् न व्यक्तिभेदप्रसङ्ग इति शङ्कायामाह—अतएव

श्रीभाष्यम्

**लिलक्षयिषिते वस्तुन्येषां विशेषणानां सम्भूय लक्षणत्वमप्यनुपपन्नम्। नाप्युपलक्षणत्वेन लक्षयन्ति**

श्रुतप्रका ि ।

*उपलक्षणपक्ष दूषयति नापीति ।—*

गूढार्थसग्रह

**लिलक्षयिषित इत्यादिना ॥** अनेकविशेषणसबन्धस्य व्यक्तिभेदकत्वे तत्समुदायसम्बन्धस्य संबन्धसमुदायस्य वा व्यक्तिभेदकत्वमपरिहार्यमिति अयमपि पक्षोऽनुपपन्नइतिभाव । जगत्कारणत्व न विशेषणतया लक्षण किंतु उपलक्षणतया इति (प.पा) रीतिरापि नघटत इत्याह—**नाप्युपलक्षणत्वेन लक्षयन्तीति ॥**

उक्त च पञ्चपादिकाया—'अस्य जगत इत्यादिना भाष्येण लक्ष्यस्य ब्रह्मण स्वरूपलक्षण कथयितुमुपक्रमते द्विविधहि लक्षण, उपलक्षण विशेष(ण)लक्षण च । तत्रेदलक्षण प्रपञ्चधर्मत्वात् पृथग्भूतमेव कारणमुपलक्षयति नविशेषणत्वेन । अत पृथक्स्वलक्षणकथनम् इति पूर्वोक्तेन न्यायेन पृथिव्यादीना जन्मादिदर्शनात् तत्कारण एकत्वनानात्वयोरन्यतरावगमे *प्रमाणाभावात् बुद्धिमत्कारणपूर्वतामात्रे प्रतिपन्न 'यतो वा इमानि' इतिकारणस्यैकवचननिर्देशात् तदर्थमात्रस्यैव* विधिसितत्वात् अर्थात्सर्वज्ञ सर्वशक्ति जगकारणमिति कारणविशेषो वाक्यादवगम्यते । पुन 'तद्विजिज्ञासस्व' इत्यनूद्य 'तद्ब्रह्म' इति तत्र ब्रह्मशब्दप्रयोगात् बृहत्यर्थान्वयेन सर्वतोऽनवच्छिन्नस्वभाव जगत्कारण ब्रह्म पदार्थइति गम्यते' इति च

अत्र (प पा) विवरणम्—'लक्षणमनूद्य लक्ष्यस्वरूप कथयितुमुत्तर भाष्यमित्याह—**अस्य जगत** इति । ननु नतावदिद विशेषणलक्षणं प्रपञ्चजन्मादिकारणत्वस्य प्रपञ्चोपाधित्वान्निरुपाधिकब्रह्मस्वरूपलक्षणकथनमन्तरण सोपाधिकधर्मप्रतिपत्त्ययोगात् नाप्युपलक्षणमेतत्, लक्ष्यस्य ब्रह्मशब्दार्थत्वायोगात् अवच्छेदादिति तत्राह—द्विविध लक्षणमित्यादि । उपलक्षणत्वेऽपि नाद्वितीयस्वरूपलक्षणविरोध यद्रजतमित्यभात् सा शुक्तिरितिवत् मिथ्याभूतेनापि प्रपञ्चकारणत्वेनोपलक्षणयोगात् असाधारणसत्र योहि लक्षणनिमित्त न लक्षणसत्यत्वम् । काकादीनामसम्बद्धाना गृहोपलक्षणत्वादर्शनादिति ' इति ॥

ननु जगत्कारणे नानात्वस्यापि प्रतिपत्ते कथ तदनुवादेन ब्रह्मप्रतिपादनीयमिति चोदयति कथमिति । परिहरति पूर्वोक्तेनेत्यादिना । ('प्रसिद्धानुवादेनाप्रसिद्ध प्रतिपाद्यतेति न्यायात्' इति तत्प्रदीपनम्) अयमर्थ जगत्कारणमात्रानुवादेऽपि तस्य नानात्वशङ्काया 'यत' इत्येकत्वनिर्देशात् एकत्वमपि प्रतीयते । ननु अनुवादे प्रमितिरनुपपन्ना। न, जगत्कारणे एकत्वपुरोवादाभावात् अनुवादसामर्थ्यादवैकत्व प्रमीयते । अन्यथानुवादवैयर्थ्यात् । ननु एकत्वे ब्रह्मलक्षणे च प्रमीयमाणे वाक्यभेद· स्यात् । न , एकत्वस्य ब्रह्मप्रतिपत्तिगुणभूततयैकवाक्यत्वात् । अथवा एकत्वमपि लक्ष्यान्तर्गतमेव भवति न लक्षणान्तर्गतम् । तथाहि जगत्कारणमात्रानुवादनैक ब्रह्म विधीयते इति तत किमायातमिति ' तदाह अर्थात्सर्वज्ञमिति । न सशासांशिसबन्धपर वाक्यम् । किन्त्वर्थप्रतिपादनपरम् आर्थिकस्तु सशासशिसबन्धइत्याह—पुनस्तद्विजिज्ञासस्वेत्यादि । एक सर्वज्ञ सर्वशक्तिसर्वतोऽनवच्छिन्न च जग कारण तच ब्रह्मशब्दाभिधयमित्यर्थ ॥

ननु निरुपाधिकब्रह्मस्वरूपकथनमन्तरेण सोपाधिकाना सर्वज्ञत्वादीना कस्यचिद्धर्मतया प्रतिपत्तिर्नयुक्ता! तत्र, 'यत् सुषिर तदाकाश प्रकृष्टप्रकाशश्चन्द्र ' इत्यादिवत् स्वरूपलक्षणमेव किञ्चिद्वक्तव्यम् । ब्रह्मशब्दाभिधेयमेव स्वरूपलक्षणमितिचेत्; न; बृहत्त्वधर्ममात्राभिधानात् महान्घट इत्युक्ते महत्त्वस्य निरुपाधिधर्मतया भासते तथेहापि वक्तव्यम् ।

### श्रीभाष्यम्

**आकारान्तराप्रतिपत्तेः उपलक्षणानामेकेनाकारेण प्रतिपन्नस्य येनचिदाकारान्तरेण प्रतिप-त्तिहेतुत्वंहि दृष्टं यथायंसाऽस्ससदेवदत्तकेदारइत्यादिषु। ननु च ' सत्यंज्ञानमनन्तं ब्रह्म ' (तै.उ.आनन्दवल्ली) इति प्रतिपन्नाकारस्य जगज्जन्मादीन्युपलक्षणानि भवन्ति। न**

### श्रुतप्रकाशिका

दुषयत्याह—आकारान्तरेति। व्यापकनिवृत्त्या व्याप्यनिवृत्तिरितिभावः। व्यापकत्वमेवोपपादयति। उपलक्षणानामिति। उपलक्षणेनोपलक्ष्यप्रतिपत्तावुपलक्षणमुपलक्ष्याकारः पूर्वप्रतिपन्नाकारश्चेत्याकारत्रयमवर्जनीयं सम्प्रतिपन्नस्थलेषु तद्दर्शनात्। यथा सारससम्बन्धउपलक्षणं देवदत्तसम्बन्धित्वमुपलक्ष्यम्। केदारस्य पूर्वप्रतिपन्नाकारः, अतो तृतीयाकारप्रतिपत्त्यभावादुपलक्षणत्वमनुपपन्नमित्यर्थः। शाखाग्रे चन्द्र इत्यत्र कथमाकारत्रयमितिचेत् उच्यते कालविशेषे देशविशेषसम्बन्धः उपलक्ष्याकारः शाखाग्रमुपलक्षणं शाखाचन्द्रयोश्च ऋजुप्रदेशवर्तित्व सम्बन्ध स च सम्बन्धो वाक्यानगतः आदित्यादिव्यावर्तकचन्द्रशब्दबोध्य चन्द्रसम्थान तृतीयाकारः * केदार वाद्याकारः प्रत्यक्षप्रतीतः चन्द्रत्वनु पूर्वानुभूत वाद्यीस्थ कुत्र चन्द्रइति बुभुत्सायामेव कश्चन्द्रइति बुभुत्सायां शब्दवाच्यत्वमुपलक्ष्य स्वारसिकेन वा * शब्दोत्थापितबुभुत्सामूलेन वा प्रत्यक्षेणप्रतीतो वक्रत्वादिः पूर्वप्रतिपन्नाकारः. अनेन निर्विशेषवस्तुवादेतूपलक्षणत्वमपि नोपपद्यत इत्युक्त भवति ॥

तृतीयाकारप्रतिपत्तिरस्तीति चोदयति। **ननुचेति**। दूषयति **नेति**। सत्यत्वादयः किंविशेषणतया लक्षणभूता उतोपलक्षणतया पूर्वस्मिन्कल्पे दूषणमुक्तम्। अन्यत्रचाकारान्तरप्रतिपत्त्यपेक्षाया वाक्यान्तरेणचेदनवस्था स्वेनचेदात्माश्रयइति।

### गूढार्थसङ्ग्रह

सच्छब्दाभिधेयं लक्षणमितिचेन्न। महासामान्यमात्राभिधानात्। सन्निरुक्ते घटइत्यवान्तरसामान्यव्यक्ति. महासामान्यपर्यवसानत्वेनापेक्ष्यते तथेहाप्यवान्तरसामान्यव्यक्तिर्वक्तव्या। विज्ञानमेव बृहत्त्वसर्वज्ञत्वादिधर्मवत्तया निरुपाधिकब्रह्मस्वरूपलक्षणमितिचेन्न तस्य सुखदुःखरागद्वेषादिमहासामान्यत्वात् तस्याप्यवान्तरसामान्यव्यक्तौ पर्यवसानं वक्तव्यमिति, तदाह—तस्य च निर्णयमाकयमानन्दाद्ध्ययेनेति। आनन्दएवहि ब्रह्मणः सर्वज्ञत्व कारणत्वादिधर्मवत्तया निरुपाधिब्रह्मस्वरूपं निर्णीयते। तथाहि—' यत्र नान्यत्पश्यती ' त्यारभ्य ' योवै भूमा तत्सुखम् ' इति सुखस्यैव बृहत्त्वधर्मवत्तामाह—विज्ञानतर्हि निरुपाधिकब्रह्मगुणइतिचेत् किं विज्ञानानन्दयोः सामानाधिकरण्यं नीलोत्पलादिवत् गुणगुणिभावात् किं वा द्रव्यं घटः इतिवत् परापरसामान्यभावादिति, न तावद्गुणगुणिभावात् ' साक्षीचेताकेवलो निर्गुणश्च ' इति श्रुतेः ' एकधैवानुद्रष्टव्य नेहनानाऽस्ति किंचन ' इतिच गुणगुणिभावभेदप्रतिषेधात्। गुणस्य गुणिनोऽन्यत्वानन्यत्वाभ्यामनिरूपणात् इति च ॥

तद्दूषयति **आकारान्तराप्रतिपत्तेरित्यादिना**। **देवदत्तकेदारइत्यादिष्विति**। आदिपदेन काकवद्देवदत्तगृहमित्यादेस्सङ्ग्रहः। काकवद्देवदत्तगृहमित्यादौ उत्तृणवादेरिवान्य धर्मान्तरमुपलक्ष्य नास्ति पूर्वप्रतिपन्नाकारोऽपि। पूर्वप्रतिपन्नाकार प्रासद्ध्यतीति शङ्कते—**ननुचेत्यादिना** ॥

(श) भाष्यादौ ' यत ' इत्यस्य सर्वज्ञत्वादिगुणविशिष्टार्थकत्वाभिधानेऽपि कैश्चित् सत्यज्ञानमनन्तमानन्दरूपवस्तु उच्यते इत्यर्थो वर्णितः। अयमर्थ ब्रह्मविद्याऽऽभरणरत्नप्रभयोर्व्यक्तः। तेन सूत्रस्य लक्षणद्वयपरत्व सिद्ध्यतीत्यपि तत्रोक्तम्। एवं च पूर्वप्रतिपन्नाकारासिद्धइति भावः। सूत्रस्य लक्षणद्वयपरत्वमास्तां सत्यत्वादेरपि निर्धर्मके ब्रह्मणि असम्भवेनोपलक्षणत्वमेव वाच्यम्, सर्वज्ञा माऽऽयुक्ताधिस्य (अ.सि) ज्ञानत्वानन्दत्वया उपहितवृत्तित्वेन पूर्वकालएव सत्व मुर्वौ तदुपलक्षित निर्धर्मक-

### श्रीभाष्यम्

**इतरेतरप्रतिपन्नाकारापेक्षत्वेन उभयोर्लक्षणवाक्ययोरन्योन्याश्रयणात्। अतो न लक्षणतो ब्रह्म प्रतिपत्तुं शक्यत इति ॥**

### श्रुतप्रकाशिका

अतो 'यतोवा इमानि' इत्यादिवाक्ये आकारान्तरप्रतिपत्तिर्वक्तव्या ततश्चान्योन्याश्रयइति भावः। अतइति। विशेषणत्वोपलक्षणत्वायोगादित्यर्थः ॥

### गूढार्थसंग्रहः

मिति मधुसूदनब्रह्मानन्दाभ्यां व्यवस्थापनं सङ्गच्छते। एवञ्चोभयोरुपलक्षणत्वे सत्यादिवाक्यं पूर्वप्रतिपन्नाकारपरं नैव भवितुमर्हति। इतरेतराश्रयाद्यापत्तेरित्यभिप्रेत्याह—इतरेतरप्रतिपन्नेत्यादिना। इदमुपलक्षणं 'काकवद्देवदत्तगृहम्' इत्यादौ उपलक्ष्यस्योत्तृणत्वादेः शाब्दबोधे भानस्य सर्वदार्शनिकसमतत्वेन निर्विशेषे उपलक्ष्यधर्मस्यापि बोधे भानासम्भवेन जगत्कारणत्वस्योपलक्षणलक्षणत्वविवरणब्रह्मविद्याऽऽभरणोक्तं न सम्भवति। 'आनन्दाद्ध्येव' इतिश्रुतौ आनन्दत्वप्रकारकबोधस्यैव विवक्षितत्वेन निर्विशेषस्य प्रतीतिरेव न सम्भवति। ज्ञानत्वानन्दत्वादिविशिष्टस्य जगत्कारणस्यैकतया एकवचनस्यापि नानुपपत्तिः। जगत्कारणे एकत्वकथनेन निमित्तोपादानयोर्भेदोऽपि निरस्तो भवति एकजगत्कारणानुवादेन तद्ब्रह्मेत्यत्र ब्रह्मलक्षणविधिः पर्यवसन्नः 'तद्विजिज्ञासस्व' इत्यत्र नविधिः सना विचारस्यापि रागप्राप्तत्वबोधनात्। अत्र विचारविधिवादि विवरणकारमते ब्रह्मलक्षणविधानं वाक्यभेदप्रसङ्गेन न संभवति। 'विज्ञानमानन्दं ब्रह्म' इत्यत्र ब्रह्मत्वानन्दत्वप्रकारकबोधस्यैव विवक्षितत्वेन तत्रापि निर्विशेषस्य न प्रसक्तिः। 'तन्त्वौपनिषदं पुरुषम्' इति पूर्वश्रुत्युक्तपुरुषस्यैव ब्रह्मपदार्थत्वेन पुरुषपदस्य बृहदारण्यकनिर्वचनत्रयलभ्यार्थानां त्रयाणां 'वैकुण्ठः पुरुषः' इत्यादिसहस्रनामभाष्ये (शं) अभ्युपगमेन तन्निर्वचनसिद्धपुरुषशब्दप्रवृत्तिनिमित्तविशिष्टस्यैव श्रुतौ विवक्षितत्वावश्यम्भावेन निर्धर्मकस्यानन्दरूपत्वोपनिषत्तात्पर्यविषयत्वयोरसम्भवात्। 'यत्र नान्यत्पश्यति' इत्यारभ्य 'यो वै भूमा तत्सुखम्' इति विवरणोदाहृतश्रुतौ विशिष्टस्यैव विवक्षेत्युत्तरत्र भूमाधिकरणे व्यक्तीभविष्यति। 'नेह नानाऽस्ति' इत्यादिकाः न परमतसाधिकाः इति पूर्वाधिकरण एव निरूपितम् ॥

'यद्रजतमभात् सा शुक्तिः' इत्यत्र मिथ्याभूतस्योपलक्षणत्वं न कस्यचित्सम्मतम्। रजतप्रकारकज्ञानविशेष्यत्वमेव 'यद्रजतमभात्' इत्यत्र विषयः रजतप्रकारकज्ञानविशेष्यत्वं न मिथ्या। यद्रजतं सा शुक्तिरिति व्यवहारो नास्त्येव। काकवद्देवदत्तगृहमित्यादौ पूर्वकाले देवदत्तसम्बन्धस्य सत्यतया मिथ्यात्वाभावेन तदुपलक्ष्योत्तृणत्वप्रकारबोधस्य नविरोधः इति मिथ्याभूतस्य क्वापि नोपलक्षणत्वम्। रजतदृष्टान्तश्च श्रुतौ कारणवाक्ये क्वापि नोक्तः। 'यत्सुषिरं तदाकाशम्' इत्यस्य कारणत्वलक्षणविचारे नोपयोगः। 'कश्चन्द्रः प्रकृष्टप्रकाशश्चन्द्रः' इत्यत्रापि न धर्माप्रकारकबोधः कस्यापि दार्शनिकस्यासम्प्रतिपत्तेः। अतः परोक्तरीत्योपलक्षणत्वं नघटत इतिभावः ॥

'यतो वा' इत्यादिश्रुतौ धर्मप्रकारकबोधस्यैव विवक्षितत्वेनोपलक्षणस्यापि प्रकारत्वेन जगत्कारणत्वस्योपलक्षणत्वं विशेषणलक्षणत्वञ्च सम्भवतीत्येव सूत्रकाराशय इत्यभिप्रेत्य पूर्वपक्षे विशेषणलक्षणत्वस्य प्रथमतः दूषणेऽप्युपलक्षणलक्षणस्य अन्ते दूषणेन तस्यैव बुद्धिस्थतया प्रथमं जगज्जन्मादिकारणत्वस्योपलक्षणत्वमुपपाद्यानन्तरं विशेषणत्वमप्युपपादयिष्यते ॥

## श्रीभाष्यम्

एवंप्राप्तेऽभिधीयते जगत्सृष्टिस्थितिप्रलयैरुपलक्षणभूतैर्ब्रह्म प्रतिपत्तुं शक्यते। नचोपलक्षणोपलक्ष्याकारव्यतिरिक्ताकारान्तराप्रतिपत्तेर्ब्रह्माप्रतिपत्तिः। उपलक्ष्यं ह्यनवधिकातिशयबृहत् बृंहणं च, बृहतेर्धातोस्तदर्थत्वात्। तदुपलक्षणभूताश्च जगज्जन्मस्थितिलयाः। यतो येन यदिति प्रसिद्धवन्निर्देशेन यथाप्रसिद्धि जन्मादिकारणमनूद्यते। प्रसिद्धिश्च 'सदेव

## श्रुतप्रकाशिका

सिद्धान्तमवतारयति—एवंप्राप्तेऽभिधीयतइति। एवं सूत्रकाराभिप्रेते पूर्वपक्षे प्राप्ते तदभिप्रेतस्तत्परिहार उच्यत इत्यर्थः। * शाप्यबहिर्भूतो शाप्यप्रतीत्युपायः उपलक्षणं शाप्यान्तर्भूतो शाप्यप्रतीत्युपायो विशेषणम्। नचैकस्य शाप्यशापकत्वविरोधः घटादेरिन्द्रियसंयोगप्रतिसंबन्धित्वेन ज्ञानोत्पत्तिहेतुत्वस्य विषयत्वस्य च दर्शनात्। * एवं शब्दतो धीस्थतया स्वविशिष्टप्रतीतौ हेतुभूतं विशेषणमिति उभयथाऽपि लक्षणत्वोपपत्तिं वक्ष्यन् 'एकानेकस्वरूपाय स्थूलसूक्ष्मात्मने नमः' इतिवच्चरमोक्तमुपलक्षणपक्षं बुद्धिस्थतया प्रथममुपपादयितुं प्रतिजानीते। जगदिति ॥

ननूपलक्षणपक्षेऽनुपपत्तिरुक्तेत्याह—नचेति। * आकारान्तरं आकारविशेषः सचोपलक्षणोपलक्ष्याकारातिरिक्त इत्यपुनरुक्तिः। पृथक्तृतीयाकारं दर्शयितुमाकारद्वयं विवक्षन् पूर्वमुपलक्ष्याकारमाह—उपलक्ष्यंहीति। अथर्वशिरसि 'बृहति बृंहयति तस्मादुच्यते परब्रह्म' इति, श्रीमद्वैष्णवपुराणे च 'बृहत्वाद्बृंहणत्वाच्च ब्रह्मेति परिपठ्यते' इत्यादिनिर्वचनप्रसिद्धिद्योतको हिशब्दः। * आकारत्रयपृथक्त्वद्योतनार्थाः चशब्दास्तत्रतत्र ज्ञेयाः ॥

कथं निरतिशयबृहत्त्वबृंहणत्वप्रतिपत्तिरित्यत्राह—बृहतेरिति। मनिन्प्रत्ययान्तस्य रूढिसहकृतस्य बृहतिधातोस्तदर्थत्वादित्यर्थः। * यद्वा ब्रह्मशब्देन बृहत्त्वबृंहणत्वावगतिः कथमित्यत्राह—बृहतेरिति। बृहत्वस्य स्वरूपतो गुणतश्च विवक्षितत्वात् बृंहणत्वरूपबृहत्त्वमपि धात्वर्थान्तर्गतमिति भावः। उपलक्षणाकारमाह—तदुपलक्षणेति। ननु सारस्य केदारेणेव जन्मादीनां ब्रह्मणासह संबन्धो वक्तव्यः। किंच ब्रह्मण उपादानत्वे ब्राह्ममतइव निमित्तान्तराधिष्ठितताप्रसङ्गेन सत्यसङ्कल्पत्वादिगुणान्वयलक्षणबृंहणत्वासिद्धिश्च स्यादित्येतच्छङ्काद्वयं परिहरंस्तृतीयाकारोपस्थापकं वाक्यं चावतारयति—यतो येनेत्यादिना ॥

कुत्र कथं प्रसिद्धिरित्यत्राह—प्रसिद्धिश्चेति। तच्च कथमित्यपेक्षायां तत्प्रतिपादनं पदानामन्वयमुखेन दर्शयति.

## गूढार्थसंग्रह

जगत्सृष्टिस्थितिप्रलयैरिति। श्रुतौ भूतविशेष्यकबोधस्य स्फुटतया तद्गतजगत्सृष्टिस्थितिप्रलयानां कारणत्वेन ब्रह्मणि संबन्धः 'यत' इति पञ्चम्या बोध्यते। तेन जगद्धर्माणामपि ब्रह्मसंबन्धित्वेनैव सत्यभूतानामुपलक्षणत्वं संभवतीति भावः। एतेन मिथ्याभूतस्य नोपलक्षणत्वमिति सूचितम्। कार्यकारणभावस्यैव मिथ्यात्वेन अत्र सत्यस्य नोपलक्षणत्वं संभवतीति नशङ्कनीयम्। जगत्कारणस्यैव पुरुषशब्दार्थत्वेन तस्यैव निरतिशयतात्पर्यविषयत्वस्य श्रुतिसिद्धत्वात्। 'बृहति बृंहयति' इति श्रौतनिर्वचनसिद्धब्रह्मशब्दार्थबृंहणत्वस्य कारणत्वरूपत्वेन तस्यासत्यत्वं 'एष पन्थाः' इत्यादिश्रुतिविरोधेनापि नसंभवति इत्यभिप्रेत्याह—उपलक्ष्यंहीति ॥

प्रसिद्धवन्निर्देशेन यथाप्रसिद्धिजन्मादिकारणमनूद्यते इति। एतेन 'सत्यज्ञानम्' इति वाक्यप्रतिपाद्यं यच्छब्दार्थं इति केषाचिदुक्तिरनुपादेयेति सूचितम्। तत्र कारणत्वानुक्तया तदर्थस्यात्र विवक्षाया अनुचितत्वात्। अतएव

## श्रीभाष्यम्

**सोम्येदमग्र आसीदेकमेवाद्वितीयम्। तदैक्षत बहु स्यां प्रजायेय' (छा.६.२.१) इति 'तत्तेजोऽसृजत' इत्येकस्यैव सच्छब्दवाच्यस्य निमित्तोपादानरूपकारणत्वेन तदपि सदेवेदमग्र एकमेवासीदित्युपादानतां प्रतिपाद्य अद्वितीयमित्यधिष्ठानान्तरं प्रतिषिध्य तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत इत्येकस्यैव प्रतिपादनात्। तस्माद्यन्मूला जगज्जन्मस्थितिलयाः तद्ब्रह्मेति, जन्मस्थितिलयास्वनिमित्तोपादानभूतं वस्तु ब्रह्मेति लक्षयन्ति। जगन्निमित्तोपादानताक्षित सर्वज्ञत्वसत्यसङ्कल्पत्व विचित्रशक्तित्वाद्याकारबृहत्वेन प्रतिपन्नं ब्रह्मेति च जन्मादीनां तथा प्रतिपन्नस्य लक्षणत्वेन नाकारान्तराप्रतिपत्तिरूपानुपपत्तिः।**

## श्रुतप्रकाशिका

तदपीति। तत् निमित्तोपादानत्वरूपकारणत्वम्। उपादानत्वाधिष्ठानान्तरनिवारणयोरुपपादनकृत 'तदैक्षत बहु स्याम्' 'असृजत' इति। रामकृष्णादिरूपेण बहुभवनव्यावृत्त्यर्थं जगद्रूपेण बहुभवनमिति दर्शितम् 'तत्तेजोऽसृजत - इत्यनेन अत्र फलित सम्बन्धमाह—तस्मादिति। यथा उपलक्षणेन सारसेनाधिकरणत्वेन सम्बन्धित्व केदारस्य, यथा चन्द्रदेशस्य शाखायाश्च ऋजुमात्रसम्बन्ध तथा ब्रह्मण उपलक्षणभूतजन्मादिभिर्हेतुहेतुमद्भावस्सम्ब इत्युक्तं भवति यथा प्रसिद्ध्यनुवादरूपतया वाक्यस्य निमित्तान्तरशङ्काचार्थापरिहृता भवति। एव तृतीयाकारस्याक्षेपकमुपलक्षणसम्बन्धात्मक निमित्तोपादानरूपकारणत्वमुक्तम्॥

अथ तदाक्षित तृतीयाकारमाह—जगदिति। यतश्शब्दस्मारितकारणवाक्येषुहि सार्वज्ञ्याद्यवगम अतो जगन्निमित्तोपादानताक्षिप्तेत्युक्तम्, गुणानामपरिच्छिन्नतया तद्विशिष्टस्य ब्रह्मशब्दवाच्यतायोग्यत्वज्ञापनार्थमाकारबृहत्त्वेनेत्युक्तम्। 'यस्सर्वज्ञः' इत्यादिवाक्यावगतसार्वज्ञ्यादीनामुपलक्षणत्वाभावान्नान्योन्याश्रय। विशेषणबहुत्वन्तु न विशेष्यभेदापादकमिति वक्ष्यतइति न विरोध। उपलक्षणपक्षानुपपत्तिपरिहारमुपसहरति इतिचेति। इति अतश्चेत्यर्थ। उपलक्ष्यंहीत्यादिभाष्यस्यैव वा योजना * अनवधिकातिशयशब्दे तात्पर्यम् उपलक्ष्यमनवधिकातिशयबृहत्व बृहणत्व च। निरवधिकबृहत्व च स्वरूपतो गुणतोविभूतितश्चानवधिकबृहत्व, बृह बृहणत्वविशेष उपलक्ष्य इत्युक्तं भवति। ततश्चोपलक्ष्याकारैकदेशभूत बृहत्वबृहण मात्र पूर्वप्रतिपन्नाकारो भवतीति फलितम् लोके तथादर्शनात्। देवदत्तकेदार इत्युपलक्ष्यम् नच देवदत्तसम्बन्धित्वमात्रं घटपटादिष्वतिप्रसङ्गात्। तदेकदेशभूतकेदारत्वमात्रेण पूर्वप्रतिपत्ति। तस्मादुपलक्ष्यैकदेशभूतबृहत्वबृहणत्वाकारेण पूर्वप्रतिपत्ति। अनवधिकातिशयबृहत्व बृहणत्वमुपलक्ष्यमित्यभिप्रायेण ह्यनवधिकातिशयबृहद्बृहणचेत्युक्तम्। बृहत्वबृहणत्वविशेषस्योपलक्ष्यत्वात् बृह बृहण मात्र पूर्वप्रतिपन्नाकारइत्यर्थसिद्धमिति हिशब्देन सूचितम्॥

कथ त प्रतिपत्तिरित्यत्राह—बृहतेर्धातोरिति। बृह मात्र पूर्वप्रतिपन्नाकारइत्यध्याहृतेन वाक्येन तदर्थ वादिति पञ्चम्या अन्वय। यद्वा नचेत्यादिपूर्ववाक्येनान्वय। उपलक्षणाकारमाह—तदुपलक्षणेति। तृतीयाकारमन्यमपि विवक्षुस्तत्प्रतिपादक वाक्यमवतारयन्नुपलक्षणस्योपलक्ष्येण सम्बन्धनिमित्तान्तरशङ्का च व्युदस्यति यतो येनेत्यादिना। पूर्व-

## गूढार्थसंग्रह

(श) भाष्यादावयमर्थो नास्ति। अद्वितीयमित्यादि। 'द्वितीयशब्दश्च सजातीयसहाय [illegible]' इति ( ) नागेशावे एतदनन्तर 'तदैक्षत' इत्युक्त्या द्वितीयसामान्याभावो नात्र विवक्षित। आकारबृहत्त्वेनेति। अत्र पूर्वप्रतिपन्नाकारउक्त.

## श्रीभाष्यम्

जगज्जन्मादीनां विशेषणतया लक्षणत्वेऽपि न कश्चिद्दोषः । लक्षणभूतान्यपि विशेषणानि स्वविरोधिव्यावृत्तं वस्तु लक्षयन्ति । अज्ञातस्वरूपे वस्तुन्येकस्मिन् लिलक्षयिषितेऽपि परस्पराविरोध्यनेकविशेषणलक्षणत्वं न भेदमापादयति । विशेषणानामेकाश्रयतया प्रतीतेरेकस्मिन्नेवोपसंहारात् । खण्डत्वादयस्तु विरोधादेव गोव्यक्तिभेदमापादयन्ति । अत्र तु कालभेदेन जन्मादीनां न विरोधः ।

## श्रुतप्रकाशिका

न्दर्थः । विरुद्धिमस्य तृतीयाकारमाह—जगदिति । * इदानीं नशब्दस्तृतीयाकारान्तरसमुच्चये । यथा केदारत्वं सारसाधिकरणत्वे देवदत्तसम्बन्धित्वोपयोगि तथा सर्वज्ञवादयाऽप्यनवधिकातिशयबृहत्त्वबृंहणत्वजन्मादिकारणत्वोपयोगिनः ॥

अथ विशेषणतया लक्षणत्वमुपपादयति । जगज्जन्मादीनामिति । कथं नदोषः अपवादकप्रमाणाभावे विशेषणभेदस्य विशेष्यभेदावहत्व दोषत्वेनाभ्युक्तमित्यत्राह—लक्षणभूतान्यपीति । लक्षणभूतानि व्यावर्तकभूतानीत्यर्थः । *यद्वा लक्षणभूतानि विशेषणानि सजातीयविजातीयव्यावर्तनस्वभावत्वेऽपीत्यर्थः स्वविरोधिव्यावृत्तं नियतभिन्नाश्रयविशेषणाश्रया व्यावृत्तं नत्वविरुद्धविशेषणाश्रयाद्व्यावृत्तमित्यर्थः । अयग्रन्थः पक्षविषयः बहुत्वापवादकप्रमाणाभावे सति विशेषणत्वमेव विरोधित्वमित्यत्राह—अज्ञातेति । अयंतु सपक्षविषय । देवदत्तश्यामो युवेत्याद्युदाहरणमत्राभिप्रेतम् । अप्रत्यक्षविषयेऽप्येकवचनान्तधर्मिवाचिपदैक्याद्विशेष्यैक्य प्रतीयत इत्यर्थः ॥

अत्र विशेष्यैक्यव्यवस्थापकं किमित्यपेक्षाया सपक्षे विशेष्यैक्यमुपपादयति । विशेषणानामिति । शब्दस्वारस्याद्विशेषणानामेकाश्रयान्वयप्रतीतिरविरुद्धविशेषणानामेकाश्रयवृत्तित्वोपपत्तेरित्यर्थः । अविरुद्धविशेषणत्व विशेष्यैक्यव्यवस्थापकमित्युक्तं भवति । यद्वा अज्ञातस्वरूपइत्यपि ग्रन्थः पक्षविषय. । पूर्वस्मिन्ग्रन्थे विशेषणानां विरुद्धविशेषणाश्रयात् स्वाश्रयभेदकत्वमुक्तम् । अप्रत्यक्षत्वेसति * भिन्नविशेषणत्वमेव भेदकत्वमित्यत्राह—अज्ञातेति । तत्राप्यविरुद्धविशेषणभेदो न विशेष्यभेदकइत्यर्थ. । कुतइत्यत्राह—विशेषणानामिति । देवदत्तश्यामोयुवा लोहिताक्ष इत्यादावविरुद्धविशेषणानामेकाश्रयत्वदर्शनात् पक्षीकृतेऽप्येकस्मिन्नेव विशेषणानामन्वयोपपत्तेरित्यर्थः ॥

अविरुद्धविशेषणानां विशेष्यभेदानापादकत्वमुक्तम्, विपक्षभूतखण्डादिषु बहुत्वनियामकमाह—खण्डत्वादयस्त्विति ततः पक्षस्य वैषम्यमाह—अत्रत्विति । कालभेदनेत्यस्यायमभिप्रायः । विशेष्यब्रह्मबहुत्वेऽपि जगज्जन्मादीनां यौगपद्यव्या-

## गूढार्थसङ्ग्रहः

द्विविधलक्षणे विशेषणतया लक्षणत्वं न सम्भवतीति मिथ्याभूतस्य जगत्कारणत्वस्योपलक्षणतया निर्विशेषलक्षणत्वं यत् परैरुक्तं तत्र निर्विशेषस्य इदं लक्षणं न सम्भवति । एवं मिथ्याभूतस्यापि । किंतु सविशेषस्यैवोपलक्षणभूतं लक्षणमित्येतावता निरूपितम् । विशेषणतया लक्षणत्वं न सम्भवतीति परोक्तं न घटत इत्यभिप्रेत्य विशेषणतया लक्षणत्वं निरूपयति—जगज्जन्मादीनामिति ॥ 'अविरुद्धविशेषण' इति (स.शा) श्लोकस्य यत्तात्पर्यं तद्विवरणे मधुसूदनसरस्वतीभिः प्रथमसं. (१७१.१७२) प्रदर्शितं तन्नघटत इति जिज्ञासाधिकरण एव (६३३—६३४.प्र.स) निरूपितम् ॥ अत्रतु काल भेदेनेति । विवरणे प्रत्यक्षेण मिथ्यात्वसिद्धिनिरूपणावसरे देशकालाद्युपाध्यन्तर्भावेणैव निषेधप्रतीतिरिति यदुक्तं तत् क्षणिकत्वनिरसनावसरे कुमारिलोक्त्यनुसारेण न विचारसहमिति पूर्वमेव (प्र.स.३६७—३६८) निरूपितम् । 'निष्कलंनि

## श्रीभाष्यम्

**'यतो वा इमानि भूतानि जायन्ते' (तै.उ.भृगुच) इत्यादिकारणवाक्येन प्रतिपन्नस्य जगज्जन्मादिकारणस्य ब्रह्मणस्सकलेतरव्यावृत्तं स्वरूपमभिधीयते। 'सत्यंज्ञानमनन्तं ब्रह्म'**

## श्रुतप्रकाशिका

घातात् कालभेदेनाविरोधआश्रयणीयः विशेष्यैक्येऽपि तथैवाविरोध इति ॥ अत्रायमर्थोऽनुसधेयः विशेषणबहुत्वं स्वत एव विशेष्यभेदापादकं, खण्डो मुण्डइत्यादिषु दर्शनात् देवदत्तश्यामो युवेत्यादिषु प्रत्यक्षबाधादैक्यप्रतीतिः तस्मात्प्रत्यक्षागोचरे ब्रह्मणि विशेषणबहुत्वायत्त विशेष्यबहुत्वमवर्जनीयम्। ननु एकवचनान्तधर्मिवाचिपदैक्यस्य स्वतो विशेष्यैक्यपरत्वं देवदत्तश्यामोयुवेत्यादिषु दृष्टम् खण्डोमुण्ड इत्यादिषु प्रत्यक्षबाधाद्बहुत्वप्रतीतिः। अतः प्रत्यक्षागोचरे ब्रह्मणि एकवचनान्तधर्मिवाचिपदैक्यादैक्य सिद्धमेव ॥

नैवम् विशेषणभेदायत्त विशेष्यबहुत्वमेकवचनान्तधर्मिवाचिपदैक्यं न बाधते। अपितु प्रत्यक्षमेव बाधते अदृश्यमानगोव्यक्तेः पुरुषस्य खण्डोमुण्ड इत्यादिवाक्यप्रयोगे सत्येकवचनान्तधर्मिवाचिपदैक्येऽपि बहुत्वप्रतीतेरितिहि पूर्वपक्षस्थितिः। तत्रोत्तरमुच्यते अज्ञातेत्यादिना। एकवचनान्तधर्मिवाचिपदैक्यं बहुत्वं बाधत एव, अदृश्यमानेऽपि देवदत्ते देवदत्तश्यामोयुवेत्यादिवाक्यप्रयोगेषु विशेषणबहुत्वेसत्यपि विशेष्यैक्यप्रतीतेः। एव प्रत्यक्षाप्रत्यक्षविभागविधुर बहुत्वप्रतीतिरैक्यप्रतीतिश्च भवतः अस्तु बहुत्वैकत्वयोः को निर्णायकइतिचेत्। नियतभिन्नाश्रयदृष्टविशेषणबहुत्वं विशेष्यैक्यविरोधि अनियतभिन्नाश्रयदृष्टविशेषणबहुत्व नैक्यविरोधीति। अथ सत्यज्ञानादीना लक्षणत्वोपपत्तिं पूर्वोक्तान्योन्याश्रयणपरिहारं चाह–यतोवा इति। लक्षणवाक्येनानेन कारणत्वमेव लक्षणत्वेनोक्तमित्यस्य कारणवाक्यत्वम्। आदिशब्देन 'सदेव' इत्यादीनि कारणत्वप्रापकवाक्यानि गृह्यन्ते ॥

ननु लक्षणभूतेनैव जन्मादिकारणत्वेन ब्रह्मणस्सजातीयविजातीयव्यावृत्तिस्सिद्धा अन्यथा तस्य लक्षणत्वायोगात् तत्कथ सत्यादिवाक्येन सकलेतरव्यावृत्ताभिधानोक्तिः, उच्यते–व्यावृत्तिर्द्विविधा व्यक्त्यन्तरेष्वसमान्वितधर्मयोगरूपा, तत्तज्जातीयासाधारणधर्मानन्वयरूपा च, तत्र विलक्षणधर्मयोगे व्यक्त्यन्तरेभ्योऽन्यत्व सिद्ध्यति नत्वतज्जातीयत्वं तज्जातीयत्वव्य-

## गूढार्थसंग्रहः

ष्क्रियम्' इतिश्रुत्या परब्रह्मणि सृष्ट्यादिक्रिया नसम्भवतीति सृष्ट्यादिक्रियायाः आविद्यकत्वेन मिथ्यात्वमिति यद्विवरणोक्तं तदपि नघटते। 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' इति श्रुतौ आविद्यारूपावद्यस्यापि निषेधेन सृष्ट्यादिक्रियायाः आविद्यकत्वकल्पनासम्भवात्। 'निष्क्रियम्' इति सामान्यनिषेधस्य सृष्ट्यादिक्रियाविशेषप्रतिपादकशास्त्रानुसारेण परिस्पन्दरूपक्रियाविशेषपरतयैवोपपत्तेर्योग्यत्वात्। अतएव 'स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुतिरुपपद्यते 'नेहनानाऽस्ति' इत्यादेः परनवीनसंमतार्थः पूर्वमेव (प्र.स.३२१,३२२,३३८–५) पर्यालोचितः। तेन सृष्ट्यादिक्रियायाः सार्वदिकत्वेन कालभेदेन विरोधपरिहारोक्तिर्न घटत इति नवीनोक्तदूषणस्य नावसरः। नव्यमतेऽपि व्यवहारोपपत्त्यर्थमभिव्यक्तेरङ्गीकारेण अभिव्यक्तेस्सार्वदिकत्वाभावात् विरोधपरिहारस्सम्भवति। षष्ठ्या भेदप्रतीत्या अभेदोक्तिरपि निरवकाशा ॥

'उपलक्ष्यंब्रह्मनवधिकातिशयबृहत् बृहण च' इत्यादौ पूर्वं पूर्वप्रतिपन्नाकारनिरूपणपरभाष्ये यत् आकारबृहत्त्वं पूर्वप्रतिपन्नमुक्तं तत्समर्पकत्वमेव 'सत्यज्ञानम्' इत्यादेरिति पूर्वपक्षोक्तान्योन्याश्रयपरिहारः योऽभिप्रेतः तमेव विवृणोति–यतोवा इमानि इत्यादिना। स्वरूपमभिधीयतइति। लक्ष्यस्वरूपमभिधीयत इत्यर्थः ॥

## श्रीभाष्यम्

**(तै.आन.१) इति तत्र सत्यपदं निरुपाधिकसत्तायोगि ब्रह्माह तेन विकारास्पदमचेतनं तत्संसृष्टश्चेतनश्च व्यावृत्तः नामान्तरभजनार्हावस्थान्तरयोगेन तयोर्निरुपाधिकसत्तायोग**

## श्रुतप्रकाशिका

शकधर्मान्वयाधीनतज्जातीयत्वशङ्काया अनपगमात् । तदनन्वयेन तज्जातीयताव्यावृत्तिरिसद्ध्यति । यथा घटस्य संस्थानविशेषणमितरसमस्तवैलक्षण्ये सिद्धेऽपि पृथिवीत्वव्यवस्थापकगन्धवत्त्वयोगात् पृथिवीजातीयत्वं नापैति तदयोगादबादिषु तज्जातीयत्वागमः एवं जगत्कारणत्वरूपविलक्षणधर्मान्वयेसत्यपि ब्रह्मणोऽचिज्जातीयत्वजीवजातीयत्वशङ्काऽवतिष्ठत इति तज्जातीयताव्यावृत्तिस्सत्यादिवाक्येन प्रतिपाद्यत इति तस्य सकलेतरव्यावृत्तस्वरूपबोधकेत्वित्युक्तेति ॥

कथं व्यावृत्तस्वरूपाभिधानमित्यत्राह—**तत्रेति** । केनापि परिणामविशेषणतत्तदवस्थस्य सत्ता सोपाधिकसत्ता अतो निरुपाधिकसत्ता निर्विकारत्वं सत्यपदव्यावर्त्यमाह—**तेनेति** । कथमित्यत्राह—**नामान्तरेति** । निरुपपद सत्यपदमसङ्को-

## गूढार्थसंग्रहः

एवं च 'सत्यं ज्ञानम्' इत्यस्य लक्ष्यव्यक्तिविशेषनिर्णयसमर्पकत्वमेव । अत्र पदत्रयेन अचेतन बद्ध,मुक्त,नित्य वैलक्षण्यनिरूपणेन जगत्कारणत्वलक्षणलक्ष्यताऽवच्छेदकनिष्कर्षः कथितो भवति । **सत्यपदं निरुपाधिकसत्तायोगिब्रह्माहेति** । अयमाशयः उत्तरत्र 'सच्चत्यच्चाभवत्' इत्युपक्रम्य 'सत्यंचानृतं च सत्यमभवत्' इति वक्ष्यते । तत्र सच्छब्दः सत्यशब्दश्च एकार्थकः । तदानुगुण्येन त्यच्छब्द अनृतशब्दश्चैकार्थकाविव । 'मूर्तामूर्तौहिराशीद्वौ सच्चत्यच्चादिनोदितौ श्रुत्यन्तरेण सगानात्' (५०) इति तै वार्तिक उक्तम् । 'श्रुत्यन्तरं च' 'अथ नामधेयं सत्यस्य सत्यं प्राणावैसत्यं तेषामेव सत्यम्' (बृ) इति तत्र वार्तिके 'मूर्तामूर्तं हि सत्याख्यं प्राणास्सत्यास्सत्यदात्मतः । क्षेत्रज्ञस्तदुपाधित्वात्सत्यइत्यभिधीयते ॥' (२४४) इत्युक्तम् । अत्रानन्दगिरिविवरणम् 'सच्चत्यच्चाभवदिति श्रुत्यन्तरप्रसिद्धिं उक्तेर्थे द्योतयति' इति । अत्र 'व्यावहारिकमेवात्र सत्यस्यादधिकारतः । पारमार्थिकसत्यस्य वाक्यान्ते समुदीरणात् ॥' इति सत्यशब्दद्वयार्थभेदः तै.वार्तिके प्रदर्शितः । 'अथ नामधेयम्' इति इत्यत्र 'व्यपदेशाय नामैतत् न स्व नामास्य विद्यते । लक्षयेत्राञ्जसा वक्ति परब्रह्म कथञ्चन ॥ शब्दप्रवृत्तिहेतूना साक्षाद्ब्रह्मण्यसम्भवात्' इत्यत्रोत्तरसत्यशब्दस्य लाक्षणिकत्वोक्तया अत्रापि उत्तरसत्यशब्दः लाक्षणिक इत्येव परेषा प्रक्रिया । 'तस्योदिति नाम' इतिवत् 'नेतिनेति' इति निषेधानन्तर 'अथ नामधेयम्' इतिश्रुत्या परब्रह्मनामत्वस्य 'सत्यस्य सत्यम्' इत्यत्र प्रतिपादनादुत्तरत्र सत्यशब्दः लाक्षणिकइत्युक्तिः पूर्वसत्यशब्दः व्यावहारिकसत्यपरः, उत्तरसत्यशब्दः पारमार्थिकसत्यपरइत्युक्तिश्च 'न सत्यद्वयकल्पना' इति कुमारिलेनैव निरस्ततया नघटत इति सत्यशब्दद्वय न लाक्षणिक नमिथ्यासत्यरूपविभिन्नार्थकं च इति श्रुतितात्पर्यमवश्यमेषितव्यम् । छान्दोग्ये—'तानि हवा एतानि त्रीण्यक्षराणि सत् ति यमिति तद्यत्सत्तदमृतम् अथ यत् ति तन्मर्त्यं अथ यद्य तेनोभौ यच्छति' (छा.८.प्र.३.५) इत्यत्र 'तस्यहवा एतस्य ब्रह्मणो नामसत्यम्' इति पूर्वश्रुत्युक्तसत्यनाम्नो निर्वचनं कृतम् । इदमेव 'सच्चत्यच्चाभवत्' इत्यत्र सच्छब्दस्याप्यर्थः । त्यच्छब्दस्य पूर्वस्वापपरिणामत्यागवदर्थकतया विकारि इत्येवार्थः । तत्र छान्दोग्ये ब्रह्मासाधारणतया सत्यनामनिर्वचनमिति सत् ति यमिति छेदः । अत्र सत्यशब्दद्वयप्रयोगेण अनृतशब्दसमभिव्याहारेण च सच्छब्दसमानार्थक सत्यशब्दः । सच सच्छब्दश्च एकार्थकत्वेन सप्रतिपन्न । अत्र सत्यशब्दद्वयप्रयोगेण अन्तिमसत्यशब्दस्य निरुपाधिकसत्तायोगीत्यर्थः । प्रथमसत्यशब्दः सोपाधिकसत्तायोगिपरः । बद्धजीवसत्ताया. कर्मनिब-

## श्रीभाष्यम्

रहितत्वात्। ज्ञानपदं नित्यासंकुचितज्ञानैकाकारमाह।

## श्रुतप्रकाशिका

त्वात् स्वरूपतो धर्मतश्चैकरूपत्व ज्ञापयतीत्यचित्तत्ससृष्टजीवव्यावृत्तिः। ज्ञानशब्दार्थमाह—**ज्ञानपदमिति**। इदानीमासि न्निविषयइत्याद्युपपदरहितं ज्ञानपदमसङ्कुचितत्व नित्यत्वं च ज्ञानस्य दर्शयति। नित्यासङ्कुचितज्ञानत्वमेवाकारो यस्य तन्नि-त्यासङ्कुचितज्ञानैकाकारम् तेन ब्रह्मणः कदाचित् क्वचिदपि प्रदेशे जडत्वव्यावृत्तिः। नित्यासङ्कुचितज्ञानत्वं अद्वारक धर्म द्वारकं च परमात्मन आकारो भवति '**आत्मज्योतिस्सम्राडितिहोवाच**' '**ब्रह्मणाविपश्चिता**' '**विज्ञातारमरेकेन विजानीयात्**' इत्यादिभिस्स्वरूपस्य धर्मस्य च ज्ञानत्वावगमात्। ज्ञानशब्दासङ्कोचेन सद्वारकाद्वारकज्ञानाकारत्वसिद्धिः

*नन्वस्य ज्ञानशब्दस्य किं प्रवृत्तिनिमित्तम्? विषयावगाहिज्ञानाख्यद्रव्यत्वचेत् अपर्यवसानात् ज्ञानधर्मकत्वमुक्तं* स्यात्, नतु ज्ञानस्वरूपता स्वप्रकाशतारूप ज्ञानत्वं प्रवृत्तिनिमित्तंचेत् ज्ञानस्वरूपत्वमुक्तंस्यात्। नतु ज्ञानधर्मकत्वम्। ततश्च '**तद्गुणसारत्वात्**' इति सूत्रविरोधश्च। नच गवादिशब्दाना परमात्मपरत्वे गोत्वसस्थानपिंडजीवानामिव द्वार-द्वारिभावात् ज्ञानाख्यद्रव्यज्ञानत्वगुणयोर्द्वयोरपि प्रवृत्तिनिमित्तत्व घटते, नहि धर्मभूतज्ञानं स्वरूपभूतज्ञानगतज्ञानत्वगुणे समवैति येन द्वारद्वारिभावस्स्यात्। धर्मभूतज्ञाने स्वरूपेचानुगत ज्ञानत्वमेव प्रवृत्तिनिमित्तंचेत् गोशब्देन खण्डमुण्डपिण्ड द्वयवत् ज्ञानव्यक्तिद्वयमुक्त स्यादिति द्वारद्वारिभावेनानभिधानात् तयोर्ज्ञानयोर्न धर्मधर्मिभावप्रतीतिः ज्ञानत्वगुणविशेषित-

## गूढार्थसंग्रहः

न्धनत्वेन सोपाधिकत्वात्। स्वच्छन्दार्थचेतनस्यापि परमात्मसङ्कल्पाधीनत्वेन सोपाधिकसत्तायोगित्वात्। अनृतशब्दःन मिथ्याऽर्थकः, किंतु विकारार्थकः। अमृतमर्त्योभयनियामकत्वेनोदाहृतसत्यनामनिर्वचनानुसारात्। छान्दोग्यबृहदारण्य-कादिनिर्वचनसामान्यस्य एकरूपत्वेन छान्दोग्यनिर्वचनस्यारोपपर्यवसितत्वस्य परकल्पितस्य श्रुतितात्पर्यविषयत्वासंभवात्। एवं च उत्तरान्तिमसत्यशब्दसमानार्थक एव 'सत्यज्ञानम्' इत्यत्र सत्यशब्दः इति ॥

**ज्ञानपदमिति**। आत्मसिद्धौ 'सत्यंज्ञानम्' इत्यत्रापि ब्रह्मलक्षणनिर्देशे ज्ञानशब्दो न ज्ञानमात्रवचनः, अपितु *तद्वद्वचनः तद्वचने 'लिति' इत्याद्युदात्तप्रसक्तेः। अन्तोदात्तश्चाय ज्ञानशब्दः मत्वर्थीयाच्प्रत्ययान्तत्वे तथा घटते नान्य* थेत्येतत् परमात्मनिरूपणे अतिनिपुणमुपपादयिष्यामः' इति ज्ञानशब्दार्थः इत्थमुक्तः। अत्र सत्यज्ञानमित्यादिकाश्च ज्ञानैकनिरूपणीयतया स्वप्रकाशतया च ज्ञानस्वरूपताम्' इति जिज्ञासाऽधिकरणसूत्रयनुसारेण ज्ञानपदं नित्यासंकुचितज्ञानै काकारतामाह' इति सूक्तावपि ज्ञानवत्त्वमेव विवक्षितमित्यात्मसिद्ध्यनुसार्यर्थ एव भगवत्सम्मतइति प्रतीयते। जिज्ञासा-धिकरणसूक्तौ आदिपदार्थत्वेन विवक्षितायाः 'विज्ञानमानन्द ब्रह्म' इति श्रुतौ ज्ञानस्वरूपत्वप्रकाशनेन 'स्वप्रकाशतया चज्ञानस्वरूपताम्' इत्युक्तिस्सङ्गच्छते। व्यासार्यास्तु 'ज्ञानत्वमात्रस्य प्रवृत्तिनिमित्तत्वेसति शब्दशक्त्यसङ्कोचात् बाधाप्र माण्याच्च ज्ञानत्वविशिष्टताऽवगमेन ज्ञानधर्मकत्व ज्ञानात्मकत्वसिद्धिं' वदन्तः 'सत्यंज्ञानम्' इत्यत्रैवोभय विवक्षित मिति प्रतिपादयन्ति। 'ज्ञानत्वं ज्ञातृमात्रा स्वरसहृद्यतया स्वप्रकाशत्वतश्च' इति सारावल्यामात्मसिद्ध्यविरोधेन जिज्ञासा ऽधिकरणभाष्य निरूपयन्तः आचार्यपादाः जिज्ञासाऽधिकरणभाष्यस्य 'सत्यज्ञानम्' इत्यस्यैवार्थद्वयपरत्वेऽपि नविरोध इत्यभिदधति। 'तेन कदाचित्सङ्कुचितज्ञानत्वेन मुक्ताव्यावृत्ताः' इति सूक्त्याऽपि अत्र भाष्ये ज्ञानवत्त्वविवक्षैव स्फुट प्रतीयते।

## श्रुतप्रकाशिका

ज्ञानद्रव्यविशिष्टतया ज्ञानगुणविशिष्टतया च स्वरूपस्याभिधाने शब्दस्य युगपद्व्यापारभेदः प्रसजेत्—अतो ज्ञानपदेन स्वरूपो धर्मतश्च ज्ञानाकारत्वमात्मनो न सिद्ध्येत्

उच्यते—ज्ञानशब्दस्य स्वप्रकाशतारूपं ज्ञानत्वं प्रवृत्तिनिमित्तम् । नच 'तद्गुणसारत्वात्' इति सूत्रविरोधः धर्मभूतज्ञानद्रव्याभिधानेऽपि ज्ञानत्वस्य प्रवृत्तिनिमित्तत्वात् । स्वरूपस्य च ज्ञानत्व 'प्रकाशवच्चावैयर्थ्यात्' इति सूत्रित नच सद्वारकमद्वारकं च स्वरूपस्याभिधानेऽपि शब्दस्य युगपद्व्यापारभेदः साक्षाद्वा परपरयावेति विशेषणमनपेक्ष्य ज्ञानत्व मात्रस्य प्रवृत्तिनिमित्तत्वेनेति शब्दशक्तयसङ्कोचात् साक्षात्प्रणाड्या च ज्ञानत्वविशिष्टताऽवगमेन ज्ञानधर्मकत्वज्ञानस्वरूपत्व-सिद्धेः । नच द्वारद्वारिभावेनानाभिधानात् दण्डमुण्डव्यक्त्योरिव धर्मधर्मिभावासिद्धिः । 'आत्मज्योतिस्सम्राट्' 'ब्रह्मणा विपश्चिता' 'अत्रायंपुरुषस्स्वयंज्योतिर्भवति' 'एषहि द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः' इत्यादिभिः परमात्मनो जीवस्य च ज्ञानधर्मकत्वस्य ज्ञानस्वरूपत्वस्य च सिद्धेः, ज्ञानशब्दस्यचासङ्कोचेन ज्ञानात्मनोर्विशेषणांशे विशेष्यांशे च ज्ञानत्ववैशिष्ट्यबोधनसामर्थ्याच्च, यथा सपरिकरो राजा दृष्टः सपरिच्छद गृह क्रीत, सवत्सा गौः क्रीतेत्यादौ विशेषणांशस्य विशेष्यांशस्य दृष्टत्वक्रीतत्वान्वय एकव्यापारेण शब्देन बोध्यते तद्वत् । नच विशेषणांशे विशेष्यांशेवा दृष्टत्वक्रीतत्वान्वय आर्थः । विशेषणांशविशेष्यांशयोरन्यतरेणविनाऽन्यतरस्य दृष्टत्वक्रीतत्वा-न्वयप्रतीत्यनुपपत्त्यभावात् । नहि प्रवाहस्य घोषप्रति वासत्ववद्विशेषणांशेनविना विशेष्यांशस्य दृष्टत्वक्रीतत्वादिकमनुपपन्न, नच दर्शनक्रयाऽदियोग्यतालक्षणेनार्थसामर्थ्येन विशेषणांशस्य तदन्वयप्रतीतिः मण्डपक्षेपगोदोहनादीनां दर्शनक्रया-ऽदियोग्यानामपि तदन्वयाप्रतीतेः तदप्रतीतिश्च बुभुत्सायां सत्यां सन्देहोदयात्सिद्धा ॥

ननु समभिव्याहारबलाद्विशेषणांशस्य तदन्वयसिद्धिः, धार्मिको राजा दृष्ट इत्यत्र धर्मस्य दृष्टत्वाप्रतीतेः । नहि धर्मश्चक्षुर्विषयः योग्यत्वेसति समभिव्याहारबलात्तदन्वयसिद्धिरितिचेत् । तर्हि विशेषणांशेऽपि तदन्वयस्य शाब्दत्वमुक्तस्यात् नह्याकाङ्क्षासंनिधियोग्यतान्वयेन प्रतिपन्नत्व शाब्दत्वं निवारयति । ननु सपरिकरो राजादृष्ट इत्यादिषु विशेषणांशस्य विशेष्यांशस्य च शब्देनोपस्थापनात्तत्र विशेषणांशेऽपि विधित्सिताकारान्वय उपपन्नः अत्रतु तदभावादुभयत्र विधित्सिताकारान्वयानुपपत्तिरिति ॥

नैवम् । ब्रह्मशब्देनैव विशिष्टवस्तूपस्थापनात् । तथाहि 'तद्विजिज्ञासस्व' इति मुमुक्षोर्जिज्ञास्यतयोक्तं ब्रह्म 'तदैक्षत' इत्यादीनि वाक्यानि सत्यसङ्कल्पत्वादिविशिष्टं कारणं वदन्ति तच्छोधनप्रवृत्तसत्यादिवाक्यगतब्रह्मशब्दस्सत्य सङ्कल्पत्वादिविशिष्टकारणविषयः । बृहत्त्वमपि ब्रह्मशब्दार्थः तच्च स्वसङ्कल्पेनाचेतनस्य स्थूलपरिणामहेतुत्वं, चेतनानां 'सचानन्त्याय कल्पते' इत्युक्तज्ञानबृहत्त्वहेतुत्वं च, ततश्च सत्यसङ्कल्पत्वादिविशिष्टार्थोपस्थापकब्रह्मशब्दप्रतिपन्नविशिष्ट वस्तुविशेषकत्वात् ज्ञानपदमसङ्कुचितशक्तितया विशेष्यांशे विशेषणांशे च स्वप्रवृत्तिनिमित्तभूतज्ञानत्वान्वयं प्रतिपादयति । सपरिकरो राजा दृष्टइत्यादिषु पदान्तरसमभिव्याहृतशब्देन विशिष्टोपस्थापनम् । अत्रतु स्वोपजीव्यवाक्यान्तरस्थनिर्वचन-सापेक्षब्रह्मशब्देनेति भिदा । विशिष्टवस्तुन्युपस्थापितेसति विशेषणांशस्य विशेष्यांशस्य विधित्सिताकारान्वयित्वं तुल्यम् । स्वोपजीव्यवाक्यान्तरसापेक्षशब्देन विशिष्टवस्तुन्युपस्थापिते विधित्सिताकारस्योभयान्वयित्वं च दृष्टम् । यथा सानुचरोराजा समागतः मया च राजा सत्कृतइति, सवत्सा गौस्थिता सा च दत्तेति, अतः परमात्मनो ज्ञानशब्देन ज्ञानधर्मकत्वज्ञानस्वरूपकत्वाभिधान युक्तम् आनन्दादिशब्देष्वप्ययमेव न्यायः स्वतःप्रवर्तते प्रमाणान्तरविरोधेसतितु निवर्तते * अतो यथा-र्थार्थ उपपन्नः ॥

## श्रीभाष्यम्

**तेन कदाचित् संकुचितज्ञानत्वेन मुक्ता व्यावृत्ताः । अनन्तपदं देशकालवस्तुपरिच्छेदरहितं स्वरूपमाह । सगुणत्वात्स्वरूपस्य स्वरूपेण गुणैश्चानन्त्यम् । तेन पूर्वपदद्वयव्यावृत्तकोटिद्वयविलक्षणास्सातिशयस्वरूपस्वगुणा नित्या व्यावृत्ताः विशेषणानां व्यावर्तकत्वात् । ततः**

## श्रुतप्रकाशिका

अतस्साक्षात्प्रणाड्या नित्यासङ्कुचितज्ञानैकाकारत्वं दर्शयता ज्ञानपदेन मुक्तव्यावृत्तिसिद्धिमाह—**तेनेति** । अनन्तपदस्यार्थमाह—**अनन्तेति** । * इहेद नान्यत्रेति परिच्छेत्तुमशक्यत्वं देशापरिच्छेदः । इदमिदानीं नान्यदेति परिच्छेदायोग्यत्वं कालापरिच्छेदः नतु देशकालाभावो । एवं वस्त्वपरिच्छेदोऽपि न वस्त्वन्तराभावः किन्त्विदमिदं न भवतीति परिच्छेदानर्हत्वमेव सर्ववस्तुसामानाधिकरण्यार्हत्वं वस्त्वपरिच्छेदइति यावत् । ब्रह्मव्यतिरिक्ते भावरूपाज्ञानतत्कार्यजातेऽङ्गीकृतेसति वस्त्वन्तराभावरूपो वस्त्वपरिच्छेदः परस्यानुपपन्नः सत्यवस्त्वन्तराभावस्त इतिचेत् । तर्हि स्वनिष्ठवस्त्वन्तराभावस्सद्व्यभ्युपगमोवरं प्रमाणान्तराविरोधात् । तस्य वस्त्वन्तराभावोहि तत्तद्धर्मिग्राहकप्रमाणविरुद्धः । गुणतोऽप्यानन्त्यमाह—**सगुणत्वादिति** । गुणानां देशकालापरिच्छेदौ विद्येते नतूक्तलक्षणवस्तुपरिच्छेदाभावः । सतु स्वरूपस्यैव ॥

यद्वा प्रकारान्तरेण वस्तुपरिच्छेदाभावमाह—**सगुणत्वादिति** । इदमियदिति वस्तुस्वभावतः परिच्छेदाभावोवस्त्वपरिच्छेदः । यथा तुल्यकालत्वे तुल्यपरिणामत्वेऽपि दशवर्णस्वर्णापेक्षया षड्वर्णस्वर्णं तदपेक्षया कलधौतादिचापकृष्टम् सोपकर्षो वस्तुपरिच्छेदः तत्तदपेक्षया गुणत्वोज्ज्वलत्वपवित्रादिभिर्दशवर्णस्वर्णादिकं प्रकृष्टम् । तस्य प्रकर्षस्य निरतिशयत्व वस्त्वपरिच्छेदः । ईदृशवस्त्वपरिच्छेदः स्वरूपस्य गुणानां च युज्यते । तेषामपि हेयप्रत्यनीकत्वादिस्वभावोत्कर्षस्य निरवधिकत्वात् समाभ्यधिकराहित्यनिदानभूतोगुणैर्निरतिशयप्रकर्षो वस्त्वपरिच्छेदइत्युक्तभवति सर्ववस्तुसामानाधिकरण्यार्हत्व प्यास्मिन्नन्तर्गतं तद्धि सर्वशरीरकत्वं तच्च नियमनधारणशेषित्वकार्यमिति । अनन्तपदव्यवच्छेद्यमाह—**तेनेति** । **सातिशयस्वरूपस्वगुणाइति** । स्वरूपमणुत्वात्सातिशयं ज्ञानव्यतिरिक्ता ऐश्वर्यादिगुणाश्च जगद्व्यापारानर्हास्सातिशयाः । ज्ञानं च नित्यं सर्वगतमपि तथात्वस्य परमात्मनित्येच्छाधीनत्वात् सातिशयम् अपराधीनत्वरूपस्यातिशयस्य परस्मिन्विद्यमानत्वात् । स्वाभाविकत्वेऽपि गुणानां सातिशयत्वमिति ज्ञापनार्थः स्वशब्दः । एवं व्यावृत्तिकथनस्य हेतुमाह—**विशेषणानामिति** ॥

*अन्योन्याश्रयस्य परिहृतत्वं दर्शयति । ततइति । ततः एव व्यावृत्तिसिद्धेः, अवगतस्वरूपं अवगतसाधारणाकारं* जन्मादिकारणत्वं ह्यसाधारणाकारः तल्लक्षणकत्वेनावगतमित्यर्थः वस्तुविशेष्यस्वरूपं ब्रह्मेतिवा पाठः । कारणतया लक्षितस्य ब्रह्मणः कारणत्वशङ्कितदोषव्यावर्तकत्वाच्छोधकवाक्यानां लक्षणवाक्यपूर्वकत्वमस्ति, नतु तस्य शोधकवाक्यपूर्वकत्वमिति नान्योन्याश्रयणमित्यर्थः । सूत्रकारैस्सत्यज्ञानादीनां लक्षणत्वेनानुक्तिनिदानंचानेनैव दर्शितं भवति । विशेष्यांशस्य लक्षणं सत्यज्ञानादि नतु विशिष्टस्य विशिष्टस्यैवोपास्यत्वात् प्राप्यत्वाच्च जिज्ञास्यब्रह्मलक्षणं जन्माद्येवेति सूत्रकाराभिप्रायः ॥

## गूढार्थसङ्ग्रहः

**स्वरूपेण गुणैश्चानन्त्यमिति** । *यद्यपि इदमिदं न भवतीति वस्तुपरिच्छेदः तद्राहित्यं सर्ववस्तुसामानाधिकरण्यार्हत्वं सर्वशरीरकत्वरूपम्* इत्यपि वक्ष्यते । अयमर्थः 'तंत्वौपनिषदं पुरुषम्' इति बृहदारण्यकश्रुत्यनुगुणः । तथाऽपि (श्रीं) विष्णुसहस्रनामभाष्योदाहृत प्राक् (१७.क.पु) उदाहृतवचने वस्तुपरिच्छेदराहित्यमेव विवक्षितं नतु एतद्व्यतिरिक्तं वस्तुपरिच्छेदराहित्यमित्यभिप्रेत्येत्यमुक्तिः । अनन्तशब्दस्य पराशरोक्तविलक्षणमेव वस्तुपरिच्छेदराहित्यमित्यर्थः इति

## श्रीभाष्यम्

**'सत्यंज्ञानमनन्तंब्रह्म' (तै.आ.१.अ) इत्यनेनवाक्येन जगज्जन्मादिनाऽवगतस्वरूपं ब्रह्म सकलेतरवस्तुविसजातीयमिति लक्ष्यतइति नान्योन्याश्रयणम् । अतस्सकलजगज्जन्मादिका-**

## श्रुतप्रकाशिका

जगत्कारण ब्रह्म जिज्ञास्यमित्युक्ते कारणत्वशङ्कितदोषव्यावर्तकतया तच्छेषभूतबोधकवाक्यार्थश्चास्मिन् सूत्रे सूत्रकाराभिप्रेत. ; जिज्ञास्यत्वानुगुणस्य कारणत्वस्यैव लक्षणतया विवक्षितत्वात् । स्वरूपेण हेयास्पदस्य जिज्ञास्यत्वानुपपत्त्या जिज्ञास्यतायास्तद्बोधकवाक्यार्थसापेक्षत्वात् । सत्यज्ञानादिवाक्यविषयकसूत्रान्तराभावात् 'प्राज्ञवत्' 'प्रकाशवच्च' 'प्रकाशादिवच्च' इति सूत्राणा सत्यादिवाक्य दृष्टान्ततयोपजीव्यार्थान्तरोपपादनपरत्वाच्च सत्यज्ञानादिवाक्यार्थश्चेहाभिप्रेतइत्यभिप्रायेण भाष्यकारैर्निखिलहेयप्रत्यनीकस्वरूपादित्यादिविशेषणमुक्तम् । अधिकरणार्थमुपसंहरति । अतइति । जन्मादीनां विशेषणतयोपलक्षणतया च लक्षणत्वोपपत्ते. । जिज्ञास्यत्वोपयोगिबाधकवाक्यान्तरगताकारविशिष्टमेव कारणवस्तु 'यतो वा

## गूढार्थसंग्रह

(रा) सहस्रनामभाष्ये अर्थद्वयनिरूपणेन प्रतीयते । परिच्छेदत्रयशून्यत्वं शक्यार्थ गुणानन्त्य लक्ष्यार्थ (सि.सि.अ) इति परप्रक्रियाऽभ्युपगमेऽपि 'तत्त्वौपनिषद पुरुषम्' इत्यादिश्रुतिविरोधेन निर्भेदत्व नानन्तपद विवक्षित, किंतु सर्ववस्तुसामानाधिकरण्यार्ह वर्मत्वेत्याशयेनोत्तरसूक्तिरिति बोध्यम् ॥

भगवद्गीतायामपि सप्तमोक्तार्थानुसारेणैव 'द्वाविमौ पुरुषौ लोके' इत्यादौ 'अतोऽस्मि लोके वेदे च प्रथित पुरुषोत्तम' इत्यन्ते बद्धमुक्तवैलक्षण्य पुरुषोत्तमस्याभिहितम् । एतत्तात्पर्येणैव पूर्वस्मिन्नधिकरणे **'पुरुषोत्तमोऽभिधीयते'** इत्युक्तम् । **सकलेतरवस्तुविसजातीयमिति लक्ष्यते इति** । अत्र विसजातीयशब्देन तत्तज्जातीयवैलक्षण्यबोधकत्व, 'सत्यज्ञानम्' इत्यस्य जगत्कारणत्वस्य ब्रह्मेतरसामान्यवैलक्षण्यबोधकत्वमिति विभागस्सूचितो भवति । 'सत्यज्ञान' इति पदद्वये उपाध्यनिर्देशेन निरुपाधिकार्थस्य विवक्षितत्वेन सोपाधिकसत्ताज्ञानविकासवद्बद्धमुक्तजातीय व्यवच्छेद । अनन्तपदेन परिच्छिन्नव्यवच्छेद. । नैव जगज्जन्मादिकारणत्वेन व्यवच्छेदस्सिद्ध्यति । एतेन सत्यज्ञानवाक्येन ब्रह्मपदार्थ. अचिज्जीवविलक्षण. इति सिद्धावचिज्जीवविलक्षणस्य जगज्जन्मादिकारणत्व लक्षण 'यतोवा इमानि' इति वाक्ये बुबोधयिषितम् । जगत्कारणत्वलक्षणलक्ष्यताऽवच्छेदकमचिज्जीवविलक्षणत्वमिति सिद्धम् । अत्र इत्थ सूत्रकाराभिप्रायनिर्णयसति **'ईक्षतेर्नाशब्दम्'** इत्यादिना अयोगान्ययोगव्यवच्छेदयो प्रतिपादन सङ्गच्छते । अत्र जगत्कारणत्वलक्षणस्य ब्रह्मेतरवैलक्षण्यानुमापकत्वेऽन्वयदृष्टान्तासम्भवेन केवलव्यतिरेकिणस्सिद्धान्तेऽनङ्गीकारेण 'चतुर्मुखादयोऽनीश्वरा जगत्कारणत्वाभावात्' इत्यनुमानेनेतरव्यावृत्तौ तात्पर्यं वर्णयन्त्याचार्यपादा । (न्या प अनुमानाध्याय) ॥

अनन्तार्यास्तु—ब्रह्मपदार्थताऽवच्छेदकावच्छेदेन इतरवैलक्षण्य सन्देहदशायां प्राणादिपदतात्पर्यविषयताऽवच्छेदकावच्छेदेन इतरवैलक्षण्यनिश्चयसम्भवेन तद्दृष्टान्तेन स्वरसत एव इतरव्यावृत्तिरत्र विवक्षितेति वदन्ति ॥

आचार्यपादानामयमाशय —ब्रह्मपदप्रवृत्तिनिमित्ताश्रयव्यक्तिविशेषनिर्णयसमनन्तरमेव प्राणादिपदार्थनिर्णयस्सूत्रकाराभिप्रेत. । ननु तत पूर्वं इति जगत्कारणत्वेन ब्रह्मेतरसामान्यस्य सर्वावधिकोत्कर्षाभावनिश्चय तत्र जगत्कारणत्वस्येत्थ निश्चायकत्व नसम्भवतीति शङ्कावारकत्वेन 'ईक्षतेर्नाशब्दम्' इत्यादिसूत्राणां प्रवृत्तिस्सङ्गच्छते । नन्वन्यथा, व्यावृत्ते प्रयोजनस्य साक्षाद्व्यावृत्तिलिङ्गत्वेनैव लक्षणस्य वाच्यमिति नानियम । किंतु यथाकथाचनविधया व्यावृत्तिसिद्धि साच उत्त-

### श्रीभाष्यम्

**रणं निरवद्यं सर्वज्ञं सत्यसङ्कल्पं सर्वशक्ति ब्रह्म लक्षणतः प्रतिपत्तुं शक्यत इति सिद्धम् । येतु निर्विशेषं वस्तु जिज्ञास्यमिति वदन्ति । तन्मते 'ब्रह्मजिज्ञासा' 'जन्माद्यस्य यतः' इत्यसङ्गतं स्यात् निरतिशयबृहत् बृंहणं च ब्रह्मेति निर्वचनात् ; तच्च ब्रह्म जगज्जन्मादिकारणमिति वचनाच्च**

### श्रुतप्रकाशिका

इमानि' इत्यादिवाक्ये अर्थलब्धमित्यभिप्रायेणाह—**निरवद्यमिति** । सर्वज्ञत्वादिगुणजात कारणत्वाक्षिप्तं यतइत्यत्रानूद्यतइत्यभिप्रायेण तदुक्तिः ॥

अस्य सूत्रद्वयस्य निर्विशेषवादिपक्षासङ्गतिमाह–**येत्विति** । आद्यसूत्रासङ्गतिमुपपादयति **निरतिशयेति** । अथर्वशिरसि श्रीविष्णुपुराणेचोक्त निर्वचनमभिप्रेतम् । न निर्विशेष ब्रह्मेति निरुक्तमितिभावः । द्वितीयसूत्रासङ्गतिं विवृणोति । **तच्चेति** । नहि जगतोऽध्यासो यतइति लिङ्क्ष्यिविनिर्मितिभावः । एव सूत्रासङ्गतिकथनेन तद्विषयवाक्यसङ्गतिरपि फलिता

### गूढार्थसंग्रहः

दिशैव सम्भवतीति ॥ **ब्रह्म लक्षणतःप्रतिपत्तुं शक्यतइति सिद्धमिति** । 'द्विविधहि लक्षण विशेषणमुपलक्षण च' इत्युपक्रम्य विशेषणत्वासम्भवेन उपलक्षणलक्षणत्व यत्परिष्कृत तत्पर्यालोचनपूर्वक 'इथाऽपि ब्रह्म लक्षणतः सविशेष प्रतिपत्तु शक्यत' इति निगमनवाक्यमेतत् ॥

प्रथमसूत्रे निर्विशेष ब्रह्म जिज्ञास्यतया विवक्षितम् इति परोक्तार्थः नघटत इति ब्रह्मशब्दार्थनिरूपणेन सूचितम् । सूत्रद्वयेऽपि परसंमतार्थः सूत्रकृतः नविवक्षित इत्यभिप्रेत्य तन्मतमनूद्य पर्यालोचयति **येतुइत्यादिना—जन्माद्यस्य यत इत्यसङ्गतमित्यन्तेन** । असाङ्गत्यमेवोपपादयति **निरतिशय इत्यादिना—जगज्जन्मादिकारणमिति वचनाच्च इत्यन्तेन** । अयमाशयः । निर्विशेषे निरतिशयबृहत्व, बृंहणत्व जगज्जन्मादिकारणत्वच नास्तीति कथ निर्विशेष सूत्रद्वयविवक्षित स्यात् । परमते त्रयाणा मिथ्यात्वमेव । उपहितस्य मिथ्यात्वेन उपहिते एते धर्माः निर्विशेष च एतद्धर्मोपलक्षितमिति परेषा सिद्धान्तः, अयच सिद्धान्तः श्रुतौवा सूत्रेवा केनापि पदेन नैव बोधितः । माध्यमिकमतमिव कार्यकारणभावस्य सांवृतत्ववादिपरमत नयुक्तमिति 'बृहति बृंहयति' 'यतोवा इमानि भूतानि जायन्ते' इति श्रुत्यादयएव स्थापयन्ति । सूत्रे 'अस्य' इत्यस्य, श्रुतौ 'इमानि' इत्यस्य च प्रत्यक्ष पुरस्कृत्य तत्तत्प्रमाणोपलक्षकतया कार्यवर्गस्य बाधोऽपि नघटते । एवं कार्यकारणभावस्य सांवृतत्वमपीति सिद्ध्यति । अयमर्थः जिज्ञासाऽधिकरणभाष्य एव स्थापितः । जिज्ञासाऽधिकरणे 'बृहत्वंच स्वरूपेण' इत्यादिवाक्ये बृंहणत्वस्य स्फुटमनभिधानेऽपि बृहत्वमात्रेणैव निर्विशेषविवक्षा न सम्भवतीत्युपपादनम् । अत्रतु कार्यकारणभावः ब्रह्मशब्दार्थान्तर्भूतः तदानुगुण्येनैव जगज्जन्मादिकारणत्वलक्षणमित्यभिप्रेत्य बृंहणत्वस्य प्रवृत्तिनिमित्तस्य प्रदर्शनम् । श्रुतौ 'यत्प्रयन्त्यभिसंविशन्ति' इति प्राप्त्यभिधानेन सुषुप्तिमुक्तिवाक्याना सामरस्य बोधितम् तदपि ब्रह्मशब्दार्थबृंहणत्वानुगुणम् । अचित्स्वरूपजीवधर्मविकासहेतुत्व बृंहणत्वम् । प्रलये सङ्कुचितस्य जीवधर्मज्ञानस्य सृष्टौ करणकलेबरादिमूलकः किंचिद्विकासः । मुक्तौ पूर्णविकास इति सुषुप्तिमुक्तिवाक्यैकरस्य ब्रह्मशब्दार्थबृंहणत्वेनापि स्थिरीकृतम् । एतदभिप्रायेणैव जिज्ञासाधिकरणेऽनुक्तस्य बृंहणत्वस्यात्राभिधानम् । एव ब्रह्मशब्दार्थ एव कार्यकारणभावस्य घटकतया कार्यकारणभावस्य मिथ्यात्ववादः न श्रुतिसूत्रतात्पर्यानुगुणः ॥

## श्रीभाष्यम्

**एवमुत्तरेष्वपि सूत्रगणेषु सूत्रोदाहृतश्रुतिगणेषु च ईक्षणाद्यन्वयदर्शनात् सूत्राणि सूत्रोदाहृतश्रुतयश्च न तत्र प्रमाणम्। तर्कश्च साध्यधर्माव्यभिचारिसाधनधर्मान्वितवस्तुविषयत्वान्न निर्विशेषवस्तुनि प्रमाणम्।**

## श्रुतप्रकाशिका

उत्तरेषां सूत्राणां तत्तद्विषयवाक्यानामपि निर्विशेषप्रमाणाननुगुणत्वमाह—एवमिति। गणेष्विति। नैकैकं सूत्रं वाक्यं वा विरुद्धम् अपितु तत्तदधिकरणशरीरं तत्तद्विषयवाक्यजातं च विरुद्धमितिभावः। तर्काननुगुणत्वमाह—तर्कश्चेति। तर्कशब्दोऽनुमानपरः। प्रमाणानुग्राहकतर्कपरो वा। *पराभिमतयोजनायामपि निर्विशेषप्रमाणत्वासिद्धिमाह—

## गूढार्थसंग्रहः

एवं 'एष पन्था, एतत्कर्म, एतद्ब्रह्म एतत्सत्यम्' इति श्रुतेः सायणभाष्योक्तदिशाऽपि उपायत्वेनोक्तब्रह्मणः सत्यत्वं बोधयत् उपायत्वस्यापि सत्यत्वं बोधयत्येवेति कार्यकारणभावस्य सावृतत्वं प्रतिरुणद्धि। 'नस्वतो नापि परतः' इति युक्त्या दूरगमपि नघटते। ब्रह्मण्येवोपादानकारणत्वं निमित्तकारणत्वञ्चेति 'परिणामात्' 'आत्मकृतेः' इति सूत्रद्वयेनानन्तरं स्थापयिष्यते। परिणामतद्वतोर्भेदेन परिणामांशे असत्कार्यवादाङ्गीकारेण भेदेऽपि सम्बन्धस्य पूर्वाधिकरणएवोपपादनेन नकोऽपि दोषः। आरम्भणाधिकरणे आरम्भवाददूषणेनैव कार्यकारणभावदूषणान्यल्पकानि भवन्ति॥

**सूत्राणीत्यादि।** अयमर्थः तत्तदधिकरणेषु विशदीभविष्यति। प्रथमसूत्रे प्रधानार्थप्रतिज्ञया संबन्धिना प्रमाणलक्षणयुक्त्यादीनां विचारोऽप्यर्थात् प्रतिज्ञातो भवति। 'राजाऽसौ गच्छति' इत्यत्र परिवारगमनप्रतीतिवत्। 'यतो वा' इति श्रुत्यनुगमाच्च इति भाष्ये परैरुक्तम्। श्रुतौ द्वितीयसूत्रे च उपादानत्वमपि विवक्षितम्। 'परिणामात्' इति सूत्रमपि विवर्तोपादानपरमेव, परिणामतद्वतोस्सम्बन्धानुपपत्तिरूपतर्कात्। कार्यकारणभावोऽपि पूर्वोक्ततर्केण सावृतएव अयमर्थः 'परिणामात्' इति सूत्रभामत्या 'यथा सर्पप्रत्युपादानं तद्वद्ब्रह्मोपादानमिति युक्त्या स्थापयिष्यते। सक्षेपशारीरके 'वेदान्तपक्षस्तु विवर्तवादः' 'अभेदिनो निर्विकृतेरनेकमृषास्वरूपान्तरदर्शकत्वम्। विवर्तशब्दार्थः' (२.६.८) 'आरोपदृष्टिरुदिता परिणामदृष्टिः' इत्यादिसिद्धान्तः स्थापितः। अत्र ब्रह्मविद्याऽऽभरणम्—'जगतश्चोपादानं ब्रह्मेत्यस्यार्थः जगदधिष्ठानं ब्रह्मेति पर्यवस्यति' इत्यादि 'उपादानञ्चोपादेयविषयसत्ताकम्' इत्यादि च॥

न्यायरक्षामणावपि—'शुक्त्यादितादात्म्येनाध्यस्यमानेषु रजतादिषु शुक्त्याद्यवच्छिन्नस्येव जीवतादात्म्येनाध्यस्यमानेषु देहादिषु जीवावच्छिन्नस्य ब्रह्मणोऽधिष्ठानतयोपादानत्वोपपत्तेः' इत्युक्तम्। छान्दोग्ये मृत्तत्कार्यदृष्टान्तोऽपि सम्बन्धानुपपत्तिरूपतर्केण कारणव्यतिरिक्तं कार्यं वस्तु नास्तीत्यत्रैव पर्यवस्यति। एवं च 'व्यवस्थितेऽस्मिन्परिणामवादे स्वयं समायाति विवर्तवादः' इति (प्रथमस.१२६.पु)सक्षेपशारीरकसिद्धान्त एव युक्त इति शङ्कायामाह—तर्कश्चेति॥

**साध्यधर्माव्यभिचारिसाधनधर्मान्वितवस्तुविषयत्वादिति।** निर्विशेषे उपादानत्वरूपधर्मोऽपि नास्ति ब्रह्मशब्दप्रवृत्तिनिमित्तधर्मोऽपि नास्ति। एवं च सत्यपि वेदान्तवाक्येषु जगतो जन्मादिकारणवादिषु तदर्थग्रहणदार्ढ्याय वेदान्तवाक्याविरोधिप्रमाणं भवन्न निवार्यते। श्रुत्यैव सहायत्वेन तर्कस्याभ्युपेतत्वात् तथाहि 'श्रोतव्यो मन्तव्य' इति श्रुतिरिति (श) भाष्योक्तार्थः सविशेष एव पर्यवस्यति नतु निर्विशेषे। निर्विशेषवस्तुनोऽप्रामाणिकत्वस्य पूर्वाधिकरणएव स्थापनात्। श्रुत्यविरोधितर्कस्यैव परैरपि प्रमाणतयाऽभ्युपगमेन श्रुतेर्निर्विशेषसाधकत्वे बौद्धादितर्काणामेव

## श्रीभाष्यम्

**जगज्जन्मादिभ्रमो यतस्तद्ब्रह्मेति स्वोत्प्रेक्षापक्षेऽपि न निर्विशेषवस्तुसिद्धिः । भ्रममूलमज्ञानं अज्ञानसाक्षिब्रह्मेत्यभ्युपगमात् । साक्षित्वंहि प्रकाशैकरसतयैवोच्यते प्रकाशत्वंतु**

## श्रुतप्रकाशिका

**जगज्जन्मादीति । स्वोत्प्रेक्षापक्षेपीति ।** अयमभिप्रायः **'यथासोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातंस्यात्' 'तदात्मानंस्वयमकुरुत' 'कटकमकुटकर्णिकादिभेदैः' 'आत्मकृतेः' 'परिणामात्'** इति श्रुतिस्मृतिसूत्रेषु परिणामवचनतदनुगुणदृष्टान्ततदुपपादनानि दृश्यन्ते नतु विवर्तानुगुणं किमपि दृश्यते । नहि यथा सोम्यैकेन शुक्तिशकलेन सर्वं रजतजातं विज्ञातंस्यादिति श्रुतिः विवर्तादितिसूत्रं वा दृश्यते । तस्माज्जगज्जन्मादिभ्रमो यतः तद्ब्रह्मेत्ययमर्थः स्वयमार्जितः नतु श्रुतिसिद्धइति । परोत्प्रेक्षितपक्षे तन्निर्विशेषत्वासिद्धिमुपपादयति **भ्रममूलमिति** । ततःकिमित्यत्राह—**साक्षित्वंहीति** । ततोऽपि किमित्यत्राह—**प्रकाशत्वंत्विति** । प्रकाशत्व * प्रकाशशब्दवाच्यत्वम् । —

## गूढार्थसङ्ग्रहः

परैरुदाहृतत्वेन व्यावहारिकपारमार्थिकविभागस्य वैदिकस्य कस्याप्यसम्मतस्य वेदस्यैकविधप्रामाण्यभञ्जकस्य बौद्धमात्रसंमतस्याङ्गीकारेण तेषां सविशेषपरवेदवाक्यविरोधित्वेन प्रामाण्यासम्भवाच्च निर्विशेषवस्तुनि तेषामनुपयोग इतिभावः । 'आदौ पदष्टिरुदिता परिणामदृष्टिः' इति सक्षेपशारीरकाद्युक्तिमभिप्रेत्याह—**जगज्जन्मादिभ्रमइति** । विवरणादौ सर्वत्र 'यद्रजतमभात् साशुक्तिः' इत्यत्रेव जगत्कारणत्वस्यापि मिथ्याभूतस्योपलक्षणत्वं संभवतीत्युक्तम् । तत्र रजततद्ज्ञानयोरुभयोरपि एकावस्थाज्ञानपरिणामत्वेन तद्विवर्तोपादानत्वरूपमधिष्ठानत्वं शुक्त्यवच्छिन्नचित इति परसिद्धान्तः । अनिर्वचनीयरजतस्य सर्वैरनङ्गीकारेऽपि रजतज्ञानरूपभ्रमस्सर्वसमतः नतु यद्रजतोपादानं तदेव भ्रमोपादानमिति । परमते भ्रमाधिष्ठानत्वरूपविवर्तोपादानत्वतात्पर्येण **जगज्जन्मादिभ्रमो यतः** इत्युक्तिः अद्वैतसिद्धावपि उपादानत्वस्य भ्रमाधिष्ठानत्वरूपत्वे ... मृतोक्तदोषा अपि परिहृताः ॥

सिद्धान्ते 'परिणामात्' इति सूत्रे समानसत्ताकपरिणामस्यैव विवक्षितत्वेन तत्प्रतिकोटिरूपविषमसत्ताकपरिणामरूपविवर्तस्य विवक्षितत्वे आध्यासिकस्यैव सम्बन्धस्य वाच्यतया सप्रकारकज्ञानसामान्यस्यापि भ्रमत्वस्य सिद्धान्तबिन्दुटीकायां ब्रह्मानन्दोक्तया च अत्र **'जगज्जन्मादिभ्रमइत्युक्तिस्सङ्गतैव ;** निर्विशेषसिद्ध्यभावमेवोपपादयति—**भ्रममूलमज्ञानमित्यादिना** । अज्ञाने किंप्रमाणमिति विचारदशायां अविद्यावृत्तिप्रतिबिम्बितचिद्रूपसाक्षिप्रत्यक्षं प्रमाणमिति परोक्तयोगः **अज्ञानसाक्षिब्रह्मेत्यभ्युपगमात्** इत्यत्र विवक्षितः ॥

**प्रकाशत्वंतु इत्यादि** । 'अर्थप्रकाशोज्ञप्तिः' इति विवरणोक्तार्थस्यैव व्यवहारघटितस्य ज्ञानत्वाद्युपपत्तावभिधानपूर्वकं तस्यमुक्तिकालेऽभावेऽपि तदुपलक्षितचितो निर्विशेषसिद्धेः मधुसूदनब्रह्मानन्दाभ्यां व्यवस्थापनेन परसमतचित्साधनासम्भवेन तुच्छत्वमेव स्यादिति भावः । तुच्छत्वं न शशशृङ्गादिरूपत्वं, अपितु माध्यमिकोक्तशून्यत्वमेव । अयमर्थः पूर्वाधिकरणएव निरूपितः । एतेन शुक्तिदृष्टान्तस्य श्रुतिषु कारणवाक्येषु कुत्राप्यनभिधानेन शुक्तेर्मिथ्यारजतप्रत्युपादानत्वस्य कस्यापि दार्शनिकस्यासम्मतत्वेन चितः अप्रामाणिकत्वे शुक्त्यवच्छिन्नचितः कारणत्वस्याप्यसंभवेन ;विवर्तोपादानत्वपरिभाषाऽपि नघटत इति सूचितम् ॥

## श्रीभाष्यम्

जडाद्व्यावर्तकं स्वस्य परस्य च व्यवहारयोग्यतापादनस्वभावेन भवति । तथा सति सविशेषत्वम् । तदभावे प्रकाशतैव न स्यात् तुच्छतैव स्यात् ॥

॥ इति जन्माद्यधिकरणम् ॥

## श्रुतप्रकाशिका

व्यवहारयोग्यतापादनस्वभावेनेति । व्यवहारयोग्यतापादनमेव स्वभावः तेन भवति । स्वपरव्यवहारयोग्यतापादनरूप स्वभावपरं प्रकाशत्वमित्यर्थः । तथाऽभ्युपगमे सविशेषपरत्वमाह—तथेति । अनभ्युपगमे दूषणमाह—तदभावइति । इति परमते सूत्रद्वयासाङ्गत्योपपादनम् ॥

॥ इति जन्माद्यधिकरणम् ॥

## गूढार्थसङ्ग्रहः

एवं 'आनन्दाद्ध्येव' इतिवाक्य निर्णयवाक्यमित्युक्तिरपि न पराभीष्टसाधिका । तत्र प्रकृत्यर्थस्यानन्दत्वस्य प्रत्ययार्थकारणत्वस्य च शुद्धे ब्रह्मण्यसम्भवेन तत्र निर्विशेषविवक्षाया असम्भवात् । विवर्तोपादानत्व निर्विशेषवृत्ति इति परेषां सिद्धान्तः । जगत्कारणत्वस्येव आनन्दत्वज्ञानत्वादीनां ब्रह्मण्यभावे जगत्कारणत्वस्योपलक्षणत्वं आनन्दत्वादिनं तस्य स्वरूपलक्षणपरत्वमिति विभागोऽपि न घटते । 'स्वरूपलक्षणं लक्ष्यात्यन्ताभिन्नं, तटस्थलक्षणं स्वकालावच्छेदेन स्वाश्रयनिष्ठमिति' अखण्डार्थत्वोपपत्तौ विवेकमभिधाय, ज्ञानत्वाद्युपपत्तौ ननु ज्ञानत्वानन्दत्वयोः कादाचित्कत्वेन जगत्कारणत्वादिवत् अस्वाभाविकत्वमिति चेत्, न; इष्टत्वात् । एवमपि जगत्कारणत्वं तटस्थलक्षणं आनन्दत्वाद्युपलक्षितव्यक्तिर्लक्षणया बोध्या स्वरूपलक्षणमिति सिद्धान्ताव्याघातात् । जगत्कारणत्वादेरशुद्धेऽनङ्गीकारपक्षे ज्ञानत्वादेरशुद्धनिष्ठत्वस्य ततो वैलक्षण्यसम्भवाच्च' (ल.च) इति ब्रह्मानन्दसरस्वत्युक्तिरनुपादेया । शुद्धे नकोऽपि धर्म इति सिद्धान्तस्य पूर्वमेव ब्रह्मानन्दनिर्णीतस्य निरूपणेन ज्ञानत्वादेरशुद्धचिन्निष्ठत्वासम्भवात् । जगत्कारणत्वोपलक्षितव्यक्तेरपि स्वरूपलक्षणत्वासम्भवात् । एतेन 'यतो वा' इत्यादीनां 'तत्त्वमसि' इत्यत्र वाच्यार्थसमर्पकत्वं 'सत्यज्ञानमनन्तम्' इत्यखण्डपदार्थनिष्ठसामानाधिकरण्यवाक्यस्य लक्ष्यसमर्पकत्वमिति विभागोऽपि निर्मूलः । धर्मस्य प्रकारतया भानस्योभयत्राविशेषे धर्माप्रकारकबोधस्यानुभवविरुद्धत्वे एकस्य लक्ष्यसमर्पकत्वमन्यस्य वाच्यसमर्पकत्वमिति व्यवस्थाया एवासम्भवात् । स्वप्रकाशत्वमपि ज्ञानानन्दत्वसमानयोगक्षेममेव । तेन स्वप्रकाशतया निर्विशेषसिद्धिप्रत्याशाऽपि निरवकाशा । द्वितीयमिथ्यात्वनिरूपणान्ते स्वप्रकाशत्वस्य परप्रकाश्यत्वाभावरूपत्वमङ्गीकृत्य प्रभाकरमत इव अभावस्याधिकरणात्मकत्वेन ब्रह्मरूपत्वोपपादनप्रयासोऽपि निष्फलः । धर्मस्य प्रकारतयाऽभाने परप्रकाश्यत्वभ्रमनिवर्तनासम्भवेन तेन स्वप्रकाशतया चिन्मात्रसिद्धेरेवासम्भवात् । एवरीत्या जगत्कारणत्वस्यापि यथाकथाचनविधया अभावरूपत्वोपपादनसम्भवाच्च ॥

एतेन निर्विशेषे किंप्रमाणमित्याक्षेपस्य किं स्फूर्त्यर्थं आहोस्विदावरणभङ्गार्थं वेति विकल्प्य स्वप्रकाशतयैव स्फूर्तिसिद्धिः, आवरणभङ्गार्थमुपनिषदामेव प्रमाणत्वमिति मधुसूदनसरस्वत्युक्तिरनुपादेया । परसंमतस्वप्रकाशानङ्गीकारेऽप्युपपत्तेः प्रागेव निरूपणात् । शब्दसामान्यस्य धर्मप्रकारकबोधजनकत्वमेव उपलक्षणस्यापि प्रकारत्वमेव युक्तं दार्शनिकसम्मतं चेति पूर्वमेव साधनेन इत्थमुक्तेरसम्भवात् । अतः 'जन्माद्यस्य यतः' इतिसूत्रतः व्यासस्य प्राप्यब्रह्मलक्षणतात्पर्येण सृष्टिमुक्तिवाक्यसामरस्येन कारणवाक्यानामेव प्राधान्यं, राजकुमारनयः, अभेदवाक्यानां उपादानोपादेयभावेनैवाभेदोपपत्तौ

## गूढार्थसङ्ग्रहः

तात्पर्यमुपादानोपादेयभावान्तर्गतम् सर्वान्तर्यामिरूपत्वसर्वशरीरत्व इति 'तत्त्वौपनिषद पुरुषम्' इत्यत्र विवक्षितम् 'सत्य ज्ञानम्' इत्यादितु अचिज्जीवविलक्षणप्राप्यब्रह्मस्वरूपपर बृहणत्वजगत्कारणत्वशङ्कितदोषनिराकरणपरचेत्येव युक्तमिति सिद्धान्तोऽभिमत इति सिद्धम् ॥ अत्र अध्यारोपादेः विवक्षा नास्तीति प्रागेव (३६७.प्र.स.पु) निरूपितम् ॥

'यतो वा इमानि भूतानि' इतिश्रुतौ 'यतः, येन' इति निर्देशेन सृष्टिहेतुत्व स्थितिहेतुत्वञ्च स्पष्टम् । 'यत्प्रन्त्यभिसंविशन्ति' इत्यत्र यच्छब्दावृत्त्यभावेन मोक्षस्य लयान्तर्भावेन सृष्टिफलतापर्येण च मुक्तप्राप्यत्वमात्र विवक्षितम् । लयहेतुत्वस्य साक्षादनभिधानेऽपि सृष्ट्यादिसहभावेन कारणे लयोक्तिमात्रेण लयहेतुत्व सिद्ध्यात । मुक्तप्राप्यत्वोक्तया न मुक्तिहेतुत्व सिद्ध्यति । मुक्तप्राप्यत्वोक्तिः सृष्टेर्दयामूलकत्वेन सृष्टिवाक्याना मुक्तिवाक्याना च मुक्तिरूपैकफलबोधनमुखेन सामरस्यसम्पादनेन सृष्टिवाक्यानामात्मैकत्वप्रतिपत्त्यर्थत्व नास्तीति बोधनाय । सृष्टिलयहेतुत्वकथनेन उपादानकारणत्व सिद्ध्या राजकुमारनयसम्प्रदायोऽपि सूचित. । स्थितिहेतुत्वमप्यन्तर्यामिकृतसत्ताऽनुवृत्तिलक्षणस्थितिहेतुत्वमुखेनोपादानता निमित्तकारणता चाभिप्रैति । जीवानामुपादेयत्वबोधनेन राजकुमारनयसंप्रदायोऽपि सूचिता भवति । अतः नवीनसम्मतसृष्ट्याद्यष्टकहेतुत्व श्रुतिसूत्रयोरप्रतीत्या न विवक्षितम् । पूर्वसूत्रे ब्रह्मशब्दार्थो विष्णुरिति निर्णायकं नकिंचनपद वर्तते। अतः तदनिर्णयदशायां जीवो वा विष्णुर्वेति सशयएव नोदेति । अतः उक्तदिशा ब्रह्मशब्दार्थनिर्णायकमेवेदसूत्रम् ॥

'ब्रह्मविदाप्नोति परम्' इत्यत्र मुक्तिसाधनवेदनविषयत्वेन ब्रह्म प्रस्तुतम् । तच्च वेदनमुपासनरूपमेवेति लघुसिद्धान्तादौ निर्धारितम्। अत्र उपक्रमे सर्वगतस्य ब्रह्मण. प्राप्तिरुक्ता साच प्राप्तिः 'अस्माल्लोकात्प्रेत्य, एतमानन्दमयमात्मानमुपसङ्क्रम्य, इमाँल्लोकान्कामान्नी कामरूप्यनुसञ्चरन्, एतत्सामगायन्नास्ते' इत्युपसहारे देशविशेषावच्छेदेनेति निर्धारिता। 'मान्त्रवर्णिकमेव च गीयते' इतिसूत्रे गीयत इत्यनेन व्यासेनाप्ययमर्थस्सूचितः । एव च देशविशेषावच्छेदेन प्राप्तेर्गतिसाध्यत्वेन गतिसाध्य फलमुपासनस्यैवेति सपन्नम् । उपासनस्य गतिद्वारक फलमिति परेषामपि समतम् । तदनन्तर— 'तस्माद्वाएतस्मात्' इत्यादिना 'यतोवा इमानि' इत्यनेन च उपासनविषयस्य जगत्कारणत्वमप्यभिहितम् । पूर्वप्रस्तुतोपास्यब्रह्मण एव 'यतोवा इमानि' इति श्रुतौ जगत्कारणत्व लक्षणतया विवक्षितम् । पूर्वसूत्रघटकब्रह्मजिज्ञासाशब्दः 'तद्विजिज्ञासस्व' इति वाक्यघटकपदार्थतात्पर्येण प्रवृत्तइति परेषामपि समतम् । इत्थञ्चोपास्यब्रह्मण. जगत्कारणत्वे लक्षणे कथिते भाष्ये उपलक्षणत्वविशेषणत्वव्यवहार. ब्रह्मविशेषणीभूतोपासनाविषय यतदभावनिबन्धनइत्याचार्यपादैः 'मोक्षार्थोपास्यभेदेद्युभयमपि समन्वेति विद्याविकल्पात्' (अ.सा) इति निरणायि। विचारस्येच्छाविषयत्व पूर्वसूत्रे यदुक्त तत् आनन्दरूप ब्रह्मविषयकत्वेन मुक्तिसाधनोपासनाप्रयोजकत्वेन चेति ज्ञेयम् । तत्र ज्ञानसामान्यवाचिधातुप्रयोग उपासनातात्पर्येण । अन्यथा कर्मविचारस्य कर्मणा हेयत्वेन हानमात्रएवोपयोगस्स्यात् । कर्मणामुपादानार्थं ज्ञानतु तत्र न विवक्षितमिति प्रतीयेत मुक्तिसाधनोपासनप्रयोजकत्व विचारे यदा विवक्षितम् तदोपासने कर्मणामङ्गतया उपयोगप्रतीतिरपि सभवति इत्युपास्यविचार्यब्रह्मण एव प्रथमसूत्रे विवक्षिततया विचार्यत्वेन प्रतिज्ञात ब्रह्म उपास्यमेव भवतीति उपास्यब्रह्मणएवास्मिन्सूत्रे लक्षणमुच्यतइत्युपासनाभेदेन विशेषणत्वोपलक्षणत्वे विवक्षिते । उपासनारूपविधेयान्वयि यतदभावाभ्या विशेषणत्वोपलक्षणत्वे सङ्गते इति व्यासाशय इत्याचार्यपादानामाशयः । वस्तुपरिच्छेदराहित्यस्य द्वैधोपपादनेन शब्दात धर्मप्रकारकबोधस्यैव सर्वत्र आवश्यकत्वेन सर्वश्रुतिसामञ्जस्ये कारणत्वस्य मिथ्यात्वकल्पनप्रयास (ब्र.वि.आ) विफल । वायौरूपनास्तिइतिवत् अन्यत्र सत्वभ्रमनिरासायाध्यासः अतोऽपवाद. 'तेन मिथ्यात्व तत्रैव प्रसज्य प्रतिषिध्य' इति (प.पा.वि) अर्थ इति निष्कर्षः (अ.प) नयुक्तः । कारणत्वोक्ते वैफल्यात् । ब्रह्मणि सत्वोक्तयाप्युपपत्ते ॥

॥ इति जन्माद्याधिकरणम् ॥

## अथ शास्त्रयोनित्वाधिकरणम्

जगज्जन्मादिकारणं ब्रह्म वेदान्तवेद्यमित्युक्तम्। तदयुक्तम्

## श्रुतप्रकाशिका

### अथ शास्त्रयोनित्वाधिकरणम

अथावान्तरसङ्गतिमाह–जगज्जन्मादीति। कथमयुक्तमित्यत्राह—

## गूढार्थसंग्रहः

### अथ शास्त्रयोनित्वाधिकरणम

उत्तरसूत्रमवतारयति—जगत्कारणं ब्रह्म वेदान्तवेद्यमित्यादिना। अयमाशयः 'ब्रह्मविदाप्नोति परम्' इति प्राप्यत्वेन प्रस्तुतब्रह्मणः 'यतोवा' इत्यादिश्रुत्या जगत्कारणत्वरूपलक्षणाभिधानेन कार्यभूतजीवाचेतनाना निरतिशयबृहत्व बृंहणत्वयोरसम्भवेन ब्रह्मशब्दार्थः जगत्कारणभूतमेकमेव वस्तु तदेव प्राप्यम्। तेन प्रथमसूत्रे विचारविषयत्वेन ब्रह्मणः यत्फल त्वमुक्तं तदप्युपपादितं भवति। एवचाधिकरणद्वयेन ब्रह्मशब्दाभिधाना ब्रह्मशब्दस्य व्युत्पत्तिसम्भवोपपादनेन वेदान्तवि- चाररूपब्रह्मविचारस्य कर्मविचारानन्तरमारम्भणीयत्व साधितम्। तेन अधिकारी विषयश्च सिद्धः। अनन्तराधिकरणद्वयेन सम्बन्धप्रयोजने निरूपयिष्येते। तत्र ब्रह्मणः वेदान्ताना च सम्बन्धः शास्त्रयोनित्वाधिकरणे स्थाप्यते। तत्र 'तं त्वौप- निषद पुरुषम्' (बृ) 'वेदैश्चैकैरहमेव वेद्यः' (कं) 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादिश्रुतिस्मृतिभिः बोध्यबोधकभावः उपनिषदा ब्रह्म तात्पर्यकत्वं च प्रतिपाद्यत। जन्माद्यधिकरणे अभेदप्रतीतिनिर्वाहकप्रवेशश्रुतिघटितसृष्टयन्तर्गत जन्मा- दिकारणत्वस्य 'यतोवा' इति वाक्यतात्पर्यविषयत्व साधितम्। 'तत्त्वमसि' इत्यतःपूर्वं 'सन्मूलास्सोम्येमाःप्रजाः' इत्यत्रोपक्रमोक्तकारणत्वमेव विवक्षितम् उपक्रमोक्त कारणत्वतु दृष्टान्तानुगुण्येन 'बहुस्यां प्रजायेय' इत्यादावभेदस्य प्रवे- शस्य स्वपर्यन्तनामरूपव्याकरणयोश्च प्रतिपादनेन उपादानोपादेयभावः योऽय सिद्धस्सएव 'सन्मूला इत्यत्रापि विवक्षित इति सर्वशरीरकत्वनिबन्धनसर्वोपादानत्वेनैव 'तत्त्वमसि' इत्यत्राप्यभेदो विवक्षित इति निश्चीयते। एवं 'आत्मैवेदमग्र- आसीत्पुरुषविधः, सयत्पूर्वोऽस्मात्सर्वस्मात्सर्वान् पाप्मन औषत्' इत्याद्यनन्तर 'तद्धेद तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्या व्याक्रियत, सएष इह प्रविष्ट आनखाग्रेभ्यः आत्मेत्येवोपासीत' इत्याद्युक्त्यनन्तरमेव 'अहं ब्रह्मास्मि' इति वाक्य- सद्भावेन तत्राप्युपादानोपादेयभावनिबन्धन एव अभेदइति निश्चयस्सम्भवति। तेन 'तं त्वौपनिषद पुरुषम्' इत्यत्रापि 'स वा अयं सर्वासुपूर्षु पुरिशयः' 'सयत्पूर्वोऽस्मात्सर्वस्मात्' इत्यादौ सर्वशरीरिणः सर्वजगदुपादानस्यैव पुरुषशब्दार्थत्वनिर्ण- येनोपनिषत्तात्पर्यविषयत्वमिति सिद्ध्यति। तेन 'यतोवा' इत्यत्रापि जगदुपादानत्वस्य विवक्षितत्वेन अभेदवाक्याना प्राधान्याभावेन जीवाभिन्नस्य ब्रह्मणः प्राप्यत्वसम्भवेन प्रथमसूत्रे इच्छाविषयत्वेन फलभूतस्य प्राप्यस्य ब्रह्मणः द्वितीयसूत्रे लक्षणकथनेन कार्यभूताना तदितरेषा ब्रह्मशब्दार्थोत्कर्षासम्भवेन ब्रह्मशब्दस्यैकस्यैव शक्तिसम्भवेन ब्रह्मशब्दस्य व्युत्पत्ति- सम्भवेन विषयप्रसिद्धेः ब्रह्मविचारः आरम्भणीय इति सिद्धान्तः। अयच सिद्धान्तो नघटतइति नैयायिकमतेन शङ्का नैया यिकाःपरतः प्रामाण्य वेदस्य पौरुषेयत्वं ब्रह्मण. नोपादानत्व, किंतु निमित्तकारणत्वमारंभवाद एव न परिणामवादः।

## गूढार्थसंग्रहः

अनुमानेन ब्रह्मसिद्धिः ब्रह्मज्ञान जीवात्मज्ञानसम्पादकं जीवज्ञानमेव मुक्तिहेतुः हेतुत्वमपि दृष्टद्वारा नादृष्टद्वारा सुखप्राप्तिः ब्रह्मप्राप्तिश्च न मोक्षः, दुःखोच्छेद एव मोक्षः अभेदवाक्यान्यौपचारिकार्थानि इत्यादीनर्थान् वदन्ति ॥

एवं च परिणामवादस्यासम्भवात् जगन्निमित्तोपादानयोर्भेदात् ब्रह्मणः परिणामिकारणत्वरूपोपादानत्वं न संभवति आरम्भवादस्यैव युक्तत्वात् ब्रह्मणो निमित्तकारणत्वस्यानुमानेन सिद्धया ईश्वरस्यैवानुमानेन सिद्धौ निमित्तकारण त्वमप्या नुमानिकमेव अनुमानसिद्धार्थबोधकत्वमेव 'यतोवा' इत्यादिश्रुतेः इत्येव युक्तम् । समानाधिकरणवाक्यान्यप्यौपचारि कार्याणि नतूपादानोपादेयभावेन अभेदबोधकानि शुक्लशोणितयोः मूत्रादेरिव शरीरावयवत्वाभावेन पुत्रंप्रति पितुरुपा-दानत्वं नैव । तेन राजकुमारनयेन जीवस्य ब्रह्मप्राप्तिर्मुक्तिरित्यस्यापि नावकाश इत्यादिराक्षेपः ॥

'मन्त्रायुर्वेदवच्च तत्प्रामाण्य आप्तप्रामाण्यात्' (२.१.६८) इति न्यायसूत्रम् । अत्र आप्तत्वं साक्षात्कृतधर्मता भूतदया यथा भूतार्थचिख्यापयिषा' इति भाष्यम् । वेदवाक्यानि प्रमाण वक्तृविशेषाभिहितत्वात् 'मन्त्रायुर्वेदवत्' इति वार्तिके अनुमानमुपन्यस्तम् । अत्र भाष्य वेदस्यापौरुषेयत्वेन नित्यत्व निराकृतम् । अत्र तात्पर्यटीका—'तस्मात् दृष्टसहायमदृष्टमस्य वैचित्र्यस्य कारण तच्च अपूर्वमिति च धर्माऽधर्मावितिचाख्यायते । तच्च कस्यचित्प्रत्यक्षं मन्वादेरित्युप पादितम् । तनुभुवनादिलक्षस्य कार्यस्य कर्ता तन्निर्माणसमर्थः समस्तवस्तुतत्त्वज्ञः क्लेशकर्मविपाकाशयापरामृष्टः परमकारु-णिकस्तनुभुवनादेरेव कार्यादनुमीयत इति चतुर्थे उपपादयिष्यते । सोऽयमात्मीयहिताहितप्राप्तिपरिहारानविदुषः प्राणिनः पश्यन् प्रत्युतानेकविधदुःखदहनदह्यमानानवलोकयन् कथ न तप्येत तप्यमानो वा हिताहितपरिहारोपायतत्त्वं विद्वान्कथ नोपदिशेत् अन्यथोपदिशेद्वा । तस्मादनेन परमकारुणिकेन पृथिव्यादिसृष्ट्वा प्रजाश्चतुर्विधास्ताभ्यो हिताहितप्राप्तिपरिहारो-पायउपदेष्टव्यः नह्ययमनुपदिश्य स्थातुमर्हति । प्रजाना पितृकल्पस्यचास्योपदेशः देवर्षिमनुष्यगोचरः चातुर्वर्ण्येन चातुरा-श्रम्येणचादराद्ग्राह्यः । धार्यश्च हिताहितप्राप्तिपरिहारानुष्ठानाय' इति ॥

चतुर्थे 'तत्कारितत्वादहेतुः' (४.१.२१) इतिसूत्रम् । अत्र पूर्वपक्षसूत्रद्वये जगतो ब्रह्मविवर्तत्वं ब्रह्मपरिणामत्वं निरपेक्षेश्वरत्व च निराकृत्य अभिमत पक्ष गृह्णाति 'तत्कारितत्वादहेतुः' इति । 'परमाणूपादानस्य जगतः पुरुषकर्मा-पेक्षईश्वरः निमित्तकारणम् । यच्च तेनापेक्षणीय पुरुषकर्म तदपीश्वरनिमित्तकमेव । नच यदपेक्ष्यते तस्य अनिमित्तमित्युपरि ष्टात्प्रवेदयिष्यामः । तस्मादीश्वरकारितत्वात्पुरुषकारस्य न सहाय ईश्वरः निमित्तकारण जगतः अस्य पक्षस्य निराकरणे पुरु-षकर्माभावे फलानिष्पत्तेरित्यहेतुः' इति, एव 'यथा विवादाध्यासिताः तरुमहीधरादयः उपादानाभिज्ञकर्तृकाः उत्पत्ति मत्वाद्चेतनोपादानाद्वा' इत्यादि च तात्पर्यटीका ॥ अत्र भाष्ये 'आप्तकल्पश्चाय । यथा पिताऽपत्याना, तथा पितृ-भूतईश्वरो भूतानाम्' इत्युक्तम् ॥

उक्तञ्च आत्मविवेकेऽपि उदयनेन 'निष्प्रपञ्च आत्मा ज्ञेयो मुमुक्षुभिरिति तात्पर्यं प्रपञ्चमिथ्यात्वश्रुतीनाम् आत्मन एवैकस्य ज्ञानमपवर्गसाधनमित्यद्वैतश्रुतीना दुरूहोऽयमिति पौनःपुण्यश्रुतीनां बहिस्सङ्कल्पत्यागो निर्मनस्कश्रुतीनां आत्मै-वोपादेयइत्यानन्दश्रुतीनाम् गारुडवनुष्ठाने तात्पर्यं प्रकृत्यादिश्रुतीना तन्मूलानां च सङ्ख्यादिदर्शनानांचेतिनेयम् अन्यथा श्लो. 'जैमिनिर्यदि वेदज्ञः कपिलो नेतिका प्रमा । उभौ च यदि वेदज्ञौ व्याख्याभेदस्तु किंकृतः ॥ प्रामाण्यंतु तस्य कुत इतिचेत्—न ; आप्तोक्तत्वात् । तदसिद्धमितिचेत न विश्वस्य कर्तुरनुमानसिद्धत्वात् विवादाध्यासितकर्तृकाहि कार्यत्वात्' इति, 'नित्यतु कुत न सत्य योग्यानुपलम्भबाधितत्वात श्रुतिस्तत्र प्रमाणमितिचेत् न योग्यानुपलम्भबाधिते तदनवका-शात् अवकाशे वा ग्रावप्लवनश्रुतेरपि तथाभावप्रसङ्गात् । नापि काम्यं सदातनत्वात् । नहि यदस्याप्ति सतत्कामयते

## श्रीभाष्यम्

तद्धि न वाक्यप्रतिपाद्यम् अनुमानेन सिद्धेरित्याशङ्क्याह

## सू. ३—शास्त्रयोनित्वात् १.१.३

### श्रुतप्रकाशिका

तद्धीति । सामान्येन शब्दप्रतिपाद्यत्वे सिद्धेऽपि शब्दविशेषरूपवेदान्तवेद्यत्वासिद्धिरितिभावः । तच्च कुतः, नहि प्रत्यक्षेण तदसिद्धत इत्यत्राह—अनुमानेनेति । नन्वीश्वरानुमाननिरासार्थं नेदमधिकरणमारम्भणीयं साधकबाधकप्रमाणान्तरगोचरस्य शास्त्रेण प्रतिपादनायोगाद्धि तन्निरासः नचायमपेक्षितः अनुमानेन कर्तृमात्रेसिद्धेऽपि तदप्रतिपन्नस्य निमित्तोपादानैक्यस्य गगनादिसर्गस्य प्रतिपादनोपपत्तेः । अनुमानविरुद्धाश न शास्त्रं प्रतिपादयतीति तत्प्रतिपादनायानुमाननिरास इतिचेन्न आगमविरोधस्यैवानुमानदूषणतयाऽनुमानेनागमप्रतिबन्धायोगादिति ॥

उच्यते—शास्त्रंहि साधकान्तरसिद्ध बाधकान्तरबाधित च न प्रतिपादयति यथाऽऽहुः—

असन्निकृष्टवाचा च द्वयमत्र जिहासितम् । ताद्रूप्येण परिच्छित्तिस्तद्विपर्ययतोऽपि वा ॥

इति । तत्र निमित्तत्वोपादानत्वे च शास्त्रेण प्रतीयेते तत्र निमित्तमात्रस्यानुमानसिद्धत्वात्तदुक्तिरनुवादस्स्यात् , अनुवादस्य प्रमाणान्तरसिद्धिसापेक्षत्वान्निमित्तानुवादोऽनुमानसापेक्ष एव भवति । अनुमानञ्चामूर्तद्रव्येतरनिष्ठोपादानव्यतिरिक्तकर्तृकत्वव्याप्तिमूलमिति धर्मिग्राहकानुमानविरोधेन निमित्तोपादानैक्यं गगनाद्युत्पत्ति च शास्त्र नप्रतिपादयितुमलम् । एवं कारणवाक्यानामसौ प्राप्तविषयत्वादशान्तरे बाधितविषयत्वाच्च निमित्तोपादानैक्यादिक नसिद्ध्येदिति तत्सिद्ध्ये निमित्तमात्रानुमाननिरासार्थमिदमधिकरणमारम्भणीयमिति ॥

नन्वनुमानवादिभिरपीश्वरस्यागमगम्यत्वमङ्गीकृतम् आगमानुग्राहकतया चानुमानमुच्यत इति तन्निरासो युक्त इतिचेत् परतःप्रामाण्यवादिभिर्नैव वक्तु युक्तम् । अनुमानस्य शास्त्रानुग्राहकत्वे शास्त्रमेव प्राधान्येनेनेश्वरं प्रमाण भवति । अनुमानंहि

### गूढार्थसंग्रहः

भ्रान्तेरेव कण्ठचामीकरवादितिचेत् न स्वसंवेद्ये तदभावात् ' इति, आत्मातु किं स्वप्रकाशसुखस्वभावोऽन्यथावेतिपृच्छामः श्रद्धोऽसिचेत् उपनिषद् पृच्छ मध्यमस्थोऽसिचेदनुभव पृच्छ नैयायिकोऽसिचेत नवैषयिकसुखस्वभावइति निश्चिनुयाः ।तदतिरिक्तेतु सुखज्ञानव्यवहारबीजाभावात्तद्व्यवहाराभावः, अनुग्रहाभिव्यङ्ग्येन्द्रियप्रसादादिलक्षणकार्यंहि तद्व्यवहारबीजम्' इति च

एव च ब्रह्मणः आनन्दरूपत्वाभावेन नित्यसुखस्यैवाभावेन परिणामवादाद्यसम्भवेन च उपादानत्वादिनसम्भवति । 'जनिकर्तुःप्रकृतिः ' इति सूत्रविवरणे मूत्रादेरिव शुक्रशोणितयोरपि शरीरावयवत्वानिरसनपूर्वकं मातापित्रोः पुत्रंप्रत्युपादानत्वासम्भवेन निमित्तत्वमेवेति व्युत्पत्तिवादे गदाधरेणोक्तम् । अत्रचोदाहृतन्यायभाष्यमेव मूलम् । एव च परतःप्रामाण्येन वेदस्यापौरुषेयत्वासम्भवात् 'अर्थेनुपलब्धे तत्प्रमाण बादरायणस्यानपेक्षत्वात्' (जै.सू.१.१.५) इत्याद्युक्तदिशा व्यासजैमिनिसंमतस्वतःप्रामाण्यवेदापौरुषेयत्वयोरङ्गीकारे 'यतोवा' इति वाक्यस्य उक्तदिशा उपादानकारणपरत्वासम्भवेन निमित्तकारणमात्रपरत्वेन अनुमानासिद्धार्थानुवादकत्वेन अपूर्वत्वाभावेन कारणत्वतात्पर्यासम्भवेनानेन वाक्येन न ब्रह्मपदार्थनिर्णयस्सम्भवति इति शङ्कितुराशयः । तमिममाशयमभिप्रेत्याह—तद्धि न वाक्यप्रतिपाद्यम् अनुमानेन सिद्धेरिति ॥

### श्रीभाष्यम्

**शास्त्रं यस्य योनिः कारणं प्रमाणं तच्छास्त्रयोनि। तस्यभावश्शास्त्रयोनित्वम्। तस्मात् ब्रह्मज्ञानकारणत्वात् शास्त्रस्य तद्योनित्वं ब्रह्मणः अत्यन्तातीन्द्रियत्वेन प्रत्यक्षादिप्रमाणा**

### श्रुतप्रकाशिका

प्रधानम्। * ईश्वरप्रोक्ततया च तैर्वेदप्रामाण्यमङ्गीक्रियते अतः ईश्वरसिद्धे तत्प्रणीतत्वाद्वेदप्रामाण्यसिद्धिः तत्सिद्धावीश्वरसिद्धिरित्यन्योन्याश्रयस्स्यात्॥ ननु महाजनपरिग्रहाद्वेदप्रामाण्यं वेदादीश्वरसिद्धिरिति नान्योन्याश्रय इतिचेत् न; तत्परिग्रहस्य भ्रान्तिमूलत्वव्युदासार्थं * निर्दोषत्वज्ञानमूलत्वं वाच्यम्; निर्दोषत्वज्ञानं च गुणवद्वक्तृकत्वज्ञानादित्यन्योन्याश्रयस्स्यादेव। आप्तोक्तत्वमनुमानतस्सिद्धमिति नान्योन्याश्रय इतिचेत् ततएवानुमानाद्वेदवक्तृत्वेनेश्वरसिद्धेः किं वेदेनेति शास्त्रवैयर्थ्यपरिहाराय तन्निरासः कार्यइत्यधिकरणारम्भो युक्तः॥

## सू. ३—शास्त्रयोनित्वात् १,१,३

व्याख्यान्तराभिमतषष्ठीतत्पुरुषयोजनाव्यावृत्त्यर्थमाह—**शास्त्रंयस्येति**। योनिशब्दस्योपादानपरत्वव्यावृत्त्यर्थं कारणमात्रपरत्वमाह—**कारणमिति**। कथं सर्वकारणस्य ब्रह्मणश्शास्त्रं कारणमिति शङ्कायामुत्पत्तिकारणपरत्वव्यावृत्त्यर्थमाह—**प्रमाणमिति**। कारणवाचिनो योनिशब्दस्य कथं प्रमाणवाचित्वमित्यत्राह—**ब्रह्मज्ञानेति**। उत्पादकइव ज्ञापकेऽपि हेतुशब्दः प्रयुज्यते तद्वद्वेत्यभिप्रायेण योनिशब्दप्रयोगसम्भवइतिभावः। प्रमाणान्तरवेद्यत्वाद्ब्रह्म न शास्त्रवेद्यमिति पूर्वपक्षे सति शास्त्रवेद्यत्वादिति सिद्धान्तेहेतोस्साध्याविशिष्टत्वं स्यादिति शङ्कां परिहरन् पञ्चम्यन्तस्य हेतुवाचिपदस्य साध्यवाचिपदान्वयं च दर्शयति। **अत्यन्तेति**। ब्रह्मणस्स्वरूपेणेन्द्रियसम्बन्धो नास्ति नच तल्लिङ्गस्य नापि लिङ्गलिङ्गस्येत्यभिप्रायेणोक्तम्। **अत्यन्तातीन्द्रियत्वेनेति**। अतएवहि प्रत्यक्षादिप्रमाणाविषयतयेत्युक्तम्॥

### गूढार्थसंग्रहः

**योनि कारणं प्रमाणमिति**। योनिशब्दस्य प्रसिद्धया उपादानकारणपरत्वं शब्देतरवाचिपदसमभिव्याहारे स्थल एव। शब्दवाचिपदसमभिव्याहारेतु योनिशब्दः ज्ञापकहेतुपरइत्याशयः। परैः योनिशब्दस्योत्पादकार्थकत्वेन ब्रह्मणो वेदकारणत्वपरत्वेन प्रथमं विवरणं कृत्वा 'अथवा यथोक्तं ऋग्वेदादिशास्त्रं योनिःकारणं प्रमाणमस्य ब्रह्मणः यथावत्स्वरूपाधिगमे। शास्त्रादेव प्रमाणाज्जगतो जन्मादिकारणं ब्रह्माधिगम्यत इत्यभिप्रायः। शास्त्रमुदाहृतं पूर्वसूत्रे—'यतोवा इमानिभूतानि जायन्त इत्यादि' इति वर्णकान्तरे योनिशब्दस्य प्रमाणपरत्वमेवोक्तम्। अत्र शास्त्रशब्दोपादानेन 'अप्राप्तेतु शास्त्रमर्थवत्' ६.२.१८ इति जैमिनिसूत्रखण्डस्मरणमुखेन पूर्वपक्षयुक्तिः सूचिताभवति। अत्र परैः शास्त्रशब्दस्य ऋग्वेदादिकमर्थइति स्पष्टमुक्तम्। 'कर्ता शास्त्रार्थवत्वात्' इत्यादौ शास्त्रपदस्य विधिवाक्यपरत्वं सर्वसमतम्। 'यतोवा इमानि' इति वाक्यस्यापि विधायकत्वं पञ्चपादिकादौ स्पष्टमुक्तम्। 'वेदाच्छास्त्रपरं नास्ति' इति प्रमाणानुसारेण 'वेदशास्त्रार्थतत्त्वज्ञः—ब्रह्मभूयाय कल्पते' इति पूर्ववचनानुसारेण च 'वेदशास्त्राविरोधिना यस्तर्केणानुसन्धत्ते' इति (१२.१०६) मनुवचनेऽपि वेदाख्यशास्त्रमेव विवक्षितम्। अतश्च शास्त्रपदस्य वेदएवार्थः॥ अत्यन्तातीन्द्रियत्वेनेत्यादि। 'अर्थेऽनुपलब्धे' इत्याद (जै) सूत्रमत्र विवक्षितम्। अयमाशयः 'तत्त्वौपनिषदं पुरुषम्' 'विज्ञानमानन्दंब्रह्म' (बृ) इत्यादि श्रुत्या प्रागुक्तविवेचनानुसारेण जगत्कारणस्योपनिषत्तात्पर्यविषयत्वमुक्तम् एतदनुरोधेन 'यतोवा' इति

## श्रीभाष्यम्

**विषयतया ब्रह्मणश्शास्त्रैकप्रमाणकत्वात् उक्तस्वरूपं ब्रह्म ' यतो वा इमानि भूतानि ' (तै.उ आनन्दव) इत्यादिवाक्यं बोधयत्येवेत्यर्थः ॥ ननु शास्त्रयोनित्वं ब्रह्मणो नसम्भवति प्रमाणान्तरवेद्यत्वाद्ब्रह्मणः । अप्राप्तेतु शास्त्रमर्थवत् ।**

## श्रुतप्रकाशिका

यद्वा व्यतिरेकेण दृष्टत्व व्याप्तयौपयिक दृष्टसजातीयत्व च नास्तीति भावः । इन्द्रियप्रत्यक्षशब्दयोः करणतत्फल भूतज्ञानविवक्षया भिन्नार्थता । **शास्त्रैकप्रमाणकत्वादिति ।** अत्रभक्षइतिवदवधारणगर्भश्शास्त्रयोनिशब्द इतिभावः । ततश्च प्रमाणान्तराविषयत्वं सिद्धयतीति प्रमाणान्तरागोचरत्वेन शब्देन प्रतिपादयितु योग्यत्वात् ब्रह्म **' यतोवा इमानि '** इत्यादिवाक्यविशेषो बोधयतीत्युक्तमभवति । पूर्वस्मिन्सूत्रे यत्साध्य तदेवास्मिन्सूत्रे मुखभेदेन साध्यतइत्येवकाराभिप्रायः ॥

अत्रापि **' यतोवा इमानि '** इत्यादिवाक्यद्वारा शास्त्र विषयः सशयोऽप्यर्थसिद्धः साधारणविचारद्वयमनुसन्धेयम् । यतो वा इमानीत्यादिवाक्यं किं ब्रह्मणि प्रमाण उत नेति सशयः । तदर्थं किं ब्रह्म मानान्तरगोचरः नवेति? तदर्थं किंसामान्यतोदृष्टमनुमानं जीवविलक्षणमवगमयति, नेति यदाऽवगमयति तदा मानान्तरगोचरत्वात् **' यतोवा इमानि '** इति वाक्य न ब्रह्म प्रतिपादयतीति वेदान्ताना ब्रह्मणि प्रामाण्याभावात्तद्विचारानारम्भः पूर्वपक्षे फलितः । राद्धान्तेतु सामान्यतो दृष्टानुमानस्य जीवविलक्षणे प्रमाणत्वाभावेन ब्रह्मणो मानान्तरागोचरत्वात् **' यतोवा इमानि '** इत्यादिवाक्यब्रह्मणि प्रमाणमिति सर्ववेदान्तवाक्याना तत्र प्रामाण्याद्विचारस्यारम्भणीयत्व फलितम् ॥

**सू**त्राक्षरयोजनाया सम्रहणे कर्यममहत्वान. पूर्वपक्षी चोदयति । **नन्विति** । शास्त्रयोनित्व शास्त्रप्रमाणकत्वम् । प्रमाणान्तरवेद्यत्वे कथ शास्त्रयोनित्वानुपपत्तिरित्यत्राह–**अप्राप्तेतु शास्त्रमर्थवदिति** । तुशब्दोऽवधारणे **' स्युरेवतु पुनर्वैचेत्यवधारणवाचिनः '** इतिहि नैघण्टुकाः । वैधर्म्येत्रा अनुभुक्षितग्राहित्वेनायत्नसाध्यत्वात् प्रत्यक्षस्य ज्ञाता प्रयोजनबोधकत्व नदूषण शास्त्रस्य बुभुत्सितग्राहित्वेन यत्नसाध्यत्वात् ज्ञाता प्रयोजनबोधकत्व दूषणं, तथासति वह्न्यौष्ण्यवायसदन्तसङ्ख्यावाक्ययोरिव श्रवणादिप्रवृत्त्यनुपपत्तेः ॥

## गूढार्थसंग्रहः

श्रुतौ यच्छब्दस्य प्रमाणान्तरासिद्धार्थबोधकत्वेन तत्र प्रापकप्रमाणानि ' सदेव सोम्य ' इत्यादिश्रुतयएवेत्यङ्गीकार्यम् । उपनिषद्वाक्यान्तरसिद्धकारणत्वानुवादेन ब्रह्मलक्षण वविधायकत्वे कारणत्वस्य न्यायसूत्रभाष्यादिषु प्रागुदाहृतेषु परिणामिकारणत्वादिदूषणपूर्वकं निमित्तकारणत्वमात्ररूपतायास्साधनेन श्रुतावप्यनुमानसिद्धनिमित्तकारणत्वमात्रबोधकत्वमेवेत्यकामिनाप्यङ्गीकार्यम् । तथासति वेदस्यापौरुषेयत्ववादिमते जगत्कारणत्वप्रतिपादकवाक्यानामनुवादत्वेन तेषामधिगतार्थगन्तृत्वेन प्रमापकत्वं न स्यात् । पौरुषेयतावादिमत ईश्वरस्य निमित्तकारणत्वसाधकं यदनुमान तदेवाप्तत्वसाधकमिति आप्तप्रामाण्याद्वेदस्य प्रामाण्यमिति प्रमाणाना परतः प्रामाण्य वेदस्य पौरुषेयत्वमिति शङ्कानिरासः वेदरूपशास्त्रस्य ' तत्वौपनिषदम् इत्यादिश्रुत्युक्तदिशा जगत्कारणत्वप्रमाणत्वोपपादनेन अनुमान जगत्कारणे प्रमाण नभवतीति सूचनेन ' यतोवा ' इत्यत्र श्रुत्यन्तरोक्तजगत्कारणानुवादसम्भवेन पूर्वसूत्रार्थोऽपि सङ्गच्छतइति । एवच जगत्कारणत्वस्य औपनिषदत्वेन तस्यैकनिष्ठत्वेनच तद्गतः ब्रह्मत्वनिर्णये ब्रह्मशब्दार्थोऽपि निर्णीतो भवतीति विषयसिद्धिः सुरूपपादिता भवति इति । **अप्राप्तेतु शास्त्रमर्थवदिति ।**
' अशाब्दा तूपसंप्राप्तिः शास्त्रस्यानप्रकल्पक तस्मादर्थेन गम्येताप्राप्ते वा शास्त्रमर्थवत् ' (जै. सू. [illegible]

## श्रीभाष्यम्

**किं तर्हि तत्र प्रमाणम्? नतावत् प्रत्यक्षम्। तद्धि द्विविधमिन्द्रियसम्भवं योगसम्भवंचेति। इन्द्रियसम्भवं च बाह्यमान्तरसम्भवंचेति द्विधा। बाह्येन्द्रियाणि विद्यमानसन्निकर्षयोग्य स्वविषयबोधजननानीति न सर्वार्थसाक्षात्कारतन्निर्माणसमर्थपुरुषविशेषविषयबोधजननानि। नाप्यान्तरं आन्तरसुखदुःखादिव्यतिरिक्तबहिर्विषयेषु तस्य बाह्येन्द्रियानपेक्षप्रवृत्त्यनुपपत्तेः। नापि योगजन्यं भावनाप्रकर्षपर्यन्तजन्मनस्तस्य विशदावभासत्वेऽपि पूर्वानुभूतविषयस्मृतिमात्रत्वान्न प्रामाण्यमिति कुतःप्रत्यक्षता।**

## श्रुतप्रकाशिका

आस्मिन्पूर्वपक्षे सिद्धान्त्येकदेशी मीमांसकश्चोदयति। **किंतर्हीति**। ईश्वरानुमाननिरासेन सिद्धान्तित्व * ईश्वरमात्रानभ्युपगमेन एकदेशित्वम्। किंतर्हि नकिंचिदित्यर्थः कथमित्यत्राह—**नतावदिति**। सर्वत्रापि प्रत्यक्षस्यासामर्थ्यं दर्शयितु सर्वद्वैविध्यमाह—**तद्धीति**। प्रथमस्यापि द्वैविध्यमाह—**इन्द्रियसम्भवमिति**। आन्तरशब्देन मनो विवक्षितम्। प्रथमेऽनुपपत्तिमाह—**बाह्येन्द्रियाणीति**। * देशसन्निकर्ष विशिंषता विद्यमानशब्देन कालसन्निकर्षश्च सिद्धः। योग्यशब्देन स्वभावसन्निकर्ष उक्तः। अनेन धर्माधर्मादिव्यावृत्तिः, स्वशब्देन चक्षुरादिक प्रति शब्दादिव्यावृत्ति। यद्वा स्वविषयशब्देनातीन्द्रियस्य इन्द्रियान्तरविषयस्य च व्यवच्छेदः योग्यशब्देनतु तत्तदिन्द्रियप्रतिनियतरूपादिजातीयेऽप्यणुद्व्यणुकादियोग्यस्य व्यवच्छेदः॥

द्वितीय प्रतिवक्ति **नापीति**। मनश्च न तद्विषयबोधजनकमित्यर्थः। आन्तरसुखदुःखादीत्यत्रान्तरशब्दः आत्मतद्धर्मपरः। तद्ग्राहित्वादेवहि मनसोऽप्यान्तरत्वम्। सुखदु खादीत्यान्तरशब्दाविवरणम् आदिशब्देनेच्छाद्वेषादेः मनश्च परिग्रहः। व्यतिरिक्तेत्यनेन रूपादीना * बहिष्ट्वमेवोपपादितम्। योगजन्यस्यानुपपत्तिं दर्शयितुमाह—**नापि योगेति**। योगिप्रत्यक्ष किं पूर्वानुभूतानधिकविषय प्रमाण उतानुभूताधिकविषयमिति विकल्पमभिप्रेत्यानधिकविषयत्वे दूषणमाह—**भावनेति**। अनधिकविषयतया स्मृतिमात्रत्वादप्रमाणत्वमिति प्रमाणावान्तरविशेषत्व दूरोत्सारितमित्यर्थः। अनधिकवि

## गूढार्थसंग्रह

गृहनिर्माणादिर्लौकिकस्य कर्मण.प्रारब्धस्य समापनीयत्वावश्यताविचारदशाया गृहनिर्माणादेः प्रमाणान्तरेणैव प्राप्तिरित्युपपाद्य (शा) भाष्ये 'अप्राप्ते वा शास्त्रमर्थवत्' इति सूत्रखण्डार्थः एव प्रदर्शितः। 'यदन्तरेण शास्त्र नप्राप्येत तत्तदशास्त्रमर्थवदिति प्रकल्प्येत' इति अत्राय सूत्रखण्डः अर्थत उपात्त। 'अर्थेऽनुपलब्धे त प्रमाण बादरायणस्यानपेक्षत्वात्' इत्यत्र शाबरभाष्यम्——'तस्मात्तत् प्रमाणमनपेक्षत्वात् नह्येवसति प्रत्ययान्तरमपेक्षितव्य पुरुषान्तर वाऽयप्रत्ययो ह्यसौ' इति॥ सेश्वरमीमांसायामेतत्सूत्रविवरणावसर एव उत्पत्तिशब्दयो. स्वत परतोवा प्रामाण्यमित्यत्र इतरपक्षान् बहून्पर्यालोच्य प्रामाण्य स्वतः अप्रामाण्य परत. जैमिनिबादरायणसिद्धान्तः प्रतिष्ठापित.। जैमिनिसूत्रखण्डस्याभिप्रेत येन तत्सम्मत वेदापौरुषेयत्व स्वत.प्रामाण्यचात्र विवर्णितम्। ऐकशास्त्र्याभ्युपगमेन एतदर्थद्वयस्य व्याससमतत्वात्॥

न्यायभाष्ये—'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्' इत्यत्रापौरुषेयत्वेन वेदनित्यत्वपक्ष दूषितस्यापि वेदनित्यत्वपक्षेण सिद्धान्त्यभिमतेन नैयायिकपक्षो न समञ्जसीत्याशङ्क्य तद्दूषणमुखेन नैयायिकपूर्वपक्षः स्थिरीक्रियते तत्र किंतर्हि तत्र प्रमाणमिति सिद्धान्तिशङ्का॥

## श्रीभाष्यम्

तदतिरिक्तविषयत्वे कारणाभावात्। तथासति तस्य भ्रमरूपता। नाप्यनुमानं विशेषतो दृष्टं सामान्यतोदृष्टं वा। अतीन्द्रिये वस्तुनि सम्बन्धावधारणविरहान्नविशेषतो दृष्टम्। समस्तवस्तुसाक्षात्कारतन्निर्माणसमर्थपुरुषविशेषनियतं सामान्यतो दृष्टमपि नलिङ्गमुपलभ्यते॥ ननु च जगतः कार्यत्वं तदुपादानोपकरणसम्प्रदानप्रयोजनाभिज्ञकर्तृकत्वव्याप्तम् अचेतनारब्धत्वं जगतश्चैकचेतनाधीनत्वेन व्याप्तं सर्वं हि घटादिकार्यं तदुपादानोपकरणसम्प्रदानप्रयोजनाभिज्ञकर्तृकं दृष्टम्। अचेतनारब्धमरोगं स्वशरीरमेकचेतनाधीनं च।

## श्रुतप्रकाशिका

पयन्नमुपपादयति। तदतिरिक्तविषयत्वेकारणाभावादिति। कारणमिन्द्रियसम्बन्ध * प्रमितिकारणाभावादप्रामाण्यमित्यर्थ। * अधिकविषयत्वे दूषणमाह—तथासतीति। इन्द्रियसम्बन्धाभावेऽप्यनुभूताधिकविषयत्वे तस्य दोषमूलकत्वेन भ्रान्तित्वेत्यर्थ। द्विविधानुमानागोचरत्वमाह—नापीत्यादिना। नियतं व्याप्तम्॥

सिद्धान्तिच्छायया चोदयन्त वादिनं पूर्वपक्षैकदेशी चोदयति। ननुचेति। नैयायिकैकदेशिभिरुक्तमनुमानं कर्तृत्वात् पूर्वपक्षैकदेशि व सम्प्रदान भोक्ता प्रयोजनं विनियोग। एककर्तृकत्वसिद्ध्यर्थमनुमानान्तरमाह—अचेतनेति। उपादानाद्यभिज्ञकर्तृकत्वे दृष्टान्तमाह—सर्वंहीति। एकचेतनाधीनत्वे च दृष्टान्तमाह—अचेतनेति। रुग्णशरीरस्य वृत्यर्थाः

## गूढार्थसंग्रह

नाप्यनुमानं विशेषतो दृष्टं सामान्यतो दृष्टंवेत्यादि। 'त्रिविधमनुमानं पूर्ववच्छेषवत् सामान्यतो दृष्टं च' इति (न्या सू. १.१.५) इति गौतमसूत्रम्। अत्र न्यायभाष्यम्—'पूर्ववदिति यत्र यथापूर्वं प्रत्यक्षभूतयोः अन्यतरदर्शनेन अन्यतरस्याप्रत्यक्षस्यानुमानं यथा धूमेनाग्निरिति सामान्यतो दृष्टंनाम यत्राप्रत्यक्षे लिङ्गलिङ्गिनो सम्बन्धे केनचिदर्थेन लिङ्गस्य सामान्यादप्रत्यक्षो लिङ्गी गम्यते' इति। एवं शाबरभाष्येऽपि—'तत्तु द्विविधं प्रत्यक्षतो दृष्टसम्बन्धं सामान्यतो दृष्टसम्बन्धंचेति। प्रत्यक्षतो दृष्टसम्बन्धं यथा धूमाकृतिदर्शनादग्न्याकृतिविज्ञानम्। सामान्यतो दृष्टसम्बन्धं यथा—देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्य गतिस्मरणम् इति' प्रत्यक्षतो दृष्टसम्बन्धमत्र विशेषतो दृष्टसम्बन्धमिति विन्ध्यवासी स्वीचकारेति वार्तिके उक्तं यथा—'विशेषदृष्टमेतच्च लिखितं विन्ध्यवासिना' इति। न्यायपरिशुद्धावप्युक्तमाचार्यपादैः—'अस्मदादिप्रत्यक्षयोग्यार्थानुमापकं विशेषतोदृष्टं, तदयोग्यार्थे सामान्यतो दृष्टमिति परोक्तविभागस्यापि विषयसिद्धो भवति' इति॥

न्यायवार्तिकतात्पर्यटीकायाः—'एतावदभिमतमाचार्यस्य त्रयाहि खलु भावा भवन्ति जगति प्रसिद्धचेतनकर्तृका यथा। प्रासादाट्टालगोपुरतोरणादयः प्रसिद्धविपर्यया यथा परमाण्वाकाशादयः। सदिग्धचेतनकर्तृका यथा तनुतरुमहीधरादयः। तत्र प्रमेयत्वाद्यादिप्रतिपत्तेर्वा साधकबाधकप्रमाणाभावे चेतनकर्तृकत्वे संशयः। नच प्रत्यक्षानुपलब्धिमात्रमत्र बाधकं भवितुमर्हति। स्वभावविप्रकर्षिणां सतामपि प्रत्यक्षानुपलब्धे परमाण्वादीनाम्। तथा च 'विवादाध्यासितास्तरुमहीधरादयः उपादानाभिज्ञकर्तृकाः उत्पत्तिमत्त्वात् अचेतनोपादानत्वाद्वा यदुत्पत्तिमदचेतनोपादानकं वा तत्सर्वमुपादानाभिज्ञपूर्वकं यथा प्रासादादि, तथा च विवादाध्यासिता तनुतरुमहीधरादयः तस्मात्तथेति। नचैषामुत्पत्तिमत्त्वमसिद्धम्। सावयवत्वेन तत्सिद्धेः' इति इममर्थमाशङ्कते—ननुच जगतः कार्यत्वमित्यादिना॥

## श्रीभाष्यम्

मावयवत्वेन जगतः कार्यत्वम्। उच्यते-किमिदमेकचेतनाधीनत्वं नतावत्तदायत्तोत्पत्तिस्थितित्वं दृष्टान्तोहि साध्यविकलस्स्यात्। नह्यरोगं स्वशरीरमेकचेतनायत्तोत्पत्तिस्थिति तच्छरीरस्य भोक्तॄणां भार्यादिसर्वचेतनानामदृष्टजन्यत्वात्तदुत्पत्तिस्थित्योः। किंच शरीरावयविनस्स्वावयवसमवेततारूपास्थितिरवयवसंश्लेषविशेषव्यतिरेकेण न चेतनमपेक्षते प्राणनलक्षणातु स्थितिः पक्षत्वाभिमते क्षितिजलधिमहीधरादौ न सम्भवतीति पक्षसपक्षानुगतामेकरूपां स्थितिं नोपलभामहे। तदायत्तप्रवृत्तित्वं तदधीनत्वमितिचेत् अनेकचेतनसाध्येषु गुरुतररथशिलामहीरुहादिषु व्यभिचारः। चेतनमात्राधीनत्वे सिद्धसाध्यता॥

किञ्च उभयवादिसिद्धानां जीवानामेव लाघवेन कर्तृत्वाभ्युपगमो युक्तः। नच जीवाना-

## श्रुतप्रकाशिका

चरोगस्वशब्दौ। कार्यत्वेसिद्धेप्युपादानाद्यभिज्ञकर्तृकत्वासिद्धिरित्यत्राह—सावयवत्वेनेति। अनेनाचेतनारब्धत्वहेतोश्चासिद्धिशङ्कापरिहारोऽपि फलितः। एवं पूर्वपक्ष्येकदेशिनोक्तमर्थं सिद्धान्त्येकदेशी दूषयति। उच्यतइत्यादिना। बुद्धिस्थत्वात्प्राथम्यात्मनुमानं दूषयति। किमिदमिति। एकचेतनाधीनत्वंनाम किं तदायत्तोत्पत्तिस्थितित्वम् उत तदायत्तप्रवृत्तित्वमिति विकल्प्य प्रथमेऽपि तदायत्तोत्पत्तिस्थितित्वनाम किं तदिच्छाधीनोत्पत्तिस्थितित्वं उत तददृष्टाधीनोत्पत्तिस्थिति त्वमिति विकल्पोऽभिप्रेतः। तेषां विकल्पानां क्षेपार्थः किंशब्दः। तत्र तदिच्छाधीनोत्पत्तिस्थितित्वं न दृष्टमिति साध्यवैकल्यं दूषणं प्रसिद्धमिति बुद्ध्वा द्वितीयशिरो दूषयति दृष्टान्तोहीति। साध्यविकलत्वं विवृणोति नहीति। कुतइत्यत्राह—तच्छरीरस्येति

यद्वा नतावदित्यादिग्रन्थः तदिच्छाधीनोत्पत्तिस्थितित्वतददृष्टाधीनोत्पत्तिस्थितित्वयोस्साधारणः। तदिच्छाधीनत्वपक्षे साध्यवैकल्यं स्फुटमिति तददृष्टाधीनत्वपक्षे साध्यवैकल्यं विवृणोति। नहीति। उत्पत्तिस्थितीहि सहदूषिते। अथ स्थितिं विकल्प्य दूषयितुमाह—किंचेति। स्वावयवसमवेततारूपस्थित्युक्तिर्वैशेषिकादिमतानुसारेण नचेतनमपेक्षतइति। चेतनापेक्षाहि स्वरूपतो वास्यात् अदृष्टद्वारेणवा इच्छाद्वारेण वा तत्र स्वरूपमात्रमकिञ्चित्करं तत्सद्भावेऽपि विनाशदर्शनात् अदृष्टाधीनत्वे प्रागेवोत्तरं दत्तमितीच्छाधीनत्वपक्षोऽनेन दूषितः चेतनेच्छा नापेक्षतइत्यर्थः। आविनाशकालादशिथिलत्वलक्षणा स्थितिरप्यनेन दत्तोत्तरेत्यभिप्रायेण तदनुक्तिः। अथोक्तप्रकारविकल्पदूषणनिरस्तमपि शिरोऽन्तरं दूषणान्तरसद्भावादुपादाय दूषयति प्राणनेति। प्राणनलक्षणा पञ्चवृत्तिप्राणसहितत्वलक्षणा। नोपलभामहइति। कालात्ययापदेशइत्यभिप्रायः॥ तदायत्तप्रवृत्तित्वमेकचेतनाधीनत्वमितिपक्षं शङ्कते तदायत्तेति। अचेतनारब्धत्वहेतोरनैकान्त्यमाह—अनेकेति। अनेकचेतनसाध्येषु अनेकचेतनप्रवर्त्येष्वित्यर्थः। चेतनैकत्वाविवक्षाया सिद्धसाध्यतामाह—चेतनमात्रेति। एवमेकचेतनाधीनत्वं निरस्तम्। कार्यत्वहेतोर्लाघवतर्कमुखेन सिद्धसाध्यतामाह—किंचेति। उभयवादिसिद्धानामिति लाघवस्य हेतूक्तिः. 'क्लृप्तकल्प्यविरोधेतु युक्तः क्लृप्तपरिग्रहः' इति ह्याहुः सम्भवत्यागतोहि लाघवतर्कः गत्यन्तरासम्भवे त्वधिककल्पनं नदोषायेत्यत्राह—नचेति। कुतइत्यत्राह—

## गूढार्थसंग्रहः

नचैतावता मीमांसकानां क्षेत्रज्ञेन चेतनेन चेतनकर्तृकत्वासिद्धेः पृथिव्यादीनां सिद्धसाधनम्। चैतन्येऽपि तेषामुपादानानभिज्ञत्वात् तज्ज्ञत्वेवा सएवास्माकमीश्वरः। 'ईदृशमस्तु सिद्धसाधनं कोहि क्लेशं विना न वाञ्छत्सिद्धिमिच्छेत्' इत्यादिना न्यायवार्तिकतात्पर्यटीकोक्तं पर्यालोचयति—नच जीवानामित्यादिना॥

## श्रीभाष्यम्

मुपादानाद्यनभिज्ञतया कर्तृत्वासम्भवः, सर्वेषामेव चेतनानां पृथिव्याद्युपादानयागाद्युपकरणसाक्षात्कारसामर्थ्यात् । यथेदानीं पृथिव्यादयो यागादयश्च प्रत्यक्षमीक्ष्यन्ते । उपकरणभूतयागादिशक्तिरूपापूर्वादिशब्दवाच्यादृष्टसाक्षात्काराभावेऽपि चेतनानां न कर्तृत्वानुपपत्तिः तत्साक्षात्कारानपेक्षणात्कार्यारम्भस्य । शक्तिमत्साक्षात्कार एव हि कार्यारम्भोपयोगी । शक्तेस्तु ज्ञानमात्रमेवोपयुज्यते न साक्षात्कारः नहि कुलालादयः कार्योपकरणभूतदण्डचक्रादिवस्तुच्छक्तिमपि साक्षात्कृत्य घटमणिकादिकार्यमारभन्ते । इहतु चेतनानामागमावगतयागादिशक्तिविशेषाणां कार्यारम्भो नानुपपन्नः । किञ्च यच्छक्यक्रियं शक्योपादानादि विज्ञानं च तदभिज्ञकर्तृकं दृष्टम् ॥ महीमहीधरमहार्णवादित्वशक्यक्रियमशक्योपादानादिविज्ञानंचेति न चेतनकर्तृकम् । अतो घटमणिकादिसजातीयशक्यक्रिय-

## श्रुतप्रकाशिका

सर्वेषामिति । पूर्वकाले चेतनानां साक्षात्कारसामर्थ्यं दृश्यमाननीत्योपपादयति । यथेति । इदानीमिति । एवं पूर्वकालेऽपीति भावः ॥

धर्माधर्मसाक्षात्काराभावात्कर्तृत्वासम्भवमाशङ्क्याह—उपकरणेति । यागादिशक्तिरूपेति । यागादिजन्यस्वात्मातिशयरूपेत्यर्थः । कुतइत्यत्राह—अतत्साक्षात्कारेति । तर्हि घटादिनिर्माणे मृदादिसाक्षात्कारनियमः कथमित्यत्राह—शक्तिमदिति । शक्तिमच्छब्देन शक्तिसम्बन्ध्युच्यते । जन्यजनकभावश्च सम्बन्धविशेषरूपत्वात् शक्तिरूपादृष्टजनकयागादिषु शक्तिमच्छब्दप्रयोगः शक्तेरप्यपेक्षितत्वसाम्यात्तत्साक्षात्कारोऽनपेक्षितः, अन्यथाऽनवगतवस्तुशक्तयोऽपि पुरुषास्तैस्तत्कार्यं कुर्युरित्यत्राह—शक्तेस्त्विति तुशब्दःशक्तिमत इव ज्ञातव्यत्वेऽपि विशेषद्योतनार्थः शक्तिसाक्षात्कारानुपयोगमुपपादयति नहीति । शक्तिसाक्षात्कारानपेक्षत्वेऽपि शक्तिज्ञानमात्रमपेक्षितम् तच्च दण्डचक्रादिष्वन्वयव्यतिरेकवशात्सिद्ध्यति । यागादौतु कथमित्यत्राह—इहत्विति । एव सिद्धसाधनत्वमुक्तम् ॥

अथ कार्यत्वहेतोरुपाधिद्वयेन सोपाधिकत्वमाह—किंचेति । साधनाव्यापकत्वमाह—महीमहीधरेति । साध्यसमव्याप्तत्वमाह—अतइति । सोपाधिकत्वेसति साध्येन हेतोर्व्याप्यत्वासिद्धिरस्यादित्युपाधेर्दूषणत्वम् । अदृष्टवज्जीवकर्तृ-

## गूढार्थसंग्रहः

चेतनानामित्यादि—कार्यारम्भो नानुपपन्न इत्यन्तम् । अनया विधया जीवमादाय सिद्धसाधनोपपादने अस्यैव ईश्वरत्वमितितु नैव शक्य वक्तुम् । दुःखादिसम्बन्धयोग्यत्वेनानुभवसिद्धस्येश्वरत्वासम्भवात् 'आगमावगतयागादिशक्तिविशेषाणां' इत्युक्तया आगमेनेतेषामीश्वरत्वं नेति सूचित भवति ॥ 'स्यादेतत् नोत्पत्तिमात्रमुपादानाभिज्ञकर्तृकत्वेन व्याप्तम् । अपितु यदसदादिशक्यज्ञानोपादानादि, नच तथा तनुभुवनाद्युत्पत्तिमदपि तस्माद्व्याप्तिविरहात् न तत्पूर्वकमिति तदयुक्तम् । उत्पत्तिमत्त्वतदुपादानाद्यभिज्ञकर्तृकत्वयोः प्रथममन्वयव्यतिरेकाभ्यां व्याप्तौ सिद्धायां तदुपादानादिशक्यज्ञानत्वकल्पनायाः कार्यज्ञानविषये व्यवस्थापनात् व्याप्तिबलेन ज्ञानसामान्यसिद्धौ पक्षधर्मताबलेन तन्नित्यत्वसिद्धिरित्युक्तम्' (न्या.वा.ता.टी) इत्युक्तार्थो नघटते । शक्यक्रियत्वशक्योपादानाभिज्ञत्वयोः साध्यव्यापकत्वसाधनाव्यापकत्वाभ्यामुपाधित्वेन कार्यत्वहेतोः सोपाधित्वादिलाह— यच्छक्यक्रियमित्यादिना ॥

## श्रीभाष्यम्

शक्योपादानादिविज्ञानवस्तुगतमेव कार्यत्वं बुद्धिमत्कर्तृपूर्वकत्वसाधनेन प्रभवति ॥

किंच घटादिकार्यमनीश्वरेणाल्पज्ञानशक्तिना सशरीरेण परिग्रहवताऽनाप्तकामेन दृष्टमिति तथाविधमेव चेतनं कर्तारं साधयदयं कार्यत्वहेतुस्सिषाधयिषितपुरुषसार्वज्ञ्यस-र्वैश्वर्यादिविपरीतसाधनाद्विरुद्धस्स्यात्। नचैतावता सर्वानुमानोच्छेदप्रसङ्गः लिङ्गिनि प्रमा-णान्तरगोचरे लिङ्गबलोपस्थापिता विपरीतविशेषास्तत्प्रमाणप्रतिहतगतयो निवर्तन्ते । इह तु सकलेतरप्रमाणाविषये लिङ्गिनि निखिलनिर्माणचतुरे अन्वयव्यतिरेकावगताविनाभा-वनियमा धर्मास्सर्वेप्यविशेषेण प्रसज्यन्ते निवर्तकप्रमाणाभावात्तथैवावतिष्ठन्ते । अत आगमादृते कथमीश्वरस्सेत्स्यति ॥ अत्राहुः सावयवत्वादेव जगतः कार्यत्वं नप्रत्याख्यातुं

## श्रुतप्रकाशिका

कत्वव्याप्त्यर्थं बुद्धिमत्कर्तृपूर्वकत्वसाधन इत्युक्तम् । अथ कार्यत्वहेतोर्विशेषविरुद्धत्वमाह—किंचेति । अनीश्वरेण कर्मवश्येन परिग्रहवता उपकरणवतेत्यर्थः । सर्वानुमानोच्छेदमाशङ्क्याह—नचेति । कथमित्यत्राह—लिङ्गिनीति । पक्षेऽपि तथास्या-दित्यत्राह—इहत्विति । तुशब्दाभिप्रेत वैरूप्यमाह—निवर्तकेति । सिद्धान्त्येकदेशिमतमुपसंहरति अतइति । सिद्ध्यतिचे-दागमादृतेमानमित्यर्थः । अतः सिद्धसाधनत्वसोपाधिकत्वविरुद्धत्वैर्दूषितत्वादित्यर्थः ॥

अथ साक्षात्पूर्वपक्षिण प्रस्तौति । अत्राहुरिति । कार्यत्वहेतोस्स्वरूपासिद्धिमाशङ्क्य व्युदस्यति । सावयवत्वादे-वेति । पूर्वं प्रस्तुतादेवेत्यर्थः, अनेन हेत्वन्तरसद्भावोऽपि सूचितः । एव कण्ठोक्त्याऽभिप्रायेण च सिद्धान् हेतून्प्रयोगतो

## गूढार्थसंग्रहः

' अतएव न विरुद्धता हेतोः एवंहि साभवेत् । यद्युपादानानभिज्ञकर्तृकाः घटादयो भवेयुः नचैतत्परेषामपि सम्मतम् । स्यादेतत् अर्थाक्षिप्तस्य विशेषस्य शरीरादिमत्वादेः प्रमाणविरोधाद्विरुद्धता । यथा तृणादिविकारकारि वादग्निमद्धिममित्यत्र वह्निमत्वाक्षिप्ततृणादिविकारोपयुक्त वह्निगतोद्भूतोष्णस्पर्शविरुद्धशीतस्पर्शस्य प्रत्यक्षेणोपलम्भाद्बाधितो विरुद्धोहेतुः । तथाह्यस्य क्षित्याद्युपादानविषय ज्ञानमात्मनःसन्निकर्षादिकारणक नासति तस्मिन्भवतीति तदनेनाक्षिप्तम् । तच्चात्र प्रमाणबाधितम् । तन्निवृत्तौ ज्ञानमस्य निवर्तेत । उष्णत्वोद्भूतिनिवृत्ताविव दाहको वह्निरवश्याय इति । अव्यापकनिवृत्तौ अव्याप्यनिवृत्तेरयो गात् । कारणंचेदव्यापक कार्यस्य हन्तहतातर्हि व्याप्यव्यापकसकथा । भवेदेतद्यदि क्षित्याद्युपादानज्ञानमप्यस्य कार्यं स्यात् नित्य तदभ्युपेयतइति नशरीरादिनिवृत्तावपि निवर्तितुमर्हति ' इत्याद्युक्त न्यायवार्तिकतात्पर्यटीकायाम् । अयमर्थो नघ-टतइत्यभिप्रेत्याह—किंच घटादिकार्यमित्यादिना ॥ अल्पज्ञानशक्तिना सशरीरेणेत्यनेन नित्यज्ञानवतोऽशरीरस्यानुमा नेन जगत्कर्तृत्व नसंभवतीति सूचितम् । हेतुना साध्यसिद्धिः व्याप्तिज्ञानबलादेव यथाहि व्याप्तिर्गृहीता तथैव हेतुस्साध्य साधयति नित्यज्ञानवदशरीरकर्तृकत्वव्याप्तेरग्रहेण पक्षधर्मतामात्रबलेन नतत्सिद्धिः । पक्षधर्मताबलेन सिद्ध्यनङ्गीकारे 'अन्यथा सर्वानुमानोच्छेदप्रसङ्गात् ' इति न्यायवार्तिकतात्पर्यटीकाया सर्वानुमानोच्छेदप्रसङ्ग उक्तः तमेवाशङ्क्य निरस्यति—नचै तावता इत्यादिना ॥

न्यायवार्तिकतात्पर्यटीकाया वाचस्पत्याशयमेव विशदीकृत्य तदुक्तमनुमानेन जगत्कर्तृ साधनप्रक्रिया स्थापयति—अत्राहुरित्यादिना—नैतद्वाक्यं ब्रह्मप्रतिपादयति इत्यन्तेन ॥

श्रीभाष्यम्

शक्यते। भवन्ति च प्रयोगाः विवादाध्यासितं भूभूधरादि कार्यं सावयवत्वात् घटादिवत्, तथा। विवादाध्यासितमवनिजलधिमहीधरादि कार्यं महत्त्वेसति क्रियावत्त्वात् घटवत्, तनुभुवनादिकार्यं महत्त्वेसति मूर्तत्वाद्घटवदिति। सावयवेषु द्रव्येष्विदमेव क्रियते नेतरदिति कार्यत्वस्य नियामकं सावयवत्वातिरेकि रूपान्तरं नोपलभामहे। कार्यत्वप्रतिनियतं शक्यक्रियत्वं शक्योपादानादिविज्ञानंचोपलभ्यतइतिचेत् न कार्यत्वेनानुमतेऽपि विषये ज्ञानशक्ती कार्यानुमेये इत्यन्यत्रापि सावयवत्वादिना कार्यत्वं ज्ञातमिति तेच प्रति पक्षे एवेति न कश्चिद्विशेषः। तथाहि घटमणिकादिषु कृतेषु कार्यदर्शनानुमितकर्तृगततन्निर्माणशक्तिज्ञानः पुरुषोऽदृष्टपूर्वं विचित्रसन्निवेशं नरेन्द्रभवनमालोक्यावयवसन्निवेशविशेषेण तस्य कार्यत्वं निश्चित्य तदानीमेव कर्तुस्तज्ज्ञानशक्तिवैचित्र्यमनुमिनोति। अतस्तनु-

श्रुतप्रकाशिका

निर्णीतं। भवन्तीति। विवादाध्यासितपदविवरणं भूभूधरादिपदं आदिशब्दोपात्तव्यक्तिसंग्राहकं विवादाध्यासितपदम्, यद्वा पक्षीकृतेष्वेव सम्प्रतिपन्नव्यवच्छेदाशाय विवादाध्यासितशब्दः। सन्तिहि ख्यातपूरणनिष्पाद्याः पृथिव्यशाः सगरसुतादिनिष्पाद्यास्समुद्रांशाः, अस्मन्निष्पाद्याः पर्वतादयश्च, प्रळयेऽपि जलधेरवस्थानात्, सर्वाभावेऽपि स्वदृष्टशरीरावस्थानाच्च, * तयोरकार्यत्वशङ्कायोतनाय प्रतिज्ञावाक्यावर्तनेन जलधितनुशब्दोपादानम्। द्वितीयतृतीयप्रयोगयोर्मध्ये महत्त्वपदेन परमाणुव्यावृत्तिः। क्रियावत्त्वमूर्तत्वशब्दाभ्यां गगनादिव्यावृत्तिः। अवनिमहीधरशब्दमध्ये जलधिशब्दनिवेशस्तद्वत्तयोरपि कम्पसद्भावज्ञापनार्थः। प्रसिद्धोह्युत्पातादौ भूभूधरकम्पः॥

ननु तनुपक्षीकारो नयुक्तः अस्मदादिशरीरे सिद्धसाधनादीश्वरशरीरेत्वाश्रयासिद्धेः। नैवम् तनोर्विशेषतः पक्षीकारनिर्बन्धाभावात्। तदुपादानतु स्वपक्षसम्प्रतिपन्नस्ये*श्वरशरीरस्यापि कार्यताज्ञापनार्थम्। * यद्वा सावयवत्वादेवेत्यादेरयमाशयः न सावयवत्वादुत्पत्तिमत्त्वं प्रसाध्य ततस्सकर्तृकत्वं साध्यते, अपितु सावयवत्वेनैव कृतिसाध्यत्वरूपकार्यत्वसाध्यते कृतिश्च न निराश्रयेति तदाश्रयः कर्ता सामान्यतस्सिद्ध्यतीति। नन्वेवतर्हि कार्यत्वात् सकर्तृकत्वे साध्ये हेतोस्साध्याविशिष्टता स्यात्। न कृतिसाध्यत्वहेतुः उपादानाद्यभिज्ञकर्तृकत्वं साध्यमिति वैषम्यात्। अतएव ह्युत्तरत्र क्रियतइत्युक्तं नोत्पद्यतइति। कार्यत्वं निश्चित्य तदानीमेव कर्तुस्तज्ज्ञानशक्तिवैचित्र्यमनुमिनोतीत्यादि च, एवञ्च कृतिसाध्यत्वलक्षणे साध्ये * शरीरस्यापि विवादपरत्वात्पक्षतोपपत्तिः॥

अथ सोपाधिकत्वं सामान्येन प्रतिक्षिपति। सावयवेष्विति। सावयवत्वमुपलक्षणं महत्त्वेसति क्रियावत्त्वं महत्त्वेसति मूर्तत्वं च सावयवत्वसमानाश्रयं तत्समव्याप्तमिति तयोर*प्युपाधिपरिहारसिद्धिः। रूपान्तरमाकारान्तरं शङ्कते— कार्यत्वेति। परिहरति नेति। कार्यत्वेनानुमते सपक्षे अन्यत्र पक्षे सपक्षेऽपि घटादौ कार्यत्वानुमेये ज्ञानशक्ती तद्वत् सपक्षेऽपि कार्यत्वस्य प्रतिपन्नत्वात् * ज्ञानशक्ती अनुमीयेते इति नाशक्यक्रियत्वमशक्यज्ञानत्वञ्चेत्यर्थः। तदेव दर्शयति— तथाहीति। किं तदकर्तुरपि शक्यक्रियत्वं शक्योपादानादिज्ञानत्वमुपाधिः, उत तत्कर्तुः शक्यक्रियत्वं शक्योपादानादिज्ञानत्वम्। प्रथमेकल्पे सपक्षानुयायित्वाभावान्नोपाधित्वम्। द्वितीयकल्पे पक्षेऽपि विद्यमानत्वान्नोपाधित्वम् सर्वसपक्षानुयायी-पक्षाव्यवर्तमानोह्युपाधिरित्यभिप्रायः। कर्तुः तज्ज्ञानशक्तिवैचित्र्यमित्यनेनाभिप्रेतोऽयं विकल्पः। ततःकिमित्यत्राह—अत इति। अतः सावयवत्वादिहेतोर्निरुपाधिकत्वादित्यर्थः। एवं सावयवत्वात् कृतिसाध्यत्वरूपे कार्यत्वे साध्ये शक्यक्रिय-

श्रीभाष्यम्

भुवनादेः कार्यत्वे सिद्धे सर्वसाक्षात्कारतन्निर्माणादिनिपुणः कश्चित्पुरुषविशेषस्सिद्ध्यत्येव ॥ किञ्च सर्वचेतनानां धर्माधर्मनिमित्तेऽपि सुखदुःखोपभोगे चेतनानधिष्ठितयोस्तयोरचेतनयोः फलहेतुत्वानुपपत्तेः। सर्वकर्मानुगुणसर्वफलप्रदानचतुरः कश्चिदास्थेयः। वर्धकिनाऽनधिष्ठितस्य वास्यादेरचेतनस्य देशकालाद्यनेकपरिकरसन्निधानेऽपि यूपादिनिर्माणसाधनत्वादर्शनात्। बीजाङ्कुरादेः पक्षान्तर्भावेन तैर्व्यभिचारापादनं श्रोत्रियवेतालानामनभिज्ञताविजृम्भितम्। ततएव सुखादिभिर्व्यभिचारवचनमपि तथैव, नच लाघवेनोभयवादिसंप्रतिपन्नक्षेत्रज्ञानामेव ईदृशाधिष्ठातृत्वकल्पनं युक्तम्। तेषां सूक्ष्मव्यवहितविप्रकृष्टदर्शनाशक्तिनिश्चयात्। दर्शनानुगुण्येन हि सर्वत्र कल्पना। नच क्षेत्रज्ञवदीश्वरस्याशक्तिनिश्चयोऽस्ति। अतः प्रमाणान्तरतो न तत्सिद्ध्यनुपपत्तिः समर्थकर्तृपूर्वकत्वनियतकार्यत्व-

श्रुतप्रकाशिका

त्वादिक उपाधिः परिहृतः। अनेनोत्पत्तिमत्त्वात् सकर्तृकत्वे साध्ये उत्पत्तिमत्त्वहेतुरपि निरुपाधिको भवति। सावयवत्वादुत्पत्तिमत्त्वे साध्ये तु बाधोद्धारो व्यभिचारश्च सिद्धः, नहि दूर्वादिकमुत्पद्यमानोऽस्मदादेः शक्यक्रियः ॥

* सिद्धसाधनत्वनिरासार्थमनुमानान्तरप्रदर्शनायाह— **किञ्चेति**। धर्माधर्मनिमित्तेऽपीति सिद्धसाधनपरिहारसूचनम्। अनधिष्ठितयोरनुपपत्तेरिति अन्वयव्याप्तिस्थले व्यतिरेकव्याप्त्युक्तिः। दृष्टान्तमाह— **वर्धकिनेति**। वास्यादेर्यूपादिकरणत्वस्य चेतनव्यतिरिक्तसहकार्यन्तराभावप्रयुक्तत्वशङ्काव्यावृत्त्यर्थं देशकालाद्यनेकपरिकरसन्निधानेऽपीत्युक्तम्। धर्माधर्मौ स्वसाक्षात्कारिचेतनाधिष्ठितावेव कार्यकरौ अचेतनत्वात् वास्यादिवदित्यनुमानशरीरम्। जीवैर्धर्माधर्मसाक्षात्कारपूर्वकतदधिष्ठानायोगाज्जीवविलक्षणसिद्धिः। अनधिष्ठितस्य कार्यकरत्वायोगात् जीवैरसाक्षात्कारपूर्वकाधिष्ठानायोगाच्च सिद्धसाधनं च परिहृतम्। कर्तुरभावे कार्यानुत्पत्तिप्रसङ्गरूपस्य विपक्षे बाधकतर्कस्य पुरुषसुखादिप्रयोजकादृष्टेन कार्योपपत्तिरिति याऽन्यथासिद्धिस्साऽप्यनेनैव परिहृता भवति ॥

अचेतनस्याप्यनधिष्ठितस्य बीजादेरङ्कुरोत्पादकत्वदर्शनाद्व्यभिचार इति शङ्कां परिहरति। **बीजाङ्कुरेति**। कार्यत्वहेतोरङ्कुरादौ व्यवहारपरिहारश्च अङ्कुरशब्दोपादानेन फलितः। चेतनानभिसंहितसुखाद्युत्पादकैश्चेतनानधिष्ठितैस्स्वयमचेतनैस्सुखादिभिरचेतनत्वहेतोर्व्यभिचारमाशङ्क्य परिहरति। **ततएवेति**। आदिशब्देन दुःखादिकं चेतनानधिष्ठितसुखाद्युत्पादकं मनःप्रभृति च विवक्षितम्। एतेन स्वेच्छान्तरेणोत्पद्यमानैस्सुखदुःखविशेषसूचकैश्च पुलकाङ्कुरकम्पादिभिः कार्यत्वहेतोः व्यभिचारश्च परिहृतो भवति ॥

लाघवन्यायेन हेतोरन्यथासिद्धेस्सिद्धसाधनत्वमाशङ्क्य परिहरति। **नचेति**। कुतइत्याकाङ्क्षायामीदृशशब्दाभिप्रेतं हेतुं विवृणोति। **तेषामिति**। एकेन्द्रियकल्पनस्य लाघवेऽप्येकेन्द्रियस्य शब्दादिसकलविषयग्रहणाशक्तेर्ह्यनेकेन्द्रियकल्पनम्; तस्माल्लाघवार्थमशक्तस्य कार्यकरत्वकल्पनमयुक्तमिति भावः। तदेवोपपादयति **दर्शनेति**। उपपन्नमेव हि कल्पनीयं नच जीवानां सूक्ष्मव्यवहितादिदर्शनशक्तिर्दृष्टेत्यर्थः। शक्तिमत्साक्षात्कारएवापेक्षितः न तु शक्तिसाक्षात्कार इतीदमपि प्रत्युक्तं सूक्ष्मव्यवहितेत्यादिना शक्तिमतामपि परमाण्वादीनां क्षेत्रज्ञेन साक्षात्कारासिद्धेः। ईश्वरे न तथाऽनुपपत्तिरित्याह **नचेति**। अवान्तरानुमानेनेश्वरसिद्धिं निगमयति। **अतइति** ॥

व्याप्तिबलात्कार्यानुगुणज्ञानशक्तिमान्कर्ता सिद्ध्यतु तस्य कथं क्षेत्रज्ञवैलक्षण्यं ज्ञानं हि देहेन्द्रियादिसापेक्षमितिशङ्कायां पक्षधर्मताबलसिद्धमर्थमाह— **समर्थेति**। अस्वाभाविकत्वे कर्मानुगुणपरिमितज्ञानशक्तिमत्त्वं स्यादिति तद्व्युदा-

## श्रीभाष्यम्

हेतुना सिध्यन् स्वाभाविकसर्वार्थसाक्षात्कारनियमनशक्तिसम्पन्न एव सिध्यति। यत्त्वैश्वर्याद्यापादनेन धर्मविशेषविपरीतसाधनत्वमुदीरितम् तदनुमानवृत्तानभिज्ञत्वनिबन्धनं सपक्षे सहदृष्टानां सर्वेषां कार्यस्याहेतुभूतानां च धर्माणां लिङ्गिन्यप्राप्तेः ॥

एतदुक्तं भवति केनचित् किञ्चित्क्रियमाणं स्वोत्पत्तये कर्तुस्स्वनिर्माणसामर्थ्यं स्वोपादानोपकरणज्ञानं चापेक्षते, न त्वन्यासामर्थ्यमन्याज्ञानं च हेतुत्वाभावात्। स्वनिर्माणसामर्थ्यस्वोपादानोपकरणज्ञानाभ्यामेव स्वोत्पत्तावुपपन्नायां संबन्धितया दर्शनमात्रेणाकिञ्चित्करस्यार्थान्तरज्ञानादेर्हेतुत्वकल्पनायोगादिति ॥ किंच क्रियमाणवस्तुव्यतिरिक्तार्थाज्ञानादिकं किं सर्वविषयं क्रियोपयोगि उत कतिपयविषयम्। न तावत्सर्वविषयं नहि कुलालादिः क्रियमाणव्यतिरिक्तं किमपि न जानाति। नापि कतिपयविषयं सर्वेषु कर्तृषु तत्तदज्ञानाशक्त्यनियमेन सर्वेषामज्ञानादीनां व्यभिचारात्। अतः कार्यत्वस्यासाधकानामनीश्वरत्वादीनां लिङ्गिन्यप्राप्तिरिति न विपरीतसाधनत्वम् ॥ कुलालादीनां दण्डचक्राद्यधिष्ठानं शरीरद्वारेणैव दृष्टमिति जगदुपादानोपकरणाधिष्ठानमीश्वरस्याशरीरस्यानुपपन्नमिति चेन्न; न सङ्कल्पमात्रेणैव परशरीरगतभूतवेतालगरलाद्यपगमविनाशदर्शनात्। कथमशरीरस्य परप्रवर्तनरूपस्सङ्कल्प इति चेत् न शरीरापेक्षस्सङ्कल्पः शरीरस्य सङ्कल्पहेतुत्वाभावात् मनएव हि सङ्कल्पहेतुः।

## श्रुतप्रकाशिका

सार्थः स्वाभाविकसर्वार्थसाक्षात्कारशब्दः। अथ कार्यहेतुविरुद्धत्वं व्युदस्यति। यत्त्वित्यादिना। कथमित्यत्राह—सपक्ष इति। किं सहदर्शनमात्राच्छरीरादिप्राप्तिः उत हेतुत्वात्? नाद्यः अतिप्रसङ्गात्। न द्वितीयः हेतुत्वासिद्धेरित्यभिप्रायः। कार्यस्याहेतुभूतानामिति व्याप्त्यभावोऽप्यभिप्रेतः ॥

ननु सर्वसपक्षेषु सहदृष्टत्वात् कार्यहेतुत्वं च कल्प्यम् तथासति कथं कतिपयाप्राप्तिः कतिपयप्राप्तिश्चोच्यते इत्यत्राह एतदुक्तमिति। विशेषविरोधं परिहर्तुमपक्षताऽनपेक्षिताज्ञविवेकमाह—केनचिदिति। सपक्षे सहदृष्टत्वादज्ञानादेरपि हेतुत्वं कल्प्यतामित्यत्राह—स्वनिर्माणेति। अकिंचित्करस्येति। अनन्यथासिद्धान्वयव्यतिरेकाभ्यां हि हेतुत्वनिश्चयः. तदज्ञानशक्तिनिर्वर्त्यात् किंचित्कारादधिकः कश्चित्तदन्यज्ञानासामर्थ्यनिर्वर्त्यः किंचित्कारो दृष्टश्चेत् स्यादनन्यथासिद्धिः। न चाधिकः किंचित्कारो दृष्टः। न च कल्प्यः अज्ञानासामर्थ्यहेतुव्यतिरेके कार्यनिवृत्त्यभावात् स्वविषयसामर्थ्योपादानादिज्ञानाभ्यां विना यथा कार्यानुदयः तथाऽन्यासामर्थ्याज्ञानाभ्यां विना कार्यानुदयो न दृष्टः। अतो न तस्य हेतुत्वं कल्प्यम् न हि सर्वत्र भावमात्रं हेतुः किंतु सत्येव भाव इति भावः ॥ अकिंचित्करत्वमेव विकल्पमुखेनोपपादयति। किंचेति। सर्वेष्विति। न हि कुड्यादिनिर्माणानुगुणज्ञानासामर्थ्याभावो घटनिष्पत्तिहेतुः तदनुगुणज्ञानसामर्थ्यवतोऽपि घटादिनिष्पादकत्वदर्शनादित्यर्थः। यत्तु सपक्षे सहदृष्टत्वेन लिङ्गिनि प्राप्तविपरीतविशेषाणां धर्मिग्राहकप्रमाणप्रतिहतानां निवृत्तिः न त्वितरेषामिति इदमपि कार्यत्वस्यासाधकानामित्यनेन प्रत्युक्तं साध्यानुपयोगित्वेनान्यथासिद्धानां सहदृष्टानामपि धर्माणां व्यतिरेकाभावेन व्याप्तिशून्यत्वादप्राप्तेः सहदृष्टत्वेऽपि कार्यानुपयोगिनां प्राप्तिर्न स्यात्। शरीरं हि कार्योपयोगीति शङ्कते कुलालादीनामिति। परिहरति नेति। कथमित्यत्राह—सङ्कल्पेति। शङ्कते कथमिति। परिहरति नेति। को हेतुरित्यत्राह—मनएवेति। तर्कि-

## श्रीभाष्यम्

तदभ्युपगतमीश्वरेऽपि; कार्यत्वेनैव ज्ञानशक्तिवन्मनसोऽपि प्राप्तत्वात्। मानसस्सङ्कल्पस्स-शरीरस्यैव समनस्कत्वादितिचेत्। मनसो नित्यत्वेन देहापगमेऽपि मनस्स-द्भावेनानैकान्त्यात्। अतो विचित्रावयवसन्निवेशविशेषतनुभुवनादिकार्यनिर्माणे पुण्य-पापपरवशः परिमितशक्तिज्ञानः क्षेत्रज्ञो न प्रभवतीति निखिलभुवननिर्माणचतुरोऽचि-न्त्यापरिमितज्ञानशक्त्यैश्वर्योऽशरीरस्सङ्कल्पमात्रसाधनपरिनिष्पन्नानन्तविस्तारविचित्ररच-नप्रपञ्चः पुरुषविशेषईश्वरोऽनुमानेनैव सिध्यति ॥ अतः प्रमाणान्तरावसेयत्वाद्ब्रह्मणः नैत द्वाक्यं ब्रह्म प्रतिपादयति ॥ किञ्च अत्यन्तभिन्नयोरेव मृद्द्रव्यकुलालयोर्निमित्तोपादानत्व दर्शनेन आकाशादेर्निरवयवद्रव्यस्य कार्यत्वानुपपत्त्या च नैकमेव ब्रह्म कृत्स्नस्य जगतो निमि त्तमुपादानं च प्रतिपादयितुं शक्नोतीति ॥

## श्रुतप्रकाशिका

मस्तीत्यत्राह—तदिति । कुत इत्यत्राह-कार्यत्वेनेति । ईश्वरस्य मनस्सम्बन्धोऽस्तिन्यायैकदेशिमतेन । पुनश्शङ्कते मानस इति । परिहरति नेति । * अनैकान्त्यात् । व्याप्त्यभावात् * अशरीरेऽपि मनस्सम्बन्धस्य विद्यमानत्वादनैकान्त्यम् । मनसो नित्यत्वेऽपि चेतनस्य कार्यकरत्वे शरीरसम्बन्धसापेक्षत्वमस्ति मनसि नित्ये सत्यपि मुक्तात्मनः कार्यकरत्वाभावात् ; नहि मुक्तात्मनो बुद्धिसुखदुःखादिकं मनो जनयतीति वाच्यमस्ति ॥

अत्र मीमांसकप्रति प्रतिबन्द्या परिहारं हृदि निधाय पक्षधर्मताबलं दर्शयन्नीश्वरसिद्धिं निगमयति । अतो विचि-त्रावयवेति । अशरीरसङ्कल्पमात्रसाधनपरिनिष्पन्नानन्तविस्तारविचित्ररचनप्रपञ्च इत्याभ्यां पदाभ्यां प्रतिबन्द्या परिहारा भिप्रायो ज्ञात. । * विभुद्रव्यसंयोगिनः परिस्पन्दवतो घटादेस्स्पर्शवत्त्वानियमेऽपि विभुद्रव्यसंयोगिनः परिस्पन्दवतोऽपि मनसो न स्पर्शवत्त्वमङ्गीक्रियते * अथ प्राभाकरंप्रतिपरिहारः * महिमगुणशालिनस्तैजसस्य रूपोपलम्भनियमे दृष्टेऽपि चक्षुषि रूपोपलम्भो नाङ्गीकृतः कार्यारम्भकस्य सावयवत्वव्याप्तिः परिमाणुषु भग्ना तस्मादनेकविरोधपरिहारायैकव्याप्तिभङ्गो न्याय्यः । अतः मनसः कार्यकरत्वे शरीरसम्बन्धसापेक्षत्व भोगसाधनमनस्त्वप्रयुक्तमित्यङ्गीकार्यमिति भावः । एवं साधका-न्तरसिद्धत्वाज्जगत्कारणवस्तुनि शास्त्रस्याप्रामाण्यं निगमयति । अत प्रमाणेति ॥

निमित्तोपादानैक्यस्य गगनादिसृष्टेश्चानुमानाविषयत्वेन शास्त्रस्याधिकविषयत्वात् ब्रह्मणि प्रामाण्यमाशङ्क्य तत्र बाधकान्तरबाधितत्वाच्छास्त्राप्रामाण्यमुच्यते । किंचेति । निमित्तमात्रमनुवदतश्शास्त्रस्यानुमानसापेक्षत्वात्तद्विरुद्धनिमित्तो-पादानैक्यं न शास्त्रं प्रतिपादयति । पक्षीकृतेषु क्षित्यादिषु द्रव्येषु सावयवत्वस्यैव कार्यत्वप्रयोजकतया निरवयवद्रव्यस्या कार्यत्वं पूर्वमेव प्रतिपन्नमिति पश्चाच्छास्त्रं निरवयवद्रव्योत्पत्तिं नप्रतिपादयति । * श्रुतिलिङ्गादिष्वपि पौर्वापर्यं हि प्राबल्य दौर्बल्यहेतुरिति भावः । पूर्वपक्षपरिसमाप्ताविति शब्दः ॥

## गूढार्थसङ्ग्रहः

'यतो वा' इतिश्रुतौ स्वेतरसर्वकारणत्व कारणस्यैक्यमपि न विवक्षितम् असम्भवादित्याह— किंचात्यन्तभिन्न योरित्यादिना । अत्र निमित्तकारणस्योपादानकारणत्वादर्शनोक्त्या परिणामवादासम्भवेन आरम्भवादस्यैवाङ्गीकरणीयतया परिणामिकारणत्वरूपोपादानकारणत्वमपि नास्यांश्रुतौ विवक्षितमित्यप्यभिप्रेतम् । 'न कार्ये तद्वादहेतु' (न्या.सू.४.१.२१)

## श्रीभाष्यम्

**एवं प्राप्ते ब्रूमः। यथोक्तलक्षणं ब्रह्मजन्मादिवाक्यं बोधयत्येव। कुतः शास्त्रैकप्रमाणकत्वाद्ब्रह्मणः। यदुक्तं सावयवत्वादिना कार्यं सर्वं जगत् कार्यं च तदुचितकर्तृविशेषपूर्वकं दृष्टमिति निखिलजगन्निर्माणतदुपादानोपकरणवेदनचतुरः कश्चिदनुमेय इति, तदयुक्तम्; महीमहार्णवादीनां कार्यत्वेऽप्येकदैवैकेन निर्मितानीत्यत्र प्रमाणाभावात्। नचैकस्य घटस्येव सर्वेषामेकं कार्यत्वं येनैकदैवैकः कर्ता स्यात्।**

## श्रुतप्रकाशिका

सिद्धान्तं वक्तुमुपक्रमते—एवंप्राप्तइति। परमसाध्यं प्रतिजानीते यथोक्तेति। आकाङ्क्षापूर्वकं हेतुमाह—कुतइति। शास्त्रैकप्रमाणकत्वात् शास्त्रेतरप्रमाणागोचरत्वादित्यर्थः। हेत्वासिद्धिं परिहर्तुं पूर्वपक्षमनुभाषते। यदुक्तमिति। दूषयति—तदयुक्तमिति। पक्षधर्मताबलात् क्षेत्रज्ञवैलक्षण्यं वदता किं विपुलकार्याणां कर्तृकालैक्यनियममन्तर्भाव्य तदुच्यते उत विपुलत्वमात्रेण उतातीन्द्रियोपादानादिदर्शनवशात् अथवा शरीरानपेक्षसृष्टिवशादिति विकल्पमभिप्रेत्य प्रथमं दूषयति महीति। एकदैवैकेन निर्मितत्वाभावमुपपादयति नचैकस्येत्यादिना। एकं कार्यत्वं घटादेरिव युगपदेककर्तृकत्वयोग्यमित्यत्र * शङ्काग्रोतकमेकमितिपदं * कार्यत्वस्यैकत्वं नाम एकसामग्रीपूर्वकत्वं तत्सिद्ध्यर्थमेकस्येत्युक्तम्। नह्येककार्यत्वमन्तरेण सामग्र्येकत्वं एककार्यावच्छिन्नस्य सर्वस्य हेतोरेकसामग्रीत्वात्। एकत्वेऽप्यनेककर्तृकगोपुरादिव्यवच्छेदार्थमेकदैवैककर्तृकत्वयोग्यत्वं घटशब्देन विवक्षितम्। एकघटस्यैव कार्यत्वं यादृशं दृश्यते तादृशं परिमितैकावयविनिष्ठं कार्यत्वमेकदैवैककर्तृकत्वसम्भावनाऽऽपादकं तच्च महीमहीधरादीनां न दृश्यत इत्यर्थः ॥

## गूढार्थसङ्ग्रहः

इतिसूत्रे प्रागुक्तानुमानेन ईश्वरसाधनानन्तरं 'इमञ्च न्यायमाम्नाय उपोद्बलयति। 'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिवी विधृते तिष्ठतः' 'द्यावाभूमी जनयन्देव एकः' 'तदैक्षत बहु स्यां प्रजायेय' इत्यादि। स्मृतिश्च भवति 'अज्ञो जन्तुरनीशोऽयमात्मनस्सुखदुःखयोः। ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा॥' अकारणत्वेनचेश्वरज्ञाननित्यतां दर्शयति श्रुतिः। 'अपाणिपादो जवनो ग्रहीता' 'पश्यत्यचक्षुस्स शृणोत्यकर्णः' 'स वेत्ति विश्वं नहि तस्य वेत्ता तमाहुरग्र्यं पुरुषं पुराणम्' इत्यादिका। एतस्याशरीरत्वं दर्शितं भवति' इति न्यायवार्तिकतात्पर्यटीकायाम् अनुमानेनेश्वरसिद्ध्युपपादनानन्तरं निगमनवाक्यमिहानुसन्धेयम्। (न्या वा.) तात्पर्यटीकोक्तरीत्यैव भाष्ये पूर्वपक्षरचनेन परिणामिकारणत्वरूपोपादानत्वस्य वेदापौरुषेयत्वस्य स्वतः प्रामाण्यस्य चासम्मतत्वं इत्येतत्त्रयं भगवतो विवक्षितमिति निश्चीयते। 'तत्प्रामाण्यमाप्तप्रामाण्यात्' इति न्यायसूत्रविवरणे ईश्वरे निमित्तकारणत्वमात्रस्य आनुमानिकस्य विवक्षितत्वे सूत्रकृतो गौतमस्यापि एतत्त्रयं विवक्षितमिति स्फुटं प्रतीयते। 'अर्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्' इत्यत्र बादरायणस्य स्वतःप्रामाण्यस्य विवक्षितत्वेन वेदपौरुषेयत्वविरहादेतदुभयसिद्धौ 'जन्माद्यस्य' इतिसूत्रे प्रागुक्तदिशा विवक्षितोपादानकारणत्वस्य 'परिणामात्' इत्यत्र स्फुटं स्थापनपूर्वकं 'तदनन्यत्वम्' इत्यादौ तत्स्थापनेन उपादानत्वस्य व्याससम्मतत्वनिर्णयेन अत्र सूत्रे अर्थत्रयसम्भवेऽपि व्यासस्य विवक्षा, एतदनुरोधेनैव पूर्वपक्षसिद्धान्तौ रचनीयाविति बोध्यम्। एकदैवैकेन निर्मिता इत्यादि। उपादानाभिज्ञकर्तृकत्वानुमाने प्रसिद्धचेतनकर्तृकप्रासादादे (न्या.वा.ता.टी) दृष्टान्ततया उपादानेन तत्र कालभेदकर्तृभेददर्शनात् एकस्मिन्काले एककर्तृकत्वं न सिद्ध्यतीतिभावः ॥

## श्रीभाष्यम्

**पृथग्भूतेषु कार्येषु कालभेदकर्तृभेददर्शनेन कर्तृकालैक्यनियमादर्शनात्। नच क्षेत्रज्ञानां विचित्रजगन्निर्माणाशक्तया कार्यत्वबलेन तदतिरिक्तकल्पनायामनेककल्पनानुपपत्तेश्चैक कर्ता भवितुमर्हतीति क्षेत्रज्ञानामेवोपचितपुण्यविशेषाणां शक्तिवैचित्र्यदर्शनेन तेषामेवातिशयिताद्दष्टसंभावनया च तत्तद्विलक्षणकार्यहेतुत्वसम्भवात् तदतिरिक्तात्यन्तादृष्टपुरुषकल्पनानुपपत्ते।**

## श्रुतप्रकाशिका

**स्यादिति** सम्भावितत्वमात्रमुच्यते—नह्येकघटस्याप्येककर्तृकत्वनियमः अनेकैरप्येकघटनिष्पादनसम्भवात्, तत् किमित्यपेक्षायां बहुषु विपुलेषु च कार्येषु तद्विपर्ययमाह—**पृथग्भूतेष्विति।** पृथग्भूतेष्वित्यत्र विपुलत्वमपि गर्भितं [illegible] इति पूर्वमुक्तेः बहुषु विपुलेषु च कार्येषु * कर्तृकालैक्यानियमादर्शनात् महादयोऽप्येकदैव एकेन निर्मिता इत्यत्र प्रमाणाभावः प्रमाणाभावात्तदयुक्तमित्यध्याहारेण ग्रन्थान्वयः। नच कार्यत्वमेव कर्तृकालैक्ये प्रमाणं विकल्पासहत्वात् किं कार्यत्वमात्रं? उत विपुलकार्यत्वम्? उतासम्भावितजीवकर्तृकपक्षासाधारणकार्यत्वं? प्रथमेऽनैकान्त्यम् द्वितीये विरुद्धं च विपुलकार्येषु कालैक्यैककर्तृत्वादर्शनात्॥

यद्वा अनैकान्त्यमेव तृतीये चासाधारणानैकान्त्यमिति भावः। कार्यत्वबलेन कर्तरि कल्पनीये विपुलतरसूक्ष्मतरपक्षधर्मताबलात् क्षेत्रज्ञवैलक्षण्यं लाघवं चायाति, एककर्तृकत्वं च सिद्ध्यतीत्यत्राह—**नचेति।** *विचित्रशब्देनास्मदाद्यशक्यत्वार्थं* मतिविपुलत्वमतिसूक्ष्मत्वं च विवक्षितम्। कुत इत्यत्राह—**क्षेत्रज्ञानामेवेति।** क्षेत्रज्ञातिरिक्ते कल्प्ये सति ह्यनेककल्पनादेककल्पनस्य न्याय्यत्वे क्षेत्रज्ञानामेव कर्तृत्वोपपत्त्या तदतिरिक्तो न कल्पयितव्य इत्यर्थः। उपचितपुण्यविशेषाणामिति सपक्षे शक्तिवैचित्र्योपपादनार्थमुक्तम्। अतिशयितादृष्टसम्भावनयेति पक्षविषयमुक्तम्। **'सर्वेभ्यः कामेभ्यो ज्योतिष्टोमः'** इत्यादिभिः क्षित्यादिस्रष्टृत्वानुगुणातिशयितादृष्टसम्भावना। क्षेत्रज्ञानामेव योगेन सूक्ष्मव्यवहितादिदर्शनं पराभ्युपेतम् अस्मदादिषु देवेषु च ज्ञानशक्तिवैचित्री दृश्यते, *नच पक्षधर्मताबलादन्वयव्यतिरेकासिद्धान् धर्मान्निर्वर्तयितुमीष्टे तस्या व्याप्त्यव्य*तिरेकसिद्धधर्मप्रकर्षापकर्षमात्रहेतुत्वात् इतरथा शरीरित्वकर्तृत्वादेरपि हानप्रसङ्गात्। **तदतिरिक्तेति।** धर्मिकल्पनातो वरं धर्मकल्पनमिति न्यायादीश्वरकल्पनाददृष्टविशेषकल्पनमेव वरमिति भावः। अदृष्टस्याचेतनत्वाच्चेतनाधिष्ठातारं विना धर्माधर्मौ कार्यकरौ वास्यादिवदित्यनुमाने ईश्वरज्ञानप्रयत्नयोर्व्यभिचारेणान्यतरानैकान्त्यं स्यात्॥

## गूढार्थसंग्रह

व्याप्तिज्ञानानन्तरं पक्षधर्मताबलात् एककर्तृकत्वं सिद्ध्यतीति शङ्कते—**नचेत्यादि।** समाधत्ते **क्षेत्रज्ञानामित्यादिना—तदतिरिक्तात्यन्तादृष्टपुरुषकल्पनानुपपत्तेरित्यन्तम्।** *इतरथापि [illegible] घटचेत्येतदुभयं [illegible] दित्यत्र विव*क्षितं तत्र प्रकृते लाघवेनेश्वरसिद्धिर्न सम्भवति दृष्टसजातीयपुरुषेणैव कार्यनिर्माणसम्भवेन लाघवस्याप्युपपत्तेः दृष्टविसजातीयकल्पनमनुचितम्। लोके पुरुषेषु शक्तितारतम्येन मन्दशक्तिमत्पुरुषासाध्यानेकवस्तुनिर्माणसामर्थ्यमधिकशक्तिमतां पुरुषाणामनुभवसिद्धमिति एतद्बलेनैव पुण्यविशेषेणात्यतिशयशक्तिमत्पुरुषादिदर्शनसम्भवेन तेनैव [illegible] निर्माणसम्भवे ईश्वरसिद्धिर्न सम्भवति। '[illegible] तत्प्रामाण्यमाप्तप्रामाण्यात्' इति सूत्र[illegible]भाष्ये 'एवमाप्तोपदेशः प्रमाणम् आप्ताः प्रमाणम् दृष्टार्थेनाप्तोपदेशेन आयुर्वेदेन अदृष्टार्थो वेदभागोऽनुमातव्यः प्रमाणमिति आप्तप्रामाण्यस्य हेतोस्समानत्वादिति भाष्यम्।

## श्रीभाष्यम्

**नच युगपत् सर्वोत्पत्तिस्सर्वोच्छित्तिश्च प्रमाणपदवीमधिरोहतः अदर्शनात्**

## श्रुतप्रकाशिका

णस्स्यादित्यत्राह—**नचेति** । ० इदानीं क्रमेणोत्पत्तिविनाशौ दृश्येते तदात् पत्तिविनाशयौगपद्यकल्पनमित्यत्राह—

## गूढार्थसंग्रहः

अत्र न्यायवार्तिकम्—'प्रमाणं वेदवाक्यानि वक्तृविशेषाभिहितत्वात् मन्त्रायुर्वेदवाक्यवदिति' इत्यनन्तर 'एककर्तृकत्वेनवा मन्त्रायुर्वेदवाक्यानि पक्षीकृत्यालौकिकविषयप्रतिपादकत्वेन वैधर्म्यहेतुर्वक्तव्यः । ' इति अनन्तरं वेदनित्यत्वपूर्वपक्षः तत्समाधानं च भाष्यवार्तिकयोर्दृश्यते । अत्र तात्पर्यटीका—' मन्त्रायुर्वेदवाक्यानि सर्वज्ञकर्तृकाणि महाजनपरिग्रहेसति लौकिकार्थप्रतिपादकत्वात् ' इत्यादि' 'मन्त्रायुर्वेदवाक्यानां च सत्यपि प्रवृत्तिसामर्थ्ये तासां तासामौषधीनां तत्संयोगभेदानाञ्च तत्तद्दलगवापोद्धारभेदस्य च नासर्वज्ञः सहस्रेणापि पुरुषायुषैश्शक्तः कर्तुं प्रथममन्वयव्यतिरेकौ । नचानादित्वमेतत्परिहारः सर्गादौ तदसम्भवात् । सृष्टिमहाप्रलयौचानुमानागमाभ्यामुपपादयिष्येते इति सर्वं रमणीयम् । तदेव सर्वज्ञपूर्वकत्वे सति सिद्धमाप्तोक्तत्वेन मन्त्रायुर्वेदप्रामाण्यमोदनार्थीपचेदिति लौकिकवाक्यवदिति ' इति ॥

अत्र तात्पर्यपरिशुद्धिः—सृष्टिमहाप्रलयौनेति । सृष्टिप्रलयसाधकानुमानानि आत्मतत्त्वविवेके न्यायकुसुमाञ्जलौ च कृतपरिश्रमाणामनायासप्रपञ्चनीयानि ' इति । आत्मतत्त्वविवेके च—' तथा च श्रूयमाणा अपि वेदावयवाः उत्सादमुपयास्यन्ति, वेदत्वाद्वाक्यत्वाद्वा उत्सन्नशाखावदिति न्यायः । स्यादेतत् भविष्यत्युच्छेदोऽनुमितः । स तु भूतोऽपीति कुतइति चेत् अतएव यत उत्सादानन्तरं पुनस्सर्गेण भाव्यम् अन्यथा संसारिणां कृतहानप्रसङ्गः । नहि विश्वनिर्माणमन्तरेण भोगज्ञानयोस्सम्भवः ? नच तेनविना कर्मप्रवाहसरोधः । ततो यथा भविष्यन् विश्वसर्गः उच्छेदपूर्वकः तथा अयमपि इति ॥

स्यादेतत् परमेश्वरप्रवर्तितोऽप्ययं वेदसम्प्रदायस्सर्गान्तरवेदापेक्षएवेति सेश्वरमीमांसापक्षः कपिलपक्षोवा स्यादितिचेत् किमर्थं पुनरियमपेक्षा पूर्ववेदे जगन्नाथस्य नतावद्वेदार्थोपलम्भाय नित्यसर्वज्ञत्वात्, नापि वचनार्थम् । स्वभावतः सर्वकर्तृतया आदर्शानपेक्षणात् नापि विरोधपरिहारार्थम् प्रतिपाद्यानां तदनुसन्धानविधुरत्वात् । अवैधुर्ये वा कर्तुः सार्वज्ञविज्ञानादेव समस्तविरोधविधूननात् । तथाऽपि पूर्वसर्गान्तरादेव व्यवहारोऽपि परमेश्वरस्य गोचरइतिचेत् कस्सन्देहः ? यदि चैतदेव वेदस्य प्रवाहनित्यत्वं, नकेवलं तस्य किंतु घटादेरपीति न्यायएव दर्शनम् । अन्यथा मीमांसैवेति क्व सेश्वरमीमांसेति तस्मादुक्तरूपःपरिग्रहो नान्यथा सम्भवतीति प्रतिबन्धसिद्धिः । तथाचाप्तोक्तत्वात्प्रामाण्यमिति ' इतिचोक्तम् ॥

न्यायकुसुमाञ्जलौच—' विश्वसन्तानोऽयं दृश्यसन्तानशून्यैः समवायिभिरारब्धः सन्तानत्वात् आरणेयसन्तानवत्, वर्तमानब्रह्माण्डपरमाणवः पूर्वमुत्पादितसजातीयसन्तानान्तराः नित्यत्वेसति तदारम्भकत्वात् प्रदीपपरमाणुवदित्यादि । अत्र यत्नानामावापोद्वापादुत्पत्तिविनाशौ च स्याता सन्तानविच्छेदश्चेति कोविरोधइतिचेन्न ; एवंहि घटादिसन्तानविच्छेदोऽपि स्यात् विपर्ययस्तु दृश्यते । कर्त्रादिभोगविशेषसम्पादनप्रयुक्तोऽसावितिचेत् न द्व्यणुकेषु तदभावात् । तथाच तदवयवानामपगमाभावेऽनादित्वप्रसङ्गे द्व्यणुकत्वव्याघातः । तस्माद्यत्कार्यं यन्निबन्धनस्थिति, तदपगमे तन्निवृत्तिः यद्धेतुकं तदुपगमे तस्योत्पत्तिः । नच कार्यस्य स्थितिनिबन्धनं नित्यमेव नित्यस्थितिप्रसङ्गात् । नच नित्यएव हेतुरकादाचित्कत्वप्रसङ्गात् तदतिनिरस्तरङ्गमेतत् ईदृश्यां च वस्तुस्थितौ भोगोऽपि कर्मभिरेव वस्तुस्वभावानतिक्रमेण सम्पादनीयइति द्व्यणुकवत् पिपीलिकाण्डादेः ब्रह्मपर्यन्तस्यापि विश्वस्येयमेव गतिरिति प्रतिबन्धसिद्धिः ' इत्युक्तम् । अयमर्थो नघटत इत्याह—**नच युगपत्सर्वोत्पत्तिरित्यादिना** ॥

## श्रीभाष्यम्

**क्रमेणैवोत्पत्तिविनाशदर्शनाच्च । कार्यत्वेन सर्वोत्पत्तिविनाशयोः कल्प्यमानयोर्दर्शनानुगुण्येन कल्पनायां विरोधाभावाच्च, अतो बुद्धिमदेककर्तृकत्वे साध्ये कार्यत्वस्यानैकान्त्यम् ; पक्षस्याप्रसिद्धविशेषणत्वम् साध्यविकलता च दृष्टान्तस्य सर्वनिर्माणचतुरस्य एकस्याप्रसिद्धेः । बुद्धिमत्कर्तृकत्वमात्रे साध्ये सिद्धसाधनता ।**

## श्रुतप्रकाशिका

**कार्यत्वेनेति** । अत्र * कार्यत्व कृतिसाध्यत्व * तृतीयाचेत्थंभावार्था विरोधाभावात् व्याप्तिविरोधाभावादित्यर्थः । एव परमतदूषणोपयुक्तार्थशिक्षा कृता । अथ फलित दूषण दर्शयति । **अतइति** । तदयुक्तमित्यारभ्योक्तार्थाना हेतुत्वपरोऽतइशब्दः चलनादिषु तृणादेरिव क्रियाऽऽश्रयत्वमात्रलक्षण*कर्तृत्वव्यावृत्त्यर्थो बुद्धिमच्छब्दः । कि बुद्धिमदेककर्तृकत्वं साध्यम् उत सकर्तृकत्वमात्र? प्रथमेऽपि किंसामान्यतो बुद्धिमदेककर्तृकत्वमात्र साध्य उत सर्वज्ञसर्वशक्त्येककर्तृकत्वमिति विकल्पमभिप्रेत्य प्रथमे कल्पेऽनैकान्त्यमनेककर्तृकरथगोपुरादिषु कार्यत्वस्य विद्यमानत्वादिति भावः । सर्वज्ञसर्वशक्तिकत्वपक्षे दूषणमाह—**पक्षस्येति** । नह्यभिमरनामिव सर्वज्ञसर्वशक्तिकर्तृकत्वमन्यत्र दृष्टम् दृष्टान्तस्य साध्यविकलता । कार्येषु घटादिष्वदर्शनात् । अप्रसिद्धविशेषणत्वसाध्यवैकल्ये द्वेअप्युपपादयति **सर्वेति** । सर्वनिर्माणचतुरस्येत्युक्तत्वादिद दूषणद्वय सर्वज्ञसर्वशक्तिकर्तृकत्वपक्षस्येति ज्ञायते । पूर्वस्मिन्नेव पक्षेचेदमप्रसिद्धविशेषणत्व नघटते नह्येककर्तृकत्वमप्रसिद्धम् । सकर्तृकत्वमात्रपक्षे दूषण माह—**बुद्धिमदिति** ॥ सिद्धसाधनत्व वेदान्तिना वक्तव्य क्षेत्रज्ञकर्तृकत्वानभ्युपगमादितिचेन्न क्षेत्रज्ञानामपि द्वारकर्तृकत्वाभ्युपगमात् समष्टितत्वेषु न द्वारकर्तेतिचेत् नच तत्पक्षीकरण लौकिकप्रमाणाविषयत्वात् । आगमेन सिद्धाना तेषामपिपक्षीकारइतिचेत् तेन कर्ताऽपि सिद्धइति सिद्धसाध्यतेति ॥

अथ क्षेत्रज्ञस्य सर्गे शरीरसापेक्षत्वात्तस्य * सर्वसहारदशाया शरीराभावात्तदानीं शरीरानपक्षःकर्ता जीवविलक्ष-

## गूढार्थसंग्रहः

**क्रमेणैवेत्यादि—विरोधाभावाच्च इत्यन्तम्** । एतेन अनिदम्प्रथमतया परिहार उपपादितो भवति । सर्गादौ तदसम्भवात् (न्या.वा.ता) इत्युक्तौ साधकाभावात् । 'वाचाविरूपनित्यया' 'अजान् ह वै' 'धाता यथापूर्वमकल्पयत्' 'नामरूपं च भूतानाम्' इत्यादिश्रुतिस्मृतिभिः वेदवाक्याद्यनुसन्धानपूर्वकं सृष्टेः प्रतिपादनेनेत्थमेव परमपुरुषव्यापारस्य निश्चयसम्भवात् । 'दर्शनानुगुण्येन' इत्युक्तया त्र्यणुकव्यतिरिक्तपरमाणुद्व्यणुकयोरनुमानेन सिद्ध्यभावस्सूच्यते । तेन कर्त्रा दिभोगाविशेषसंपादनप्रयुक्तोऽसावित्यर्थः प्रतिपादितो भवति । उदयनाद्युक्तप्रक्रिया सर्वाऽपि वेदान्तोदयनसम्प्रदायधुरन्धरैराचार्यपादैः—'सर्गादीनामसिद्धौ नहिनिगमगिरा भज्यते सम्प्रदायः तत्सिद्धौ नानुमान प्रभवति यदिद बाधशून्य विपक्षे। शास्त्रेभ्यस्त प्रसिद्धौ सहपरिपठनाद्विश्वकर्ताऽपि सिद्ध्येत् धर्मानुष्ठापनार्थं तदनुमितिरतो नैव शक्या कदाचित् ॥' (त.मु.नासर.१५) इति श्लोकविवरणसर्वार्थसिद्धौ न्यायपरिशुद्धिशब्दाध्यायद्वितीयाह्निके च सम्यक्पर्यालोचिता । तत्र कृतपरिश्रमाणामिय प्रक्रिया नघटत इत्यत्र नकोऽपि सन्देहः । अत्र युगपत् सर्वोच्छित्तिनिर्देशेन निरन्वयविनाशोऽपि निरस्तः पूर्वपक्षिसमतार्थस्यात्र निरसनेन परिणामवाददूषणमप्येव निरसनीयमिति सूचितम् तदारम्भणाधिकरणे सूत्रकृतैव स्थाप्यते । एतेन 'अर्थेऽनुपलब्धे तत्प्रमाण बादरायणस्यानपेक्षत्वात्' इत्यात्राचार्यशिष्यभूतव्यासजैमिनिसमतार्थस्य 'तत्प्रामाण्यमाप्तप्रामाण्यात्' इति न्यायसूत्रादौ प्रतिपक्षभूतार्थस्सर्वोऽपि पर्यालोचित. । तेन स्वत.प्रामाण्यवेदापौरुषेयाविनाभूत जगत्कारणस्यौपनिषदत्व सम्यक्प्रतिष्ठापित भवति । **पक्षस्याप्रसिद्धविशेषणत्वमिति** । साध्याप्रसिद्धिरित्यर्थः ॥

श्रीभाष्यम्

सार्वज्ञ्यसर्वशक्तियुक्तस्य कस्यचिदेकस्य साधकमिदं कार्यत्वं किं युगपदुत्पद्यमानसर्ववस्तुगतं? उत क्रमेणोत्पद्यमानसर्ववस्तुगतम्? युगपदुत्पद्यमानसर्ववस्तुगतत्वे कार्यत्वस्यासिद्धता। क्रमेणोत्पद्यमानसर्ववस्तुगतत्वे अनेककर्तृकत्वसाधनाद्विरुद्धता। अत्राप्येककर्तृकत्वसाधने प्रत्यक्षानुमानविरोधश्शास्त्रविरोधश्च कुम्भकारो जायते रथकारो जायत इत्यादिश्रवणात्॥ अपि च सर्वेषां कार्याणां शरीरादीनां च सत्त्वादिगुणकार्यरूपसुखाद्यन्वयदर्शनेन सत्त्वादिमूलत्वमवश्याश्रयणीयम्। कार्यवैचित्र्यहेतुभूताः कारणगताविशेषास्सत्त्वादयः। तेषां कार्याणां तन्मूलत्वापादनं तद्युक्तपुरुषान्तःकरणविकारद्वारेण पुरुषस्य च तद्योगःकर्ममूल इति कार्यविशेषारम्भायैव ज्ञानशक्तिवत्कर्तुः कर्मसम्बन्धः

श्रुतप्रकाशिका

सुखान्तरेण दूषयितु हेतुं विकल्पयति सार्वज्ञ्येति। अयमभिप्रायः कर्तृमात्रव्याप्येन कार्यत्वमात्रेण न कर्तृविशेषसिद्धिरिति प्रागेवोक्तम्। अतः पक्षविशेषाधीनेन कार्यत्वविशेषेण कर्तृविशेषस्साध्यः कुम्भादिकार्यविशेषेणहि कुलालादिकर्तृविशेषानुमान नतु कार्यत्वमात्रेण, अतः पक्षाधीनः कार्यत्वविशेषो निरूप्यतइति। किं युगपदिति। पक्षप्रकर्षाधीन हेतुवैशिष्ट्यं द्विधा संभवेत् परिदृश्यमानमह्यादिविपुलकार्याणा युगपदुत्पत्त्या वा क्रमभाविना त्रैकाल्यवर्तिना कार्याणामानन्त्येन वा, तत्र कीदृशेन पक्षप्रकर्षेण हेतुविशेषो विवक्षित इत्यर्थः। प्रथम दूषयति युगपदिति। कृत्स्नप्रळयासिद्धेः भूभूधरादीना * युगपदुत्पत्तौ प्रमाणाभावात्तन्निबन्धन कर्तृवैलक्षण्यसाधकहेतुवैलक्षण्यमसिद्धमित्यर्थः। द्वितीय दूषयति क्रमेणेति। यद्यप्येकैकेन कुलालादिना जन्मसहस्रेणाप्यनन्तकार्यनिष्पादनसम्भवः। तथाऽपि तत्तज्जन्मसमानकालकुविन्दादिकृतानां कार्याणा तत्कर्तृकत्वाभावात् सर्वकार्याणामेककर्तृकत्व नास्ति। अतस्त्रैकाल्यवर्तिसमस्तवस्तुनिष्ठत्वविशेषितं कार्यत्वं कर्तृभेदेनैव व्याप्तमिति कर्त्रैक्यसाधने *विरुद्धमित्यर्थः। अत्राप्येककर्तृकत्वसाधनइति। विशिष्टकार्यत्वव्यापकतयाऽभिमतस्य घटपटरथादिदृष्टस्य * भिन्नकर्तृकत्वस्य प्रतिक्षेप इत्यर्थः। भिन्नकर्तृकतया प्रत्यक्षसिद्धेषु प्रत्यक्षविरोधः अन्यत्र द्वीपान्तरवर्ती घटः एतद्व्यतिरिक्तकुलालकर्तृकः एतद्व्यापारागोचरहेतुकत्वेसति घटत्वात् सम्प्रतिपन्नकुलालान्तरोत्पादितघटवत् द्वीपान्तरवर्तिघटहेतूना दण्डादीनामेतद्व्यापारागोचरत्वमेतस्य तत्र गमनाभावनिर्णयात् अतएवमादिभिरनुमानैर्विरोधः

शास्त्रविरोधमुपपादयति कुम्भकारइति। कुम्भकारो जायते रथकारो जायते इत्यर्थोपादान नतु पाठक्रमः। नहि कुम्भरथयोरेककर्तृकत्वे कुम्भकाररथकारयोरुत्पत्तिः पृथग्वक्तव्या एकस्यशत्वेन पुनरुक्तिप्रसङ्गादितिभावः। प्रकारान्तरेण विरुद्धत्वमाह—अपिचेति। सुखादेस्सत्त्वादिगुणकार्यत्व शास्त्रदृष्टमिति तच्छास्त्रप्रामाण्यवादिनाऽङ्गीकार्यमिति मत्वाऽनिष्टमापादयति नतु पराभ्युपगमात्। सुखादिशब्देन सुखदुःखमोहा विवक्षिताः। सुखाद्यन्वयदृशरीरादीना सुखादिहेतुत्वावस्थान्वयः। सत्त्वादिमूलत्व * सत्त्वादिगुणकद्रव्योपादानत्वमित्यर्थः * के सत्त्वादयः कथ च तेषा सुखादिहेतुत्वमित्यत्राह—कार्यवैचित्र्येति। कारणगताविशेषाः कारणशब्दो निमित्तोपादानसाधारणः। ततः किं कर्तुर्गुणवश्यत्वस्येत्यत्राह—तेषां कार्याणामिति। पुरुषेण कार्याणा तन्मूलत्वापादन सत्त्वादियुक्तस्वकीयान्तःकरणविकारद्वारेणेत्यर्थः। ततःकिमित्यत्राह—पुरुषस्यचेति॥

कार्यानुपयोगिनोहि धर्मा नप्रामुवन्तीति पूर्वपक्षिणोक्तं सत्त्वादीनातु कार्योपयोगित्वात्तदधीनः कर्मसम्बन्धोऽवर्जनीयइति मत्वानाह—ज्ञानशक्तिवदिति। सुखदुःखमोहादीना सत्त्वरजस्तमोहेतुकत्व शास्त्रसिद्धम्। सुखादिहेतुभूतशरी-

## श्रीभाष्यम्

कार्यहेतुत्वेनैवावश्याश्रयणीयः । ज्ञानशक्तिवैचित्र्यस्य कर्ममूलत्वात् । इच्छायाःकार्यारम्भहेतुत्वेऽपि विषयविशेषविशेषितायास्तस्यास्सत्त्वादिमूलत्वेन कर्मसम्बन्धोऽवर्जनीयः । अतः क्षेत्रज्ञा एव कर्तारः न तद्विलक्षणः कश्चिदनुमानात्सिद्ध्यति ॥ भवन्ति च प्रयोगाः तनुभुवनादि, क्षेत्रज्ञकर्तृकं कार्यत्वाद्धटवत् । ईश्वरःकर्ता न भवति प्रयोजनशून्यत्वात् मुक्तात्मवत् । ईश्वरःकर्ता नभवति अशरीरत्वात्तद्वदेव । नच क्षेत्रज्ञानां स्वशरीराधिष्ठाने व्यभिचारः तत्राप्यनादेस्सूक्ष्मशरीरस्य सद्भावात् । विमतिविषयः कालो न लोकशून्यः कालत्वाद्वर्तमानकालवदिति । अपि च किमीश्वरस्सशरीरोऽशरीरो वा कार्यं करोति नतावदशरीरः अशरीरस्य कर्तृत्वानुपलब्धेः। मानसान्यपि कार्याणि सशरीरस्यैव भवन्ति मनसो नित्यत्वेऽप्यशरीरेषु मुक्तेषु तत्कार्यादर्शनात् । नापि सशरीरः विकल्पासहत्वात् । तच्छरीरं किं नित्यं ? उतानित्यम् । नतावन्नित्यं सावयवस्य तस्य नित्यत्वे जगतोऽपि नित्यत्वाविरोधादीश्वरासिद्धेः । नाप्यनित्यम् ।

## श्रुतप्रकाशिका

*राद्युपादानस्य निमित्तस्य च कर्तुस्सत्त्वादिगुणान्वयश्च शास्त्रसिद्धः*—

निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः । कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते ॥

इत्यादिभिर्दृश्यते । अतस्सत्त्वादिगुणक शरीराद्युपादान द्रव्य सत्त्वादिगुणान्वयविशृतान्तःकरणः पुरुषोऽधितिष्ठति गुणान्वयश्च कर्ममूलइति कर्मवश्यत्वप्रसङ्गइत्यर्थः । हेत्वन्तरेणापि कर्मसम्बन्धमाह—**ज्ञानेति** । न ज्ञानशक्तिवैचित्र्याद्विचित्रसर्गः अपित्विच्छामात्रादितिचेत् तत्राह—**इच्छायाइति** । विषयविशेषविशेषिताया इच्छायास्सर्गस्थेमादिविषयत्व तत्रापि विचित्रसर्गादिविषयत्व च सत्त्वादिमूलत्वेन कर्मफलमित्यर्थः । एव कर्तृत्वक्षेत्रज्ञत्वयोः व्याप्तिदर्शनात्तद्विलक्षणासिद्धिरित्याह—**अतइति** । प्रतितर्कानाह—**भवन्तिचेति** । **तनुभुवनादीति** । इदमत्यनुमान प्रतितर्को वा * अन्ये प्रतितर्काएव कार्यत्वे क्षेत्रज्ञकर्तृकत्वप्रसङ्गः, *कर्तृत्वे सापेक्षत्वप्रसङ्गः कर्तृत्वे सशरीरत्वप्रसङ्ग इत्यर्थः । अशरीरत्वहेतोर्व्यभिचारा शङ्कय परिहरति* **नचेति**। अनादेः बीजाङ्कुरवत् प्रवाहानादेरित्यर्थः। अधिष्ठान देहेन प्रथमसम्बन्धश्चेत् सूक्ष्मस्थूलशरीरप्रवाहानादितया परिहृतः यथा बालशरीरविशिष्टेन युवशरीरपरिग्रहः तद्वदेव अधिष्ठान प्रेरणचेत् स्वपरानिर्वाहकन्यायात् परिहृत. शरीरव्यतिरिक्तप्रेरणस्य शरीरापेक्षाहि न शरीरस्येति । शरीरत्वप्रयुक्त शरीरान्तरनिरपेक्षप्रेरणत्व * तथा जगतः ईश्वरशरीरत्वे सशरीरत्वात् * कर्मवश्यत्वप्रसङ्गः । यथा देहः स्वज्ञानोत्पत्तौ करण कर्म च भवति यथा च घटः स्वविषयज्ञानोत्पत्तौ स्वसत्तया हेतुः पश्चात्तद्विषयश्च भवति तथा स्वविषयप्रेरणेऽपि शरीरमिति न कर्मकर्तृविरोधः । * नचाङ्कुरादौ शरीरस्ययोग्यानुपलब्धिः पिशाचसिद्धादिशरीरवददृश्यत्वोपपत्ते., देशान्तरस्थेन वा शरीरेण सङ्कल्पद्वारा विषादेरिव प्रेरणोपपत्तेश्च ॥

प्रतितर्कान्तरमाह—**विमतीति** । अत्र सूर्यपरिवृत्ति*सख्याविशेषावच्छेदात् पूर्वत्वेन परत्वेन च कालस्य पक्षीकृतत्वात् नाश्रयासिद्धिरिति । अनुमान मुखान्तरेण दूषयति **अपिचेत्यादिना** । दूषण वक्तु विकल्पयति **किमिति** । चीस्थचरमशिरो दूषयति **नतावदिति** । अशरीरस्य मनसा कर्तृत्व स्यादिति प्रागुक्त दूषयति **मानसानीति** । कुतइत्यत्राह—**मनसइति** । अपिशब्देन स्वपक्षे नित्यत्वानभ्युपगमस्सूचितः । सशरीरत्वपक्ष दूषयति **नापीति** । विकल्पासहत्व विवरितु विकल्पयति **तदिति** । प्रथम दूषयति **नतावदिति** । जगतः भूभूधरादेः । द्वितीयदूषयति **नापीति** । हेतुमाह—

## श्रीभाष्यम्

**तद्व्यतिरिक्तस्य तच्छरीरहेतोस्तदानीमभावात्। स्वयमेव हेतुरितिचेत् न अशरीरस्य तदयोगात् अन्येन शरीरेण सशरीरइतिचेत् न अनवस्थानात्। सार्कि सव्यापारो निर्व्यापारो वा अशरीरत्वादेव न सव्यापारः, नापि निर्व्यापारः कार्यं करोति मुक्तात्मवत्। कार्यजगदिच्छामात्रव्यापारकर्तृकमित्युच्यमाने पक्षस्याप्रसिद्धविशेषणत्वम्, दृष्टान्तस्य च साध्यहीनता। अतो दर्शनानुगुण्येनेश्वरानुमानं दर्शनानुगुण्यपराहतमिति शास्त्रैकप्रमाणकः परब्रह्मभूतस्सर्वेश्वरः पुरुषोत्तम। शास्त्रंतु सकलेतरप्रमाणपरिदृष्टसमस्तवस्तुविसजातीयं सार्वज्ञ्यसत्यसङ्कल्पत्वादिमिश्रानवधिकातिशयापरिमितोदारगुणसागरं निखिलहेयप्रत्यनीकस्वरूपं प्रतिपादयतीति न प्रमाणान्तरावसितवस्तुसाधर्म्यप्रयुक्तदोषगन्धप्रसङ्गः। यत्तु निमित्तोपादानयोरैक्यमाकाशादेर्निरवयवद्रव्यस्य कार्यत्वं,चानुपलब्धं अशक्यप्रतिपाद**

## श्रुतप्रकाशिका

तद्व्यतिरिक्तस्येति। तच्छरीरहेतोदशरीरान्तरस्याभावादित्यर्थः। दूषणपरिहाराय परोक्तं शङ्कते—स्वयमेवेति। स्वयशब्द ईश्वरपर। परिहरति नेति। तदयोगात् हेतुत्वायोगात् पुनश्शङ्कते अन्येनेति। अनवस्थया दूषयति नेति। प्रामाणिकपरंपरा नदोषइतिचेच्छरीरत्वप्रयुक्तकर्मवश्यत्व स्यादितिभावः। कर्मवश्यत्वप्रसङ्गस्य प्रागुक्तत्वात् इहाप्यनवस्थादूषणस्य ❀ कर्मवश्यत्वप्रसङ्गपर्यन्तत्वमभिप्रेतमित्यवगम्यते ॥

प्रकारान्तरेण विकल्प्य दूषयति सकिमिति। अशरीरस्य निर्व्यापारत्वे निर्व्यापारस्य कार्याकरणेच दृष्टान्तोमुक्तात्मा * व्यापारश्च प्रयत्नो विवक्षितः। इच्छाविशेषस्य हेतुत्वेहि गुणवश्यताप्रसङ्गः पूर्वमुक्तः। इच्छामात्रमेव व्यापारइत्याह— कार्यजगदिति। * मात्रशब्देन सत्त्वादिगुणान्वयतन्मूलकर्मसम्बन्धव्यावृत्तिः। ननु कर्मवश्यत्वादिक न कर्तुं.प्रसञ्जनीयम् अव्यापारत्वात्। नहि स्वत्पक्षेण वाऽसत्पक्षेणवा व्याप्तिः ईश्वरे त्वयामयाऽपि तदनभ्युपगमात्; नैवम् आगमादृते ऽपीश्वरस्सिद्धयतीति वदन्त प्रत्यागममसन्त कृत्वाऽसदादिभिरुच्यमानत्वात् यदीश्वरप्रतिपादकागमबलान्मदुक्त व्याप्तिभङ्गे नेश्वरानुमान स्थाप्यते तदानीमनुमानस्यागमानपेक्षप्रामण्यासिद्धिरित्यप्राप्तग्राहित्वमागमस्य सिद्धयेत् ॥

यद्वा अलौकिकप्रमाणैकवेद्यत्वाभावेसति कर्तृत्वस्य कर्मवश्यत्वादिव्याप्यत्वात्, शास्त्रयोनिसुत्रेश्वरप्रत्यक्षाप्यप्यलौकिकशब्दोक्तानीति। अनुमानदूषणमुपसहरति अतइति। परस्य ब्रह्मण ईश्वरानतिरिक्तत्वज्ञापनार्थस्सर्वेश्वरशब्दः; अनेन '**तमीश्वराणां परमं महेश्वरम्**' इति श्रुतिस्स्मारिता भवति। देवताविशेषनिर्णयार्थं '**महान्प्रभुर्वै पुरुषस्सत्त्वस्यैष प्रवर्तक**' इति श्रुतिस्मारणार्थं पुरुषोत्तमशब्दः। उक्तदोषास्तदानीमपि प्राप्नुयुरित्यत्राह— **शास्त्रंत्विति**। सर्वविसजातीयत्व दर्शयति **सार्वज्ञ्येति**। सार्वज्ञसत्यसङ्कल्पत्वादिमिश्रशब्दो ब्रह्मविशेषण, गुणविशेषण वा तद्वितितिरूप वादन्येषागुणानाम् एकैकमनवधिकातिशया गुणा अपरिमिता निस्सङ्ख्याता इत्यर्थ. ॥

इति शास्त्रयोनित्वाधिकरणम्

## गूढार्थसङ्ग्रह

**यत्तु निमित्तोपादानयोरित्यादि—प्रतिपादयिष्यते इत्यन्तम्।** एतेन निमित्तकारणस्यानुमानगम्यत्वेऽपि तदनुवादेनोपादानकारणत्वविधायकस्य वाक्यस्य सम्भवतीति पूर्वपक्षाशङ्कत्य यत्रवीनोक्त तस्य नावकाश.। एकस्योपा

### श्रीभाष्यम्

**नमित्युक्तम्। तदप्यविरुद्धमिति 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' (शारी.१.४.२३ 'नवियदश्रुतेः' (२.३.१) इत्यत्र प्रतिपादयिष्यते। अतः प्रमाणान्तरागोचरत्वेन शास्त्रैकविषयत्वात् 'यतो वा इमानिभूतानि' (तै.भृगु.१.अनु) इतिवाक्यमुक्तलक्षणं ब्रह्म प्रतिपादयतीति सिद्धम् ॥**

### इति शास्त्रयोनित्वाधिकरणम्

### गूढार्थसङ्ग्रहः

*दाननिमित्तत्वासम्भव श्चैव पूर्वपक्षिसमतत्वेन एवमर्थवर्णनस्यायुक्तत्वात्। इदमुपलक्षण परिणामवादो नसंभवति किंत्वारम्भवादएव युक्तइत्यस्यापि।* अयमर्थः 'तदनन्यत्वम्' इत्यादौ पर्यालोचयिष्यते ॥

**अतइत्यादि—ब्रह्मप्रतिपादयतीति सिद्धमित्यन्तम्।** शास्त्र योनिःकारण प्रमाण यस्य (श्री.भा) इति प्राक् *सूत्रार्थविवरणभाष्ये प्रमाणशब्दोपादानेन 'अर्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्' इति सूत्रार्थप्रत्यभिज्ञापनेन* शास्त्रप्रमाणकत्व शास्त्रयोनित्व ब्रह्मणः इतरप्रमाणविषयत्वएव सभवति। नत्वन्यथा ज्ञातार्थज्ञापकतयाऽनुवादरूपत्वात् स्मारकत्वाविशेष एव प्रमाणान्तरविषयत्वे स्यात्। सूत्रार्थस्तु 'जन्माद्यस्ययतः' इत्यस्यानुवृत्त्या शास्त्रयोनित्वात् यतः जन्मादि तद्ब्रह्म इति। तद्ब्रह्मेत्यस्य प्रथमसूत्रस्थपदब्रह्मपदानुषङ्गेनैव वाच्यतया जिज्ञास्यब्रह्मणः तत्र प्रस्तुततया 'यतोवा इमानि भूतानि' इत्यादिवाक्यबोध्यमित्यर्थतः सिद्ध्यति। *एव च औपनिषदपुरुषस्यैव प्रथमसूत्रे विचार्यब्रह्मतायाः प्रागुपपादनेन 'यतोवा' इत्यादिवाक्यप्रतिपाद्य 'अनौपनिषदम् अनुमानगम्यत्वात्' इति पूर्वपक्षे 'यतोवा' इत्यादि* वाक्यप्रतिपाद्य औपनिषदमेव प्रमाणान्तराविषयत्वात् इति सूत्रकृद्विवक्षितयुक्तिमुखेन एतावता सिद्धान्त कृतः। अतश्च प्रागुक्तसूत्रार्थस्सुस्थः। 'तद्धि न वाक्यप्रतिपाद्यमनुमानेन सिद्धेः' इति सूत्रावतरणे ब्रह्मपदार्थविशेष्यकमेवानुमान पूर्वपक्षिसमतमिति स्फुटम्। प्रथम सूत्रविवरणे निगमने च वाक्यविशेष्यकानुमानमेव सिद्धान्ते प्रदर्शित तत्र तुल्यवित्तिवेद्यतया एकार्थसाधनेऽन्यार्थप्रतीतिरसुलभैवेत्युभयोर्न विरोधः। अत्राधिकरणे पूर्वाधिकरणोक्त विषयासिद्धिर्न सभवति। 'यतो वा' इत्यादिवाक्यस्य 'तत्वौपनिषदं पुरुषम्' इति श्रुत्यनुसारेण श्रुत्यन्तरप्रसिद्धकारणत्वानुवादेन *ब्रह्म (लक्षणत्व)विषयकत्व* न संभवतीत्याक्षेपे कारणत्वस्यानुमानिकत्व निरस्योपनिषत्तात्पर्यविषयत्वसाधनेन विषयसिद्धिः सपादिता। एतेन ब्रह्मपदार्थविषयासिद्ध्या शास्त्रमनारम्भणीयमिति शङ्कानिरसनस्य पूर्वाधिकरणोक्तस्य प्रतिष्ठापनमुखेन अनुबन्धचतुष्टयान्तर्गतसम्बन्धोऽपि स्थापितः 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इत्यादिसूत्रएव 'अर्थेऽनुपलब्धे' इत्याद्यशसत्वेन कारणत्वस्यानुमानिकत्वे उपनिषत्तात्पर्यविषयत्वासम्भवेन सम्बन्धासम्भवस्य एतदधिकरणे निरसनमुखेन शास्त्रस्यारम्भणीयत्वं निश्चितमिति निर्णयस्संभवति। एतेन नवीनोक्तशङ्काया अपि नावकाशः। पूर्वोपपादितरीत्या नवीनोक्ताक्षेपस्य कस्यापि नावसरः ॥ एतेन 'एतस्य वा अक्षरस्य' इत्यादीना न्या.वा.ता.टीकाया न्यायसिद्धार्थानुवादकत्वोक्तिर्न संभवतीति सिद्धम्। परैः जगत्कारणस्य शास्त्रप्रतिपाद्यत्व वदद्भिः 'एतस्य वा अक्षरस्य' इति वाक्यस्यानुमानसिद्धार्थबोधकत्वमुपनिबद्धाष्ये वार्तिके च निरूपितम्। अक्षराधिकरणे 'अक्षरमम्बरान्तधृतेः' 'सान प्रशासनात्' इति सूत्रद्वयोक्त सूर्यचन्द्रादिधारकत्व नैवानुमानेनावगन्तु शक्यम्। 'जगत्स्थितिः यत्नपूर्वा स्थितित्वात् राजाधीनास्थितिवत् इत्यनुमान (वृ.वा) नैव श्रुत्यभिप्रेतं साधयितुमलम्। सूर्यचन्द्रादिधारकत्वस्य दृष्टान्ते असम्भवात्। परमते अक्षरविद्या, निर्विशेषविद्या, निर्विशेषेत्याय धर्मो

## गूढार्थसंग्रह

नास्त्येव दहरविद्यायामपि श्रुतिरुक्ता 'धृतेश्च महिम्नोऽस्य' इति सूत्रमपि। दहरविद्या सगुणविद्या अक्षरविद्या निर्गुणविद्या इति कथ घटतइति विवेचयन्तु विवेचका। जगत्कारणत्वमपि श्रुतिसमशीलमेव निर्विशेषे असम्भवात्। 'यतोवा' इत्यस्य वाच्यसमर्पकत्वमवान्तरतात्पर्यमेव तत्र, 'सत्यज्ञानम्' इत्यत्रतु लक्ष्यसमर्पके मुख्य तात्पर्यम् इत्यादिकल्पनमुपक्रमे प्राप्य तयोक्तब्रह्मण. उत्तरवाक्येषु निरूपणीयतया न श्रुतितात्पर्यानुगुणमिति पूर्वमेव निरूपितम्। अत कारणावधारणप्रतिपादकवाक्ययो. नैव न्यायसिद्धार्थानुवादकत्वम् ॥

अतश्च 'यतोवा' इतिश्रुतौ श्रुत्यन्तरोक्तकारणानुवादेन ब्रह्मत्वविधानेन तत्रैव पूर्वश्रुतौ छान्दोग्ये च हेतुत्वमुपादानत्वरूपमिति प्रागुक्तदिशा निर्णयसम्भवेन राजकुमारनयस्सम्प्रदायसिद्धोऽपि मुख्य। पितु पुत्रप्रत्युपादानत्वमेतरेति गर्भोपनिषदि स्फुटम्। शरीरस्य सप्तधातुकनिरूपणावसरे 'सप्तधातुमिति कस्मात्?' 'षड्विधोरसो रसाच्छोणित शोणितान्मास मासान्मेदो मेदसोस्थीन्यस्थिभ्यो मज्जा मज्जाया शुक्रम्। शुक्रशोणितसयोगादावर्तत गर्भो हृदि व्यवस्था नयति।—ऋतुकाले प्रयोगादेकरात्रोषित कलिल भवति सप्तरात्रोषित बुद्बुदभवति अर्धमासाभ्यन्तरेण पिण्डा भवति मासाभ्यन्तरेण कठिनोभवति मासद्वयेन शिर कुरुते मासत्रयेण पादप्रदेशो भवति पञ्चमे मास पृष्ठवशो भवति षष्ठेमासे नासाक्षीणि श्रोत्राणि भवन्ति सप्तमे मासि जीवेन सयुक्तो भवति अष्टमे मासि सर्वसपूर्णो भवति पितूरेतोतिरिक्तात्पुरुषा भवति। मातू रेतोऽतिरिक्तास्त्रियो भवन्ति। उभयोर्बीजतुल्यत्वान्नपुसको भवति' इत्युक्ते। अत्र 'यो यान्नमत्ति योयोरेतासिञ्चति तद्भूय एव भवति' इति पञ्चाग्निविद्यानुसारेण रेतसा सयोगस्य पूर्वकालएव प्रतिपादनेन तदनन्तरबहुवस्थाभि ससर्गानन्तर 'अष्टमे मासि जीवसयुक्तो भवति' इत्यष्टममासे जीवसयोगोक्ति अवस्थाविशेषाभिप्रायेति बोध्यम् ॥

उक्त च विज्ञानेश्वरेण मिताक्षराया याज्ञवल्क्यस्मृतौ (आ.का ५२.श्लोके) सपिण्डशब्दार्थनिरूपणावसरे 'यत्र यत्र पिण्डशब्द. तत्रतत्र साक्षात्परम्परया वा एकशरीरावयवान्वयो वेदितव्य' 'अवश्यचैकशरीरावयवान्वयेन सापिण्ड्य वर्णनीयम्। 'आ माहि जन्न आत्मन' इत्यादिश्रुते। तथा 'प्रजामनुप्रजायसे' इति च, अथापि 'सएवायविरुद्ध प्रत्यक्षेणोपलभ्यते' इत्यापस्तम्बवचनाच्च' इति। अनन्तर गर्भोपनिषद्वाक्यमप्युदाहृतम्। 'अथाप्यस्य प्रजातिममृतमाम्नाय आह' 'प्रजामनुप्रजायसे तदुतेमर्त्यामृतम्' इति (आ सू.२ प्र.९.प्र २४ स.१.७) अथापि 'स एवायविरुद्ध: पृथक्प्रत्यक्षेणोपलभ्यते दृश्यतेचापि सारूप्य देह वमेवान्यत्' (२) इति पूर्णे सूत्रद्वयम्। अत्र उज्वला—'अथापि अपिच। अस्य गृहस्थस्य प्रजाति प्रजासन्तान अमृतममरणमाम्नायो वेद आह, हमर्त्य मरणधर्मन् प्रजा जायमानामनु त्व प्रजायसे, त्वमेव प्रजारूपेण जायसे तदेवन मरणधर्मिणोऽमृतममरणमिति। नत्रु म्रियसे यतस्त्व प्रजारूपेण तिष्ठसीति' 'अपिच सएवाय पृथग्विरुद्ध प्रत्यक्षेणोपलभ्यते सएव द्विधाभूतइव लक्ष्यते। दृश्यताह सारूप्य द्वया देहमात्रतु भिन्नम्। देहत्वमिति स्वार्थिकस्त्व' इति ॥

मनुस्मृतौ च 'पतिर्भार्या सप्रविश्य गर्भो भूत्वेह जायते। जायायास्तद्धि जायात्व यदस्या जायतेपुन ॥' (९. ८) इति श्लोकविवरणे (म प्र) 'आ मावै पुत्रनामासि' इतिश्रुति, 'पतिर्जाया प्रविशति गर्भो भूत्वा समातरम्। तस्यां पुनर्नवो भूत्वा दशम मासि जायते। तज्जायाजाया भवति यदस्या जायतेपुन' इति बह्वृचब्राह्मणचेत्युभयमुदाहृतम्। अतश्च पितुरुपादानत्व सुस्थम्। एव च राजकुमारनयेन पितुरुपादानत्वन 'यतोवा' इत्यादित अर्थनिर्णये जीवब्रह्माभेदवाक्यानामुपादानोपादेयभावनिबन्धनाभेदता पर्यवसानम् कारणवाक्याना प्राधान्यमभेदवाक्यानांचाप्राधान्य निश्चितमभूदिति,

## गूढार्थसङ्ग्रहः

एतेन पूर्वपक्षिनिर्णीतार्थस्य कस्यापि नावसरः। एवंच जगत्कारणस्य उपनिषत्तात्पर्यविषयत्वेन जगत्कारणत्वेन निश्चितब्रह्म पदार्थस्योपनिषदा च संबन्धोऽपि स्थापितोभवति ॥

एतेन 'तंत्वौपनिषदं पुरुषम्' इति श्रुत्यर्थस्स्थापितो भवति। कैवल्योपनिषद्यपि—'यथा चिरात्सर्वपापं व्यपोह्य परात्परं पुरुषं याति विद्वान्' इत्युपक्रमोक्तपुरुषस्यैव 'वेदैरनेकैरहमेव वेद्यः' इत्यत्र वेदवेद्यत्वमुक्तम्। एतत्तात्पर्येणैव गीतायाः—'वेदैश्च सर्वैरहमेव वेद्यः' 'अतोऽस्मि—पुरुषोत्तमः' 'पुरुषस्सपरःपार्थ भक्त्या लभ्यः' इत्युक्तम्। पुरुषशब्दार्थएव 'विज्ञानमानन्दं ब्रह्म' इत्यादौ ब्रह्मेति उपनिषत्सु विवक्षितमिति पूर्वमेव निरूपितम् ॥

इति शास्त्रयोनित्वाधिकरणम्



### अथ समन्वयाधिकरणम्

एतावता 'एषपन्थाः एतद्ब्रह्म' इत्यत्र पूर्वकाण्डप्रतिपाद्यकर्मणः 'अथातो धर्मजिज्ञासा' 'चोदनालक्षणोऽर्थोधर्मः' इति सूत्रद्वयेन निरूपणं कृतम्। तत्र 'चोदनालक्षणोऽर्थो धर्मः' इतिसूत्रे धर्मस्य लक्षणं प्रमाणंचेत्युभयं निरूपितम् अत्रतु द्वितीयेन सूत्रेण लक्षणं तृतीयेन प्रमाणं च प्रदर्शितम्। पूर्वकाण्डे 'विधिनातेकवाक्यत्वात्' इत्यादिना अर्थवाद वाक्यानां विध्येकवाक्यत्वेन प्रामाण्याभिधानेन सिद्धपरवाक्याना प्रामाण्यस्यानिरूपणेन सिद्धार्थे व्युत्पत्तिसमर्थनेन सिद्धब्रह्मपरवेदान्तविचारः कर्तव्यइति प्रथमसूत्रे स्थापितम्। अत्रतु लक्षणं प्रमाणं च नैकेन वक्तुं शक्यते। इति सिद्धब्रह्म शब्दस्य लक्षणमुखेन व्युत्पत्तिप्रदर्शनं द्वितीयसूत्रे। तत्र धर्मे प्रमाणमुखेनैव लक्षणमिति लक्षणप्रमाणमेकसूत्र एवान्तर्भूतम् सूत्रान्तरे प्रमाणान्तराप्राप्तमप्यभिहितम्। अत्रतु लक्षणे प्रमाणस्यानन्तर्भावात् द्वितीये लक्षणम्। तल्लक्षणाश्रयस्य ब्रह्मणः प्रमाणमुखेन स्थापितं तृतीये। प्रमाणान्तराप्राप्तत्वं जगत्कारणस्य ब्रह्मशब्दार्थत्वे तस्यैव विचार्यत्वेन प्राधान्येन प्रतिज्ञाततया तस्य जगत्कारणस्यानुमानिकत्वे प्राधान्येन प्रतिज्ञातस्य ब्रह्मणः उपनिषदेकगम्यत्वं न संभवतीति शङ्काया तन्निरूपणार्थं तृतीयसूत्रम्। 'तंत्वौपनिषदं पुरुषम्' इतिश्रुतौ उपनिषत्तात्पर्यविषयत्वं सविशेषस्यैवेति पूर्वमेव निरूपितम् ॥

सूत्रत्रयेण अधिकारविषयसम्बन्धनिरूपणेन शास्त्रस्यारम्भणीयत्वं स्थापितम्। तत्र शब्दानां सिद्धे व्युत्पत्तिसमर्थनेन सिद्धपरवाक्यानामपि प्रामाण्यसाधनमुखेन ब्रह्मणः आनन्दरूपस्य फलत्वेनेच्छाविषयत्वस्य प्रथमसूत्रे विवक्षितत्वमात्रेण शास्त्रस्यारम्भणीयत्वं न सिद्ध्यति। प्राप्यब्रह्मणःखलु लक्षणकथनमुखेन ब्रह्मपदार्थनिर्णयः अभिहितः प्राप्तिश्चोपासनाफलम्। एवञ्च विधिवाक्यानामेव फलपर्यवसायित्वमायातं नतु सिद्धपरवाक्यानाम्। एवंच सिद्धपरवाक्याना फलपर्यवसायित्वाभावे व्युत्पत्तिसमर्थनमात्रेण न प्रामाण्यं साधयितुमलम्। 'अर्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्' इति जैमिनिसिद्धान्तस्य व्याससम्मतत्वेन तस्यैवार्थस्य शास्त्रयोनित्वाधिकरणे प्रतिष्ठापनेन विधिवाक्यविचारस्यैव जैमिनिना कृतत्वेन प्रवृत्तिनिवृत्तिद्वारैव वाक्यस्य सफलत्वस्य वाच्यतया सिद्धपरोपनिषद्वाक्यविचाररूपब्रह्मविचारस्यानारम्भणीयत्वमेव पर्यवसितम्। 'शास्त्रयोनित्वात्' इत्यत्र शास्तीति शास्त्रमिति व्युत्पत्त्या भगवच्छासनावबोधिशास्त्रमित्यर्थः शासनस्यैव विध्यर्थतायाः सिद्धान्तसिद्धतया ततोऽपि प्रवृत्तिनिवृत्त्यभावात् प्रयोजनं नस्यादिति शङ्का पुनरुन्मिषति। तन्निराकरणाय 'तत्तु समन्वयात्' इति सूत्रम्। तच्छब्देन 'तत्' इति प्रथमान्ते 'शास्त्रयोनित्वात्'

## श्रीभाष्यम्

### अथ समन्वयाधिकरणम्

**यद्यपि प्रमाणान्तरागोचरं ब्रह्म तथाऽपि प्रवृत्तिनिवृत्तिपरत्वाभावेन सिद्धरूपं ब्रह्म न**

## श्रुतप्रकाशिका

### अथ समन्वयाधिकरणम्

* यथा मृत्तिकाया घटनिष्पादनशक्तत्वेऽपि कुलालस्य च निर्माणशक्तौ सत्यामपि दण्डचक्रादिपरिकरापेक्षाऽस्त्येव तथा शब्दस्य परिनिष्पन्नब्रह्मप्रतिपादनशक्तत्वेऽपि ब्रह्मणोऽशब्देन प्रतिपत्तु शक्यत्वेऽपि बुभुत्साख्यपरिकरापेक्षा प्रमित्युत्पादने विद्यते। यत्नसाध्यत्वात् बुभु सापेक्षिता। * साचाज्ञातत्वपुरुषार्थत्वप्रयुक्ता। तत्रावान्तरपेटिकारूपेण प्रथमेन सूत्र द्वयेन शब्दद्वारकमर्थद्वारकञ्च शक्तिमत्त्व प्रतिपादितम्। अथ सूत्रद्वयान्तरमवान्तरपेटिकान्तर बुभुत्साहेतुनिरूपणपरम्। तत्र प्रथमेन तृतीयसूत्रेणाज्ञातत्वरूपो बुभुत्साहेतुरुक्तः। अथ प्रयोजनत्वरूपो बुभु साहेतुरुच्यते चतुर्थेन। अर्थे प्रतिपन्ने हि प्रयोजनाप्रयोजनत्वचिन्ता प्रतिपत्तिश्च लक्षणतइति जन्मादिसूत्र द्वितीयमभूत्। जन्मादिक लक्षणचेन्मानान्तरात्त सिद्धिस्स्यादिति शङ्कायासङ्गतत्वाच्छास्त्रयोनित्वादिति सूत्र तृतीयमभूत्। अज्ञातत्वेऽप्यप्रयोजने बुभुत्सानुदयात प्रयोजनरूपत्व मत्र निरूप्यत इति क्रमोऽयमेन॥

तत्रानान्तरसङ्गतिमाह—यद्यपीति। अज्ञातत्वनाम बुभुत्साहेतुर्यद्यप्यस्तीत्यर्थः। प्रयोजन सुखं दुःखनिवृत्तिश्च शास्त्रस्य तत्पर्यवसायित्व तदुपायप्रवृत्तिनिवृत्तिबोधनद्वारा तच्च न सिद्धपरत्वेऽस्ति, तस्य प्रवृत्तिनिवृत्तिरूपत्वाभावात्।

## गूढार्थसङ्ग्रहः

इत्युक्तशास्त्रयोनित्वमेव विवक्षितम्। पूर्वोक्तहेत्वसिद्धिनिरसनपरत्वमस्य सूत्रस्येति सर्वसमतम्। एव च तच्छब्दस्य साध्यसमर्पकत्वमेव युक्तम्, तुशब्दः शङ्कानिवृत्तिपरः। ब्रह्म शास्त्रयोनि समन्वयात् इति सूत्रार्थः। तच्छब्दस्य ब्रह्म परत्वे वेदान्तवेद्यमित्याध्याहारःकार्यः 'शास्त्रयोनि' इत्यस्यानुषङ्गो वा। '**अथातो ब्रह्मजिज्ञासा**' इति सूत्रे ब्रह्मणः प्रस्तुतत्वेन '**जन्माद्यस्य यतः**' इत्यादौ समासघटकस्यापि ब्रह्मशब्दस्यानुषङ्गेन तस्यैवोत्तरत्राप्यनुषङ्गेनार्थवर्णनं सभवतीति तच्छब्दस्य ब्रह्मपरामर्शित्व न युक्तम्॥

अन्वय. ब्रह्मण. शास्त्रेण सबन्धः। जगत्कारणब्रह्मणः पूर्वमुपस्थित्या कारणपरशास्त्रमेवात्र विवक्षितम्। कारणपरवाक्य च 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यादि। अत्रैव 'यतो वा' इत्यस्य परिसमाप्तेः शक्त्या तात्पर्यतश्च आनन्दत्वेनान्वयात् इति हेत्वर्थः। शास्त्रस्य ब्रह्मणश्च वेद्यवेदकभावएव सबन्धः। आनन्दत्वेन शक्त्या वेद्यत्वम् वेद्यत्व ज्ञानविषयता तत्र सम्यक्तवमानन्दत्वावच्छिन्न शक्तिप्रयोज्यत्वं तात्पर्यप्रयोज्यत्व च॥

अयमाशयः '**अथातो धर्मजिज्ञासा**' '**चोदनालक्षणोऽर्थो धर्मः**' इत्यत्र साधनत्वेनैव धर्मस्योपस्थितिः। भव्यश्च धर्मो जिज्ञास्यस्तत्र भूत च ब्रह्मेह जिज्ञास्यम्। तत्र धर्मस्य विधेयतासम्भवेन प्रवृत्तिनिवृत्तिद्वारकमेव फल सभवति अत्र तु जगत्कारणब्रह्मणः आनन्दरूपत्वेन ज्ञानविषयतादशायामेव फलत्व सभवति। ननु विधिवाक्यपर्यालोचनानन्तरकालिकप्रवृत्तिनिवृत्तिद्वारकफलपर्यन्तापेक्षा। यद्यपि ब्रह्मण. वाक्यजन्यज्ञानेनैव फलसम्भवात् इदानीं वाक्यस्यानुष्ठानपरत्वाभावेऽपि सफलत्व सम्भवत्यव। अय च तात्कालिकानन्दःफलम् इदमेव स्थिर फल यथा भवति तथा कर्तव्यम्। एतदर्थमेवोपासनवाक्यम्। अनन्तरकालिकानुष्ठान जगत्कारणसिद्धब्रह्मणः आनन्दरूपत्वेन ज्ञानदशाया फलप्रतिपत्ति नैव

श्रीभाष्यम्

शास्त्रं प्रतिपादयतीत्याशङ्क्याह—

## सू.४—तत्तु समन्वयात् १.१.४

प्रसक्ताशङ्कानिवृत्त्यर्थस्तुशब्दः । तत् शास्त्रप्रमाणकत्वं ब्रह्मणस्सम्भवत्येव । कुतः समन्वयात् परमपुरुषार्थतयाऽन्वयस्समन्वयः । परमपुरुषार्थभूतस्यैव ब्रह्मणोऽभिधेयतयाऽन्वयात्; एवमिव समन्वितोह्यौपनिषदः पदसमुदायः ।

श्रुतप्रकाशिका

## सू.४—तत्तु समन्वयात् १,१,४

तस्मात्प्रयोजनपर्यवसायित्वाभावेन बुभुत्साख्यपरिकराभावात् सिद्धे शास्त्रं नप्रमितिं जनयतीत्यर्थः । एवंशङ्कायां सूत्रमुदाहरति तत्तुसमन्वयादिति । इहापि साधारणविचारद्वयमर्थसिद्धं ब्रह्मणश्शास्त्रप्रमाणकत्वं सम्भवति नेति, द्वितीयविचारः तदर्थं प्रवृत्तिनिवृत्तिरूपप्रयोजनशून्यानां वेदान्तवाक्यानां ब्रह्मपरतयाऽन्वयस्सम्भवति नेति, तदर्थं किंशब्दस्य प्रामाण्यं प्रवृत्तिनिवृत्तिपरतया, उत पुरुषार्थपरतयेति ? शब्दस्य प्रवृत्तिनिवृत्तिपरतयैव प्रामाण्ये ब्रह्मणस्सिद्धरूपस्य शास्त्रप्रमाणकत्वाभावात्तद्विचारानारम्भः शब्दस्य पुरुषार्थपरतयैव प्रामाण्ये पुरुषार्थभूतब्रह्मणश्शास्त्रप्रमाणकत्वात्तद्विचारस्यारम्भणीयत्वं फलितम् ॥

एवमर्थसिद्धौ विषयसंशयावभिप्रेत्य सूत्रं व्याचिख्यासुस्तत्र वाक्यार्थयोजनायामेव पदयोजनामन्तर्भावयिष्यन् पृथग्व्याख्येय, तुशब्दं व्याचष्टे प्रसक्तेति । सर्वेषां सूत्राणां तत्तच्छङ्कायामवतरणेऽस्मिं सूत्रे * तुशब्दःप्रदर्शनार्थः तदिति व्याख्येयं पदम् । तद्व्याचष्टे शास्त्रप्रमाणकत्वं ब्रह्मण इति । संभवत्येवेत्येतत् तुशब्दफलितम् हेतुपदस्याकाङ्क्षां दर्शयति कुतइति । समन्वयशब्दस्योत्तरत्र विस्तरेण व्याख्यास्यमानत्वादिदानीं संक्षेपेण व्याचष्टे परमपुरुषार्थतयेति । कस्य केन कीदृशोऽन्वयइत्यपेक्षायामाह—परमेति । शास्त्रेण परमपुरुषार्थभूतस्य ब्रह्मणोऽभिधेयतयाऽन्वयादित्यर्थः । शास्त्रस्य धीस्थत्वाच्छास्त्रेणेति कण्ठोक्त्यभावः ब्रह्म शास्त्रप्रमाणकमिति प्रतिज्ञातेरर्थात् पक्षनिष्ठतया हेतोर्वक्तुमुचितत्वात् समन्वयो ब्रह्मकर्तृकतया व्याख्यातः नतु शास्त्रकर्तृकतया ॥

कथं तथाविधान्वयइत्यपेक्षायामतदुपपादयति । एवमिति । इवशब्दएवार्थः, एवमेवेत्यर्थः. औपनिषदः पदस-

गूढार्थसंग्रहः

विषयविवृतम् । प्राप्तिरूपफलंतु उपासनसापेक्षं स्यादिति तत्र विधिवाक्यानामुपयोगेऽपि सिद्धपरवाक्यानां स्वरूपं च ज्ञानेनैव संपाद्यते इति सिद्धपरवाक्यविचारस्यारम्भणीयत्वं सिद्ध्यति ॥ एतत्सर्वमभिप्रेत्याह—तुशब्दः इत्यादिना समन्वयात् इत्यन्तेन । अत्र 'आनन्दाद्ध्येव' इति वाक्यस्य सत्येऽपि तस्योपक्रमोपसंहारादिवत् आनन्दत्वप्रतिपादकत्वेऽपि स्वविशेषनिर्णयो नसम्भवतीत्यभिप्रेत्य 'यतोवा' इत्यत्र यच्छब्दनिर्देशेन प्रापकप्रमाणान्तरापेक्षासत्त्वेन सामान्यविशेषभावेन कारणबोधकवाक्योपादानपूर्वकं कारणत्वातिनिर्णये सत्यानन्दत्वनिर्णय एव राजकुमारन्यायेन पुत्रस्य विनुशनेन परिसिद्धवत् जीवस्य कारणज्ञानेन परिसिद्धिस्सम्भवतीत्यभिप्रेतमर्थं साधयितुमुपक्रमते—एवमिवेत्यादिना ॥

## श्रीभाष्यम्

'यतो वा इमानि भूतानिजायन्ते' (तै.भृगु.१.अनु) 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं, तदैक्षत बहुस्यां प्रजायेयेति, तत्तेजोऽसृजत' (छां ६.२.१) 'ब्रह्म वा इदमेकमेवाग्र आसीत्' (बृ.३.४.११) 'आत्मावा इदमेकएवाग्र आसीत्' 'ब्रह्मवा इदमेकएवाग्र आसीत्' (ऐतरेय.१.१.१) 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' (तै आन.१.अनु) 'एकोहवै

## श्रुतप्रकाशिका

मुदायः परमपुरुषार्थभूते ब्रह्मणि प्रतिपादकत्वेन समन्वितएवहीत्यर्थः। पदसमुदायः वाक्यमित्यर्थः। आपैनिपदवाक्यबहुत्वेऽपि तेषां वाक्यैकवाक्यभावेनैकार्थपरतयैकराशित्वव्यञ्जनायैकवचनम्। समन्वयइति वाक्यकर्तृकत्वेनोक्तिः फलितार्थाभिप्राया नतु सूत्रयोजनाभिप्राया ब्रह्मणि समन्वितानामित्युत्तरत्राप्येवमेव। प्रतिपत्तिक्रमानुरोधेन प्रथमं लक्षणवाक्यमुपादत्ते यतोवाइति। अथ प्रापकं कारणवाक्यमाह—सदेवेत्यादि। सच्छब्दस्य बृहदबृहत्साधारणत्वाद्विशेषकवाक्यमुपादत्ते ब्रह्मवाइति। यत्कारणं तद्ब्रह्मेति लक्षणवाक्येनोक्तेः सतः कारणत्वे च कथिते तस्य सतो ब्रह्मत्वं सिद्ध्यतीति न बृहत्वनिश्चयो 'ब्रह्मवाइति' वाक्याधीन इतिचेत्, न; लक्षणवाक्यस्य कारणानुवादित्वेन प्रापकवाक्योपजीवित्वादुपजीव्येषु प्रापकवाक्येष्वेव * विशेषनिर्धारणज्ञापनार्थंहि 'ब्रह्मवा' इति वाक्यमुपात्तम्॥

सद्ब्रह्मशब्दयोरीक्षणान्वयलिङ्गादचिद्व्यावृत्तवस्तुपरत्वेऽपि तयोश्शब्दयोरसाधारणतया शब्दसामर्थ्यादचिद्व्यावृत्तिनिश्चयस्तत्र नास्तीति शब्दशक्त्यैव विशेषज्ञापनार्थं आत्मावा इति वाक्योपादानम्। * ब्रह्मशब्दस्य साधारणत्वनाम बहुष्वर्थेषु प्रयुज्यमानत्वं नतु प्रवृत्तिनिमित्तसाधारण्यं प्रवृत्तिनिमित्तभूतस्य निरतिशयबृहत्त्वस्य भगवद्व्यतिरिक्तगामित्वसंदेहसहत्वंवा * नहिस्वारसिकात्मशब्दैकार्थ्ये प्रतिपन्नेसति निरतिशयबृहत्त्वस्याचिद्गामित्वसंदेहः सद्विद्यायां 'स आत्मा' इत्यात्मशब्दउपसंहारस्थ इत्युपक्रमस्थेनैवात्मशब्देन विशेषनिश्चयार्थं आत्मावा इति वाक्यमुपात्तम्। यतोवा इमानि इत्यादिप्रकरण एव 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यानन्दशब्देन कारणे निर्दिष्टेऽपि 'यदेष आकाश आनन्दो नस्यात्' इत्याकाशशब्दसामानाधिकरण्यादानन्दशब्देनाचिद्व्यावृत्तिनिश्चयः प्रतिबद्ध इत्यभिप्रायेणाचिद्व्यावृत्तेस्सुखेन प्रतिपत्त्यर्थं आत्मावा इति वाक्योपादानम्। सर्वशाखाप्रत्ययन्यायेन विनाऽपि प्रकरणादेव ब्रह्मशब्द आत्मपरइति ज्ञापनार्थं एतदधिकरणापेक्षितानन्दरूपताप्रतिपादकप्रकरणस्थतया तज्ज्ञापनार्थंचोपादत्ते। तस्माद्वा एतस्मादात्मनइति। 'सत्यं ज्ञानमनन्तं ब्रह्म' इतिहि तत्र प्रकृतम्। 'अन्योऽन्तर आत्माऽऽनन्दमयः, आनन्दं ब्रह्मणो विद्वान्' इति च तत्र वक्ष्यते॥

अथ 'छागो वा मन्त्रवर्णात्' इति न्यायात् सामान्यशब्दानां देवताविशेषे पर्यवसानं दर्शयति। एकोहवा इति। 'सेयं देवतैक्षत' 'योब्रह्माणं विदधाति पूर्वं योवै वेदांश्च प्रहिणोति तस्मै। तंह देवम्' 'सईशोऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय' 'ईशानो भूतभव्यस्य' 'तमीश्वराणां परमं महेश्वरम्' इत्यादिषु श्रुतानां देवतादिशब्दानां पूर्वपूर्वापेक्षया विशेषशब्दानामपि * साक्षात्कारणवाक्यस्थत्वाभावात्। तेषु च रूढिमतामपि * देवतादिशब्दानां व्यक्तिविशेषे रूढत्वाभावादीशादिशब्दानां च जगत ईशो नान्यो हेतुर्विद्यत ईशनायेति समभिव्याहृतपष्ठ्यन्तपदनिर्देशादिभिरवयवार्थविवक्षायाः स्फुटत्वेन * निमग्नरूढितया साधारणत्वाच्च चरमविशेषशब्दप्रदर्शनेन तेषामपि तात्पर्यवसानमर्थसिद्धं स्यादित्यभिप्रायेण 'सेयं देवता' इत्यादिवाक्यान्यनादृत्य 'एकोहवै नारायणः' इत्यादिवाक्यमुदाहृतम्॥

### श्रुतप्रकाशिका

हिरण्यगर्भादयश्शब्दा आकाशप्राणादिशब्दवदयोग्यार्थाः, शिवादिशब्दाश्च बह्वर्थेषु प्रयोगात् साधारणाइति सदादिशब्दवन्नविशेषोपस्थापनक्षमा इत्यभिप्रायः । * 'वचनानित्वपूर्वत्वात्' 'विधिस्तु धारणेऽपूर्वत्वात्' इति न्यायेन 'यदाग्नेयोऽष्टाकपाल:' 'उपरिहि देवेभ्यो धारयति' इति वाक्यवदिदंमहोपनिषद्वाक्यमप्यप्राप्तार्थोपस्थापकत्वादाकाशप्राणादिवाक्यवदयोग्यार्थोपस्थापकत्वाभावाचानन्यापेक्षं स्वार्थं प्रतिपादयति 'नसन्नचासच्छिवएव केवल:' इति वाक्यविरोधादिदं वाक्यमयोग्यार्थमितिचेन्न 'सदेव सोम्येदमग्र' इति वाक्याविरोधेन 'नसन्नचासत्' इत्यादिवाक्यस्यायोगार्थत्वप्रसङ्गात् ॥

साधारणस्य सच्छब्दस्य शिवपर्यवसानाविरोधात् नात्रायोग्यार्थत्वमितिचेत् तर्हि शिवशब्दस्य च बह्वर्थेषु प्रयोगात् साधारणस्य नारायणपर्यवसानाविरोधात् नात्रायोग्यार्थत्व, ब्रह्मशिवादीनाहि कार्यत्वमिन्द्रादीनामिव बह्वीभिश्श्रुतिभिःप्रतिपाद्यते । यजुषि 'अजस्य नाभावध्येकमर्पितं यस्मिन्निदं विश्वं भुवनमधिश्रितं, विश्वकर्मोह्यजनिष्ट देव:' 'सप्रजापतिरेक:पुष्करपर्णे समभवत्' 'तस्माद्विराडजायत, विराजो अधिपुरुष:' महोपनिषदि 'तत्र ब्रह्मा चतुर्मुखोऽजायत' सुबालोपनिषदि—'अद्भ्यःपृथिवी तदण्डमभवत् तत्संवत्सरमात्रमुषित्वा द्विधाकरोदधस्ताद्भूमिमुपरिष्टादाकाश मध्ये पुरुषो दिव्यस्सहस्रशीर्षापुरुष' इत्यारभ्य 'सोग्रे भूतानां मृत्युमसृजत् तस्य ब्रह्माऽबिभेत् सोब्रह्माणमेव विवेश' इति, अत्र परमपुरुषात्मनः पुरुषो ब्रह्मा समुत्पन्न इति श्रुतः पुरुषशब्दद्वयश्रवणात् मृत्युभयवचनश्रवणाच्च, श्वेताश्वतरे 'वेदाहमेतं पुरुषं महान्तम्' 'महान्प्रभुर्वै पुरुषस्सत्त्वस्यैष प्रवर्तक:' 'योब्रह्माणं विदधाति पूर्वम्' इति च हिरण्यगर्भोत्पत्तिरवगम्यते । तथा महोपनिषदि 'त्र्यक्षश्शूलपाणिःपुरुषोऽजायत' सुबालोपनिषदि 'ललाटात्क्रोधजो रुद्रोऽजायत' बृहदारण्यके 'ब्रह्मवा इदमेकमेवाग्र आसीत् * तदेकं सन्नव्यभवत् तच्छ्रेयो रूपमत्यसृजत क्षत्रं यान्येतानि देवक्षत्राणि * इन्द्रो वरुणस्सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः' इति । तथा शतपथे—'अभूद्वा इदंप्रतिष्ठा' इत्यारभ्य 'भूतानां च प्रजापतिः संवत्सरायादीक्षिषत भूतानांपतिः गृहपतिरासीदुषाः पत्नी' इत्यादिकमुक्त्वा 'भूतानां पतिस्संवत्सरउषसि रेतोऽसिञ्चत् संवत्सरे कुमारोऽजायत सोऽरोदीत् तं प्रजापतिरब्रवीत् कुमार किंरोदिषि यच्छ्रमात्तपसोधि जातोऽसीति सोऽब्रवीत् अनपहतपाप्मावा अहमस्मि अविहितनामा नाम मे धेहि पाप्मनोपहत्या इति तमब्रवीत् रुद्रोऽसीति तदस्य तन्नामाकरोत् अग्निस्तद्रूपमभवत्' इत्यारभ्य शर्वपशुपतिप्रभृतिनामकरण पृथिवीसलिलादिमूर्तिप्रदानञ्चोक्तम्, रुद्रवाक्यादेवानपहतपाप्मत्वञ्च तस्य श्रुतम् । तत्रैव शतरुद्रीयब्राह्मणे 'प्रजापतेर्विस्रस्ता देवता उदक्रामन् तमेकएव देवो नजहान्महामन्युरेवसोऽस्मिन्नन्तर्हितोऽतिष्ठत् सोऽरोदीत् तस्य यान्यश्रूणि प्रास्कन्दन् तान्यास्मिन्मन्यौ प्रातिष्ठन् स एषशतशीर्षा रुद्रस्समभवत्' इति ॥

अत्र प्रजापतेः क्रुद्धस्य क्रोधजाश्रुसम्भवत्व मन्युरूपस्य रुद्रस्याभिहितम् । क्रोधस्यचाश्रुहेतुत्व प्रसिद्धम्—

तस्य क्रुद्धस्य नेत्राभ्यां प्रापतन्नास्रबिन्दवः । दीप्ताभ्यामिव दीपाभ्यां सार्चिषस्स्नेहबिन्दवः ॥

इति । तथा कौशीतकिब्राह्मणे—'प्रजापतिर्वै प्रजाकामस्तपोऽतप्यत' इत्यारभ्य अग्निवाय्वादित्यचन्द्राणामुत्पत्तिं तेषां रेतःस्कन्दनंचोक्त्वा 'सप्रजापतिर्हिरण्मयं चमसमकरोदिषुमात्रमूर्ध्वमेव तिर्यञ्चं तस्मिन् रेतस्समसिञ्चत् ततउदतिष्ठत् सहस्राक्षस्सहस्रपात् सत्सहस्रेण प्रतिहिताभिस्सप्रजापतिं पितरमभ्यायच्छत्तमब्रवीत् कथमभ्यायच्छसीति नाम मे कुर्वित्यब्रवीत् नवा इदमविहितेन नाम्ना अन्नमत्स्यामीति शर्वोवै त्वमित्यब्रवीत् भवएवेति यद्भवः' इत्या

## श्रुतप्रकाशिका

रस्य भवशर्वादिनामकरणं सलिलादिमूर्तिप्रदानं चोक्त्वा 'स एषोऽष्टनामाष्टधा विहितो महादेवः' इति नामाष्टकमूर्त्यष्टकादेव प्रजापतिना विहितमिति स्पष्टतरमुक्तम्। तलवकारिणां कर्मारम्भे—'इदं कर्म करिष्यामि तन्मे समृध्यतां तन्म उपपद्यतां विरूपाक्षाय दन्ताञ्जये ब्रह्मणः पुत्राय ज्येष्ठाय श्रेष्ठायामोघाय कर्माधिपतये नमः' इति, तथा छन्दोगानां कर्मारम्भे 'तस्मै विरूपाक्षाय दन्ताञ्जये वृद्धाय विश्ववेदाय सहस्राक्षाय ब्रह्मणः पुत्राय नमः' इति च मन्त्रद्वयेन रुद्रस्य ब्रह्मपुत्रत्वमभिहितम्। घृतसूक्ते च 'यो ब्रह्मा ब्रह्मण उज्जहार प्राणैश्शर कृत्तिवासाः पिनाकी' इति ब्रह्मण उद्धृतत्वं रुद्रस्योक्तम्, उज्जहार उद्बभूवेत्यर्थः। अतो हिरण्यगर्भादीनां कार्यत्वावगमेन तद्वाचिशब्दानामयोग्यार्थत्वान्नारायण एव सदादिशब्दाः पर्यवस्यन्ति ॥

ननु 'हिरण्यगर्भस्समवर्तताग्रे' 'न सन्न चासच्छिव एव केवलः' 'एको ह वै नारायण आसीत्' 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते' इति त्रयाणामपि देवानां कारणत्वकार्यत्वयोरविशेषेण श्रवणादयोग्यत्वशङ्कायास्त्रिष्वपि तुल्यत्वाज्जन्मन ऐच्छिकत्वेनायोग्यपरिहारस्य त्रिष्वपि सुवचत्वात्। कारणैकत्वावधारणस्यानुरोद्धव्यत्वाद्रूढेरपरित्यागस्य स्वतःप्राप्तत्वाच्च, त्रयाणामप्यैक्याश्रयणे परमकारणत्वमभ्युपगन्तव्यम्। नैवम् त्रयाणामविशेषेण कार्यत्वश्रवणाभावादेव त्रिष्वप्ययोग्यत्वशङ्कायास्तुल्यत्वाभावात् तस्यां हि प्रकरणस्योपक्रमे 'कश्च ध्येयः' इति ध्येयविधिपरत्वमवगतमिति कार्यत्वमनूद्यते अनुवादश्च प्रापकानुरोधेन स्यात्। लक्ष्मीपतिविषय उत्तरनारायणानुवाके भगवदुत्पत्तिरवताररूपा श्रूयत इत्यस्मिन्वाक्ये भगवदवतारानुवादः ब्रह्मशिवयोस्त्ववतारश्रुत्यभावादिन्द्रवरुणादितुल्योत्पत्तिरनूद्यत इति नाविशेषेण कार्यत्वश्रवणम् ॥

किंच उत्पत्तिश्चेत्कर्माधीनदेहसङ्गतिरित्युत्सर्गसिद्धम्। तच्च ब्रह्मशिवयोरनपोदितं नारायणे त्ववतारश्रुत्याऽपोदितम्—'प्रजापतिर्देवानसृजत ते पाप्मना सन्दिता अजायन्त' इति प्रजापतिसृष्टदेवानां सामान्येन पाप्मसम्बन्धश्रुतः विशेषतो रुद्रस्यानपहतपाप्मत्वं शतपथे स्ववाक्यादेव दर्शितम्। 'एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः' 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम एष हि सर्वेभ्यः पाप्मभ्य उदितः' 'अपहतपाप्मा विजरो विमृत्युः' 'स उत्तमः पुरुषः' इति पुण्डरीकाक्षस्याकर्मकृतविग्रहवत्त्वं चोक्तम्। एवं वैषम्येन स्फुटत्वेनोत्पत्तिसाम्यशङ्काया दूरविध्वस्ततया योग्यार्थनारायणादिशब्दानामिवायोग्यार्थब्रह्मशिवादिशब्दानां रूढिपरित्यागाभावोऽनुपपन्नः ॥

यदि रुद्रस्य परमकारणत्वं तदुत्पत्तेरवताररूपत्वं च आस्तिकतमैर्भवद्भिरुच्यते तर्हि भवतामिन्द्रे कः प्रद्वेषः 'इन्द्रो मायाभिः पुरुरूप ईयते' 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते' इति कारणत्वकार्यत्वे हि ब्रह्मशिवयोरिवेन्द्रस्यापि श्रूयेते अत इन्द्रस्य परमकारणत्वं तदुत्पत्तेः परमकारणभूतेन्द्रावताररूपत्वं चाश्रित्येन्द्रशब्दस्य योग्यार्थत्वं किमिति नाभ्युपगम्यते। 'प्रजापतिरिन्द्रमसृजत' इति तस्य सृज्यत्वश्रवणात्, त्वाष्ट्रवधरूपब्रह्महत्याभिभूतत्वश्रवणात्त प्रायश्चित्तादिश्रवणाच्चेति चेत् इन्द्रस्य जन्मवृत्तापकर्षयोगः कृष्णस्य वसुदेवगृहजन्म कालयवननिमित्तपलायनवल्लीला किं न स्यात्। इन्द्रस्य परमकारणत्वस्यैकत्वे स युत्तरनारायणप्रतिपाद्य एव तस्मिन्सति जन्मवृत्तापकर्षयोगस्य लीलात्वं तस्मिन्सतीन्द्रशब्दस्य परमकारणत्वस्यैक्यमिति चक्रकाश्रयप्रसङ्गादेकस्मिन्नेव वाक्ये सोमवरुणयमादिवत् सृज्यत्वप्रतीतेश्च नैवमितिचेत्। तर्हि रुद्रस्य परमकारणत्वैक्ये सति उत्तरनारायणप्रतिपाद्यान्तर्भावः तेन जन्मकर्मापकर्षस्य लीलात्वं तेन शिवादिशब्दानां योग्यार्थत्वं तेन परमकारणत्वस्यैक्यमिति चक्रकप्रसङ्गः। सोमवरुणादिवत्तस्मिन्नेव वाक्ये सृज्यत्व सहार्यत्वश्रवणाच्च, शिवादिशब्दानामयोग्यार्थत्वं दुष्परिहरम्। भगवज्जन्मनोऽवताररूपत्वेतु न चक्रकप्रसङ्गः ॥

### श्रीभाष्यम्

*नारायण आसीत्* ' (महोपनि.१.अ.१.वा) ' *सत्यंज्ञानमनन्तंब्रह्म* ' (तै.आन.१.अनु) ' *आनन्दो ब्रह्म* ' (भृगु.६) इत्येवमादिः ।

### श्रुतप्रकाशिका

' **तस्माद्विराडजायत** ' इति कारणतयोक्तस्य परमपुरुषस्य महापुरुषशब्देनोत्तरनारायणे प्रत्यभिज्ञातस्य लक्ष्मीपतेः ' **अजायमानः** ' इत्यादिवाक्येनावतारस्य प्रतिपादितत्वात् * कार्यकारणविषयशिवादिशब्दानां भिन्नार्थत्वान्नायोग्यार्थत्वमितिचेत् ; *किं कार्यविषयशिवादिशब्दाना प्रसिद्धरुद्रपरत्व उत कारणविषयाणा प्रथमे प्रसिद्धरुद्रस्याकाशादिवत्सऽ*ज्यत्वात्तद्व्यतिरिक्तविषयशिवादिशब्दाना योग्यार्थनारायणपदोपस्थापितविशेषपरत्वमवर्जनीयम् । कारणविषयशिवादिशब्दाः प्रसिद्धरुद्रपराः कार्यविषयास्तु तदतिरिक्तविषयाइतिचेत् कारणेन्द्रशब्दःप्रसिद्धेन्द्रपरः कार्यविषयेन्द्रशब्दस्तदतिरिक्तपरइति किं नस्यात् ? वृत्रवधादिकर्तरीन्द्रशब्दव्युत्पत्तेरितिचेत् त्र्यक्षत्वशूलपाण्यादिपर्यायत्वेन शिवादिशब्दव्युत्पत्तेः ' *त्र्यक्षः* शूलपाणिःपुरुषोऽजायत '—

उमापतिःपशुपतिः श्रीकण्ठो ब्रह्मणस्सुतः । उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः ॥

इति शूलपाण्यादिशब्दाना कार्यविषयतया प्रयोगाच्च कारणविषयशिवादिशब्दाना प्रसिद्धरुद्रपरत्वमयुक्तम् । कारणविषयाणां नारायणादिशब्दाना प्रसिद्धविष्णुपरत्वतु युक्तम् । अवतीर्णस्य कारणस्य च धर्म्यैक्ये प्रमाणस्य दर्शितत्वादर्थभेदाभावात् । अर्थभेदेसति कार्यकारणविषयनारायणादिपदेषु कस्य प्रसिद्धार्थता कस्य तदतिरिक्तविषयतेति विचारसंभवः । कार्यकारणभूतरुद्रधर्म्यैक्येत्विन्द्रधर्म्यैक्य इव चक्रकापत्तिरवर्जनीयेत्युक्तम् । अतः कार्यकारणविषयशिवादिशब्दानामर्थभेदाङ्गीकारेण कारणविषयशिवादिशब्दाः प्रसिद्धेतरार्थविषया इति नारायणमेवाभिदधति नारायणादिशब्दाना प्रसिद्धार्थस्य योग्यतयाऽर्थभेदाभावाद्धर्म्यैक्यस्य प्रमाणप्रतिपन्नत्वाभावाच्च । अतो महोपनिषत्प्रतिपादिते नारायणएव रुद्रब्रह्मादिशब्दाः पर्यवस्यन्तीतिभावः ॥

अथ कारणतया निर्दिष्टस्य ब्रह्मणश्शङ्कितदोषव्यावर्तकं शोधकवाक्यमाह—**सत्यमिति** । उक्तगुणविभूत्यादिविशिष्टस्य ब्रह्मणः पुरुषार्थत्वज्ञापनायाह—**आनन्दो ब्रह्मेति** । * आनन्दत्वंह्यनुकूलत्व अनुकूलत्व च स्वतइष्टत्वम् । तदपीष्टसाधनत्व*निवर्त्यप्रातिकूल्याभ्या *विनापीष्टत्वम् । तच्च विषयगतं तद्विषयज्ञानस्याप्यनुकूलत्वादानन्दत्वम् । * भगवतो* मुक्ताना निरतिशयभोग्यत्वेनानुकूलतया स्वरूपतो धर्मतश्चानन्दत्वम्, स्वविषयज्ञानस्य स्वरूपस्य च स्वात्मानप्रत्यनुकूलत्वाच्चानन्दत्वम् इत्येवमादिरौपनिषदः पदसमुदाय इति पूर्वेणान्वयः ॥

एवमन्वितेषु वाक्येषु प्रस्तुतपुरुषार्थत्वोपयोगित्वेन *कोऽर्थः प्रतिपन्नः सन्न किमापातप्रतिपन्नः ?* उत तात्पर्यभूमिः न प्रथमः तस्य तात्त्विकत्वानिश्चयायोगात् । नद्वितीयः प्रवृत्तिनिवृत्त्यभावेन तदयोगादिति शङ्कायां * प्रवृत्तिनिवृत्त्यन्वय प्रामाण्यव्यापकः अतस्तद्व्याप्य प्रामाण्य तद्विरहे नसिद्ध्यतीति किमुच्यते ? किं वा प्रवृत्तिनिवृत्त्यन्वयः प्रयोजनव्यापकः *प्रयोजन च प्रामाण्यव्यापकमिति प्रवृत्तिनिवृत्त्यन्वयविरहे तद्व्याप्यप्रयोजनाभावात्तद्व्याप्यं प्रामाण्य नासिद्ध्यती युच्यत इति*

### गूढार्थसंग्रहः

एवमादिरिति । ' आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते ' इति तदनन्तरश्रुतिः आदिपदार्थः ॥

## श्रीभाष्यम्

### नच व्युत्पत्तिसिद्धपरिनिष्पन्नवस्तुप्रतिपादनसमर्थानां

### गूढार्थसङ्ग्रहः

प्रथमसूत्रे 'तं त्वौपनिषदं पुरुषम्' 'विज्ञानमानन्दं ब्रह्म' 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' 'एतद्वै सत्यकाम परं चापरं च ब्रह्म' 'परं पुरुषमभिध्यायीत' 'परात्परं पुरिशयं पुरुषमीक्षते' इत्यादौ पुरुषपदार्थवासुदेवस्यैव ब्रह्मत्वप्रतिपादनेन वासुदेव एव जिज्ञास्यत्वेन प्रतिपिपादयिषित इति पूर्वमेव निरूपितम्। ब्रह्मबिन्दूपनिषदि 'स्वरेण सन्धयेद्योगम्' इत्युपक्रमे योगसाधनत्वेनोक्तप्रणवघटकनादार्थः उपसंहारे 'तदस्य ह वासुदेवः' इत्यत्र वासुदेव इति स्फुटं प्रतीयते। 'नारायणाय विद्महे वासुदेवाय धीमहि तन्नो विष्णुः प्रचोदयात्' इत्यत्र नारायणादिशब्दानामेकार्थत्वं व्यक्तम्। 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इत्येतद्भाष्ये व्यापनशीलस्य ब्रह्मणः परमात्मनः वासुदेवाख्यस्य 'विष्णोः' इति शङ्कराचार्यैः विवरणं कृतम्। अन्तर्यामिब्राह्मणभाष्ये 'ईश्वरो नारायणाख्यः' इत्यपि तैरेवोक्तम्। एतेन पुरुषशब्दार्थः सर्वशरीरी सर्वान्तर्यामी नारायण इति शङ्कराचार्याणामपि सम्मतमिति प्रतीयते॥

तच्छिष्याः सुरेश्वराचार्याः—'कृष्णद्वैपायनो व्यासः वेदात्मा ध्वान्तहानिकृत्। प्राहेममेव बहुशः प्राणिनां हितकाम्यया॥ नारायणः परोऽव्यक्तादण्डमव्यक्तसम्भवम्। अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी॥ तस्मै नमोऽस्तु देवाय निर्गुणाय गुणात्मने। नारायणाय विश्वाय देवानां परमात्मने॥ एतमेव समुद्दिश्य मन्त्रो नारायणस्तथा। वेदविद्भिर्महाप्राज्ञैः पुरुषैर्विनियुज्यते॥' इति वार्तिके प्राहुः। अत्रानन्दगिरिविवरणम्—'न केवलं पुराणागमाभ्यामेव सोऽधिगम्यते, किंतु श्रुत्यक्षरैरेवेत्याह—एतमेवेति। 'सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम्। विश्वं नारायणं देवमक्षरं परमं विभुम्' इत्यादिर्मन्त्रः वेदार्थविद्भिरन्तर्यामिणमुद्दिश्य विनियुक्तः अतस्सवैदिक इत्यर्थः' इति 'आद्यं पुरुषमीशानम्' 'मङ्गल्यं मङ्गलं विष्णुं नास्ति नारायणसमं न भूतं न भविष्यति' 'भगवान् वासुदेवश्च कीर्त्यतेऽत्र सनातनः' इत्यादिपरोक्तक्रमवचनेषु प्रागुक्तार्थः स्फुटः। वेदार्थसङ्ग्रहे 'समुद्रशायित्वलक्ष्मीपतित्वादिलिङ्गैः' व्यक्तिविशेषनिर्णय उक्तः। एवं 'वेदवित्प्रवरप्रोक्तवाक्यन्यायोपबृंहिताः। वेदास्साङ्गा हरिं प्राहुर्जगज्जन्मादिकारणम्॥' इत्यपि साधितम्। स्तोत्रभाष्यादावाचार्यपादैः अयमर्थः प्रतिष्ठापितः। विस्तरस्तु वेदान्तकौस्तुभादौ अस्मदीयहयशिरोरत्नभूषणतद्दीधित्योश्चावसेयः॥ 'एवंविधसुखरूपज्ञानस्य विशेषकत्वम् ब्रह्मव्यतिरिक्तस्य वस्तुनस्सातिशयमस्थिरञ्च, ब्रह्मणस्त्वनवधिकातिशयं स्थिरञ्च इति; 'आनन्दो ब्रह्म' इत्युच्यते विषयायत्तत्वाज्ज्ञानस्य सुखरूपतया ब्रह्मैव सुखम्। तदिदमाह—'रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' इति; 'ब्रह्मैव सुखम्' इति ब्रह्म लब्ध्वा सुखी भवतीत्यर्थः। परमपुरुषः स्वेनैव स्वयमनवधिकातिशयसुखस्सन् परस्यापि सुखं भवति, सुखरूपत्वाविशेषात्; ब्रह्म यस्य ज्ञानविषयो भवति स सुखी भवतीत्यर्थः। तदेव परस्य ब्रह्मणः अनवधिकातिशयासङ्ख्येयकल्याणगुणाकरस्य निरवद्यस्य अनन्तमहाविभूतेः अनवधिकातिशयसौशील्यवात्सल्यसौन्दर्यजलधेः सर्वशेषित्वात् आत्मनः शेषत्वात्प्रतिसम्बन्धितया अनुसन्धीयमानमनवधिकातिशयप्रीतिविषयं सत् परं ब्रह्मैवैनमात्मानं प्रापयति इति' इति अतः कर्मकृतमेव परमपुरुषव्यतिरिक्तविषयाणां सुखत्वम्, अतएव तेषामल्पत्वमस्थिरत्वं च। परमपुरुषस्यैव स्वत एव सुखत्वम् अतः तदेव स्थिरमनवधिकातिशयं च, 'कं ब्रह्म खं ब्रह्म आनन्दो ब्रह्म' 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतेः इति वेदार्थसङ्ग्रहोक्तार्थः अत्रोपात्त 'आनन्दो ब्रह्म' इति श्रुतावनुसन्धेयः। अयमेवार्थः 'समन्वयात्' इत्यत्र विवक्षित इत्यभिप्रेत्य तमर्थं निरूपयति—नच व्युत्पत्तिसिद्ध इत्यादिना उत्तरग्रन्थेन॥

श्रीभाष्यम्

**पदसमुदायानामखिलजगदुत्पत्तिस्थितिविनाशहेतुभूताशेषदोषप्रत्यनीकापरिमितोदारगुणसागरानवधिकातिशयानन्दस्वरूपे ब्रह्मणि समन्वितानां प्रवृत्तिनिवृत्तिरूपप्रयोजनविरहादन्यपरत्वं स्वविषयावबोधपर्यवसायित्वात्सर्वप्रमाणानाम्। नच प्रयोजनानुगुणा प्रमाणप्रवृत्तिः प्रयोजनंहि प्रमाणानुगुणम्। नच प्रवृत्तिनिवृत्त्यन्वयविरहिणः प्रयोजनशून्यत्वं पुरुषार्थान्वयप्रतीतेः। तथा स्वरूपपरेष्वपि पुत्रस्ते जातो नायं सर्पइत्यादिषु हर्षभयनिवृत्तिरूपप्रयोजनवत्त्वं दृष्टम्।**

श्रुतप्रकाशिका

विकल्पमभिप्रेत्य प्रवृत्तिनिवृत्त्यन्वयस्य प्रामाण्यव्यापकत्वं नास्तीत्याह—**नचेति**। व्युत्पत्तिसिद्धेति प्रथमसूत्रार्थानुवादः। सिद्धवस्तुनोऽपुरुषार्थत्वान्नशास्त्रंप्रतिपादयितुं शक्नोति प्रतिपन्नेऽपि न तत्र तात्पर्यं सिद्धे व्युत्पत्त्यभावादिति नवाच्यम्; सिद्धे वस्तुनि व्युत्पत्त्युपपादनादितिभावः। प्रमाणान्तरगोचरत्वप्रयुक्ताऽन्यपरत्वशङ्काव्युदासायोदाहृतकारणवाक्यप्रतिपन्नमर्थमाह—**अखिलेति**। शोधकवाक्यप्रतिपन्न कारणवाक्यैश्च सिद्धमर्थमाह–**अशेषेति**। साङ्ख्याद्यभिमतप्रकृतिपुरुषपरत्वं दुर्वचमितिभावः॥

पुरुषार्थपरत्वाभावादन्यपरत्वव्युदासायाह—**आनन्दस्वरूपइति**। अन्यपरत्व तात्पर्याभावः ब्रह्मणि प्रामाण्याभाव इत्यर्थः प्रवृत्तिनिवृत्त्यन्वयविरहे कथं प्रामाण्यमित्यत्राह–**स्वविषयेति**। प्रमाणानिहि स्वविषयावबोधे पर्यवस्यन्ति नतु प्रवृत्तिनिवृत्त्योरित्यर्थः। अथ प्रवृत्तिनिवृत्त्यन्वयस्य प्रयोजनव्यापकत्वमभ्युपगम्य प्रयोजनस्य प्रामाण्यव्यापकत्वाभावमाह—**नच प्रयोजनेति**। तदुपपादयति **प्रयोजनंहीति**। हिशब्दो हेतौ। यद्वा प्रयोजनस्य प्रामाण्यव्यापकत्वाभाव प्रसिद्धिर्हि शब्दाभिप्रेता, यथा तन्त्रटीकायां '**नहि लोष्टं पश्यतस्तद्दर्शनं निष्प्रयोजनम्**' इति सुवर्णदर्शनता कल्प्येतेति तदा हेतुत्वमर्थसिद्धम्। प्रयोजनव्यापकत्व प्रवृत्तिनिवृत्त्यन्वयस्यास्तु तेन तन्निवृत्तौ प्रयोजनमेव निवर्तते नतुप्रामाण्यं प्रयोजनस्य प्रामाण्यव्यापकत्वाभावादित्यर्थः, नचेत्यत्र * चशब्दो व्यापकद्वयनिषेधसमुच्चये। यथा प्रवृत्तिनिवृत्त्यन्वयस्य प्रामाण्यव्यापकत्वमयुक्तम् तथा प्रयोजनस्य च प्रामाण्यव्यापकत्वमयुक्तमित्यर्थः॥

प्रत्यक्षादिषु प्रयोजनस्य प्रामाण्यव्यापकत्वाभावेऽपि शास्त्रे प्रयोजनस्य प्रामाण्यव्यापकत्वमस्तीति शङ्कायां प्रयोजनव्याप्यत्वं शास्त्रप्रामाण्यस्यास्तु तथाऽपि प्रयोजनस्य प्रवृत्तिनिवृत्त्यन्वयव्याप्यत्वं नास्तीत्याह—**नच प्रवृत्तीति**। वाक्यस्येत्यध्याहारः। कुतइत्यत्राह–**पुरुषार्थान्वयप्रतीतेरिति**। इदं पक्षविषय प्रवृत्तिनिवृत्तिरूपत्वाभावेऽपि पुरुषार्थभूतस्यैव ब्रह्मणोऽभिधेयतयाऽन्वयप्रतीतेरित्यर्थः। नचेत्यत्र चशब्दो व्याप्यत्वनिषेधद्वयसमुच्चये। यथा प्रामाण्यस्य प्रवृत्तिनिवृत्त्यन्वयव्याप्यत्वं नास्ति तथा प्रयोजनस्यापि प्रवृत्तिनिवृत्त्यन्वयव्याप्यत्व नास्तीत्यर्थः॥ प्रामाण्यस्य प्रवृत्तिनिवृत्त्यन्वयव्याप्यत्वाभावस्स्वविषयावबोधेत्यादिना सिद्धः। सपक्षत्वाभिमते लौकिकेऽपि सिद्धपरवाक्ये पुरुषार्थान्वयं दर्शयति—**तथेति**। यथा प्रवृत्तिपरत्वं निवृत्तिपरत्व वा न प्रयोजनपर्यवसायित्व किंतु पुरुषार्थपरत्वमेव तथा प्रवृत्तिनिवृत्तिपरत्वं सिद्धवस्तुपरत्वं वा न प्रयोजनपर्यवसायित्वम् अपितु साध्येन वा सिद्धेन वा पुरुषार्थेनान्वितत्वमेव वाक्यस्य प्रयोजनपर्यवसायित्वमित्युक्तं भवति पुरुषार्थान्वयप्रतीतेरित्युक्तत्वात्॥

श्रीभाष्यम्

अत्राह-नवेदान्तवाक्यानि ब्रह्म प्रतिपादयन्ति प्रवृत्तिनिवृत्त्यन्वयविरहिणश्शास्त्रस्यानर्थस्यात्। यद्यपि प्रत्यक्षादीनि वस्तुयाथात्म्यावबोधे पर्यवस्यन्ति तथापि शास्त्रं प्रयोजनपर्यवसाय्येव नहि लोकवेदयोः प्रयोजनरहितस्य कस्यचिदपि वाक्यस्य प्रयोग उपलब्धचरः। न किंचित् प्रयोजनमनुद्दिश्य वाक्यप्रयोगः श्रवणंवा सम्भवति। तच्च प्रयोजनं प्रवृत्तिनिवृत्तिसाध्येष्टानिष्टप्राप्तिपरिहारात्मकमुपलब्धं अर्थार्थी राजकुलं गच्छेत्, मन्दाग्निर्नाम्बु पिबेत्, स्वर्गकामो यजेत, न कळञं भक्षयेत्, इत्येवमादिषु। यत्पुनस्सिद्धवस्तुपरेष्वपि पुत्रस्ते जातः नायंसर्पो रज्जुरेषेत्यादिषु हर्षभयनिवृत्तिरूपपुरुषार्थान्वयो दृष्टइत्युक्तम् तत्र किं पुत्रजन्माद्यर्थात्पुरुषार्थावाप्तिः? उत तज्ज्ञानादिति विवेचनीयम् सतोऽप्यज्ञातस्यार्थस्यापुरुषार्थत्वेन तज्ज्ञानादितिचेत् तर्ह्यसत्यप्यर्थे ज्ञानादेव पुरुषार्थस्सिद्ध्यतीत्यर्थपरत्वाभावेन प्रयोनपर्यवसायिनोऽपि शास्त्रस्य नार्थसद्भावे प्रामाण्यम्। तस्मात्सर्वत्र प्रवृत्ति निवृत्तिपरत्वेन ज्ञानपरत्वेन वा प्रयोजनपर्यवसानमिति

श्रुतप्रकाशिका

एव सूत्राक्षरयोजनार्थं संक्षेपेणार्थ उक्तः—अथ तात्पर्यार्थं वक्तु पूर्वपक्ष विस्तरेणावतारयति अत्राहेति। एतावच्चाधिकरणार्थ उक्ते लब्धस्वदूष्यप्रसङ्गः पूर्वपक्ष्याहेत्यर्थः। ब्रह्मणश्शास्त्रप्रतिपाद्यत्वाभाव प्रतिजानीते। नवेदान्तेति। श्रौतच्छब्देन शास्त्रयोनित्वस्य परामृष्टत्वात् पूर्वपक्षिणा तदभावोऽपि प्रतिज्ञात इतिहि ज्ञायते। प्रतिज्ञा(त)मुपपादयति प्रवृत्तिनिवृत्त्यन्वयविरहिणइति। तदन्वयाभावे प्रतिपादनमेव नपूर्यतेतिभावः। तथा च वार्तिकम्—

यावत्खलु प्रमातॄणां प्रवर्तननिवर्तने। शब्दा नकुर्वते तावन्ननिराकाङ्क्षबोधनम्॥

इति। शास्त्रस्येति। शासनाद्धि शास्त्र, शासन च प्रवर्तननिवर्तनात्मक तत्र वार्तिक—

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेनवा। पुसां येनोपदिश्येत तच्छास्त्रंतूपपद्यते॥ इति।

पूर्वोक्त प्रमाणाना स्वविषयावबोधित्वमाशङ्क्य तत्प्रमाणविशेषे व्यवस्थापयन् शास्त्रस्य प्रयोजनपर्यवसानावश्यम्भवमाह—यद्यपीति। तदुपपादयति नहीति। नकेवलमनुपलब्धिरेव अनुपपत्तिरप्यस्तीत्याह— नकिंचिदिति। किंचित्— स्वसम्बन्धि परसम्बन्धि वा अल्प प्रभूत वा, वाक्यप्रयोगादेर्यत्नसाध्यत्वात् यत्नस्य प्रयोजनेन विनाऽनुपपन्नत्वादित्यर्थः; वाक्याना प्रयोजनपर्यवसायित्वादेवाहि पुनरुक्तेः प्रयोजनाभावाद्दूषणञ्च निष्प्रयोजनवाक्यप्रयोगस्तच्छ्रवणवाऽनुपपन्नंस्यात् ततः किं प्रस्तुतस्य प्रयोजनपर्यवसायिना वाक्याना प्रवृत्तिनिवृत्तिपरत्वस्य सिद्धपरत्वेऽपिहि प्रयोजनपर्यवसायित्वमुपपद्यत इत्यत्राह—तच्चेति। प्रवृत्तिनिवृत्तिपरत्वन लोकवेदयोः प्रयोग दर्शयति अर्थार्थीत्यादिना। प्रवृत्तिनिवृत्तिपरत्वाभावेऽपि प्रयोजनपर वाक्य दृष्टमिति शङ्काया सिद्धपरत्वेनोक्त वाक्य दूषयितुमनुवदति यत्पुनरिति। विकल्पयति तत्रेति। प्रथमकोट्यनुपपत्त्या द्वितीयशिरोऽभ्युपगम शङ्कते सतोपीति। दूषयति तर्हीति। तस्मादिति पूर्वपक्षोपसहारः॥

गूढार्थसंग्रहः

पूर्वपक्षितात्पर्यनिरूपणपूर्वक सिद्धपरवाक्याना प्रयोजनाभावे नप्रामाण्यमिति पूर्वपक्ष विशदयति—अत्राहेत्यादिना। तथाऽपि शास्त्रं प्रयोजनपर्यवसाय्येवेति। 'समन्वयात्' इत्यत्र वाक्यार्थस्यैव तात्पर्यविषयत्वस्य विवक्षितत्वेन

## श्रीभाष्यम्

**कस्यापि वाक्यस्य परिनिष्पन्ने वस्तुनि तात्पर्यासम्भवान्न वेदान्ताःपरिनिष्पन्नं ब्रह्म प्रतिपादयन्ति ॥ अत्र कश्चिदाह–वेदान्तवाक्यान्यपि कार्यपरतयैव ब्रह्मणि प्रमाणभावमनुभवन्ति। कथम्? निष्प्रपञ्चमद्वितीयं ज्ञानैकरसम् ब्रह्मानाद्यविद्यया सप्रपञ्चतया प्रतीयमानं निष्प्रपञ्चं कुर्यादिति ब्रह्मणः प्रपञ्चप्रविलयद्वारेण विधिविषयत्वमिति। कोऽसौ द्रष्टृदृश्यरूपप्रपञ्चविलयद्वारेण साध्यज्ञानैकरसब्रह्मविषयो विधिः 'नदृष्टेर्द्रष्टारं पश्येः नमतेर्मन्तारं मन्वीथाः' (बृ.५.४.२) इत्यादिः। द्रष्टृदृश्यरूपभेदशून्यं दृशिमात्रं ब्रह्म कुर्यादित्यर्थः।**

## श्रुतप्रकाशिका

उत्तरमायावादिपक्षौ द्वौ विद्येते। तत्रैको निष्प्रपञ्चीकरणनियोगवादः अन्यो ध्याननियोगवादः। एतन्मतद्वय ध्याननियोगवादिमुखेन शाङ्करवादिमत च दूषितवन्तमधिकरणपूर्वपक्षिणप्रति सिद्धान्तं वक्ष्यन्निदानीं निष्प्रपञ्चीकरणनियोगवाद प्रस्तौति **अत्र कश्चिदाहेति**। तत्प्रतिजानीते **वेदान्तेति**। कार्यपरस्य वाक्यस्य सिद्धवस्तुनि प्रमाणभावः कथमित्यभिप्रयन्नाह—**कथमिति**। उत्तरमाह–**निष्प्रपञ्चमिति**। कुर्यादित्यत्रेतिशब्दः प्रकारपरः निष्प्रपञ्चीकरणविधिना ब्रह्मणःकोऽन्वयइत्यपेक्षायामन्वयमाह–**ब्रह्मणइति**। विषयत्वेनान्वयइत्यर्थः। सिद्धस्वरूपस्य ब्रह्मणो विधिविषयत्वानुपपत्तिशङ्कापरिहारार्थं प्रपञ्चप्रविलयद्वारेणेत्युक्तम्। अत्र सिद्धस्य साधनत्वमाकारभेदादविरुद्धमिति गर्भितम्। इहत्वितिशब्दस्समाप्तौ। कथमित्यस्योत्तरत्वेन इत्थमितिवार्थः ॥

विधिं दर्शयितुमाकाङ्क्षामुत्थापयति। **कोऽसाविति**। कतिपयनाशेऽप्यशक्तस्य विश्वप्रपञ्चनाशनविधिरशक्य इत्यभिप्रायः, विधिः विधिवाक्यम्। आविद्यकस्य प्रपञ्चस्य बुद्धिनिवृत्तिमात्ररूपो विलयश्शक्य इत्यभिप्रायेण वाक्यमुपादत्ते— **नदृष्टेरिति**। दृष्टिव्यतिरिक्तत्वाविशेषात् ज्ञेयनिषेधोऽपि फलितः। आदिशब्दोपात्तश्रुत्यन्तरैः कण्ठोक्तश्च। आत्यन्तिकनिवृत्तेः असिद्धत्वाद्विधेयत्वं च युक्तमितिभावः। शून्यशब्देन आत्यन्तिकनिवृत्तिर्विवक्षिता। मात्रशब्देन द्रष्टृदृश्यकल्पकाविद्यानिवृत्तिः ततएवब्रह्मान्तिकत्वसिद्धिः, सिद्धस्य ब्रह्मणो विधेयत्व कथमितिशङ्काया प्रपञ्चप्रविलयद्वारेणेति पूर्वं विवक्षितमर्थ

## गूढार्थसङ्ग्रहः

'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥' इति अपूर्वत्वाबाधितत्वरूपोपपत्त्योरिव फलस्यापि तात्पर्यनिर्णायकत्वेन फलाभावे तात्पर्यं न सम्भवतीति ब्रह्मण. आनन्दरूपत्वेन तात्पर्यविषयत्व दुरुपपादमित्याशयः। तमेतमर्थमाह—**कस्यापि वाक्यस्य परिनिष्पन्ने वस्तुनि तात्पर्यासम्भवादिति** ॥

परैः ध्याननियोगवाद एकएवात्र उपन्यस्य दूषितः। उभयलिङ्गाधिकरणे 'यदप्याहु. आकारवादिन्योऽपि श्रुतयः प्रपञ्चप्रविलयमुखेन आकारप्रतिपत्त्यर्था एव, न पृथगर्था इति। तदपि न समीचीनमिव लक्ष्यते' इत्यादिना निष्प्रपञ्चीकरणवाद दूषयित्वा 'वस्तुमात्रपर्यवसायीनिहि ब्रह्मवाक्यानि ननियोगोपदेशीनि' इत्येतद्विस्तरेण प्रतिष्ठापित 'तत्तु समन्वयात्' इत्यत्र इत्युक्तम्। अतः नियोगवाददूषण 'तत्तुसमन्वयात्' इत्यत्र विवक्षितमिति परेषामपि सम्मतम्। एवं च ध्याननियोगवादस्येव निष्प्रपञ्चीकरणनियोगवादस्यापि अत्रैवोपन्यस्य दूषण युक्तमित्यभिप्रेत्याह–**अत्र कश्चिदाहे**त्यादिना। परैः 'युक्ताह्यस्य हरयः' इत्याद्युक्तप्रपञ्चाना 'तदेतद्ब्रह्मापूर्वम्' इत्यादौ प्रविलयोक्त्या प्रविलयार्थत्वम्' (बृ) 'मनोमयःप्राणशरीरः' (छां) इत्याद्युक्तानातु 'सक्रतु कुर्वीत इत्याद्युक्तोपासनार्थत्वमेव नतु प्रविलयार्थत्वम् इति पार्थ

## श्रीभाष्यम्

**स्वतस्सिद्धस्यापि ब्रह्मणो निष्प्रपञ्चतारूपेण कार्यत्वमविरुद्धमिति। तदयुक्तम् नियोगवाक्यार्थ वादिना हि नियोगो नियोज्यविशेषणं, विषयः करणम् इतिकर्तव्यता प्रयोक्ता च वक्तव्याः तत्रहि नियोज्यविशेषणमनुपादेयम्। तच्च निमित्तं फलमिति द्विधा, अत्र किं नियोज्यविशेषणं तच्च किं निमित्तं फलंवेति विवेचनीयम्? ब्रह्मस्वरूपयाथात्म्यानुभवश्चेन्नियोज्यविशेषणं तर्हि नतन्निमित्तं जीवनादिवत्तस्यासिद्धत्वात्। निमित्तत्वे च तस्य नित्यत्वेनापवर्गोत्तरकालमपि जीवननिमित्ताग्निहोत्रादिवत् नित्यतद्विषयानुष्ठानप्रसङ्गः। नापिफलम्**

## श्रुतप्रकाशिका

विस्तरेणाह–**स्वतस्सिद्धस्यापीति** ॥

यद्वा पूर्वं भावार्थव्यतिरिक्तस्य विधिविषयत्वानुपपत्तिः परिहृता इहतु स्वतस्सिद्धस्येत्यादिना प्रपञ्चविलयद्वारेण सिद्धरूपस्यापि विधिविषयत्वानुपपत्तिः परिहृतेतिभिदा। * भावार्थादन्यत्व स्वर्गादेरप्यस्ति नतत्र सिद्धत्व साध्यहितत्–अधिकरणपूर्वपक्षी मीमांसकम्मन्यः दूषयति **तदयुक्तमिति**। कथमित्यत्राह–**नियोगेति**। विशिषन् विषयइति व्युत्पत्त्या विषयोयागादिः। * इतिकर्तव्यापूर्वप्रतिपत्तिवेलाया कृत्यवच्छेदकत्वेन सविषय सएव कार्यनिष्पत्तौ करणं वक्तव्याः, नत्वयावत्तु शक्यमितिभावः। प्रथमनियोज्यविशेषण दूषयितुमाह–**तत्रेति**। तत्र तेषु वक्तव्येषु नियोज्यविशेषणमनुपादेयम् उपादेय विधेयम् तद्व्यतिरिक्तमित्यर्थ । विकल्प्य दूषयितु विशेषणद्वैविध्यमाह—**तच्चेति**। तत.किमित्यत्राह–**अत्रेति** अत्र निष्प्रपञ्चीकरणनियोगे नियोज्यविशेषणस्वरूप शङ्कते **ब्रह्मस्वरूपेति**। निमित्तता दूषयति **तर्हीति**। कुतइत्यत्राह–**जीवनादिवदिति**। '**यावज्जीवमग्निहोत्रं जुहोति**' इत्यत्र जीवनस्य सिद्धत्वाद्यथानिमित्तत्व न तथेत्यर्थः। * पुत्रजन्मादिवद्यदासिद्धयत् तदा निमित्त(त्व) भविष्यतीत्यत्राह–**निमित्तत्वेचेति**। अपवर्गोत्तरकालमपि नानुष्ठानप्रसङ्गः यावन्निमित्तमनुष्ठाननियमाभावात् परिकरशून्येषु तन्नियमाभावो दृष्ट। तस्मात्करणकळेबरविरहेण न तदानीमनुष्ठानमितिचेत् हन्त स्वदूषणमेव स्वयमाविष्करोषि। तथाहि सप्रपञ्चतयाऽनुभवस्य यथार्थानुभवरूपत्वाभावादपवर्गोत्तरमात्यव याथार्थ्यानुभव.। तदानीं करणकळेबराभावेऽपि विषयानुष्ठान शक्य नवा अशक्यत्वे विधेयत्वमेव नस्यात्। अतश्शक्यमिति वक्तव्यम्। अतो निमित्तस्य नित्य वान्नैमित्तिकस्य नित्य शक्यत्वाच्च नित्य तदनुष्ठानप्रसङ्ग इतिभाव॰ ॥

फलरूपया विशेषणत्व दूषणमाह—**नापीति**। नियोगानुपपत्तिं वक्तुमाह–**कश्चेति**। शङ्कते **ब्रह्मैवेति**। दूषयति।

## गूढार्थसंग्रहः

गर्ध्यमन्तरं व्याख्याना नत्वकवाक्य वमित्यादिदूषणमुक्तम्। एवंविभागस्य श्रुतिता पर्याविषय वमालोच्य अन्यथा स्वयदूषयति **तदयुक्तमित्यादिना** ॥

**नापि फलमिति**। ननु द्वैतप्रपञ्चप्रविलया नियोगविषया भविष्यति अप्रविलापितहि द्वैतप्रपञ्चे ब्रह्मत वावबोधोन भवति। अत ब्रह्मतत्वावबोधप्रत्यनीकभूतो द्वैतप्रपञ्च प्रविलाप्य । यथा स्वर्गकामस्य यागोऽनुष्ठातव्य उपदिश्यते एवम पवर्गकामस्य प्रपञ्चप्रविलय., यथा च तमसि व्यवस्थित घटादितत्वमवबुभुत्समानेन त प्रत्यनीकभूत तम प्रविलाप्यते एव ब्रह्मतत्त्वमवबुभुत्समानेन तत्प्रत्यनीकभूत प्रपञ्च प्रविलापयितव्य । ब्रह्मस्वभावोहि प्रपञ्चो न प्रपञ्चस्वभाव ब्रह्म तेन नाम रूपप्रपञ्चप्रविलापनेन ब्रह्मतत्वावबोधो भवतीति ' इति पूर्वपक्ष्याशय परैरुक्तः। अत्र प्रपञ्चप्रविलयनिरूपणेन परैर्दूषणमु

## श्रीभाष्यम्

नैयोगिकफलत्वेन स्वर्गादिवदनित्यत्वप्रसङ्गात्। कश्चात्र नियोगविषयः? ब्रह्मैवेतिचेत् नतस्य नित्यत्वेनाभ(भा)व्यरूपत्वात् अभावार्थत्वाच्च निष्प्रपञ्चं ब्रह्म साध्यमितिचेत्-साध्यत्वेऽपि फलत्वमेव, अभावार्थत्वान्नविधिविषयत्वम्। साध्यत्वं च कस्य? किं ब्रह्मणः, उत प्रपञ्चनिवृत्तेः? न तावद्ब्रह्मणः सिद्धत्वात् अनित्यत्वप्रसक्तेश्च। अथ प्रपञ्चनिवृत्तेः न तर्हि ब्रह्मणस्साध्यत्वम् प्रपञ्चनिवृत्तिरेव विधिविषय इतिचेत् न। तस्याःफलत्वेन विधिविषयत्वायोगात्। प्रपञ्चनिवृत्तिरेवहि मोक्षः सच फलम्। अस्य च नियोगविषयत्वे नियोगात्प्रपञ्चनिवृत्तिः प्रपञ्चनिवृत्त्या नियोगइतीतरेतराश्रयत्वम्। अपि च किं निवर्तनीयः प्रपञ्चः मिथ्यारूपः सत्योवा? मिथ्यारूपत्वे ज्ञाननिवर्त्यत्वादेव नियोगेन नकिंचित्प्रयोजनम्, नियोगस्तु निवर्तकज्ञानमुत्पाद्य तद्द्वारेण प्रपञ्चस्य निवर्तक इतिचेत् तत्त्ववाक्यादेव जात-

## श्रुतप्रकाशिका

नेति। हेतुमाह-तस्येति अ(भा)भव्यरूपत्वात् असाध्यत्वात् अभावार्थत्वाच्च। * भावार्थाः कर्मशब्दाः नियोगविषयत्वाभावादित्यर्थः. * साध्यत्वं फलस्याप्यस्तीति तद्व्यावर्तकं भावार्थत्वम्। तदुभयभावादिति यावत् निष्प्रपञ्चाकारेण साध्यत्वं शङ्कते निष्प्रपञ्चमिति। प्रतिवदति साध्यत्वेऽपीति। फलत्वमेवेति। विषयत्वञ्चेत् फलव्यतिरिक्तं स्यात् फलव्यतिरिक्तत्वाभावाद्विषयत्वमयुक्तमिति तात्पर्यम्॥

* हेत्वन्तरं कण्ठोक्त्या दर्शयन्विषयत्वं दूषयति अभावार्थत्वान्नविधिविषयत्वमिति। * विशिष्टस्य विषयत्वानुपपत्तिरुक्ता। अथ विशेष्यांशस्य विशेषणांशस्य च विषयत्वानुपपत्तिं वक्ष्यन्विकल्पयति साध्यत्वंचेति। यद्वा विशिष्टस्य साध्यत्वाभ्युपगमेन विषयत्वं दूषितम्। अथ विशिष्टस्य साध्यत्वं दूषयितुं विकल्पयति साध्यत्वंचेति। विशिष्टस्य साध्यत्वानुपपत्तिर्हि विशेषणस्य विशेष्यस्योभयस्य च साध्यत्वानुपपत्त्या स्यात् तत्रोभयस्येति विकल्पानुक्तिर्द्विशोद्भवन तुल्यदूषणत्वात्। प्रथमं दूषयति नतावदिति। कुतइत्यत्राह-सिद्धत्वादनित्यत्वप्रसक्तेश्चेति। सिद्धत्वादसाध्यत्वं साध्यत्वाङ्गीकारेतु भावरूपत्वेसति साध्यत्वादनित्यत्वप्रसक्तेश्चेत्यर्थः। द्वितीयं शङ्कते अथेति। दूषयति नतर्हीति। प्रपञ्चनिवृत्तेस्साध्यत्वे ब्रह्मणस्साध्यत्वाभावान्नविधिविषयत्वमित्यर्थः। प्रपञ्चनिवृत्तेर्विधिविषयत्वमाशङ्क्य दूषयति प्रपञ्चेत्यादिना। तस्याःफलत्वमुपपादयति प्रपञ्चनिवृत्तिरेवहीति। प्रपञ्चनिवृत्तिर्मोक्षोऽस्तु। ततः किं विषयत्वानुपपत्तेरित्यत्राह-नचेति। प्रपञ्चनिवृत्तेर्मोक्षरूपत्वान्मोक्षस्य च फलत्वात् फलभूताया न विषयत्वमित्यर्थः। दूषणान्तरमाह—अस्यचेति। अस्या इति वक्तव्येऽपि फलत्वविवक्षया अस्येत्युक्तिः फलत्वं विषयत्वञ्चेत्याकारद्वयाभ्युपगमे प्रपञ्चनिवृत्तिफलत्वान्नियोगसाध्या। विषयत्वात् प्रपञ्चनिवृत्त्या नियोगसिद्धिरित्यन्योन्याश्रयइत्यर्थः॥

निष्प्रपञ्चीकरणपक्षे मुखान्तरेण दूषणमाह—अपिचेति। * यद्वा नियोगविषयदूषणेनान्योन्याश्रयेण नियोगश्च दूषितो भवति। मुखान्तरेणापि नियोगं दूषयति अपिचेति। दूषयितुं विकल्पयति किमिति। प्रथमं दूषयति मिथ्येति साफल्यं शङ्कते नियोगस्त्विति। दूषयति तदिति। स्वराक्यात् प्रपञ्चमिथ्यात्वब्रह्मनिर्विशेषत्वपरवाक्यादित्यर्थः। नियो

## गूढार्थसंग्रहः

सम्। तन्मतमनूद्यैव तदुक्तदूषणानि अधिकदूषणानि चानुभाष्य—नैयोगिकफलस्येत्यादिना॥

## श्रीभाष्यम्

मिति नियोगेन न प्रयोजनम्, वाक्यार्थज्ञानादेव ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य मिथ्याभूतस्य प्रपञ्चस्य बाधितत्वात् सपरिकरस्य नियोगस्यासिद्धिश्च। प्रपञ्चस्य निवर्त्यत्वे प्रपञ्चनिवर्तको नियोगः किंब्रह्मस्वरूपमेव उत तद्व्यतिरिक्तः? यदि ब्रह्मस्वरूपमेव निवर्तकस्य नित्यतया नित्यप्रपञ्चसद्भाव एव न सम्भवति। नित्यत्वेन नियोगस्य विषयानुष्ठानसाध्यत्वं च न घटते। अथ ब्रह्मस्वरूपव्यतिरिक्तः तस्य कृत्स्नप्रपञ्चनिवृत्तिरूपविषयानुष्ठानसाध्यत्वेन प्रयोक्ता च नष्ट इत्याश्रयाभावादसिद्धिः। प्रपञ्चनिवृत्तिरूपविषयानुष्ठानेनैव ब्रह्मस्वरूपव्यतिरिक्तस्य कृत्स्नस्य निवृत्तत्वात् न नियोगनिष्पाद्यं मोक्षाख्यं फलम्॥

किञ्च प्रपञ्चनिवृत्तेर्नियोगकरणस्य इतिकर्तव्यताऽभावात्। अनुपकृतस्य च करणत्वायोगाच्च करणत्वम्। कथमितिकर्तव्यताऽभाव इति चेत् इत्थम्; अस्येतिकर्तव्यता भावरूपा, अभावरूपा वा? भावरूपा च करणशरीरनिष्पत्तितदनुग्राहककार्यभेदभिन्ना उभयविधा च न सम्भवति, नहि मुद्गराभिघातादिवत् कृत्स्नस्य प्रपञ्चस्य निवर्तकः कोऽपि दृश्यत इति दृष्टार्था न सम्भवति। नापि निष्पन्नस्य करणस्य कार्योत्पत्तावनुग्रहस्सम्भवति अनुग्राहकांशसद्भावे कृत्स्नप्रपञ्चनिवृत्तिरूपकरणस्वरूपासिद्धेः। ब्रह्मणोऽद्वितीयत्वज्ञानं प्रपञ्चनिवृत्तिरूपकरणशरीरं निष्पादयतीति चेत् तेनैव प्रपञ्चनिवृत्तिरूपो मोक्षस्सिद्ध इति न करणादिनिष्पाद्यमवशिष्यत इति पूर्वमेवोक्तम्। अभावरूपत्वेचाभा(त्वा)वा)देव न करण

## श्रुतप्रकाशिका

गस्य निष्फलत्वदूषणोक्त्या नियोज्यविशेषणं च दूषितं भवति नियोगसाध्यफलस्यैव फलतया नियोज्यविशेषणत्वादिह तद्योगाच, दूषणान्तरमाह—वाक्यार्थज्ञानादेवेत्यादिना॥

पूर्वं विकल्पितशिरोद्वये द्वितीयं शिरो दूषयितुमाह—प्रपञ्चस्येति। प्रपञ्चस्य सत्यत्वे नियोगनिवर्त्यत्वमित्यर्थः। किमित्यादिना विकल्प्य प्रथमं दूषयति यदीत्यादिना। द्वितीयं दूषयितुं तदभ्युपगमं शङ्कते अथेति। दूषयति तस्येति तस्येत्यादिना नष्ट इत्यन्तेन प्रयोक्तृदूषणं कृतं भवति। प्रपञ्चनिवृत्तीत्यादि प्रपञ्चसत्यत्वेऽपि फलाभावोक्तिमुखेन नियोगो दूषितः। करणमितिकर्तव्यता च दूषयति किञ्चेति। इतिकर्तव्यताया अभावं विवरीतुमाह—कथमिति। प्रतिवक्ति—इत्थमिति। भावरूपपक्षे द्वैविध्यमाह—भावरूपा चेति। करणशरीरनिष्पत्तिरवघातवत् प्रोक्षणवच्च दृष्टादृष्टार्थतया द्विधा भिन्नम्। तत्र किमित्यत्राह—उभयविधेति। उभयविधा निष्पादिका अनुग्राहिका च निष्पादकपक्षे प्रथमं दृष्टार्थं दूषयन्नाह—नहीति। कृत्स्नप्रपञ्चनिवृत्तिरूपकरणशरीरनिष्पादिकाभावरूपा दृष्टार्था न सम्भवतीत्यर्थः। अदृष्टार्थाऽस्ति चेत् प्रपञ्चसत्यत्वप्रसङ्गः। अप्रामाणिकत्वं चेति स्फुटमिति न कण्ठोक्तम्॥

अथानुग्रहं दूषयन्नाह नापीति। तदसम्भवमुपपादयति अनुग्राहकेति। * अनुग्राहका हि करणानन्तरभावी कृत्स्नप्रपञ्चनिवृत्तिरूपकरणानन्तरमनुग्राहकास्तित्वे करणमेव न सिद्धं स्यात्। यदा करणासिद्धिः न तदानीमनुग्राहको विद्यत इत्यनुग्राहकासम्भव इत्यर्थः। इतिकर्तव्यतासद्भावमुखेन करणसिद्धिं शङ्कते ब्रह्मण इति। दूषयति तेनैवेति। करणादिनिष्पाद्यं करणनिष्पाद्यो नियोगः नियोगनिष्पाद्यं फलमित्यादिशब्दार्थः। करणं चेत् स्वकार्यकरं स्यात् तदभावात् करणत्वमयुक्तमित्यर्थः। अथाभावरूपेतिकर्तव्यता दूषयति अभावरूपत्वइति। अभावादेव—अभावरूपेतिकर्तव्यताया अप्रामाणिक

## श्रीभाष्यम्

**शरीरं निष्पादयति। नाप्यनुग्राहकः, अतो निष्प्रपञ्चब्रह्मविषयो विधिर्नसंभवति॥**

**अन्योऽप्याह यद्यपि वेदान्तवाक्यानां नपरिनिष्पन्नब्रह्मस्वरूपपरतया प्रामाण्यम्। तथाऽपि ब्रह्मस्वरूपं सिद्ध्यत्येव। कुतः? ध्यानविधिसामर्थ्यात्। एवमेवहि समामनन्ति 'आत्मा वा अरे द्रष्टव्यः निदिध्यासितव्यः' (बृ.४.४.५) 'य आत्मा अपहतपाप्मा सोऽन्वेष्टव्यस्सविजिज्ञासितव्यः' (छा.८.७.१) 'आत्मेत्येवोपासीत, आत्मानमेव लोकमुपासीत' (बृ.३.४.७; १५) इति। अत्र ध्यानविषयोहि नियोगस्स्वविषयभूतध्यानं ध्येयैकनिरूपणीयमिति ध्येय माक्षिपति। सच ध्येयस्स्ववाक्यनिर्दिष्ट आत्मा सर्किरूपइत्यपेक्षायां तत्स्वरूपविशेषसमर्प-**

## श्रुतप्रकाशिका

त्वादेनेत्यर्थः। निवृत्तिरूपशमादीना नाभावरूपेतिकर्तव्यतात्व तेषां ज्ञाननिष्पादकत्वेन प्रपञ्चनिवृत्तिरूपकरणनिष्पादकत्वायोगादितिभावः। अत्राभावादेवेत्येवकारेण पूर्वमदृष्टार्थभावरूपेतिकर्तव्यताया अप्रामाणित्वस्याभिप्रेत व गम्यते। दूषणमुपसहरति **अतइति**। विधि. नियोगः निष्प्रपञ्चीकरणविषयो नियोगइत्यर्थः। अतः प्रवर्तकवाक्येनैव ब्रह्मस्वरूपसिद्धिरिति वक्तु न शक्यमिति फलितम्॥

अथ ध्याननियोगवादिपक्षमुपक्षिपति **अन्योऽप्याहेति**। ब्रह्मणि वेदान्तवाक्याना स्वातन्त्र्येण प्रामाण्याभावमङ्गीकृत्याह—**यद्यपीति**। तर्हि कथ तत्सिद्धिरित्यत्राह—**तथापीति**। व्याघाताभिप्रायेणाह—**कुतइति**। हेतुमाह—**ध्यानविधीति** ध्यानविधिः कः तस्य सामर्थ्यं कथमित्यत्राह— **एवमेवहीति**। यथा वाक्याना ध्यानपरत्वेऽपि परिनिष्पन्न सिध्यति तथैवेत्यर्थः। ध्यानविधिवाक्यान्याह—**आत्मावाइति**। निदिध्यासितव्य इत्युपासनमुक्तम् द्रष्टव्यइति तस्य दर्शनरूपत्वम् विजिज्ञासितव्यइति सामान्यशब्दः आत्मेत्यैक्योपासनमुक्तम् आत्मानमिति स्वस्य जगत्तादात्म्योपासनम्। सामर्थ्यंदर्शयति **अत्रेति**। ध्येयमाक्षिप्तमस्तु * तद्ब्रह्मेति कथ ज्ञायतइत्यत्राह—**सचध्येयइति**। आकाङ्क्षाया सन्निहितमेव योग्यत्वेऽसत परित्यक्तु न युक्तम्। गामानयेत्यादिषुहि तथा दृष्टमितिभावः॥

## गूढार्थसंग्रह.

अतो निष्प्रपञ्चब्रह्मविषयो विधिर्नसंभवतीति।' विधिरित्युपलक्षण वेदसामान्यस्य। तेन ब्रह्मसिद्धौ नियोगकाण्डे नियोग दूषयित्वा 'सर्वप्रत्ययवेद्येवा ब्रह्मस्वरूप व्यवस्थिते। प्रपञ्चस्य प्रविलयश्शब्देन प्रतिपाद्यत॥ प्रविलेन प्रपञ्चेन तद्रूपेण नगोचरः। मानान्तरस्येति मतमाम्नायैकनिबन्धनम्॥' आम्नायैकनिबन्धनत्वतु तस्योच्यते। प्रत्यक्षादीनामविद्यासम्भिन्नत्वात् प्रत्यस्तमितनिखिलभेदेन रूपेणाविषयीकरणाद्भेदप्रत्ययस्याम्नायैकगम्यत्वादिति' इति सिद्धिकाण्डे मण्डनमिश्रेण सिद्धान्तकरणमपि निरवकाशमितिबोध्यम्। जिज्ञासाऽधिकरणे श्रुतीना प्रपञ्चप्रविलयार्थत्वासम्भवस्य स्थापितत्वात्। एतेन परैः (शा) 'युक्ताह्यस्य हरयः' इत्यादीना प्रविलयार्थत्वोक्तिरपि निरवकाशा। 'तदेतद्ब्रह्म' इत्यादेरन्यार्थत्वस्य प्रथमाधिकरणएव साधितत्वात्॥

समन्वयाधिकरणभाष्ये (शं) परैः 'अत्रापरे प्रत्यवतिष्ठन्ते' इत्यादिध्याननियोगवादिमत यदुपन्यस्त तदेव निरूपयति—**अन्योऽप्याहेत्यादिना**। तत्रोपात्ताः श्रुतीरुदाहरति—**आत्मावाअरे द्रष्टव्यइत्यादिना**। शङ्कराभिप्रायं विशिष्य तन्मतं परिष्कृत्योपन्यस्यति—**अत्र ध्यानविषयोहि नियोग इत्यादिना**—श्रवणादिविधानमनर्थकंस्यादित्यन्तेन॥

## श्रीभाष्यम्

णद्वारेण 'सत्यंज्ञानमनन्तं ब्रह्म' (तै.आनन्द.१.अनु) 'सदेव सोम्येदमग्र आसीत्' (छां-६.२.१) इत्येवमादीनां वाक्यानां ध्यानविधिशेषतया प्रामाण्यमिति विधिविषयभूतध्यान शरीरानुप्रविष्टब्रह्मस्वरूपेऽपि तात्पर्यमस्त्येव । अतः 'एकमेवाद्वितीयम्' (छा.६.२.१) 'तत्सत्यं सआत्मा तत्त्वमसि श्वेतकेतो' (छा.६.८.७) 'नेहनानाऽस्ति किंचन' (कठ.वल्ली ११) इत्यादिभिर्ब्रह्मस्वरूपमेकमेव सत्यम् तद्व्यतिरिक्तं सर्वं मिथ्येत्यवगम्यते । प्रत्यक्षादिभिर्भेदावलम्बिना च कर्मशास्त्रेण भेद.प्रतीयते, भेदाभेदयोःपरस्परविरोधेनत्यनाद्यविद्या मूलत्वेनापि भेदप्रतीत्युपपत्तेरभेद एव परमार्थ इति निर्धार्यते तत्र ब्रह्मध्याननियोगेन तत्साक्षात्कारफलेन निरस्तसमस्ताविद्याकृतविविधभेदाद्वितीयानेरब्रह्मभावरूपमोक्ष. प्राप्यते । नच वाक्याद्वाक्यार्थज्ञानमात्रेण ब्रह्मभावसिद्धिः अनुपलब्धे विविधभेददर्शना नुपपत्तेश्च । तथा च सति श्रवणादिविधानमनर्थकं स्यात् ॥ अथोच्येत रज्जुरेषा

## श्रुतप्रकाशिका

स्वरूपमात्रप्रतिपादकाना कारणशोधकवाक्यानामपि विध्यपेक्षितसमर्पकत्वेनैव प्रामाण्यमित्याह— सर्वं रूपइति । शोधितस्वरूपस्य ध्येयत्वात् सत्यादिवाक्य प्रथममुपात्तम् । तदनुगुणार्थतया सदेवेति कारणवाक्य पश्चादुदाहृतम् ध्यानशरीरानुप्रविष्टेति । 'अर्थेनैव विशेषोहि निराकारतया धियाम्' इतिभाव. अस्त्येवेति । स्वर्गाद्यप्रतिपादकस्वर्गादि फलविषयस्य 'यस्मिन्नोष्णम्' इत्यादिवाक्यस्येव विधिशेषतया प्रामाण्यमितिभाव । ध्येयब्रह्मस्वरूपंहि ध्यानशरीरानुप्रविष्ट प्रपञ्चमिथ्यात्वस्य ध्यानशरीरानुप्रवेशात् कथ भेदनिषेधे तात्पर्यमित्यत्राह— अतइति । अत, विधिशेषभूतस्य सिद्धार्थे तात्पर्यसद्भावात् । अद्वितीय ब्रह्म ध्येय भेदनिषेधश्रुतयश्च ब्रह्मणोऽद्वितीयत्वपरा ब्रह्मणोऽद्वितीयत्वमेव भेदमि थ्यात्वमिति ध्यानशरीरानुप्रविष्टे भेदनिषेधे तात्पर्यमस्तीत्यर्थ ॥

भेदग्राहिप्रमाणविरोधाच्छास्त्रमद्वितीय ब्रह्मप्रतिपादयति 'आदित्योयूप' इत्यादिवदितिशङ्का परिहर्तुं प्रत्यक्षादिभिर्विरुद्धप्रतीतिमभ्युपगच्छति प्रत्यक्षादिभिरिति । शङ्का परिहरति भेदाभेदयोरिति । भेदप्रतीतेरन्यथासिद्धत्वादनन्यथासिद्धशास्त्रावगतमैक्य तात्त्विकमित्यर्थ । तर्हि विषय करण, प्रयोक्ता फलमित्यादिवक्तव्यम् । नियोगनिवर्त्यत्वे प्रपञ्चस्य त्वप्रसङ्ग । नित्यप्राप्तत्वाद्ब्रह्मभावो न फलमित्यत्राह— तत्रेति । ध्याननियोगेनेति ध्यानस्य विषय वमुक्तम । नियोगा न्मोक्षश्चेत्ज्ञाना.मोक्षइति शङ्का व्युदस्यति तत्साक्षात्कारफलेनेति । नियोगस्योपायत्व ज्ञानद्वारकमित्यथ । निरस्तेत्यादिना । अविद्यानिवृत्ति फलमित्युक्तम् । तदय फलतया नियोज्यविशेषणम् उपासक प्रयोक्ता । श्रवणादिरितिकर्तव्यता स्साक सिद्धमितिभाव. वाक्यार्थज्ञानमात्रान्मोक्षवादिन दूषयति नचेति । प्रत्यक्षविरोधमाह— अनुपलब्धेर्विविधभेद दर्शनानुवृत्तेश्चेति । शास्त्रविरोधमाह—तथाचसतीति ॥

अथ साक्षान्मायावादिना स्वमत पश्चाद्विवक्षता प्रथम ध्याननियोगवादिपक्ष(स्य)प्रतिक्षेपमाशङ्कते अथोच्येतेति । बन्धस्य ज्ञानमात्रनिवर्त्यत्व सोपपत्तिकमाह— रज्जुरेषेति । निवर्त्यमिथ्यात्व ह्युभयसम्मतम् । अतएव नियोगनैरपेक्ष्यम ह

## गूढार्थसङ्ग्रह

'अत्राभिधीयत' इत्यादिना परभाष्योक्तदूषणा यनुवदति— अथोच्येत इत्यादिना— तत्परेणैव पदसमुदायेन सिध्यतीत्यन्तेन । 'तद्विषये प्रत्यादयश्श्रूयमाणा अध्यानयोग्याविषयत्वा कुण्ठीभवन्त्युपलादिषु प्रयुक्तक्षुरतैक्ष्ण्यादिवत् ,

## श्रीभाष्यम्

न; सर्प इत्युपदेशेन सर्पभयनिवृत्तिदर्शनात्। रज्जुसर्पवत् बन्धस्य च मिथ्यारूपत्वेन ज्ञानबाध्यतया तस्य वाक्यजन्यज्ञानेनैव निवृत्तिर्युक्ता न नियोगेन नियोगसाध्यत्वे मोक्षस्यानित्यत्वं स्यात् स्वर्गादिवत् मोक्षस्य नित्यत्वंहि सर्ववादिसंप्रतिपन्नम्। किंच धर्माधर्मयो फलहेतुत्वं स्वफलानुभवानुगुणशरीरोत्पादनद्वारेणेति ब्रह्मादिस्थावरान्तचतुर्विधशरीरसंबन्धरूपसंसारफलत्वमवर्जनीयम्। तस्मान्नधर्मसाध्यो मोक्षः। तथा च श्रुतिः–'न हवै सशरीरस्यसतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वावसन्तं न प्रियाप्रिये स्पृशतः' (छा.८.१२.१) इति अशरीरत्वरूपे मोक्षे धर्माधर्मसाध्यप्रियाप्रियविरहश्रवणात् न धर्मसाध्यमशरीरत्वमिति विज्ञायते। नच नियोगविशेषसाध्यफलविशेषवत् ध्याननियोगसाध्यमशरीरत्वम्। अशरीरत्वस्य स्वरूपत्वेनासाध्यत्वात्। यथाऽऽहुःश्रुतयः–'अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्। महान्तं विभुमात्मानं मत्वा धीरो न शोचति।' (कठ.२.२२.१४) 'अप्राणोह्यमनाःशुभ्रोऽसङ्गोह्ययं पुरुषः' (मुण्डकं.२.१.२) इत्याद्याः अतोऽशरीरत्वरूपो मोक्षो नित्यइति न धर्मसाध्यः तथा च श्रुतिः–'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्। अन्यत्र भूताद्भव्याच्च यत्तत्पश्यसि तद्वद' (क.२ २२.१४) इति॥ अपि च उत्पत्तिप्राप्तिविकृतिसंस्कृतिरूपेण चतुर्विधंहि साध्यत्वं मोक्षस्य न सम्भवति। न तावदुत्पाद्यः मोक्षस्य ब्रह्मस्वरूपत्वेन नित्यत्वात् नापि प्राप्यः आत्मस्वरूपत्वेन ब्रह्मणोनित्यप्राप्तत्वात्। नापिविकार्यः दध्यादिवदनित्यत्वप्रसङ्गादेव नापि संस्कार्यः संस्कारोहि दोषापनयनेन वा

## श्रुतप्रकाशिका

नेति। अन्यथाऽनिष्टमाह–नियोगेति। मोक्षानित्यत्वस्य तदनिष्टतामाह–मोक्षस्येति। नियोगो विपरीतफलप्रद इत्याह–किंचेति। द्वारेणेत्यन्तेन प्रसञ्जनीयप्रसञ्जकयोर्व्याप्तिर्दर्शिता। अवर्जनीयमित्यन्तेन प्रसङ्गः। ततः किमित्यत्राह–तस्मादिति। तस्मात् संसारफलत्वप्रसङ्गात् वाक्यस्य संसारफलत्वस्य निवृत्त्या व्याप्य धर्मसाध्यत्वस्य निवृत्तिरित्यर्थः। *मोक्षस्य शरीरत्वाभावश्रुत्या च नियोगासाध्यत्वमाह—तथाचेति। अशरीरत्वरूपे मोक्षे धर्माधर्मफलरूपप्रियाप्रियसम्बन्धविरहश्रवणात् मोक्षस्य धर्मसाध्यत्वाभावः फलितइत्याह—इत्यशरीरत्वरूपइति॥

एवं नियोगसाध्यत्वे मोक्षस्य धर्माधर्मफलसम्बन्धराहित्यश्रवणानुपपत्तिरिति श्रुत्यर्थापत्तिरुक्ता भवति। यथा नियोगविशेषस्य पापनिवृत्तिः फलमुच्यते तद्वन्नियोगविशेषस्य बन्धनिवृत्तिः फलं च सम्भवतीत्यत्राह–नचेति। नियोगविशेषफलविशेषशब्दाभ्यां प्रायश्चित्तपापक्षपणे विवक्षिते; कुत इत्यत्राह–अशरीरत्वस्येति। अशरीरत्वस्य स्वरूपत्वे श्रुतिमाह—यथाऽऽहुरिति। अप्राणइति। अप्राणमनस्सम्बन्धाभावादशरीरत्वं सिद्धं सशरीरस्यहि प्राणमनस्सम्बन्धइतिभावः अतः अशरीरत्वस्यात्मस्वरूपत्वावगमादित्यर्थः। नकेवलं कर्मफलसम्बन्धविरहादशरीरत्वस्य स्वाभाविकत्वं च नियोगासाध्यत्वं चानुमानसिद्धः अपितु कण्ठोक्तश्चेत्याह–तथा च श्रुतिरिति। * अन्यत्र धर्मात् धर्मादन्यत्र धर्मेणविना अनेन धर्मसम्बन्धराहित्यमुक्तम्। सम्बन्धश्च साध्यसाधनभाव इतिभावः। अत्र कृताकृतशब्देन क्रियमाणमुच्यते भूतभव्यशब्दाभ्यां भूतभाविनी। मुखान्तरेण मोक्षस्य नियोगसाध्यत्वं दूषयति अपिचेति। साध्यत्वस्य चैविध्यवक्तत्दसम्भवमाह–उत्पत्तीति मोक्षशब्देन किं निवृत्तिविशिष्टस्वरूपं विवक्षितम्? उताविद्यानिवृत्तिरिति विकल्पे स्वरूपस्य विवक्षिते चतुर्विधसाध्यत्वानुपपत्तिमाह–नतावदित्यादिना। निवृत्तेश्च साध्यत्वेऽप्यविनाशित्वं प्रध्वंसाभावरूपत्वादिति वक्ष्यते संस्कारोहीत्यादि।

## श्रीभाष्यम्

गुणाधानेन वा साधयति न तावद्दोपापनयनेन नित्यशुद्धत्वाद्ब्रह्मणः नाप्यतिशयाधानेन अनाधेयातिशयस्वरूपत्वात् । नित्यनिर्विकारत्वेन स्वाश्रयाया· पराश्रयायाश्च क्रियायाअविपयतया न निर्घर्पणेनादर्शादिवदपि संस्कार्यत्वम् ; नच देहस्थया स्नानादिक्रियया अत्मा संस्क्रियते किंत्वविद्यागृहीतस्तत्सङ्गतोऽहंकर्ता तत्फलानुभवोऽपि तस्यैव । नचाहंकर्तैवात्मा तत्साक्षित्वात् तथा च मन्त्रवर्णः ' तयोरन्यःपिप्पलं स्वाद्वत्ति अनश्नन्यो अभिचाकशीति [मुण्डक.३.१.१) इति ' आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीपिणः ' [कठ.३.४] ' एकोदेवस्सर्वभूतेषु गूढस्सर्वव्यापी सर्वभूतान्तरात्मा कर्माध्यक्षस्सर्वभूताधिवासस्साक्षीचेता केवलो निर्गुणश्च ' (श्वे.६,११) ' सपर्यगाच्छुक्रमकायमव्रणम[स्ना)स्वा)विरं शुद्धमपापविद्ध'मितिच अविद्यागृहीतादहङ्कर्तुरात्मस्वरूपमनाधेयातिशयं नित्यशुद्धं निर्विकारं निष्कृष्यते तस्मादात्मस्वरूपत्वेन नसाध्यो मोक्ष· । यद्येवं किंवाक्यार्थज्ञानेन क्रियतइतिचेत् मोक्षप्रतिव-

## श्रुतप्रकाशिका

अत्र नित्यशुद्धशब्देन परमार्थदोषानन्वयोऽभिप्रेतः । नित्यशुद्धस्य निरतिशयस्य वस्तुनो दोषापनयनगुणाधानरूपसंस्कारविषयत्वं नित्यशुद्धत्वानाधेयातिशयत्वाभ्यां नास्तीत्युक्तम् ॥

अथ क्रियाविषयत्वाभावात् संस्कारविषयत्वाभावउच्यते । नित्येत्यादिना । * निर्विकारत्वेन क्रियाविषयत्वाभावः कथम् ? इत्थं यत्क्रियाविषयभूतं तद्धि सविकारं दृष्टम् । यदा दर्पणो हस्ततले निर्घृष्यते * तदा दर्पणाश्रया क्रिया । यदा दर्पण पाणिर्निर्घृष्यते तदा पाण्याश्रया क्रियेति स्वाश्रयपराश्रयक्रिययोर्दर्पणोदाहरणम् क्रियाविषयत्वाभावेऽपि संस्कार्यत्वं दृष्टमित्यत्राह—नचेति । कस्संस्क्रियतइत्यत्राह—किंत्विति । अविद्यागृहीतः अविद्याकल्पितः तेनातिशयाधानानुगुणविकारित्वं सूचितम् । यद्वा अविद्यागृहीतइति शुद्धत्वशुद्धत्वादिभ्रमवत्तया शुद्धिसापेक्षत्वं दर्शितम् । अहङ्कर्तुरपि देहादिलक्षणत्वात् ॥

कथं देहगतस्नानादिभिस्तस्यातिशयइत्यत्राह—तत्सङ्गतइति । * तत्सङ्गत. देहसङ्गत , आत्मनः फलभोक्तृत्वात् सएव संस्कार्य इत्यत्राह—तत्फलेति । फलभोक्ताऽहमर्थश्चे सएवात्मेत्यत्राह—नचाहमिति । हेतुमाह—तदिति । यो यस्यसाक्षी सहि नतद्भवतीतिभाव. । साक्षित्वे मानमाह— तथाचेति । तयोरन्य इत्यादेरयमर्थः अहङ्कार्यंशतया मनोरूकः फलभोक्ता अन्योऽनश्नन्निति अहङ्कर्तान भोक्तेति स्पष्टं दर्शयति । आत्मेन्द्रियेति । आत्मा देहः देहादिसम्बन्धस्य भोक्तृत्वादात्मनोऽशरीरत्वाप्राणत्वामनस्कत्वादिश्रवणादनश्नन्नित्यभोक्तृत्वश्रवणाच्च, भोक्तुर्विलक्षण आत्मेत्यभिप्राय. । यद्वा आत्मशब्दस्सन्दिदात्मपरः ततश्च तद्युक्तस्य भोक्तृत्वात्तस्य भोक्तृत्वं नास्तीत्यहङ्कारस्यैव भोक्तृत्वमित्यभिप्रायः । ' एकोदेव ' इत्यत्र केवलशब्देन * फलान्वयराहित्यं विवक्षितमिति * तस्यात्रोपयोग. निर्गुणः अगुणवश्यत्वादभोक्तेत्यर्थः साक्षी अहङ्कारे व्याप्रियमाणे स्वयं साक्षिमात्रतयाऽवस्थानान्नभोक्तेतिभावः । सपर्यगादिति । शुक्र, अविद्यारहितं वासनारहितं वा शुद्धमपापविद्धं कर्मफलरहितं कर्मरहितं च पर्यगात् गत्यर्थाबुद्ध्यर्थाः * अमन्यतेत्यर्थः ॥

उदाहृतश्रुतिप्रतिपन्नाकारोपेतमात्मस्वरूपं वदति अविद्येति । अहङ्कर्तुर्निष्कृष्यतइत्यन्वय. । मुक्तेरसाध्यत्वं निगमयति तस्मादिति । ज्ञानवैयर्थ्यं शङ्कते यद्येवमिति । परिहरति मोक्षेति । प्रतिबन्धनिवृत्तेरेव साध्यत्वं श्रुतिसिद्धमाह

### श्रीभाष्यम्

न्धनिवृत्तिमात्रमिति ब्रूमः । तथा च श्रुतयः—' त्वंहि नः पिता योऽस्माकमविद्यायाः परंपारं तारयसि ' प्रश्न.६.८ ' श्रुतंह्येवमेव भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवश्शोचामि तंमा भगवान् शोकस्य पारं तारयतु '.छा.७.१.३ ' तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमार ' इत्याद्या । तस्मान्नित्यस्यैव मोक्षस्य प्रतिबन्धनिवृत्तिर्वाक्यार्थज्ञानेन क्रियते । निवृत्तिस्तु साध्याऽपि प्रध्वंसाभावरूपा न विनश्यति । ' ब्रह्मवेद ब्रह्मैव भवति ' मुण्डक ३.२.९ ' तमेवं विदित्वातिमृत्युमेति ' श्वे.३८. इत्यादिवचनं मोक्षस्य वेदनानन्तरभावितां प्रतिपादयन्नियोगव्यवधानं प्रतिरुणद्धि । नच विदिक्रियाकर्मत्वेन वा ध्यानक्रियाकर्मत्वेन वा कार्यानुप्रवेशः उभयविधकर्मत्वप्रतिषेधात् ' अन्यदेवतद्विदितादथो अविदितादपि ' केन १.३.५. ' येनेदं सर्वं विजानाति (तत्के)तं)केनविजानीयात् ' बृ.४.४१४ ' तदेवं ब्रह्मत्वं विद्धि नेदं यदिदमुपासते ' (केन.१.३.५]इतिच नचैतावता शास्त्रस्य निर्विषयत्वमविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य । नहीदन्तया ब्रह्मविषयीकरोति शास्त्रम् अपितु अविषयं प्रत्यगात्मस्वरूपं प्रतिपादयदविद्याकल्पितज्ञानज्ञातृज्ञेयविभागं निवर्तयति । तथा च शास्त्रम्–' नदृष्टेर्द्रष्टारं पश्येः ' (बृ.६.४.२) इत्येवमादि । नच ज्ञानादेव बन्धनिवृत्तिरिति श्रवणादिविद्ध्यानर्थक्यम् ।

### श्रुतप्रकाशिका

तथाचेति । प्रतिबन्धनिवृत्तेस्साध्यत्वं निगमयति तस्मादिति । प्रतिबन्धनिवृत्तस्साध्यत्वेनानित्य व स्यादित्यत्राह–निवृत्तिस्त्विति । अयपरिहारो नियोगसाध्यत्वपक्षेऽपि तुल्यइतिचेत् नियोगसाध्यत्वे प्रपञ्चसत्य व स्यादित्यभिप्रेतामि युक्त वात् नियोगसाध्यत्वपक्षे श्रुतिस्वारस्यहानिमाह—ब्रह्मेति । श्रुतिस्वारस्यमेव विळम्ब न सहत इतिभावः । कथ नियोगव्यवधानप्रतिरोधः विधिशेषतयाहि ब्रह्मणस्सिद्धि. तत्सिद्ध्यर्थं नियोगस्स्वीकार्यइति शङ्काया नियोगशेष व विदिकर्म वेन ध्यान कर्मत्वेनचोभयथाऽपि न सम्भवतीत्याह—नच विदीति । वेदन ज्ञान, उपासन ज्ञानविशेषः । अत्र वेदनशब्दो निष्प्रपञ्चीकरणज्ञानविशेषे विश्राम्यति विवक्षावशात् । अतो निष्प्रपञ्चीकरणनियोगवादस्यापि दूषण फलितम् । विध्युपासिकर्मत्वाभावे श्रुतिमाह—अन्यदिति । विदितात् ज्ञेयात् अविदितात् ज्ञातुरित्यर्थः । अन्यदेवेति विदिकर्मत्वनिषेधः तदेवेति ध्यानकर्मत्वनिषेधः विदिकर्मत्वाभावे शास्त्रेणान्यासिद्ध्या शास्त्रस्य निर्विषयत्वमाशङ्क्य परिहरति नचेति । ' ब्रह्मवेद ' ' ब्रह्मवित् ' इत्यादिभिर्ब्रह्मणो वेद्यत्व प्रतीयत इत्यत्राह—नहीदन्तयेति । इदन्तया * प्रमेयतया अपितियति । प्रत्यगात्मस्वरूप निर्विशेषमविषयतया प्रतिपादयतीत्यर्थः ॥ शास्त्रस्य भेदनिवृत्तिपर व दर्शयति । तथाचेति । ज्ञानादेव बन्धनिवृत्तिश्चेच्छास्त्रप्रत्यक्षविरोधस्स्यादित्याशङ्क्य शास्त्रविरोध तावत्परिहरति नच ज्ञानादिति । श्रवणादिविद्ध्यानर्थक्य·

### गूढार्थसङ्ग्रहः

अहयानुपादेयवस्तुविषयत्वात्–किमर्थानि तर्हि ' आत्मा वा अरे द्रष्टव्यश्श्रोतव्य. ' इत्यादीनि विधिच्छायानि वचनानि । स्वाभाविकप्रवृत्तिविषयविमुखीकरणानीति ब्रूमः योहि बहिर्मुखः प्रवर्तते पुरुषः इष्टं मे भूयादनिष्ट माभूदिति, नच तत्रात्यन्तिकं पुरुषार्थं लभते तमात्यन्तिकपुरुषार्थवाञ्छिन स्वाभाविककार्यकरणप्रवृत्तिगोचराद्विमुखीकृत्य प्रत्यगात्मस्रोतसया प्रवर्तयन्ति ' आत्मावा अरे द्रष्टव्य. ' इत्यादीनि ' इति (शा) भाष्यांशार्थमाह—नच ज्ञानादेवेत्यादिना ॥

## श्रीभाष्यम्

स्वभावप्रवृत्तसकलेतरविकल्पविमुखीकरणद्वारेण वाक्यार्थावगतिहेतुत्वात्तेषाम्। नच ज्ञानमात्रात् बन्धनिवृत्तिर्नदृष्टेति वाच्यम्। बन्धस्य मिथ्यारूपत्वेन ज्ञानोत्तरकालं स्थित्यनुपपत्तेः। अतएव न शरीरपातादूर्ध्वमेव बन्धनिवृत्तिरिति वक्तुं युक्तम्। नहि मिथ्यारूपसर्पभयनिवृत्तिः रज्जुयाथात्म्यज्ञानातिरेकेण सर्पविनाशमपेक्षते। यदि शरीरसम्बन्ध.पारमार्थिकः तदाहि तद्विनाशापेक्षा सतु ब्रह्मव्यतिरिक्ततया न पारमार्थिकः। यस्यतु बन्धो न निवृत्तः तस्य ज्ञानमेव नजातमित्यवगम्यते ज्ञानकार्यादर्शनात्। तस्मात् शरीरस्थिति र्भवतुवा मावा वाक्यार्थज्ञानसमनन्तरं मुक्तएवासौ। अतो नध्याननियोगसाध्यो मोक्ष इति न ध्यानविधिशेषतया ब्रह्मणस्सिद्धिः अपितु 'सत्यंज्ञानमनन्तं ब्रह्म' (तै.आन.१अ) 'तत्त्वमसि' (छा.६.८.७) 'अयमात्मा ब्रह्म' (मांडू.१.२) इति तत्परेणैव पदसमुदायेन

## श्रुतप्रकाशिका

मिति। श्रवणमननयोरपि विधेयत्वं पूर्वपक्षिणोक्तमिति नविरोधः। कुतइत्यत्राह–स्वभावेति। स्वभावप्रवृत्तशब्देनानादिप्रवृत्तत्वं विवक्षितम्॥

अथ प्रत्यक्षविरोधं परिहरति नच ज्ञानमात्रादिति। कथमित्यत्राह—बन्धस्येति। कथं स्थित्यनुपपत्तिः बन्धो ह्यनुवर्ततइति शङ्का यस्यतु बन्धइत्यादिना परिहरिष्यते। उक्तादेव हेतोश्शरीरपातानपेक्षत्वमाह–अतएवेति। दृष्टान्तेनोपपादयति नहीति। दृष्टान्ते दर्शितमर्थं व्यतिरेकमुखेन दार्ष्टान्तिके विवृणोति यदीति। पारमार्थिकत्वविपर्ययमाह–सत्विति। विप्रतिपन्नमपारमार्थिकं ब्रह्मव्यतिरिक्तत्वात् शुक्तिरूप्यवदितिभावः। ज्ञानोत्तरकालस्थितिरनुपपन्नाचेत् कथं बन्धस्यानुवृत्तिरित्यत्राह—यस्यत्विति। यस्यत्वनिवृत्त अनिवृत्तइति प्रतीतिः तस्य ज्ञानमेव नजातं तत्कार्यादर्शनादिति। कार्याभावस्य कारणाभावमात्रव्याप्यत्वाभावेऽपि सामग्र्यभावव्याप्यत्वात् भ्रमनिवृत्तिं प्रतितत्त्वज्ञानस्य सामग्री वात्तदभावेन ज्ञानाभावः कल्प्यतइति न प्रत्यक्षविरोधइत्यर्थः॥

ज्ञानोत्पत्त्यनन्तरं बन्धनिवृत्तिं निगमयति तस्मादिति। शरीरस्थितिर्भवतुवा मावेति। दग्धपटप्रतिभासवच्छरीरप्रतिभासोऽनुवर्तेत वा निवर्ततेत्यर्थः। मुक्तएवासाविति। बन्धस्य छिन्नमूलतया दग्धपटवदकार्यकरइतिभावः। बन्धनिवृत्तेर्नियोगनैरपेक्ष्यसाधकहेतुभिर्विधिशेषतया न ब्रह्मणस्सिद्धिरित्याह—अतइति। अतः वाक्यार्थज्ञानमात्रसाध्यत्वात्। तर्हि ब्रह्मणः कथं सिद्धिरित्यत्राह–अपित्विति। तत्परेणैवेति। भेदनिषेधपरैर्वाक्यैर्निर्विशेषतया सिद्ध्यतीत्यर्थः।

## गूढार्थसंग्रह

अत्र पञ्चपादिका—'अतः श्रूयमाणाअपि विधयः केवलप्रमाणवस्तुपरतन्त्रे ज्ञाने अकिंचित्करत्वा कुण्ठीभवन्ति। अतोऽर्थवादतयैव आत्मज्ञानस्तावकत्वेन तदुन्मुखीकरणात् सामर्थ्यसिद्धबहिर्मुखतानिरोधाच्च, विधिकार्यक्लेशस्य विद्यमानत्वाद्विधयइव लक्ष्यन्ते' 'द्रष्टव्यश्श्रोतव्य' इत्येषोऽर्थवादः। एतच्च सर्वं प्रथमसूत्रेणैव सूत्रितं विवृतं च भाष्ये अपिच नैवायंविधौ कृत्यः, किंतर्हि? 'अहंकृत्यतृत्वश्च' इति अहंकृत्यः। एतेन 'आत्मेत्येवोपासीत' "आत्मानमेव लोकमुपासीत' इत्येवमादीनि विधिच्छायानि वाक्यानि व्याख्यातानि वेदितव्यानि। अतः हानोपादानशून्या माऽवगमादेव कृतकृत्यता प्रतीयते, श्रुतिस्मृतिवादानां च तथाप्रसितत्वात्' इति॥

10

## श्रीभाष्यम्

**सिद्ध्यतीति–तदयुक्तम् वाक्यार्थज्ञानमात्रात् बन्धनिवृत्त्यनुपपत्तेः। यद्यपि मिथ्यारूपो बन्धो ज्ञानबाध्यः तथाऽपि बन्धस्यापरोक्षत्वात् न परोक्षरूपेण वाक्यार्थज्ञानेन स बाध्यते। रज्ज्वादा-**

## श्रुतप्रकाशिका

यद्वा सिद्धरूपार्थपरत्वेनेत्यर्थः। सिद्ध्यतीति। ब्रह्मेत्यर्थलभ्यम्। एतद्ध्याननियोगवादी दूषयति **तदयुक्तमित्यादिना**। कुत इत्यत्राह—**वाक्यार्थेति**। प्रपञ्चमिथ्यात्ववादिना ज्ञानाद्बन्धनिवृत्त्यनुपपत्तिः कथमुच्यत इत्यत्राह—**यद्यपीति**। ज्ञाननिवर्त्यत्वोपगमेऽपि वैषम्यमाह—**तथापीति**। परोक्षज्ञानस्यापरोक्षभ्रमाबाधकत्वे दृष्टान्तमाह—**रज्ज्वादाविति**। आदि-

## गूढार्थसंग्रह

'ननु सम्यग्दर्शनस्य फलरूपत्वात् प्रमाणाधीनत्वाच्चाविधेयतेति युक्ता तस्यार्थवादता, श्रवणादयस्तु क्रियारूपत्वात् सम्यग्दर्शनस्य दृष्टादृष्टोपकारितया विधेया एवेति, तदाह—एतच्च सर्वं प्रथमसूत्रेणैवेति। मनननिदिध्यासनोपबृंहितस्य श्रवणस्य सम्यग्दर्शनाय विधेयत्वमङ्गीकृत्य प्रथमसूत्रं प्रवृत्तमित्यर्थः। विधीनामपि सतां स्तावकत्वमुक्तम्, इदानीं शब्दस्यार्थान्तरमाह—अपि च नैरात्म्यमिति। ननु माभूवन् ज्ञानविषयाः, उपासनविधिस्तु श्रूयत इति नेत्याह—एतेनात्मेत्येवोपासीतेत्यादि। सर्वत्रैवकारविशेषणश्रवणात् अहमिति स्वभावप्राप्तप्रत्ययावृत्त्यनुवादेन विषयविशेषः प्रतिपाद्यत इति। अतो हानोपादानशून्येत्युपसंहरति' इति विवरणम्॥

शाङ्करभाष्ये—'ननु श्रुतब्रह्मणोऽपि यथापूर्वं संसारित्वदर्शनात् न रज्जुस्वरूपकथनवदर्थवत्त्वमित्युक्तम्। अत्रोच्यते नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वं शक्यं दर्शयितुं वेदप्रमाणजनितब्रह्मात्मभावविरोधात्। नहि शरीराद्यात्माभिमानिनो दुःखभयादिमत्त्वं दृष्टमिति तस्यैव वेदप्रमाणजनितब्रह्मात्मावगमे तदभिमाननिवृत्तौ तदेव मिथ्याज्ञाननिमित्तं दुःखभयादिमत्त्वं भवतीति शक्यं कल्पयितुम्' इत्यारभ्य 'तस्मान्नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वं, यस्य तु यथापूर्वं संसारित्वं नासाववगतब्रह्मात्मभाव इत्यनवद्यम्। यत्पुनरुक्तं श्रवणात्पराचीनयोर्मनननिदिध्यासनयोर्दर्शनाद्विधिशेषत्वं ब्रह्मणः न स्वरूपपर्यवसायित्वमिति—न; अवगत्यर्थत्वान्मनननिदिध्यासनयोः। यदि ह्यवगतं ब्रह्मान्यत्र विनियुज्येत भवेत्तदा विधिशेषत्वं, न तु तदस्ति। मनननिदिध्यासनयोरपि श्रवणवदवगत्यर्थत्वात्' इति (४.अधिकरणे) उक्तः ध्याननियोगवादिदूषणपरिहारः न घटत इति ध्याननियोगवादिमुखेनैव निरूपयति—**तदयुक्तमित्यादिना**॥

उदाहृत(श) भाष्ये अवगतिशब्दस्य साक्षात्कारार्थकतायाः सर्वाद्वैतिसम्मतत्वेन 'श्रवणवदवगत्यर्थत्वान्मनननिदिध्यासनयोः' इत्यत्र मनननिदिध्यासनयोरपि न विधिः इत्यर्थ एव विवक्षितः। पूर्वपक्षिणा तत्र विधेरेव शङ्कितत्वात्। श्रवणात्पराचीनत्वं मनननिदिध्यासनयोः शङ्कराचार्याणामपि सम्मतम्। एवं श्रवणमेव साक्षात्कारे अङ्गिभूतं प्रधानकारणं मनननिदिध्यासने फलोपकार्यङ्गे वाक्यादेव शाब्दापरोक्षज्ञानं जायत इति विवरणकारसिद्धान्तः शङ्कराचार्याणामसम्मत इति स्फुटम्। 'क्रमिकैः श्रवणमनननिदिध्यासनैः अपरोक्षज्ञानमेव शङ्कराचार्यसम्मतमिति लघुपूर्वपक्षे (५२.पु) उदाहृत (स.वे.सि.सा.सं.८१०—८१८) श्लोकैरेव सिद्ध्यति। विवरण एव वाक्यात्प्रथमतः परोक्षज्ञानं मनननिदिध्यासनानन्तरमपरोक्षज्ञानमिति अन्यमतं प्रदर्शितम्। तदेव युक्तमित्यभिप्रेत्य विवरणानुसारेण ध्याननियोगवादिमतदूषणं न घटत इत्युपपादयति—**वाक्यार्थज्ञानमात्रादित्यादिना**॥

**बन्धस्यापरोक्षरूपत्वादित्यादि**। अयमर्थः भामत्यां व्यक्तः। तस्मान्निर्विचिकित्सशाब्दज्ञानसन्ततिरूपोपासना

## श्रीभाष्यम्

**वपरोक्षसर्पप्रतीतौ वर्तमानायां नायं सर्पो रज्जुरेवेत्याप्तोपदेशजनितपरोक्षसर्पविपरीतज्ञानमात्रेण भयानिवृत्तिदर्शनात्। आप्तोपदेशस्यतु भयनिवृत्तिहेतुत्वं वस्तुयाथात्म्यापरोक्षनिमित्तप्रवृत्तिहेतुत्वेन। तथाहि रज्जुसर्पदर्शनभयात् परावृत्तः पुरुषो नायं सर्पो रज्जुरेवेत्याप्तोपदेशेन तद्वस्तुयाथात्म्यदर्शने प्रवृत्तस्तदेव प्रत्यक्षेण दृष्ट्वा भयान्निवर्तते। नच शब्दएव प्रत्यक्षज्ञानं जनयतीति वक्तुं युक्तम्। तस्यानिन्द्रियत्वात् ज्ञानसामग्रीष्विन्द्रियाण्येवह्यपरोक्षसाधनानि। नचास्यानभिसंहितफलकर्मानुष्ठानमृदितकषायस्य**

## श्रुतप्रकाशिका

शब्देन भूदळनादिर्गृह्यते। सर्पविपरीतज्ञानं रज्जुज्ञानं तेन भयानिवृत्तिश्चेदाप्तोपदेशानर्थक्यं स्यादित्यत आह—**आप्तोपदेशस्येति**। अनेन प्रथमसूत्रे प्रबलप्रमाणबाधितत्वेन **भयादिकार्यंतु निवर्तते** इतिभाष्यार्थोज्ञायते आप्तोपदेशस्य भयादिकार्यनिवृत्तिहेतुत्वं वस्तुयाथात्म्यापरोक्ष्यनिमित्तप्रवृत्तिद्वारकमिति हि तस्य भाष्यस्यार्थः। इममर्थं दृष्टान्तेदर्शयति **तथाहीति**

अस्त्वपरोक्षज्ञानमेव तादृशभ्रमविरोधि शब्दएवापरोक्षज्ञानं जनयतीत्याशङ्क्याह—**नचेति**। हेतुमाह–**तस्येति**। व्याप्तिं दर्शयति **ज्ञानेति**। नचानिन्द्रियत्वेऽप्यालोकादेरपरोक्षज्ञानजनकत्वं दृष्टमिति हेतोर्व्यभिचारः * इन्द्रियप्रधानकसामग्र्यननुप्रविष्टत्वस्य विवक्षितत्वात्। एतच्च ज्ञानसामग्रीष्वित्यनेन सूचितम्, ज्ञानसामग्रीषु सपरिकरास्विन्द्रियलिङ्गशब्दस(माव)द्)शानुपपत्त्यनुपलब्धिष्वित्यर्थः। **इन्द्रियाण्येवेति**। आलोकादिसहकृतानीतिशेषः। इन्द्रियमेव योगिनोऽप्यव्यवहितादि ज्ञापयति। तथा विवक्षितपुरुषविशेषस्य वाक्यमपरोक्षज्ञानं जनयतीत्याशङ्क्य परिहरति **नचेति**। अस्य पुरुषस्य हेतु-

## गूढार्थसंग्रहः

कर्मसहकारिण्यविद्याद्वयोच्छेदहेतुः। नचासावनुत्पादितब्रह्मानुभवा तदुच्छेदाय पर्याप्ता; साक्षात्काररूपोहि विपर्यासः साक्षात्काररूपेणैव तत्त्वज्ञानेनोच्छिद्यते, नतु परोक्षावभासेन, दिङ्मोहालातचक्रचलद्वृक्षमरुमरीचिसलिलादिविभ्रमेष्वपरोक्षावभासिषु अपरोक्षावभासिभिरेव दिगादितत्त्वप्रत्ययैर्निवृत्तिदर्शनात्। नोपल्वाप्तवचनलिङ्गादिनिश्चितदिगादितत्त्वानां दिङ्मोहादयो निवर्तन्ते। तस्मात् त्वंपदार्थस्य तत्पदार्थत्वेन साक्षात्कार एषितव्यः। एतावताहि त्वंपदार्थस्य दुःखित्वादिसाक्षात्कारनिवृत्तिः नान्यथा' इति ॥

**नच शब्दएव प्रत्यक्षज्ञानं जनयतीत्यादि**। उक्तं च वाचस्पतिना भामत्या—'नचैष साक्षात्कारो मीमांसासहितस्यापि शब्दस्य प्रमाणस्य फलम् अपितु प्रत्यक्षस्य; तस्यैव तत्फलत्वनियमात्। अन्यथा कुटजबीजादपि वटाङ्कुरोत्पत्तिप्रसङ्गात्' तस्मान्निर्विचिकित्सवाक्यार्थभावनापरिपाकसहितमन्तःकरणं त्वंपदार्थस्यापरोक्षस्य तत्तदुपाध्याकारनिषेधेन तत्पदार्थतामनुभावयतीति युक्तमिति। वाचस्पतिमते मनसइन्द्रियत्वमेवेति भामत्यां स्फुटम्। मनस इन्द्रियत्वं भावप्रकाशे स्थापितम्। विवरणकारपक्षमाशङ्क्य दूषयति **नचेत्यादिना**। **मृदितकषायस्येति**। 'तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः' इति श्रुतिरत्राभिप्रेता। तस्मात् 'तत्त्वमसि' इत्यादेः श्रुतमयेन ज्ञानेन जीवात्मनः परमात्मभावं गृहीत्वा तन्मूलयाचोपपत्त्या व्यवस्थाप्य तदुपासनाया भावनापराभिधानाया दीर्घकालनैरन्तर्यवत्या ब्रह्मसाक्षात्कारफलाया यज्ञादीनामुपयोगः। यथाऽऽहुः—'सतु दीर्घकालनैरन्तर्यसत्कारसेवितः दृढभूमिः' इति। ब्रह्मचर्यतपश्श्रद्धायज्ञादयश्च सत्कारः, अतएव श्रुतिः 'तमेव धीरोविज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः' इति विज्ञाय तर्कोपकरणेन शब्देन

## श्रीभाष्यम्

**श्रवणमनननिदिध्यासनविमुखीकृतबाह्यविषयस्य पुरुषस्य वाक्यमेवापरोक्षज्ञानं जनयति निवृत्तप्रतिबन्धे तत्परेऽपि पुरुषे ज्ञानसामग्रीविशेषाणामिन्द्रियादीनां**

## श्रुतप्रकाशिका

माह—**निवृत्तेति** । अनभिसंहितेत्यादिपदद्वयं हृदि निधाय विशेषणद्वयमाह—**निवृत्तप्रतिबन्धे तत्परेऽपीति** । स्वविषय नियमातिक्रमादर्शनेनेत्यत्र *विषयशब्दस्साध्यपरः स्वसाध्यज्ञानानतिक्रमदर्शनेनेत्यर्थः । शब्दसाध्यज्ञानं परोक्षमेव शब्दस्तु स्वसाध्यं परोक्षज्ञानं नातिक्रामतीति यावत् मनसः परोक्षापरोक्षज्ञानसाधारणहेतुत्वात् । शब्दस्तु लिङ्गस्येव परोक्षज्ञानमात्रहेतुत्वान्नयोगिमनस्साम्यमिति भावः ॥

**ननु** शब्देनाप्यपरोक्षज्ञानं जायते 'दशमस्त्वमसीति' वाक्येन दशमोऽहमित्यपरोक्षज्ञानोत्पत्तिदर्शनादिति । तत्र, उपदेशानन्तरं शीघ्रभाविप्रत्यक्षसामग्रीजन्येन ज्ञानेन पूर्वज्ञानस्य भेदाग्रहेण प्रत्यक्षत्वारोपात् तदाह्युपदेशात् पूर्वभाविनवकपरिसङ्ख्यानजनितसंस्कारवशेनाविलम्बिताह्यपेक्षाबुद्धिर्जायते । यथा घटोऽयमिति युक्ते घटं पश्यतोऽपरोक्षप्रतीतिरिन्द्रियजन्या न तु घटोऽयमिति वाक्यजन्या वाक्यत्वापरोक्ष्यनिमित्तचक्षुर्व्यापारहेतु तथा दशमस्त्वमसीति वाक्यं दशमोऽहमिति बुद्धिनिमित्तस्य पूर्ववासितापेक्षणीयवस्तुप्रतिसन्धानस्य हेतुः नत्वपरोक्षावभासहेतुः, तत्तत्प्रतीतिसामग्रीव्यवहितस्य तत्तत्सामग्रीत्वाभावात् । विमतं प्रत्यक्षज्ञानं न वाक्यजन्यं प्रत्यक्षज्ञानत्वात् अनुपदिष्टवाक्यस्य दशमोऽहमिति प्रत्ययवत् । विमतं वाक्यं न प्रत्यक्षज्ञानजनकं वाक्यत्वात् सम्प्रतिपन्नवदिति । एवं सामग्रीशैथिल्येनान्यथासिद्ध्यापरिहारः वस्तुयाथात्म्यापरोक्ष्यनिमित्तप्रवृत्तिहेतुत्वेनेति भाष्येणाभिप्रेतः ॥

* नच वाक्यजन्येऽपि ज्ञाने विशेष्यभूताहमर्थप्रत्यक्षतामात्रेण विशिष्टानुप्रविष्टविशेषणांशस्यापि प्रत्यक्षतेति वाच्यम्, अहं समानाधिकरणशब्दोल्लिखितप्रतीतेरपरोक्षत्वनियमश्च नास्ति सुखदुःखाद्यनुमितपुण्यपापस्य पुरुषस्य पुण्यकृदहं पापकृदहमित्यादिप्रतीतेः पुण्यपापयोरापरोक्ष्यादर्शनात् । धर्मिप्रत्यक्षतामात्रेण धर्मप्रत्यक्षत्वे लैङ्गिके पर्वतोऽग्निमानिति ज्ञाने

## गूढार्थसंग्रहः

प्रज्ञां भावनां कुर्वीतेत्यर्थं । अत्र च यज्ञादीनां श्रेयः परिपन्थिकल्मषनिबर्हणद्वारेणोपयोग इति केचित् पुरुषसंस्कारद्वारेणेत्यन्ये' इत्यत्र भामत्यां कर्मणामुपयोग उक्तः ॥

अत्र कषायमर्दने कर्मणां हेतुत्वं 'कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः । कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' इति (प.गी) उदाहृतवचनसिद्धमित्यभिप्रेत्य **अनाभिसंहितफलकर्मानुष्ठानेत्युक्तम्** । पुरुषार्थाधिकरणे 'अविद्यया मृत्युं तीर्त्वा' इत्यत्र शङ्करभाष्यानुसारेण उक्तार्थ एवाभिप्रेत इति प्रमाणमालायामानन्दबोधयतिभिः सिद्धान्तितमिति प्रथमाधिकरणे (९९.पु) निरूपितम् ॥ 'ततस्तु तं पश्यति निष्कलं ध्यायमानः' इतिश्रुतेः प्राक् (८५—१.१) उदाहृतविवरणं तात्पर्यमेवाह—**श्रवणमननेत्यादिना** । अत्र 'नन्वेवं साक्षात्कारः' इत्यादि(७५)पुटोदाहृतभामतीव्याख्यारूपः कल्पतरुः 'अयमभिसन्धिः । स्वतोऽपरोक्षस्यापि ब्रह्मणः पारोक्ष्यं भ्रमगृहीतम् तदपरोक्षप्रमाकरणादेव तत्साक्षात्कारः अन्तःकरणं च सोपाधिकं आत्मनि जनयत्यहंवृत्तिमिति सिद्धमस्यात्मन्यपरोक्षधीहेतुत्वम् । तत्तु शब्दजनितब्रह्माभिमुखधीसन्ततिवासितं तदवलम्बब्रह्मात्मतां जीवे साक्षात्कारयति । अयमिव पूर्वानुभवसंस्कारवासितं । तत्सेदन्तोपलक्षितैकर्याव

## श्रीभाष्यम्

**स्वविषयनियमातिक्रमादर्शनेन तदयोगात् ।**

## श्रुतप्रकाशिका

ऽमेरपि प्रत्यक्षत्वप्रसङ्गः । तदेतदखिल स्वविषयनियमातिक्रमादर्शनेन तदयोगादित्यत्राभिप्रेतम् । एवं शब्दस्यापरोक्ष

## गूढार्थसंग्रहः

पयप्रत्यभिज्ञाहेतुः, शब्दस्तु नापरोक्षप्रमाहेतुः क्लप्तः । प्रमेयापरोक्ष्ययोग्यत्वेन प्रमायास्साक्षात्कारत्वे देहात्मभेदविदियानुमितेरपि तदापत्तिः । दशमस्त्वमसीत्यत्रापि तत्सचिवादक्षादेव साक्षात्कारः अन्धादेस्तु परोक्षधीरेव । अपिच 'वेदान्तवाक्यजज्ञानभावनाजापरोक्षधीः । मूलप्रमाणदार्ढ्येन न भ्रमत्वं प्रपद्यते ॥' नच प्रामाण्यपरतस्त्वापातः अपवादनिरासाय मूलशुद्ध्यनुरोधात् 'दृश्यतेत्वग्रयया बुद्ध्या' इत्यादेः नयबृंहितवचनादित्थमुररीकारः 'साक्षादपरोक्षात्' इत्येवमाकारैव धीरशब्दादुदेति नतु परोक्ष ब्रह्मेति, सातु करणस्वभावात् परोक्षाऽवतिष्ठते न भ्रमइति सर्वमवदातम्' इति ॥

अत्र परिमलः—'तत्तु शब्दजनितेनेति ।' उक्तं च गीताविवरणे भाष्यकारैः 'शास्त्राचार्योपदेशशमदमादिसंस्कृतं मन आत्मदर्शने करणमिति । नन्वपरोक्षब्रह्मविषयस्य शब्दस्यापरोक्षप्रमाहेतुत्वं न शक्यं प्रत्याख्यातुम् श्रवणजन्यापरोक्षज्ञानेसत्यपि पारोक्ष्यभ्रमानुवृत्तिस्त्वसम्भावनादिदोषप्रतिबद्धस्य भ्रमनिवर्तनकार्याक्षमतया भवेदित्याशङ्क्याह—शब्दरिति । अभिव्यक्तचैतन्याभिन्नत्वमर्थापरोक्ष्यमिति तावन्नयुक्तम्', इत्यारभ्य 'तस्मात्स्वाविषयकज्ञानाजन्यज्ञानत्व ज्ञानापरोक्ष्यमिति निर्वक्तव्यम् । तच्चाक्षुषादिवृत्त्यभिव्यक्तचैतन्येषु नित्याभिव्यक्तसाक्षिचैतन्येषुचानुगतम् । अनुमितिशाब्दज्ञानादिभ्यश्च तत्तद्विषयालिङ्गशब्दादिज्ञानजन्येभ्यो व्यावृत्तम्' इति । 'एवं च शब्दप्रमाणं स्वाविषयविषयकज्ञानजन्यं परोक्षप्रमामेव जनयतीति नापरोक्षप्रमाहेतुरितिभावः । ननु दशमस्त्वमसीत्यादौ शब्दस्याप्यपरोक्षज्ञानजनकत्व सिद्धमस्तीत्याशङ्क्याह—दशमइति । एवमनुमितेरपि पर्वताद्यंशे नापरोक्ष्य तत्रापरोक्ष्यभ्रमस्तु तदानीन्तनापरोक्षज्ञानभेदाग्रहादिति द्रष्टव्यम् । अन्धादेरित्यभ्युपेत्याय परिहारः दशमोऽहमसीत्यपरोक्षज्ञानं अन्तःकरणे न सम्भवति । शरीरविषयंचेत् स्पर्शनेन्द्रियेणवा ज्ञानान्तरोपनयसहितान्तःकरणेन वा संभवति । ननु भावनाजन्यसाक्षात्कारः कामिनीसाक्षात्कारवत् भ्रमस्स्यात् नचान्तःकरणसाहित्येन विशेषः तत्रापि तत्सत्त्वादित्यतआह—अपिचेति । ननु ब्रह्मसाक्षात्कारस्य मनःकरणकत्वाभ्युपगमे 'यन्मनसा न मनुते' इति श्रुतिविरुद्ध इत्यत्राह—'दृश्यत' इति प्रागुपन्यस्तन्यायोपबृंहिताया 'दृश्यते' इति श्रुतावपि 'अग्र्यया सूक्ष्मया' इति विशेषणात् 'यन्मनसा' इति श्रुतिरनवहितमनोविषया यथा 'तंत्वौपनिषदम्' इति श्रुतौ औपनिषदमिति विशेषणात् 'यद्वाचाऽनभ्युदितम्' इति विशिष्टशक्तिकविषयेतिभावः साक्षादपरोक्षादिति । यथा प्रत्यक्षस्पर्शाश्रयत्वादिलिङ्गजन्या वायोःप्रत्यक्षत्वानुमितिः स्वयंप्रत्यक्षत्वरहितेत्येतावदेव । ननु वायौ प्रत्यक्षत्वाभावमवगाहते इति भ्रम वं प्रतिपन्ने एवमिहापि योजनीयम्' इति च ॥

स्वविषयनियमातिक्रमादर्शनेनेत्यादि । शब्दस्यापरोक्षज्ञानजनकत्व यत्र क्व वा सर्वदार्शनिकसमतं यदिस्यात् तदेत्थमुक्तिः घटेत । नच तथा क्वचिच्छब्दस्य अपरोक्षज्ञानजनकत्वं सम्प्रतिपन्नम् । मण्डनमिश्रः वाचस्पतिश्च ध्यानान्तरमानसापरोक्षज्ञानमेव अविद्यानिवृत्तिहेतुः न शाब्दसाक्षात्कारइति सिद्धान्तयतः । एतन्मतद्वयेऽपि श्रवणादौ नक्वापि विधिः ध्याननियोगवादिमतेतु विधिरिति विशेषः 'तस्मै मृदितकषायाय' इति श्रुतिरपि शाब्दज्ञानस्यापरोक्षत्वं साधयितुं नालम् । तत्पूर्वं 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' इति श्रुतौ समाधमुक्तिहेतुत्वं विवक्षितमिति प्रथमाधिकरणे

## गूढार्थसंग्रहः

एव निरूपितम् । अतः समाधितात्पर्येणैव दर्शयतीत्युक्तिः । अतएव 'मनसैवानुद्रष्टव्यम्' (बृ) इति श्रुतिरपि सङ्गच्छते। अत्र 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः' इत्युत्तरश्रुतिः प्रज्ञां कुर्वीतेत्यत्र ध्यानं विवक्षितमिति मण्डनवाचस्पती व्यवस्थापयतः (बृ) वार्तिके अन्यथाकरणेऽपि (शं)भाष्ये प्रज्ञास्मृतिरित्येवार्थो वर्णितइति प्रथमाधिकरणेऽभिहितम् ॥

एवं च 'मनसैवानुद्रष्टव्यम्' इत्यत्र ध्यानमनुद्रष्टव्यमित्यर्थः । एतत्तात्पर्येणापि 'ध्रुवास्मृतिः' इति छान्दोग्यश्रुतौ अनुशब्दाभावेऽप्यनुशब्दघटनेन 'उपासनं स्याद्ध्रुवानुस्मृतिः' इति वाक्यकारोक्तिः। ध्यानानन्तरकालसमाधेः श्रुतिषु मोक्षसाधनत्व विवक्षितं शङ्कराचार्याणामपि एतत्सम्मतमिति जिज्ञासाधिकरणे निरूपितम । अनयोस्समाधिपरत्वेन 'आत्मा वा अरे द्रष्टव्यः' इत्यत्रापि (२.३.३९.सूत्रे) भामत्युक्तदिशा दर्शनं समाधिरूपमेव विवक्षितम। एतेन 'ज्ञानप्रसादेन विशुद्धसत्त्व. ततस्तु तं पश्यति निष्कलं ध्यायमानः' इति श्रुतिरपि समाधिपरैव । 'तद्वास्य विजज्ञौ' इत्यपि ध्यानस्य विपूर्वकधातुना 'विज्ञानेने'त्यत्र 'निदिध्यासितव्यः' (बृ) इत्यत्रोक्तध्यानस्याभिधानेन श्रुत्यन्तरोक्तदिशा समाधिपर्यवसितध्यानपरैव 'वेदान्तविज्ञानसुनिश्चितार्थाः' इत्यत्रापि विज्ञानं ध्यानमेव । तस्य मननानन्तरकालिकत्वात प्रमेयासम्भावनाविपरीतभावना निवृत्त्यनन्तरं श्रुतार्थनिश्चयपरम् इति नैतच्छ्रुतिरपि शाब्दज्ञानस्यापरोक्षत्वं साधयितुमलम् ।

शाब्दज्ञानस्य यत्र क्वापि अपरोक्षत्वस्याविप्रतिपन्नत्वे वेदान्तजन्यज्ञानेऽपि अपरोक्षत्वकल्पनं युक्तम । वाक्यजन्यज्ञानस्य क्वापि सप्रतिपत्तिविरहादपरोक्षत्वकल्पनं नसम्भवति । ज्ञानाकरणकं ज्ञानं प्रत्यक्षमिति ईश्वरप्रत्यक्षसाधारण्यमिति नैयायिकाः 'ज्ञातकारजज्ञानस्मृतित्वरहितागतिः । अपरोक्षेति निष्कर्षे नाव्याप्त्यादिप्रसञ्जनम् ॥' इत्याचार्यपादैः न्यायपरिशुद्धौ निर्णीतम । अपरोक्षार्थविषयकत्वेनापरोक्षत्वमित्याद्युक्तिः नैव विचारसहेति जिज्ञासाधिकरणयुक्तिभिरेव निर्णीतप्रायम। अद्वैतविद्याचार्यैरप्यय पक्षः नाभ्युपगतइति सिद्धान्तलेशसङ्ग्रहे व्यक्तम् । एतेन (अ.सि.ल.) चन्द्रिकयोः 'तमसःपारं दर्शयतीत्यनुसारेण 'तद्वास्य विजज्ञौ' इत्यत्रापि अपरोक्षमेव विज्ञानम्। 'वेदान्तविज्ञानसुनिश्चितार्थाः' इत्यत्र 'वि' इत्यनेन विशेषविषयत्व 'सु' इत्यनेनापरोक्षत्वं च बोध्यते अर्थपदं मुख्यतस्तात्पर्यविषयब्रह्मपरं शब्दे ज्ञानकरणत्वक्लृप्तं ज्ञानेऽपरोक्षत्वमेकमेव कल्पनीयम्, मनसि करणत्वं तज्जन्यज्ञाने साक्षात्कारत्वं चेत्युभयं कल्पनीयमिति गौरवम् । बहुलतमे तमसि लोचनहीनस्य दशमस्त्वमसीति वाक्यात् अपरोक्षभ्रमनिवर्तकं अपरोक्षज्ञानं क्लृप्तम् । प्रमात्रभिन्नार्थविषयकत्वं प्रत्यक्षत्वमित्युक्तिः अभिनिवेशमूलैव । 'तमसःपारंदर्शयति' इतिश्रुतौ ध्यानानन्तरकालीनदर्शनं समाधिरूपं विवक्षितमिति 'विजज्ञौ' इत्यत्रापि तस्यैव विवक्षासिद्धेः । प्रमाणासम्भावना प्रमेयासम्भावना विपरीतभावनानिवृत्तिः श्रवणमनननिदिध्यासनैरिति परैरेवाभ्युपगतम् । एवं च मननेन प्रमेयासम्भावनानिवृत्त्या निश्चयसम्पादनेऽपि विपरीतभावनानिवृत्तिपर्यन्त तन्निश्चयस्याकार्यकरत्वेन ध्यानेन विपरीतभावनानिवृत्तिनिश्चये समाधिरूपत्वमेव सुशब्दे विवक्षितम् इति प्रागुक्तार्थएव पर्यवसानम् । स्मृत्यनन्तरज्ञानस्यैवात्र विवक्षितत्वेन मनसः इन्द्रियत्वस्थापनेन योगिप्रत्यक्षे मनसः करणत्वेन समाधावेव तत्करणत्वसिद्धम्। यत्रापरोक्षत्वव्यवहारः तत्र साक्षात्कारित्वव्यञ्जकविषयताविशेषेणैवोपपत्तिः। ध्यानानन्तरकालिकज्ञानेपीत्थमेवोपपत्तिरिति नाधिकं किञ्चित् कल्पनीयम्। बहुलतमे तमसि अन्धस्य त्वाचप्रत्यक्षं वर्तत एवेति अतएव 'दशमस्त्वमसि'इत्यस्य निर्वाहइति शब्दस्य नापरोक्षधीजनकत्वं चेद्भूनैतन्याभिन्नार्थविषयकत्वमपरोक्षत्वमितितु जिज्ञासाऽधिकरण एव निरस्तप्रायम्। मनननिदिध्यासनयोःफलोपकार्यङ्गत्वेन विधिरित्युक्तया निदिध्यासनेन विपरीतभावनानिवृत्त्यनन्तरमेव श्रवणजन्यज्ञानमभ्युपगतं भवति। तत्र प्रथमं परोक्षज्ञानसमनन्तरमपरोक्षज्ञानमिति मतं दूषयित्वा प्रथमत एवापरोक्षज्ञानमिति कथ ? प्रथमतएकं ज्ञानमनन्तरमन्यज्ज्ञानं वा अपरोक्षज्ञानद्वयं वा ? अपरोक्षज्ञानद्वयाभ्युपगमे तद्गतविशेषो नाविज्ञातः इत्यभिप्रे-

## श्रीभाष्यम्

**नच ध्यानस्य वाक्यार्थज्ञानोपायता इतरेतराश्रयत्वात् वाक्यार्थज्ञाने जाते तद्विषयध्यानं ध्याने निर्वृत्ते वाक्यार्थज्ञानमिति । नच ध्यानवाक्यार्थज्ञानयोर्भिन्नविषयत्वम् । तथासति ध्यानस्य वाक्यार्थज्ञानोपायता न स्यात् । नह्यन्यध्यानमन्यौन्मुख्यमुत्पादयति । ज्ञातार्थस्मृतिसन्ततिरूपस्य ध्यानस्य वाक्यार्थज्ञानपूर्वकत्वमवर्जनीयम् ।**

## श्रुतप्रकाशिका

ज्ञानहेतुत्वं दूषितम् । अथ ध्यानस्य वाक्यार्थज्ञानोपायतामन्योन्याश्रयणेन दूषयति **नचेत्यादिना** । अन्योन्याश्रयणपरिहाराय ध्यानपूर्वभाविज्ञानमर्थान्तरविषयं पाश्चात्यज्ञानमर्थान्तरविषयमिति भिन्नविषयताऽश्रयणमयुक्तमित्याह— **नचध्यानेति** । कुत इत्यत्राह—**तथासतीति** । कथमुपायत्वहानिरित्यत्राह— **नह्यन्यध्यानमिति** ॥

एकविषयत्वेऽपि निवर्तकस्य वाक्यार्थज्ञानस्य ध्यानापेक्षा स्यात् ध्यानस्य वाक्यार्थज्ञानापेक्षा कथमित्याह—**ज्ञातार्थेति** । ध्यानहेतुभूतं ज्ञानं हेत्वन्तरजन्यं नतु ध्यानं पश्चाद्भाविवाक्यजन्यज्ञानमूलमित्येव ध्यानवाक्यार्थज्ञानयोरसामग्रीभेदे

## गूढार्थसङ्ग्रहः

त्याह—**नच ध्यानस्य वाक्यार्थज्ञानोपायतेति** । ज्ञातार्थस्मृतिसन्ततिरूपस्यैव ध्यानस्य पञ्चपादिकायामुक्तेः । अत्र श्रवणं नाम आत्मावगतये वेदान्तवाक्यविचारः शारीरकश्रवणं च निदिध्यासनं मननोपबृंहितवाक्यार्थविषये स्थिरीभावः' इति प्राक् (५२.पु) उदाहृत(प.पा) वाक्ये उक्तार्थस्य वाक्यार्थज्ञानमन्तराऽसंभवात् । ध्यानं चिन्तनं यद्यपि मानसं तथाऽपि पुरुषेण कर्तुमकर्तुमन्यथावा कर्तुं शक्यं पुरुषतन्त्रत्वात्' इति (श)भाष्यम् (१.१.४) अत्रोक्तध्यानस्य 'निदिध्यासितव्यः' इत्यत्र विवक्षा वा उत ज्ञातार्थस्मृतिसन्ततिरूपस्य वेति विकल्प्य क्रमेण दूषयति—**नच ध्यानवाक्यार्थज्ञानयोरित्यादिना** । वाक्यभेदेन विरोधपरिहारमाशङ्कते—**ध्यानमित्यादिना** । मण्डनवाचस्पतिभ्यां विध्यभावपक्ष एवादृतः । तत्र मण्डनेन ब्रह्मसिद्धौ दृष्टार्थत्वेनोपयोगो नास्तीत्युक्तम्, विवरणकृता तु विधिपक्षः अभ्युपगम्यते । तथाऽपि भाष्योक्तपुरुषतन्त्रत्वमायातम् ॥

एवं च दृष्टद्वारेणोपयोगानङ्गीकारे विधिवैयर्थ्यमित्याह— **ध्यानस्य ध्येयध्यात्रादीत्यादिना** । वाचस्पतिनाऽध्ययनादेरर्थज्ञानार्थत्वमभ्युपगम्य पूर्वोत्तरविचारद्वयस्यापि अध्ययनविधिमूलकत्वेनैवोपपत्तौ विधिरनपेक्षित इत्येतदधिकरणभाष्योक्तविध्यभावपक्ष एव इति स्थापयति । पद्मपादाचार्यास्तु वृत्तिकारसम्मतमध्ययनविधेः अक्षरराशिग्रहणमात्रपर्यवसायित्वं भाष्यानुक्तं वृत्तिकारसम्मतरीत्यैव सिद्धान्तयन्ति । अक्षरराशिग्रहणमात्रपर्यवसायित्वेऽपि अध्ययनविधेः नियमविधित्वेनैवोपपत्तिस्संभवतीति सिद्धान्तलेशसङ्ग्रहतट्टीकयोर्व्यक्तम् । वैधत्वसिद्ध्यर्थं विधिमूलकत्वमवश्याश्रयणीयमिति, सिद्धिविवरणे 'ननु वैधत्वसिद्धेः किंफलमितिचेत् शीघ्रकर्तव्यतादिज्ञाने प्रामाण्यस्य निश्चयादिना शीघ्रं विचारे प्रवृत्त्यादिकमेव' इति लघुचन्द्रिकोक्तं तु नादर्तव्यम् । विवक्षितफल उत्कटेच्छासत्वे तत्साधने शीघ्रप्रवृत्तेस्संभवेन साधनज्ञानविषयविचारे विधिमन्तरैव रागतः प्रवृत्तिसंभवत्येवेति सिद्धान्तेऽपि नानुपपत्तिः । श्रवणमनननिदिध्यासनानां दृष्टार्थत्वेन आवृत्तिरसकृदुपदेशाधिकरणे (श.भा) परैस्सिद्धान्तिता । एवं च श्रवणादिविधिमन्तरेव शीघ्रप्रवृत्त्यादिसंभवेन दोषविरहे श्रवणस्य विधेयत्वं मनननिदिध्यासनयोः फलोपकार्यङ्गत्वमिति विवरणसिद्धान्तः निरवकाशः । शाब्दापरोक्षानुभवादेव जीवन्मुक्तिरपि नघटते चरमवृत्तेरेवाविद्यानिवर्तकत्वसंभवात् अविद्यालेशेन संस्कारेण जीवन्मुक्त्युपपादनं नसंभवति । एवं कल्प

### श्रीभाष्यम्

**ध्येयब्रह्मविषयज्ञानस्य हेत्वन्तरासम्भवात् । नच ध्यानमूलं ज्ञानं वाक्यान्तरजन्यं निवर्तकज्ञानं 'तत्त्वमसि' (छा.६.८.७) इत्यादिवाक्यजन्यमिति युक्तम् । ध्यानमूलमिदं वाक्यान्तरजन्यंज्ञानं 'तत्त्वमसि' (६.८.७) इत्यादिवाक्यजन्यज्ञानेनैकविषयं भिन्नविषयं वा एकविषयत्वे तदेवेतरेतराश्रयत्वम् । भिन्नविषयत्वे ध्यानेन तदौन्मुख्यापादनासम्भवः ॥**

**किंच ध्यानस्य ध्येयध्यात्राद्यनेकप्रपञ्चापेक्षत्वान्निष्प्रपञ्चब्रह्मात्मैकत्वविषयवाक्यार्थज्ञानोत्पत्तौ दृष्टद्वारेण नोपयोगइति वाक्यार्थज्ञानमात्रादविद्यानिवृत्तिं वदतः श्रवणमनननिदिध्यासनविधीनामानर्थक्यमेव । यतोवाक्यादापरोक्ष्यज्ञानासम्भवाद्वाक्यार्थज्ञाने नाविद्यानिवर्तते ततएव जीवन्मुक्तिरपि दूरोत्सारिता । काचेयं जीवन्मुक्तिः सशरीरस्यैव मोक्ष इतिचेत् माता मे वन्ध्येतिवदसङ्गतार्थंवचः यतस्सशरीरत्वं बन्धः अशरीरत्वमेव मोक्षइति त्वयैव श्रुतिभिरुपपादितम् । अथ सशरीरत्वप्रतिभासे वर्तमाने यस्यायं प्रतिभासो**

### श्रुतप्रकाशिका

नान्योन्याश्रयणपरिहारमाशङ्क्य सामग्रीभेदो नसंभवतीत्याह—**ध्येयेति** । हेत्वन्तरासम्भवात् ब्रह्मणः प्रत्यक्षाद्यगोचरत्वादितिभावः । तत्परिहाराय वाक्यभेदमाशङ्क्य तथा वक्तुमयुक्तमित्याह—**नचेति** । विकल्प्य दूषयति **ध्यानमूलमिति** । **एकविषयत्वे तदेवेतरेतराश्रयत्वमिति** । वाक्यान्तरेण ज्ञानोत्पत्तौ तस्य 'तत्त्वमसि' वाक्यजन्यज्ञानतुल्यविषयत्वात्तस्यापि ज्ञानस्य निदिध्यासनापेक्षा स्यात् ध्यानस्य च वाक्यार्थज्ञानपेक्षास्यादित्यन्योन्याश्रयणमित्यर्थः ॥

वाक्ययोर्भिन्नविषयत्वे दूषणमाह—**भिन्नेति** । ध्यानस्य च वाक्यार्थज्ञानविरोधित्वमेवेत्याह—**किंचेति** । ध्यात्रादीत्यादिशब्देन शमादिर्गृह्यते **दृष्टद्वारेणेति** । अदृष्टद्वारेणोपयोगस्त्वत्यन्तभीरुभिःवैरैर्निरसनीयद्वैतवासनायास्सत्यत्वप्रसङ्गभयात् परित्यक्तइति ध्याननियोगवादिनोऽभिप्रायः । वाक्यार्थज्ञानमात्रादविद्यानिवृत्तिनिरासेन जीवन्मुक्तिनिरासस्सिद्धइत्याह—**यतइति** । दूरोत्सारिता वाक्यादपरोक्षज्ञानसम्भवेऽपि व्याघातादिना जीवन्मुक्तिरुत्सारिता, वाक्यादापरोक्ष्यासम्भवाद्दूरोत्सारितेतिभावः । **काचेयमिति** । किंशब्दः क्षेपे विकल्पाभिप्रायेण प्रश्नपरो वा ? तत्स्वरूपं शङ्कते—**सशरीरस्येति** । व्याहतिमाह—**मातेति** । व्याहतिमुपपादयति **यतइति** । व्याहतिपरिहारार्थं तन्मतं शङ्कते **अथेति** । सशरीरत्वनिवृत्ति-

### गूढार्थसंग्रहः

नाया श्रुत्यादिप्रमाणविरहात् 'भूयश्चान्ते विश्वमायानिवृत्तिः' इति श्रुतिः सविशेषध्यानानन्तरकालिकस्माधिना परमात्माऽभिप्रायेण प्रकृतिमण्डलान्ते मुक्तिपरेति पूर्वार्धपर्यालोचनया निर्णीयते । (अयमर्थः भावप्रकाशे व्यक्तः) चरमवृत्तेर्निवर्तकत्वे जीवन्मुक्तिर्नैव घटतइत्यभिप्रेत्याह—**यतो वाक्यादेवेत्यादिना** ॥

**अशरीरत्वमेव मोक्षइति त्वयैव श्रुतिभिरुपपादितमिति** । 'नहवै सशरीरस्यप्रियाप्रिययोरपहतिरस्ति' इति श्रुतिस्तदुपन्यस्ता, अस्यां श्रुतौ 'सशरीरस्ये'ति शरीरसाहित्यं स्फुटं प्रतीयते । 'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय' इति अनन्तरश्रुतिः तत्रापि शरीरादुत्थानानन्तरमेव मुक्तिःप्रतिपाद्यतइति सशरीरस्य मुक्तिः तच्छ्रुतिविरुद्धेतिभावः ॥

सशरीरत्वमाविद्यकं तेन शरीरात्समुत्थानमपि शरीरात्माभिमाननिवृत्तिरेव धर्माधर्मनिमित्तकत्वे शरीरसंबन्धस्यानादित्वेनैव अन्योन्याश्रयपरिहारःकार्यः । 'अन्धपरम्परैवैषा अनादित्वकल्पना' इति परभाष्योक्तार्थं मनसि निधायाह—**अथ सशरीरत्वेत्यादिना** ॥

## श्रीभाष्यम्

मिथ्येति प्रत्ययः तस्य सशरीरत्वनिवृत्तिरिति। न। मिथ्येति प्रत्ययेन सशरीरत्वं निवृत्तं-चेत् कथं सशरीरस्य मुक्तिः अजीवतोऽपि मुक्तिस्सशरीरत्वमिथ्याप्रतिभासनिवृत्तिरेवेति कोऽयं जीवन्मुक्तिरितिविशेषः। अथ सशरीरत्वप्रतिभासो बाधितोऽपि यस्य द्विचन्द्रज्ञान-वदनुवर्तते स जीवन्मुक्त इतिचेत् न; ब्रह्मव्यतिरिक्तसकलविषयत्वाद्बाधकज्ञानस्य। कारण भूताविद्याकर्मादिदोषस्सशरीरत्वप्रतिभासेनसह तेनैव बाधितइति बाधितानुवृत्तिर्नश-क्यते वक्तुम्। द्विचन्द्रादौतु तत्प्रतिभासहेतुभूतदोषस्य बाधकज्ञानभूतचन्द्रैकत्वज्ञाना विषयत्वेनाबाधितत्वात् द्विचन्द्रप्रतिभासानुवृत्तिर्युक्ता॥

## श्रुतप्रकाशिका

रिति निर्देशेन सशरीरत्वस्य छिन्नमूलता जीवन्मुक्तिवादिनाऽभिप्रेता। दूषयति नेति। सशरीरस्य सत्यत्वानभ्युपगमात् तस्य प्रध्वंसरूपा स्वरूपनिवृत्तिरनभिमता, * अतः प्रतिभासनिवृत्तिर्वा प्रतिभासतात्त्विकताभिमाननिवृत्तिर्वा विवक्षिता स्यादित्यभिप्रायेण प्रथमं कल्पमनूद्याभिमतासिद्ध्या दूषयति —मिथ्येति। सशरीरत्वं सशरीरत्वप्रतिभासः, अनन्तरग्रन्थे प्रतिभासनिर्देशात् कथं सशरीरस्य मुक्तिरिति। सशरीरस्यमुक्तिरुक्ता स्यादित्यर्थः। तदेवोपपादयति अजीवतोपीति। मिथ्याप्रतिभासशब्देन भ्रान्तिज्ञानं विवक्षितम्, जीवदशाजीवन्मुक्तयोर्विशेषाभावात् नसशरीरस्य मुक्तिरुक्ता स्यादित्यर्थः

द्वितीयशिरश्शङ्कते अथेति। अत्र पूर्वं सशरीरत्वप्रतिभासे वर्तमानइत्यादिग्रन्थाभिप्रेतार्थो विवृतो भवति। दूष-यति नेति। कथमित्यत्राह—ब्रह्मेति। अविद्याकर्मादीत्यादिशब्देन वासना गृह्यते। तेनैव बाधित बाधकज्ञानेन बाधितइत्यर्थः। द्विचन्द्रज्ञानादौहि बाधिताऽनुवृत्तिर्दृष्टेत्यत्राह—द्विचन्द्रादाविति। नहि रज्ज्वाद्याप्तज्ञानेन शुक्तौ रज तभ्रमो निवर्ततइतिभावः। प्रथमसूत्रे बाधितानुवृत्तिनिराकरणे दोषस्य पारमार्थिकत्वेन ज्ञानबाध्यत्वाभावात् भ्रमानुवृत्ति-रुक्ता। अत्रतु चन्द्रैकत्वज्ञानाविषयत्वेन दोषस्याबाधितत्वात् द्वि(चन्द्र)त्वज्ञानानुवृत्तिरुक्तेति भेदः। जरन्मायावादिनो-ऽपि कृत्स्नमिथ्यात्वस्याभ्युपगततयाऽ*देव वैषम्यमुक्तम्।

## गूढार्थसंग्रहः

कोऽयं जीवन्मुक्तिरितिविशेषइति। इदमुपलक्षणं 'न कर्माविभागादितिचेन्नानादित्वात्' इति सूत्रकृताऽनादि त्वाभ्युपगमेनैव परिहार उक्तः। 'तद्यइह रमणीयचरणा अभ्याशोहयत्ते रमणीयांयोनिमापद्येरन्' (छा.५.१०.७) 'प्राणा धिपस्सञ्चरति स्वकर्मभिः' 'नैव स्त्री—यद्यच्छरीरमादत्ते तेनतेन सयुज्यते' (श्वे.५.अ) इति श्रुतौ सशरीरत्वं कर्म-मूलकमिति स्फुटम्। 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति श्रुतिरप्यत्रानुकूला। एवं च सशरीरत्वाशरीरत्वे कर्मतदभावनिबन्धने, शरीरात्समुत्थानमपि प्रारब्धकर्मणोऽपि क्षयानन्तरकालिकम् इति जीवन्मुक्तिः श्रुतिविरुद्धेति॥

द्विचन्द्रज्ञानादौतु इति। चन्द्रैकत्वज्ञानेन द्विचन्द्रज्ञानहेतुतिमिरादिकं नैव नश्यति अत्रतु चरमवृत्ते प्रथमज्ञा नस्य एकविषयत्वेनैकेन न नाशः अपितु चरमवृत्त्यैवेति अविद्यालेशसंस्कारविक्षेपैः सशरीरत्वप्रतिभासः उत्पादयितुं न शक्यते उभयोर्ज्ञानयोरेकविषयत्वात्। प्रारब्धकर्मणोऽपि ब्रह्मान्यत्वेन अवश्यं निवर्तनीयत्वात्तस्य प्रतिबन्धकत्वकल्पनमपि न सम्भवति। एतेन दोषे यावत्प्रतिबन्धकसत्त्वं ज्ञानानिवर्त्यत्वं दृष्टान्तदार्ष्टान्तिकयोस्समम् इत्यद्वैतसिद्ध्युक्तिरनुपादेया। द्विचन्द्रज्ञा-नहेतुभूतदोषस्य कदाऽपि एकश्चन्द्र इतिज्ञानेन निवृत्त्यभावात् प्रारब्धकर्मणोऽपि ब्रह्मान्यत्वेन अधिष्ठानज्ञानसाध्यस्तनि

## गूढार्थसङ्ग्रहः

वृत्तिंप्रति कारणत्वेन भवता प्रतिबन्धकत्वकल्पनस्यैवासम्भवात् । 'भूयश्चान्ते विश्वमायानिवृत्तिः' इतिश्रुतौ 'तस्य तावदेव चिरम्' इति श्रुत्यैकार्थ्यात् अन्तपदं भोगान्तपरं चशब्दोऽवधारणार्थकः । अन्ते तत्त्वभावादेव विश्वमायानिवृत्तिर्नत्वन्यापेक्षा अन्ते निवृत्तिर्भवत्येव, नतु मायावस्थितीति । अत एव 'इतरस्याप्येवमसंश्लेषःपातेतु' इति सूत्रे ज्ञानाधीनस्सर्वकर्मासम्बन्धात् ज्ञानिनो देहपातेमुक्तिः तुशब्देनावधारिता तस्मात्सौत्रेण तुशब्देन समानार्थकः श्रौतश्चशब्दः पातशब्देन समानार्थकः अन्तशब्दः इति जीवन्मुक्त्युपपत्तौ लघुचन्द्रिकोक्तिरप्यनादरणीया । 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' 'इतरस्याप्येवमसंश्लेषःपातेतु' इत्यादौ कर्मणामेवोपस्थित्या 'भोगेनत्वितरे क्षपयित्वाऽथ सम्पद्यते' इत्यत्र सपत्तिप्रतिबन्धकत्वेन कर्मतद्वारुनयोरेव 'तस्य तावदेव चिरम्' इतिश्रुतौ विवक्षानिर्णयेन परसम्मताविद्योपस्थापकशब्द एव नास्तीत्युभयोरैकार्थ्येन अन्तइत्यस्य भोगान्त इत्यर्थो नसंभवति, 'विश्वमायानिवृत्तिः' इत्यत्र विश्वशब्देन प्राक्सर्वमायानामनिवृत्तिः अपितु अन्तएवेति स्वरसतोऽर्थःप्रतीयते । अत्र कर्मतद्भोगवाचिपदाभावेन अन्तइत्यस्य भोगान्त इत्यर्थकल्पनासम्भवेन मायाया अन्तएवावसान एव मायानिवृत्तिः, नतु ततःपूर्वं चरमशरीरवियोगकाले इत्येव श्रुत्यर्थः । छान्दोग्ये—'तस्य तावदेव चिरम्' इति श्रुत्युक्तसम्पत्तेः 'अस्माच्छरीरात्समुत्थाय' इत्यत्र दहरप्रजापतिविद्याद्वयेऽपि वैशद्यात्कृतम्, 'समुत्थाय' इत्यस्य तात्पर्यमेव 'अस्य सोम्य पुरुषस्य' इति सद्विद्याश्रुत्या उत्क्रान्त्युत्तरकालिकत्वप्रतीत्या दहरविद्याया गतेरपि प्रतिपादनेन उत्क्रान्तिगत्यनन्तरकालिकत्व सपत्तेः निश्चीयते । एवञ्च 'तस्य तावदेव चिरम्' इत्यत्र अथशब्दार्थानन्तर्यं वासनानिवृत्त्यानन्तर्यं पर्यवसितम् । अयमर्थः चतुर्थाध्यायपादक्रमेणैव व्यासेन निर्धारितः । अतः परसंमताऽविद्यानिवृत्तिः जीवन्मुक्ति विदेहकैवल्यरूपमुक्तिद्वयमङ्गीकृत्य उत्क्रान्त्यादिकं विहाय अत्रैव मुक्त्युपपत्तिश्च श्रुति सूत्रविरुद्धेतिबोध्यम् ॥

सद्विद्या उपासनरूपैवेति 'युक्तं तद्गुणकोपासनात्' इति वाक्यकारसिद्धान्तइति प्रथमाधिकरणे (७८४.पु) एव निरूपितम् । यद्यपि 'साचित्त' इत्यादि तत्रत्यद्रमिडभाष्यं वेदार्थसंग्रहे सम्यग्व्याख्यातम् । 'अन्तर्गुणा भगवती परदेवतेति प्रत्यग्गुणेति भगवानपि भाष्यकारः । आहस्म यत्तदिह निर्गुणवस्तुवादे सङ्गच्छते नतु पुनस्सगुणात्मवादे ॥' (स. शा.३.२२१) इत्यत्र 'गुणशब्दः स्वरूपपरः अन्या देवता पराग्रूपाः परदेवतातु प्रत्यगात्मरूपा अपरोक्षचिदेकरसेत्यर्थः' इति मधुसूदनविवरणम् 'यद्यपि साचित्तः न निर्भुग्नदैवतं गुणगणं मनसाऽनुधावेत् तथाऽप्यन्तर्गुणामेव देवता भजते' इति द्रमिडभाष्ये न विवक्षितम् । अयमर्थः 'साचित्तः सद्विद्यानिष्ठः न निर्भुग्नदैवतं गुणगणं मनसाऽनुधावेत् । अपहतपाप्मत्वादिकल्याणगुणगणं दैवताद्विभक्तं यद्यपि दहरविद्यानिष्ठइव साचित्तो नस्मरेत् तथाऽप्यन्तर्गुणामेव देवता भजते, देवतास्वरूपानुबन्धित्वात् सकलकल्याणगुणगणस्य केनचित्परदेवतासाधारणेन निखिलजगत्कारणत्वादिना गुणेनोपास्यमानाऽपि देवता वस्तुतस्स्वरूपानुबन्धिसर्वकल्याणगुणगणविशिष्टैवोपास्यते अतः सगुणमेव ब्रह्म तत्रापि प्राप्यमिति सिद्धया सद्विद्या दहरविद्ययोर्विकल्पः' इति (वे.स) विवरणेनैव भगवता प्रकाशितः । अयमाशयः—'दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम्' 'अस्मिन्कामास्समाहिताः' 'यइहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्' इति दहरविद्यायां धर्मिणः पृथग्गुणानां निर्देशो वर्तते । सद्विद्यायातु धर्मिवाचकपदादेव प्रवृत्तिनिमित्तभूता गुणाः विशेषणतयोपस्थाप्यन्ते । अयमर्थः 'अन्तर्गुणामेव देवता भजते' इत्यत्र दैवतशब्दं विहाय देवताशब्दप्रयोगेणैव द्रमिडाचार्येणैव सूचितः । 'सेयं देवता' इति छान्दोग्यस्थदेवताशब्दतात्पर्येणायशब्दः तत्रच 'सा' इत्यनेन 'उततमादेशमप्राक्ष्य' इत्यत्र आदेशशब्दार्थः परामृश्यते । 'इयम्' इत्यनेन 'सदेव सोम्येदमग्रआसीत्' इत्यनन्तर 'तदैक्षत बहुस्यां प्रजायेय' इति प्रतिकोटिभूतब-

## श्रीभाष्यम्

**किंच 'तस्य तावदेवचिरं यावन्नविमोक्ष्ये अथ सम्पत्स्ये' (छा.५.२४.३)इति सद्विद्यानिष्ठस्य शरीरपातमात्रमपेक्षते मोक्षइति वदन्तीयं श्रुतिः जीवन्मुक्तिं वारयति। सैषा जीवन्मुक्तिरापस्तम्बेनापि निरस्ता 'वेदानिमं लोकममुंच परित्यज्यात्मानमन्विच्छेत्' (आ.ध. सू.२प्र.९पट.२१.ख.सू.१३) बुद्धे क्षेमप्रापणम्' (१४)**

## श्रुतप्रकाशिका

जीवन्मुक्तेश्श्रुतिविरोधमाह— **किंचेति** । स्मृतिविरोधमाह— **सैषेति** । वेदशब्देन त्रिवर्गसाधनकर्माण्युच्यन्ते । तत्फलमुच्यते **इमंलोकममुंचेति** । **बुद्धे** वाक्यार्थज्ञाने जातेसति क्षेमप्रापणं मोक्ष. तच्छास्त्रैर्विप्रतिषिद्धम् शास्त्रैरिति बहुवचनस्यायमाशय वाक्यार्थज्ञानोत्तरभाव्युपासनविधिपरैः 'एवं वर्तयन्यावदायुषम्' आप्रयाणादनुवृत्तिपरैर्मोक्षस्य शरीरपातमात्रसापेक्षत्वपरै 'तयोर्ध्वमायन्नमृतत्वमेति' इति नाडीविशेषनिष्क्रमणपरैरर्चिरादिमार्गेण देशविशेषप्राप्तिपरैश्चानेकै

## गूढार्थसंग्रहः

ईक्षणकर्तृत्वविशिष्ट परामृश्यते । एतेन नामरूपव्याकरण स्वपर्यन्तमेव विवक्षितमिति निश्चीयते, एव 'तत्त्वमसि' इत्यत्र नपुंसकतच्छब्दनिर्देशेन 'तदैक्षत बहुस्यां प्रजायेय' इत्यात्मनो बहुभवनमीक्षितृ तच्छब्देन परामृश्यते इति बहुभवनं नामरूपव्याकरणश्रुत्या यद्विशदीकृतं तदनुसार्यभेदएव 'तत्त्वमसि' इत्यत्र विवक्षितइत्यपि निर्णीयते । पूर्वं तच्छब्दैः यत्तद्धर्मविशिष्ट प्रतिपादित तत्तद्धर्मगुणवत्एव तच्छब्देन परामर्शेन 'सेयं देवतैक्षत' इत्यत्र गुणवती देवता या सैव तच्छब्दार्थ इति सद्विद्या सगुणविद्या । 'अथ सम्पत्स्ये' इत्यत्र फलविवक्षितमित्यर्थद्वय सगुणोपासनस्यैव 'अन्तर्गुणामेव देवता भजते' इत्यत्र विवक्षितमिति निर्मत्सराणां विदुषां स्फुटम् ॥

'न सव्यवहारमात्रत्वात्' इति वाक्यकारवाक्य 'वाचाऽऽरम्भणं विकारो नामधेयम्' इत्यत्र वाचाऽऽरम्भणपदं नमिथ्यार्थकम् अपितु 'प्रवृत्त्यानर्थक्यंतु सत्त्वाविशेषात्' इति एतत्पूर्वपक्षवाक्योक्त दूषणपरिहारपरम् वाचाऽऽरम्भणशब्देन अबाधितव्यवहारार्थनामरूपता पर्येण प्रवृत्तम् । तेन 'परिणामस्तु स्याद्दध्यादिवत्' इति भास्करोदाहृतवाक्यप्रतिज्ञातार्थस्थापिनः । अतः 'आत्रेयवाक्यमपि सव्यवहारमात्रम्' 'अद्वैतमेव परिरक्षति वाक्यकार.' इति सङ्क्षेपशारीरकतदनुसारिकल्पतरुप्रेरितार्थस्य वाक्ये न कथंचिदप्यवकाशः । अयमर्थः 'वाचाऽऽरम्भण'मित्यत्र 'वाचा—वाक्पूर्वकव्यवहारेण' (२.१५) इत्यादिसूक्तौ अभिप्रेत । अत्रार्थद्वयमपि प्राक् (६१८.पु) निरूपितम । 'आप्रयाणात्तत्रापिहि दृष्टम्' इतिसूत्र 'आवृत्ति' इतिसूत्रात्तविद्यासामान्यपरम् । 'आवृत्तिरि' तिसूत्रे नवक्तव्य. अभ्यासेनावृत्तज्ञानमेव विवक्षितमिति शङ्करभाष्योक्त्या 'आप्रयाणात्' इत्यत्रापि सद्विद्या विवक्षा नैव प्रत्याख्यानमर्हति । 'तस्य तावदेव चिरम्' इतिश्रुतौ स्वशरीरवियोगात्पूर्वं 'तत्त्वमसि' इत्यत्र ज्ञानस्य विवक्षितत्वे अन्यविद्यानामपि अनावृत्तज्ञानरूपता नैव सिद्ध्यति । 'अहंब्रह्मास्मि' इतिवाक्यस्थलेऽपि 'आत्मानमेव लोकमुपासीत' 'आत्मेत्येवोपासीत' इत्युपासनमभ्यस्यत इति मोक्षसाधनज्ञानसामान्य क्वाप्यनावृत्तज्ञान न भवति, किंतु आवृत्तज्ञानमुपासनापरकमेवेत्येत सर्वमभिप्रेत्याह— **किंच तस्य तावदेव चिरमित्यादिना** ॥ अथशब्दस्य परमते निरर्थकत्व भगवद्विग्रहनिवृत्त्यनन्तरमेव स्वरूपाविर्भावत्यादिक भावप्रकाशेऽपि निरूपितम् । **वेदानिममित्यादि** । 'सत्यानृते सुखदुःखे' इतिसूत्रान्तभागः । अत्र सन्यासो नविवक्षितइति प्रागेव(११९ पु) निरूपितम् । **बुद्धे क्षेमप्रापणमित्यादि** । अत्र हरदत्तव्याख्या—'बुद्धे क्षेमप्रापणमित्येतच्च प्रत्यक्षविरुद्धमित्याह—बुद्धचेत् क्षेमप्रापणमिहैव नतु समुपलभेत । शास्त्रागममात्रेण चेत्क्षेमप्राप्यते इहैव शरीरे दुःखं नोपलभेत ज्ञानी, नचैतदस्ति नहि ज्ञानिना

## श्रीभाष्यम्

तच्छास्त्रैर्विप्रतिषिद्धम्' (१५) 'बुद्धेचेत् क्षेमप्रापणमिहैव न दुःखमुपलमेत' (१६).' एतेन परंव्याख्यातम्' (१७) इति। अनेन ज्ञानमात्रान्मोक्षश्च निरस्तः अतस्सकलभेदनिवृत्तिरूपा मुक्तिर्जीवतो न संभवति। तस्माद्ध्याननियोगेन ब्रह्मापरोक्षज्ञानफलेनैव बन्धनिवृत्तिः। नच नियोगसाध्यत्वे मोक्षस्यानित्यत्वप्रसक्तिः प्रतिबन्धनिवृत्तिमात्रस्यैव साध्यत्वात्॥

किंच न नियोगेन साक्षाद्बन्धनिवृत्तिः क्रियते। किंतु निष्प्रपञ्चज्ञानैकरसब्रह्मापरोक्ष्यज्ञानेन। नियोगस्तु तदाऽपरोक्ष्यज्ञानं जनयति। कथं नियोगस्य ज्ञानोत्पत्तिहेतुत्वमिति चेत्—कथंवा भवतोऽनभिसंहितफलानां कर्मणां वेदनोत्पत्तिहेतुत्वम्? मनोनैर्मल्यद्वारेणेति चेत् ममापि तथैव। ममतु निर्मले मनसि शास्त्रेण ज्ञानमुत्पाद्यते, तव तु नियोगेन मनसि निर्मले ज्ञानसामग्री वक्तव्येति चेत् ध्याननियोगनिर्मलं मनएव साधनमिति ब्रूमः। केन

## श्रुतप्रकाशिका

शास्त्रैर्विरोधइति। विप्रतिपिद्धमिति। विशेषेण प्रतिषिद्ध न तुल्यबलैःप्रतिरुद्धम् अपितु प्रबलैःपराहतम्। प्राबल्य न भूयसा स्याद्बलीयस्त्वमिति न्यायादितिभावः। प्रत्यक्षविरोधमपि स्मृतिरेवाह—बुद्धेचेदिति। एतेनपरं व्याख्यतम् एतेन शास्त्रप्रत्यक्षविरोधेन * औडुलोमिमतानुसारेणोक्तमन्यदपि व्याख्यातं सर्वमप्यपास्तमित्यर्थः॥

यद्वा यथेदानीं दुःखोपलब्धिः तथा प्रेत्यापीत्यर्थः। यद्वा यथा दुःखनिवृत्तिर्नोपलभ्यते तथा सुखनिवृत्तिरपि नेत्यर्थः। जीवन्मुक्तिनिरासार्थमुदाहृतेन वचनेन वाक्यार्थज्ञानमात्रान्मोक्षश्चार्थान्निरस्त इत्याह—अनेनेति। जीवन्मुक्तिनिरासमुपसंहरति अतइति। जीवन्मुक्तिनिरासेन स्वमतस्थैर्यसिद्धिमाह—तस्मादिति। वाक्यार्थज्ञानमात्रान्मोक्षवादिन श्चोद्यपरिहारो ममापि तुल्यइत्याह—नच नियोगेति। नियोगनिवर्त्यत्वे प्रपञ्चसत्यत्व स्यादित्याशङ्क्याह—किंचेति। ध्याननियोगपक्षानुपपत्तिपरिहारस्य विवक्षितत्वात्किंच शब्दप्रयोगः। नियोगस्य निवर्तकत्वं ज्ञानद्वारकमिति न निवर्त्यसत्यत्वमित्यर्थः; नियोगस्य ज्ञानोत्पत्तौ किंनिमित्तकत्वबुभुत्सया पृच्छति ध्यानेति। नखलु ज्ञानेद्दशः किंचित्कारो नियोगेन संभवति अतस्सवक्तव्य इति भावः॥

प्रतिबन्द्या परिहरति कथंवेति। वेदनोत्पत्तिहेतुत्वमिति। इच्छाद्वारा वेदनोत्पत्तिहेतुत्वमभिप्रेतम् 'विविदिषन्ति' इति ह्युदाहरिष्यते। परिहार शङ्कते—मनइति। तत्साम्यमाह—ममापीति। पुनराशङ्कते—ममत्विति। मनोहि साधारणकारण तस्मिन् सत्यप्यसाधारणकारणमपेक्षित तन्ममास्ति त्वयातु वक्तव्यमितिचोदितस्यार्थः। वैशेषिकाद्यभिमतमानसप्रत्यक्षइव, प्रकृष्टादृष्टसहकृतमनोमात्रकारणके 'तत्सर्वं धर्मवीर्येण यथावत्सम्प्रपश्यसि' इत्यादिसिद्धे योगिप्रत्यक्षइव च मनएवासाधारणकारणमिति परिहरति ध्यानेति। मनोमात्रस्य साधारणकारणत्वेऽपि निर्मलतरस्य मनोविशेषस्यासाधारणकारणत्वं युक्तमितिभावः। तज्ज्ञानप्रश्नं शङ्कते केनेति। ज्ञापकस्वारस्यलक्षण स्वपक्षे वैरूप्य दर्शयितु पृच्छति

## गूढार्थसंग्रहः

मूर्धाभिषिक्तमन्योऽपि सुखादुःखमेव तावत् क्षणमात्रं सोढु प्रभवति इति। एतेन परं व्याख्यातम्। परलोकभयमपि दुःखमेतेनैव व्याख्यातम्। न स्वैरचारिणो निवर्तन्त इति। तस्मा स्वकर्मभिः परिपक्वकषायः भगवन्मननिदिध्यासनैः साक्षात्कृता मस्वरूपः प्रतिषिद्धेषु कर्मसु अप्रवृत्तिभिरष्टाङ्गयोगनिरतः मुच्यतइति' इति॥

## श्रीभाष्यम्

अथगम्यतइतिचेत् भवतोचा कर्मभिर्मनो निर्मलंभवति निर्मले मनसि श्रवणमनननिदिध्यासनैस्सक्लेतरविषयविमुखस्यैव शास्त्रं निवर्तकज्ञानमुत्पादयतीति येनावगम्यते । 'विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन ' (बृ.६ ४.२२) 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ' (६.५.६) ' ब्रह्म वेदब्रह्मैव भवति ' (तै.आनन्द) इत्यादिभिश्शास्त्रैरितिचेत् ममापि 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य ' (बृ.६-५.६) ' ब्रह्मविदाप्नोतिपरम् ' (तै आन.१ अनु) ' न चक्षुषा गृह्यते नापि वाचा ' (मु ३.१.८) ' मनसातु विशुद्धेन '

## श्रुतप्रकाशिका

भवतोचेति निदिध्यासनेन विषयविमुखीकृतमनस्कस्य शास्त्रेण निवर्तकज्ञानोत्पत्तौ प्रमाणतया पराभिमतानि श्रुतिवाक्यानि शङ्के विविदिषन्तीति । ' ब्रह्म वेद ब्रह्मैव भवति ' इति वेदनशब्देन वाक्यार्थज्ञानं विवक्षितमिति पराभिप्रायः । मनसो ज्ञानसाधनत्वे प्रमाणं दर्शयति ममापीति । 'नचक्षुषा ' इत्यादिवाक्यं मनसएव साधनत्वं स्वरसम् ' ब्रह्म वेद ' इत्यत्र वेदशब्दस्य वाक्यार्थज्ञानपरत्वंतु न स्वरसतःप्रतीयते । नच श्रुत्यन्तरैकार्थ्येन तत्पर वाक्यम् वाक्यार्थज्ञानस्योपायत्वकण्ठोक्तिमच्छ्रुत्यन्तराभावादित्यभिप्रेतम् । * मिथ्याज्ञाननिबन्धनास्सर्वे चोद्यपरिहारास्समाना. परोक्षज्ञानस्यापरोक्षभ्रमनिवर्तकत्वं शास्त्रप्रत्यक्षविरोधौ श्रुतिस्वारस्यहानिश्च भवत्पक्षेऽधिकं दूषणमिति वैषम्यज्ञापनाय कथमित्यादिना प्रतिबन्दीमुखेन तत्तच्छङ्कापरिहारं कृत' । इतिशब्दो नानन्तरवाक्यशेषः अपितु प्रकरणशेष ॥

## गूढार्थसङ्ग्रह

(विवरणे–' ननु ततस्तु तं पश्यति निष्कलं ध्यायमान ' इति ध्यानमपरोक्षफलं श्रूयते । सत्यम् । एकत्र चित्तस्य समवधानता तदेकाग्रत्वनिमित्तं भवति । तदेकाग्रचेतसा सहकारिणा शब्दएवौपनिषदमिति तद्धितप्रत्ययसामर्थ्यादपरोक्षज्ञानमुत्पादयति 'ध्यायमानो ज्ञानप्रसादेन पश्यति' इति वाक्यस्यान्वयात् चित्तैकाग्र्यस्य सूक्ष्मवस्तुदर्शननिमित्तत्वात दृष्टेनैवोपकारसिद्धौ अदृष्टकल्पनायोगात् ' इत्युक्तदिशा शाब्दापरोक्षसिद्धिरिति शङ्कायामाह–नचक्षुषा गृह्यते नापिवाचेति। ' नचक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा । ज्ञानप्रसादेन विशुद्धसत्त्व , ततस्तु तं पश्यति निष्कलं ध्यायमान ' (मु.३.१.८) इति श्रुत्यानुपूर्व्या । 'औपनिषदम् ' इत्यत्र तद्धितप्रत्ययः नापरोक्षविषयं बोधयति । अण्प्रत्ययस्य तादृशार्थेऽनुशासनविरहात् किंतु ज्ञानविषयत्वरूपसम्बन्धमुक्तम्, भामत्यामपीत्थमेवाभ्युपगतम् । ' नापि वाचा ' इत्यत्र ज्ञानसामान्ये वाचः करणत्व निषिध्यतइति प्रतीयते । अयमर्थः श्रुतिविरुद्ध , ' नचक्षुषा ' इति चक्षुरिन्द्रियस्य पूर्वप्रस्तुततया तस्य प्रत्यक्षकरणतैवोपास्थितिरिति 'गृह्यते' इतिसामानाधिकरण्यात्शब्दस्यापि प्रत्यक्षमेवार्थ , 'ततस्तुतंपश्यती' त्युत्तर श्रवणाच । एवच ' नापि वाचा ' इत्यत्र शब्दस्यापरोक्षज्ञानकरणत्वं निषिध्यते । एतेन 'औपनिषदम्' इति तद्धितप्रत्ययेन ब्रह्मणः शाब्दापरोक्षविषयत्वसिद्धिरिति भ्रमो व्युदस्त । ' ध्यायमानं तं पश्यति ' इत्यत्र दर्शनं ध्यानहेतुकमेवेति प्रतीयते । अत्र दर्शनं समाधिरूपमेव ध्यानानन्तरसमाधेः प्रमाणतस्सिद्धत्वात् । समाधिश्च शङ्कराचार्यैरप्यभ्युपगत इत्यादिकं प्रथमाधिकरण(६६.पु) एव निरूपितम् ) ' विशुद्धसत्त्व ' इत्यनेनात्र मनसि सत्त्वशुद्धिरेव विवक्षिता । ' आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवास्मृतिः ' इति छान्दोग्येऽपि मनसश्शुद्धिरेवाभिप्रेता । स्मृतौ करणभूतस्यैव मनसः ध्यानसहकारेणापरोक्षज्ञानजनकत्वम् इदमत्र योगिप्रत्यक्ष, योगिप्रत्यक्षं च सर्वदार्शनिकसम्मतम् । 'मनसातु विशुद्धेन ' इत्यत्रापि अपरोक्षज्ञाने मनस करणत्वमेव विवक्षितमित्याशयेनोपादत्ते–मनसातु विशुद्धेनेति ॥

## श्रीभाष्यम्

**'हृदा मनीषा मनसाऽभिक्लृप्तः' (श्वे.४.१.७) इत्यादिभिश्शास्त्रैर्ध्याननियोगेन मनोनिर्मलं भवति, निर्मलं च मनोब्रह्मापरोक्षज्ञानं जनयतीत्यवगम्यत इति निरवद्यम्। 'नेदं यदिदमुपासते' (केन.१.४) इत्युपास्यत्वं प्रतिषिद्धमितिचेत् नैवम्। नात्र ब्रह्मण उपास्यत्वं प्रतिषिध्यते, अपितु ब्रह्मणो जगद्वैरूप्यं प्रतिपाद्यते। यदिदं जगदुपासते प्राणिनः, नेदंब्रह्म तदेव ब्रह्मत्वं विद्धि, यद्वाचानभ्युदितं येन वागभ्युद्यत इति वाक्यार्थः।**

## श्रुतप्रकाशिका

उपास्यत्वप्रतिषेधं शङ्कते नेदमिति परिहरति। **नैवमिति।** तस्य वाक्यस्यैव निर्वाहो नयुक्त इत्यर्थः। उपास्यत्वनिषेध प्रतीयत इत्यत्राह—**नात्रेति।** कस्तर्ह्यर्थ इत्यत्राह—**अपित्विति।** कथं वैरूप्यप्रतिपादनमित्यत्राह—**यदिदमिति।** '**यदिदमुपासते**' इत्यत्रेदमंश निषेधस्य तात्पर्यमितिभावः '**मनो ब्रह्मेत्युपासीत**' इत्यादिना विहितप्रतीकोपासनोपास्यानिहि परिच्छिन्नानि। नेदं ब्रह्म, किन्त्वपरिच्छिन्नं तदेव परब्रह्मेत्यर्थः, अनेन '**अन्यदेव तद्विदितात्**' इत्यादिक-

## गूढार्थसंग्रह

ब्रह्मबिन्दूपनिषदि शुद्धमनसएव मुक्तिहेतुज्ञानसाधनत्वमुक्तम्—यथा 'मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च। अशुद्धं कामसङ्कल्पं शुद्धं कामविवर्जितम्॥ मन एव मनुष्याणां कारणं बन्धमोक्षयोः। बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम्॥ अतो निर्विषयस्यास्य मनसो मुक्तिरिष्यते। तस्मान्निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा॥ निरस्तविषयासङ्गं सन्निरुद्धं मनो हृदि। यदा यात्युन्मनीभावं तदा तत्परमं पदम्॥ तावदेव निरोद्धव्यं यावद्धृदि गतं क्षयम्। एतज्ज्ञानं च ध्यानं च अतोऽन्यो ग्रन्थविस्तरः॥ स्वरेण सन्धयेद्योगम्' इत्यादिना। अत्र 'निरस्तविषयासङ्गम्' इत्युक्त्या निर्विषयत्वं बाह्यविषयशून्यत्वमेव। एतदुपबृंहणवचनानि भावप्रकाशे (३.स.२१२.पृ) उदाहृतानि। [illegible]परोक्षज्ञान 'हृदामनीषा' इत्यादिश्रुतौ विवक्षितमित्याशयेनाह—हृदामनीषेत्यादि 'न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्' इति पूर्वार्धम्। पूर्वार्धे दर्शनस्योक्त्या 'हृदा मनीषा मनसाऽभिक्लृप्तो य एतद्विदुरमृतास्ते' इत्यत्र वेदनं मानसापरोक्षज्ञानमेव विवक्षितम् 'मनसा' इत्यत्र मनश्शुद्धमेव विवक्षितम्। एतदुत्तर 'नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा' इतिश्रुतौ अशुद्धमेव मनः [illegible] 'नैव मनसेति' [illegible] [illegible] नचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम्। ब्रह्मप्राप्तो विरजोऽभूद्विमुक्तः' इत्यत्र योगविध्यनुसारेणैव मोक्षः स्फुटमुक्तया मानसापरोक्ष ध्यानानन्तरकालिक योगसूत्रादिनिर्णीत मुक्तिहेतुरिति [illegible] प्रतिपादनादिति भावः॥

**नात्र ब्रह्मण उपास्यत्व प्रतिषिध्यते इत्यादि** अत्र [illegible] —'यद्वाचानभ्युदितं येन वागभ्युद्यते' इत्यविषयत्वमुक्तम्—'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' [illegible]। ब्रह्म [illegible]। [illegible] पाधिविशिष्टं देवादिरिदमित्युपासते जनाः इदं न ब्रह्म न विद्धि इति 'इति। (१.१.४) एतदुक्त्यंश [illegible] 'तत्त्वमसि' इत्यत्र संसर्गविषयकबोधः [illegible] । [illegible] श्रुत्याः [illegible] मानसापरोक्षज्ञान नियोगसन्तीय। [illegible] ध्याननिर्वर्तनादिना [illegible] । अत्र 'न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनः' (केन.१.ख.३) इति चक्षुरिन्द्रियमनसां ब्रह्मविषयकज्ञानसाधनत्व निषिध्य। अनन्तर 'यद्वाचाऽनभ्युदितं' (५)

## श्रीभाष्यम्

**अन्यथा 'तदेव ब्रह्मत्वं विद्धी'ति विरुध्यते, ध्यानविधिवैयर्थ्यं च स्यात् । अतो ब्रह्मसाक्षात्कारफलेन ध्याननियोगेनैवापरमार्थभूतस्य कृत्स्नस्य द्रष्टृदृश्यादिप्रपञ्चरूपबन्धस्य निवृत्तिः ॥**

## श्रुतप्रकाशिका

मपि जगद्वैरूप्यपरमिति व्याख्यातं भवति । यद्वाचाऽनभ्युदितं दत्तुः शब्द अपि हदम् अन्यथेति स्वव रयदिगोढदत्तः ध्यानविधिवैयर्थ्यमिति वाक्यान्तरविरोधदत्तः । स्वपक्षमुपसंहरति अतइति ॥

## गूढार्थसंग्रहः

'यन्मनसा नमनुते'(६) 'यच्चक्षुषा नपश्यति' (७) इति मन्त्रद्वयेऽपि 'नेदं यदिदमुपासते' इतिश्रूयते । 'यद्वाचान-भ्युदितम्' इत्यत्र पूर्वं 'अन्यदेव तद्विदितात्' इति श्रूयते अत्र विदिताविदितभेदः स्फुटः । ज्ञानविषयत्वज्ञानाविषय-त्वयोर्निषेधे ब्रह्मणएवाभावप्रसङ्गः । अतः तद्वारणाय 'यद्वाचाऽनभ्युदितम्' इत्यत्र अभीत्युपसर्गः, अभीत्युपसर्गेण स्वरूपतः गुणतः विभूतितश्च कार्त्स्न्येन बोधयितुमशक्यत्वं नञ्‌ विवक्षितमिति स्फुटम् । अयमर्थः 'यदिमन्यसे सुवेदेति' 'नाहं मन्ये सुवेद' इति अनन्तरखण्डमन्त्रद्वये सुशब्देन दर्शितः । 'यदिमन्यसे सुवेदेति दभ्रमेवापि नूनम्' त्वंवेत्थ ब्रह्मणो रूपम्' इत्यत्र दभ्रशब्दप्रयोगेण दभ्रवेदनस्य पूर्वं प्रस्तुततया तदुत्तरश्रुतौ 'सुवेद' इत्यत्र पूर्णवेदनमेव विवक्षितमिति स्फुटम् । एतेन 'तदेव ब्रह्मत्वं विद्धि नेदं यदिदमुपासते' इत्यत्र दभ्ररूपजगदेव 'इदम्' इत्यत्र विवक्षितम् । अत्र जगद्वैरूप्यमेव विवक्षितम् भूमविद्याया भूमशब्दप्रतिकोटितया अल्पशब्दप्रयोगेणापि इत्यर्थेवार्थः । तेन नामादिप्राणान्तप्रतीकोपासनेषु यदल्पवेदनेनाल्पोपासनं मुक्तेतरफलक तद्विषयनामादिवैलक्षण्यमप्यत्र विवक्षितमिति भावः ॥

अन्यथा तदेव ब्रह्मत्वं विद्धीति विरुध्यते इति । विद्धि इत्यत्र विधिप्रत्ययः 'नेदं यदिदमुपासते' इतिवाक्यसहपठितत्वेन वेदनमुपासनरूपमेवेति विधिसम्भवति । अतएव 'भूतेषु भूतेषु विचि(चि)त्यधीराः प्रेत्यास्माल्लोकादमृता भवन्ति' इत्यत्र लोकान्तरानुभाव्यमुक्तिफलं वक्ष्यमाणं सङ्गच्छते । 'आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम्' इत्यत्र विद्या उपासनरूपैव विवक्षिता । 'तदेव ब्रह्मत्वं विद्धि' इत्यत्र ब्रह्मणः उपास्यत्वनिषेधएव विवक्षित इति सायपद्भिः सुरेश्वराचार्यैः 'निदिध्यासनशब्देन सम्यग्ज्ञानं विवक्षितम् । उक्तानुवचनं तस्य विज्ञानेनेति निर्णयात्' इत्युक्तया 'तदेव ब्रह्म' इत्यत्रापि वेदनमेव विवक्षितं नतु ध्यानं, अविद्यानिवृत्तेः तदपेक्षायाअभावादित्याशङ्कयाह— **ध्यानविधिवैयर्थ्यं च स्यादिति** । 'निदिध्यासितव्य' इत्यनन्तरं 'मैत्रेय्यात्मनोवा अरेदर्शनेन मत्या विज्ञानेन' इतिश्रुतौ विज्ञानशब्देन निदिध्यासनानुवादात् ध्यानभिन्नं ज्ञानमेव विवक्षितमिति वार्तिकोक्तार्थः नश्रुतौविवक्षितः । 'आत्मा वाऽरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यत्र ध्यातव्यशब्दंविहाय 'निदिध्यासितव्य' शब्दप्रयोगः 'ध्यैचिन्तायाम्' इति धात्वर्थविशेषबोधनार्थः । 'धातोरेकाचोहलादेः क्रियासमभिहारे यङ्' (पा.सू.३.१.२२) इति सूत्रविहितयङन्तात्सन्प्रत्यये निदिध्यासितव्यइति रूपम् ॥

अत्र महाभाष्यम्—'समभिहारइति कोऽयंशब्दः ? समभिपूर्वाद्धरतेः भावसाधनो यत्र समभिहरणं समभिहारः इति । तद्यथा पुष्पाभिहारः मालाभिहारः उत्पलाभिहारः फलाभिहारः इति । विषमउपन्यासः । बहवो हिमालाकुसुमान्तरमत्र युक्तःसमभिहारः, इह पुनरेकाक्रिया यद्यप्येका सामान्यक्रिया अवयवक्रियास्तु बह्वयः । अधिश्रयणोदकासेचन तण्डुलावपनैधोऽपकर्षणक्रियाः ताः कश्चित्कार्त्स्न्येन करोति कश्चिदकार्त्स्न्येन य कार्त्स्न्येन करोति सउच्यते 'पापच्यते' इति

### श्रीभाष्यम्

यदपि कैश्चिदुक्तम् मेदामेदयोर्विरोधो न विरुध्यत इति । तदयुक्तम् । नहि शीतोष्ण-तमः प्रकाशादिवद्भेदामेदावेकस्मिन्वस्तुनि सङ्गच्छेने । अथोच्येत—सर्वंहि वस्तुजातं प्रतीतिव्यवस्थाप्यम् । सर्वं च भिन्नाभिन्नं प्रतीयते कारणात्मना जात्यात्मनाचाभिन्नम् कार्यात्मना व्यक्त्यात्मना च भिन्नम् । छायाऽऽतपादिषु विरोधस्सहानवस्थानलक्षणो भिन्नाधारत्वरूपश्च । कार्यकारणयोर्जातिव्यक्त्योश्च तदुभयमपि नोपलभ्यते । प्रत्युत एकमेवचवस्तु द्विरूपं प्रतीयते यथा मृदयंघट खण्डोगौः मुण्डो गौरिति । नचैकरूपं किंचिदपि वस्तु

### श्रुतप्रकाशिका

अथायमेव ध्याननियोगवादी *भास्करमत दूषयितु तदभित भेदाभेदाविरोधमनुवदति । यदपीत्यादिना । प्रथम सक्षेपेण दूषयति तदयुक्तमिति । नियमेन भिन्नाधारत्वलक्षणस्सहानवस्थानलक्षणश्चेति * विरोधो द्विधा । आदिशब्देन तृणदहनादारिव नाश्यनाशकभावो विवक्षित: तद्वद्भेदाभेदयोरपि विरोधाऽस्त्वत्य ह— नहीति । अथ भेदाभेदमत विस्तरेण प्रस्तौति अथोच्येतेति । वक्ष्यमाणौपयिकमर्थं शिक्षयति सर्वंहीति । शीतोष्णादिष्वपि विरोधः प्रतीत्यधीनइतिभाव. तत:किमित्यत्राह-सर्वंचेति । कथ भिन्नाभिन्नत्वमित्यत्राह—कारणात्मनेति । पूर्वोक्त द्विविधविरोधोपलम्भस्थलवैरूप्य दर्शयतु-माह—छायेति । तत.किमित्यत्राह—कार्येति । अविरोधेनोपलब्धिमाह—प्रत्युतेति । उपलब्धिमभिनयेन दर्शयति यथेति। अद्विरूपत्वस्वनुपलब्धिमाह—नचेति ॥

### गूढार्थसग्रह

पुन:पुनर्वा पचति पापच्यतइति' इति । अत्र उद्योत. 'पुन:पुनर्वा ' इतिभाष्य समूहरूपाया क्रियाया कालभेदाद्भेदऽपि साजात्यात् सैव पुन:पुनरनुष्ठीयतइति बुद्धया पौन पुन्यमिति तात्पर्यम् ' इति। एवच 'विज्ञानन' इत्यत्र 'वि' इत्युपसर्गेण पौनःपुन्य बोध्यते । स्मृतेर्ज्ञानत्व सर्वदार्शनिकसमतामत्यादिक प्रथमाधिकरण एव निरूपितम् । अतश्च ' ध्यैचिन्तायाम्' इति धात्वर्थस्य शीघ्रोपस्थितिकस्य त्यागेनार्थवर्णनमनादरणीयम्। ' निर्वर्णनतु निध्यान दर्शनालोकनेक्षणे ' इत्यमरकोशात् 'नी'त्युपसर्गेण ' निदिध्यासितव्य ' इत्यत्र दर्शनविवक्षेति नैव शङ्क्यम्। 'द्रष्टव्य' इत्यत्र दर्शनोक्तया अत्र दर्शनविवक्षाया असम्भवात् । ' तमेवैक जानथात्मानम् ' इत्यनन्तरम् ' ओमित्येवात्मान ध्यायथ स्वस्तिव पाराय तमस परस्तात् 'इत्यत्र अविद्यानिवृत्तिव्यतिरिक्तफलस्य प्रतिपादनेन अविद्यानिवृत्तेः भावनापेक्षाविरहस्य सुरेश्वरोक्तस्य नावकाशः । तदनन्तर दर्शनं समाधिरेव प्रतिपाद्यतइति पूर्वमेव निरूपितम् । अत. ' समाध्यभावाच्च ' इति सूत्र(शा)भाष्य,भामत्युक्त दिशा योग सूत्रोक्तमेव ध्यान, दर्शन च समाधिरित्येव युक्तम् ॥

अत्राधिकरणे निष्प्रपञ्चीकरणनियोगवाद उद्दूष्य भेदाभेदसिद्धान्त स्थापयित्वा विवर्तवादोऽपि भास्करेण दूषित:। तेनच ध्याननियोगवादोऽपि निरस्तप्राय इत्यभिप्रेत्य ध्याननियोगवादिमुखेनैव भास्करसम्मतभेदाभेदपक्ष दूषयितु तन्मत-मुपन्यस्यति—यदपिकैश्चिदुक्तमित्यादिना । प्रतीतिव्यवस्थाप्यमिति । (भास्करभाष्ये) ' प्रतीयते तदुभय विरोध. कोऽयमुच्यत । विरोधेचाविरोधे च प्रमाण कारण मतम् ॥ ' सत्तानित्यत्वद्रव्यत्वादिसामान्यात्मना सर्वमभिन्नम् । व्यक्तया-त्मनातु परस्परवैलक्षण्यमिति भिन्नम् ' इत्याद्युक्तेः । कारणात्मनेत्यादि । ' कार्यरूपेण नानात्वमभद:कारणात्मना ' इति भास्करभाष्योक्तेरितिभाव ॥

श्रीभाष्यम्

लोके दृष्टचरम् । नच तृणादेर्ज्वलनादिवदभेदो भेदोपमर्दी दृश्यतइति न वस्तुविरोधः, मृत्सुवर्णगवाद्यात्मनाऽवस्थितस्यैव घटमकुटखण्डमुण्डाद्यात्मनाचावस्थानात् । नचाभिन्नस्य भिन्नस्य च वस्तुनोऽभेदो भेदश्च एकएवाकारइतीश्वराज्ञा? प्रतीतत्वादैकरूप्यंचेत्–प्रतीतत्वादेव भिन्नाभिन्नत्वमिति द्वैरूप्यमप्यभ्युपगम्यताम् । नहि विस्फारिताक्षःपुरुषो घटशरावखण्डमुण्डादिषु वस्तुषूपलभ्यमानेषु इयंमृदयं घटः इदंगोत्वमियं व्यक्तिरिति विवेक्तुं शक्नोति, अपितु मृदयंघटः खण्डो गौरित्येव प्रत्येति । अनुवृत्तिबुद्धिबोध्यं कारणमाकृतिश्च व्यावृत्तिबुद्धिबोध्यं कार्यं व्यक्तिश्चेति विविनक्तीतिचेत्–नैवम्; विविक्ताकारानुपलब्धेः । नहि सुसूक्ष्ममपि निरीक्षमाणैरिदमनुवर्तमानमिदं च व्यावर्तमानमिति पुरोऽवस्थिते वस्तुन्याकारभेद उपलभ्यते । यथा संप्रतिपन्नेनये कार्ये विशेषैश्चैकत्वबुद्धिरुपजायते तथैव स कारणे ससामान्येचैकत्वबुद्धिरविशिष्टोपजायते । एवमेव देशतःकालतश्चाकारतश्चात्यन्तविलक्षणेष्वपि वस्तुषु तदेवेदमिति प्रत्यभिज्ञा जायते । अतो द्व्यात्मकमेव वस्तु प्रतीयत इति कार्यकारणयोर्जातिव्यक्त्योश्चात्यन्तभेदोपपादनं प्रतीतिपराहतम् ॥

अथोच्येत मृदयंघट खण्डो गौरितिवद्देवोऽहं मनुष्योऽहमिति सामानाधिकरण्येनै-

श्रुतप्रकाशिका

नाश्यनाशकत्वलक्षणस्तृतीयोऽपि विरोधो नास्तीत्याह— नच तृणादेरिति । वस्तुविरोधशब्देन नाश्यनाशकलक्षणविरोधो विवक्षितः । तादृशविरोधाभावमुपपादयति । मृत्सुवर्णेति । जातिगतोऽभेदः व्यक्तिगतश्च भेदइति कथमेकस्य भेदाभेदाविति शङ्कायां जातिव्यक्त्योःपरस्परभेदाभेदमुपपादयति । नचाभिन्नस्येति । अभिन्नस्य जातेः भिन्नस्य व्यक्तेरित्यर्थः । जातेरभेदएवाकारः व्यक्तेर्भेदएवाकारइति किमीश्वराज्ञया स्वीक्रियते? नहि प्रमाणतर्कानादरेण हठात्कश्चिदर्थस्स्वीकार्य इतिभावः । प्रतीतिबलादभ्युपगतिं शङ्कते प्रतीतत्वादिति । तथा स्वमतस्याभ्युपगन्तव्यतामाह—प्रतीतत्वादेवेति । तदुक्तादेवेत्येवकाराभिप्रायः । द्वैरूप्यमपीति । अनिष्टमपीत्यपिशब्दस्याभिप्राय । प्रतीतत्वमेवोपपादयति नहीति । इयं जातिः इयं व्यक्तिरिति विविक्तेहि अत्राभेदः अत्रच भेदइति वक्तु युक्त न तथा विविच्यतइत्यर्थः । तर्हि कथ प्रतीतिरित्यत्राह—अपित्विति । एकमेव वस्तु जात्यात्मना व्यक्त्यात्मना च भिन्नमभिन्न च प्रतीयतइत्यर्थः । मृदयं घटइत्यनेन मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यप्रत्ययो भेदाभेदसाधकयुक्तिरुक्ता भवति ॥

अनुवृत्तिव्यावृत्तिभ्यां विवेक शङ्कते–अनुवृत्तीति । परिहरति नैवमिति । विविक्ताकारानुपलब्धिं विवृणोति— नहिसुसूक्ष्ममपीति । विविक्ताकारोपलम्भेसति ह्यस्मिन्नंशे अनुवृत्तिबुद्धिबोध्यं च अस्मिन्नंशे व्यावृत्तिबुद्धिबोध्यत्वमिति शक्यवक्यमित्यर्थः ।आकारभेदः अंशभेदः तर्हि कथमुपलम्भइत्यत्राह–यथा सम्प्रतिपन्नेति । विशेषः व्यक्तिः, यथा कार्यैकत्वं व्यक्त्यैकत्व च सम्प्रतिपन्नम् तथा कार्यकारणयोश्च जातिव्यक्त्योश्च एकत्वबुद्धिर्जायतइत्यर्थः । एकत्वबुद्धिरित्यनेनैकशब्दानुविद्धप्रत्ययउक्तो भवति । सहोपलम्भनियमः प्रथमपिण्डग्रहणेऽ(श)भेदेन(ना)ग्रहण चार्थादुक्त भवति न विवेक्तुशक्नोतीयुक्तेः । एव जातिव्यक्त्योरन्योन्यभेदाभेदउक्तः । अथ पिण्डानां परस्परभेदाभेदउच्यते । एवमेवेति । देशकालवैलक्षण्य स्पष्टम् । नीलत्वखण्डत्वादिराकारवैलक्षण्यम् अत्यन्तभेदः अभेदासहो भेदइत्यर्थ. ॥

अत्र चोद्यमाशङ्कते–अथोच्येतेति । देहात्मनोस्सद्रव्यात्मनैकत्वेऽभिमतेऽपि देहरूपेणात्मरूपेण वा तयोरैक्यस्या

गूढार्थसंग्रह.

विवरणोक्त दोषमाशङ्कते–अथोच्येतेत्यादिना ।—

## श्रीभाष्यम्

क्यप्रतीतेरात्मशरीरयोरपि भिन्नाभिन्नत्वंस्यात्। अतइदं भेदाभेदोपपादनं निजसदननिहितहुतवहज्वालायत इति। तदिदमनाकलितभेदाभेदसाधनसामानाधिकरण्यतदर्थयाथात्म्यावबोधविलसितम्। तथाहि अबाधित एव प्रत्ययः सर्वत्रार्थं व्यवस्थापयति। देवाद्यात्माभिमानस्तु आत्मयाथात्म्यगोचरैः सर्वैःप्रमाणैर्बाध्यमानो रज्जुसर्पादिबुद्धिवन्नात्मशरीरयोरभेदं साधयति खण्डोगौर्मुण्डोगौरिति सामानाधिकरण्यस्य न केनचित्कचिद्बाधो दृश्यते तस्मान्नातिप्रसङ्गः। अतएव जीवोऽपि ब्रह्मणो नात्यन्तभिन्नः अपितु ब्रह्मांशत्वेन भिन्नाभिन्न तत्राभेदएव स्वाभाविकः भेदस्त्वौपाधिकः। कथमवगम्यत इतिचेत्? 'तत्त्वमसि' (छा.६.८.७) 'नान्योऽतोऽस्ति द्रष्टा' (बृ.५.७.२३) 'अयमात्मा ब्रह्म' (६.४.५) इत्यादिभिश्श्रुतिभिः 'ब्रह्मेमे द्यावापृथिवी' इति प्रकृत्य 'ब्रह्म दाशा ब्रह्म दासा ब्रह्मेमे कितवा उत। स्त्रीपुंसौ ब्रह्मणो जातौ स्त्रियो ब्रह्मोतवा पुमान्' (श्वे.६.१३-१६) इत्याथर्वणिकानां संहितोपनिषदि ब्रह्मसूक्ते अभेदश्रवणाच्च, 'नित्योनित्यानां चेतनश्चेतनानामेको बहूनां योविदधाति कामान्' (कठ २.५.१३,श्वे.६.१३) 'ज्ञाज्ञौ द्वावजावीशनीशौ' (१.९) 'क्रियागुणैरात्मगुणैश्च

## श्रुतप्रकाशिका

प्रामाणिकत्वात्तयोर्भिन्नाभिन्नत्वमनिष्टमितिभावः। परिहरति—तदिदमिति। अबाधितं सामानाधिकरण्यं भेदाभेदसाधकम्। अबाधितश्च भेदाभेदस्तत्त्वमित्यजानतोक्तमित्यर्थः। तदुपपादयति—तथाहीति। परिहारौपयिकमर्थं शिक्षयति अबाधितइति। ततः किमित्यत्राह—देवादीति। जातिव्यक्त्योरपि तथास्यादित्यत्राह—खण्डइति। एव लौकिकार्थाना भेदाभेदउक्तः। तदुपजीव्य वैदिकेष्वप्यर्थेषु जीवब्रह्मणोर्भेदाभेदमाह—अतएवेति। अतः भेदाभेदयोरविरुद्धत्वादित्यर्थः। ब्रह्मांशत्वेनेत्यत्र 'अंशो नानाव्यपदेशात्' इतिसूत्रं स्मारितम्। अचिद्ब्रह्मणोर्भेदाभेदः स्वाभाविकइति भास्करयादवयोरुभयोरप्यभिमतम्। चिद्ब्रह्मणोस्तु भेदाभेदौ स्वाभाविकाविति यादवमतव्यावृत्त्यर्थमाह—तत्रेति। कथमिति। भेदाभेदसद्भावे तत्राभेदस्यैव स्वाभाविकत्वे च किं प्रमाणमित्यर्थः। अभेदस्य स्वाभाविकत्वेन प्राधान्यात् प्रथममन्यथाचेति सूत्रांशविषयवाक्यमाह—तत्त्वमसीति। दाशकितवेत्याद्यंशविषयमाह—ब्रह्मेमे इति। 'नानाव्यपदेशात्' इत्यंशस्य विषयमाह—नित्योनित्यानामिति। क्रियागुणैरात्मगुणैश्चेति। क्रियागुणाः संसारहेतुगुणाः, आत्मगुणाः मोक्षहेतुगुणाः, तैः संयोगहेतुरित्यर्थः॥

## गूढार्थसंग्रहः

परिहरति—तदिदमनाकलितेत्यादिना। अतएव जीवोऽपि ब्रह्मणो नात्यन्तभिन्नइत्यादि। 'तदनन्यत्वमि'त्यत्र भोक्तृभोग्यशक्त्योरनन्यत्वं सृष्टिवाक्यानां परिणामपरत्वमप्रच्युतस्वरूपस्य शक्तिविक्षेपलक्षणः परिणामः' इति। 'श्रुतेश्च शब्दमूलत्वात्' इत्यत्र ईश्वरस्य द्वैरूप्यं भवतः। भोग्या शक्तिरेका भोक्तृशक्तिश्चापरा। भोग्यशक्तिश्च सा आकाशादिरूपेणाचेतनपरिणामापत्तिः। भोक्तृशक्तिश्च सा चेतना जीवरूपेणावतिष्ठते। तत्र यथा सूर्यः स्वरश्मीन् विक्षिप्य उपसंहरति, एवं प्रपञ्चे अनन्तभेदांशक्तिमुपसंक्षिप्य परमेश्वरः उपसंहरति' इति च भास्करभाष्योक्तमत्रानुसन्धेयम्। भास्करभाष्योक्तदिशैव श्रुतिभिः भेदाभेद साधयति—तत्त्वमसीत्यादिना। भामत्यां भास्करभाष्य 'नच भावाभावयोरविरोधः सहावस्थानासम्भवात्'

श्रीभाष्यम्

तेषां संयोगहेतुरपरोऽपि दृष्टः ' (५.१२) ' प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः ' (६.१३–१६) ' सकारणं करणाधिपाधिपः ' (६.९) ' तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ' (४.६) ' य आत्मनि तिष्ठन् ' (बृ.५.७.२२) ' प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद ' (६.३.२१) ' प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन्याति ' (२३) 'तमेवं विदित्वाऽतिमृत्युमेति ' (श्वे.३.८) इत्यादिभिर्भेदश्रवणाच्च, जीवपरयोर्भेदाभेदावश्याश्रयणीयौ तत ' ब्रह्मवेद ब्रह्मैव भवति ' (मु.३.२.९) इत्यादिभिर्मोक्षदशायां जीवस्य ब्रह्मस्वरूपापत्तिव्यपदेशात् ' यत्रत्वस्य सर्वमात्मैवाभूत्तत्केन कंपश्येत् ' (बृ.४.४.१४) इति तादनीं भेदेनेश्वरदर्शननिषेधाच्चाभेदस्स्वाभाविक इत्यवगम्यते । ननु च ' सोऽश्नुते सर्वान्कामान् सहब्रह्मणा विपश्चिता ' (तै.आन.१.अनु) इति सहश्रुत्या तदानीमपि भेदः प्रतीयते । वक्ष्यतिच ' जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ' (शारी.४.४.१७) ' भोगमात्रसाम्यलिङ्गाच्च ' (२१) इति नैतदेवम् । ' नान्योऽतोऽस्ति द्रष्टा ' (बृ.५.७.२३) इति श्रुतिशतैरात्मभेदप्रतिषेधात् ' सोऽश्नुते सर्वान्कामान् सहब्रह्मणा विपश्चिता ' (तै.आन.१ अ) इति सर्वैः कामैः सह ब्रह्माश्नुते सर्वगुणान्वितं ब्रह्माश्नुत इत्युक्तं भवति । अन्यथा ब्रह्मणासहेत्यप्राधान्यं ब्रह्मण प्रसज्येत । ' जगद्व्यापारवर्जम् ' (शारी.४.४.१७) इत्यत्र मुक्तस्य भेदेनावस्थानेसत्यैश्वर्यस्य न्यूनताप्रसङ्गो वक्ष्यते । अन्यथा ' सम्पद्याविर्भावस्स्वेन शब्दात् ' (४.४.१७) इत्यादिभिर्विरोधात् । तस्मादभेद एव स्वाभाविकः भेदस्तु जीवानां परस्मात् ब्रह्मणः परस्परं च बुद्धीन्द्रियदेहोपाधिकृतः । यद्यपि ब्रह्म निरवयवं सर्वगतं च तथाऽप्याकाश इव घटादिना बुद्ध्याद्युपाधिना ब्रह्मण्यपि भेदस्सम्भवत्येव । नच भिन्ने ब्रह्मणि बुद्ध्याद्युपाधिसंयोगः । बुद्ध्याद्युपाधिसंयोगाद्ब्रह्मणि भेद इतीतरेतराश्रयत्वम्

श्रुतप्रकाशिका

अत्र भेदस्यौपाधिकत्व कथमवगम्यतइत्यत्राह—तत्रेति । तत्स्वरूपापत्तिव्यपदेशो भेदनिषेधश्चाभेदस्यानौपाधिकत्वज्ञापकाविन्यर्थः । मुक्तौ भेदनिषेधादेव भेदस्यौपाधिकत्वमप्यर्थसिद्धम्, मुक्तौ भेदं दर्शयश्चोदयति ननुचेति । सहशब्दो भोक्तृसाहित्यपरइति चोदयितुरभिप्राय. । भोग्यसाहित्यबुद्ध्या परिहरति–नैतदिति । भेदप्रतीतिं परिहरिष्यन् मुक्तौ भेदस्य श्रुतिविरुद्धता दर्शयति–नान्यइति । भेदप्रतीतिं परिहरति सोऽश्नुतइति । 'सोऽश्नुत' इति वाक्येनोक्त भवतीत्यन्वयार्थः, ब्रह्मणा सहगुणानश्नुते गुणाश्च ब्रह्मचानुभवतीति किं ब्रह्म पृथग्भूतोऽश्नुते? उताऽपृथग्भूतइत्यपेक्षायां तद्वाक्यान्तरगम्यम् । अतो नात्र भेदप्रतीतिरितियावत्, एतदुपपादयति–अन्यथेति । अप्राधान्य भोक्त्रन्तरापेक्षया दोष', भोग्यभूतस्वगुणापेक्षया न दोष इतिभावः । परादाहृतसूत्रस्य स्वाभिमतमर्थमाह–जगदिति । ब्रह्मणा मुक्तस्यच भेदेसति जगद्व्यापारवर्जत्वप्रसङ्गान्नभेदइति सूत्रार्थइत्यर्थ', तदुपपादयति–अन्यथेति । अभेदस्य स्वाभाविकत्व निगमयति तस्मादिति मुक्तौ भेदनिषेधादर्थसिद्ध भेदस्यौपाधिकत्वमेवकारेणाभिप्रेतम् । उपाधि. कइत्यपेक्षायामाह—भेदस्त्विति । औपाधिकत्ववैषम्यपरस्तुशब्दः शङ्काद्योतको वा ॥

ब्रह्मणो विभुत्वनिरवयवत्वाभ्यां जीवगतउपाधिर्ब्रह्मण्येवेति तदसत्प्रदेशाभावाज्जीवेश्वरभेदो न सम्भवतीत्यत्राह–यद्यपीति । अन्योन्याश्रयमाशङ्क्याह–नचेति । ईश्वरादेः कर्मकृतबुद्ध्याद्युपाधिसम्बन्धाभावात् उपाधिसंयोगस्य भेदपूर्वं

### श्रीभाष्यम्

उपाधेस्तत्संयोगस्यच कर्मकृतत्वात्, तत्प्रवाहस्यचानादित्वात्। एतदुक्तंभवति, पूर्वकर्मसम्बद्धाज्जीवात् स्वसम्बद्धएवोपधिरुत्पद्यते तद्युक्तात्कर्म एवंबीजाङ्कुरन्यायेन कर्मोपाधिसम्बन्धस्यानादित्वान्नदोष इति। अतो जीवानां परस्परं ब्रह्मणाचाभेद एव स्वाभाविकः भेदस्त्वौपधिकः उपाधीनां पुनः परस्परं ब्रह्मणाचाभेदवत् भेदोऽपि स्वाभाविक. उपाधीनामुपाध्यन्तराभावात्, तदभ्युपगमेऽनवस्थानाद्यातो जीवकर्मानुरूपं ब्रह्मणो भिन्नाभिन्नस्वभावाएवोपाधयउत्पद्यन्त इति ॥

अत्रोच्यते–अद्वितीयसच्चिदानन्दब्रह्मध्यानविषयविधिपरं वेदान्तवाक्यजातमिति वेदान्तवाक्यैरभेदः प्रतीयते। भेदावलम्बिभिः कर्मशास्त्रैः प्रत्यक्षादिभिश्च भेद.प्रतीयते भेदाभेदयोः परस्परविरोधात् अनाद्यविद्यामूलतयाऽपि भेदप्रतीत्युपपत्तेरभेदएव परमार्थइत्युक्तम्। तत्र यदुक्तं भेदाभेदयोरुभयोरपि प्रतीतिसिद्धत्वान्नविरोध इति। तदयुक्तम्। कस्माच्चित्कस्यचिद्विलक्षणत्वंहि तस्मात्तस्य भेदः तद्विपरीतत्वंचाभेदः। तयोस्तथाभावातथाभावरूपयोरेकत्र सम्भवमनुन्मत्तः कोब्रवीति। कारणात्मना जात्यात्मनाचाभेदः कार्यात्मना व्यक्त्यात्मना च भेद. इत्याकारभेदादविरोध इतिचेत्—न; विकल्पासहत्वात्। आकारभेदादविरोधं वदतः किमेकस्मिन्नाकारे भेदः आकारान्तरेचाभेद इत्यभिप्रायः, उताकारद्वययोगिवस्तुगतावुभावपीति। पूर्वस्मिन्कल्पे व्यक्तिगतो भेदः जातिगतश्चाभेदइति नैकस्य द्व्यात्म-

### श्रुतप्रकाशिका

कत्वं प्रवाहानादितया परिहरति उपाधेरिति। कथमुपाधितत्संयोगकर्मणां प्रवाहानादित्वं तेन चान्योन्याश्रयपरिहारःकथमितिशङ्कायां तद्विवृणोति। एतदुक्तमिति। तद्युक्तात्कर्मेति। कर्मवश्यत्वंहि जीवत्वम् उपाधिना जीवत्वं जीवभावादुपाध्यन्तरमित्यनादिरित्यर्थः, फलितमर्थमाह–अतइति। अचिदंशे वैषम्यमाह–उपाधीनांपुनरिति। पुनस्त्वर्थः वैषम्यहेतुद्वयमाह—उपाधीनामिति। भिन्नाभिन्नत्वपक्षमुपसंहरति अतो जीवकर्मेति ॥

अथ भेदाभेदपक्षं ध्याननियोगवादी दूषयति अत्रोच्यतइत्यादिना पूर्वं यदपि कैश्चिदुक्तमिति प्रक्रान्तस्य पक्षस्योत्थापक सङ्गतिस्थलं दर्शयितुमाह–अद्वितीयेति। तत्सङ्गतिस्थल दर्शयति तत्र यदुक्तमिति। भेदाभेदविषयप्रतीतिं दूषयिष्यन्पूर्वं तयोर्विरोधमुपपादयितु तत्स्वरूपमाह—कस्माच्चिदिति। विलक्षणत्वमन्यत्व इदमिदं न भवति इदमिदंभवतीतिहि भेदाभेदविषयप्रतीतिः ततःकिमित्यत्राह–तयोरिति। भेदाभेदइति नकस्याचिद्धर्मस्य सज्ञा लोकप्रसिध्यनुगुणोऽर्थो भेदाभेदशब्दस्य स्वीकृतश्चेत् भावाभावयोर्विरोधोऽवर्जनीयइत्यर्थः, किंच अनेन क्वचिदपि विरोधो नास्तीति वक्तु न शक्य त्रिविधविरोधोपलम्भेः यदि भावाभावयोर्न विरोधः तर्हि भिन्नाभिन्नत्वं भवति नभवतीति स्वपरवचसोरपि विरोधाभावस्स्यात् परोक्तं पिण्डद्वयभेदाभेदस्याकारभेदादविरोधमनुवदति। कारणात्मनेति। विकल्प्य दूषयति नेत्यादिना। एकस्मिन्नाकारइति। आकारशब्दः पदार्थपरः पूर्वस्मिन्कल्पइति। तत्र जातिव्यक्त्योः किं परस्परं भेदः उताभेदः!

### गूढार्थसंग्रहः

इत्यादिना दूषितम्। ततोऽधिकदोषान् वक्तुमारभते—तत्र यदुक्तमित्यादिना। भामत्या–'तस्माद्भेदाभेदयोरन्यतरस्मिन् अवहेये अभेदोपादानैव भेदकल्पना' इत्यारभ्य 'नायमयमिति च भेदग्रहस्य प्रतियोगिग्रहसापेक्षत्वात्

## श्रीभाष्यम्

कता। जातिर्व्यक्तिरिति चैकमेव वस्त्विति चेत् तर्ह्याकारभेदादविरोधः परित्यक्तः स्यात्। एकस्मिंश्च विलक्षणत्वतद्विपर्ययौ विरुद्धावित्युक्तम्। द्वितीये तु कल्पे अन्योन्यविलक्षणमाकारद्वयमप्रतिपन्नं च तदाश्रयभूतं वस्त्विति तृतीयाभ्युपगमेऽपि त्रयाणामन्योन्यवैलक्षण्यमेवोपपादितं स्यात् न पुनरभेदः। आकारद्वयनिरुह्यमाणाविरोधं तदाश्रयभूते वस्तुनि भिन्नाभिन्नत्वमिति चेत् स्वस्माद्विलक्षणं स्वाश्रयमाकारद्वयं स्वस्मिन्विरुद्धधर्मद्वयसमावेशनिर्वाहकं कथं भवेत्? अविलक्षणं तु कथंतराम्? आकारद्वयतद्वतोश्च द्व्यात्मकत्वाभ्युपगमे निर्वाहकान्तरापेक्षयाऽनवस्था स्यात्। न च सम्प्रतिपन्नैक्यव्यक्तिप्रतीतिवत् ससामान्येऽपि वस्तुन्येकरूपा प्रतीतिरुपजायते? यत इदमित्थमिति सर्वत्र प्रकारप्रकारितयैव सर्वा प्रतीतिः ; तत्र प्रकारांशो

## श्रुतप्रकाशिका

उत भेदाभेद इति विकल्पत्रयमभिप्रेत्य प्रथमं शिरो दूषयति व्यक्तिगत इति। द्वितीयमनुवदति जातिरिति। दूषयति—तर्हीति। विरोधास्त्वित्यन्येवेत्यर्थः, तृतीयं दूषयति एकस्मिंश्चेति। जातिर्व्यक्तिर्भवति न भवतीति भावाभावविरोधः स्थित एवेत्यर्थः। कण्ठोक्तपूर्वविकल्पे द्वितीयं शिरो दूषयति द्वितीये तु कल्पे इति। अत्र तृतीयस्य जातिव्यक्तिव्यतिरिक्तस्य वस्तुनोऽप्रतिपन्नत्वं नामैकं दूषणमधिकं, तदिदमप्रतिपन्नं चेत्यनेनाभिप्रेतम्। प्रतिपन्नत्वाभ्युपगमेऽपि दूषणमाह— तृतीयाभ्युपगमेऽपीति। न पुनरिति। अन्यथा त्रित्वाभावादित्यर्थः॥

अथ तृतीये वस्तुन्याकारद्वयं भेदाभेदयोर्निर्वाहकत्वेनाविरोधित्वं शङ्कते- आकारद्वयेति। इदमाकारद्वयं किं स्वाश्रयेण भिन्नं उताभिन्नं उत भिन्नाभिन्नमिति विकल्पत्रयमभिप्रेत्य प्रथमं शिरो दूषयति स्वस्मादिति। स्वशब्दत्रयमप्याश्रयपरं भेदाभेदयोरेकाश्रयत्वेन हि विरोधः अविरोधकाकारद्वयं हि न भेदाभेदयोराश्रयभूतम्। अतो न तदविरोधनिर्वाहकम्। उष्णगतं पैङ्गल्यमौज्ज्वल्यं चाकारद्वयं अग्नौ शीतोष्णत्वरूपविरुद्धधर्मद्वयसमावेशनिर्वाहकं न भवतीत्यर्थः। द्वितीयं शिरो दूषयति अविलक्षणमिति। पूर्वमाकारद्वये सत्यपि तस्य विरुद्धधर्मद्वयनिर्वाहकत्वायोग उक्तः अत्राकारद्वयमेव नास्तीति नितरां विरुद्धधर्मसमावेशायोग इत्यभिप्रायेण कथंतरामित्युक्तम्। तृतीयं शिरो दूषयति आकारद्वयतद्वतोरिति। आकारद्वयस्य तदाश्रयस्य च भिन्नाभिन्नत्वनिर्वाहकमाकारद्वयान्तरमपेक्षितम्। तस्यापि स्वाश्रयेण भिन्नाभिन्नत्वमस्ति चेत् तदविरोधनिर्वाहकाकारद्वयान्तरमपेक्षितमित्यनवस्था स्यादित्यर्थः॥

अथ किं दृष्टेऽनुपपन्नमिति शङ्कायां भेदाभेदविषयप्रतीतिं दूषयति—न चेति। हेतुमाह—यत इति। तस्यां प्रतीतौ प्रकारप्रकारिणौ विविच्य दर्शयति तत्रेति। अनेनेदमपि परिहृतं मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यम्। सहोपलम्भनियमः एकशब्दानुविद्धप्रत्ययः प्रथमपिण्डग्रहणे जातिव्यक्त्योरभेदप्रतीतिश्चेति हेतुचतुष्टयम्। अपृथक्सिद्धविशेषणत्वं मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यहेतुः अपृथक्सिद्धिश्च प्रकारप्रकारिणोस्सम्बन्धनियमादेवोपपन्ना अतः प्रकारप्रकारिभावप्रतिपन्नभेदविरुद्धाभेदकल्पनाया नावकाशः। सम्बन्धनियम एव सहोपलम्भनियमहेतुश्च। एकोऽयं गौरिति प्रत्ययोऽप्येको दण्डीतिवद्विशेष्यैक्यविषयः न तु विशेषणविशेष्यैक्यविषयः प्रथमपिण्डग्रहणेऽपि प्रकारप्रकारिभावाद्भेदेनैव प्रतीतिः। किंच सहत्वमपि भेदसाधकं द्वयोरेव हि साहित्यम्। सहोपलम्भनियमश्च संप्रतिपन्ने भिन्नेऽभिन्ने च न दृष्ट इत्यसाधारणानैकान्तिकत्वान्नोभयसाधकः। भिन्नेष्वभिन्नेषु चादृष्टस्य भेदाभेदसाधकत्वेऽभ्युपगम्यमाने नित्येभ्योऽनित्येभ्यश्च व्यावृत्तं गन्धवत्त्वं पृथिव्या नित्यत्वानित्यत्वसाधकं स्यात्। किंच साधननियमस्साध्यनियमहेतुरिति सहत्वानियमो भेदनियमहेतुरेव। अत्र जाति-

## श्रीभाष्यम्

जातिः प्रकारांशो व्यक्तिरिति नैकाकारप्रतीतिः; अतएव जीवस्यापि ब्रह्मणो भिन्नाभिन्नत्वं न सम्भवति। तस्मादभेदस्यानन्यथासिद्धशास्त्रमूलत्वादनाद्यविद्यामूल एव भेदप्रत्ययः। नन्वेवं ब्रह्मण एवाज्ञत्वं तन्मूलाश्च जन्मजरामरणादयो दोषाःप्रादुष्ष्युः। ततश्च 'यस्सर्वज्ञस्सर्ववित्' (मु.२.२.७) 'एष आत्माऽपहतपाप्मा' (छा.८.१.५) इत्यादीनि शास्त्राणि बाध्येरन्, नैवम् अज्ञानादिदोषाणामपरमार्थत्वात्। भवतस्तूपाधिब्रह्मव्यतिरिक्तं वस्त्वन्तरमनभ्युपगच्छतो ब्रह्मण्येवोपाधिसंसर्गस्तत्कृताश्च जीवत्वाज्ञत्वादयो दोषाः परमार्थतएव भवेयुः। नहिब्रह्मणि निरवयवे अच्छेद्ये सम्बध्यमाना उपाधयस्तच्छित्वा भित्वावा सम्बध्यन्ते, अपितु ब्रह्मस्वरूपे संयुज्य तस्मिन्नेव स्वकार्याणि कुर्वन्ति। यदि मन्वीत उपाध्युपहितं ब्रह्मजीवः सचाणुपरिमाणः। अणुत्वंचावच्छेदकस्य मनसोऽणुत्वात्। सचाच्छेद्योऽनादिः। एवमुपाध्युपहितेंशे सम्बध्यमाना दोषा अनुपहिते परे ब्रह्मणि न सम्बध्यन्त इति—अयंप्रष्टव्यः किमुपाधिना छिन्नो ब्रह्मखण्डोऽणुरूपो जीवः उताच्छिन्नएवाणुरूपोपाधिसंयुक्तो ब्रह्मप्रदेशविशेषः, उतोपाधिसंयुक्तं ब्रह्मस्वरूपम्, अथोपाधिसंयुक्तं चेतनान्तरं, अथोऽपाधिरेवेति। अच्छेद्यत्वाद्ब्रह्मणः प्रथमःकल्पो न कल्पते आदिमत्त्वं च जीवस्य स्यात् एकस्यसतो द्वैधीकरणंहि छेदनम्। द्वितीयेतु कल्पे ब्रह्मणएव प्रदेशविशेषे उपाधिसंबन्धादौपाधिकास्सर्वे दोषास्तस्यैव स्युः। उपाधौ गच्छत्युपाधिना स्वसंयुक्तब्रह्मप्रदेशाकर्षणायोगादनुक्षणमुपाधिसंयुक्तब्रह्मप्रदेशभेदात् क्षणेक्षणे बन्धमोक्षौ च स्याताम् आकर्षणेत्वाच्छिन्नत्वात् कृत्स्नस्य ब्रह्मण

## श्रुतप्रकाशिका

त्र व्यक्तिरिति प्रदेशभेदाग्रहण जातेः पिण्डे व्याप्यवृत्तित्वात् तच्च सहोपलम्भनियमान्तर्गतम्। देशतःकालतश्चोपलम्भनियमोहि सहोपलम्भनियमः। अतो देशत कालतश्च सम्बन्धनियमकृतस्सहोपलम्भनियमः। किंच सहोपलम्भनियमेऽसिद्धः इदं रजतमित्यत्र शुक्तित्वजातिव्यतिरेकेणाधिष्ठानभूतव्यक्तिप्रतीतेः, अतो नैक्यसाधकत्वमिति ॥

लौकिकवस्तुनि भेदाभेदयोर्विरुद्धत्वमुपजीव्य वैदिकेऽपि तदसम्भवमाह— अतएवेति। भेदाभेदयोर्विरोधेनैव सन् वस्तुनि तयोरनुपपन्नत्वादित्यर्थः। भेदाभेदनिरासमुपजीव्याभेदस्यैव तात्त्विकतामाह—तस्मादिति। दोषसम्बन्धमुखेन चोदयति नन्विति। अपरमार्थतया परिहरति नैवमिति। परोक्तदोषप्रसक्तिं वदति—भवतस्त्विति। तदुपपादयति—नहीति। अङ्गुल्यादेरिव छेदो नसंभवतीत्यछेद्यत्व ब्रह्मणः तस्य हेतुर्निरवयत्व च भिदा अच्छिन्नत्वेऽपि पाणिपादादिवत् प्रतिनियतप्रदेशभेदेनेत्यर्थः। प्रदेशभेदेन छेदनेन वा ब्रह्मणि सम्बन्धमुपाधयो न हन्ति निरवयवत्वादच्छेद्यत्वाच्चेत्यर्थः। निरवयवत्वेऽप्यच्छेद्यत्वेऽपि गगनवदुपहितानुपहितांशभेदेन सदोषत्वनिर्दोषत्वोपपत्तिं दङ्कते— यदिमन्वीतेति। उपाध्यवच्छेदाज्जीवभावः, जीवभावादुपाध्यवच्छेदः कर्मणा जीवभावः तस्य कर्मेति चान्योन्याश्रयपरिहारायानादिरित्युक्तम् ॥

दूषयितुमाह—अयंप्रष्टव्यइति। विकल्पयति किमिति। श्रुताणुशब्दस्य सूक्ष्मपरत्वाभिप्रायस्सत्वात्तृतीयकल्पोदयः। चतुर्थपञ्चमौ कल्पान्तराभ्यां विनागतिर्नास्तीत्यभिप्रायेणकृतौ नतु परभ्युपगत्या। प्रकाशशब्दस्य जीवेऽप्युपचारात्पृथक् चतुर्थःकल्पः। उपाधिब्रह्मणोर्भिन्नाभिन्नत्वाभ्युपगमात्पञ्चमः। प्रथमं विरोधं दूषयति अच्छेद्यत्वादिति। दूषणान्तरमाह—आदिमत्त्वमिति। तदुपपादयति एकस्य सतइति। द्वितीय दूषयति द्वितीयेत्विति। दूषणान्तरमाह—उपाधाविति आकर्षणेनविना तत्परिहारासम्भवात्तदाशङ्क्याह—आकर्षणेचेति। अनुपपत्त्या तदनभ्युपगममाशङ्क्य पूर्वोक्तदूषणेन

### श्रीभाष्यम्

आकर्षणं स्यात् । निरंशस्य व्यापिन आकर्षणं नसम्भवतीतिचेत् तर्हि उपाधिरेव गच्छतीति पूर्वोक्त एव दोषस्स्यात् । अच्छिन्नब्रह्मप्रदेशेषु सर्वोपाधिसंसर्गे सर्वेषां च जीवानां ब्रह्मणएव प्रदेशत्वेनैकत्वेन प्रतिसन्धानं स्यात् । प्रदेशभेदादप्रतिसन्धानेचैकस्यापि स्वोपाधौ गच्छति प्रतिसन्धानं न स्यात् । तृतीयेतु कल्पे ब्रह्मस्वरूपस्यैवोपाधिसंबन्धेन जीवत्वापातात् तदतिरिक्तानुपहितब्रह्मासिद्धिस्स्यात् । सर्वेषु च देहेष्वेक एव जीवस्स्यात् तुरीयेतु कल्पे ब्रह्मणोऽन्यएव जीवइति जीवभेदस्यौपाधिकत्वं परित्यक्तंस्यात् । चरमे चार्वाकपक्ष एव परिगृहीतस्स्यात् । तस्मादभेदशास्त्रबलेन कृत्स्नस्य भेदस्याविद्यामूलत्वमेवाभ्युपगन्तव्यम् । अतःप्रवृत्तिनिवृत्तिप्रयोजनपरतयैव शास्त्रस्य प्रामाण्येऽपि ध्यानविशेषतया वेदान्तवाक्यानां ब्रह्मस्वरूपे प्रामाण्यमुपपन्नमिति ॥

तदप्ययुक्तम् ध्यानविधिशेषत्वेऽपि वेदान्तवाक्यानामर्थसत्यत्वे प्रामाण्यायोगात् । एतदुक्तंभवति ब्रह्मस्वरूपगोचराणि वाक्यानि किं ध्यानविधिनैकवाक्यतामापन्नानि ब्रह्मस्वरूपे प्रामाण्यं प्रतिपद्यन्ते उत स्वतन्त्राण्येव । एकवाक्यत्वे ध्यानविधिपरत्वेन ब्रह्मस्वरूपेतात्पर्यं नसम्भवति । भिन्नवाक्यत्वे प्रवृत्तिनिवृत्तिप्रयोजनविरहादनवबोधकत्वमेव

### श्रुतप्रकाशिका

व्युदस्यति । निरंशस्येति । दूषणान्तरमाह—अच्छिन्नेति । तत्परिहारमाशङ्कयाह—प्रदेशभेदादिति । तृतीय शिरोदूषयति तृतीयेत्विति । अनुपहितब्रह्मासिद्धिस्स्यादिति । निर्दोषमङ्गळगुणकत्वश्रुतीनामनुपहितब्रह्मविषयत्वंहि पराभ्युपेतम् । जीवेश्वरभेदाभावप्रसङ्गो जीवाना परस्परभेदाभावप्रसङ्गश्चेत्यर्थः । चतुर्थपञ्चमौ दूषयति तुरीयेत्वित्यादिना । चरमइति * अचिद्द्रव्यस्यैव चेतनत्ववचनात्* तस्य चेतनब्रह्मनादात्म्यानुपपत्तिश्चेत्यभिप्रायः । भेदाभेददूषणमुपसंहरन् स्वमतसिद्धमाह तस्मादिति । ध्यानविधिशेषतया ब्रह्मणस्सिद्धिमुपसहरति अतइति ॥

ध्याननियोगवादिपक्ष मीमासको दूषयति तदप्ययुक्तमिति । न केवल निष्प्रपञ्चीकरणविवादएवानुपपन्नः इदमपि मतमनुपपन्नमित्यपिशब्दस्य भावः । कुतइत्यत्राह—ध्यानेति । ध्यानविधिशेषत्वे कथमर्थसत्यत्वे तात्पर्यायोगः विधिशेषत्वं हित्वा स्वातन्त्र्येण वा ब्रह्मणि प्रामाण्य स्यादित्यत्राह—एतदुक्तमिति । दूषयितु विकल्पयति ब्रह्मस्वरूपेति । प्रथमं शिरोदूषयति एकेति । एकवाक्यत्व महावाक्यैकत्वम् । द्वितीयदूषयति भिन्नेति । अनवबोधकत्वं * दुःखसाध्यश्रवणादौ

### गूढार्थसंग्रहः

एकत्वग्रहस्यचान्यानपेक्षत्वात् । अभेदोपादानैवानिर्वचनीयभेदकल्पनेति साम्प्रतम् । तथा च श्रुतिः 'मृत्तिकेत्येवसत्यम्' इति 'तस्मात्कूटस्थनित्यतैव पारमार्थिकी न परिणामिनित्यता' इति सिद्धम् इति । यदुक्त तदनुसारेणैव उपसहरति—तस्मादभेदशास्त्रबलेनेत्यादिना । तदप्ययुक्तमिति । वेदान्तवाक्याना विधिवाक्यशेषत्व नास्तीति मतवत् विधिशेषत्ववादिमतमप्ययुक्तमित्यर्थः । विधिशेषत्वेऽर्थसत्यत्वे प्रामाण्य नसभवतीति ध्याननियोगवादिमतं दूषयता शङ्कराचार्यादीनामभिप्रेतं दोषं दर्शयति—वेदान्तवाक्यानामर्थसत्यत्वे प्रामाण्यायोगादिति । विधिवाक्यशेषत्वस्वातन्त्र्यविकल्पेन औपनिषदसर्वमतेषु दोष निरूपयति—एतदुक्तं भवतीत्यादिना । स्वातन्त्र्येऽपि मूलप्रमाणदार्ढ्येन ध्येयार्थसत्यत्वस्य विवक्षा

### श्रीभाष्यम्

**नचवाच्यं ध्याननाम स्मृतिसन्ततिरूपं, तच्च स्मर्तव्यैकनिरूपणीयमिति ध्यानविधेस्स्मर्तव्य विशेषाकांक्षायाम् ' इदंसर्वं यदयमात्मा '(बृ.६.५.७) ' ब्रह्मसर्वानुभूः ' (४.५.१९) ' सत्यंज्ञा नमनन्तंब्रह्म '(तै.आन.अ.१) इत्यादीनि स्वरूपतद्विशेषादीनि समर्पयन्ति तेनैकवाक्यतामा-पन्नान्यर्थसद्भावे प्रमाणमिति ध्यानविधेस्स्मर्तव्याविशेषापेक्षत्वेऽपि ' नामब्रह्म ' (छा.७.१.५) इत्यादि दृष्टिविधिवदसत्येनाप्यर्थविशेषेण ध्याननिर्वृत्युपपत्तेः ध्येयसत्यत्वानपेक्षणात् । अतो वेदान्तवाक्यानां प्रवृत्तिनिवृत्तिप्रयोजनविधुरत्वाद्ध्यानविधिशेषत्वेऽपि ध्येयविशेष स्वरूपसमर्पणमात्रपर्यवसानात्, स्वातन्त्र्येऽपि बालातुराद्युपच्छन्दनवाक्यवत् ज्ञानमात्रे-णैव पुरुषार्थपर्यन्ततासिद्धेश्च परिनिष्पन्नवस्तुसत्यतागोचरत्वाभावात् ब्रह्मणश्शास्त्रप्रमाण-कत्वं न सम्भवतीति प्राप्तम् ॥ तत्र प्रतिपाद्यते (तत्तुसमन्वयादिति)**

### श्रुतप्रकाशिका

प्रवृत्त्ययोगात् । एकवाक्यत्वपक्षे विधिशेषतया ब्रह्मणस्सिद्धिमाशङ्क्याह—**नचवाच्यमिति** । कुतइत्यत्राह—**ध्यानविधे रिति** । **' नामब्रह्मेत्युपासीत '** इत्यादिषु दृष्टिविधिषु विशेष्यसत्यत्वेऽपि विशेषणासत्यत्वेन विशिष्टाऽसत्य त्वमवर्जनीयम् इह च तथैवेत्यर्थः । सार्थसंग्रहं पूर्वपक्षमुपसंहरति **अतइति** । ननु * प्रथमसूत्रे विधिशेषतया ब्रह्मणि प्रामाण्यसमर्थनमेतदधि-करणपूर्वपक्षे विधिशेषतया तत्सिद्धिप्रतिक्षेपश्च कथं घटते । इत्थं तत्रतु फलत्वेन सिद्धिरुक्ता फलतया सिद्ध्यतः पारमार्थ्या भावे स्वर्गादेरप्यसत्यत्वप्रसङ्गात् तत्पारमार्थ्यं सिद्ध्यतीति फलतया तत्सिद्धिसमर्थनं साधीय., अत्रतु ध्यानविधिकर्मत्वेन तत्सिद्धिर्व्युदस्ता नतु फलतया तत्सिद्धिरित्यविरोध. ॥

एवमुपन्यस्त पूर्वपक्षमभिप्रेत्य सूत्रकारेणैतत्सूत्रं प्रणीतमित्याह—**तत्रेति** । प्रतिपद्यते सिद्धान्त.प्राप्नोति ज्ञायत इति

### गूढार्थसङ्ग्रहः

वेदान्तवाक्येषु सम्भवतीत्याशङ्कते—**नचवाच्यमित्यादिना** । **ध्येयसत्यत्वानपेक्षणादिति** । वेदान्तवाक्यविहितोपासनस्य क्वचिदसत्यार्थविषयकत्वाङ्गीकारे तन्न्यायेनान्यत्राप्यसत्यार्थविषयकत्वमेव स्यात् । ' सिंहोदेवदत्त ' इत्यत्र आरोपनिराकरण पूर्वकं वेदे न क्वापि रूपकमिति व्यवस्थापयता भट्टपादाना वेदप्रामाण्यभङ्गप्रसङ्गएव तथाऽङ्गीकारे बीजमिति पूर्वमेवोपपा दनेन निर्विशेषवादिमते सगुणविद्याया अपि भ्रमत्वाङ्गीकारेण मण्डनेन संसर्गानवगाहिवेदवाक्यजन्यबोधानङ्गीकारेऽपि शङ्क राचार्यादिभिः धर्मसंसर्गाविषयकबोधएवाद्रियत इति तस्य च क्वापि दार्शनिकासमतत्वेन तत्साधनासम्भवात् । सर्वसम-तबोधस्तु भ्रमात्मकएव । अतश्च मूलप्रमाणदार्ढ्येनापि प्रमात्वं नसम्भवति मण्डनमते ' तत्त्वमसि ' इत्यत्र संसर्गावगाहिबो धाङ्गीकारेण तद्विरोधेन मानसापरोक्षं नसम्भवतीति सुरेश्वराचार्यैः वार्तिके तन्मतं दूषितम् । अतः ध्यानविधिशेषत्वाङ्गीकारे निर्विशेषवादिमते ध्यानस्य प्रमात्मकत्वं न सम्भवतीतिभावः ॥

**ब्रह्मणश्शास्त्रप्रमाणकत्वं नसम्भवतीति** । सर्वमतेषु न सम्भवतीत्यर्थः । नियोगवादिमतद्वये, मोक्षोपायविधिर्नास्तीति शङ्कराचार्य,मण्डन,वाचस्पतिमतेषु शाब्दापरोक्षत्वादिविवरणकारमते ध्यानविधिमङ्गीकृत्य वेदान्तानां नोपासनविधिशेषत्वं किंतु सिद्धार्थएव प्रामाण्यमिति सिद्धान्तिमतेऽपि सिद्धपरवाक्यानां प्रवृत्तिनिवृत्तिद्वारकप्रयोजनविरहेण तात्पर्यनिर्णा यकलिङ्गेष्वन्तर्गतफलरूपलिङ्गस्याभावे तत्र बोधतात्पर्यकल्पनमेव नसम्भवतीति वेदान्तविचारारम्भ एव विफलइतिभावः ॥ वेदान्तवाक्यानां विधिशेषत्वमनङ्गीकृत्य प्रयोजनपर्यवसायित्वं प्रागुपपादितमेव सूत्रार्थवर्णनमुखेन विशदयितुमारभते—

## श्रीभाष्यम्

**समन्वयः सम्यगन्वयः पुरुषार्थतयाऽन्वय इत्यर्थः । परमपुरुषार्थभूतस्यानवधिकातिशयानन्दस्वरूपस्य ब्रह्मणोऽभिधेयतयाऽन्वयात्**

## श्रुतप्रकाशिका

वाऽर्थः । समन्वयशब्द * विवरण व्याचष्ट समन्वयइत्यादिना । कस्य कनान्वय इत्यपेक्षायां पूरयन्वाक्यार्थं योज यति । परमेति । परमपुरुषार्थं वोपपादकमनवधिकेति पदम् । पुरुषेणार्थ्यत्वाद् पुरुषार्थत्वम्, आनन्दरूपतया पुरुषार्थत्वं

## गूढार्थसंग्रहः

समन्वयइत्यादिना । अन्वयः सम्बन्धः सम्बन्धश्च ब्रह्मणः शास्त्रेण वेद्यत्वरूपः । अत्र तच्छब्दस्य शास्त्रयोनित्वसूत्रार्थपरत्वेन तत्र 'यतो वा, आनन्दाद्ध्येव खलु' इति श्रुतेर्विवक्षितत्वेन तत्र आनन्दत्वरूपप्रवृत्तिनिमित्तधर्मपुरस्कारेण ब्रह्म. तेन सम्बन्ध एव सम्यक्सम्बन्ध. धर्मपरित्यागे न सम्यक्त्वम् एवमङ्गीकार एव 'अथातो ब्रह्मजिज्ञासा' इति प्रथमसूत्रे ब्रह्मण सन्देहच्छाविषयत्व यत्प्रतिपन्न तन्निर्वहतीति भावः ॥

अभिधेयतयाऽन्वयादिति । लक्षणया ब्रह्मणा वेद्यत्वसम्बन्ध. न समीचीनः । शक्यार्थे तात्पर्याभावस्य एव लक्ष्यार्थसम्बन्धस्य सम्यक्त्वम् शक्यार्थे न बाध इति प्रागेवोपपादितम् । अतः शक्यार्थस्य तात्पर्यविषयत्वेन वेद्यत्वरूपसम्बन्धः सम्यक्सम्बन्धइति भावः । प्रथमसूत्रे शब्दसामान्यस्य सिद्धेव्युत्पत्तिसमर्थनमुखेन औपनिषदब्रह्मणः प्राभाकरशङ्कानिरसनम् द्वितीयसूत्रे ब्रह्मशब्दस्य व्युत्पत्तिसमर्थनम् । ब्रह्मशब्दार्थसिद्ध्यनन्तर तस्य फलत्वनिर्धारणम् ननु तत.पूर्वम् । पुरुषशब्दार्थस्योपनिषत्तात्पर्यविषय वेन तत्र जगत्कारणत्वस्यान्तर्भूततया तस्य पारिणामिकारणरूपत्वासम्भवेन निमित्तकारणत्वरूपत्वे तस्यानुमानिकत्वेन 'अर्थेऽनुपलब्धे तत्प्रमाण बादरायणस्यानपेक्षत्वात्' (जै.सू.१.१.५) इति सिद्धान्तो नघटते, किंतु 'त प्रामाण्यमाप्तप्रामाण्यात्' (गौ.सू.२.१.६८) इति गौतमसिद्धान्त एव युक्त इत्याक्षेपस्य जन्माद्यधिकरणानन्तर प्राप्तस्य निरसनमन्तरा ब्रह्मशब्दव्युत्पत्तिसमर्थनं नसम्भवतीति ब्रह्मण फलत्वनिरूपणात्पूर्वं शास्त्रयोनित्वाधिकरण प्रवृत्तम् । अन न्तर फल व न समञ्जनीति प्राभाकरशङ्कानिरसन एव कर्मविचारानन्तर ब्रह्मविचारस्य कर्तव्यत्व सिद्ध्यति नत्वन्यथेत्य भिप्रेत्य चतुर्थसूत्रे फल न निर्धारितम् । अतश्च चतुरधिकरणी शास्त्रारम्भसमर्थनार्थेति सिद्धान्तः सुस्थ. । यथोक्तम्—
'व्युत्पत्त्यभाव. प्रतिपत्तिदौस्थ्यमन्येन सिद्धत्वमथाफलत्वम् । एतानिवै सूत्रचतुष्टयेनानारम्भमूलानि निराकृतानि ॥' इति । अत्र व्युत्पत्त्यभावः शब्दसामान्यस्य विवक्षितः ब्रह्मशब्दार्थस्य प्रतिपत्तिदौस्थ्य ब्रह्मशब्दव्युत्पत्त्यसम्भवमूलमभिप्रेतमिति प्रागुक्तार्थ एव एत पद्ये विवक्षितः । यथोक्तमाचार्यपादै.—

'द्वाभ्यामादौ प्रतीतिप्रजननमुचित सिद्धरूपे परास्मिन् द्वाभ्यां वैफल्यशङ्का तदनुपरिहृता शास्त्रतज्जन्यबुद्ध्योः । औचित्यानेकमाध्यस्वरसगतिमती प्राक्तनी वर्तनीय शास्त्रारम्भार्थमेक त्रितयमिहपर शास्त्रमित्याहुरेके ॥ अ.सा.२४
यत्तत्सेनेश्वरार्थैरगणि वकुलभृत्किङ्करैरब्जचक्रि व्यासार्येर्याचि च द्विरश्रुतमिति विशद विष्णुचित्तैर्विवव्रे ।
अत्रैव शेषकल्पादहमपि विदुषो वादिहंसाम्बुवाहात् अद्धा निर्धार्यतेऽतः चतुरधिकरणी ब्रह्मचिन्तोपमार्था ॥' २५इति

अत्रोचित्य द्वाभ्यामादाविति पूर्वार्धे व्यक्तम् । शास्त्रारम्भार्थमेकमिति नयप्रकाशिकायां मेघनादाचार्यैरुक्तम् । 'सर्वत्र प्रसिद्धोपदेशात्' इत्यत्र भाष्ये जिज्ञासाधिकरणार्थानुवादान्ते शास्त्रारम्भसिद्धये इत्युक्तम् । जिज्ञासाधिकरणान्ते भाष्ये ब्रह्मविचारारम्भो युक्त इति स्थितमिति च । इतराधिकरणार्थपरभाष्ये इत्य चापि नोक्तमिति मेघनादाचार्याणां सिद्धान्त. ।

## श्रीभाष्यम्

तत् शास्त्रप्रमाणकत्वं सिद्ध्यत्येवेत्यर्थः । निरस्तनिखिलदोषनिरतिशयानन्दस्वरूपतया परमप्राप्यं ब्रह्म बोधयन्वेदान्तवाक्यगणः प्रवृत्तिनिवृत्तिपरताविरहान्न प्रयोजनपर्यवसायीति ब्रुवाणो राजकुलवासिनः पुरुषस्य कौलेयककुलाननुप्र-

## श्रुतप्रकाशिका

तस्यानवधिकातिशयत्वात् परमपुरुषार्थत्वमिति भावः । स्वयमननुकूलस्य सुखसाधनस्यापि पुरुषार्थत्वमस्तीति तद्व्यावृत्तिः अनवधिकेत्यादिपदेन सिद्धा । तच्छब्दं व्याचष्टे । शास्त्रप्रमाणकत्वमिति । पूर्वपक्षव्यावर्तकतुशब्दलभ्यमर्थमाह— सिद्ध्यत्येवेति ॥

'तत्त्वमसि' इत्यादिस्वरूपोपदेशपरवाक्यार्थज्ञानमात्रेणाविद्यानिवृत्तिं तन्मुखेन वाक्यस्य प्रयोजनपर्यवसानं च वदतो मृषावादिनो ध्यानविधानवैयर्थ्यं स्यात्, वाक्यार्थज्ञानोपयोगित्वस्य दूषितत्वात्, मीमांसकपक्षे ब्रह्मणोऽसिद्धिरित्युभयविधदोषास्पृष्टेनाकारेण वेदान्तवाक्यानां ब्रह्मणि प्रामाण्यमुपपिपादयिषुस्तत्र प्रथमं ब्रह्मणस्स्वतस्सर्वेषां सर्वप्रकारभोग्यत्वेन पुरुषार्थत्वाधिक्यं प्रवृत्तिनिवृत्त्योर्दुःखात्मकत्वेन पुरुषार्थत्ववैकल्यं चाभिप्रयन् प्रवृत्तिनिवृत्तिविरहवतः पुरुषार्थपर्यवसानाभावनिबन्धनामप्रामाण्यशङ्कां परिहरति । निरस्तेति । राजकुलवासी राजकुलप्रसूतः राजकुलान्तरङ्गो वा । कौलेयकाः श्वानः, श्वोपजीविनो म्लेच्छा वा लक्ष्यन्ते । यद्यपि वाक्यगणस्थाने राजकुलवासी पुरुषः प्रतीयते । तथाऽप्यर्थवशाद्वाक्यार्थप्रतिपत्तृपुरुषस्थाने तन्निर्देशः फलितः, स्वतो निरवधिकपुरुषार्थपरवाक्यस्य प्रयोजनशून्यत्ववेदनमनुपपन्नमित्यर्थः ॥

## गूढार्थसंग्रहः

अधिकरणचतुष्टयस्य अधिकारिविषयसम्बन्धप्रयोजनोपपादनपरत्वं प्रागेवोपपादितम् । तेनैव चतुर्णामधिकरणानां शास्त्रारंभार्थत्वं सिद्धम् । समन्वयाधिकरणे च वेदान्तेऽपि उपासनविधिवाक्याधीनमोक्षार्थप्रवृत्तेः सिद्धान्तेऽङ्गीकारेण तथैव प्रवृत्तेरकामेनापि स्वीकार्यतया सिद्धे व्युत्पत्तिसमर्थनं निष्फलमेव जातमिति शङ्कानिरासमुखेन ब्रह्मविचारे प्राथमिकप्रवृत्तेःसफलत्व समन्वयाधिकरण एव निर्णीतमिति चतुरधिकरण्याः शास्त्रारम्भार्थत्वमकामेनापि स्वीकरणीयम् । इत्थमर्थमभिप्रेत्यैव ईक्षत्यधिकरणारम्भे 'यतोवा इमानि' इत्यादिजगत्कारणवादिवाक्यप्रतिपाद्य सर्वज्ञं सर्वशक्ति समस्तहेयप्रत्यनीककल्याणगुणैकतानं ब्रह्मजिज्ञास्यमित्युक्तम्' इति भगवता उक्तम् । अधिकरणचतुष्टयानन्तरं जिज्ञास्यत्वानुवादः भगवता कृतः । एतत्स्वारस्यतु अधिकरणचतुष्टयस्य शास्त्रारंभार्थत्व एव ॥

एव वेदान्तसारे—'पुरुषार्थतया अन्वयस्समन्वयः शास्त्राख्यप्रमाणस्य पुरुषार्थपर्यवसायित्वेऽपि स्वस्य परस्य चानुभवितुः अविशेषेण स्वरूपेण गुणैः विभूत्या च अनुभूयमानं अनवधिकातिशयानन्दरूपमिति पुरुषार्थत्वेनाभिधेयतयाऽन्वयात् ब्रह्मणश्शास्त्रप्रमाणकत्वमुपपन्नतरमिति निरवद्य निखिलजगदेककारणं ब्रह्म वेदान्ताःप्रतिपादयन्तीत्युक्तम् । तस्यैकस्यैकदेव कृत्स्नजगन्निमित्तत्वं तस्यैवोपादानतया जगदात्मकत्व च नानुमानाधिगम्यमिति शास्त्रैकप्रमाणकत्वात्तस्यैव चानवधिकातिशयानन्दरूपतया परमपुरुषार्थत्वाद्वेदान्ताः प्रतिपादन्त्येवेति स्थिरीकृतम् । अतःपरं पादशेषेण जगत्कारणतया प्रधानपुरुषप्रतिपादनानर्हतया सर्वज्ञ सत्यसङ्कल्प निरस्ताविद्यादिसमस्तदोषगन्धमपरिमितोदारगुणसागरं ब्रह्मैव वेदान्ताः प्रतिपादयन्तीत्युच्यते' इति प्रोक्तम् । अधिकरणचतुष्टयस्य शास्त्रारंभार्थत्वे एव एतत्सूक्तिस्वारस्यम् । भाष्यसूक्तिष्वप्ययमर्थः अभिप्रेतइति विदुषा स्फुटम् । शास्त्रयोनित्वाधिकरणे भाष्ये परिणामिकारणत्वासम्भवानुपपत्तिमन्वारुह्य न्यायग्रन्थोक्त

### श्रीभाष्यम्

भेदेन प्रयोजनशून्यतां ब्रूते । एतदुक्तं भवति अनादिकर्मरूपाविद्यावेष्टनतिरोहितपरापरतत्त्वयाथात्म्य स्वस्वरूपावबोधानां देवासुरगन्धर्वसिद्धविद्याधरकिन्नरकिम्पुरुषयक्षराक्षसपिशाचमनुजपशुशकुनिसरीसृपवृक्षगुल्मलतादूर्वादीनां स्त्रीपुंनपुंसकभेदभिन्नानां क्षेत्रज्ञानां व्यवस्थितधारकपोषकभोग्यविशेषाणां मुक्तानां स्वस्यचाविशेषेणानुभवसम्भवे स्वरूपरूपगुणविभवचेष्टितैरनवधिकातिशयानन्दजनकं परं ब्रह्मास्तीति बोधयदेव वाक्यं प्रयोजनपर्यवसायि प्रवृत्तिनिवृत्तिनिष्ठतु यावत्पुरुषार्थान्वयबोधं न प्रयोजनपर्यवसायि, एवंभूतं परंब्रह्म कथंप्राप्यत इत्यपेक्षायां 'ब्रह्मविदाप्नोति '(तै.आ.१.अ) 'आत्मानमेव लोकमुपासीत'

### श्रुतप्रकाशिका

ब्रह्मणः कथमनवधिकानन्दरूपतया पुरुषार्थत्वाधिक्य कथ च प्रवृत्तिनिवृत्त्योः पुरुषार्थत्ववैकल्य स्वरूपपरवाक्यस्य पुरुषार्थपर्यवसान कुत्र दृष्टम् तथासति कथ ध्यानविधिसाफल्यमित्याकांक्षायामाह—एतदुक्तमिति । ब्रह्मणः पुरुषार्थताधिक्यमाह–अनादीत्यादिना । कर्मभिरनुभवप्रतिबन्धात् क्षेत्रज्ञाना तस्य पुरुषार्थत्वज्ञानाभावः । ननु तत्र तद्वैकल्यादित्यभिप्रायेणोक्तमनादिकर्मेति, देवासुरादिपरिगणन तेषा व्यवस्थितभोग्यत्वप्रदर्शनार्थम् । * योग्यानुपलब्धिशङ्काव्युदासायानुभवसम्भव इत्युक्तम् । तद्विषयज्ञानानुकूल्यंहि तदनुकूलत्वेन विना नसभवति अतोऽनवधिकातिशयानन्दजनकत्वोक्तया ब्रह्मणोऽनवधिकातिशयानुकूल्यत्व सिद्ध्यतीत्यानन्दत्वमुपपादित भवति, स्वरूपेत्यादिना सर्वप्रकारभोग्यत्वमुक्त तेन पुरुषार्थत्वाधिक्य सिद्धम् । प्रवृत्तीत्यादिना प्रवृत्तिनिवृत्त्योः पुरुषार्थत्ववैकल्यमुक्तम् । इष्टसुखलवसाधनतयोपादेयत्वात् । दुःखात्मकतया स्वतो भोग्यत्वाभावाच्च ॥

ध्यानादिविद्यानर्थक्य परिहरति । एवंभूतमिति । परोक्षज्ञानस्यापि सुखरूपत्वात् स्वरूपपराणि वाक्यानि—पुरुषार्थपर्यवसायीन्येव तदापरोक्ष्याकाङ्क्षिणस्तत्साधनज्ञापकत्वात् ध्यानविधायीनि वाक्यान्यपि न निष्फलानीत्यर्थः । इम-

### गूढार्थसङ्ग्रहः

निमित्तकारणत्वानुमानदूषणेन तस्य शास्त्रतात्पर्यविषयत्व साधितम् । सारेतु 'यतोवा' इति श्रुतौ उभयविधकारणत्वस्याभिप्रेतत्वेन तस्य शास्त्रतात्पर्यविषयत्वोक्तिर्नघटत इत्युक्तमिति भाष्यसारयोर्विशेषः । बह्वाचार्यसमतत्वादपि अधिकरण चतुष्टयस्य शास्त्रारम्भार्थत्व युक्तमिति 'यत्तत्सेनेश्वरार्यैः' इतिश्लोके सप्रदायोऽपि प्रदर्शितः ॥

प्रवृत्तिनिवृत्तिपरवाक्याना तदितरसिद्धपरवाक्यानां च वैलक्षण्यमुपपादयति–एतदुक्तंभवतीत्यादिना । परंब्रह्मास्तीति बोधयदेव वाक्यं प्रयोजनपर्यवसायीति । वाक्यात् बोधदशायामेव फलसाभः, एव तदनुसन्धानदशासु । प्रवृत्तिनिवृत्तिपरवाक्यानातु स्वस्य बोधातिरिक्तभावि पुरुषार्थसबन्धेनैव सप्रयोजनत्वमिति महान् विशेष इतिभावः । पर मते मोक्षसाधनविध्यनङ्गीकारेण भूतब्रह्मज्ञानमात्रात् पुरुषार्थ इत्युक्तिर्घटते । वृत्तिकारमते विधिवाक्याधीनोपासनप्रवृत्त्यनन्तरमेव मुक्तिफलमिति सिद्धान्तेन विधिवाक्याधीनप्रवृत्तिरवर्जनीयैवेति उक्तदिशा सफलत्वमकिंचित्करमिति शङ्कायां प्रथमचरमफलभेदेन वाक्याना सिद्धसाध्यपराणा सफलत्व सदृष्टान्तमुपपादयति—एवंभूतंपरंब्रह्म कथं प्राप्यत इत्यपेक्षायामित्यादिना । ज्ञानमात्रेण कृतकृत्यतेति परमत न श्रुत्यनुगुणमिति मत्वा 'ब्रह्मविदाप्नोति' इत्यादिश्रुत्युपादानम् । अत्र विधिप्रत्ययो न श्रूयत इति शङ्काया 'आत्मानमेवलोकमुपासीत' इति श्रुतिरुपात्ता । 'आत्मेत्येवोपासीत' इति प्रथमवाक्य

### श्रीभाष्यम्

(बृ ३ ४ १५) इति वेदनादिशब्दैरुपासनं ब्रह्मप्राप्त्युपायतया विधीयते। यथा स्ववेश्मनि निधिरस्तीति वाक्येन निधिसद्भावं ज्ञात्वा तृप्तस्सन् पश्चात्तदुपादाने च प्रयतते यथा च कश्चिद्राजकुमारो बालक्रीडासक्तो नरेन्द्रभवनान्निष्क्रान्तो मार्गाद्भ्रष्टो नष्ट इति राज्ञा विज्ञा तस्स्वयं चाज्ञातपितृक केनचिद्द्विजवर्येण वर्धितोऽधिगतवेदशास्त्रष्षोडशवर्षस्सर्वकल्या

### श्रुतप्रकाशिका

मर्थं दृष्टान्तेन दर्शयति यथेति । एवं परोक्षज्ञानजनकस्यैव वाक्यस्य पुरुषार्थपर्यवसायित्वेऽपि फलविशेषापेक्षया ध्यान प्रवृत्तिर्युक्ता यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'अग्निहोत्रं जुहु यात्स्वर्गकाम' इत्यादिषु दर्शपूर्णमासादीनामेकैकस्य स्वर्गसाधनत्वेऽपि फलविशेषापेक्षया कर्मान्तरारम्भकस्यैव कर्मण आवृत्तिश्चोपपद्यते । यथा पुत्रजन्मश्रवणसञ्जातहर्षस्यापि पश्चात्तन्मुखावलोकनसुखाशया प्रवृत्तिरुपपद्यते । तथात्रापीत्यभिप्राय

अत्र निधिराजकुमारदृष्टान्तद्वयं निदर्शितं विभागादुक्तम् । उभयगतं भोग्यत्वं ब्रह्मण्यस्तीति ज्ञापनाय 'तद्यथा-हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयु' इतिहि श्रुति । निधिरस्तीति वाक्यस्य पुरुषार्थत्वं दर्शयति तृप्तस्सन्निति । 'अविज्ञाता कुमारका' 'भगवतोऽहं पुत्र प्रेष्यशिष्यश्च' 'मातापिता भ्राता' 'भूतानां योऽव्ययः पिता' 'एक इन्द्रो जगतो बभूव' 'राजाधिराजस्सर्वेषाम्' इत्यादिश्रुतिस्मृत्यनुसारेण सर्ववि धभोग्यत्वप्रदर्शनाय राजकुमार इति भगवति राजत्वं चेतनेषु पुत्रत्वं चोपवर्णितम् । अत्र कुशलत्वसमाधिर्द्रष्टव्य । बाल क्रीडासक्त इत्यनेन चेतनानां बाह्यविषयप्रावण्यं सूचितम् । नरेन्द्रभवनान्निष्क्रान्त इत्यनेन भगवत्सकाशाद्बहिष्ट्व

### गूढार्थसंग्रह

परित्यज्य 'आत्मानमेव लोकमुपासीत' इति वाक्योपादानेन 'तद्यथेह कर्मचितो लोक क्षीयते एवमेवामुत्र पुण्यचितो लोक क्षीयते' इति श्रुति परोक्तदिशा उपासनफलस्यानित्यता नैव बोधयितुमीष्टे । आत्मन एव लोकशब्दार्थ फलत्वेन तस्य नित्यतया 'एवमेवामुत्र पुण्यचित' इत्यत्र पुण्यशब्द नोपासनपर तदतिरिक्तकर्मण्येव पुण्यशब्दप्रसि द्धेरित्यर्थ सूचित । अत्र उपनिषद्द्वये परमते निर्गुणविद्यैव विवक्षिता। अत्रोपासनाविधि स्फुटतया आवृत्त्यधिकरणोक्त दिशा 'यदाह्येवैष' इति श्रुत्यनुसारेण ब्रह्मविदित्यादावपि उपासनमेव विवक्षितम् । अयमर्थ वेदार्थसंग्रहादौ स्फुट ॥

स्ववेश्मनि निधिरस्तीति । एतेन 'निधिमानोपभूभाग' इति शालिकानाथोपात्तवाक्यस्यानुभवानुगुण फल प्रदर्शितम् । द्रमिडाचार्यसिद्धान्तेन तत्सम्मतराजकुमारनयविवरणेन वाक्यद्वयस्य सप्रयोजनत्वमुपपादयति—कश्चिद्राज कुमारइत्यादिना । नरेन्द्रभवनान्निष्क्रान्त इति । कश्चित्किल राजपुत्र जातमात्र एव मातापितृभ्यामपविद्ध व्याधगृ संवर्धितोऽसावमुष्य वश्यतामजानन् व्याधजातिप्रत्यय व्याधजातिकर्माण्येवानुवर्तते, न राजाऽस्मीति राजजातीयकर्माण्य नुवर्तते' इति(बृ शा ४ १) भाष्य उक्तम् । स्वयं चाज्ञातपितृकइति । एतेन राजाऽस्मीति ज्ञानशून्यता नात्र विवक्षित अनन्तरमपि राजपुत्रत्वेनैव ज्ञानसंभवादिति सूचितम् । यदा कश्चित्परमकारुणिक राजपुत्रस्य राजश्रीप्राप्तियोग्यतां जानन् अमुष्य पुत्रता बोधयति न त्वं व्याध अमुष्य राज्ञ पुत्र कथञ्चिद्व्याधगृहमनुप्रविष्ट इति स एवं बोधित त्यक्त्वा व्याधजाति प्रत्ययकर्माणि पितृपैतामहीमात्मन पदवीमनुवर्तते 'राजाऽहमस्मीति' इति शङ्कराचार्यैरुक्तमर्थमेव परिष्कृत्य दर्शयति— केनचिद्द्विजवर्येणवर्धितइति। अत्र 'राजाचेति। राजस्थानीयो भगवान् पुत्रस्थानीय उपासक' इति व्यासार्यैरुक्त

श्रीभाष्यम्

णगुणाकरस्तिष्ठन् पिता ते सर्वलोकाधिपतिः गाम्भीर्यौदार्य वात्सल्य,सौशील्य,शौर्य,वीर्य पराक्रमादिगुणसम्पन्नस्त्वामेव नष्टं पुत्रं दिदृक्षुः पुरवरे तिष्ठतीति केनचिदभियुक्ततमेन प्रयुक्तं वाक्यं शृणोतिचेत् तदानीमेवाहंतावत जीवतःपुत्रो मत्पिता च सर्वसम्पत्समृद्ध इति निरतिशयहर्षसमन्वितो भवति । राजा च स्वपुत्रं जीवन्तमरोगमतिमनोहरदर्शनं विदितसकलवेद्यं श्रुत्वाऽवाप्तसमस्तपुरुषार्थो भवति पश्चात्तदुपादाने च प्रयतते पश्चात्ता-वुभौ सङ्गच्छेते,चेति ।

श्रुतप्रकाशिका

दर्शित परमव्योमालाभश्च मार्गाद्भ्रष्ट इत्यनेन कर्मज्ञानाद्युपायानन्वयः ख्यापित, द्विजवर्येण वर्धित इत्यनेन भगव-ज्ज्ञाननिष्पत्तियोग्यतासिद्धिहेतुभूताध्ययनादिनिष्पादकाचार्यसंबन्धोऽभिप्रेत । षोडशवर्षः भोक्तृत्वावस्थो भोग्यताऽवस्थ-श्चेतिभावः । सर्वकल्याणगुणाकरः ' निर्वाणमयएवायमात्मा ज्ञानमयोऽमलः ' इत्याद्युक्तैर्भगवदभिमतैर्गुणै पूर्णता सूचिता । पिता ते इत्यादिना भगवद्गुणगणास्सूचिता ॥

गाम्भीर्यादय उपासकप्रति सौलभ्योपयुक्ता गुणा शौर्यादय परत्वान्तर्गता गाम्भीर्यं * सप्रदानलाघवदीयमानगौ-रवानपेक्षत्वम् औदार्यं दातृप्रतिग्रहीतृविभागबुद्धिविरहेण प्रासक्तमिति प्रतिपत्तिमत्त्वम् । आत्मात्मीय दत्त्वाऽपि 'ऋण-प्रवृद्धमिवमे ' इति स्थितिर्वा । वात्सल्य दोषेष्वपि गुणत्वबुद्धिः यथा मातुर्वत्से । सुशीलहि नाम महतो मन्दैस्सह नीर-न्ध्रेण संश्लेषस्वभावत्व तद्वत्ता सौशील्यम् । शौर्यं शत्रुमध्ये स्वगृहइव प्रवेशसामर्थ्यम् । ' शूरंभीरु कविंजडम् ' इति

गूढार्थसङ्ग्रह.

पश्चात्तदुपादानेच प्रयतते इत्यत्र उपासनप्रयत्न एव विवक्षितः । पश्चात्तावुभौ सङ्गच्छेते इत्यत्र उपासनाफलमेव दार्ष्टान्तिके विवक्षितम् । दृष्टान्ते च राजसमीपगमनपूर्वं व्याधगृहवासादेः प्रायश्चित्तप्रवृत्तिः प्रयत्न राजसमीपगमनानुगु-णत्वेषप्रयत्न. विवक्षितः । कौषीतकीब्राह्मणे चतुर्थे बालाकियजातशत्रुसंवादे ' तमेतमात्मानमेत आत्मानः अन्ववस्यन्ति— तद्यथा श्रेष्ठीस्वैर्भुंङ्क्ते यथावा स्वाः श्रेष्ठिन भुञ्जन्ति एवमेवैष प्रज्ञात्मा एतैरात्मभिर्भुङ्क्ते एवमेवैतआत्मानएन भुञ्जन्ति । स यावद्धा इन्द्र एतमात्मान नविजज्ञौ तानदेनमसुरा अभिबभूवु । सयदा विजज्ञावथ हत्वा असुरान् विजित्य सर्वेषा भूताना श्रैष्ठ्य स्वाराज्यमाधिपत्य पर्येति तथो वैव विद्वान्सर्वान्पाप्मन अपहत्य सर्वेषा भूताना श्रैष्ठ्य स्वाराज्यमाधिपत्य पर्येति यएव वेद' इत्यत्र सुषुप्तिप्रकरणे जीवपरमात्मस्वरूपनिरूपणावसरे उभयोर्जीवपरयोर्भोग यउक्त स ब्रह्मज्ञानानन्तरमेव विवक्षितः । सर्वपापापहते तत्रैव ब्रह्मज्ञानोत्तरकालिकत्वप्रतिपादनात् सुषुप्तौ तथा सर्वपापापहतिविरहात् सुषुप्तौ जीवा मनः परमात्मज्ञानविरहस्य सकलश्रुतिसिद्धत्वाच्च । एवच एतच्छ्रुतिवाक्यपर्यालोचने तादात्विकफल यत् ब्रह्मज्ञानस्य यच परम फल तदुभयमत्र विवक्षितमिति राजपुत्रनयानुसारेण पुत्रस्य पितुश्च उभयो फलद्वयवत् जीवपरयो.फल श्रुतिता पर्यवसितया ऽपपितव्यम् । उभयोर्ज्ञानानन्तर परस्परसंश्लेषाकाङ्क्षाया आनुभाविकत्वात् अतश्चोपासकस्य परमफल यत्तत् कौषीतकीब्रा ह्मणएव पर्यङ्कविद्योक्तदिशा गतिद्वारा देशविशेषएवेत्यत्रापि विवक्षितम् । जीवब्रह्मणोर्भेदस्य एतद्वाक्यतस्सिद्धौ परमफलस्य गतिद्वारा देशविशेष एव सिद्धिः नैव प्रत्याख्यानमर्हति ॥

सूत्रकारश्च ' जीवमुख्यप्राणलिङ्गान्नेतिचेत्तद्व्याख्यातम् ' इत्यत्र कौषीतकीवाक्येऽपि ' ब्रह्मते ब्रवाणि ' इत्याद्यनन्तर ' योवै बालके एतेषा पुरुषाणा कर्ता सवै वेदितव्य. ' इत्युपक्रमे ' यएव विद्वान् सर्वेषा भूताना श्रैष्ठ्य स्वाराज्यमाधि-

## श्रीभाष्यम्

**यत्पुनःपरिनिष्पन्नवस्तुगोचरस्य वाक्यस्य तज्ज्ञानमात्रेणापि पुरुषार्थपर्यवसानात् बालातुराद्युपच्छन्दनवाक्यवन्नार्थसद्भावे प्रामाण्यमिति, तदसत् । अर्थसद्भावाभावे निश्चिते ;**

## श्रुतप्रकाशिका

भीरुत्वप्रातियोगिहि शौर्यं वीर्यं अश्रान्तिः पराक्रमः विक्रमणम् अत्रानुक्तमपि धैर्यमनुसंधेयम् । तच्च शत्रुभि(र्ध)र्षणे तृणवन्मन्यमानत्वम्। दिदृक्षुरिति **'स महात्मा सुदुर्लभः'** इति भगवदभिप्रायस्सूचितः **पुरवर** इत्यनेन ब्रह्मपुराख्यशरीरान्तस्थितिरभिप्रेता । त्रिपाद्विभूतिसम्बन्धो वा अभियुक्ततमशब्देन भगवज्ज्ञानप्रदो गुरुर्विवक्षितः । तस्येतरवैलक्षण्यं केनचिदित्यभिप्रेतम् यदा अध्ययनादिकारयिता गुरुरेव ब्रह्मोपदेष्टा संभवति तदाऽयमभियुक्ततमशब्दः पूर्वनिर्दिष्टद्विजवर्यमेवाभिधत्ते * तदसम्भवे ब्रह्मोपदेष्टृपुरुषमात्राभिप्रायः। अत्र **केनचिदित्यनेन** पूर्वेणैव वा अन्येनैववेति तात्पर्यं ग्राह्यम्। **शृणोतिचेदित्यनेन** भगवज्ज्ञानस्य दुर्लभत्वमभिप्रेतम् । **निरतिशयहर्षसमन्वितो भवतीत्यनेन** वाक्यस्य पुरुषार्थपरत्व दर्शितम् । **राजाचेति** राजस्थानीयो भगवान् पुत्रस्थानीयोऽप्युपासको विवक्षितः अनेन सर्वविधभोग्यत्वस्य भगवति पुष्कलत्वात् गुणवत्पुत्रगतभोग्यत्वमपि तत्र विद्यतइति ज्ञापितम् । नहि भगवतो ज्ञान परोक्षरूपम् । **अवाप्तसमस्तपुरुषार्थो भवतीत्यनेन** च वाक्यस्य प्रयोजनपर्यवसायित्व दर्शितम् । **राजाचेत्यादिग्रन्थस्यापातप्रतिपन्नार्थोऽप्यविरुद्धः** ॥

ध्यानविधेर्वैयर्थ्यं दृष्टान्तद्वयेनापि सिद्धमिति ज्ञापयितुमुक्तं **पश्चात्तदुपादाने च प्रयतते** इति **पश्चात्तावुभौ सङ्गच्छेतेचेति** च अत्र * पूर्वमेव अर्थार्थी राजकुल गच्छेत् मन्दाग्निर्नाम्बु पिबेदिति वाक्योदाहरणादिह निषिद्धान्तोपन्यासाद्यायमप्यर्थोऽर्थसिद्धः, किं *क्रियोत्तीर्णकार्यपरतयैव* वाक्यस्य प्रयोजनपर्यवसायित्वं उत *क्रियाकार्यं वा तदुत्तीर्णं* वा प्रवर्तकमर्थमभिदधत एव तत्पर्यवसायित्वमिति मतम् । नप्रथमः अर्थार्थी राजानं सेवेतेत्यादीनां सप्रयोजनत्वात् । न द्वितीयः निधिमद्भूभागलक्षणरत्नपरीक्षणपराणां शास्त्राणां प्रयोजन(पर्यवसायि)शालि)त्वात् । नच तत्रापि खननधारणादिविधिपरत्वं वाक्यानां कल्प्यम् तयोः रागप्राप्तत्वात् खननादिप्रकारस्य लोकसिद्धत्वाच, अप्राप्तेहि शास्त्रमर्थवत्, * दुष्टरत्नवर्जनमप्यनर्थजिहासाप्राप्तम् । वाक्यानितु निधिमत्त्वगुणदोषज्ञापनमात्रपर्यवसायीनि । अतः प्रवर्तकार्थपरतयैव प्रयोजनपर्यवसानमिति नियमो भग्न इति ॥

अथ पूर्वपक्षिणोक्तमनुभाषते—**यत्पुनरिति** । वेदान्तवाक्यानां नार्थसद्भावे प्रामाण्यमस्तीति प्रतिज्ञा । तदर्थमर्थ*सद्भावाभावेऽपि पुरुषार्थपर्यवसानादिति हेतुर्विवक्षितः । दूषयति* **तदसदिति** । कुतइत्यत्राह—**अर्थसद्भावाभावइति** ।

## गूढार्थसंग्रहः

पत्यं पर्येति ' इत्युपसंहारे च वेदनमुपासनरूपमेवेति निर्धारयति । ' जीवमुख्यप्राणलिङ्गान्नेतिचेन्नोपासात्रैविध्यात् ' इति सूत्रे ' अयत्रे 'त्यादिना वृत्तिकारसंमतयोजनैव (श्री.भा) उक्ता युक्ता, नतु उपासनात्रैविध्यप्रसङ्गादिति इति ग्रन्थ्यन्तसारामृते निरूपितम् । एवंचात्र ' उपासनात्रैविध्यप्रसङ्गात् ' इति योजनामेकां विलिख्य परैः जीवलिङ्गमप्युपक्रमोपसंहारयोर्ब्रह्मविषयत्वात् अभेदाभिप्रायेण योजयितव्यम् । (शं)' इत्युक्तिरप्यनुपादेया, जीवब्रह्माभेदस्यात्रानभिधानात् ' सर्वेषां भूतानाम् ' इत्यत्रोक्तफलस्य परसंमतविद्यया असंभवाच्च ॥

' अन्यार्थंतु जैमिनिः प्रश्नव्याख्यानाभ्यामपिचैवमेके ' इतिसूत्रे 'अपिचैवमेके शाखिनः वाजसनेयिनः अस्मिन्नेव *बालाकिअजातशत्रुसंवादे स्पष्ट विज्ञानमयशब्देन जीवमामाय तद्व्यतिरिक्तं परमात्मानमामनन्ति ' यएषविज्ञानमयः पुरुषः*

## श्रीभाष्यम्

**ज्ञातोऽप्यर्थः पुरुषार्थाय न भवति। बालातुरादीनामप्यर्थसद्भावभ्रान्त्या हर्षाद्युत्पत्तिः तेषामेव तस्मिन्नेव ज्ञाने विद्यमाने यद्यर्थाभावनिश्चयो जायेत ततस्तदानीमेव हर्षादयो निवर्तेरन् औपनिषदेष्वपि वाक्येषु ब्रह्मास्तित्वतात्पर्याभावनिश्चये ब्रह्मज्ञाने सत्यपि पुरुषार्थपर्यवसानं न स्यात्।**

## श्रुतप्रकाशिका

इदं वाक्यं पक्षविषयम्। पक्षदृष्टान्तसाधारणं वा हेतुत्वं गर्भितम्॥ अर्थसद्भावाभावनिश्चयेसति पुरुषार्थपर्यवसानाभावादित्यर्थः। अर्थासद्भावेऽपि पुरुषार्थो दृश्यत इति शङ्कायां तत्रार्थासद्भावनिश्चयाभावमुपाधिमाह—बालातुरादीनामिति। तदेवोपपादयति तेषामिति। ततःकिमित्यपेक्षायां सपक्षे दर्शितमर्थं पक्षे स्फुटीकरोति। औपनिषदेष्वपीति॥

बालातुराद्युपच्छन्दनवाक्येष्विवाप्यर्थसद्भावभ्रान्त्या पुरुषार्थपर्यवसानं स्यादितिचेत्—पयःपिब कषायपिब शिखा वर्धिष्यते, पांसुषु लुठसिचेत्तव दन्ता उद्भिद्यन्ते इत्यादीनां प्रवृत्तिनिवृत्तिपरवाक्यानामिव 'स्वर्गकामो यजेत' 'नकञ्जं भक्षयेत्' इत्यादिवाक्यानामप्यर्थसद्भावभ्रान्त्या पुरुषार्थपर्यवसानं किं नस्यात्। अपौरुषेयत्वाद्वेदवाक्यस्य विप्रलिप्सामूलवाक्यस्येव भ्रामकतया पुरुषार्थपर्यवसानमयुक्तम्। तथासति शास्त्रस्य निरूपकाधिगन्तव्यत्वात् स्वपुत्रशिष्यादीनामध्यापनादौ प्रवृत्तिर्नोपपद्यत इतिचेत् अपौरुषेयत्वमध्यापनादिप्रवृत्तिवैयर्थ्यं च वेदान्तवाक्येष्वपि तुल्यम्। * कर्मविधीनां देहातिरिक्तात्मज्ञानसापेक्षत्वात् वेदान्तवाक्यानां कर्मविधिशेषत्वेनाध्यापनादिप्रवृत्त्युपपत्तिरितिचेत् न असत्यपि देहात्मभेदे तत्सद्भावभ्रान्तिहेतुत्वशङ्कायां सत्यां तन्मुखेन प्ररोचनानुपपत्त्या विधिशेषतयाऽध्यापनाद्यनुपपत्तेः। तर्कानुगृहीतानिर्दोषश्रुतिसिद्धदेहात्मभेदस्तात्त्विक इतिचेत् तत् पुरुषार्थभूतस्य परमात्मनः प्रतिपाद्यत्वेऽपि तुल्यम्। देहात्मभेदसाधकहेत्वन्तरसद्भावादभ्रान्तिहेतुत्वनिश्चय इतिचेत्, तर्हि तेनैव हेत्वन्तरेण देहात्मभेदस्सिद्ध इति तज्ज्ञापनाय वेदान्तवाक्यानामनपेक्षितत्वाद्विधिशेषतया तदध्यापनादिकं नोपपद्यते। एवं निरूपकाधिकारस्य शास्त्रस्यार्थसद्भावभ्रान्त्या पुरुषार्थपर्यवसानानुपपत्तौ प्रवर्तकवाक्यानां प्रतिबन्दीत्वमभिप्रेत्य औपनिषदेष्वपीत्यादि भाष्यं प्रवृत्तम्॥

## गूढार्थसंग्रहः

क्वैष तदाभूत्कुत एतदागात्' इति प्रश्ने। प्रतिवचनेऽपि 'यएषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते' इति। आकाशशब्दश्च परमात्मनि प्रयुक्तः 'दहरोऽस्मिन्नन्तर आकाश' इत्यत्र इति (श्री)भाष्ये जीवब्रह्मभेदस्य स्पष्टमभिधानाच्च। व्युच्चरणश्रुत्युपनिषद्भाष्ये (श्री) एव द्रमिडाचार्यसम्मतराजकुमारनयः परैःप्रदर्शितः। अतश्च राजकुमारनयेन कौषीतकीवाजसनेयिकवाक्यद्वयेऽपि जीवब्रह्मभेदस्य श्रुतितात्पर्यविषयतया परस्परसंश्लेषाकाङ्क्षया मुक्तावपि 'तावुभौ सङ्गच्छेते' इत्युक्तं फलं नैव प्रत्याख्यानार्हमिति भगवत आशयः। ब्रह्मास्तित्वतात्पर्याभावनिश्चयइति। 'अस्तिब्रह्मेतिचेद्वेद सन्तमेनन्ततो विदुः' इति श्रुतिरत्राभिप्रेता। 'अस्तिब्रह्म' इत्यत्र लकारस्य साधुत्वार्थकत्वं परोक्तं प्रागेव (२६८.पु) पर्यालोचितम्। 'असन्नेवसभवति' इत्यादिश्रुत्यर्थः प्रागेव (६७६.पु) अभिहितः। तत्र पुरुषार्थपर्यवसानाभावः स्फुटः। 'जन्माद्यस्य यतः' इतिसूत्रे राजकुमारनयः विवक्षितः। 'अथातो ब्रह्मजिज्ञासा' इत्यत्र ब्रह्मशब्दस्य ननिर्विशेषपरत्वमिति एतत्सूत्रद्वयेन सिद्धम्। एवं कारणवाक्यानामेव उक्तदिशा तादात्विकपार्यन्तिकपुरुषार्थपर्यवसायित्वेन प्राधान्यं एतद्वाक्यसिद्धोपादानोपादेयभावनिबन्धनाभेदपरत्वेन 'तत्त्वमसि' 'अहंब्रह्मास्मि' इत्यादिवाक्यानामप्राधान्यमित्याद्यर्थास्सिद्ध्यन्तीत्यभिप्रेत्य तत्सूत्रविषयवाक्यं 'यतोवा' इत्यादि समन्वयाधिकरणान्ते उपात्तम्॥

## श्रीभाष्यम्

**अतः 'यतो वा इमानि भूतानि जायन्ते' (भृगु वल्ली. )इत्यादिवाक्यं निखिलजगदेककारणं निरस्तनिखिलदोषगन्धं सार्वज्ञ्यसत्यसङ्कल्पत्वाद्यनन्तकल्याणगुणाकरमनवधिकातिशयानन्दं ब्रह्मास्तीति बोधयतीति सिद्धम् ॥**

**॥ समाप्तं समन्वयाधिकरणम् ॥**



## श्रुतप्रकाशिका

उक्तस्य हेतोर्विपर्यये पर्यवसानं दर्शयन्नधिकरणार्थमुपसंहरति अतइति । कारणवाक्यानामर्थमाह—निखिलेति । निखिलशब्दः परैर्नित्यतयाऽभिमतानामाकाशादीनामपि कार्यत्वज्ञापनार्थः. एकशब्दो निमित्तोपादानैक्यद्योतकः 'यतो वा इमानि' इत्यादिवाक्ये शोधकवाक्यार्थश्च गर्भितइत्यभिप्रायेणाह—निरस्तेति । अत्र निखिलशब्देन चिदचिद्गता क्लेशकर्मादयो जन्मादयश्च विवक्षिताः । कदाचिद्दोषप्रसञ्जनार्हत्वव्यावर्तकेन गन्धशब्देन रुदा स प्रत्यनीक वमुक्तं भवति । कारणत्वौपयिकान्गुणानाह—सार्वज्ञ्येति । एतदधिकरणार्थमाह—अनवधिकेति । बोधयतीति । अध्यापनाद्युपपत्तये पुरुषार्थपर्यवसानस्यापेक्षितत्वात् । प्रेक्षावदधिकार्यस्य शास्त्रस्यार्थसद्भावाभावनिश्चये सति पुरुषार्थपर्यवसानानुपपत्ते, स्तदुपपत्त्यर्थं प्रवर्तकवाक्यानामिवार्थसद्भावे प्रामाण्यमङ्गीकार्यमिति यथोक्तलक्षणं ब्रह्म 'यतो वा इमानि' इत्यादिवाक्यं प्रतिपादयतीत्यर्थः ॥

शास्त्रारम्भसिद्ध्यर्थैषा चतुस्सूत्री मृषावादिना पक्षे न सङ्गच्छते तत्पक्षे विषयप्रयोजनानुपपत्त्या शास्त्रस्यानारम्भणीयत्वात् । तथाहि विषयः किंब्रह्म, उत भेदमिथ्यात्वं, उत जीवब्रह्मणोरैक्यं ? नप्रथमः, ब्रह्मणो वेद्यत्वानभ्युपगमात् । वेद्यत्वे घटादेरिवाननुभूतित्वप्रसङ्गस्योक्तत्वाच्च । व्यावहारिकं वेद्यत्वमस्तीतिचेत्, घटस्यापि वेद्यत्वं व्यावहारिकमिति तद्वदेवाननुभूतित्वप्रसङ्गो दुर्वारः । वास्तववेद्यत्वाभावस्य ब्रह्मणि साध्यत्वे घटस्य व्यतिरेकदृष्टान्तत्वं नघटते, घटस्य वास्तववेद्यत्वाभावविरहाभावात् अनुभूतिः परमार्थतो नवेद्या, अनुभूतित्वात् यत्परमार्थतो वेद्यं तन्नानुभूतिः । यथा घटइत्युक्ते व्यतिरेकदृष्टान्तस्साध्याव्यावृत्तोहि स्यात् । नहि घटः परमार्थतो वेद्यः वेद्यत्वेऽननुभूतित्वप्रसङ्गमनादृत्य ब्रह्मणो वेद्यत्वाङ्गीकारेऽपि ब्रह्मणश्शास्त्रविषयत्वमयुक्तम् । प्रत्यक्षस्य सन्मात्रग्राहित्वमभ्युपगच्छतस्तवमते शास्त्रानर्थक्यप्रसङ्गात् अप्राप्तेहि शास्त्रमर्थवत् ॥

नद्वितीयः । दृश्यत्वादिना लिङ्गेन भेदमिथ्यात्वमभिमन्यमानस्य तव शास्त्रानर्थक्यप्रसङ्गात् । तत्तद्धर्मिग्राहकप्रत्यक्षादिप्रमाणविरुद्धस्य प्रपञ्चमिथ्यात्वस्य यूपादित्यैक्यस्येव शास्त्रेण प्रतिपादनायोगात् शास्त्रस्य निर्विषयत्वं स्यात् अप्राप्तेहि

## गूढार्थसंग्रह

निखिलजगदेककारणमिति । अत्र वेदान्तसारोक्तरीत्या कारणत्वस्यानुमानतस्सिद्धिर्न सम्भवतीत्यपि विवक्षितम् । अयमर्थः अत्यन्तसाराभूते उपपादितः । जगदेककारणमित्यत्र निमित्तोपादानकारणत्वयोरभिप्रेतत्वेनोपादानोपादेयभावेन परसम्मतमहावाक्यानामुपपत्तिस्सूचिता । निरस्तनिखिलइत्यादिकं ब्रह्मशब्दार्थनिर्दोषत्वगुणभूयिष्ठत्वाभ्यां निरवग्रहमहत्वोपपादनाय । कारणत्वौपयिकत्वेनोभयाक्ति । अनवधिकातिशयानन्दम् इत्यत्र 'आनन्दाद्ध्येव खल्विमानि' इत्यादि 'यतोवा' इत्यादिवाक्यार्थनिर्णायकवाक्यमभिप्रेत्योक्तम् । अत्र 'तत्तु समन्वयात्' इति सूत्रार्थः सिद्ध्यतीति पूर्वमुपपादितम् ॥

## श्रुतप्रकाशिका

शास्त्रमर्थवत् साधकस्येव बाधकस्याप्यगोचरत्व ह्यप्रामाण्यम् ज्वालाभेदानुमानवैषम्य च त्रिविध प्रागेव प्रपञ्चितम् । प्रमाणान्तरविरोधश्च तात्पर्यलिङ्गमिति तद्विरुद्धेऽर्थे तात्पर्यासभवश्च प्रागेवोक्त । अतो भेदमिथ्यात्वस्य विषयत्वमयुक्तम् ॥

तृतीयश्च कल्पोऽनुपपन्न ब्रह्मणोऽपि वेद्यत्वप्रसङ्गात् । नहि घटपटयोरेकत्वमुच्यते शास्त्रेण अपितु जीवब्रह्मणोरेकत्व तदानीं ब्रह्मशब्देन ब्रह्मण्यनवबोधिते कथ तस्य जीवस्यचैक्य वक्तु शक्यते ? नहि जीव एक इत्युक्ते जीवब्रह्मणोरैक्य सिद्ध्यति । घट एकइत्युक्ते घटपटैक्यवत् यदैक्योपदेशवाक्येषु 'अयमात्माब्रह्म' इत्यादिषु ब्रह्मणश्शब्दबोध्यत्व सोढव्य तर्हि प्राधान्येन ब्रह्मणएव शास्त्रप्रतिपाद्यत्व किमिति नाभ्युपगम्यते 'सर्वे वेदा यत्पदमामनन्ति' इत्यारभ्य 'तद्विष्णो परमम्' इत्यादिश्रुत्यस्वारस्यमेव तदनभ्युपगमफलम् । किंच उपदिश्यमानमैक्य किं स्वरूपानतिरिक्त उतातिरिक्तम् ? अनतिरिक्तत्व स्वरूपवेद्यत्वपक्ष एवस्यात् । तथाचोपदेशवैयर्थ्यादिदोषप्रसङ्ग । स्वरूपमात्रस्य प्रतिपन्नत्वात्, अतिरिक्तत्वे तत्किं परमार्थभूत उतापरमार्थभूतम् । प्रथमे निर्विशेषत्वभङ्ग । द्वितीय ज्वालैक्यदेहात्मैक्यापारमार्थ्ये ज्वालाभेददेहात्मभेदपारमार्थ्यवज्जीवब्रह्मभेदपारमार्थ्य स्यात् ॥

किंच जीवब्रह्मणोरैक्य नाम किमन्त करणस्य सविदश्चैक्य, उत सविदवच्छिन्नान्त करणस्य सविदश्च, उतान्त करणावच्छिन्नसविद केवलसविदश्च, न प्रथम जडाजडयोरैक्यानुपपत्ते । नापि द्वितीयतृतीयौ, विशिष्टैक्येऽभ्युपगम्यमान विशेषणत्वेन विशेष्यत्वेन वा, तदन्तर्भूतस्यान्त करणस्यापि सविदैक्यप्रसङ्गात् । तयोश्च अजडत्वजडत्वाभ्या सत्यत्वानृतत्वाभ्याचैक्यमयुक्तमित्युक्तम् । अन्त करणोपलक्षितज्ञप्तयैक्य विषयइतिचेत् तदुपलक्षितज्ञप्ते केनैक्यमुपदिश्यते । किंस्वात्मनैव उत ज्ञप्त्यन्तरेण ? नप्रथम , उपदेशवैयर्थ्यात् । नहि कस्यचिद्वस्तुन स्वस्मादभिन्नत्वमुपदेष्टव्य स्वस्माद्भेदप्रसङ्गाभावात् ज्ञप्त्यन्तरेणचेत् किं परमार्थतोऽभिन्नेन उताभिन्नेन ? नप्रथम , अनभ्युपगमादनुपपन्नत्वाच्च । अभिन्नेनचेत् भेदप्रतीतिरस्ति वा नवा ? नचेदैक्योपदेशवैयर्थ्यम् । अस्तिचेद्भेदमिथ्यात्वापदेशएवैक्योपदेशस्स्यात् भेदमिथ्यात्वस्यानुमानसिद्धत्वाभिमानात् शास्त्रस्य निर्विषयत्व स्यात् ॥

भेदपारमार्थ्ये द्वयत्वानुपपत्तिरित्यादितर्कानुगृहीत शास्त्र भेदमिथ्यात्व प्रमाणमिति न शास्त्रस्य निर्विषयत्वमितिचेत् न धर्मश्चेद्धिसात्र नस्यादिति तर्कानुगृहीतेन 'नाहिंस्यात्' इति शास्त्रेण वैधपश्वालम्भस्याधर्मप्रतिपादनानुपपत्तिवच्छास्त्रसिद्धभेदस्य शास्त्रेण मिथ्यात्वप्रतिपादनानुपपत्त , सर्वाधभेदभिन्नाना सयोगेच्छ दीनामिव ज्ञप्तीनामपि परस्परभेदस्य प्रत्यक्षादिसिद्धत्वात्तद्विरुद्धत्वादयोग्यस्य ज्ञप्तिभेदमिथ्यात्वस्य शास्त्रेण प्रतिपादनानुपपत्तेश्च । 'नाह खल्वयमेव सम्प्रत्यात्मान जानात्ययमहमस्मि' इति 'यदा सुप्त स्वप्न नकञ्चन पश्यति' 'प्राणेभ्यो देवा देवेभ्यो लोका । देवा इन्द्रियाणि लोका आलोकनानि सविद ' एवमादिशास्त्रसिद्ध प्रत्यक्षादिसिद्धश्च कालतो विषयत आश्रयतश्च ज्ञप्तीनां परस्परभेद ॥

अन्त करणवृत्तिभेदविषया सा श्रुतिरितिचेन्न स्वाप्नश्रुतेर्वृत्तिगोचरत्वाति सविदैक्य सविदैक्यसति ज्ञप्तिभेदश्रुतर्वृत्तिगोचरत्वमित्यन्योन्याश्रयणप्रसङ्गात् ज्ञातृज्ञेयावच्छिन्नतया प्रतीयमानस्य ज्ञानस्यान्त करणक्रियात्व त्रितयोत्तीर्णज्ञानस्य शशविषाणायमानत्वाच्च तद्भेदमिथ्यात्वप्रतिपादन शशविषाणभेदमिथ्यात्वप्रतिपादनतुल्यमिति न शास्त्रस्य सविषयत्वसिद्धि सम्प्रतिपन्नज्ञानानामिव मिथो भेदस्य मिथ्यात्व शास्त्रविरोधात् प्रत्यक्षविरोधाच्च । पश्वालम्भनाधर्मत्ववत् यूपादित्यैक्यवच्च न शास्त्र प्रतिपादयितु शक्नोति । अतश्शास्त्रस्य विषयाभावादनारम्भणीयत्वम् । तथा प्रयोजन च नघटत, तथाहि—प्रयोजन द्विविधशास्त्रस्य उपायभूतमवान्तरप्रयोजन तत्साध्य परमप्रयोजनञ्च । तत्र बन्धनिवर्तकज्ञानसिद्धिरवान्तर मोक्षस्तु

## श्रुतप्रकाशिका

परमं प्रयोजनम् । तत्रेदानीमुपजायमानं वाक्यजन्यज्ञानमनिवर्तकमित्यविगीत वसिष्ठपराशरकृष्णद्वैपायनादीनामनुत्पन्न ज्ञानमन्येषामुत्पत्स्यतइत्यत्यन्तासम्भावितम् । तेषामुत्पन्नचेद्भेदप्रतिभासो नस्यात् निवर्तिष्यत इतिचेत् ततएव तदभि ज्ञानामन्येषामपि निवर्तिष्यत इति न शास्त्रमारम्भणीय स्यात् । प्रपञ्चस्य सत्यत्वादेव ज्ञाननिवर्त्यत्वाभावादनिवर्तकज्ञान नावान्तरफलमिति नतदर्थं शास्त्रमारम्भणीयम् । परमप्रयोजनं च सिद्ध्यति ज्ञातृज्ञेयभेदस्य सत्यस्य निवृत्तेरसभावितत्वात्

किच शास्त्रश्रवणाधिकारो ज्ञप्तिमात्रस्य वा ज्ञातुर्वा । नप्रथमः ज्ञप्तिमात्रस्य श्रोतृत्वायोगात् । नद्वितीयः ज्ञातुस्स्व नाशस्यापुरुषार्थत्वेन श्रवणादौ प्रवृत्त्यनुपपत्तेः । यत्सम्बन्धिसुख दुःखनिवृत्तिश्च पुरुषार्थः सखल्वहमर्थः अह निर्दुःखः सुखीस्यामितिहि प्रतीति. तस्य पुरुषार्थवतो नाशः कथ पुरुषार्थः पुरुषार्थान्तर वा कथमर्थयितुस्तस्याभावे पुरुषार्थोभवेत्

*अथोच्येत—भवत्पक्षे बद्धस्य वा मुक्तस्य वा शास्त्राधिकारः । प्रथमे स्वनाशस्यापुरुषार्थत्वादप्रवृत्तिः उपाधिवि*शिष्टस्य बद्धस्य तद्रूपनाशोहि स्वनाशः । द्वितीयेतु मुक्तस्य शास्त्रानपेक्षत्वादनधिकारः औपाधिकाकारविनाशो नापुरुषार्थः दुःखाविनिर्मुक्तस्वाभाविकरूपावस्थानादितिचेत् । तर्हि ज्ञातृत्वस्यौपाधिकत्वात्तन्निवृत्तौ स्वरूप तिष्ठतीति नापुरुषार्थ इति । संविदि वास्तवज्ञातृत्वानभ्युपगमात् तदारोपेत्वन्यत्र तत्सिद्धेरवश्यम्भावात्, अन्यस्य च ज्ञातुर्ज्ञप्तिधर्मत्वाभावात् । यदि ज्ञप्तिः स्वरूप ज्ञाता तद्धर्मः तदानीमिय प्रतिबन्दीस्यात् । अह सुखीदुःखीति सुखदुःखवदहं जानामीति ज्ञानस्याहमर्थधर्मतया प्रतीतेरहमर्थस्य धर्मितया प्रतीतेश्चाविगीतत्वात्, सुखदुःखनिवृत्त्योराश्रयस्य तस्य नाशोऽपुरुषार्थ एव । धर्मिणि नष्टे कस्य दुःखनिवृत्तिः पुमर्थस्स्यात् । अचेतनप्रकृतिबद्धत्वमौपाधिकदुःखावहमिति मलिनोऽहमिति प्रत्ययवतः पुरुषस्य मालिन्यनिवृत्तिवत्तन्निवृत्तिर्नापुमर्थः, अत्यन्ताभिमतस्य धर्मिस्वरूपस्य स्थितत्वादनिष्टबन्धनिवृत्तेरिष्टत्वाच ॥

ननु लौकिकप्रतीत्या निरूपकप्रतीत्या वाऽहमर्थस्य स्वरूपत्व ? प्रथमे स्थूलोऽह कृशोऽहमिति लोकदृष्ट्या प्रतिपन्नत्वात् स्थूलत्वादिविशिष्टदेहनिवृत्तिरप्यपुमर्थस्स्यात् । द्वितीये स्थौल्यादिवदध्यस्तोऽहमर्थो ज्ञाताऽपि न स्वरूपमिति न तन्नाशोऽपुरुषार्थः, नैवम् । ममहस्तो मम पादइति लोकदृष्ट्याऽप्यहमर्थस्य देहव्यतिरेकप्रतीतेः अहमर्थस्यैवात्मत्वे श्रुतिस्मृतिसूत्राणा प्रागेव दर्शिततया निरूपकप्रतीतावप्यहमर्थस्यैव स्वरूपताप्रतीतेश्चाहमर्थनिवृत्तेर्देहनिवृत्तितुल्यत्वाभावेनापुरुषार्थत्वस्य दुर्निवारत्वात् अतो विषयप्रयोजनाभावाच्छास्त्रस्यानारम्भणीयत्व मृषावादिना पक्षे स्थितम् ॥

पश्चाद्भाविनो नित्यानित्यविवेकादेः पूर्ववृत्तत्वायोगादथशब्दार्थः परोक्तोऽनुपपन्न इति पूर्वमेवोक्तम् । शास्त्रान्तर*जन्यस्य नित्यानित्यविवेकस्य वेदान्तविरुद्धत्वात्तेष्वेव मोक्षोपायोपदेशेन निराकाङ्क्षत्वाच्च ब्रह्मविचारहेतुत्वाभावान्नित्यानित्य*विषयापातप्रतीतेस्तु उभयभागसाधारणत्वादैकान्ततो ब्रह्मविचारहेतुत्वाभावात् इतिहासपुराणयोस्संशयविपर्ययग्रस्ततया तज्ज*न्यानित्यानित्यादिप्रतीतेस्त्रिवर्गजिहासाजनकत्वाभावेन ब्रह्मविचारप्रति हेतुत्वाभावाद्यातदशब्दार्थोऽनुपपन्नः* । यन्नित्य तदुपादेय यदनित्य तद्धेयमिति विवेको नित्यानित्यविवेकइत्युत्प्रेक्षणमप्ययुक्तम् । वेदान्तेषु नित्यपुरुषार्थत्वप्रतिपादनावगमात्तदारम्भः तदारम्भात्तेषु *नित्यपुरुषार्थप्रतिपादनावगम* इत्यन्योन्याश्रयप्रसङ्गात्, शास्त्रान्तरेष्वपि नित्यपुरुषार्थसम्भावनया ब्रह्मविचारप्रत्यैकान्ततो हेतुत्वाभावात् शास्त्रान्तरेषु तदभावस्य वेदान्तेषु तत्सद्भावनिश्चयस्य च तर्कपादाधीनत्वेन पूर्ववद*न्योन्याश्रयप्रसङ्गात्* । वेदान्ततदितरशास्त्रेषु नित्यपुरुषार्थसद्भावासद्भावयोर्गुरुवचनादवगम्य वे ब्रह्मोपासनस्यापि गुरुवचनादवगम्यत्वेन शारीरकमीमांसानैरपेक्ष्येण तदनारम्भणीयत्वप्रसङ्गाच्च ॥

## श्रुतप्रकाशिका

जीवब्रह्मणोरैक्यस्य शास्त्रविषयत्वाङ्गीकारे ब्रह्मजिज्ञासापदं च न सङ्गच्छते। ब्रह्मणो जिज्ञास्यत्वंहि शब्दादवगम्यते। न जीवब्रह्मणोरैक्यस्य यथा धर्मजिज्ञासापदं धर्ममात्रस्य जिज्ञास्यतां वक्ति नतु धर्माधर्मयोरैक्यस्य जिज्ञास्यत्वम्। तद्वदेवहि ब्रह्मजिज्ञासापदम्। निर्विशेषस्य वस्तुनो लक्षणोक्तिश्च नघटते विशेषणतया लक्षणत्वे सविशेषत्वप्रसङ्गात् उपलक्षणतया लक्षणत्वे पूर्वप्रतिपन्नाकारातिरिक्तस्योपलक्षणज्ञाप्यस्य आकारान्तरस्याभावेनोपलक्षणवैयर्थ्यात्। तदभ्युपगमे सविशेषत्वप्रसङ्गाच्च, स्वरूपमेवोपलक्षणज्ञाप्यमितिचेत् तत्स्वरूपं प्राक्प्रतिपन्नम् नवा प्रतिपन्नंचेदुपलक्षणवैयर्थ्यम् अप्रतिपन्नत्वे स्वप्रकाशता नस्यात् उपलक्षयितुमशक्यता च। केदारत्वाकारेणानवगतस्य देवदत्तसम्बन्धितया सारसेन ज्ञाप्यत्वं ह्युपलक्ष्यत्वम्। प्रागनवगता प्रपञ्चव्यावृत्तिरुपलक्ष्याकार इतिचेत् प्रपञ्चव्यावृत्तेः स्वरूपातिरिक्तत्वे सविशेषत्वप्रसङ्गात्। अनतिरिक्तत्वे तत्स्वरूपं प्रागेव भातमित्युपलक्षणवैयर्थ्यम्॥

किंच कथं कारणत्वे लक्षणेसति प्रपञ्चव्यावृत्तिः कारणत्वनाम कार्यजगदध्यासाऽधिष्ठानत्वम्। अतोऽध्यस्तादनृतात् प्रपञ्चादधिष्ठानस्य ब्रह्मणस्सत्यतया व्यावृत्तिरितिचेत् न घटाद्यधिष्ठानस्य मृदइव ब्रह्मणोऽप्यनृतत्वेन व्यावृत्तिप्रसङ्गात् घटादिकारणस्यापि मृदादेः कारणान्तरेऽध्यस्तत्वादसत्यत्वं कालत्रयवर्तिकृत्स्नकार्याधिष्ठानस्य ब्रह्मणोऽन्यत्राध्यस्तत्वाभावान्नासत्यत्वमितिचेत्। न 'इदमग्रआसीत्' इतीदशब्दवाच्यं कार्यमात्रप्रत्यधिष्ठानत्वश्रवणेन ब्रह्मणोऽपि कारणान्तराध्यस्तत्वाविरोधात् बीजाङ्कुरन्यायेन प्रवाहानादित्वोपपत्तेश्च कृत्स्नकार्यकारणस्य ब्रह्मणः कारणान्तरप्रतिषेधेनाकार्यत्वात्सत्यत्वमिति प्रपञ्चव्यावृत्तिरितिचेत् तर्ह्यकार्यत्वमात्रेण जगद्व्यावृत्तिसिद्धेः कारणत्वोक्तिवैयर्थ्यादकार्यत्वश्रुतिरेव लक्षणवाक्यतेनोदाहर्तव्या स्यात् नतु 'यतो वा इमानि' इत्यादिश्रुतिः। अकार्यत्वश्रुतिरेव विवक्षितेतिचेत् तर्हि 'सकारणं करणाधिपाधिपो नचास्य कश्चिज्जनिता नचाधिपः' इत्यकार्यत्वश्रुतेः करणाधिपाधिपशब्दवाच्येश्वरविषयत्वाल्लक्ष्यवस्तुनो निर्विशेषत्वं नसिध्येत्॥

किंच जगत्कारणत्वरूपलक्षणविशेषो लक्ष्यस्य निर्विशेषत्वाविरोधी सार्वज्ञ्यादिगुणाक्षेपकत्वात्तस्य आक्षिप्तमपि सार्वज्ञ्यादिकं वस्तुमात्रोपलक्षणमितिचेत्; न सार्वज्ञ्येन वस्तुन्युपलक्षितेसति सर्वशक्तित्वाद्युपलक्षणान्तरवैयर्थ्यात्। नहि शाखया चन्द्रे उपलक्षिते प्रासादाग्रेण प्रयोजनम्। सार्वज्ञ्येन निर्विशेषवस्तूपलक्षणं व्याहतञ्च स्वेन सविशेषस्याश्रयस्य निर्विशेषत्वज्ञापनायोगात् सर्वशक्तित्वादिविशेषान्तरराहित्यज्ञापनासामर्थ्याच्च, अतो लक्षणसूत्रं निर्विशेषपक्षविरुद्धम्॥

तृतीयं सूत्रमपि नघटते निर्विशेषवस्तुनि तात्पर्यविषयेसति कारणत्वाक्षिप्तसार्वज्ञ्यादिसमर्थनं कोपयुज्यते। प्रसङ्गादपि न तत्समर्थनं न्याय्यं निर्विशेषत्वविरोधात्। किंच ऋग्वेदादिशास्त्रं स्वविषयादधिकविषयज्ञानवदुपादानकं वाक्यत्वादित्यनुमानमप्यसङ्गतम्। तथाहि–किमधिकविषयज्ञानवदुपादानकत्वं साध्यम् उत तद्वक्तृकत्वम् उत तदुच्चारितत्वम्। प्रथमे दृष्टान्तस्साध्यविकलः आकाशगुणस्य शब्दस्य कालिदासाद्युपादानत्वाभावात्। नद्वितीयः वेदस्य पौरुषेयत्वप्रसङ्गात्। न तृतीयः अनैकान्तिकत्वात्। नहि वैदिकमन्यद्वा वाक्यमुच्चारयतां बालादीनां तद्विषयादधिकविषयज्ञानमस्ति। शास्त्रप्रमाणकत्वं सूत्रार्थ इति च व्याख्यातुर्ब्रह्मणोऽनुमान्यत्वमनभ्युपगच्छतो नघटते॥

चतुर्थे च सूत्रे ब्रह्मणः प्राधान्येन शास्त्रयोनिसूत्रनिर्दिष्टत्वाभावात्तच्छब्दस्य ब्रह्मपरत्वं न स्वारसिकम्। वेदान्तवाक्यानां भ्रमनिवर्तकवाक्यार्थज्ञानजनकतया प्रयोजनपर्यवसायित्वं वाक्यार्थज्ञानमात्रेण बन्धनिवृत्तेश्शास्त्रप्रत्यक्षविरोधविध्वस्तत्वादनुपपन्नम्। तदन्यथासिद्धप्रतिविधानं च पूर्वमेव कृतम्। किंच कस्य भ्रमनिवृत्तिः क्रियते उत चेतनस्य न तावज्जडस्य तस्या अचेतनत्वेन भ्रमाश्रयत्वाभावात्। चेतनोहि भ्रान्त्याश्रयः। जडत्वं भ्रमानाश्रयत्वे प्रयोजकमितिचेत्–

## गूढार्थसंग्रहः

एतेन परसम्मतसूत्रचतुष्टयार्थः श्रुतिसूत्राननुगुण इति सूचितम् । परैः ‘अथातो ब्रह्मजिज्ञासा’ इति प्रथमसूत्रे जीवब्रह्माभेदो न सम्भवति । कर्तृत्वभोक्तृत्वादिना अनुभवसिद्धजीवस्य अहमर्थस्य ब्रह्माभेदासम्भवात् इतिशङ्का कर्तृत्वभोक्तृत्वादिरध्यास एव ‘स्थूलोऽहम्’ इत्यादिवत् कर्तृत्वभोक्तृत्वादेराध्यासिकत्वे शुद्धचिति अन्तःकरणतादात्म्याध्यासस्य प्राथमिकस्य सिद्धौ जीवचितः ब्रह्माभेदस्सम्भवत्येवेति ‘अहम्ब्रह्मास्मि’ इत्युपसंहार एव तात्पर्यमिति सिद्धान्त । अथशब्दः ब्रह्मविचारे पुष्कलकारणानन्तर्यपर इति साधनचतुष्टयसम्पत्त्यनन्तरमित्यथशब्दार्थः । अतश्शब्दस्य साधनसम्पत्तेरेवेत्यर्थे साधनचतुष्टयस्य हेतुत्वम्याथशब्देन लाभेऽपि ‘अक्षय्यह वै’ इत्यादिना नित्यानित्यविवेको नसम्भवतीति शङ्कानिरासकत्वेन ‘यत्कृतक तदनित्य’ मिति व्याप्त्युपोद्बलित ‘तद्यथेह’ इत्यादिश्रुतिसिद्धनित्यानित्यवस्तुविवेकादिसम्भवप्रदर्शनेन साधनसम्पत्तेः हेतुत्वदृढीकरणार्थ, अतश्शब्द इति पञ्चपादिकाविवरणप्रक्रिया न्यायरक्षामणावाश्रिता । भामत्यातु—अत्रच ब्रह्मपदेन तत्प्रमाण वेद उपस्थापितः सच योग्यत्वात् ‘तद्यथेह कर्मचित.’ इत्यादिः । अत इति सर्वनाम्ना परामृश्य हेतुपञ्चम्या निर्दिश्यते । तेनायमर्थ. अतः स्वर्गादीना क्षयिष्णुत्वप्रतिपादकात् ब्रह्मज्ञानस्य च परमपुरुषार्थताप्रतिपादकादागमात् यथोक्तसाधनसपत् ततश्च जिज्ञासेति सिद्धमिति ॥

अत्र कूटस्थभिन्नमनित्यमिति न सिद्ध्यतीति प्रागुक्तम् । तत्र यत्कृतक तदनित्यमिति व्याप्त्युपोद्बलितश्रुत्या एतदर्थसिद्धि.कथम् ? अविद्यानिवृत्तेः चरमवृत्तिरूपतायाः तस्या एव मोक्षरूपतायाश्च ब्रह्मसिद्धिवार्तिकयोः मण्डनसुरेश्वराभ्या प्रतिपादनेन मुक्तेरनित्यत्वस्यैवैतत्पक्षे प्रसञ्जिकाहि सा व्याप्तिरिति कथ परपक्ष साधयति ? ‘तद्यथेह’ इत्यादिश्रुतिः दहरविद्यान्तर्गता सा उपासनफलस्य गतिसाध्यस्यानित्यत्व न प्रतिपादयितुमलम् । उपक्रमे ‘ब्रह्मविदाप्नोतिपरम्’ इत्यत्रोक्त ब्रह्मप्राप्तिः ‘सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता’ इतिमन्त्रवर्णे विशदीकृता । ‘अस्माल्लोकात्प्रेत्य एतमानन्दमयमात्मानमुपसङ्क्रम्य इमान्लोकान्कामान्नी कामरूप्यनुसञ्चरन् एतत्सामगायन्नास्ते’ इत्युपसंहारे प्रकटीकृता इति ‘मान्त्रवर्णिकमेव च गीयते’ इतिसूत्रे व्यासो निर्धारयति । नाहं स्थूल इति बाधकविरहेण कर्तृत्वभोक्तृत्वादेराध्यासिकत्वोक्तिर्न घटते । विष्णुपुराणे जडभरतोपाख्याने ‘नाहपीवा’ इत्युपक्रम्य ‘आत्मन्येष नदोषाय शब्दोऽहमिति योद्विज’ इत्यादिना अहमित्यस्याध्यासिकत्व निरस्तमिति अहमर्थस्यानाध्यासिकत्वे जीवब्रह्माभेदोऽपि नघटते । यदापुनः प्रयोगसामर्थ्यमनपेक्ष्य शब्दादवयवसामर्थ्यादेवार्थोऽनुगम्यते, तदा प्रमाणान्तरोपपदप्रकरणाना सङ्कोचहेतूनामभावात् यथासामर्थ्य मुख्यएवार्थ प्रतिपत्तव्यइति भाव’ इति ‘अहम्ब्रह्मैव’ इति विशेषे उपसंहार इति च(प.पा.वि) उक्तेः अनुसारेण ब्रह्मपदस्य प्रकरणोपपदसङ्कोचादिराहित्येन निर्विशेषपरत्व (न्या.र) यदुक्त तदपि नघटते । ‘अभयवै ब्रह्म’ इति (बृ.श) भाष्योक्तनिरवग्रहमहत्त्वस्य ब्रह्मशब्दार्थस्य (प.पा) विवरणे दोषशून्यत्वगुणभूयिष्ठत्वाभ्यामुपपादनकरणेन ब्रह्मशब्दार्थासङ्कोच निर्दोषत्वगुणभूयिष्ठत्वाङ्गीकार एव घटते नान्यथेति अकामेनाप्यङ्गीकर्तव्यम् । ‘एवमसौ बृहत्त्वर्थान्वयात् ब्रह्मशब्दाभिधानीयतो लभते । इतरथा तद्रूपविकल्पस्य न निरङ्कुश प्रभुत्वम् इति नब्रह्मशब्दाभिधेय’ इति पञ्चपादिका । ‘ननु जीवेभ्यो भेदेऽपि बृहत्त्वर्थलाभः देशकालव्यापित्वादिति—तदाह—तद्रूपविकल्पस्येति’ इतिविवरणम् । अत्र जीवब्रह्मभेदे देशकालपरिच्छेदशून्यत्वसम्भवेऽपि वस्तुपरिच्छेदशून्यत्व नसम्भवति अतोऽहब्रह्मासीति विशेषोपसंहारएव वाच्यइति भाव प्रतीयते । अयमर्थ. कथ घटते—यथा देशकालपरिच्छेदशून्यत्व देशकालाभाव नसाधयति तथा वस्तुपरिच्छेदशून्यत्वमपि न आत्मभिन्नवस्त्वभाव साधयितुमलम् । देशकालपरिच्छेदशून्यत्व सर्वदेशसर्वकालसम्बन्धित्व देशकालव्यापित्वमभ्युपगच्छद्भिः वस्तुपरिच्छेदशून्यत्व सर्ववस्तुव्यापकस्वरूपमेवाङ्गीक्रियत इति अवश्यमेषितव्यम् । एवमङ्गीकारएव अचिज्जीववस्तुद्वयपरिच्छेदशून्यत्वमेकस्य

## गूढार्थसङ्ग्रहः

संभवाति । परमते अचितो मिथ्यात्वं जीवस्य ब्रह्माभिन्नत्वमिति वैलक्षण्येन नैकरूपमित्यस्वारस्यम् । 'तं त्वौपनिषदं पुरुषम्' इति श्रुतिविरोधश्च । अतः गुणानन्त्यानन्त्यपरिच्छेदशून्यत्वयोः पृथक्त्वपक्षेऽपि न परसंमतनिर्विशेषसिद्धिः । एतेऽर्थाः अत्रैव प्राक् (जिज्ञासाधिकरणे) भावप्रकाशे त्रय्यन्तसारामृते च सम्यङ्निरूपिताः । एवं 'तत्त्वमसि' 'अहंब्रह्मास्मि' इत्यनयोः न परसंमताखण्डार्थबोधकत्वमित्यपि ॥ एतेन 'जन्माद्यस्य यत' इत्यत्र न धर्मजिज्ञासायामिव श्रुत्यादयएव प्रमाणं ब्रह्मजिज्ञासायां किंतु श्रुत्यादयः अनुभवादयश्च यथा संभवमिह प्रमाणं अनुभवावसानत्वात् भूतवस्तुविषयत्वाच्च ब्रह्मज्ञानस्य' इति(शं)भाष्योक्तिः निरवकाशा । अनुभवस्य साक्षात्काररूपत्वेन विवरणमते श्रुतावेव विश्रान्त्या भामतीमते शुद्धस्य वृत्त्यविषयत्वेनैतदर्थस्यास्मिन्नधिकरणेऽयोगाच्च । कारणत्वस्य परमते माध्यमिकमतवत् संवृतत्वस्य गौडपादकारिकासु स्पष्टतया श्रुतिसूत्रयोः परमतानुगुणत्वासम्भवात् ॥

किंपुनस्तद्वेदान्तवाक्यं यत्सूत्रेणेह लिलक्षयिषितम् । 'भृगुर्वै वारुणिः-तद्ब्रह्मेति' । तस्यच निर्णयवाक्यं 'आनन्दाद्ध्येवेति' इति(शं)भाष्यम् । अत्र पञ्चपादिका-'येषां वेदान्तवाक्यानां येन सन्निवेशक्रमेण ब्रह्मप्रतिपादने समन्वयः स्वाध्यायपाठे स्थितः, तल्लक्षणार्थं सूत्रद्वयमिति । तथैवोदाहरणमाह-'भृगुर्वैवारुणिः' इति । अथशब्दोपात्तन्यायेन प्रथमसूत्रस्योदाहरणम् । (तद्विजिज्ञासस्व) 'यतोवा' इति जन्मादिसूत्रस्य । कथम् ? पूर्वोक्तन्यायेन पृथिव्यादीनां जन्मादिदर्शनात् तत्कारणैकत्वनानात्वान्यतरावगमे प्रमाणाभावात् बुद्धिमत्कारणपूर्वतामात्रे प्रतिपन्ने 'यतोवा इमानि' इति कारणस्यैकवचननिर्देशात् तदर्थमात्रस्यैव विधित्सितत्वात् अर्थात्सर्वज्ञं सर्वशक्तिजगत्कारणमिति कारणविशेषो वाक्यादवगम्यते । 'पुनस्तद्विजिज्ञासस्व' इत्यनूद्य 'तद्ब्रह्म' इति तत्र ब्रह्मशब्दप्रयोगात् बृहत्यर्थान्वयेन सर्वतोऽनवच्छिन्नस्वभाव जगत्कारण ब्रह्मपदार्थ इतिगम्यते इति । अत्र विवरणम्-'येषां वेदान्तवाक्यानामित्यादेः परिहारस्यायमर्थः । सत्यज्ञानानन्दप्रत्यगात्माद्वितीयब्रह्मपदार्थेऽप्रसिद्धेऽपि बृहत्त्वमात्रस्य प्रसिद्धत्वात्तदनुवादेन सन्निहितपदार्थसंसर्गसामर्थ्यात् विशिष्ट प्रतिपत्तुं शक्यत इति ब्रह्मप्रतिपादनपरं सत्यादिवाक्यम् अर्थात् तदेव लक्षणमिति न सत्यज्ञानानन्दब्रह्मस्वरूपलक्षणस्य सिद्धानुवादप्रसङ्ग इति । ननु स्वाध्यायपाठक्रमेण नार्थप्रतिपत्तिः, किंतु वैपरीत्येन 'प्रसिद्धानुवादेनाप्रसिद्धम्' इति न्यायात् तथा च कारणस्य प्रसिद्धत्वात् 'यस्मादाकाशस्सम्भूतः स आत्मा सत्यज्ञानमनन्त ब्रह्म' इति वाक्यप्रवृत्तिः । तथा 'यस्मादेतत् ब्रह्म नामरूपमन्नं चजायते ससर्वज्ञस्सर्वविदिति । तथा यस्मात्प्राणादिजायते सदिव्योह्यमूर्तःपुरुष इत्यादि' तथा योभूतयोनिः 'तदद्रेश्यमग्राह्मम्' इत्यादि, यस्मात्तेजोबन्नानि जायन्ते तत्सदद्वितीयमणिमा 'तत्त्वमसि' इत्यादिकारणमात्रानुवादेन तद्विशेषःप्रतिपाद्यत इति सत्यम् । अधिकारिज्ञानकर्तव्यताब्रह्मात्मप्रतिपादनानां क्रममभिप्रेत्येदमुक्तम् तदाह-तथैवोदाहरणमिति इति । ननु एकत्वे ब्रह्मलक्षणे प्रमीयमाणे वाक्यभेदस्स्यात्, न एकत्वस्य ब्रह्मप्रतिपत्तिगुणभूततयैकवाक्यत्वात् । अथवा एकत्वमपि लक्ष्यान्तर्गतमेव भवति न लक्षणान्तर्गतम् । तथाहि जगत्कारणानुवादेन एकब्रह्म विधीयत इति । तत किमायातमिति । तदाह-अर्थात्सर्वज्ञमिति न सज्ञासज्ञिसंबन्धिपर वाक्यम् किन्त्वर्थप्रतिपादनपरम् । आर्थिकस्तु संज्ञासंज्ञिसंबन्ध इत्याह-पुनस्तद्विजिज्ञासस्वेत्यादि । एकं सर्वज्ञं सर्वशक्ति सर्वतोऽनवच्छिन्नं च जगत्कारणं तच्च ब्रह्मशब्दाभिधेयमित्यर्थः । इति च ॥

ननु 'निरुपाधिके'त्यादिविवरणग्रन्थः प्रागेव (१४.पु) उदाहृतः, पर्यालोचितश्च । अत्र सूत्रद्वयतात्पर्यं 'तद्विजिज्ञासस्वे'त्यत्र विचारणविधिरिति विवरणोक्त्या प्रथमसूत्रं तद्विषयक द्वितीयसूत्रं 'यतोवे'ति वाक्यविषयकमिति विभागः परेषां विवक्षितमिति प्रतीयते । अत्र ब्रह्मलक्षणत्वविभागे विचारविधेश्चाङ्गीकारे वाक्यभेदः न परिहर्तुं शक्यत इति जगत्कारणमनूद्य ब्रह्मत्वविधिरिति सिद्धान्त एव युक्तः । एकत्वंतु कारणगत एकस्यैव निमित्तत्वोपादानत्वाभ्यां सिद्धान्तेऽप्युप-

## गूढार्थसंग्रहः

पद्यते । निमित्तत्वोपादानत्वयोरुभयोः श्रुतिमन्तरा कथं ब्रह्मणि प्रतिपत्तिसंभवः 'तं त्वौपनिषदं पुरुषम्' इत्यत्रत्यपुरुषशब्दस्य 'स यत्पूर्वोऽस्मात्सर्वस्मात्' इति बृहदारण्यकएव निर्वचनेन तस्योपनिषत्तात्पर्यविषयत्वस्य स्फुटत्वात् । 'यस्मादाकाशस्संभूतः स आत्मा' इति वाक्यप्रवृत्त्यङ्गीकारमात्रेण परसमताद्वितीयब्रह्मणः कथं सिद्धिः । सत्यादिवाक्यघटकपदप्रवृत्तिनिमित्तधर्माणां निर्विशेषेऽनङ्गीकारात् उपलक्षणपरत्वनियामकाभावात् सर्वेषां पदानामभावप्रवृत्तिनिमित्तकत्वमङ्गीकृत्य अभावस्याधिकरणरूपत्वेन धर्मभिन्नत्वाङ्गीकारेऽपि अभावत्वप्रकारकबोधानङ्गीकारे तद्वाक्यस्य भ्रमसंशयनिवर्तकत्वेन तत्प्रकारकबोधएवाङ्गीकार्य इति अद्वितीयब्रह्मणः नैव सिद्धिः ॥

किंच 'ब्रह्मविदाप्नोति' इत्युपक्रमे प्राप्यत्वेनोक्तब्रह्मणः उत्तरत्र निरूपणमिति सर्वैरप्यङ्गीकार्यतया तस्य परमतेऽयोगइत्यादिकं जन्माद्यधिकरण एव निरूपितम् । एतेन मुण्डकश्रुत्यर्थोऽपि विवरणोक्तः नघटते । 'अथपरा यया तदक्षरमधिगम्यते' 'परात्परं पुरुषमुपैति' इत्युपक्रमोपसंहारयोः प्राप्यब्रह्मण एव तत्र विवक्षितत्वेन 'अद्रेश्यम्' इत्यादेर्निर्विशेषासाधकत्वस्य त्रय्यन्तसारामृतएवोपपादनेन तत्र परमतविवक्षाया असम्भवात् । 'ऐतदात्म्यमिदंसर्वम्' इति पूर्ववाक्यसहभावेन 'तत्त्वमसि' इति नवकृत्वः अभ्यस्तम् । तस्य च विशेषोपसंहाररूपता त्रय्यन्तसारामृत एवोक्ता । महावाक्यानां न प्राधान्यमितिच तत्रैवोक्तम् । 'स म आत्मेति विद्यात्'(कौ)'एषम आत्माऽन्तर्हृदये (छा.३) एष त आत्माऽन्तर्याम्यमृतः (२४) एषत आत्माऽन्तर्याम्यमृतः' (२२)(बृ) इत्यादीनामेकार्थकत्वं श्रुतिसूत्रतात्पर्यानुसारेण जिज्ञासाधिकरणएवोपपादितम् । शङ्कराचार्या अपि 'उभयव्यपदेशात्त्वहि कुण्डलवत्' 'आत्मेतितूपगच्छन्ति ग्राहयन्ति च' इतिसूत्रयोः उपदेशसाहस्या च 'एष त आत्माऽन्तर्यामृतः' 'एषत अन्तर्याम्यमृतः' 'अन्तःप्रविष्टश्शास्ता जनानाम्' इत्यादिवाक्यानां तत्त्वमस्यादिवाक्यसमानार्थकत्वं व्यक्तं प्रदर्शयन्ति । एवं च 'शास्त्रदृष्ट्यातूपदेशो वामदेववत्' इत्यत्र आत्मत्वग्राहकमेव शास्त्रं विवक्षितम् । आत्मत्वं च न स्वरूपेण किंतु शरीरात्मभावेनेत्युदाहृतश्रुतिसूत्रानुसारेण भगवता वेदार्थसंग्रहे सम्यङ्निरूपितम् । एवं च 'तत्त्वमसि' इत्यादौ पारतन्त्र्यप्रतिपत्तिः सिद्ध्यति । तेन प्राप्य ब्रह्मणः जगत्कारणत्वलक्षणकथनेन राजकुमारनयसिद्धिः कुमारस्य राजप्राप्तिः पारतन्त्र्येण यथा तथा ब्रह्मप्राप्तिरपि पारतन्त्र्येणेत्यर्थः श्रुतिसूत्रतात्पर्यविषयः सिद्ध्यति इति सूत्रद्वयतात्पर्यं निर्मत्सराणां स्फुटं भवति । 'तं त्वौपनिषदं पुरुषम्' इतिश्रुतौ 'स वा अयं सर्वासु पूर्षुपुरिशयः' इति (बृ) तत्रैव निर्वचनानुसारेण सर्वान्तर्यामित्वरूप सर्वशरीरित्वस्योपनिषत्तात्पर्यविषयत्वं सिद्धम् ॥

एतेन (प.पा) विवरणे ब्रह्मणः परिणामिकारणत्वदूषणावसरे 'श्रुतिश्च 'निष्कलं निष्क्रियं शान्तम्' इति क्रियाऽवयवशून्यत्वमाह । नियन्तृत्वादिक्रियाऽपि श्रूयत इतिचेत्—तर्हि परस्परविरोधेसति मायया तत्त्वातत्त्वव्यवस्था कल्पनीया । 'मायाभिःपुरुरूप ईयते' इति प्रवृत्तेः मायानिबन्धनत्वश्रवणात् । चेतनस्य सुषुप्तेः पुरुषार्थत्वावगमात् । ब्रह्मणः स्वतःप्रवृत्तिप्रयोजनाभावाच्च । विपरीतस्वरूपापरित्यागेन विपरीतकार्यापत्तेश्च विवर्तएवेति सिद्धम्' इत्युक्तिर्निरवकाशा । जन्माद्यधिकरण एव 'मायेति प्रज्ञाऽभिधीयते' इति विवरणएवोक्तेः । मायाशब्दस्य यथा नमिथ्यार्थकत्वं तथा प्रागेव (जि. ६९८.पु) निरूपितम् । सुषुप्ते 'सति सम्पद्य नविदुः' इत्यादिश्रुतिभिः ब्रह्मज्ञानाभावेन पुरुषार्थविरहः स्फुटः । ब्रह्मणः प्रवृत्तिप्रयोजनद्वयादिकं 'औपनिषदपरमपुरुष' इत्यादिभाष्यविवरणे स्फुटमुपपादितम् । अतः नियन्तृतया परिणामस्य श्रुतितात्पर्यविषयत्व एव 'तं त्वौपनिषदं पुरुषम्' इति श्रुतिस्सङ्गच्छते ; ननु एकस्य तत्त्वादप्रच्युतस्य पूर्वविपरीतासत्यानेकरूपावभासविवर्ताङ्गीकारे 'मायाभिः पुरुरूप ईयते' इत्यनन्तरं 'अयमात्मा ब्रह्मसर्वानुभूः' इत्यत्र मायाशब्दस्य सत्यार्थकत्वाङ्गीकार एव सर्वानुभवोक्तिस्सङ्गच्छत इत्यपि पूर्वमेव(जि.२४०.पु)निरूपितम् । एवं कुतः पुनस्सत्यमिथ्याधा-

## गूढार्थसंग्रहः

घारण्यां सृष्टौ मिथ्यात्वे पक्षपातः। 'नासदासीत्' इत्यादिना विवरणे श्रुत्यादिप्रमाणोपदर्शनमपि न घटत इति जिज्ञासाऽधिकरण एव निरूपितम्। अतः नियन्तृत्वपरिणामेन परिणामिकारणत्वमेव श्रुतिसूत्रयोर्विवक्षितम्। 'परिणामात्' इति सूत्रे परिणामिकारणत्वस्यैव सूत्रकृता स्फुटं वक्ष्यमाणत्वात्। प्राप्यब्रह्मणः लक्षणकथनेन सृष्टिश्रुतेः प्राप्तिरूपचरमफलपर्यन्तताया अपि सूचनात्। 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इत्यत्रारम्भणशब्देन परिणामिकारणत्वमेव सूचितम्। परमते आरम्भणशब्दप्रयोगः न घटत इति ग्रन्थान्तसारामृतादौ सम्यङ्निरूपितम्। अतः नियन्तृतया परिणाम्युपादानत्वं यदौपनिषदं तद्विशिष्टस्य निरवग्रहमहत्वरूपब्रह्मत्वं सूत्रद्वयेन निरूपितं भवतीत्येव युक्तम् ॥

अन्तर्यामिब्राह्मणे—'नान्योऽतोऽस्ति द्रष्टा' इति परमात्मभिन्नजीवनिषेधपरम् इतिपरसिद्धान्तः। नियन्तुर्नियन्त्रन्तरं निषिध्यत इति वृत्तिकारसिद्धान्तः। अयमेव युक्त इति जिज्ञासाधिकरणे निरूपितम्। 'नान्योऽतोऽस्ति द्रष्टा' इत्यस्य नियन्तुर्नियन्त्रन्तरनिषेधपरत्वेन अन्तर्यामिब्राह्मणस्य जीवभिन्नपरमात्मपरत्वं वृत्तिकाराभिमतमिति सिद्धम्। एवं च सृष्टिसमकालिकनियन्तृत्वस्य अचिज्जीवयोरविशेषेण अन्तर्यामित्वप्रतिपादनपरान्तर्यामिब्राह्मणे विवक्षितत्वेन 'स त आत्माऽन्तर्याम्यमृतः' 'एष त आत्माऽन्तर्याम्यमृतः' इत्यत्र आत्मत्वमन्तर्यामित्वेनैव विवक्षितमिति वृत्तिकारसिद्धान्ते निष्पन्ने—'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यत्राप्यन्तर्यामित्वेनैव सामानाधिकरण्यं विवक्षितमिति ग्रन्थान्तसारामृतेऽप्युपपादितोऽर्थःसर्वोऽपि वृत्तिकारसम्मतो युक्त इति सिद्धम्। एतेन वस्तुपरिच्छेदशून्यत्व सर्ववस्तुव्यापकत्व सर्वशरीरित्वरूपमेवेत्यपि वृत्तिकारसिद्धान्त इति निर्णीयते ॥

विवरणे—'ननु मिथ्यासृष्टिविषयत्वे वाक्यस्याप्रामाण्यं स्यात्। नैतत्, प्रमाणव्यापारानभिज्ञो देवानां प्रियः प्रमाणं हि प्रमेयाभावं न सहते, नाप्रमेयाभावम्। न च सृष्टिश्रुतिः परमार्थसत्यतां प्रमिमीते। तदभिधानाभावात् नहि स्वप्नविषया सृष्टिश्रुतिस्तत्सत्यतां प्रतिपादयति इत्युपक्रम्य किन्तर्हि सृष्टिश्रुतेःप्रयोजनम्? प्रत्यक्षादिसिद्धप्रपञ्चस्य ब्रह्मण्येवोत्पत्तिविनाशवत्तया अन्यत्राभावमुपवर्ण्य तत्रापि प्रतिषिध्य मिथ्यात्वापादनेन प्रमाणान्तराविरुद्धतया अद्वितीयब्रह्मस्वरूपसिद्धिःप्रयोजनम्। तेनैकवाक्यत्वात् अन्यथाशेषिविरोधात्' इत्याद्युक्तम् ॥

अयमर्थः नघटते। सिंहो देवदत्त इत्यत्रारोपाङ्गीकारे वेदाप्रामाण्यम्। बौद्धसंमतसत्यद्वयकल्पना वेदप्रामाण्यवादिभिर्नाङ्गीकर्तव्या। स्वप्नोपमोगतुल्यता वैदिककर्मफलोपभोगस्य विरुद्धा इत्याद्यर्थाना भट्टपादैस्साधनात्। सूत्रकारश्च—'वैधर्म्याच्च न स्वप्नादिवत्' इति योगाचारमतं दूषयन् परमतमपि दुष्टमिति सूचयति। सम्बन्धाक्षेपपरिहारे अविद्यादूषणावसरे 'निरस्तश्चायंपक्षः निरालम्बनवादेन' इति पार्थसारथिः एकात्माऽभ्युपगमपक्षः निरालम्बनवादेन निरस्त इति स्पष्टमाह—'प्रतियोगिनि दृष्टे च जाग्रद्ज्ञाने मृषाभवेत् ॥ ८८ ॥ स्वप्नादिबुद्धिरस्माकं तव भेदोऽपि किंकृतः। नचान्यत्प्रतियोग्यस्ति जाग्रद्ज्ञानस्य शोभनम् ॥ ८९ ॥ यद्दर्शनेन मिथ्यात्वं स्तम्भादिप्रत्ययो व्रजेत्। स्वप्नादिप्रतियोगित्वं सर्वलोकप्रसिद्धितः ॥ ९० ॥ तदीयधर्मवैधर्म्याद्बाधकप्रत्ययो यथा।' (श्लो.वा.नि.वा) इत्यत्र वैधर्म्यपदं प्रयुञ्जाना भट्टपादाः 'वैधर्म्याच्च न स्वप्नादिवत्' इति सूत्रमप्यभिप्रयन्तीति प्रतीयते। अधिकसत्ताकत्वेनापेक्षिकसत्ताकत्वेन अन्यूनसत्ताकत्वेन वा वैधर्म्यपरिहारः भाविभाषोद्धारे मधुसूदनोक्तः नघटते। 'न सत्यद्वयकल्पना' इति भट्टपादोक्त्या बौद्धमात्रसंमतायाः सत्यद्वयकल्पनायाः अप्रामाणिकत्वात्। गुरुचन्द्रिकोक्तरीत्या सत्यद्वयकल्पनेऽपि भट्टपादोक्तयविरोधः जिज्ञासाऽधिकरणएव पर्यालोचितः। दृष्टिसृष्टिपक्षे आत्माऽन्यसामान्यस्यापि प्रातीतिकत्वेन वैधर्म्यकल्पनायास्सर्वथाऽसम्भवात्। एतेन अवस्थाऽज्ञान(तूल)पल्लव) मूलाज्ञानकार्यत्वाभ्यां वैधर्म्यं प्रातीतिकव्यावहारिकवैधर्म्य एव पर्यवस्यतीति भट्टपादोक्तैव विरु—

## श्रुतप्रकाशिका

त्वया जडत्वेनाभिमते ज्ञातरि भ्रमानाश्रयत्वाभावेन साध्यसमव्याप्त्यसिद्धेः; चेतनस्य भ्रमनिवृत्तिरपि भवत्पक्षे न पुरुषार्थस्स्यात् । ज्ञातुरपि निवर्त्यकोटिनिविष्टत्वात्तंप्रति स्वनाशस्यापुरुषार्थत्वाच्च ॥

रागद्वेषानुनिवृत्तिरिव ज्ञानरूपस्यात्मनो ज्ञातृनिवृत्तिः पुरुषार्थ इतिचेत् । न ज्ञातुरेवात्मत्वात् ज्ञातृधर्मतयाऽवगतस्य ज्ञानस्येच्छाद्वेषादेरिवात्मत्वाभावात्, आत्मत्वाभ्युपगमेऽपि तस्य पुरुषार्थार्थयितृत्वाभावेन पुरुषार्थप्रतिसम्बन्धित्वानुपपत्त्या ज्ञानं प्रति ज्ञातृनिवृत्तेः पुरुषार्थत्वायोगात् पुरुषेणार्थनीयस्यहि पुरुषार्थत्व ज्ञानस्यात्मत्वपुरुषार्थप्रतिसम्बन्धित्वाभ्युपगमेऽपि तदपेक्ष्य ज्ञातृनिवृत्तेः पुरुषार्थत्वमयुक्तम् । ज्ञानंप्रति ज्ञातुर्दुःखतद्धेतुष्वन्यतमत्वाभावात् । सुखदुःखभोक्तारंप्रति सुखतद्धेतूना दुःखतद्धेतुनिवृत्तेरपिहि पुरुषार्थत्वम् । नहि ज्ञाता ज्ञप्तेर्दुःखरूपः, नच दुःखजनयिता ज्ञानस्य दुःखानुभवितृत्वायोगात् प्रवृत्तिनिवृत्तिपरत्वेन प्रयोजनपर्यवसानं त्वयैवापास्तं ध्याननियोगवादप्रतिक्षेपे । अतोऽनुपपन्नं शास्त्रस्य त्वदुक्तं प्रयोजनपर्यवसायित्वम् ॥

यादवप्रकाशीयास्तु—दुःखत्रयाभिघातज्ञानानन्तरं तदुपशमोपाये पुरुषप्रवृत्तेरेव हेतोर्ब्रह्मैव जिज्ञास्यं नतु प्रधानादीनीति प्रथमसूत्रार्थं वर्णयन्ति । अस्तुब्रह्मणो जिज्ञास्यत्वं नैतावता प्रधानादीनामजिज्ञास्यत्वं तेष्वन्यतमस्यैव ब्रह्मशब्दार्थत्वात् । शास्त्रेणहि ब्रह्मानूद्य तज्ज्ञानं विधीयते एकेन वाक्येनैकस्यार्थस्य विधानानुवादायोगात् अनुवादः प्रमाणान्तरसापेक्षः प्रमाणान्तरैश्च वादिभिस्सम्भावितास्तत्त्वप्रकारविशेषास्सर्वे परिकल्पिता इति तत्त्वान्तरप्रेक्षा न शक्या । अतस्तेष्वन्यतमस्यैव ज्ञातव्यत्वविधानाय शास्त्रेणानुवादः क्रियतइति शङ्कापरिहारार्थं जन्मादिसूत्रम् । सन्मात्रवपुषोऽनेकशक्तिशालिनएकस्मादद्वितीयात् ब्रह्मणः कृत्स्नस्य चिदचित्प्रपञ्चस्य जन्मास्थितिलय प्रतिपाद्यम्, अतईदृशं तत्त्वं वाद्यन्तरैरपरिकल्पितमिति न तत्परिकल्पितार्थेष्वन्यतमस्य ब्रह्मशब्दार्थत्वमिति सूत्रार्थमाहुः । एवतर्हि प्रमाणान्तरासिद्धत्वाच्छास्त्रेणानुवादासम्भव इति शङ्कायां शास्त्रयोनित्वादित्युच्यते । वेदान्तेष्वपि केनापि वाक्येन प्रतिपादितस्य वाक्यान्तरेणानुवादउपपन्नः प्रमाणान्तरानाघ्रातत्वरवस्तुप्रतिपादनक्षमत्वं शब्दमहिमेति सूत्रतात्पर्यं वदन्ति । तथाऽपि सिद्धेव्युत्पत्त्यभावात् प्रवृत्तिनिवृत्तिविरहे वाक्यस्य प्रयोजनाभावाच्च ब्रह्मणश्शास्त्रप्रतिपाद्यत्वायोगशङ्कापरिहारपरं समन्वयसूत्रं व्याचक्षते ॥

तत्र तावत्प्रथमसूत्रे दुःखत्रयाभिघातज्ञानस्य पूर्ववृत्तत्वं प्रागेव प्रतिक्षिप्तम्, प्रत्यक्षादिना तज्ज्ञाने विवक्षिते तत्परिहारस्यायुर्वेदादिसिद्धत्वात् स्वर्गादेरपि तापत्रयान्तर्भावज्ञानस्यच साङ्ख्यादिशास्त्रान्तराधीनत्वे मोक्षोपायस्यापि तत्रैव सुलभतया वेदान्तैनैरपेक्ष्याद्वेदेन तज्ज्ञानस्य कर्मविचारसापेक्षतया तत्पूर्ववृत्तत्वापाताच्चेति, प्रधानादीनामजिज्ञास्यतापरं च पूर्वमेव निरस्तम् । श्रुत्यविरुद्धांशे साङ्ख्यादिशास्त्रस्य भवद्भिरङ्गीकृतत्वाद्विरुद्धांशे चाप्रामाण्यस्य विरोधाधिकरणन्यायसिद्धत्वात्प्रमेयदौस्थ्यस्य तर्कपादे दर्शयिष्यमाणत्वात् वेदान्तवाक्यानां अतत्परत्वस्य ईक्षत्यधिकरणादिषु वक्ष्यमाणत्वाच्च सूत्रस्य कृतकरत्वप्रसङ्गादिति ॥

जन्मादिसूत्रस्य वाद्यन्तरापरिकल्पितप्रकारेणौपनिषदतत्त्ववैलक्षण्यात् ब्रह्मशब्दस्य तत्परिकल्पितप्रधानाद्यन्यतमार्थत्वनिरासपरत्वंचायुक्तम्, विशेषणभेदायत्तविशेष्यवैलक्षण्यपरिहाराभावे सत्यद्वितीयवस्तुनस्समस्तजगत्कारणत्वप्रतिपादनानुपपत्तेः । चिदचित्प्रपञ्चस्याद्वितीयकारणतयाहि वाद्यन्तरकल्पिततत्त्वेभ्य औपनिषदतत्त्ववैलक्षण्यं भवद्भिरुक्तम्, वेदान्तवेद्यतत्त्वस्य त्वदुक्तप्रकारेण प्रधानादिवैलक्षण्यमीक्षत्यधिकरणादिन्यायैनैरपेक्ष्येण नसिद्ध्यति । इह वक्ष्यमाणन्यायातिरिक्तन्यायान्तरानुक्ते, वक्ष्यमाणानुपपत्तीनां वक्ष्यमाणन्यायैर्विना परिहारायोगाच्च, वक्ष्यमाणोपजीवने च ततएव तत्त्ववैलक्षण्यं प्रधानादेरजिज्ञास्यत्वं च सिद्ध्यतीति कृतकरत्वं स्यात् । वाक्यान्तरेण प्रतिपादितस्य वाक्यान्तरेणानुवादसम्भवपरत्वं च—

## गूढार्थसंग्रहः

एतेन 'वैधर्म्याच न स्वप्नादिवत्' इतिसूत्रे वैधर्म्यादिति हेतुः मीमांसकादिसम्मतः सूत्रकृतो विवक्षितः। 'चशब्देन स्वप्नज्ञानानामपि याथार्थ्यं विवक्षितमिति दृष्टान्तासम्भवः' हेतुर्विवक्षितः। इममर्थमभिप्रेत्यैव भगवता भाष्ये चकारार्थानुक्तावपि वेदान्तदीपे 'चकारात्तान्यपि यथार्थानीत्यभिप्रायः' इत्युक्तम्। स्वाप्नार्थानां सत्यत्वं जिज्ञासाऽधिकरणे भगवतैव साधितम्। सन्ध्याधिकरणे स्वाप्नार्थानां सत्यत्वं सूत्रकारसम्मतमिति निर्धारयिष्यते। परमते स्वाप्नज्ञानार्थयोरुभयो. अवस्थाऽज्ञानपरिणामत्वेन ज्ञानस्याबाधः अर्थस्य बाधश्च नघटत इति प्रागेव निरूपितम्। सृष्टिश्रुतेरसप्रयोजनतया तात्पर्यवत्त्वस्य पूर्वमेवोपपादनात्। सृष्टिश्रुतेः मुक्तिवाक्यैकवाक्यत्वेन प्राधान्येन तदनुसारेण नियन्तृत्वनिबन्धनोपादानोपादेयभावप्रतिपन्नपारतन्त्र्यप्रतिपत्तिफलकत्वेन 'तत्त्वमसि' इत्यादिवाक्यानां शेषिविरोधाभावेन स्वतः प्रामाण्यस्य वैदिकैस्सर्वैरप्यङ्गीकृतत्वेन स्वरसत. परमार्थसत्यविषयकत्वे सिद्धे अवैदिकबौद्धसमतव्यावहारिकसत्यविषयत्वाभ्युपगमे सृष्टिस्थितेःदीर्घभ्रमसंपादनार्थत्वमेव स्यात् परसमत श्रुत्यादीनां बाधकत्वं न संभवतीति जिज्ञासाऽधिकरण एव निरूपितम्। अयमर्थः सर्वोऽपि प्रागेवोपपादितः। अतः जन्माद्यधिकरणसूत्रस्य यथोक्त एवार्थ. ब्रह्मणः परिणाम्युपादानत्वमेवात्र विवक्षितमिति पूर्वमेव निरूपितम्। नियन्तृत्वेन तस्यैव निमित्तत्वं च, निमित्तत्वेन परिणामित्वाङ्गीकारे जडवदु सावयवपरिच्छिन्नकार्यापत्तेर्ब्रह्मणो नावकाश.। तत्कार्यान्तर्यामित्वस्यैव ब्रह्मण्यङ्गीकारात्। 'अज आत्मा महान्ध्रुवः' 'न जायते' इत्यादिश्रुतिविरोधोऽपि न संभवति सूक्ष्मावस्थचेतनाचेतनान्तर्यामित्वं कारणताऽवच्छेदकम्। स्थूलावस्थचेतनाचेतनान्तर्यामित्वं—कार्यावच्छेदकम्। 'सोऽकामयत बहुस्याम्' 'सच्चत्यच्चाभवत्' इति श्रुत्या 'सदेव सोम्येदमग्र आसीदेकमेव' 'बहु स्यां प्रजायेय' इत्यादिश्रुतिभिः परिणामिकारणत्वम् उक्तान्तर्यामित्वव्यतिरिक्तरूपेण जन्मनोऽभावेन 'अज आत्मा' इत्यादिश्रुतेरविरोधश्च। मृत्त्वावस्थापरित्यागेन घटशरावाद्यवस्थावत् मृदन्तर्यामित्वापरित्यागेन घटशरावाद्यन्तर्यामित्वम्। परिणामिकारणतावादे उपादानोपादेययोरभेदस्य सर्वसमतत्वात्। एतेन 'कथ्याय परिणामः' इति परिणामदूषणमपि निरवकाशम्। निरंशस्य संयोगो न संभवतीति बौद्धोक्ताक्षेपस्य परमाणुद्व्यणुकयोरनङ्गीकारेण त्रसरेणोरेव प्रत्यक्षसिद्धस्याभ्युपगमेन त्रसरेणुद्वयसंयोगस्य प्रत्यक्षसिद्धतया त्रसरेणोः नैयायिकमतव्यतिरिक्तमते निरंशत्वेन प्रत्यक्षसिद्धतया प्रत्याख्यानासंभवादिति भावप्रकाशे (१.सपु) निरूपितम्॥

'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा' इत्याक्षेपस्य परिहाररूपे 'श्रुतेस्तु शब्दमूलत्वात्' इतिसूत्रे श्रुतिबलादेव निरवयवपरिणामः अभ्युपगतः सूत्रकृता। नचात्र परसमतविवर्तबोधकं किञ्चिद्वर्तते येन विवर्तोत्प्रेक्षणं युक्तं स्यात्। एतेन पूर्वरूपापरित्यागेन परिणामाङ्गीकारे 'एवंतर्हि विवर्तं प्रतिपादयति शुक्तिकारजतमायाव्याघ्रादिषु विवर्तस्य तल्लक्षणत्वात्' इत्युक्तिर्निरवकाशा। स्वमतासिद्धार्थमङ्गीकृत्य विषयकल्पनाया अन्याय्यत्वात् शुक्तिकारजतस्थले विवर्तोपादानत्वस्य परव्यतिरिक्तस्य कस्यापि वैदिकदार्शनिकस्यासंमतत्वात्। परसमतविवर्तोपादानत्वं तु प्रातीतिकवस्त्वनङ्गीकर्तृवैदिकदार्शनिकेषु कश्चिदपि नाभ्युपैति। एतेन 'किंच नहि व्यवहाराभावमात्रेण वस्तुव्यतिरेकः वृक्षादिषु पृथिवीति व्यवहाराभावेऽपि पृथिवीत्वस्य स्यात्' इति (अ.सि) मधुसूदनोक्तमप्यनुपादेयम्। पृथिवीशब्दस्य भूमावेव प्रसिद्धतया वृक्षस्य भूमित्वेन व्यवहाराभावात् तथा व्यवहाराभावः पञ्चभूतान्यतमपरत्वेन पृथिवीशब्दस्य पृथिवीविकारवृक्षे पृथिवीति व्यवहारः युक्त एव, वृक्षस्य बीजविकारत्वं ननु भूविकारत्वम् बीजे पञ्चभूतान्यतमपृथिवीत्वं वर्तत एव॥

एतेन आत्मनि कार्यजनिहेतुत्वस्यैवोपादानलक्षणत्वात् तस्य च परिणाम्यपरिणाम्युभयसाधारणत्वात्' इत्यद्वैतसिद्धि. स्वतादात्म्यवति कार्यहेतुत्वस्य विवक्षणादिति लघुचन्द्रिका। स्वाभिन्नकार्यजनकत्वमुपादानत्वम् अस्ति च प्रपञ्चस्य सद्रू

## गूढार्थसंग्रहः

पेण ब्रह्मणा विवर्तमानेन जडेनाज्ञानेन परिणामिनाचाभेदः 'सन्घटः जडोघट' इति सामानाधिकरण्येनानुभवात् । 'नच 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इति सूत्रे अनन्यत्व व्यतिरेकेणाभाव., 'नखल्वनन्यत्वमित्यभेदं ब्रूमः किंतु भेदव्यासेधामः' इति भाष्यभामतीनिबन्धनाभ्या प्रपञ्चस्य ब्रह्माभेदनिषेधादभेदाभ्युपगमे अपसिद्धान्त इति वाच्यम् ; तयोर्ब्रह्मरूपधर्मिसमानसत्ताकाभेदनिषेधे तात्पर्येण शुक्तिरजतयोरिव प्रातीतिकाभेदाभ्युपगमेऽपि विरोधाभावादिति ' सिद्धान्तलेशसंग्रहे इति केषाचित्पक्षोक्तिः निरवकाशा । प्रातीतिकतादात्म्यस्यैव ब्रह्मणश्श्रुतिसूत्रादितः असिद्धेः । 'जडोघट' इतिप्रतीत्या घटे जडत्व यथा तथा 'सन्घट' इतिप्रतीत्या घटे सत्त्वमेव सिद्ध्यति । अस्तिघटः सन्घट इत्यनयोर्विशेषाभावात् । अस्ति घट इत्यत्र कर्तरि लकारः सन्घट इत्यत्र लटएव शतृप्रत्ययः। 'अस्तिब्रह्म' इत्यत्रापि ब्रह्मण्यस्धात्वर्थकर्तृत्वमेव विवक्षितमिति प्रागेव निरूपितम् । अस्तिघट इत्यत्र सद्रूपे ब्रह्मणि घटो भासते नास्ति घटइत्यत्र सद्रूपे ब्रह्मणि घटस्य निषेध इत्यादि विवरणप्रक्रिया व्याकरणविरुद्धा सर्वलोकाविरुद्धाचेत्यपि जिज्ञासाऽधिकरणे निरूपितम् । एतेन 'सोऽकामयतबहुस्यां प्रजायेय' इत्यादौ सृज्याभेदस्य प्रतिपादनात् उपादानत्वम् इत्यद्वैतसिद्धिः विवर्तोपादानता न साधयितुमलम् । 'परिणामात्' इतिसूत्रे शङ्करभाष्ये एतछ्रुत्युदाहरणेन ब्रह्मणः परिणाम्युपादानत्वस्यैव ततस्सिद्धेः विवर्तोपादानत्वसाधकाभावात् प्रवेशनिबन्धनबहुभवनस्यैव तत्र प्रतिपादनेन नियन्तृत्वनिबन्धनबहुभवनस्यैव तत्र विवक्षितत्वात् ॥

'*अतो यदवष्टम्भो विश्वो विवर्तते प्रपञ्चः तदेव मूलकारण ब्रह्मेति सूत्रार्थः*' इति पञ्चपादिका—अत्र विवरणम् 'त्रैविध्यमत्र सभवति रज्ज्वाः सयुक्तसूत्रद्वयवन्मायाविशिष्ट ब्रह्मकारणमिति वा 'देवात्मशक्तिं स्वगुणैर्निगूढाम्' इतिश्रुते मायाशक्तिमत्कारणमिति वा जगदुपादानमायाऽऽश्रयतया ब्रह्मकारणमिति वेति । तत्र विशिष्टपक्षे तथैव ब्रह्मत्वेनोपलक्षितस्य ज्ञानानन्दादिस्वरूपलक्षणेन मायानिष्कर्षालक्षणद्वयेन विशुद्धब्रह्मसिद्धिः । उत्तरपक्षयोस्तु मायायाः ब्रह्मपरतन्त्रत्वात्तत्कार्यमपि ब्रह्मपरतन्त्र भवति । यथाऽशुतन्त्रतन्त्वारब्धोऽपि पटोऽशुतन्त्रः प्रतीयते । ततश्चोत्पद्यमानकार्यस्य यदाश्रयोपाधिज्ञानानन्दलक्षण च तत् ब्रह्मेति शुद्धब्रह्मलाभ इति, तदाह—यदवष्टम्भ इति' इति । सयुक्तसूत्रद्वय रज्ज्वा यथोपादान तथा मायाविशिष्ट ब्रह्मकारणमित्येकःपक्ष । पक्षान्तरमाह—देवात्मेति । स्वगुणैः सत्वरजस्तमोलक्षणैरित्यर्थः । पूर्वत्र मायाब्रह्मणोः समप्राधान्यम् । अत्रतु ब्रह्मणः प्राधान्य मायायाश्चोपसर्जनत्वमित्यर्थः । सकलजगदाकारेण विवर्तमानमायाऽधिष्ठातृत्व ब्रह्मलक्षणमिति पक्षान्तरमाह—जगदुपादानेति । एव मतभेदमभिधायातिव्याप्तिं निरस्यति तत्रेति । भवतु परतन्त्रत्वम् ततःकिमिति ? अतआह—ततश्चेति । आश्रयोपाधीति । आश्रयस्याज्ञानस्य सत्ताहेतुरित्यर्थ.' इति तत्त्वदीपनम् ॥

अत्र संयुक्तसूत्रद्वयं रज्ज्वाः परिणाम्युपादानमेव । तत्र सूत्रद्वयसयोगः नैयायिकैरसमवायिकारणत्वेन यःपरिकल्पितः सएव रज्जुत्वावस्था इति परिणाम्युपादानत्व सर्वार्थसिद्धौ स्थापितमाचार्यपादैः । सूत्रद्वयदृष्टान्तेन मायाब्रह्मणोस्समप्राधान्येन मायाविशिष्टब्रह्मणः विवर्तोपादानत्व कथ सिद्ध्यति । परिणामिविवर्तोपादानयोः दृष्टान्ते समप्राधान्याभावात् ।— 'देवात्मशक्तिं स्वगुणैर्निगूढाम्' इत्यत्र सत्त्वरजस्तमोगुणाश्रयशक्तिमत. कारणत्वेऽपि शक्तिमत्त्व 'क्षरप्रधानममृताक्षर हरः क्षरात्मानावीशते देवएकः' इति तत्रैवोत्तरत्र ईशेशितव्यभावेन सबद्धत्वरूपमिति स्फुटम् । एव 'अस्मान्मायी सृजते विश्वमेतत्तस्मिश्चान्यो मायया सन्निरुद्ध.' 'मायातु प्रकृतिं विद्यान्मायिनतु महेश्वरम्'(श्वे)इति चतुर्थे प्रकृतेः मायाशब्दार्थत्वेन मायाशब्दस्य नमिथ्यार्थकत्वम् मायास्वामीत्वीश्वरः अन्यः ईश्वरेण स्वाभाविकभेदवान् जीवः इत्यर्थनिष्कर्षेण परसमतविवर्तोपादानत्वस्य न प्रसङ्गः । तृतीयपक्षे जगदाकारेण विवर्तमानमायाऽधिष्ठातृत्व केन प्रमाणेन सिद्धम् । अत्र प्रथमपक्षे ब्रह्मत्वेनोपलक्षितस्य ज्ञानानन्दादिस्वरूपलक्षणेन मायानिष्कर्षालक्षणद्वयेन विशुद्धब्रह्मसिद्धिः' इति(प.पा) विवरण-

## श्रुतप्रकाशिका

शास्त्रयोन्यधिकरणस्यायुक्तं कृतकरत्वादेव 'अग्निहोत्रं जुहोति' इतिवाक्यान्तरेण विहितस्य होमस्य 'दध्ना जुहोति' इति वाक्यान्तरेणानुवादः पूर्वकाण्डे प्रसिद्धः (अग्निहोत्रा)आग्ने)यादिषट्कं तदुत्पत्तिवाक्यविहितम्। 'यएवंविद्वान्पौर्णमासीं यजते' 'यएवंविद्वानमावास्यां यजते' इति वाक्याभ्यामनूद्यत इति च तत्रतत्र प्रसिद्धम्। अतो वाक्यभेदेन विधानानुवादसंभवो नात्र व्युपाद्यः॥

समन्वयसूत्रस्य च प्रवृत्तिनिवृत्तिपरत्वाभावेऽपि शास्त्रस्य प्रयोजनवत्ताप्रतिपादनपरत्वमिष्टम्, सिद्धेप्रतिपादनपरत्वमयुक्तं प्रथमसूत्रेणैव सिद्धार्थव्युत्पत्तेस्समर्थितत्वात् तत्रच तत्समर्थनाभावेन त्वदुक्तार्थपरत्वे तत्सूत्रवैयर्थ्यस्योपपादितत्वाच। सिद्धवस्तुमात्रे शब्दशक्तिसमर्थनाभावेसति सिद्धवस्तुवैलक्षण्यतद्विधानानुवादतत्प्रयोजनादिनिरूपणस्यानपेक्षितत्वेन जन्मादिसूत्रत्रयोत्थानस्य तत्पूर्वकताऽवश्यम्भावात्; वक्ष्यमाणोपजीवनेनोत्थाने प्रतिपत्तिक्रमसामञ्जस्याभावादाद्यसूत्रस्यानपेक्षिताविधानपरत्वायोगाच्च, अतो भाष्यकारोक्तार्थपरत्वमेव चतुस्सूत्र्या उपपन्नम्॥

॥ समाप्तं समन्वयाधिकरणम्॥



## गूढार्थसंग्रह

पर्यालोचनया ईश्वरस्यैव जगत्कारणत्वं विवरणकारसम्मतमिति प्रतीयते। एतत्तात्पर्येणैव ईश्वरगतमपि कारणत्वं तदनुगतमखण्डचैतन्यं शाखाचन्द्रमसमिव तटस्थतया उपलक्षयितुं शक्नोतीति तस्य ज्ञेयब्रह्मलक्षणत्वोक्तिरिति विवरणानुसारिमतं निरूपितम्(सि.ले.स) अप्पयदीक्षितैः। ज्ञेयब्रह्म ध्येयब्रह्मद्वैविध्यं श्रुत्यादिप्रमाणतः नैवसिद्ध्यतीति भावप्रकाशे (३.स) निरूपितम्। सूत्रकारश्च प्रतर्दनविद्याया निर्गुणविद्यात्वेन परसम्मतायामुपासात्रैविध्यं श्रुतितात्पर्यविषय इति साधयतीति प्रागेव त्रय्यन्तसारामृते च निरूपितम्। अतश्च ईश्वरगतमेव जगत्कारणत्वं तद्धि ब्रह्मणस्सविशेषस्यैव लक्षणं नतु पररीत्या ब्रह्मत्वोपलक्षितस्य विवर्तोपादानत्वंतु न युक्तितः क्वापि साधितं परैः नापि श्रुतितइति जिज्ञासाऽधिकरणे निरूपितम्। अतश्च ब्रह्मशब्दस्य परसमतनिर्विशेषपरत्वासम्भवात् 'जन्माद्यस्ययत' इतिसूत्रे विवर्तोपादानत्वस्यापि अप्रामाणिकतया तद्विवक्षाया असंभवेन जन्माद्यधिकरणान्ते तस्मात्सर्वेषु वेदान्तवाक्येषु पाठव्यत्यासेन जगत्कारणमात्रानुवादेन तस्य ब्रह्मत्वं प्रतिपादयतीति विवरणोक्तिर्निरवकाशा। प्रसिद्धानुवादेनाप्रसिद्धं विधीयतइति न्यायोऽपि नघटते। अतः जगत्कारणस्यैव प्राधान्यं मुक्तप्राप्यत्वात् कारणवाक्यानां प्राप्तप्रतिपादकवाक्यानामैकरस्यात् राजकुमारणनयसूचनात् परसमतमहावाक्यानां चाप्राधान्यमिति जन्माद्यधिकरणे व्यासतात्पर्यं एव युक्तः॥

'शास्त्रयोनित्वात्' इतिसूत्रं द्वेधा वर्णितं परैः तत्र वेदादिस्रष्टृत्वं ब्रह्मणो नसम्भवति वेदस्य नित्यत्वात् (प.पा.वि) इति शङ्का। 'अस्य महतो निश्वसितमेतद्यदृग्वेदः' (बृ) इतिश्रुत्या वेदस्रष्टृत्वप्रतिपादनात् वेदस्य नित्यत्वं सृज्यत्वाविरोध्येव वाच्यम्; एतेन जन्माद्यधिकरणोक्तं सर्वज्ञत्वं दृढीकृतंभवति। शास्त्रस्य योनित्वादुत्पादकत्वादित्यर्थः। अथवा योनिशब्दः ज्ञापकहेतुपरः शास्त्रप्रमाणकत्वादित्यर्थः। पूर्वाधिकरणोक्तजगत्कारणत्वस्यानुमानगम्यत्वनिरसनपूर्वकं शास्त्रप्रमाणकत्वसाधनेन सर्वज्ञत्वादिदृढीकरणम्। जन्माद्यस्य यत इत्यत्र न स्फुटं शास्त्रप्रमाणकत्वमुक्तम्। अत्र 'तत्वौपनिषदं पुरुषम्' इति श्रुतितात्पर्यं निर्धारितं भवति इति॥

## गूढार्थसङ्ग्रह

अत्र प्रथमवर्णके विवरणोक्तदिशा वेदनित्यत्व यदि पूर्वपक्षबीजस्यात् तदा विय पादएव एतदर्थो वक्तव्यस्स्यात्। जन्माद्यस्य यत इत्यत्र परब्रह्मातिरिक्तसामान्यस्याप्यस्येत्यत्र विवक्षित वेन ब्रह्मान्यसामान्यस्यापि कार्यत्वस्य पूर्वाधिकरणे ऽभिप्रेतत्वेन सर्वज्ञत्वस्य ततएव सिद्धस्य ततोऽसिद्धयभावेन तृतीयसूत्रे दृढीकरणार्थे प्रयत्नोऽपि विफल । किंच सर्वज्ञत्व 'द्रष्टुश्च ज्ञानशक्ति न कारणतया, किंतु दीपप्रभावत् सयुक्तद्योतनेवेति 'परमिहपुनस्साध्यते सर्वविरत्वम्' इति तृतीयसूत्रारम्भे (१.१.३.अ)'ननु सोपाधिकधर्मत्वात् न स्वरूपलक्षणत्वमित्युक्तम्। न। अनेन सर्वज्ञशब्देन सर्वावभासक्षम विज्ञप्तिमात्र आदित्यादिप्रकाशवत् अविषयोपाधिक विज्ञानमेव ब्रह्मस्वरूपलक्षण विवक्षितमित्यविरोध· ' इति जन्माद्यधिकरणेच विवरणोक्तरीत्यङ्गीकारे 'यस्सर्वज्ञ' इतिश्रुतौ सर्वज्ञशब्देन तादृशार्थालाभ कर्तर्येव कप्रत्ययस्य विधान नतु भावे इत्यस्य पूर्वमेव निरूपणात् । ' निष्कल निष्क्रियम् ' इत्यत पूर्वे ' ज्ञ कालकालो गुणी सर्वविद्य ' इति निर्गुणश्रुते पूर्वं परत्रच श्रूयते। तत्रच ज्ञाधात्वर्थक्रियाकर्तृत्व गुणित्व च प्रतिपादितम् । ' निष्कल निष्क्रिय शान्त निरवद्य निरञ्जनम्। अमृतस्य परसेतु दग्धेन्धनमिवानलम् ' इति श्रुतिक्रम । अत्रामृतसेतुत्व क्रियामन्तरा नघटते । धारकत्वरूपस्योपायत्वरूपस्य वा सेतुत्वस्य क्रियाविरहेऽसभवात् । ' दग्धेन्धनमिवानलम् ' इत्यत्र ' सर्वान्पाप्मन औषत् ' (बृ) इति पुरुषशब्दार्थस्य ' मुमुक्षुर्वै शरणमह प्रपद्ये ' इति पूर्वश्रुतौ शरणशब्दविवक्षितस्य सर्वपापदाहकत्वस्यापि क्रियाऽनङ्गीकारेऽसभवएव । एतच्छ्रुते पूर्वं परत्र च बहुधाऽभ्यस्तस्य देवशब्दस्य सृष्ट्यादिक्रीडाकर्त्रर्थस्य क्रियाविरहे सर्वथाऽसभव एव । सृष्ट्यादिक्रीडाकर्तृत्वाङ्गीकारे नियन्तृत्वमकामेनापि स्वीकार्यम् । ' निष्कलनिष्क्रियम् ' इति श्रुत्यानुपूर्वीपर्यालोचनायामवयवपरिणामरूपक्रियाविरह एव तत्र विवक्षित इति प्रतीयते । तेन कूटस्थत्व स्वरूपसङ्कोचविकासराहित्यरूपम् इत्यपि सिद्ध्यति । क्रियासामान्यविरह उत्सर्गापवादनयविरोधान्नात्र विवक्षित । नापि धर्मसामान्यविरह उक्तन्यायाविरोधादेव । एव च ज्ञानक्रियाकर्तृत्वाङ्गीकारे ' निष्कल निष्क्रियम् ' इति श्रुतिविरोधोऽपि न सभवति । 'निरवद्यम्' इत्यनेन क्रियादेरविद्यकत्व परसमत निरस्तम् । अत ब्रह्मण परिणामिकारणत्वपक्ष एव सर्वज्ञत्वाद्युपपद्यते नतु विवर्तवादपक्ष ॥

कौमुदीकारास्तु—स्वरूपज्ञानेनैव सर्वज्ञत्व, नतु मायावृत्त्या । ' तमेव भान्तमनुभाति सर्वम् ' इति श्रुतिविरोधात् । ' एकमेवाद्वितीयम् ' इति श्रुत्या सृष्टे प्राक् वृत्तिज्ञानानामपि प्रळयस्य वाच्यतया ब्रह्मणस्तदा सर्वज्ञत्वाभावापत्त्या 'तदैक्षत' इति श्रुत्युक्तेक्षणायोग ' इति विवरणकारमतमेव साधयन्ति । विवरणे उक्तस्य सर्वज्ञप्राज्ञादिशब्दार्थासाङ्गत्यस्यैतन्मतेऽप्यपरिहार एव । मायावृत्तिव्यतिरिक्तस्यैव प्रळय व्याकृतविरहवत् सर्वज्ञश्रुतिविरोधादङ्गीक्रियत इति (सि ले स) अच्युतकृष्णानन्दतीर्थोक्तिरप्यनुपादेया । ' तद्धेद तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्या व्याक्रियत ' इति श्रुतिवत् मायावृत्तिसाधकश्रुत्यभावात् 'कामस्सङ्कल्प ' इत्यादिश्रुतिवत् ज्ञाधात्वर्थस्य मायावृत्तित्वसाधकश्रुत्यभावाच्च । सर्वज्ञत्वादिश्रुतिविरोधान्निर्विशेषस्य जगत्कारणत्व नसभवति किंतु सविशेषस्यैवेत्याक्षेपे एतत्समाधानायोगात् । ब्रह्मण स्वरूपचैतन्यत्व स्वसृष्टसर्वावभासकत्वात्सर्वज्ञत्वाङ्गीकारेऽपि दृश्यावच्छिन्नरूपेण ब्रह्मकार्यत्वात् ' यस्सर्वज्ञ ' इत्यादिज्ञानजनिकर्तृत्वश्रुतरपि न विरोध इति (सि ले स) आचार्यवाचस्पतिमिश्रसिद्धान्तोऽप्यनुपादेय । तथासति सर्वज्ञत्वस्य स्वरूपलक्षणत्वासम्भवेन जगत्कारणत्वसर्वज्ञत्ववादीना सविशेष एव सूत्रकारोक्तरीत्योपपत्तिसभवात् निर्विशेषवादस्यैव श्रुतिता पर्याविषयत्वप्रसङ्गात् ' सदेव—अग्रआसीत्' 'बहुस्या 'तत्त्वमसि 'आत्मा वा—अग्रआसीत्' ' तद्धेद—अव्याकृतमासीत् ' ' ब्रह्म—अग्रआसीत् । तदात्मानमेवावेदह ब्रह्मास्मि ' इत्यत्र असधातुवाद कर्तरि लकारस्य परमतेऽयोगेन महावाक्याना निर्विशेषपरत्वमत्र परसमत नघटते । अत्र असधातो कर्तरि लकारप्रयोगेण ' प्रातिपदिकार्थमात्रे प्रथमा ' इत्यस्य न पञ्चपादिकासक्षेपशारी

## गूढार्थसङ्ग्रहः

श्लोकार्थो युक्तः । अयमर्थः जिज्ञासाऽधिकरणे 'प्रकृतिप्रत्ययोगेनहि पदत्वम्' इत्यादिभाष्यविवरणे(२६६.पु)निरूपितः एतेन सर्वशक्तित्वमपि सविशेषवाद एव घटतइति सिद्धम् ॥

विवर्तोपादानत्वस्य अनुमानगम्यत्वाभावेन आक्षेपासम्भवात् उपादानत्वस्य शास्त्रप्रमाणक वद्दीकरणार्थं 'शास्त्रयोनित्वात्' इति सूत्रमिति परोक्तिरपि निरवकाशा । नैयायिकैः निमित्तकारणत्वमात्रस्य शास्त्रगम्य त्वाङ्गीकारात् कारणानुवादेनाद्वितीयब्रह्मसिद्धिरेव विवक्षितेति (प.पा) विवरणकारसिद्धान्ते अनुमानगम्यत्वाभावेन शास्त्रयोनित्वादित्यस्य द्वितीयवर्णके वैयर्थ्यमेव । अतः प्रागुक्तदिशा 'तत्वौपनिषद पुरुषम्' इत्यत्र जगत्कारणत्वस्य उपनिषत्ताpर्यविषय वाभिधानेन अनुमानगम्यत्वे 'तत्प्रमाण बादरायणस्यानपेक्षत्वात्' 'अप्राप्त तुशास्त्रमर्थवत्' इत्युक्तदिशा शास्त्रतात्पर्यविषयत्वासम्भवेन तत्सम्भवोपपादनपर शास्त्रयोनित्वादिति सूत्रमित्येव युक्तम् । तत्र परिणामवादानुपपत्तिमभ्युपेत्य निमित्तकारणमात्रे पूर्वपक्षः सच भाष्ये स्वरससिद्धः उपपादितः । वेदान्तसारेतु 'येन जातानि' इत्यैकवचनेन कारणगतैकत्वप्रतिपादनात् अभिन्ननिमित्तोपादानत्वं जन्माद्यधिकरण एव विवक्षितम् । तस्यतु मानान्तरागम्यत्वेन शास्त्रतात्पर्यविषयत्व सम्भवतीति भगवतैवोक्तम् । कारणत्व 'तत्वौपनिषद पुरुषम्' इति श्रुत्या उपनिषत्तात्पर्यविषयइति पक्षद्वयेऽपि समानं जगत्कारणत्व मिथ्याभूतमुपलक्षणलक्षणमेव तत्र न शास्त्रतात्पर्यं तदनुवादेनाद्वितीयब्रह्मप्रतिपादनएव शास्त्रतात्पर्यमिति परमतं नघटत इति पूर्वमेवोक्तम् ॥

एतेन तत्तु समन्वयात् इति सूत्रार्थः परमतः निरवकाशः। तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः। तद्ब्रह्म सर्वज्ञ सर्वशक्ति जगदुत्पत्तिस्थितिलयकारण वेदान्तशास्त्रादेवावगम्यते । कथ समन्वयात् सर्वेषुहि वेदान्तेषु वाक्यानि तात्पर्येण एतस्यार्थस्य प्रतिपादकत्वेन समनुगतानि 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा) 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐत) 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम् अयमात्मा ब्रह्मसर्वानुभूः' (बृ) 'ब्रह्मैवेदममृत पुरस्तात्' (मुण्ड)इत्यादीनि। नच तद्गताना पदाना ब्रह्मस्वरूपविषये निश्चिते समन्वयेऽवगम्यमाने अर्थान्तरकल्पना युक्ता श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् । नच तेषां कर्तृस्वरूपप्रतिपादनपरताऽवसीयते । 'तत्केन कपश्येत्' इत्यादिक्रियाकारकफलनिराकरणश्रुतेः' इत्युक्त (श) अत्र वेदचतुष्टयवाक्यान्युदाहृतानि ॥

अत्र पञ्चपादिका—समन्वयात् इति। तत्र तात्पर्येण वेदान्तवाक्याना समन्वयादित्यर्थः सम्यगन्वयः समन्वयः । अथ केय सम्यक्ता अन्वयस्य पदाना परस्परानवच्छिन्नार्थानामनन्याकाङ्क्षाणा अव्यतिरिक्तैकरसप्रातिपदिकार्थमात्रान्वयः । 'सोऽयम्' इत्यादिवाक्यस्थपदानामिव प्रकृष्टप्रकाशशब्दयोरिव चन्द्रपदाभिधेयार्थकथनेन। तथा च व्यक्तिविशेषः कश्चित् चन्द्रप्रतिपादिकाभिधेयः केनचित्पृष्टः अस्मिन्ज्योतिर्मण्डले कश्चन्द्रो नामेति? तस्य प्रतिवचन प्रकृष्टप्रकाशश्चन्द्र इति तदेवप्रतिवचन भवतियदि यथा चन्द्रपदेनोक्तं तथा आभ्यामपि पदाभ्यामुच्येत । एवचसति नीलोत्पलादसुतसिद्धपरस्परावच्छिन्नविशेष्यविषणभावेनाप्यन्वयो दुर्लभः, कुतः पृथक्सिद्धः क्रियाकारकलक्षणसम्बन्धः? इति । अत्र विवरणम्—'तात्पर्यं नाम तदर्थप्रमितिशेषता शब्दधर्म ।कथम्? विवक्षातात्पर्यमितिचेत्—अर्थप्रमिति विवक्षित्वा तादर्थ्येन प्रयुज्यमानत्वेशब्दधर्म एव । तत्रापि तात्पर्यं नविवक्षामात्र तत्र तात्पर्यं यस्मिन्नर्थे वाक्यस्योपक्रमोपसंहारैकरूप्य यस्यचार्थस्य पुनःपुनरभ्यासः यस्मिन्नर्थे फलविशेषसङ्कीर्तनम् अपूर्वार्थप्रमेयता च, यत्रचार्थवादोपादानमुपपत्तिभिरुपपादनचेत्यादीनि लिङ्गानि भवन्ति तस्य वाक्यस्य तस्मिन्नर्थे तात्पर्यमिति गम्यते ॥

तथाहि 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' 'ऐतदात्म्यमिद सर्वं तत्सत्य स आत्मा तत्वमसि' इति

## गूढार्थसंग्रहः

नवकृत्वोऽभ्यस्यते। प्रमाणान्तरेणचानधिगतमद्वितीय ब्रह्मात्मत्व प्रतिपाद्यते। 'आचार्यवान्पुरुषो वेद''तस्य तावदेव चिरंयावन्नविमोक्ष्ये' इति च निरतिशयपुरुषार्थावाप्तिर्ब्रह्म विज्ञानफलमवगम्यते। 'अनेन जीवेनात्मनाऽनुप्रविश्य' 'येनाश्रुतं श्रुतम्' इत्यादिब्रह्मण्यर्थवादश्चोपादीयते । मृल्लोहतप्तपरशुग्रहणादिदृष्टान्तैः स्वपितिनामनिर्वचनेन च सृष्टिस्थितिलयद्वारैश्च ब्रह्मात्मैकत्व प्रतिपाद्यते इति' तथा तैत्तरीयके–'सत्यज्ञानमनन्त ब्रह्म' 'सयश्चाय पुरुषे–यश्चासावादित्ये–सएकः' इत्युपक्रमोपसंहारयोः प्रत्यगद्वितीय ब्रह्मावगम्यते तथा 'सच्चत्यच्चाभवत्' 'यदिदंकिंच' 'तदात्मान स्वयमकुरुत''यतोवाचो निवर्तन्ते' इति च प्रत्यगद्वितीय ब्रह्माभ्यस्यते। प्रमाणान्तरेणचानधिगत च प्रतिपाद्यते। 'ससर्वान्कामान्समश्नुते'इत्यादिच फल ब्रह्मविज्ञानेऽवगम्यते। सृष्टिश्रुतयश्चाद्वितीयब्रह्मप्रतिपत्त्यर्थवादभूता दृश्यन्ते। एव सर्वेषु वेदान्तेषु ब्रह्मात्मैकत्व प्रमितौ तात्पर्यलिङ्गानि द्रष्टव्यानि। एव तात्पर्येण समन्वयात् ब्रह्मैव वेदान्तप्रमेयमिति जगत्कारणसामान्यानुवादेन तत्र ज्ञानानन्दशब्दात्रानन्दविशेष गमयतः एकसत्यानन्तशब्दा भेदमिथ्यात्वद्वैताभावाभिधानद्वारेण तत्र लक्षणया वर्तन्ते 'सर्वज्ञस्सर्वशक्तिः' इत्यादिशब्दाश्चानिर्वचनीयप्रपञ्चोपाधितया तत्र वर्तन्ते। 'अयमात्मा तत्त्वमसि' इत्यादिशब्दाश्च मुख्य लक्षणाभ्या ब्रह्मण्येव वर्तन्तइति' इति ॥

अत्र 'यत्रत्वस्य सर्वमात्मैवाभूत्–तत्केन कपश्येत्' इतिश्रुतिः न परसमतार्थं साधयतीति जिज्ञासाऽधिकरणे–(६८७.पु) विशेषतः त्र्य्यन्तसारामृते च निरूपितम्। 'अस्तिब्रह्मेतिचेद्वेद सन्तमेनन्ततो विदुः' इतिश्रुतिः ब्रह्मणः असघात्वर्थकर्तृत्व जानत एव सत्त्वप्रतिपादयति। 'तत्त्वमसि' इत्यत्र असघात्वर्थकर्तैव विवक्षितः। एवं 'अहब्रह्मास्मि' इत्यत्रापि तथैव। 'सदेव सोम्येदमग्र आसीत्' इतिश्रुतेः 'आत्मा वा इदमेक एवाग्रआसीत्' इति श्रुत्यानुगुण्येनैवार्थो निर्णेयः। तेन 'अग्रे एकमेवासीत्' इत्येव योजना तत्र विवक्षितेति सिद्ध्यति। 'आत्मैवेदमग्रआसीत्पुरुषविधः (बृ.३. ) इत्युपक्रमे व्याकृतपदार्थविरह एव विवक्षितइति 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्या व्याक्रियत' इत्युत्तरश्रुत्या सिद्ध्यति। एव च 'एकमेवासीत्' इत्यत्र नामरूपविभागशून्यमासीदित्येवार्थः। 'अद्वितीयम्' इत्यत्र परसमतार्थो न विवक्षितइति जिज्ञासाऽधिकरण (६२०.पु) एव निरूपितम्। जगत्कारणत्वप्रतिपादकश्रुत्युत्तरमेव 'तत्त्वमसि 'अहब्रह्मास्मि' इति वाक्यसद्भावेन उपादानोपादेयभावनिबन्धनमेव सामानाधिकरण्यमिति सिद्ध्यतीति पूर्वमेव जन्माद्यधिकरणे निरूपितम्। 'परिणामात्' इतिसूत्रे (श्री.भा) 'सच्चत्यच्चाभवत्' इति श्रुतेरुपादानेन परिणामनिबन्धनमेव सामानाधिकरण्य सूत्रकृदभिमतमिति अकामेनापि परैस्स्वीकार्यम्। 'अयमात्मा ब्रह्मसर्वानुभूः' (बृ) इत्यत्र 'सवा अयमात्मा सर्वेषा भूतानामधिपतिस्सर्वेषा भूताना राजा' इति पूर्वश्रुत्युक्तजगत्कारणभूतएव अयमात्मा विवक्षित इति तत्र जीवब्रह्माभेदशङ्कायाअपि नावकाशः। 'सर्वानुभूः' इत्यस्य वृत्तिकारसम्मतार्थ एव युक्त इति 'औपनिषदपरमपुरुष' ग्रन्थनिवरणे जिज्ञासाऽधिकरणे निरूपितम् ॥

'यस्सर्वज्ञस्सर्ववित्' (मु.१.१.९) इति प्रागुक्तार्थः 'यस्सर्वज्ञःसर्वविद्यस्यैष महिमा भुवि। दिव्ये ब्रह्मपुरेह्येष व्योमन्यात्मा प्रतिष्ठितः ॥' (मु.२.२.७) इत्यत्र विशदीकृतः। अत्र सर्वविषयकज्ञानकर्तृत्व निर्विशेषे नघटत इति निर्विशेषविवक्षा नघटत इति पूर्वमेवोक्तम्। अत्र महिमशब्देन प्रपञ्चस्य विभूतित्वबोधनेन तद्बाधासम्भवस्सिद्धः। 'येनाक्षरंपुरुष वेद' (मु.१.२.१३) दिव्योह्यमूर्तःपुरुषः अक्षरात्परतःपरः' (२.१.२) इति श्रुत्युत्तर 'पुरुषएवेद विश्वम्' इत्युक्तम्। तेन पुरुषशब्दार्थनिर्वचनानुसारेण 'ब्रह्मैवेदममृतं ब्रह्मैवेद विश्वमिद वरिष्ठम्' (२.११) इत्यत्रापि बृहदारण्कोक्तपुरुषपदनिर्वचनानुसारेण परसंमतसामानाधिकरण्य न विवक्षितमपितु वृत्तिकारसम्मतमेव। 'अथ परायया तद

## गूढार्थसंग्रहः

क्षमधिगम्यते ' ' नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ' इत्युपक्रमोपसंहारयोःप्राप्त्यभिधानेन ' ब्रह्मवेद ब्रह्मैव भवति ' इत्यत्र भूधातुः प्राप्त्यर्थकएव निश्चीयत इति प्रागेवाभिहितम् ॥

एतेन समन्वयात् इत्यत्र परयाम्मतार्थो न विवक्षित इत्यपि सिद्ध्यति । ' तात्पर्येण अन्वयः समन्वयः ' इत्यत्र कस्यापि नविवादः । उपक्रमादिषड्विधतात्पर्यलिङ्गैःसमन्वयोऽपि सर्वसंमतः । तावता निर्विशेषस्य श्रुतिषु तात्पर्यनिर्णयो नघटते । सोऽयमित्यत्रापि परसंमतः न निर्धर्मकनिष्प्रकारकबोध इति जिज्ञासाधिकरण एव निर्धारितम् । तात्पर्यलिङ्गानि बोधद्वयस्य सर्वथमतन्त्रे एकतरबोधानिर्णायकानि नतु बोधस्यैवाप्रामाणिकत्व इत्यपि पूर्वं निरूपितम् । ' सदेव सोम्येदमग्रआसीत् ' ' ऐतदात्म्यमिदं सर्वम् ' इत्युपक्रमोपसंहारौ परयाम्मतौ नविवक्षितौ । किंतु ' येनाश्रुतंश्रुतंभवत्यमतमतम् ' ' यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातंस्यात् ' इति परमोपक्रमे दृष्टान्ते परिणामनिबन्धनस्यैव सामानाधिकरण्यस्य विवक्षितत्वेन दार्ष्टान्तिके नामरूपविभागवतः नामरूपविभागशून्यावस्थायाः प्रलयकाले निरूपणेन 'सदेव' इत्यादि वाक्यं परिणामनिबन्धनसामानाधिकरण्यपरमेव । ' बहुस्याम् ' इत्युक्तार्थस्य ' अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि ' इत्यत्र विशदीकरणेन ' ऐतदात्म्यमिदं सर्वम् ' इति नवकृत्वः अभ्यस्तवाक्ये सृष्टिकालिकानुप्रवेशनिबन्धनमेवात्मत्वं विवक्षितमिति ' अन्तःप्रविष्टश्शास्ता जनानाꣳसर्वात्मा ' इति श्रुत्यन्तरेणापि निर्णयेन ' तत्त्वमसि ' इत्यत्र तदिति नपुंसकलिङ्गनिर्देशेन ' तदैक्षत बहुस्याम् ' इति श्रुत्यनुसारेण परिणामनिबन्धनमेव सामानाधिकरण्यं विवक्षितमिति निर्णयेन उपक्रमोपसंहारयोः परिणामवाद एवासाङ्गत्यम् । नतु विवर्तवादे । अयमर्थः अत्रैव पूर्वं ग्रन्थ्यन्तसारामृते च सम्यङ्निर्धारितः ॥

एतेन पद्मपादिकोक्तसम्यक्तापरिष्करणं 'सोऽय'मित्यादिदृष्टान्ताभिधानं च न स्वेष्टं साधयितुमलम् ; जिज्ञासाऽधिकरण एव एतत्पर्यालोचनकरणात् । सङ्क्षेपशारीरके–' तद्बुद्धिमात्रफलतैव च तत्परत्व वेदान्तवादिसमये नतु शेषभावः । शेषत्वमश्रुतकलापगतातिमात्रं प्रत्येव नाध्ययनमर्थधियोऽपि शेषः ॥ १—४६६ ॥ तच्छेषभावमनपेक्ष्य च तत्फलंस्यादाधानवद्धि तदङ्गमिह क्रतूनाम् । अमयङ्गमेवहि तदिष्टमथापि तस्य सर्वक्रतुष्वधिकृतिः फलमभ्युपेतम् ॥ ४६७ ॥ सप्रयोजनकबुद्धिकारण वाक्यमाहुरिह तत्परं बुधाः । सप्रयोजनकबुद्धिशेषधीहेतुमन्यपरमाश्रयन्ति च ॥ ४७९ ॥ ' इति, अद्वैतपरिभाषायां–' तत्प्रतीतिजननयोग्यत्व तात्पर्यम् ' इत्येव युक्त, नतु शेषत्वम् । इत्युक्तम् । यथातथावा भवतु तात्पर्यलिङ्गैः निर्विशेषासिद्धिः प्रागेवोक्ता॥ अपूर्वतातु सत्यादिवाक्यास्तत्पदाद्य प्रतिपन्नार्थापेक्षयाऽतिरिक्तार्थस्य महावाक्यजन्यबोधविषय त्वेन नास्त्येव । भेदभ्रमनिवर्तकत्वेन ' सिद्धतु निवर्तकत्वात् ' इति न्यायेनापूर्वत्वोपपादनमपि नघटते । भ्रममूलाज्ञानविशेषस्य ब्रह्मानन्दोक्तस्य निर्विशेषसिद्ध्यनन्तरमेव सिद्धिः नतु ततःपूर्वम् । स्वप्रकाशत्वस्यापि निर्विशेषेऽनङ्गीकारेण स्वप्रकाशतयाऽपि ननिर्विशेषसिद्धिः ॥

'सिद्धतु निवर्तकत्वात्' इत्यस्यार्थः जिज्ञासाऽधिकरण एव (३४२–३४३.पु)निर्णीतः । 'ब्रह्मविदाप्नोतिपरम्' इत्याद्युक्तफल परमते सर्वथा नसम्भवति । जगत्कारणत्वस्य परिणाम्युपादानत्वस्य श्रुतितात्पर्यविषयस्याङ्गीकार एव तत्सम्भवतीत्यादिकं प्रागेवात्राप्यत्र च निर्धारितम् । एतेन ' द्विविधमेवेष्टप्रेप्सित किञ्चिदप्राप्य यथा ग्रामादि । किंचित्प्राप्तमपि यथा– भ्रान्त्या हस्तगतमेव विस्मृतसुवर्णादि' इति(प.पा) 'करमुष्टिनिविष्टमुत्तम कनकं प्रसरणादलब्धवत् । प्रतिभाति तदाप्तवाक्यतः प्रतिपद्य लभते यथा जनः ॥ ' (स.शा.१.३०४) इति सर्वज्ञात्ममुनिः । ' द्विविधमीप्सित पुरुषस्य किंचिदप्राप्यं ग्रामादि । किंचित्पुनः प्राप्तमपि भ्रमवशादप्राप्तमित्यवगतम् । यथा स्वग्रीवाबनद्धं ग्रैवेयकम् ' इत्यादौ च (भामती)प्राप्त-

## गूढार्थसंग्रहः

प्राप्तिरेव ब्रह्मप्राप्तिः इति समाधानमपि उत्क्रान्तिगतिनिरूपणानन्तरं ‘अथ सम्पत्स्ये’ इति सद्विद्योक्तसम्पत्तेः ‘ अस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य ’ इति दहरविद्योक्तसम्पत्तौ पर्यवसितायाः ‘ सम्पद्याविर्भावः ’ इतिसूत्रे निर्धारणेन नघटते। प्राप्तप्राप्तिदृष्टान्ते तदनन्तरकालिकसुखानुभवस्यैव फलत्वं नतु प्राप्तेः । परमतेऽनुभवितुरभावेन तथाफलं दृष्टान्तोक्तदिशा नैव निरूपयितुं शक्यमिति परमते ब्रह्मप्राप्त्युपपादनासम्भवः अपरिहार्यः । ‘ ऐतदात्म्यमिदं सर्वम् ’ इत्यादेर्नवकृत्वोऽभ्यासः सिद्धान्त एव सङ्गच्छते ॥

‘ आचार्यवान्पुरुषो वेद ’ ‘ अथ सम्पत्स्ये ’ इत्युक्तफलमपि सिद्धान्त एव सङ्गच्छत इति प्रागेव निरूपितम् । ‘ येनाश्रुतंश्रुतम् ’ ‘ *अनेन जीवेनात्मनाऽनुप्रविश्य* ’ इत्यर्थवादः मृल्लोहादिदृष्टान्तश्च ‘ परिणामात् ’ इति सूत्रयितुः व्यासस्याशयानुसारेण परिणाम्युपादानत्वएव सङ्गच्छत इत्यपि पूर्वं निरूपितम् । स्वपितिनाम निर्वचनं ‘सुषुप्त्युत्क्रान्त्योर्भेदेन ’ ‘ तदभावो नाडीषु तच्छ्रुतेरात्मनि च ’ इति सूत्रयोः जीवब्रह्मणोः भेदाङ्गीकार एव सङ्गच्छत इति व्यासेनैव *निर्धारितम् । सृष्टिस्थित्यादयः सृज्याभावे न सङ्गच्छन्ते । स्वाप्निकार्थानां परमते बाधस्यासम्भवः । सिद्धान्तेतु अल्पकालवर्तित्वेन* तत्सम्भवश्चोपपादितः । एतेन स्वाप्निकार्थानां सत्यत्वेन स्वप्नसृष्टिश्रुतिरप्युपपद्यते । एवञ्च षड्विधतात्पर्यलिङ्गानि सविशेषपरिणाम्युपादानत्वस्य ब्रह्मण्यङ्गीकारपक्ष एव वृत्तिकारमते उपपद्यन्ते, नतु निर्विशेषवादिमत इति तत्तु समन्वयात् इतिसूत्रं वृत्तिकारमत एव सङ्गतम् ॥

,एतेन इहतु कार्यकारणद्रव्यव्यतिरिक्तत्वसति द्रव्याभिधायिपदयोस्सामानाधिकरण्यं ‘सोऽयं’मितिवत् इत्यत्र अध्यासभाष्येच विवरणम् । ‘एवं च सति नीलोत्पलवत् अयुतसिद्धपरस्परावच्छिन्नविशेषणविशेष्यभावेनाप्यन्वयो दुर्लभ इति’ **तत्तु समन्वयात्** इति विशेषणविशेष्यात्मकमपि गौणमपि सामानाधिकरण्यं विहाय एकस्मिन्निरंशे ‘तत्त्वमसि’इति समन्वयो मुख्यः प्रतिपादितः ’ इत्यादिपञ्चपादिकाचेत्युभयं निरवकाशम् । एवञ्च सति नीलोत्पलमिति (प.पा) विवरणे ‘ एकमेवाद्वितीयम् ’ (छा) ‘ एकधैवानुद्रष्टव्यम् ’ (बृ) ‘ नेहनानाऽस्ति किंचन ’ (बृ.कठ) ‘ उदरमन्तरं कुरुते अथ तस्य भयं भवति ’ (तै) इत्यादिप्रतिषेधादित्यर्थः इत्युक्तदूषणस्य एतच्छ्रुतीनां पूर्वमेव १३२.अ परसमतार्थायोगस्य निरूपणेनानुपादेयत्वात् । विशेषणविशेष्यभावं सामानाधिकरण्यमेकमेव सर्वत्र वेदान्तेष्वपि । नतु ततोऽतिरिक्तं परसमतं सामानाधिकरण्यमिति जिज्ञासाधिकरणे सम्यङ्निर्धारणात् । **जन्माद्यस्य यतः** इति सूत्रयितुर्व्यासस्य उपादानोपादेयभावनिबन्धनमेव सामानाधिकरण्यं विवक्षितमिति पूर्वमेवावेदनाच्च । अतः जन्माद्यधिकरणोक्तार्थ एव **तत्तु समन्वयात्** इत्यत्र सफलत्वोपपादनेन निर्धारित इत्येव युक्तम् ॥

ननु जन्मादिसूत्रोदाहरणेष्वेव प्रामाण्यं दर्शनीयम् । किमुदाहरणान्तरेण, बाढम् । अस्त्यत्राभिप्रायो भाष्यकारस्य तत्र ब्रह्मणो लक्षणं वक्तव्यमिति तटस्थस्यैव ब्रह्मणो निरूपकाणि वाक्यान्युदाहृतानि । इहतु ‘तत्त्वमसि’ इति जीवस्य ब्रह्मात्मताऽवगतिपर्यन्तानि वेदान्तवाक्यानि न तटस्थमेव जगत्कारणं प्रतिपाद्य पर्यवस्यन्तीत्यतः तथाभूतान्येव वाक्यान्युदाहृतानि ‘सदेव सोम्येदमग्रआसीत्’ इत्येवमादीनि इति(प.पा)उक्तम् । अयमर्थः कथं घटते । अतो जन्माद्यस्य यतः शास्त्रप्रमाणकमित्येतावदिदं यत् असन्दिग्धमनुमानशङ्कानिवृत्त्यै पृथक्करणम् ’ इति शास्त्रयोनित्वाधिकरणे (प.पा) उक्तया शास्त्रपदं *जगत्कारणशास्त्रपरमिति अर्थस्य परेषामपि सम्मतत्वेन अत्र शास्त्रयोनिपदानुषक्ताभ्युपगमेऽपि जीवब्रह्मभेदबोधपरशास्त्रपरत्वं* शास्त्रपदस्य नैव निर्णेतुं शक्यम् । प्रथमसूत्रद्वयेन वेदान्तेषु पाठक्रमानुसारेण जगत्कारणानुवादेन अद्वितीयप्रत्यगभिन्नब्रह्मसिद्धिः विवरणोक्ता नैव घटत इति पूर्वमेवोपपादितम् । तथाऽङ्गीकारे अनुमानाशङ्कानिवृत्तिरप्यनपेक्षितैव । ‘ तत्तु

## गूढार्थसंग्रहः

ानिषद पुरुषम्' (बृ) इतिश्रुतिः परेषां नघटते । यस्यामुपनिषदि इयंश्रुतिः पठिता तस्या निर्वचनत्रयाऽसिद्धार्थत्रयस्य अयवःपुरुषः' 'वैकुण्ठःपुरुषः' इति नामभाष्ये(श्च)परसमतस्य निर्विशेषवादिमतेऽयोगएवेति असकृदावेदितम् । 'येन जानाति' इत्यत्र कारणगतमेकत्व कारणद्वयव्यावर्तकम् नत्वात्मान्यसामान्यव्यावर्तकम् । तथा व्युत्पत्तिविरहात् ॥

अनन्तत्वघटकवस्तुपरिच्छेदराहित्यं ब्रह्मशब्दार्थे परेषा विवक्षितम्। वस्तुद्वयापि स्वरूपमेव शुक्तिकारसमनम् तेनायुतसिद्धविशेषणविशेष्यभावे सामानाधिकरण्यमेकमेव मुख्य वेदान्तेषु विवक्षितमिति सिद्धया उक्तसामानाधिकरण्यस्य गौणत्वशङ्का न सम्भवति । अन्यविषसामानाधिकरण्यस्यैव वैदिकदार्शनिकसमतत्वात् । वर्णकद्वये प्रवृत्तिनिवृत्तिद्वारकफलाभावात् सिद्धे व्युत्पत्त्यसम्भवाच्छास्त्रप्रमाणकत्व ब्रह्मणो न संभवति । कार्यार्थ एव व्युत्पत्त्या सिद्धेव्युत्पत्त्यभावेन च उक्तार्थो न सम्भवतीति शङ्का। अप्राप्तस्य प्राप्तावेव प्रवृत्तिनिवृत्तिद्वारक फलम्। ननु प्राप्तस्य विस्मृतस्य ज्ञानेन प्राप्तौ, अतःजीवाभिन्नब्रह्मणः प्राप्तिरूपप्रयोजनस्य प्रवृत्तिनिवृत्तिद्वारविरहेऽपि सम्भवात् सप्रयोजनत्वमिति सिद्धान्तः । प्रथमसूत्रे ब्रह्मपदस्य अद्वितीयप्रत्यगभिन्नब्रह्मपरत्वेन सप्रयोजनत्वम् । अनतु तात्पर्यलिङ्गाधीनता पर्यनिर्णयेन वेदान्ताना अद्वितीयब्रह्मपरत्वेन सफलत्वमिति परेषा प्रक्रिया ॥

अत्र सिद्धे व्युत्पत्तिसमर्थनमन्तरा प्रथमसूत्रे कथ सफलत्वसम्भवः व्युत्पत्तिनिरूपण खलु प्रथमतःकार्यम्। अन्यथा शब्दतः बोधस्यैवासम्भवात् । अनन्तर स्वस्वाभिमतफलस्य तात्पर्यलिङ्गाधीनतात्पर्येण सप्रयोजनत्वसिद्धिःकाम भवतु । वस्तुपरिच्छेदराहित्यस्य शुक्तिकारसमतस्य पूर्वमेव निर्णयेन ब्रह्मपदस्य अद्वितीयप्रत्यगभिन्नब्रह्मपरत्वासम्भवात् पूर्वपक्ष. सिद्धान्तश्च न घटतइति पूर्वमेवोक्तम् । अत्रापि तात्पर्यलिङ्गाना सविशेषपरत्वोपपादनेन जीवाभिन्नब्रह्मणः फलत्व न साधयितुमलम् । (प.पा) दूषितस्य 'अथ यदतःपरोदिवो ज्योतिर्दीप्यते' इत्यादिश्रुतिविवक्षितस्य जीवब्रह्मणोर्भेदमङ्गीकृत्य ब्रह्मणश्च— प्रदेशान्तरवर्तित्व सर्वगतत्व चाभ्युपगम्य निधीयमानादुपासनाद्यागादिव स्वर्गो मोक्षः फलिष्यतीति (विवरणे) उक्तस्य पर्यालोचनमत्रैवोत्तरत्र भविष्यति । अतः परोक्तसूत्रचतुष्टयार्थ. न श्रुतिसूत्रतात्पर्यानुगुण इति सिद्धम् ॥

नवीनास्तु—'तद्विजिज्ञासस्व तद्ब्रह्मेति' श्रुत्युक्त ब्रह्मजिज्ञास्यमित्युक्तम् । तच्छ्रुत्युक्त ब्रह्मात्र विषयः । किं विष्णु रुत जीव इतिसन्देहः। उभयत्रापि ब्रह्मपदप्रयोग एव सन्देहबीजम् । यद्यपि पूर्वाधिकरणे विष्णावेव ब्रह्मशब्दो मुख्यइत्युक्तम् तथाऽपि स्वकृतव्याख्यानस्थापनाय भाष्यकारैरेवोक्तत्वाद्भवति सन्देहः । जीवएवेदब्रह्मेति पूर्वःपक्ष. 'बृहज्जातीय' इति ब्रह्मशब्दस्य जीवे रूढत्वात् । यद्यपि ब्रह्मशब्दो विष्णौ प्रवर्तते तथाऽपि तस्य तत्र योगेनैव प्रवृत्तेः रूढियोगयोश्च रूढेरेव बलवत्त्वात् जीववाचित्वमेव' इति (त.प्र) 'ब्रह्मणो लक्षणमाह—ओं जन्माद्यस्य यत ओम्' सृष्टिस्थितिसंहारनियमनज्ञानाज्ञानबन्धमोक्षाः. 'यत. उत्पत्तिस्थितिसंहारा नियतिर्ज्ञानमावृतिः । बन्धमोक्षौ च पुरुषाद्यस्मात्सहरिरेकराट्' इति स्कान्दे (आ.मा) इति । बाधकविना मुख्यार्थत्यागायोगात् । तस्य च स्वप्रकाशेनासन्दिग्धत्वादजिज्ञास्यतेति । अथ सिद्धान्तयत्सूत्रमवतारयति—ब्रह्मणइति । निर्बाधरूढिबलाजीवएवेद ब्रह्मेति प्राप्ते तन्निराकर्तुं जीवग्रहणे बाधक श्रुत्युक्त जिज्ञास्यब्रह्मणो लक्षणमाह—सूत्रकारइत्यर्थः' इति (त.प्र) च वदन्ति ॥

प्रथमाधिकरण एव 'नतावत् ब्रह्मविषय असन्दिग्धत्वात् । प्रमाणाभावेन जीवव्यतिरिक्तस्य ब्रह्मणोऽभावात् जीवस्य च स्वप्रकाशत्वात्' इति (त.प्र) पूर्वपक्षस्य 'भवेदेतदसन्दिग्धत्व जिज्ञास्यस्य, यदितत् स्वप्रकाशजीवाभिन्नस्यात् नचैतदस्ति । जिज्ञास्ये ब्रह्मपदश्रवणात् 'तद्विजिज्ञासस्व तद्ब्रह्मेति' ब्रह्मशब्दश्च पूर्णगुणता वक्ति । अथ कस्मादुच्यते ब्रह्मेति 'बृहन्तोह्यस्मिन्गुणा.' इतिश्रुते. । तथा च कथ तस्य जीवाभेदः ? जीवस्याल्पगुणत्वेनानुभवात् इति सिद्धान्तस्य

## गूढार्थसंग्रहः

च प्रतिपादनेन पुनः तथा पूर्वपक्षे बीजमेव नास्ति । जीवब्रह्माभेदवादिमते शुद्धचितएव स्वप्रकाशतया जीवस्य स्वप्र शत्वविरहेण पूर्वपक्षानुत्थितिश्च । योगात् रूढेर्बलीयस्त्व द्वितीयाधिकरणे पूर्वपक्षहेतुतया यदुक्त तत्प्रथमसूत्रेऽपि समर्वा परैः (प.पा) 'बृहजाति' इत्यादिना जीवे रूढिमाशङ्क्य निरुक्तिसिद्धार्थस्य ग्राह्यत्वं प्रथमसूत्र एव सिद्धान्तितम् । त नवीनमतेऽपि समवति । प्रथमसूत्रे ब्रह्मशब्दस्य विष्णौ विद्वद्रूढिरुक्तैवेति पूर्वपक्षानुत्थितिश्च । 'यद्यपि ब्रह्मशब्दो विष्णु विद्वद्रूढियुक्तः तथाऽपि अभ्युपगम्येयमुक्तिरिति ज्ञातव्यम्' इति (त.प्र) द्वितीयाधिकरणस्याभ्युपेत्य वादत्वमेवोक्तम् सिद्धे व्युत्पत्तेः अभावशङ्काया तत्समर्थनपरत्वं प्रथमसूत्रस्य यत्सुधायामुक्तं तदेव युक्तमिति ब्रह्मशब्दव्युत्पत्तिसमर्थनार्थ द्वितीयसूत्रस्येत्येवाभ्युपगन्तुमुचितम् । प्रथमसूत्रस्य सिद्धे व्युत्पत्तिसमर्थनपरत्वे अथातश्शब्दयोरापि वृत्तिकारसमतार्थ एव युक्तः । 'विधिनात्वेकवाक्यत्वात्' इत्यादिना सिद्धपरवाक्यभिन्नवाक्यानामेव प्रामाण्यस्य प्रतिपादनेन कर्मविचारानन्तं सिद्धेव्युत्पत्तिसमर्थनस्य कर्तव्यतायाः आवश्यकत्वात् । 'अत' इत्यस्य 'अथ' शब्दार्थघटकतया विवक्षितमोक्षफलक त्वस्य अकारस्य विष्णुवाचकतया विष्णोः विष्णुप्रसादादित्यर्थकत्वस्य च पूर्वपक्षनिरासकत्वेन एतत्पक्षे उपयोगाभावात् । विष्णुप्रसादमन्तरा जिज्ञासायाः पूर्वपक्षसमवे सतीत्य वक्तव्यम् । 'ईश्वरानुग्रहादेव पुंसामद्वैतवासना' इति परैरप्युक्तया तथा शङ्काया असंभवात् । 'अत' इत्यस्य अन्यसूत्रेषु बहुषु एतच्छन्दप्रकृतिकतसिल्न्तत्वस्य नवीनानामपि संमतत्वेन तत्रैव प्रसिद्धया प्रसिद्धार्थपरित्यागायोगाच्च । मुमुक्षानन्तर ब्रह्मजिज्ञासाकर्तव्येत्युक्तौ मोक्षस्य फलत्व ज्ञातु शक्यत एवेति 'अत' इत्यस्य मोक्षाख्यफलसद्भावात् इत्यर्थोक्तिरपि निरवकाशा ॥

'तद्विजिज्ञासस्व तद्ब्रह्म' इत्यत्र ब्रह्मशब्दस्य श्रौतनिर्वचनेन योगेन विद्वद्रूढ्या वा जीवभिन्नब्रह्मपरत्व नसंभवति लोकेऽप्रसिद्धत्वात् प्रसिद्धार्थस्यैव ग्राह्यत्वात् । जीवस्याद्दृष्टद्वारा सृष्ट्यादिकमुपपद्यते इति शङ्कायां 'यन्नदुःखेन' इति श्रुत्या स्वर्गशब्दस्यार्थनिर्णयवत् ब्रह्मशब्दस्यापि 'यतोवा' इत्यादिश्रुत्या अर्थनिर्णयइति सिद्धान्तइति सुधायोजना ।— चन्द्रिकायातु—मोक्षदत्वाद्विष्णुर्जिज्ञास्य इत्युक्तम् । तर्हि बन्धकत्वादाजिज्ञास्येऽपि स्यादित्यादिशङ्कायामप्रसन्नस्य बन्धकत्वं प्रसादहेतोः जिज्ञासायाः कर्तव्यतनुकूलमेव । ननु प्रतिकूलमित्यादि समाधान द्वितीयसूत्रे विवक्षितमिति अनुव्याख्यान संमत योजनान्तरमुक्तम् । तत्र सुधोक्तयोजनाया जन्मादिकारणत्वेन ब्रह्मशब्दस्य विद्वद्रूढिः क्रोगो वा कथ साधितः तत्रा स्वर्गग्राहकशब्दाभावात् । 'यन्नदुःखेन' इतिश्रुतिः स्वर्गशब्दस्यार्थं ताद्रूप्येण निर्धारयति । 'यतो वा' इतिश्रुतिस्तु न ब्रह्मशब्दार्थनिर्णायिका । प्रथमसूत्रे ब्रह्मशब्दस्य विद्वद्रूढिबोधकं श्रौतार्थबोधक वा नकिंचित्पश्यामः अतः प्रथमसूत्रे तादृशार्थनिर्णय इति कथम् ॥

सिद्धान्तेतु ब्रह्मशब्दार्थव्यक्तिविशेषानिर्णयः न प्रथमसूत्रे, द्वितीयसूत्रे च 'यतो वा—जायन्ते येन जातानि'— इत्यादौ एकवचननिर्देशेन ब्रह्मशब्दार्थस्य एकत्व निश्चित भवतीति ब्रह्मशब्दस्य सिद्धेव्युत्पत्तिसमर्थन सङ्गतं भवति । चन्द्रिकोक्तयोजना च कथ घटते? प्रथमसूत्रे विष्णप्रसादाज्जिज्ञासा इत्येवोक्तम् नतु विष्णुप्रसादान्मोक्षइति । सुधायांमोक्ष प्रयोजनत्वाज्जिज्ञासाकर्तव्येत्यतश्शब्देनोदितेऽपि पुनराशङ्का भवत्येव तत्र 'प्रमाणस्यानुक्तत्वात्' इत्येवानुव्याख्यानसंमतः पूर्वपक्ष उक्तः (३.३.१) ननु चन्द्रिकोक्तरीत्या । 'तद्विजिज्ञासस्व तद्ब्रह्म' इति श्रुत्युक्तस्यैव जन्मादिसूत्रे विषयः' इति (त.प्र) उक्तया 'यतो वा' इतिश्रुतेरेव तत्र विवक्षायाः अन्यश्रुतेरविवक्षायाश्च सिद्धया स्कान्दोक्तनियतिशनादरस्य। श्रुताव- प्रतिपादनेन जन्मादीत्यत्रादिपदे नियत्यादीना व्यासाभिप्रेतत्व कथं सिद्ध्यति ? अन्यथा चेतनसुखदुःखादेः अचेतन स्वर्गादेः आदिपदार्थत्वव्यावृत्तिःकथम् ? विचाराविधायकनानावाक्यपरामर्शेन सूत्र स्कान्दोक्तप्रकर्त्रैत्वमेव विवक्षित

## गूढार्थसंग्रहः

मेति चन्द्रिकोक्तिर्न घटते। स्कान्दे एतत्सूत्रार्थत्वेन अष्टकर्तृत्वस्यानुक्तेः। प्रकाशे यद्यप्यन्वेषणादिवाक्येषु अपहतपाप्मत्वस्य प्रमत्वादिधर्माः श्रुताः तथाऽपि ब्रह्मपदोक्तगुणग्रहणेन गृहीतैः तदुपपादकत्वमष्टानामित्युक्तिरिति ध्येयम्' इत्युक्तिरप्यनुपादेया। नियत्यादिहेतुत्वस्यापि ब्रह्मगुणान्तर्भावस्यैव सम्भवेनाष्टसङ्ख्यायाः अयोगात्। अतः नानाविधविचारवाक्यानि परित्यज्य एकमेव 'तद्विजिज्ञासस्व' इति वाक्यमादर्तव्यम्। तदादेर च 'यतो वा' इति वाक्यप्रतिपाद्यसृष्ट्यादिहेतुत्वेनात्र विवक्षितमिति युक्तम्। त्रितयोक्तिःपरिणाम्युपादानत्वबोधनार्था सृष्टिलयाभ्यामेव परिणाम्युपादानत्व नतु स्थित्या प्रमरतीति न भ्रमितव्यम्। अन्तर्यामित्वकृतसत्ताऽनुवृत्तिलक्षणस्थित्या उपादानत्वस्य निष्कर्षणात्। 'आत्मकृतेः, परिणामात्' इति सूत्रयोः ब्रह्मणः अन्तर्यामित्वपरिणामः वक्ष्यत इति स्थित्याऽप्युपादानत्वस्य सूत्रकृतो विवक्षितत्वनिर्णयात्। अतएव 'सर्वंखलु' इति श्रुतिवाक्यमुपपद्यते। अत्र नवीनैः 'तद्गुणसारत्वात्' इति सूत्रभाष्ये यथा सर्वगुणात्मकत्वात् सर्वात्मकत्व ब्रह्मण उच्यते 'सर्वंखल्विदंब्रह्म' इति छान्दोग्यभाष्ये 'इदब्रह्मातिसामीप्यात् सर्वं पूर्णगुणत्वतः। तच्चब्रह्मजलान्सात् योऽसौ विष्णुर्जलानिति ॥' इतिचोक्तम्। तथाऽपि तद्गुणसदृशगुणवत्त्वेन अभेदनिर्देशे गौणत्वमेवाङ्गीकृतं स्यात् 'सर्वंखलु' इति श्रुतावेव 'तज्जलान्' इत्यस्य सर्वाभेदहेतुत्वसमर्पे अहेतुभूतार्थान्तरकल्पनस्य श्रुतितात्पर्याविषयत्वाच्च। अतिसामीप्येन 'सर्वंखलु' इत्यत्र मुख्यवृत्तेरसिद्धेश्च। प्रळयकाले प्राणनस्य 'आनी'दित्युक्तिमात्रेण प्रागुदाहृतमैत्रायणीयादिश्रुत्यनुसारेण अन्तर्यामितयैवानन विवक्षितम् अन्तर्यामिकृतसत्ताऽनुवृत्तिलक्षणस्थितिः तेन सिद्ध्यति एतेन दयामूलकत्वमपि सूचित भवति। तेन 'यतोवा' इत्युपक्रमोक्तसृष्ट्यादेः 'यत्प्रयन्ति' इत्युक्तमुक्तयैकरस्यम् ॥

'सर्वत्र प्रसिद्धोपदेशात्' 'विवक्षितगुणोपपत्तेश्च' 'अर्भकौकस्त्वात्' इति सूत्रत्रयेण सूत्रकृता उक्तार्थ निष्कर्षःकृतः। अत्र 'सर्वंखल्विदब्रह्म' 'एषम आत्माऽन्तर्हृदये (३)एतमित.प्रेत्याभिसमविताऽस्मि' इत्याद्यर्थनिर्णयः उक्तसूत्रैः क्रियते। अत्र सर्वमित्यनभिधाय सर्वत्रेत्युक्तिः सामानाधिकरण्ये श्रुत्याद्युक्तहेतुप्रदर्शनार्था। सर्वत्रेत्युक्तौ जगति विद्यमानमित्यर्थः स्वतएव लभ्यते। 'यद्भूतेषु वसत्यपि सर्वानुग्राहकत्वेन तदस्यह वासुदेवः' इति (ब्र.वि) उपनिषद्यपि सर्वानुग्रहार्थं भूतेषु वासउक्तः। 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः' इति श्रुत्यनुसारेण वासोऽन्तर्यामिब्राह्मणोक्तव्याप्तिपर्यवसितः। 'एषम आत्माऽन्तर्हृदय' इत्यत्र आत्मन्शब्दः आप्नोतीति व्युत्पत्त्या 'अन्तःप्रविष्टश्शास्ताजनानाम्' इति श्रुत्यनुरोधादन्तःप्रविश्य नियन्तृपरः। 'सर्वंखल्विदब्रह्म' इत्यत्र उक्तब्रह्मैवात्मा अत्र सर्वशब्दसामानाधिकरण्य ब्रह्मशब्दस्य सर्वशब्दवाच्ये जगत्यात्मतया स्थितिनिबन्धनम्। सर्वगतत्वादनन्तस्य सएवाहमवस्थितः ॥' (वि.पु.२१.८५) 'सर्वं समाप्नोषि ततोऽसि सर्वः' (सर्वात्मकोऽसि) सर्वस्यात्माऽसि सर्वेश सर्वभूतास्थितो यतः ॥' (वि.पु.१.१२.७२) इतिचोपबृंहणाच्च। एतेन अन्तर्यामित्वकृतसत्ताऽनुवृत्तलक्षणस्थितिः 'तज्जलान्' इत्यत्र अनधात्वर्थइति सूचितम् एतच्च दयामूलकम्। 'अर्भकौकस्त्वात्' इतिसूत्रे अल्पशब्द विहाय अर्भकशब्दप्रयोगेण अर्भकस्य यदोकः तदेवोकः यस्य सः अर्भकौका इत्यपि विग्रहः विवक्षितः। एतेन सृष्टिवाक्याना राजकुमारनयबोधनार्थत्वेन कुमारेषु दययाऽन्तर्यामित्वेन स्थितिरित्यपि व्यञ्जितम्। 'एषम आत्माऽन्तर्हृदये' इति त्रिवारमभ्यासः आत्मत्वतात्पर्यलिङ्गम्। 'सर्वंखल्विदब्रह्म तज्जलानिति शान्त उपासीत' इत्युपक्रमः 'एतमितःप्रेत्याभिसंविताऽस्मि' इत्युपसंहारे फलवाक्यम्। एतत्त्रितयपर्यालोचनायां सृष्ट्यादिवाक्याना उपादानोपादेयभावपरत्वेन राजकुमारनयः तेन पुत्रस्येव जीवस्य परमात्मपारतन्त्र्यप्रतिपत्तिः नायमुपादानोपादेयभावः, स्वरूपपरिणामनिबन्धनः किन्त्वन्तर्यामित्वनिबन्धन इति 'एषम आत्मा' इत्यभ्यसान्तर्यामिवाक्येन बोधितम्। स्वरूपपरिणामनिबन्धनोपादानोपादेयभावः नात्र विवक्षितः, किंतु सर्वान्तर्यामित्वनिबन्धनएवेति तात्पर्यं'सर्वत्र

## गूढार्थसङ्ग्रहः

इति पद सूत्रे प्रयुञ्जानेन व्यासेन सूचितम् । 'एतमितःप्रेत्याभिसभविनास्मि' इति वाक्येन सृष्टिवाक्यानामुत्तरीत्या दयामूलकत्वेन ब्रह्मप्राप्तिफलकत्वम् उपासनस्यापि पुत्रस्य दायधनवदविशेषेण तरतमभावानापन्न फलम् एतच्च दयाऽदिगुणानुसन्धानवत एवेति निष्कम्पप्रवृत्तेः फलमिति 'इति यस्यस्यादद्धानविचिकित्सा' इत्यत्र विवक्षितम् । एव च सामानाधिकरण्यस्य सृष्ट्यादित्रयहेतुकत्वोक्तिपूर्वक सृष्टेः मुक्तिफलपर्यवसायित्वप्रतिपादनेन 'यतोवा' इति श्रुतावपि त्रयाणामुपन्यासेन उपादानोपादेयभावप्रतीत्या सृष्ट्यादिवाक्याना नामैकत्वप्रतिपत्त्यर्थत्व प्राप्तिफलकत्व च निर्णीयतइति सृष्टिवाक्याना प्राधान्यं समानाधिकरणवाक्यानामप्राधान्य च निश्चित भवति ॥

'शास्त्रयोनित्वात्' इत्यत्र शास्त्रपद, जन्माद्यधिकरणे ईशस्यैव कारणतायाः निश्चयेनानुमानेनेशसिद्धि वेदपौरुषेयत्व च वदता नैयायिकाना निरासार्थमिति पूर्वमेवोक्तम् । शास्त्रपदेन 'अप्राप्तेतु शास्त्रमर्थवत्' इति जैमिनिसूत्रोक्तनयस्सूचित. । एव महावाक्यानामिव प्राधान्येन शास्त्रत्व तत्रैव षड्विधतात्पर्यलिङ्गसद्भावात् इत्यर्थस्य श्रुतावविवक्षितत्व शास्त्रपदेन सूचितम् । शास्त्रपदेन 'यतोवा इमानि भूतानि' इति श्रुतिप्रतिपन्नजगत्कारणत्वबोधनद्वारा अपूर्वताबोधनमुखेन फलपर्यवसायितयाच इतरतात्पर्यलिङ्गानामपि सत्त्वसूचनेन कारणवाक्यस्य प्रधानशास्त्रत्व व्यञ्जित भवति । एतेन सिद्धपरवाक्याना व्युत्पत्तिसमर्थनमुखेन शास्त्रत्व प्रामाण्य च साधित भवति। एव साधनानन्तर 'प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा। पुसा येनोपदिश्येत तच्छास्त्रमभिधीयते' (श्लो.वा.श.प.४) इत्युक्तदिशा आक्षेपे प्रवृत्तिनिवृत्तिविरहेऽपि सिद्धपरवाक्याना सफलत्वेन प्रामाण्य समन्वयाधिकरणे निरूप्यते ॥

नवीनास्तु 'शास्त्रयोनित्वात्' इत्यत्र पाशुपताद्यागमावष्टम्भेनानुमानेन रुद्रादेर्जगत्कारणत्वेन जगत्कारणत्वलक्षणस्यातिव्याप्तिशङ्कायां 'नावेदविन्मनुते तबृहन्तम्' 'तत्वौपनिषद पुरुषम्' इति शास्त्रप्रमाणकत्व विष्णोरेव । पाशुपताद्यागमस्यायथार्थत्व पञ्चरात्रस्यैव यथार्थत्वमित्यागमेन न रुद्रस्य जगत्कारणत्वमिति सिद्धान्तः । 'तत्तु समन्वयात्' इत्यत्र रुद्रादिर्जगत्कारणत्वेन 'वेदादिवेद्य' इत्युक्तत्वात् रुद्रे जगत्कारणत्वमतिव्याप्तमिति आक्षेपे तत्तु ब्रह्म विष्णुरेव जगत्कारणम् समन्वयात् उपपत्त्यादिषड्विधतात्पर्यलिङ्गैः विष्णुरेव जगत्कारणमिति निश्चयात्। उक्त च बृहत्संहितायां–'उपक्रमोपसहारावभ्यासोपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्ग तात्पर्यनिर्णये ॥' इति उपक्रमादितात्पर्यलिङ्गैः सम्यङ्निरूप्यमाणे तदेव शास्त्रगम्यम् । इति (अ.भा),

अत्र तत्त्वप्रकाशिका–'कानि तान्युपपत्त्यादीलिङ्गानि कुत्र च लिङ्गानि इत्यतआह 'उक्तचे'ति । एकप्रकाराऽसकृदुक्तिरभ्यासः प्रमाणान्तरासिद्धताऽपूर्वता। फलत्वं फलम् । स्तुतिर्निन्दापरकृतिः पुराकल्पोऽर्थवादः युक्तिरुपपत्तिः उपक्रमादीनामुपपत्तित्वेऽपि ब्राह्मणपरिव्राजकन्यायेन पृथगुक्तिः उपक्रमादीनामुपपत्त्यादित्वेन भाष्य तेषामुत्तरोत्तरप्राबल्याभिप्रायम् । 'उपक्रमादिलिङ्गाना बलीयोह्युत्तरोत्तरम्' इत्युक्तेः । उपसहारस्य व्याख्यानरूपत्वेन तद्विरोध्युपक्रमाप्रामाण्यापत्ते. तस्य ततोऽपि प्राबल्यम् । एकत्रोक्तादपि बहुलोक्तेः प्राबल्यादभ्यासस्योपक्रमोपसहाराभ्या प्राबल्यम् । एकत्र-बहुवारोक्तादपि मुख्यस्य प्राबल्यादपूर्वतायाः उपक्रमोपसंहाराभ्यासेभ्यः प्राबल्यम् । फलस्योद्देश्यत्वात् उपक्रमादिभ्यः प्राबल्यम् करकरणाकरणयोरिष्टानिष्टकथनादिरूपार्थवादस्य फलमात्राधिक्यादुपक्रमादिभ्यः प्राबल्यम् । उपपत्तेस्सर्वमूलत्वेन सर्वतःप्राबल्यमिति एतत्सर्वे वाक्यतात्पर्यनिर्णये लिङ्ग भवति। विरोधेतु दुर्बलबाधकतया प्रबल निर्णायकम् साम्ये निरवकाशेन सावकाश बाध्यते । स्वभावदुर्बलेनापि निरवकाशेन स्वभावतः प्रबलस्यापि सावकाशस्य बाधो भवति । एवमेकेनानेकेषां च बाधः। ननु सावकाशत्वनिरवकाशत्वाभ्यामेव निर्णय. न स्वभावप्राबल्यदौर्बल्यंनामास्ति। दुर्बलप्रबलयो. सावकाशत्वनिरव-

श्रीमते रामानुजाय नमः

अथ वेदान्तसारः

## जन्माद्यस्य यतः (१.१.२)



अस्य विचित्रचिदचिन्मिश्रस्य व्यवस्थितसुखदुःखोपभोगस्य जगतः, जन्मस्थितिलयाः यतः तद्ब्रह्मेति प्रतिपादयति श्रुतिरित्यर्थः । 'यतो वा इमानि भूतानि जायन्ते—तद्ब्रह्म' इति । सूत्रे 'यत' इति हेतौ पञ्चमी, जनिस्थितिलयानां साधारणत्वात् । जनिहेतुत्वं च निमित्तोपादानरूपं विवक्षितम् 'यत' इतिहि श्रुतिः । इहोभयविषया कथमितिचेत् 'यतो वा इमानि' इति प्रसिद्धवन्निर्देशात् प्रसिद्धेश्च उभयविषयत्वात् । 'सदेव सोम्येदमग्रआसीत् एकमेवाद्वितीयम् तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत' (छा.६.२.१) इत्यत्र 'सदेव इदम् अग्रे एकमेव आसीत्' इत्युपादानतां प्रतिपाद्य 'अद्वितीयम्' इति अधिष्ठान्तरनिवारणात् सच्छब्दवाच्यं ब्रह्मैव निमित्तमुपादानञ्चेति विज्ञायते । यथा 'तदैक्षत बहुस्यां प्रजायेय' (छा.६.२.३) इत्यात्मन एव विचित्रस्थिरत्रसरूपेण बहुभवनं सङ्कल्प्य तथैव सृष्टिवचनाच्च । अतश्श्रुतावपि 'यत' इति हेतौ पञ्चमी । अत्रैव ब्रह्मणो जगन्निमित्तत्वमुपादानत्वञ्च प्रतिपादितम् । अर्थविरोधात् 'अस्मान्मायी सृजते विश्वमेतत्' (श्वे.४.९) इत्यादिविशेषश्रुत्या चाक्षिप्य 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' (शारी.१.४.२३) 'अभिध्योपदेशाच्च' (२४) 'साक्षाच्चोभयाम्नानात्' (२५) 'आत्मकृतेः' (२६) इत्यादिभिस्सूत्रैः परिहारिष्यते । ननु च सर्वज्ञं सर्वशक्ति सत्यसङ्कल्पं निरवद्यतया निरस्तसमस्तापुरुषार्थगन्धं ब्रह्मैवात्मानं विचित्रचिदचिन्मिश्रं जगद्रूपमिदं सर्वमसृजतेति कथमुपपद्यते ? । तदेतत् सूत्रकारस्स्वयमेव परिचोद्य परिहरिष्यति । 'अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्' (शारी.२.१.८) 'इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः' (२.१.२१) इति चोद्यम् ; परिहारस्तु 'नतु दृष्टान्तभावात्' (२.१.९) 'अधिकंतु भेदनिर्देशात्' (२.१.२२) इति च । 'क्षरन्त्वविद्या ह्यमृतन्तु विद्या विद्या विद्ये ईशते यस्तु सोऽन्यः' (श्वे.५.१) 'स कारणं करणाधिपाधिपः नचास्य कश्चिज्जनिता नचाधिपः' (श्वे.६.९) 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' (१.१०) अचिद्वर्गं स्वात्मनो भोग्यत्वेन हरतीति भोक्ता हरइत्युच्यते । 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षरउच्यते ॥ उत्तमःपुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः । यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ॥ अतोऽस्मि लोके वेदे च प्रथितःपुरुषोत्तमः ।' (गी.१५.,१६.,१७.,१८) इत्यादिश्रुतिस्मृतिगणैः प्रत्यगात्मनो ब्रह्मणो भेदेन निर्देशात् परमपुरुषार्थभागिनः प्रत्यगात्मनोऽधिकमर्थान्तरभूतं ब्रह्म । तच्च प्रत्यगात्मशरीरतया तदात्मभूतम् । प्रत्यगात्मनस्तच्छरीरत्वं ब्रह्मणस्तदात्मत्वं च 'य आत्मनि तिष्ठन् यस्यात्मा शरीरम्' (माध्यन्दिनपाठः) 'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' (सुबालोप.७.ख) इत्यादिश्रुतिशतसमधिगतम् । सशरीरस्यात्मनः कार्यावस्थाप्राप्तावपि गुणदोषव्यवस्थितदृष्टान्तभावात् ब्रह्मणि न दोषप्रसक्तिः इति नासामञ्जस्यं वेदान्तवाक्यस्येति 'नतु दृष्टान्तभावात्' (शारी.२.१.९) इत्युक्तम् दृष्टान्तश्च देवमनुष्यादिशब्दवाच्यस्य सशरीरस्यात्मनः 'मनुष्यो बालो युवा स्थविरः' इति नानाऽवस्था प्राप्तावपि बालत्व युवत्वस्थविरत्वादयः शरीरगता दोषाः नात्मानं स्पृशन्ति, आत्मगताश्च ज्ञानसुखादयः न शरीरमिति । अतः कार्यावस्थं कारणावस्थं च ब्रह्म प्रत्यगात्मशरीरतया तदात्मभूतमिति प्रत्यगात्मवाचिना शब्देन ब्रह्माभिधाने तच्छब्दसामानाधिकरण्ये

च हेतु वक्तु निरसनीय मतद्वयम् प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः '(शारी.१.४.२०) 'उत्क्रमिष्यत एवभावादित्यौडुलोमिः' (२१) इत्युपन्यस्य 'अवस्थितेरिति काशकृत्स्नः' (२२) इति हेतुरुक्तः। 'तत्सृष्ट्वा तदेवानुप्राविशत्। तदनुप्रविश्य सच्चत्यच्चाभवत्' (तै.आ.६.२.३) इत्यादिना प्रत्यगात्मनि आत्मनयाऽवस्थानात् ब्रह्मणस्तच्छब्देनाभिधानम् तत्सामानाधिकरण्येन व्यपदेशश्च युक्तम्। तथा 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' (शारी.२.१.३४) 'न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च' (३५) इति देवमण्यादिविषमसृष्टेर्जीवकर्मनिमित्तत्वम्, जीवाना तत्तत्कर्मप्रवाहाणा ञ्चानादित्व प्रतिपाद्य, तदनादित्व च 'नित्यो नित्याना चेतनश्चेतनानाम्' (श्वे.६.१३) 'ज्ञाज्ञौ द्वौ' (श्वे.१.९) इत्यादिश्रुतिपूपलभ्यत इत्युक्त्वा तदनादित्वेऽपि प्रलयकाले चिदचिद्वस्तुनोर्भोक्तृभोग्ययोर्नामरूपविभागाभावात्, 'आत्मा वा इदमेक एवाग्र आसीत् नान्यत् किञ्चन मिषत्' (ऐतरेय.१.१.१) इत्यादावेकत्वावधारणमुपपद्यत इति सूत्रकारेण स्वयमेवोक्तम्। तथा च —'नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः' (शारी.२.३.१८) इति प्रत्यगात्मनो नित्यत्वादनुत्पत्तिमुक्त्वा 'ज्ञोत एव' (१९) इति तस्य ज्ञातृत्वमेव स्वरूपमित्युक्तम्। 'उत्क्रान्तिगत्यागतीनाम्' (शारी.२.३.२०) इत्यादिना ऽणुत्वञ्चोक्तम्। 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्' (शारी.२.३.२९) 'यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्' (३०) इति ज्ञातुरेवात्मनो ज्ञानशब्देन व्यपदेशो ज्ञानगुणसारत्वात् ज्ञानैकनिरूपणीयत्वाच्चेत्युक्तम्। 'नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा' (शारी.२.३.३२) इति ज्ञानमात्रस्वरूपात्मवादे हेत्वन्तरायत्तज्ञानवादे सर्वगतात्मवादे च दोष उक्तः। 'कर्ता शास्त्रार्थवत्त्वात्' (शारी.२.३.३३) 'उपादानाद्विहारोपदेशाच्च' (३४) 'व्यपदेशाच्च क्रियाया नचेन्निर्देशविपर्ययः' (३५) 'उपलब्धिवदनियमः' (३६) 'शक्तिविपर्ययात्' (३७) 'समाध्यभावाच्च '३८ 'यथा च तक्षोभयथा' (३९) इत्यात्मन एव शुभाशुभेषु कर्मसु कर्तृत्वम्, प्रकृतेश्च कर्तृत्वे तस्यास्साधारणत्वेन सर्वेषां फलानुभवप्रसङ्गादिति च प्रतिपादितम्। 'परात्तु तच्छ्रुतेः' (शारी.२.३.४०) 'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः' (४१) इत्यात्मन एव कर्तृत्व परमपुरुषानुमतिसहकृतमित्युक्तम्। 'अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके' (४२) 'मन्त्रवर्णात्' (४३) 'अपिस्मर्यते' ४४ 'प्रकाशादिवत्तु नैवपरः' (४५) 'स्मरन्ति च' (४६) इति 'अनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' (मुण्डक.३.१.२) 'क्षरन्त्वविद्या ह्यमृतन्तु विद्या विद्याविद्ये ईशते यस्तुसोऽन्यः' (श्वे.५.१), 'प्राज्ञेना मना सपरिष्वक्तो न बाह्य किञ्चन वेद नान्तरम्' (बृ.६.३.२१) 'तयोरन्यः पिप्पल स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति' (मु ३.१.१) 'ज्ञाज्ञौ द्वावजावीशनीशौ' (श्वे.१.९) 'पृथगात्मानं प्रेरितार च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' (श्वे.१.६) 'यदा पश्यःपश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' (मु.३.१.३) 'सकारणं करणाधिपाधिपो नचास्य कश्चिज्जनिता नचाधिपः' (श्वे.६.९) 'यस्सर्वज्ञस्सर्ववित्' (मु.१.१.९) 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च (श्वे.६.८) 'निष्कलं निष्क्रियं शान्तनिरवद्यं निरञ्जनम्' (६.१९) 'नित्यो नित्याना चेतनश्चेतनानामेको बहूनां योविदधाति कामान्' (श्वे.६.१३) [नित्याना चेतनाना यः एकः नित्यश्चेतनस्स कामान्विदधातीत्यर्थः] 'पतिं विश्वस्यात्मेश्वरम्' (तै.नारायणे.६.११.३) इत्यादिषु प्रत्यगात्मनः परमात्मनश्च कर्मवश्यत्वेन शोचितृत्वेनासर्वज्ञत्वेन उपासनायत्तमुक्तित्वेन निरवद्यत्वेन सर्वज्ञत्वेन सत्यसङ्कल्पत्वेन सर्वेश्वरत्वेन समस्तकल्याणगुणाकरत्वादिनाच स्वरूपस्य स्वभावस्य नाना व्यपदेशात् तयोरेव 'तत्त्वमसि' (छा.६.८.७) 'अयमात्मा ब्रह्म' (बृ.६.४.५) 'योऽसौ सोऽहं योऽहं सोऽसौ' (एतरेयिणइति शाङ्करीये.,२३.३६) 'अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति नसवेद' (बृ.३.४.१०) 'अकृत्स्नाह्य —आत्मेत्येवो

पादीन ' (बृ.३.४.७) ' ब्रह्म दाशा ब्रह्म दासा ब्रह्मेमे कितवा: ' (अथर्वसंहितोप) इति च सर्वजीवात्मव्यापित्वेना- भेदव्यपदेशाच्च, उभयव्यपदेशाविरोधेन परमात्मांशो जीवात्मेत्यभ्युपगन्तव्यम् । न केवलं न्यायसिद्धमिदं, श्रुतिस्मृतिभ्यां चांशत्वमुक्तं जीवात्मनः ' पादोऽस्य विश्वा भूतानि ' (यजुरारण्य.१२.१३.पुरुषसू.३) ' ममैवांशो जीवलोके जीवभू- तस्सनातनः ' (गी.१५.७) इति। अंशत्वं नाम एकवस्त्वेकदेशत्वम् । तथा सत्युभयोरेकवस्तुत्वेनाविरोधो न स्यादित्या- शङ्क्य ' प्रकाशादिवत्तु नैवंपरः ' (शारी.२.३.४५) इति परिहरति । अन्यविशेषणतैकस्वभावप्रकाशजातिगुणशरीरवि शिष्टानामिव विशिष्टस्यात्मनः प्रति प्रकाशजातिगुणशरीराणां यथा अंशत्वम् ; एवं परमात्मानं प्रत्यगात्मशरीरकं प्रति प्रत्य- गात्मनोंऽशत्वम् । एवम् अंशत्वे सत्यंशभावोऽंशभूतो जीवः नैवमंशी परमात्मा सर्वत्र विशेषणविशेष्ययोस्स्वरूपस्वभाव- भेदात् । एवं च ' कर्ता शास्त्रार्थवत्त्वात् ' (शारी.२.३.३३) ' परात्तु तच्छ्रुतेः ' (२.३.४०) इत्यनन्तरोक्तं च न विरुध्यते । एवं प्रकाशशरीरवज्जीवात्मनामंशत्वं पराशरादयस्स्मरन्ति च ' एकदेशस्थितस्याग्नेः ज्योत्स्ना विस्तारिणी यथा। परस्य ब्रह्मणश्शक्तिस्तथेदमखिलं जगत् ॥ ' (वि.पु.१.२२.५६) ' यत्किंचित् सृज्यते येन सत्त्वजातेन वैद्विज । तस्य सृज्यस्य सम्भूतौ तत्सर्वं वै हरेस्तनुः ॥ ' (१.२२.३८) ' ते सर्वे सर्वभूतस्य विष्णोरंशसमुद्भवाः ' इति । अन्यथा पार- मार्थिकापारमार्थिकोपाधिसमाश्रयणे प्रत्यगात्मनोंऽशत्वे ब्रह्मण एव वेदान्तनिवर्त्याखिलदोषा भवेयुरिति ' आभास एव च ' (शारी.२.३.४९) इत्यादिसूत्रैरुक्तम् । अतस्सर्वदा चिदचिद्वस्तुशरीरतया तदात्मभूतमेव ब्रह्म, कदाचिदविभक्त- नामरूपचिदचिद्वस्तुशरीरं तत्कारणावस्थम् कदाचिच्च विभक्तनामरूपचिदचिद्वस्तुशरीरं तत्कार्यावस्थं ब्रह्म सर्वदा चिदचि- द्वस्तुशरीरतया तद्विशिष्टत्वेऽपि ब्रह्मणः परिणामित्वापुरुषार्थाश्रयत्वे शरीरभूतचेतनाचेतनवस्तुगते । आत्मभूतं ब्रह्मसर्वदा ' निरस्तनिखिलदोषगन्धानवधिकातिशयासङ्ख्येयज्ञानानन्दाद्यपरिमितोदारगुणसागरमवतिष्ठत इति ब्रह्मैव जगन्निमित्तमु पादानंचेति ' यतोवा इमानि ' (तै.भृ.१.१) इत्यादिवाक्यं प्रतिपादयत्येवेति ' जन्माद्यस्य यतः तत् ब्रह्म ' इति सुष्ठू क्तम् । ' सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम् ' (छा.६.२.१) ' तदैक्षत बहुस्यां प्रजायेय ' (६.२.३) इति । अस्यचायमर्थः—' यस्यात्मा शरीरम् ' (माध्यन्दिनपाठे) ' यस्याक्षरं शरीरम् यस्य पृथिवी शरीरं यस्याव्यक्तं शरीरम् । एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः ' (सुबालोप.७.ख) इत्यादिश्रुतेः ब्रह्मणः सर्वदा चिद चिद्वस्तुशरीरकत्वात् सदेवेदमिदानीं स्थूलचिदचिद्वस्तुशरीरकत्वेन विभक्तनामरूपम् अग्रे प्रलयकाले सूक्ष्मदशापन्नचिदचि- द्वस्तुशरीरतया नामरूपविभागानर्हमेकमेवासीत् । स्वयमेव ब्रह्म सर्वज्ञं सर्वशक्ति निमित्तान्तरानपेक्षमद्वितीयञ्चातिष्ठत् । ' तदैक्षत बहुस्यां प्रजायेय ' (छा.६.२.३) इति तन्नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुशरीरकतया एकमेवास्थितं नाम रूपविभागार्हस्थूलदशापन्नया बहुप्रकारं स्यामिति ऐक्षत । ' स्यां, प्रजायेय ' इति व्यष्टिसमष्टिव्यपदेशः । चिदचितोः परस्य च प्रळयकालेऽपि व्यवहारानर्हसूक्ष्मभेदः सर्ववेदान्तिभिरभ्युपगतः, अविद्याकृतभेदस्य उपाधिकृतभेदस्य च अनादित्वाभ्यु पगमात् । इयांस्तु विशेषः ब्रह्मैवाज्ञम् उपाधिसंबद्धञ्चेति सर्वश्रुतिस्मृतिन्यायविरोधोऽन्येषाम्, तदभावाविरोधश्चास्माकम्— इति ॥

इति वेदान्तसारे जन्माद्यधिकरणम्

श्रीमते रामानुजाय नमः

अथ वेदान्तदीपः

## जन्माद्यस्य यतः (१.१.२)

तैत्तिरीयके—' यतोवा इमानि भूतानि जायन्ते । यन जातानि जीवन्ति । य प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व। तद्ब्रह्म ' (तै.भृ.१) इत्येतद्वाक्य विषय.। किमितज्जिज्ञास्यतया प्रतिज्ञात ब्रह्म जगज्जन्मादिकारणतया लक्षणत. प्रतिपादयितु शक्नोति नवेति सशय । नशक्नोतीति पूर्व.पक्ष । कुत. ? जगज्जन्मादीनामुपलक्षणतया विशेषणतया वा ब्रह्मलक्षणत्वास म्भवात् उपलक्षणत्वेह्युपलक्ष्यस्याकारान्तरयोगोऽपेक्षित ? नचेह तदस्ति । अत. उपलक्षणत्व न सभवति । विशेषण वेऽ प्यनेकविशेषणविशिष्टतया अपूर्वस्यैकस्य प्रतिपादकत्व नसभवति । विशेषणाना व्यावर्तकत्वे विशेषणबहुत्वे ब्रह्मबहुत्व प्रसक्ते.। राद्धान्तस्तु—एकस्मिन्नविरुद्धाना विशेषणानामनेकत्वेऽपि श्यामत्व युवत्वादिविशिष्टदेवदत्तवज्जगज्जन्मादिविशिष्ट ब्रह्मैकमेव निशेष्य भवति । उपलक्षणत्वे जन्मादिभिरुपलक्ष्यस्य ब्रह्मशब्दावगतबृहत्वाद्याकाराश्च सन्तीति जगज्जन्मादिका-रण ब्रह्मेति लक्षणत प्रतिपादयितु शक्नोति इति । सूत्रार्थ.। अत्र विविधविचित्रभोक्तृभोग्यपूर्णस्य जगत. यत जन्मादि तद्ब्रह्मेति प्रतिपादयितु श ।त्येतद्वाक्यम् इति ॥

इति वेदान्तदीपे जन्माद्यधिकरणम्

अथ वेदान्तसार

(

## शास्त्रयोनित्वात् (१.१.३)

एव चिदचिद्वस्तुशरीरतया तद्विशिष्टस्य ब्रह्मण एव जगदुपादानत्व निमित्तत्व च नानुमानगम्यमिति शास्त्रैकप्र माणकत्वात्तस्य ' यतो वा इमानि ' इत्यादिवाक्यम्, निखिलजगदेककारण ब्रह्मैव बोधयत्येवेति सिद्धम् ॥

इति वेदान्तसारे शास्त्रयोनित्वाधिकरणम्

अथ वेदान्तदीप

## शास्त्रयोनित्वात् [१.१,३]

' यतोवा इमानि ' इत्यादिवाक्यमेव विषय । तत्कि जगत्कारणे ब्रह्मणि प्रमाणम् ? उत नेति सशय । नैत प्र-माणमिति पूर्व पक्ष । अनुमानसिद्धब्रह्मविषयत्वात् । प्रमाणान्तरविपर्येहि शास्त्र प्रमाणम् । जगतस्सावयवत्वेन कार्य त्वात्, कार्यस्य स्वोपादानोपकरणसम्प्रदानप्रयोजनाभिज्ञकर्तृकत्वात्, जगन्निर्माणकार्यचतुर. कर्मपरवशपरिमितशक्त्यादि क्षेत्रज्ञविलक्षणस्सर्वज्ञस्सर्वशक्तस्सर्वेश्वरोऽनुमानसिद्ध इति तस्मिन् ' यतो वा इमानि भूतानि ' (तै.भृ १.अनु) इत्यादि वाक्य न प्रमाणमिति ॥

राद्धान्तस्तु—जगतः कार्यत्वेऽपि एकदैवैकेनैव कृत्स्नं जगन्निर्मितमित्यत्र प्रमाणाभावात् क्षेत्रज्ञानामेव विलक्षणपुण्यानां ज्ञानशक्तिवैचित्र्यसम्भावनया कदाचित् कस्यचिज्जगदेकदेशनिर्माणसामर्थ्यसम्भवात् तदतिरिक्तपुरुषानुमानं न सम्भवतीति शास्त्रैकप्रमाणकत्वात् ब्रह्मणस्तत्प्रतिपादकत्वेन तस्मिन् ' यतो वा इमानि भूतानि ' (तै.भृ.१.अ) इत्यादिवाक्यं प्रमाणमिति। शास्त्रं योनिः यस्य कारणं प्रमाणं तद्ब्रह्म शास्त्रयोनि, प्रमाणान्तराविषयत्वेन शास्त्रैकप्रमाणकत्वाद्ब्रह्मणः। तस्मिन् ' यतो वा इमानि ' इत्यादिवाक्यं प्रमाणमिति सूत्रार्थः ॥

इति वेदान्तदीपे शास्त्रयोनित्वाधिकरणम्

अथ वेदान्तसारः

## सू.४—तत्तु समन्वयात् १.१.४

पुरुषार्थतयाऽन्वयः समन्वयः शास्त्राख्यप्रमाणस्य पुरुषार्थपर्यवसायित्वेऽपि ब्रह्म स्वस्य परस्य चानुभवितुः अविशेषेण स्वरूपेण गुणैः विभूत्या च अनुभूयमानं अनवधिकातिशयानन्दरूपमिति पुरुषार्थत्वेनाभिधेयतयाऽन्वयात् ब्रह्मणश्शास्त्रप्रमाणकत्वमुपपन्नतरमिति निरवद्यं निखिलजगदेककारणं ब्रह्म वेदान्ताः प्रतिपादयन्तीत्युक्तम्। तस्यैकस्यैकदैव कृत्स्नजगन्निमित्तत्वं तस्यैवोपादानतया जगदात्मकत्वञ्च नानुमानादिगम्यमिति शास्त्रैकप्रमाणकत्वात्, तस्यचानवधिकातिशयानन्दरूपतया परमपुरुषार्थत्वाद्वेदान्ताः प्रतिपादयन्त्येवेति स्थिरीकृतम्। अतःपरं पादशेषेण जगत्कारणतया प्रधानपुरुषप्रतिपादनानर्हतया सर्वज्ञं सत्यसङ्कल्पं निरस्ताविद्यादिसमस्तदोषगन्धम् अपरिमितोदारगुणसागरं ब्रह्मैव प्रतिपादयन्तीत्युच्यते

इति वेदान्तसारे समन्वयाधिकरणम्

अथ वेदान्तदीपः

## सू.४—तत्तु समन्वयात् १.१.४

ब्रह्मणश्शास्त्रप्रमाणकत्वं सम्भवति नेति विचार्यते। न सम्भवतीति पूर्वःपक्षः। कुतः? प्रवृत्तिनिवृत्त्यन्वयविरहिणो ब्रह्मणः स्वरूपेणापुरुषार्थत्वात् पुरुषार्थावबोधकत्वेनच शास्त्रस्य प्रामाण्यान्मोक्षसाधनब्रह्मध्यानविधिपरत्वे असत्यपि ब्रह्मणि तद्ध्यानविधानसम्भवात् न ब्रह्मसद्भावे तात्पर्यमिति ब्रह्मणश्शास्त्रप्रमाणकत्वं न सम्भवति—इति। राद्धान्तस्तु—अतिशयितगुणपितृपुत्रादिजीवनज्ञानवत् अनवधिकातिशयानन्दरूपब्रह्मज्ञानस्य निरतिशयपुरुषार्थत्वात्तस्य शास्त्रप्रमाणकत्वं सम्भवति ' आनन्दो ब्रह्म, यदेष आकाश आनन्दो न स्यात् ' ' यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान् ' इत्यादिभिरनवधिकातिशयानन्दस्वरूपं ब्रह्मेति हि प्रतिपाद्यते। अतो ब्रह्म स्वेन परेण वाऽप्यनुभूयमानं निरतिशयानन्दस्वरूपमेवेति तत्प्रतिपादनपरस्यैव साक्षात्पुरुषार्थान्वयः। प्रवृत्तिनिवृत्तिपरस्य तु तत्साध्यफलसम्बन्धात्पुरुषार्थान्वयः—इति ॥

सूत्रार्थः—तुशब्दः प्रसक्ताशङ्कानिवृत्त्यर्थः। तत् पूर्वसूत्रोदितं ब्रह्मणश्शास्त्रयोनित्वं सिद्ध्यति। समन्वयात्—सम्यक् पुरुषार्थतयाऽन्वयः समन्वयः वेदितुर्निरतिशयानन्दस्वरूपत्वेन परमपुरुषार्थरूपे परे ब्रह्मणि वेदकतया शास्त्रस्यान्वयाद्ब्रह्मणश्शास्त्रप्रमाणकत्वं सिद्ध्यत्येव—इति ॥

इति वेदान्तदीपे समन्वयाधिकरणम्

श्रीलक्ष्मीहयवदनलक्ष्मीनारायणाभ्यां नमः

श्रीमते रामानुजाय नमः

श्रीमते निगमान्तमहादेशिकाय नमः

# अधिकरणसारावळी



जन्माद्यंश्चेद्विशेष्यं भवति बहुलताऽथोपलक्ष्यं ब्रवीषि
ज्ञाताज्ञातादिदौःस्थ्यं व्यतिपजति न चालक्षिते स्यात्परीक्षा ।
उद्दिष्टब्रह्मचिन्ता तत इह कथमित्यत्र हेतुत्वलक्ष्य-
पुंसूक्तादिप्रसिद्धो गुणनिधिरघजिद्ब्रह्मशब्दार्थ उक्तः ॥ १ ॥
नानाचेल्लक्षणानि स्वरूपभिदुरता ब्रह्मणि स्याद्विशेष्ये
खण्डो मुण्डश्च गौरित्यभिलपनसमा धर्मिशब्दैकताऽत्र ।
तेष्वेकं चेद्यथाऽन्यत्समुदितमफलं स्याद्यवच्छेदहानेः
खण्डत्वादिक्रमाचेत्यसदविहतित· खण्डतादेर्विशेषात् ॥ २ ॥
तत्तत्स्वप्रत्यनीकव्युदसननियतं भेदकं नान्यबाधि
व्याघातः कालभेदान्नभवति जननस्थापनध्वंसनानाम् ।
प्रत्येकं लक्षणत्वं सुवचमिह बहुदाहृतिर्धीमहिम्ने
सम्भूयाप्याहुरेके फलमपि च तदा शङ्कितार्थव्युदासः ॥ ३ ॥
ज्ञातंचेन्नोपलक्ष्यत्र च यदि नतरां लक्ष्मयोगाप्रतीतेः
ज्ञाताज्ञातांशभेदस्त्विह दुरभिलपो लक्षणेनैव वेद्ये ।
ब्रह्मत्वं ब्रशब्दान्वितिरपि विदितेऽन्यत्र नोचेन्नशङ्का
मैवं नानागमोद्यद्विशयशमनतः श्रीमतिब्रह्मतोक्तेः ॥ ४ ॥
यावल्लक्ष्यावबोधं यदवगतिरतो लक्षणात्तद्विशेष्यम्
यस्यावोधेऽपि पश्चाद्यदवगतिरिदं स्यात्कुतो नोपलक्ष्यम् ।
तस्माद्द्वेधाऽपि भाष्येऽनुमतिरनुचितेत्याशयाऽज्ञस्य चोद्यं
मोक्षार्थोपास्यभेदेह्युभयमपि समन्वेति विद्याविकल्पात् ॥ ५ ॥
चन्द्रे शालेय शान्ते महसि तटगतं लक्षणं कारणत्वं
सत्यज्ञानादिवाक्यैरपमृदितगुणन्तद्विभातीति डिम्भाः ।
प्रकृत्यार्थो विशेष्ये प्रतिपदनियतावर्ज्यतत्तन्निमित्त-
द्वारावृत्तिं पदानामिह विदुररणाद्युक्तिवन्न्यायवृद्धाः ॥ ६ ॥

इति जन्माद्यधिकरणम्

## अथ शास्त्रयोनित्वाधिकरणम्



वीतावीतप्रयोगक्रमनियतिमती कार्यता विश्वमेतत्
  सर्वज्ञेन प्रक्लृप्तं गमयति निपुणस्त्वत्र शास्त्रैर्विचारः ।
इत्युक्तौ लघुत्वादनुमितिवशतः कर्मजैश्वर्ययुक्तो
  विश्वामित्रादिनीत्या स्फुरति विभुमिदामूत्रयच्छास्त्रवेद्यम् ॥ ७ ॥
क्षित्यादौ कार्यतायै घटनमकुशलं कर्तृपूर्वं स कर्ता
  सिद्ध्येदल्पज्ञदेहप्रभृतिजनकदृक् सर्वशक्तिश्च मैवम् ।
श्रोत्रार्थैस्तोन्मादिग्रहणमपि वियत्तादृशं यत्तदभावात्
  सर्वं हेतुं न पश्येत् घटकृदिह न चाकर्तृता तावताऽस्य ॥ ८ ॥
कार्यत्वात् स्याद्विवादास्पदमिदमखिलं सर्ववित्कर्तृपूर्वं
  यद्वैवं तद्धि नैवं पुरुषकमिति नानन्यथासिद्ध्यभावात् ।
हेतावेतादृशामन्यविदुरभिदुरं व्याप्तिसिद्ध्यादिदौःस्थ्य
  तद्भङ्गे लक्षणानामगणि गमनिका तत्त्वमुक्ताकलापे ॥ ९ ॥
यद्यप्यात्मान्तरादेरनुमितिरनघा लिङ्गभेदैस्तथाऽपि
  प्रत्यक्षव्याप्तिदौली नयतु शिथिलितां कुत्रचित्पक्षभेदे ।
आम्नाये त्वद्भुतोक्तिर्न भवति वितथा तादृशाप्तोक्तनीत्या
  बाधाभावादिसाम्याद्विहतिमति भवेल्लोकवत् गौणतादि ॥ १० ॥
नन्वाम्नायप्रधाना कचिदनुकथयन्त्यसदादेरशक्यं
  कार्यं कर्ताऽनुमेयः पर इति तदभिप्रैतु जन्मादिवाक्यम् ।
तस्मादीशानुमानत्यजनमनुचितं वैदिकस्येति चेन्न
  व्याप्त्यौचित्योपदर्शाद्यत इति च सदाद्युक्तिसिद्धानुवादात् ॥ ११ ॥

इति शास्त्रयोनित्वाधिकरणम्



## अथ समन्वयाधिकरणम्

कर्तव्ये ह्यर्थ उक्तं निशमयितृफलं सिद्धरूपे तु न स्यात्
  प्रीत्या साफल्यमलसौ वितथमपि वचः क्विन्न दृष्टं तदर्थम् ।
विध्यर्थत्वेऽन्यदस्मैर्विषयवदमृतं तत् परीक्ष्यप्रभावी
  स्वाक्षेपऽनन्यशेषे निरवधिकसुखे शास्त्रतात्पर्यमाह ॥ १२ ॥
तात्पर्यं ब्रह्मतत्त्वेऽप्यविहतविधिनाऽप्येकवाक्यत्वपक्षे
  भेदेऽपि स्यादनिष्टेर्न भवति कलिशुद्धन्तमह्योक्तिसाम्यम् ।

स्यात्प्रामाण्यं गुणाध्यक्षमिति न गुणेस्त्वूहने प्रीत्युपोगा-
दालोपच्छन्दनादिष्वपि विषयतथाभावपुष्टयैव दृष्टः ॥ १३ ॥
यद्यांश्यर्थं पचनविधिनियमनगतिस्वंश्रमात्रयापपम्
सत्येनानन्दरूपेण च विहितविधानार्थसिद्धान्ततो वा ।
तेनानन्यार्थसिद्धेः स्वतनुविषयतासाद्भवनम्मनेन
प्रत्यक्तात्मस्वरूपानित्यकृतपरमपरब्रह्मनिष्ठाः प्रमाणम् ॥ १४ ॥
प्रोक्षके निष्प्रपञ्चीकरणविधिपदं ध्यानविद्ध्यर्थमन्ये
निर्धर्मांत्रितवाक्योपचरितमितरे सिद्धयतीति ब्रुवन्ति ।
तेषामेषां स्मणशास्त्रवचनविदलिप्याकुलानेकजल्पाः
कल्पोऽयं यादकल्पः कृतमतिपरिपर्पाठिमर्दैरमर्दि ॥ १५ ॥
अन्यार्थोदर्थवादस्तुतिगुणमुखतः स्थापितः प्रागिदानीं
स्यातन्त्र्येण प्रमाणी क्रियत इति ततः काण्डयोस्स्याद्विरोधः ।
न स्यान्मामान्यतो हि प्रथममभिदधे मानतास्थापनार्थं
केषांचित्स्वार्थतोक्ता स्वन इह सुगतो बोधमात्रात्पुमर्थे ॥ १६ ॥
त्रेधा सर्वत्र वेदे नियतविभजनं चोदनार्थवादमेदं-
स्त्वन्यादोऽप्यर्थवादा मुनिभिरभिहिता ब्राह्मणांशस्य दोषाः ।
अम्नातत्वेऽपतोक्तौ स्मृतिविदनिरिति चेद्विद्धि दत्तोत्तरं तत्
सामान्योक्तिर्हि सेयं तत उपरि यथा मन्त्रविष्यन्यतोक्तिः ॥ १७ ॥
आम्नातैरद्विपत्रार्थैरविगुणमपर्लेददत्तापुनज्योतिषाद्यैः
पारम्पर्या प्रवृत्याऽप्यतिनिपुणधियामागमाभ्याससिद्धौ ।
शब्दे तस्माच्च बोधे मतिपरविषये दोषवाधव्यपेते
मानं तत्र स्वतोऽसौ न कथमितरथा नैगमाध्यापलापः ॥ १८ ॥
शास्त्रारम्भोपपत्त्यै चतुरधिकरणीपेटिकेयं प्रवृत्ता
लक्ष्यस्योक्तं विशेषद्वयमिह घटते वक्ष्यमाणोपजीवि ।
सद्ब्रह्माद्युक्तिवेद्यः पर इति हि यदेत्कारणत्वाधिकारे
वक्ष्यत्यस्य द्विलिङ्गाद्यधिकृतिषु पुनस्तादृशानन्दतादीन् ॥ १९ ॥
आत्मन्येवं परस्मिन्प्रकृत इति मिते विश्वहेतुत्वलक्ष्ये
शास्त्रैकस्थापनीये निरुपधि परमप्रेमयोग्ये प्रसक्ते ।
ईदृक्त्वं स्याद्यथार्हं प्रकृतिपुरुषयोर्नानुमानाद्ययोग्यौ
दुःखास्पृष्टौ च ताविल्यथ परकथनं बोधयीति क्रमेण ॥ २० ॥

॥ समाप्तं समन्वयाधिकरणम् ॥

## गूढार्थसंग्रहः

बाध्यत्वनियमात् । अन्यथा वाक्याप्रामाण्यापत्तेः । नैवं स्वभावप्रबलेन दुर्बलबाधने तत्प्रामाण्यायार्थान्तरकल्पनम् । साव काशत्वं पुनः स्वयमर्थान्तरवाचित्वमिति भेदात् अत्र श्रुत्यादिषट्कं च ग्राह्यम् ' इति (वदन्ति) ॥

अत्र पूर्वाधिकरणद्वये विष्णुशब्द एव नास्ति । नवीनरीत्या ब्रह्मशब्दस्य गुणपूर्णवाचकत्वेऽपि गुणपूर्णत्वेनैव वस्तु-नासिद्धिः । जन्मादिकारणत्वेन गुणपूर्णवस्तुनिश्चय इत्येतावदेव तत्र सिद्ध्यतीति स्फुटं प्रतीयते । उत्तराधिकरणद्वये रुद्र-पूर्वपक्षसूचकपदमेव नास्ति । ' वेदयोनित्वात् ' इत्युक्तौ वेदव्यतिरिक्तयोनित्वं नास्तीत्यर्थस्य सिद्ध्या तदा इयं शङ्का स-माविता स्यात् तदाऽप्येकेनैवाधिकरणेनालम् । नापि तथा निर्देशस्सूत्रे, अधिकरणद्वयस्य रुद्रव्यावृत्तिः प्रयोजनमित्यपि न घटते । एकेनैव गतार्थत्वसम्भवात् । नवीनमते स्मृतिपादएवायमर्थो वक्तव्यः नत्वत्र तत्रापीत्थमेव शङ्का संभवत्येव। भाष्ये पञ्चरात्रप्रमाणमत्राप्युपन्यस्तम् । अतः प्रागुक्तदिशा शास्त्रशब्देन जैमिनिसूत्रप्रत्यभिज्ञाबलेन पूर्वपक्षस्य सूचनं युक्तम् । प्रमाणान्तर(अनुमानं)सिद्धत्वं नैयायिकैरुच्यते तच्चानुमानं वेदस्य पौरुषेयत्वसाधकम् । इदमेव चेश्वरसाधकमिति प्रागेवोपन्यस्तम् शास्त्रपदेन उक्तदिशा समन्वयाधिकरणे यः पूर्वपक्षः सूचितः सः ' तत्तु समन्वयात् ' इत्यत्र निरस्यते मीमांसकशङ्कानिरासकत्वं शास्त्रशब्दस्य संभवति । भगवच्छासनरूपाविदितार्थबोधकत्वेन वेदस्यापि शास्त्रत्वं स्वशासना-वबोधिशास्त्रं प्रदर्श्य ' इति भगवता रचनानुपपत्त्यधिकरणे वक्ष्यते । ' शास्त्रदृष्ट्यातूपदेशो वामदेववत् ' इत्यत्र अनन्तर सूत्रे उपासात्रैविध्यस्य वक्ष्यमाणतया प्रतर्दनविद्यायां ' तमामायुरमृतमित्युपास्व ' इत्यत्रोपासनतात्पर्यं स्फुटमिति तत्रापि परमात्मशासनबोधकत्वेन शास्तीति शास्त्रमिति व्युत्पत्तिसिद्धार्थो विवक्षितः । ' वामदेववत् ' इति दृष्टान्तविवक्षितश्रु-तावपि ' तदात्मानमेवावेदहं ब्रह्मास्मि ' इत्यतः प्राक् ' आत्मेत्येवोपासीत ' इति वाक्यस्यानन्तरम् ' आत्मानमेव लोक-मुपासीत ' इति वाक्यस्य च सत्वेन उपासनवाक्यप्रतिपत्तिस्सुलभा । एतेन ' तदात्मानमेवावेदहं ब्रह्मास्मि ' तत्यत्र ' स एष इह प्रविष्ट आनखाग्रेभ्यः ' इति तत्पूर्वोक्तस्यान्तःप्रविश्य नियन्तुः आत्मशब्देन विवक्षा ' आत्मेत्येवोपासीत ' इत्यत्र सिद्धेति तेन ' तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे ' इत्यत्रान्तर्यामिब्रह्म पश्यन् स्वान्तर्यामिणः मन्वाद्यन्तर्यामित्व साक्षा-त्कृतवानित्यर्थः । ' योयो देवानां प्रत्यबुध्यत, सएव तत्समभवत् ' इति तत्पूर्ववाक्ये प्रतिबोधाभावेऽपि सर्वभवनस्य सिद्धत्वात् साक्षात्कारनिबन्धनमेव सर्वभवन सर्वान्तर्यामित्वेन साक्षात्कृतवानित्यर्थः । अयं च साक्षात्कारः ध्यानरूपोपा सनानन्तरकालिकसमाधिरूपः । अतः शास्त्रशब्दस्य ' शास्त्रदृष्ट्या ' इत्यत्र परमात्मशासनपरत्वाङ्गीकारे नानुपपत्तिः ।— ' कर्ता शास्त्रार्थवत्त्वात् ' इति सूत्रेऽपि ' परात्तु तच्छ्रुतेः ' इत्यनन्तरसूत्रेण मीमांसकमतवैलक्षण्य सूचितम् । अयं च द्रमिडाचार्यसिद्धान्त इत्युत्तरत्र स्फुटीभविष्यति । तेनापि पूर्वमीमांसकमतपर्यालोचन कृतं भवति । ब्रह्मणः आनन्दरू-पत्वेन फलत्वं नसंभवतीति प्राभाकरोक्तिः पूर्वमेवोदाहृता । प्रथमसूत्रे ब्रह्मजिज्ञासा इत्यत्र ब्रह्मणः फलत्व सिद्धत्व च प्रतिपन्नम् । सिद्धे व्युत्पत्तिसमर्थन प्रथमसूत्रे फलत्वसमर्थन च चतुर्थसूत्रे इत्येव विवेकः । अधिकरणसङ्गतिक्रमः प्रागेव प्रदर्शितः अतो वृत्तिकारसिद्धान्त एव युक्तः । उपक्रमादितात्पर्यलिङ्गेषु प्राबल्यदौर्बल्यप्रक्रियामपि पूर्वमीमांसका नसहन्ते, नवीनोक्तोपक्रमादिप्राबल्यविचारस्तु श्रीनिवासाचार्यकृते तत्त्वमार्ताण्डे द्रष्टव्यः । चन्द्रिकातर्कताण्डवग्रन्थयोः तद्व्याख्यान-प्रकाशे च उपक्रमादिविचारः अन्यत्र पर्यालोचयिष्यते ॥

नन्वेवमपि सृष्टिवाक्यानां ब्रह्मप्राप्तिफलवाक्यैकवाक्यत्वेन सृष्टेरात्मैकत्वप्रतिपत्त्यर्थत्वविरहेण उपादानोपादेयभावस्य एतद्वाक्येनिर्णयेन तेनैव महावाक्येषु सामानाधिकरण्यस्योपपत्त्या सृष्टिवाक्यानां प्राधान्य न महावाक्यानामित्युक्तिरयुक्ता । (शं.भा.१.१.४) पञ्चपादिका भामत्यादौचायमर्थः विस्तरेण निरूपितः । तत्र कार्यार्थे व्युत्पत्तिं सविशेषजीवाभिन्नब्रह्मप-

## गूढार्थसंग्रहः

रिणामवादं चाभ्युपगच्छतां वृत्तिकारानुयायिनामपरेषां मतमुपन्यस्य दूषणावसरे 'कर्मब्रह्मविद्याफलयोर्वैलक्षण्यात्' इत्युपक्रम्य धर्मतारतम्यादधिकारितारतम्यम्। प्रसिद्धं चार्थित्वसामर्थ्यादिकृतमधिकारितारतम्यम्। तथा च यागाद्यनुष्ठायिनामेव विद्यासमाधिविशेषात् उत्तरेण पथा गमनम् केवलैरिष्टापूर्तदत्तसाधनैर्धूमादिक्रमेण दक्षिणेन पथा गमनम्, तत्रापि सुखतारतम्यं तत्साधनतारतम्यं च 'यावत्सम्पातमुषित्वा' इत्यस्माद् गम्यते। एवमविद्यादिदोषवतां धर्माधर्मतारतम्यनिमित्तं शरीरोपादानपूर्वकं सुखदुःखतारतम्यमनित्यं संसाररूपं श्रुतिस्मृतिन्यायप्रसिद्धम्। तथा च श्रुतिः 'नह वै शरीरस्य प्रियाप्रिययोरपहतिरस्तीति यथावर्णितं संसाररूपमनुवदति। अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत' इति प्रियाप्रियस्पर्शनप्रतिषेधात् चोदनालक्षणधर्मकार्यत्वं अशरीरत्वस्य मोक्षाख्यस्य प्रतिषिध्यत इति गम्यते।' 'अत एवानुष्ठेयकर्मफलविलक्षणं मोक्षाख्यमशरीरत्वं नित्यमिति सिद्धम्। तत्र किंचित्परिणामिनित्यम्, यस्मिन्विक्रियमाणेऽपि तदेवेदमिति बुद्धिर्न विहन्यते यथा पृथिव्यादिजगन्नित्यत्ववादिनां यथा च साङ्ख्यानां गुणाः इदं तु पारमार्थिकं कूटस्थनित्यं नित्यतृप्तं निरवयवं परज्योतिःस्वभावम्' 'अतस्तद्ब्रह्म यस्येयं जिज्ञासा प्रस्तुता तद्यदि कर्तव्यशेषत्वेनोपदिश्येत, तेन च साध्यश्चेन्मोक्षोऽभ्युपगम्येत अनित्य एव स्यात्।' 'नित्यश्च मोक्षः सर्वैर्मोक्षवादिभिरभ्युपगम्यते। अपि च 'ब्रह्म वेद ब्रह्मैव भवति' इत्याद्याः श्रुतयः ब्रह्मविद्यानन्तरं मोक्षं दर्शयन्त्यः मध्ये कार्यान्तरं वारयन्ति। ब्रह्मदर्शनसर्वात्मभावयोर्मध्ये कर्तव्यान्तरवारणाय 'तद्धैतत्पश्यन्' इत्युदाहार्यम्। 'त्वं हि नः पिता' इत्याद्याः श्रुतयः मोक्षप्रतिबन्धनिवृत्तिमात्रमेव आत्मज्ञानस्य फलं दर्शयन्ति। अतो न पुरुषव्यापारतन्त्रा ब्रह्मविद्या इति चेदत्रोच्यते॥

'अयं तु परमो धर्मः यद्योगेनात्मदर्शनम्।' (याज्ञ.स्मृ. ) इति, 'क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता' इति च याज्ञवल्क्येनोक्तम्। आत्मदर्शनं च योगेन समाधिरूपमेव समाधिश्च परैरप्यङ्गीकृतः (स.वे.सि.सा.सं)। एवं च परममतात्मज्ञानस्य धर्मभिन्नत्वं कथम्? अशरीरत्वं मोक्षो वा आत्मस्वरूपं मोक्षो वा अविद्यानिवृत्तिः चरमवृत्तिर्वा मोक्षः?। अत्र एकोऽपि पक्षः न घटते। शरीरहेतुत्वं कर्मणा 'प्राणाधिपः सञ्चरति स्वकर्मभिः' 'तद्य इह रमणीयचरणाः' इत्यादिश्रुतिभिरेव सिद्ध्यतीत्यत्रान्यत्र च बहुत्र निरूपितम्। बीजाङ्कुरन्यायेन कर्मणामनादित्वं 'न कर्माविभागादिति चेन्नानादित्वात्' इति सूत्रकारैरेव वक्ष्यते। 'एवमस्मिन्शरीरे प्राणो युक्तः, अस्माच्छरीरात्समुत्थाय' इति वाक्यद्वयपर्यालोचनायां शरीरजीवयोगः तद्विरहश्च जीवस्य श्रुतौ स्पष्टं प्रतीयते। एवं चोत्तरवाक्यानुसारेण 'नह वै सशरीरस्य' इत्यत्रापि सशरीरत्वं कर्ममूलकशरीरयोगित्वम्। अशरीरत्वं कर्मक्षयमूलकशरीरवियोगित्वं इत्येव श्रुतितात्पर्यं निर्मत्सराणां स्फुटम्। शरीरविश्लेषानन्तरं परंज्योतिरुपसम्पत्तेः पश्चात् 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः' इत्यादिश्रौतलिङ्गेन 'स एकधा भवति त्रिधा भवति' इत्यादिश्रुत्या च मुक्तौ स्वेच्छामूलकशरीरसम्बन्धोऽप्यङ्गीकरणीयः इति 'अशरीरं वाव सन्तम्'–इत्यत्र सुखदुःखहेतुकर्मक्षयेण कर्ममूलकशरीरक्षय एव विवक्षितः। 'स उत्तमः पुरुषः' इत्यत्र उत्तमस्य सर्वपापदाहकत्वोक्तेः 'य आत्माऽपहतपाप्मा सोऽन्वेष्टव्यः' इति प्रजापतिविद्योपक्रमे चोदनालक्षणधर्मस्योक्तया 'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय' इत्यत्र प्रागुक्तचोदनालक्षणविद्यानिष्ठस्य शरीरात्समुत्थानं उक्ताशरीरत्वमेवेति प्रतीत्या अशरीरत्वरूपमोक्षस्य चोदनालक्षणधर्मकार्यत्वं प्रतिषिध्यत इति कथं घटते। 'शरीरात्समुत्थाय' इत्यस्य शरीरविवेकज्ञानपरत्वोक्तिः अभिनिवेशमूलैव। सद्विद्यायामेवोत्क्रान्तिनिरूपणात् उपासनाफलस्य तरतमभावापन्नत्वं नैवापादयितुं शक्यमिति प्रागत्रान्यत्र चोक्तम्। कूटस्थनित्यं परिणामिनित्यमिति विभागः योगभाष्य एव प्रसिद्धः। तद्भाष्यकाराश्च पारमार्थिकनित्यविभागं नाङ्गीकुर्वन्ति। गीतायामुभयत्र (६,.१५) अक्षरस्यैव कूटस्थत्वोक्त्या षष्ठे कूटस्थत्वं मुख्यं, पञ्चदशे कूटस्थत्वं तु न मुख्यम् स्वमतविरोधात्

## गूढार्थसंग्रह:

इत्यभिप्रेत्य (ग) भाष्ये अर्थभेदोक्ति: कथं गीतातात्पर्यानुगुणा भवति । कूटस्थविलक्षणत्वस्य जीवभिन्नपरमात्मनि पञ्चदशे प्रतिपादनेन कूटस्थस्य निर्धर्मकत्वमिति परसम्मतार्थ: गीतातात्पर्यविरुद्ध: । 'द्रष्टृदृश्ययोस्संयोगो हेयहेतुः' (यो.सू.२.१७) 'स्वस्वामिशक्त्यो: स्वरूपोपलब्धिहेतुस्संयोग:' (२.२३) इत्यत्र संयोग: स्पष्टमुक्त: । पञ्चशिखेनापि धर्मिणामना‍दिसंयोगात् धर्ममात्राणामप्यनादिस्संयोग: तत्संयोगहेतुविवर्जनात् स्यादयमात्यन्तिको दु:खप्रतीकार: ' (७.८) इत्यत्र संयोग: अङ्गीकृत: ॥

अत्र 'वृत्तिसारूप्यमितरत्र' (१.४) इति सूत्रतत्त्ववैशारद्या–'न पुरुषसंयुक्तं चित्तम् अपितु तत्संनिहितं संनिधिश्च पुरुषस्य न देशत: कालतो वा तत्संयोगात् । किंतु योग्यतालक्षण: अस्ति च पुरुषस्य भोक्तृशक्ति: चित्तस्य भोग्यशक्ति: भोगश्च यद्यपि शब्दाद्याकारा वृत्ति: चित्तस्य धर्म: । तथाऽपि चित्तचैत्ययोरभेदसमारोपात् वृत्तिसारूप्यात्पुरुषस्य युक्तमित्युक्तम् । अयमर्थ: सूत्रस्वारस्यविरुद्ध: । विज्ञानभिक्षुस्तु वार्तिके 'सामान्यगुणातिरिक्तधर्मोत्पत्तेरेव व्यवहारशब्दानुरोधेन परिणामशब्दार्थत्वावधारणात् । घटादिसंयोगाद्यैराकाशस्य द्वित्वादिभिश्च पुरुषस्य परिणामव्यवहाराभावात् पद्मपत्रस्य तोयेन पद्मपत्रस्यापरिणामासंयोगादिश्रवणाच्च ।' इत्यादिना दृग्दृश्यसंयोगमङ्गीचकार । एतेन कूटस्थत्व ननिर्धर्मकत्वमिति युक्तं भवति । स्वरूपसङ्कोचविकासात्मकपरिणाम एव नित्यत्वविरोधी, सच आत्मनि नाङ्गीक्रियते । धर्मधर्मिणोर्भेदेन धर्मस्यागमापायित्वेऽपि धर्मिणोनाशाभावात् । बौद्धोक्तसन्तानानुपपत्तिस्तु न्यायवार्तिकतात्पर्यटीकायामेव वाचस्पतिनैव परिहृतेति जिज्ञासाऽधिकरण एव (        ) उक्तम् । तेन वाचस्पतिना अत्र भामत्यां परिणामिनित्यस्यापारमार्थिकत्वोक्तिर्निरवकाशा । कस्य पारमार्थिकनित्यत्वं परेषां सम्मतमिति विवेचनीयम् । सत्यज्ञानानन्तस्य ब्रह्मण इतिचेत्–तत्र सत्यत्वज्ञानत्वानन्तत्वानन्दत्वब्रह्मवादीनां निर्विशेषे कल्पितत्वेन तद्विशिष्टस्य मिथ्यात्वेन तस्य पारमार्थिकनित्यत्वं न संभवति । सत्यवादीनामभावरूपत्वेऽपि यथा नोपपत्ति: तथा प्रागेव निरूपितम् । पारमार्थिकनित्यत्वं कालत्रयाबाध्यत्वरूपं तदपि शुद्धचिति धर्मानङ्गीकारान्नघटते । ज्ञानत्वोपलक्षितस्य अविद्योपलक्षितस्य च नविशेष: ज्ञानत्वस्याविद्यासत्तादशायामेव सद्भावात् । अज्ञाननाशमात्राविरोधित्वोपहितात्मन: सुखरूपस्य परमपुरुषार्थस्य अस्थिरत्वं ब्रह्मानन्दसरस्वतीभिरभ्युपगतम् एतेन अविद्योपलक्षितात्मन: अविद्योपलक्षितस्य ज्ञानत्वोपलक्षितस्यचाविशेषेण ज्ञानं कूटस्थनित्यमितिवत् अविद्यावत् कूटस्थनित्यमिति व्यवहाराभावे बीजाभावश्च । एतेन आत्मन: मात्रत्वं वृत्तेर्मोक्षत्वं च नसंभवतीति सिद्धम् ॥

उपदेशसाहस्र्या–'धात्वर्थाविक्रियाया उपलब्ध्युपचारात् नित्योपलब्धिमात्र एवाहि उपलब्धा नतु तार्किकसमय इवान्या उपलब्धिः अन्य उपलब्धा च' इति । अवगति: कूटस्था स्वयंसिद्धा ज्योति: स्वरूपेति च कथं तस्यावगते फलत्वं ? तत्त्वोपचारात् । कूटस्था नित्यापि सती प्रत्यक्षादिप्रत्ययान्ते लक्ष्यते तादर्थ्यात् प्रत्यक्षादिप्रत्ययस्य अनित्यत्वे अनित्येव भवति । तेन प्रमाणानां फलमित्युपचर्यते इति । नीलपीतादिप्रत्ययभेदा: तामेवावगतिं व्यभिचरन्त: असत्यरूपा भवितुमर्हन्ति । तस्याश्चावगतेरन्य: अवगन्ता नास्ति नस्वेन रूपेण स्वयमुपादातुं हातुंवा शक्यते इति । अवगतिर्हि प्रमा इतिच प्रमाया: कूटस्थनित्यत्वोपपादनप्रक्रिया 'अथाविकृतिरेवासौ प्रमातेति नयुज्यते' इति निर्गुणात्मवादे बौद्धदिङ्नागोक्तदूषणं नातिवर्तते 'ब्रह्मवेद ब्रह्मैव भवति' इत्यत्र परसमतार्थो नघटत इति प्रागेव निरूपितम् । 'आनन्दं ब्रह्मणो विद्वान्' इत्यत्र सगुणज्ञानमेव विवक्षितम् । 'अभयंवै जनकप्राप्तोऽसि' इत्यत्र प्राप्तिरेवोक्ता, नतु जीवब्रह्माभेद: । 'तस्मात्तत्सर्वमभवत्' इत्यत्र सर्वभावज्ञानमेव विवक्षितम्, नतु सर्वभाव: तस्य नित्यसिद्धत्वात् । सर्वभावप्रकारश्च प्रागेवोक्त: । 'तत्र को मोह:' इति श्रुतौ एकत्वं त्रय्यन्तसारामृते सम्यङ्निरूपितम् ॥

## गूढार्थसङ्ग्रहः

'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि' (प्र.६.८) 'श्रुतं ह्येव मे भगवद्दृशेभ्यः तरति शोकमात्मविदिति सोऽहं भगवश्शोचामि तं मा भगवान् शोकस्य परं पारं तारयतु' (छा.७.१.३) तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः' (छा.७.२६.२) इत्यत्र 'तारयति' 'तारयतु' 'तरति' इति तॄधातुरेव प्रयुक्तः। तरति अतिक्रामति। 'तारयतु आत्मज्ञानोडुपेन अविद्यामहोदधेर्विद्याप्लवेन परमपुनरावृत्तिलक्षणं मोक्षाख्यं महोदधेरिव पारं तारयसि' इति (श) भाष्ये विवरणकरणेन प्रकृतिमण्डलतारणमेव विवक्षितम्। तेन गतिद्वारकफलमेवात्राभिप्रेतमिति प्रतीयते। अत एव 'ओमित्येवात्मानं ध्यायथ स्वस्तिवः पाराय तमसः परस्तात्' इति मुण्डकश्रुतिस्सङ्गच्छते। अर्चिरादिगतिद्वारकफलं धर्मफलमेवेति याज्ञवल्क्येन निर्धारितम्। बृहदारण्यकभाष्यावतरणे देवयानमार्गेण गतिद्वारकफलस्य वेदपूर्वभागार्थत्वप्रतिपादनं याज्ञवल्क्यस्मृतिविरुद्धमिति ग्रन्थान्तसारामृते निरूपितम्। तेनापि अत्र देवयानमार्गेण गतिसाध्यफलं आत्मज्ञानफलं न भवतीत्युक्तिर्निरवकाशा॥

'न कर्मब्रह्मविद्याफलयोर्वैलक्षण्यात्' इत्यत्र पञ्चपादिका—'अथापि 'अथ यदतः परो दिवो ज्योतिः', इति प्रत्यगतिरिक्तब्रह्माभ्युपगमे देवताविग्रहवदन्यायसम्भवात् मोक्षकामस्य ब्रह्मोपासनं विधीयते। तथा च श्रुतिः 'विद्यया तदारोहन्ति' इति। नच साध्यत्वेऽप्यन्तवत्त्वम्; शब्दगम्यत्वादनावृत्तेः 'नच पुनरावर्तते' इति। नह्ययं तर्कगम्यः येन तर्केणास्य तत्त्वं व्यवस्थाप्येत, शब्दगम्यस्तु शब्दादेव तत्त्वव्यवस्थेति मन्वानस्योत्तरमाह भगवान् भाष्यकारः' इति विवरणम्। अत्र 'इदानीं जीवब्रह्मणोर्भेदमङ्गीकृत्य ब्रह्मणश्च प्रदेशान्तरवर्तित्वं सर्वगतत्वं चाभ्युपगम्य 'अहं ब्रह्मास्मि' इत्यारोपितरूपेण विधीयमानादुपासनात् यागादिव स्वर्गो मोक्षः फलिष्यतीति ये मन्यन्ते तन्निराकरणायोत्तरं भाष्यमित्याह—अथापीति' इति। 'नचाप्यत्वेनापि कार्यापेक्षा स्वात्मस्वरूपत्वे सत्यनाप्यत्वात्। स्वरूपव्यतिरिक्तत्वेऽपि ब्रह्मणोऽनाप्यत्वं तु सर्वगतत्वेन नित्याप्तस्वरूपत्वात्सर्वेण। ब्रह्मण आकाशस्येव' इत्यादि (श) भाष्यस्य पञ्चपादिका—'अथानित्यत्वपरिहाराय स्वितस्यैवाप्यत्वमुच्यते तदपि न आत्मस्वरूपस्य क्रियापूर्वकाप्यत्वानुपपत्तेः। व्यतिरेकेऽपि सर्वगतत्वेन नित्यप्राप्तत्वादाकाशेनेव नक्रियाऽपेक्षा प्राप्तिः। अथ विकारवर्तिनोऽपि 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इति श्रूयमाणस्य प्राप्तये क्रियाऽपेक्षेति, न; विकारदेशेऽपि ब्रह्मणो विकारसंस्पर्शाभावादविशेषात्। अथ विकारवत्येव ब्रह्म न विकारदेशेऽस्ति, तेन तत्प्राप्तये क्रियाऽपेक्षेति सा तर्हि तत्प्राप्तिरात्मनस्तादात्म्यापत्तिः? उत स्वेनैव रूपेण तत्रावस्थानम्? यदि पूर्वकल्पः तदा स्वरूपनाशः। अथ द्वितीयः, संयोगस्य विप्रयोगावसानत्वात् पुनरावृत्तिः। नचापुनरावृत्तिश्रुतिर्वर्तमानापदेशिनी तथा भावे प्रमान्तरमपेक्षमाणा स्वयं प्रमाणीभवति' इति॥

अत्र विवरणम्—'तर्हि तृतीयं फलं क्रियासाध्यमिष्यतामिति शङ्कते अथानित्यत्वपरिहारायेति। तत्रेदं वक्तव्यम् किं ब्रह्म प्रत्यगात्मभूतं व्यतिरिक्तं वा? व्यतिरेकेऽपि सर्वगतं वा प्रदेशान्तरवर्ति वा ब्रह्मेति। तादात्म्ये दूषणमाह—तदपि नेति। व्यतिरेके सर्वगतत्वे संयोगव्यतिरिक्तप्राप्त्यभावात्संयोगो नित्यसिद्ध इत्याह—व्यतिरेकेऽपीति। प्रदेशवर्तित्वं शङ्कते अथ विकारावर्तिन इति। तत्र वक्तव्यम् किं विकारसंस्पर्शपरिहाराय प्रदेशवर्तित्वमुच्यते किं वा शास्त्रसामर्थ्यादिति। शास्त्रं पुनस्सर्वगतत्वमेव दर्शयति। नच सर्वगतत्वेऽपि विकारसंस्पर्श इत्याह न विकारदेशेऽपीति। अथ सर्वगतत्वस्यौपचारिकत्वात्प्रदेशविशेषवर्त्येव ब्रह्मेति शङ्कते अथ विकारावर्त्येवेति। न। मध्यमपरिमाणस्य वस्तुनः पृथिव्यादिवत्सावयवत्वात् दूषणविभागज्ञानाय विकल्पयति सा तर्हि तत्प्राप्तिरिति। प्रथमे कल्पे दूषणमाह तदा स्वरूपनाश इति। कथं तत्र तावज्जीवस्य ब्रह्मभावः? ब्रह्मैव वा जीवो वा न सम्भवति असाध्यत्वात्। नापि जीवब्रह्मभ्यामारभ्यमाणं द्रव्यान्तरम्। विना-

## गूढार्थसंग्रहः

शित्वप्रसङ्गात्सर्वगतस्य ब्रह्मणोऽवयवत्वायोगात् । नापि जीवब्रह्मणोस्तादात्म्य नाम कश्चि सबन्धः । भिन्नद्रव्ययोस्संयोगा-तिरिक्तसबन्धाभावात् । नापि जीवेऽणुपरिमाणेऽवस्थिते ; ब्रह्मस्वरूपापत्तिविरोधात् । अनवस्थिते च परिमाणे द्रव्यस्वरूप नाशइति । द्वितीयेऽपि कल्पे दूषणमाह संयोगस्येति । ननु शास्त्रसामर्थ्यादपुनरावृत्तौ कथ तर्केण पुनरावृत्तिस्साध्यते । तत्राह नच पुनरावृत्तिश्रुतिरिति । यथाश्रुतार्थेऽप्राप्तप्रतिषेधात् । नावर्तिष्यत इति कल्पनायाः कृतकत्वानुमानविरोधात् तस्यैव च स्वरूपेणावस्थाने 'स स्वराड्भवतीति श्रुतेरनेकेश्वरप्रसङ्गात् । तस्मान्न देशान्तरवर्तिब्रह्मप्राप्तिरिति ॥

ननु 'तयोर्ध्वमायन्नमृतत्वमेति' इति श्रूयते । तर्हि प्रतीकालम्बनानामपि मूर्द्धन्यनाड्यैवामानवपुरुषाद्गच्छताममृतत्व स्यात् अविशेषश्रवणात् । ननु 'स एनान्ब्रह्मगमयती'ति अर्चिरादिना गच्छता ब्रह्मप्राप्तिः श्रूयते । न । कार्यब्रह्मविषयत्वात् । ननु ब्रह्मशब्दार्थस्य मुख्यत्वात्परमेव ब्रह्म गम्यते । न । यदि तावद्वृद्धव्यवहारे प्रयोगान्मुख्यताऽभिधीयते । तर्हि कार्यब्रह्मण्यपि रूढ एवायशब्दो भवति । अथावयवार्थानुगमेनार्थमुख्यताऽभिधीयते । नैवम् । एकस्य शब्दस्य युगपद्रूढियोगवृत्तिद्वयोपादानायोगात्प्रयोगमुख्यत्वे कार्यब्रह्मैव गम्यते । किंच 'सएनान् ब्रह्मलोकान् गमयती'ति ब्रह्मलोकशब्दाद्बहुवचनान्तेषु 'परापरवतो वसन्ती'त्यधिकरणाधिकर्तव्यताश्रवणात् । 'तास्मिन्वसन्ति शाश्वतीः समा' इति कालपरिच्छेदश्रवणात् 'तृतीयस्यामितो दिवि' इति संख्याद्युशब्दयो. श्रवणात् तथैरमदीयस्य सरस. अश्वत्थस्य सोमसवनस्यापराजितायाश्च पुरो हिरण्मयस्य च वेश्मनो हिरण्मयस्य चार्णवस्य पर्यङ्कादेश्च भोग्यवस्तुभेदस्य श्रवणात् 'प्रजापतेस्सभा वेश्म प्रपद्ये' इति प्रजापतिसभावेश्मना श्रवणाच्च कार्यब्रह्मैवार्चिरादिना गम्यत इति प्रतीयते । नच ब्रह्मैव लोक इति समासः ब्रह्मलोकशब्दस्य सत्यलोके रूढत्वात् । यौगिकत्वेऽपि तत्र प्रथमतरबुद्धिहेतुत्वाद्ब्रह्मणि लोकशब्दविरोधात् । न चैतेषा कार्यब्रह्मलिङ्गानामपबाधया ब्रह्मशब्दस्यैकस्य प्रयोगमुख्यत्वातिरिक्तमर्थमुख्यत्वमप्युपादातु युक्तम् । प्रजापतिशब्दस्य कार्यब्रह्मणि रूढत्वाल्लोकशब्दस्य च भोगभूमिविशेषणवाचित्वात् ॥

किंच पञ्चाग्निविदामपि परब्रह्मप्राप्तिरस्मिन्पक्षे स्यात् । नच 'सएनान्ब्रह्मगमयती' त्येतच्छब्द पञ्चाग्निविदतिरिक्तान् परामृशतीति युक्तम् । पञ्चाग्निविदामेव प्राधान्येन प्रकृतत्वात्तेषामनिर्दिष्टफलत्वप्रसङ्गात् । किंच गायत्रीशाण्डिल्यषोडशकलोपकोसलवैश्वानरभूमदहरपर्यङ्कविद्यानामेकरूपैव ब्रह्मप्राप्तिः फलम् आहोस्विदुपचयापचयरूपमिति वक्तव्यम् । एकरूपफलत्वे गुणोपचयापचयादुपासनोपचयापचयौ व्यर्थौ स्याताम् । नह्यग्निहोत्राद्यनुष्ठानोपचयात् फलोपचयो न जायते । अथ फलोपचयापचयावपीष्येयाताम् । तर्हि न विकारासस्पर्शब्रह्मप्राप्ति तत्र तदभावात् । किंच वैश्वानरोपासनाफल त्रैलोक्यापत्तिरिष्यते वा नवेति वक्तव्यम् । इष्यते चेद्विकारासस्पृष्टे ब्रह्मणि कथ त्रैलोक्यात्मताफलप्राप्तिः । नचेदिष्यते 'त यथायथोपासत' इति श्रुतिविरोधस्स्यात् । किंच पित्रादिसङ्कल्पैर्विकारासस्पृष्टे ब्रह्मण्युपभोगस्स्यान वेति वक्तव्यम् । नचेत्पित्रादिसङ्कल्पश्रुतिविरोधः । स्याच्चेद्विकारावर्ति ब्रह्म पित्रादियुक्त स्यात् । किंच विकारावर्ति ब्रह्मप्राप्तोऽपि ब्रह्मैवेति 'मनसैतान् कामा पश्यन् रमते' 'तेन पितृलोकेन सपन्नो महीयत' इति ब्रह्मणएव साधनैर्भोगो दर्शित.स्यात् । ततश्चाप्तकामताविरोध' स्वार्थप्रयुक्ता च सृष्टिः स्यात् ॥

किंच विकारावर्तिब्रह्मप्राप्तस्य लिङ्गशरीरमस्ति वा नवेति वक्त यम् । अस्तिचेत्कलाप्रलयश्रुतिर्बाध्येत नचेल्लिङ्गशरिर 'मनसैतान्कामान्' इतिश्रुतिर्बाध्येत । किंच तत्र लिङ्गशरीरविलये निमित्त वक्तव्यम् । विद्यैवचेदु त्क्रान्तिकाले स्यात् तदारम्भककर्मक्षयात् अमानवकरस्पर्शश्चेत् विद्युत्स्थाने स्यात् । नचापरिष्टात्कलाविलयनानिमित्त श्रूयते । किंच औपाधिकजीवत्वे न जीवस्य विकारावर्तिब्रह्मगमन सभवति । निरवयवात्च्छेदस्य घटाकाशस्यैवोद्धृत्य नयनायोगात् उद्धरणे च

## गूढार्थसंग्रहः

ब्रह्मशून्योऽयं प्रदेशस्स्यात् उपरिष्टाच ब्रह्मोपचयं प्राप्नुयात् । तस्मादुपाधिगमनेनादात्मनि गमनविभ्रमः । ननूपाधेरपि गम न सम्भवति तदुपादानस्य ब्रह्मणश्चलनशून्यत्वात् । नहि मृदि निश्चलायां घटस्य गमनमस्तीति । एवं तर्हि स्वप्नगमनः मायाविजृम्भितो गमनादिप्रतिभासः । ननु न विश्वादिसङ्कल्पैर्ब्रह्मणि भोगोऽभिधीयते किंतु यायास्तत्र भोगः तस्य नित्य नन्दप्राप्तावन्तर्भावादैश्वर्यभेदः कथ्यत इति न एकस्य ब्रह्मशब्दस्य यौगिकार्थभङ्गभयाद्रहीना फलश्रुतीनामुपचारकल्पनायं गाच्छास्त्रान्त्यपदवैफल्यप्रसङ्गाच । तस्मात्प्रदेशान्तरवर्तिब्रह्मप्राप्तये क्रियाविधानमित्यनुपपन्नम् ॥

अत्र पञ्चपादिकाया–ब्रह्मसिद्धौ मण्डनोक्तरीत्यैव पूर्वपक्षः । एतच भावप्रकाशे३.संपु.१०६.पु.पर्यालोचितम् । 'आनन्दाध्येव खल्विमानि भूतानि जायन्ते' इत्यादिश्रुतौ 'ब्रह्मविदाप्नोति परम्' इत्युपक्रमे याप्राप्तिरभिहिता सा 'अस्माल्लोकात्प्रेत्य–एतमानन्दमयमात्मानमुपसङ्क्रम्य इमाल्लोकान्कामान्नी कामरूप्यनुसञ्चरन् एतत्सामगायन्नास्ते' इत्युपसंहारे विशदं कृता । अयमर्थः 'मान्त्रवर्णिकमेव च गीयते' इतिसूत्रे 'गीयत' इत्यनेन सूत्रकृता सूचयिष्यते । एतेन 'योवेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान्कामान्सह' इत्यस्य परसंमतार्थोऽपि सूत्रकृत्सम्मत इति सिद्धम् । आनन्दानन्दमयशब्दयोरर्थभेदः परमत इव न विवक्षित इति 'आनन्दं ब्रह्मणो विद्वान् नबिभेति' इत्यभ्यस्तवाक्येनैव सिद्ध्यति अयमर्थः आनन्दमयाधिकरणे प्रथमसूत्रद्वयेन सूत्रकृता बोधितः । 'तस्य तावदेव चिरं यावन्नविमोक्ष्ये, अथ संपत्स्ये' इत्युक्तसंपत्तिः 'अस्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य' इति श्रुतौ सद्विद्योक्तोत्क्रान्तेः गतेश्चोत्तरमेवेति 'संपद्याविर्भावस्स्वेन शब्दात्' इति सूत्रेणैव निर्धारितम् । 'अथ यदतःपरो दिवो ज्योतिर्दीप्यते' इति श्रुतौ लोकविशेषवृत्तित्व ज्योतिषः प्रतिपाद्यते शरीरात्समुत्थानेन प्रकृतिमण्डलात् बहिः स्थानविशेष एव ज्योतिषः उपसम्पत्तिः 'अस्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य' इत्यत्र विवक्षिता । 'मुक्तोपसृप्यव्यपदेशाच' इति सूत्रमप्येतत्तात्पर्यकम् । 'ओमित्येवात्मानं ध्यायथ स्वस्तिवःपाराय तमसःपरस्तात्' इत्यत्र देशविशेषस्य प्रतीत्या 'नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इत्यत्र प्राप्तिः तद्देशविशेषएवेति श्रुत्यभिप्रायः प्रतीयते ॥

उपासनस्य ज्ञानत्वम् उपासनसाध्यत्व च मुक्तेःप्रागेवोपपादितम् । स्वस्वरूपाभिव्यक्तेः अपहतपाप्मत्वादीना पारमार्थिकजीवरूपत्ववादिवृत्तिकारमते ब्रह्मप्राप्तेश्चैकतया एतत्पक्षएव 'विज्ञानान्तर आनन्दान्तरंवाऽभिव्यज्यत' इति (श्रा) उपनिषद्भाष्ये उक्तार्थस्याङ्गीकारेण विद्यमानरूपस्यैवाभिव्यक्तिः नापूर्वाकारस्येति साध्यत्वेनानित्यत्वप्रसङ्गस्यापि नावसरः । परमते चरमवृत्तेरविद्यानिवृत्तिरूपत्वेन मुक्तिरूपत्वाङ्गीकारात् मुक्तेरस्थिरत्वमवर्जनीयमित्यादिक जिज्ञासाऽधिकरणएव निरूपितम् । 'अनावृत्तिश्शब्दात्' इति सूत्रकृता श्रुत्यैवापुनरावृत्त्या नित्यत्व साधितम् । अत्र 'शब्द' शब्दः श्रुतिपरः । धूमादिमार्गे 'आकाशाचन्द्रमसम्' 'तस्मिन्यावत्सम्पातमुषित्वा अथैतमेवाध्वान पुनर्निवर्तन्ते' (छा.५.१०.५) इति पुनरावृत्तिश्श्रुता । 'चन्द्रमसो विद्युत तत्पुरुषोऽमानवः सएनान्ब्रह्म गमयति' (४.१५.६) इत्यनन्तर 'इमं मानवमावर्तं नावर्तन्ते' इति श्रूयते । धूमादिमार्गे चन्द्रप्राप्त्यनन्तर यः पुनरावृत्तिकालःस अर्चिरादिमार्गे चन्द्रप्राप्त्यनन्तर ब्रह्मप्राप्तिकालश्चैकः । एव च चन्द्रप्राप्त्यनन्तर प्रसक्ता पुनरावृत्तिः अर्चिरादिमार्गनिष्ठाना ब्रह्मप्राप्तिकथनेन प्रतिषिद्ध इति नाप्राप्तप्रतिषेधः । सूचितश्चायमर्थः 'तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते' इति गीतायाम् । इममर्थमभिप्रेत्यैव एतत्सूत्र(श्रा) भाष्ये 'न चन्द्रलोकादिव भुक्तभोगा आवर्तन्ते' इति परैरुक्तम् । एतेन विवरणोक्ताप्राप्तप्रतिषेधस्य नावसरः । यत्कृतक तदनित्यमिति व्याप्तिविरोधः परमतेऽप्यपरिहार्यः । 'तद्यथेह कर्मचितः' इतिश्रुतिः उपासनासाध्यस्य नानित्यत्व प्रतिपादयितुमलम् । 'इम मानवमावर्त नावर्तन्ते, तेषामिह नपुनरावृत्तिः' इति श्रुतिमवलम्ब्य

## गूढार्थसंग्रहः

(घ) उपनिषद्भाष्ये दूषणमपि नघटते। इत्यादिकमत्रैव पूर्वं भावप्रकाशे ३.सपु. त्रय्यन्तसारामृते च निरूपितम् ॥

'अप्रतीकालम्बनान्नयति' इति सूत्रकृता प्रतीकालम्बनानां मूर्धन्यनाड्या गमनं नैव वर्तत इति सूचितम्। 'स एनान् ब्रह्मगमयति' इत्यत्र ब्रह्मशब्दस्य मुख्यत्वेन परब्रह्मैवार्थः। 'प्रजापतेस्सभां वेश्मप्रपद्ये' इत्यत्र प्रजापतिशब्दः यौगिकः अब्रह्मोत्वेन परमात्मपरः। पञ्चाग्निविदां परब्रह्मप्राप्तिर्वर्तत एव तत्क्रतुन्यायेन पञ्चाग्निविद्याऽपि परब्रह्मविषयिण्येव लिङ्गशरीरसंबन्धवियोगः गतिमध्यएव तदात्वएव वासनाक्षयः।' इत्यादिकं 'विद्याः पञ्चाग्नि' (त.मु.जीवसरः) इति श्लोकविवरण'भावप्रकाशे निरूपितम्। 'कार्यं बादरिः' इत्यादौ बादरिजैमिनिबादरायण नाम्ना क्रमेण प्रयोगस्थले एकमेवाधिकरणं तत्र बादरायणसिद्धान्त एव सिद्धान्तः न बादरिसिद्धान्तः। 'स एनान् ब्रह्मगमयति' इत्यत्र 'तद्य इत्थं विदुः येचेमेऽरण्ये श्रद्धातप इत्युपासते' इत्याद्युक्ताधिकारिण एव विवक्षितत्वेन कार्यमुपासीनान्नयति' इत्यादिक्रमेणैव सूत्रार्थो विवक्षित इत्यादिकमपि तत्रैव निरूपितम्। अतश्च ब्रह्मविदः देवयानगतिसाध्यफलस्यैव श्रुतिसूत्रविवक्षितत्वेनोक्त दिशा सविशेषमेव परब्रह्म, सविशेषविद्यैव पराविद्या सविशेषस्य जगत्कारणस्यानन्दरूपस्य देशविशेषावच्छेदेन प्राप्तिरेव। ब्रह्मविद्यानिष्ठस्य राजकुमारनयेन फलमिति श्रुतिसूत्रतात्पर्यविषयीभूतार्थः वृत्तिकारसम्मत एव युक्त इति दिक् ॥

## समाप्तं समन्वयाधिकरणम्

# अथ ईक्षत्यधिकरणम्

### श्रीभाष्यम्

## सू—ईक्षतेर्नाशब्दम् [१.१.५]

### गूढार्थसङ्ग्रहः

आद्याधिकरणचतुष्टयेन अधिकारिविषयसंबन्धप्रयोजननिर्धारणेन वेदान्तवाक्यविचाररूपशारीरकमीमांसाशास्त्रस्यारम्भणीयत्वमुक्तम्। अथ वेदान्तवाक्यविचारः क्रियते। अत्र पुरुषसूक्त छान्दोग्य मुण्डकोपनिषत्सु ऋग्वेदस्य प्राथम्यमुक्तम् यजुषः कर्मविधायकत्वेन अङ्गिनिरूपणरूपता ऋक्सामयोस्तु शस्त्रस्तोत्रप्रतिपादकता। तत्र अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं शस्त्रम्। प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं स्तोत्रमिति विवेकः। पूर्वमीमांसायां कर्मणां प्राधान्येऽपि अत्र तेषां ब्रह्मविद्याऽङ्गत्वं ब्रह्मणश्च प्राधान्यम्। पूर्वत्र शब्दातिरिक्तदेवताऽनङ्गीकारेऽपि अत्रार्थवादवाक्यानां प्रामाण्यमङ्गीकृत्य देवताविग्रहाद्यङ्गीकारेण देवतागुणाभिधानरूपत्वमेव स्तोत्रशस्त्रयोः। तत्र 'एकएव देव' इति ऋग्वेदभाष्योपोद्घातादौ व्यक्तम्। अत्रापि ब्रह्मणः सर्वदेवतान्तर्यामित्वेन तन्निष्ठगुणाभिधान एव तयोः पर्यवसानम्। तत्र शस्त्रापेक्षया स्तोत्रस्य सामवेदोक्तस्य गानविशेषसद्भावादुत्कर्षः। अतएव 'वेदानां सामवेदोऽस्मी'ति गीता संगच्छते। अत्र तात्पर्यचन्द्रिकायाम्—(गी.१०.२२) आचार्यपादोक्तश्रुतिद्वयमूलकोत्कर्षोऽप्यनुसन्धेय.। 'ब्रह्मविदाप्नोति' 'सोऽश्नुते' 'आनन्दाद्ध्येव' 'आनन्द प्रयान्ति' इत्युक्तप्राप्तेः. 'अस्माल्लोकात्प्रेत्य एतमानन्दमयमात्मानमुपसङ्क्रम्य इमाल्लोकान्कामान्नी कामरूप्यन-

श्रीभाष्यम्

यतो वा इमानीत्यादिजगत्कारणवादिवाक्यप्रतिपाद्यं सर्वज्ञं सर्वशक्तिसमस्तहेय

श्रुतप्रकाशिका

## ईक्षतेर्नाशब्दम् (१.१.५)

* प्रथमे सूत्र उद्देशःकृतः । द्वितीये लक्षणमुक्तम् । तृतीयचतुर्थाभ्यां लक्ष्यस्य ब्रह्मणः परीक्ष्यत्वसिद्ध्यर्थं लक्षणस्वभावात् सिद्धरूपलक्ष्यस्वभावाद्योग्यते ज्ञातत्वाप्रयोजनत्वशङ्के परिहृते । अथ लक्ष्य वस्तु किं चिदचिद्विलक्षणम् उताविलक्षणमिति परीक्ष्यते । यद्वा पूर्वं कारणत्वमनूद्य तस्य लक्षणत्वमुक्तम् । लक्षणलक्ष्यस्वभावनिबन्धन शङ्काद्वय च परिहृतम् । अथ लक्षणभूतकारणत्वप्रापकवाक्यानि निरूप्यन्ते, यद्वा चतुःसूत्र्या वेदान्तवाक्यानां ब्रह्मणि प्रामाण्यरूपपरीक्ष्यता परिकरस्थापनं कृतम् । अथ प्रमेयविशेषपरीक्षा क्रियत इति पेटिकासङ्गतिः ॥

ननु ईक्षत्यधिकरणमनारम्भणीय समन्वयाधिकरणे पुरुषार्थभूतस्यैव ब्रह्मणः प्रतिपाद्यत्वनिश्चयेन हेयास्पदस्य प्रधानस्य प्रसङ्गाभावादिति । नैवम् । पुरुषार्थभूतस्य ब्रह्मण. प्रतिपाद्यत्व न सभवति अपुरुषार्थभूतस्य प्रधानादेः प्रतिपादनादिति समन्वयाधिकरणोक्तार्थस्याक्षेपेणोत्थानादिति । इयमवान्तरसङ्गतिः । इत्येतदभिप्रायेण पेटिकाभेदत सङ्गत्यवान्तरसङ्गतीराह—यतो वा इमानीत्यादि । उद्दिष्टस्य ब्रह्मणो लक्षणमुक्त लक्षितस्य परीक्षणं वर्तिष्यत इत्यभिप्रायेण लक्षण वाक्यमुपात्तम् । कारणत्वानुवादेन तस्य लक्षणत्वविधानात् । कारणस्य चिदचिद्वैलक्षण्यनिर्णयस्य कारणत्वप्रापकवाक्यनिरूपणसापेक्षत्वादास्मिन्नधिकरणे कारणवाक्यानि निरूप्यन्त इति च ज्ञापनार्थं लक्षणवाक्योपादानम् । आदिशब्देन कारणत्व-

### गूढार्थसंग्रह.

सञ्चरन् एतत्सामगायन्नास्ते' इति श्रुतौ विवरणतात्पर्येण 'मान्त्रवार्णिकमेव च गीयते' मति सूत्रकृता वक्ष्यते । एव वदता सूत्रकृता सामवेदप्राशस्त्य सूचितम् । एव कारणवाक्यानां गतिसाध्यमुक्तिवाक्यैकरस्यमपि । एतदेवाभिप्रेत्य सामवेदछान्दोग्यवाक्यविचारः शास्त्रोपक्रमोपसंहारयो. क्रियते । तत्र 'ईक्षतेर्नाशब्दम्' इत्यत्र सद्विद्यावाक्यविचारे मूलतु प्राधान्यमेव । तच्च प्रसिद्धार्थकानुवादरूपताबोधकशब्दाघटितत्वम् । उपसहारे 'स खल्वेव वर्तयन्यावदायुषम्' इत्यादौ गृहस्थस्य ब्रह्मप्राप्त्यपुनरावृत्त्यभिधानन तस्य पराविद्यायामधिकारः तदङ्गता पूर्वकाण्डोक्तकर्मणा सभवतीति बोधनम् । पित्रा गृहस्थेन पुत्रप्रत्युपदेशेन सन्यासिन एवाधिकार इत्यर्थ श्रुतिविरुद्ध इत्यशस्यावेदनम् । अत्र कार्यकारणभावोपक्रमेण अभ्यासेनोपक्रमे तस्यैवाभेदोपपादकत्वाभिधानेन 'तत्त्वमसि' इति नवकृत्वः अभ्यस्तवाक्येषु उपादानोपादेयभावेनैवाभेदः विवक्षित इति बोधनेन कारणवाक्यानामेव प्राधान्य नतु परसमतमहावाक्यानामिति निर्णयादिकचोह्यम् ॥

## सू—ईक्षतेर्नाशब्दम् .१.१.५.

यतो वा इत्यादि । आदिपदेन 'सदेव' इत्यादिवाक्यपरिग्रहः । यच्छब्दस्य 'सदेव' इत्याद्युक्तकारणबोधकत्वेन औपनिषदत्व कारणस्य तृतीये उपपादितम् । 'औत्पत्तिकस्तुशब्दस्यार्थेन संबन्धः—अर्थेऽनुपलब्धे तत्प्रमाण बादरायण

## श्रीभाष्यम्

प्रत्यनीककल्याणगुणैकतानं ब्रह्म जिज्ञास्यमित्युक्तम्। इदानीं जगत्कारणवादिवाक्यानामानुमानिकप्रधानादिप्रतिपादनानर्हतोच्यते ईक्षतेर्नाशब्दमित्यादिना। इदमाम्नायते छान्दोग्ये 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्। तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' इत्यादि। तत्र सन्देहः किं सच्छब्दवाच्यं जगत्कारणं परोक्तमानुमानिकं प्रधानम्? उतोक्तलक्षणं ब्रह्म—इति ॥

## श्रुतप्रकाशिका

प्रापकवाक्यानि गृह्यन्ते। अतएव ह्यनुवादपुरोवादसाधारण्येन जगत्कारणवादीत्युक्तम्। समन्वयाधिकरणार्थक्षिदहेतुक्षान्तरसङ्गत्युपयोगीनि सर्वज्ञत्वादिविशेषणानि। जिज्ञास्यमित्युक्तमिति। प्रामाणिकतया परीक्ष्यमि युक्तमित्यर्थः। तदनन्तर परीक्षाहि सङ्गतत्यभिप्रायेणाह—इदानीमिति ॥

अनेन चतुस्सूत्र्यानन्तर्यं ब्रह्मणः पुरुषार्थताप्रतिपादनपरसमन्वयाधिकरणानन्तर्यमप्युक्तम्। आनुमानिकप्रधानादीत्यनन्तरोक्तसमन्वयक्षेपेणोत्थानादवान्तरसङ्गतिरिति सूच्यते प्रधानादीत्यादिशब्देन * क्षेत्रज्ञमात्र चिद्विशेषाः, अचिद्विशेषाश्च गृह्यन्ते। ईक्षतेर्नाशब्दमित्यादिनेति। पादशेषेणाध्यायशेषेणेति वार्थः। विषयमुदाहरति इदमिति। प्रतिज्ञादृष्टान्तोपेतं सङ्कल्पप्रतिपादकं सामान्यशब्दवत्कारणवाक्यं विषयः, तत्र सद्विद्यावाक्यमेवास्याधिकरणस्य साक्षाद्विषयः *सद्विद्याद्वारेणेतरकारणवाक्यानां विषयत्वं नतु साक्षादेव, विषयवाक्योपादानसमये वाक्यान्तराणामनुपादानात्। दीपसारयोश्च तेषामनुपात्तत्वात्। प्रतिज्ञाविरोधस्याप्ययोरत्रत्ययोरेव सूत्रितत्वात्*तदनुग्राहकत्वेनोपनिषदन्तरगतिसामान्यस्य अस्यामुपनिषदि विद्यान्तरेषु श्रुतत्वस्यापि सूत्रितत्वात् बुद्ध्यवतरणक्रमेण प्रथम*मुपादानत्वोचिताचेतनत्वशङ्कायाः प्रतिक्षेप्यत्वात् * ब्रह्मात्मादिपदचिह्नितेषु वाक्येषु सामान्यशब्दचिह्नितवाक्यस्य प्रथमनिरूपणीयत्वाच्च। सामान्यद्वाराहि विशेषो बुद्धिमधिरोहति, सामान्यपरिग्रहे प्रतिक्षेपे च विशेषविषयसंशयोऽनवकाशवान् * विशेषेतु प्रतिपन्नेहि सामान्याकाङ्क्षा न स्वरसवाहिनी। सन्दिग्धेहि न्यायप्रवृत्तिः * अतस्संशयसद्भावनमाह—तत्रेति ॥

कारणस्येदंशब्दवाच्यकार्यसालक्षण्यावश्यंभावेक्षितृत्वाभ्यां संशयः। संशयशरीरं दर्शयति। किमिति। सच्छब्दवाच्यमिति धर्मिवाचिपदस्य साधारणतया संशयसह व दर्शितम्। जगत्कारणमिति उपादानत्वात् कार्यसालक्षण्य दुस्त्यजम् निमित्तत्वामुख्येक्षितृत्वचेति संशयहेतुस्थिरीकरणम्। परोक्तमिति। * विप्रतिपत्तिरपि संशयहेतोरनुग्राहिकेति भावः,

## गूढार्थसंग्रहः

स्यानपेक्षत्वात्' इत्यत्र शब्दस्य प्रमाणान्तराप्राप्तार्थबोधकत्व जैमिनिव्याससम्मतम्। तत्र 'सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रतीतिरनुमानात्तस्मादपिचासिद्ध परोक्षमाप्तागमात्सिद्धम्'सा.का.६इति साङ्ख्येन ईश्वरकृष्णेन तत्त्वसृष्टिक्रमएवागमवाक्यतात्पर्यं नतु कारणे इत्युक्तम्। एतत्तात्पर्यसूचनायैव 'ईक्षतेर्नाशब्दम्' इत्यत्र आनुमानशब्द विहाय अशब्दशब्दप्रयोग इत्यभिप्रेत्याह—आनुमानिकेत्यादि ॥

तत्तेजोऽसृजतेत्यादि। आदिपदेन 'तत्तेज ऐक्षत तदपोऽसृजत, ता आप ऐक्षन्त ता अन्नमसृजन्त' इत्यादि वाक्यस्य सङ्ग्रहः। एतद्वाक्योपादानेन जगत्कारणे तत्त्वसृष्टिक्रमे च आगमतात्पर्येण शास्त्रतात्पर्यं वर्तत इति सूचितम्। एतेन साङ्ख्यमतरीत्या तत्त्वसृष्टिक्रमेऽपि न शास्त्रतात्पर्यं, किंतु 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते। शिष्याणां बोधसिद्ध्यर्थं कृतश्चेत्कल्पितःक्रमः' इति (ब्र.सि) परोक्तिर्निरवकाशेत्यप्यावेदितम् ॥

## श्रीभाष्यम्

- किं प्राप्तम् ? प्रधानमिति । कुतः ? 'सदेव सोम्येदमग्र आसीदेकमेव' (छा.६.२ १) इतीदंशब्दवाच्यस्य चेतनभोग्यभूतस्य सत्त्वरजस्तमोमयस्य वियदादिनानारूपविकारावस्थस्य वस्तुनः कारणावस्थां वदति ।

## श्रुतप्रकाशिका

पूर्वपक्षबीजस्मारणपरसौत्रपदद्योतनार्थमानुमानिकमिति पदम् । उक्तलक्षण सर्वज्ञत्वादिलक्षणम् आनुमानिकोक्तलक्षणपदाभ्यां संशयहेतुद्वयसूचनम् । किं जगत्कारणवादिवेदान्तवाक्यानि प्रधानादिप्रतिपादनपराणि उत तद्विलक्षणब्रह्मपराणीति *पाद शेषसाधारणो विचारः । अत्र तु तदर्थं सद्विद्यावाक्यानि किं प्रधानप्रतिपादनपराणि उतोक्तलक्षणब्रह्मपराणीति विचारः ।। तदर्थे किमत्रेक्षण गौणम् उत मुख्यमिति, तदर्थं किमनुमानाकारता, गौणेक्षणसाहचर्यंच विद्यते, नेति । तदर्थं प्रतिज्ञादृष्टान्तौ किं हेत्वाक्षेपकौ नेति तेजःप्रभृति शब्दाः किं तेजःप्रभृतिमात्रवाचिनः ? उत परमात्मपरा इति च तदर्थमात्मशब्दस्तेजःप्रभृतिशब्दानां * अब्रह्मपरत्वस्याविरोधी उत विरोधीति तदर्थमात्मशब्दस्वारस्यभङ्गहेतवोऽनुरोद्धव्याः उत तदनुग्राहक-हेतवइति विचारः, तत्स्वारस्यभङ्गहेतवोऽनुरोद्धव्या इति पूर्वःपक्षः ॥

तदनुग्राहका एवानुरोद्धव्या इति सिद्धान्तः । यदा स्वारस्यभङ्गहेतोरनुरोद्धव्यत्वेनात्मशब्दस्य तेजःप्रभृति शब्दानाम ब्रह्मपरत्वाविरोधितया तेजःप्रभृतिशब्दास्तेजःप्रभृतिवाचिनः, प्रतिज्ञादृष्टान्तौ च यदा हेत्वाक्षेपकौ तदा हेत्वाक्षेपो गौणेक्षण साहचर्यं चास्तीति प्रथमश्रुतेक्षणस्य गौणत्वेन सद्विद्यावाक्यानां प्रधानपरत्वात्तदेकार्थतया सर्वाणि कारणवाक्यानि प्रधान पराणीति पूर्वपक्षे फलफलिभावः । यदा आत्मशब्दस्वारस्योत्तम्भकहेतोरनुरोद्धव्यत्वेन आत्मशब्दस्य तेजःप्रभृतिशब्दानां अब्रह्मपरत्वविरोधित्वेन तेजःप्रभृतिशब्दाः परमात्मपराः प्रतिज्ञादृष्टान्तौ च यदा न हेत्वाक्षेपकौ तदाऽनुमानाकारत्वगौणेक्षणसाहचर्ययोरसिद्धया प्राथमिकेक्षणस्यागौणत्वात् सद्विद्यावाक्यानि परब्रह्मपराणि अतस्तदैकार्थ्यात्सर्वाणि कारणवाक्यानि परब्रह्मपराणीति सिद्धान्ते फलफलिभावः ॥

तत्र पूर्वपक्ष वक्तु*मन्यतराशिरसो युक्तिमत्त्वेन निर्धारणाकाङ्क्षा दर्शयति । किंप्राप्तमिति । प्राप्त युक्त युक्तिमदित्यर्थः । पूर्वपक्षी स्वपक्ष युक्तिमत्त्वेन प्रतिजानीते । प्रधानमितीति । संशयकोटीकृते शिरोद्वये प्रधानमितिशिरो युक्तिमदित्यर्थः । युक्तिविशेषाकाङ्क्षा दर्शयति कुतइति । तदुपपादयति सदेवेति । कारणस्य प्रधानत्वसिद्धयौपयिकानि तद्विलक्षणपुरुषविशेषत्वविरोधीनि च विशेषणान्याह—इदंशब्देत्यादिना । इदंशब्दवाच्यस्येति । परागर्थेहीदंशब्दस्वारस्यं नतु प्रत्यग्रूपे चेतनइति भावः जगतश्चिदचिदात्मकतया चेतनस्यापीदंशब्दवाच्यान्तर्भावव्युदासायाह—चेतनभोग्यभूतस्येति । चिदंशस्य कार्यत्वकारणत्वायोगात् न तस्य कार्यान्तर्भाव इति भोक्तृतयाऽवस्थानमेव, तस्य भोग्यस्यैवतु कार्यत्वमिति भावः । चेतनस्य शेषैतकस्वभावजगद्रूपत्वमयुक्तमिति चाभिप्रायः । कार्यस्य भोग्यत्वौपयिक कारणस्य प्रधानत्वापादकं च विशेषणमाह—सत्त्वरजस्तमोमयस्येति । सत्त्वादिकार्य*सुखदुःखमोहान्वयहेतुत्वदर्शनाज्जगतस्सत्त्वादिमयत्वम् । निर्गुणः कथ गुणमयस्य कारणमितिचाभिप्रायः । भोग्यत्वोपपादनमाह—वियदादीति ॥

यदा इदंशब्दवाच्यद्रव्यस्य कारणत्वे कार्यत्वकारणत्वयोः कोभेद इत्यत्राह—वियदादीति । एकत्वावस्थ कारण बहुत्वावस्थ कार्यमिति भिदेत्यर्थः । एकरूपस्य पुरुषस्य नानारूपकार्यभावोऽनुपपन्नश्चेतिभावः ; कारणस्य कार्यसालक्षण्यावश्यंभावेहि चेतनस्य इदंशब्दवाच्यप्रति कारणत्वानुपपत्तिः । कारणावस्था कार्योपादानभूतद्रव्यान्तरनिष्ठेति कथ सालक्षण्या

## श्रीभाष्यम्

कारणभूतद्रव्यस्यावस्थान्तरापत्तिरेवहि कार्यता। अतो यद्द्रव्यं यत्स्वभावं च कार्यावस्थं तत्स्वभावं तदेव द्रव्यं कारणावस्थम्। सत्त्वादिमयं च कार्यमिति गुणसाम्यावस्थ प्रधानमेव हि कारणम्। तदेवोपसंहृतसकलविशेषं सन्मात्रमिति 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा.६.२.१) इत्यभिधीयते। तत एव च कार्यकारणयोरनन्यत्वम्। तथा सत्येवैकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिः। अन्यथा 'यथासोम्यैकेन मृत्पिण्डेन' इत्यादिमृत्पिण्डतत्कार्यदृष्टान्तदार्ष्टान्तिकयोर्वैरूप्यं चेति जगत्कारणवादिवाक्येन महर्षिणा कपि-

## श्रुतप्रकाशिका

वक्ष्यमाणइति शङ्कायां कार्यकारणयोरेकद्रव्यत्वमाह—कारणभूतद्रव्यस्येति। ततःकिमित्यपेक्षायां कार्यकारणसालक्षण्यनियमं फलितमाह—अतइति। ततोऽपि किमित्याशङ्कायां कार्यस्य प्रधानसालक्षण्यमाह—सत्त्वादिमयंचेति। प्रधानस्य कार्यसारूप्यमाह—गुणसाम्यावस्थमिति। कार्ये गुणवैषम्यदर्शनात् कारणमपि तथाविधं स्यादिति शङ्काऽपाकरणार्थं गुणसाम्यावस्थमित्युक्तम् नतु गुणमयमिति। विषमावस्थस्य सर्वस्य कार्यत्वदर्शनात्, कारणस्यापि तथात्वे कारणान्तरापेक्षयाऽनवस्थाप्रसङ्गाच प्रधानस्य गुणसाम्यावस्थत्वसिद्धिरिति भावः अनेकगुणसाम्यावस्थस्य प्रधानस्य कारणत्वे एकत्वावधारणमनुपपन्नं एकस्यैव ब्रह्मणः कारणत्वेतूपपन्नमित्यत्राह—तदेवोपसंहृतेति। एकमेवेति नामरूपविभागव्युदासः अद्वितीयमिति गुणवैषम्यव्युदासइत्यभिप्रायेण उपसंहृतसकलविशेषमित्युक्तम्। सन्मात्रमिति। सदेवेति कादाचित्कासत्त्वव्युदास इतिभावः। सन्मात्रमितीत्यत्रेतिशब्दोहेतौ ॥

प्रधानकारणत्वमेव युक्त्यन्तरेणोपपादयितुमाह—ततएवेति। इदशब्दवाच्यंप्रति कारणस्य त्रिगुणात्मकस्य प्रधानस्य सच्छब्दवाच्यत्वादेवहि कार्यकारणयोरनन्यत्वसिद्धिः। नहि विजातीययोरनन्यत्वमितिभावः। अनन्यत्व माभूदित्यत्राह—तथासतीति। अनन्यत्वेसति ह्येकविज्ञानेन सर्वविज्ञानसिद्धिः ताचिदचिद्विलक्षणकारणत्वपक्षे नसभवतीति भावः। एवं प्रतिज्ञासिद्धिरूपयुक्तिरुक्ता भवति, यद्वा * इदमग्रे सदिति सामानाधिकरण्यात् 'तद्धैक आहुः' इत्यसत्कार्यवाद प्रतिक्षेपाच्चानन्यत्वसिद्धिः पूर्वग्रन्थेऽभिप्रेता। हेत्वन्तरमाह—तथासतीति। तथासति प्रधानकारणत्वेसतीत्यर्थः, कार्यकारणयोरनन्यत्वे प्रतिज्ञावाक्यतात्पर्यात्सत्रैकशब्दोऽपि गुणसमुदायैक्याद्युक्त इतिभावः ॥

युक्त्यन्तरमाह—अन्यथेति। अचेतनमृत्पिण्डलोहमण्यादिदृष्टान्तश्चेतनकारणस्य दार्ष्टान्तिकत्वे न सङ्गच्छतइत्यभिप्रायः, यद्वा सरूपमृत्पिण्डघटादिकार्यकारणदृष्टान्तो न विरूपकार्यकारणयोर्दार्ष्टान्तिकत्वे घटतइतिभावः। कपिलस्मृत्यैकार्थ्ये

## गूढार्थसंग्रहः

वैरूप्यंचेति। दृष्टान्ते स्वरूपपरिणामाभिधानेन दार्ष्टान्तिके कारणे स्वरूपपरिणामाङ्गीकार एव श्रुतिस्सङ्गता भवति अन्तर्यामित्वपरिणामाङ्गीकारस्तु श्रुतिविरुद्ध इतिभावः ॥

परैः अशब्दमिति हेतुबोधकमेव पदम्। अशब्दत्वे ईक्षतेरिति हेतुः इत्युक्तम्। अत्र प्रधानम् इति पक्षवाचकपदाध्याहारः। पूर्वसूत्रे 'तत्' इत्यस्य जन्माद्यस्य यत इति सूत्रोक्तजगत्कारणनिर्विशेषपरत्वेन जगत्कारणतापरत्वमपि वर्तत इति 'तत्' इत्यनेन जगत्कारणमित्यर्थो लभ्यत इति साध्यवाचकपदस्य नाध्याहारइति ब्रह्मविद्याऽऽभरणे उक्तम्।— जन्मादिसूत्रे निर्विशेषाविवक्षैव नघटत इति प्रागेव निरूपितम्। तत्र निर्विशेषपरत्वेन तच्छब्दस्यात्र जगत्कारणपरत्वमपि न

## श्रीभाष्यम्

**कुत. ? ईक्षतेः-सच्छब्दवाच्यसम्बन्धिव्यापारविशेषाभिधायिन ईक्षतेर्धातोश्श्रवणात् । 'तदैक्षत बहुस्यां प्रजायेय' (छा.६.२.३) इति ईक्षणक्रियायोगश्चाचेतने प्रधाने नसंभवति ।**

## श्रुतप्रकाशिका

प्त्यसद्भावाच, बाधितत्वप्रतिपन्नत्वासम्भवः । अन्यपरत्वतु पूर्वपक्षयुक्तिभिरेव निरस्तम् । अतो हेतुर्न सम्भवतीत्यभिप्राये- हेत्वाकाङ्क्षा दर्शयति **कुतइति** । हेतोरसिद्धिमन्यथासिद्धिं च व्युदसितु व्याचष्टे । **सच्छब्दवाच्येति** । सच्छब्दवाच्यसम्बन्धीति * व्यधिकरणासिद्धिव्युदासः । प्रकृत सदेवहि **'तदैक्षत'** इति तच्छब्देन परामृश्यत इतिभावः । व्यापारविशेषशब्देनाभिधायिशब्देन चान्यथासिद्धिव्युदासः । नहि चेतनाचेतनसाधारण कार्योन्मुख्यमात्रमीक्षतिधा वभिधेय अपितु चेतनरूपकर्त्रसाधारणो व्यापारविशेषः । नच मुख्ये सम्भवति उपचारो युक्तइतिभावः * **'इक्श्तिपौ धातुनिर्देशे— वक्तव्यौ'** इति प्रक्रियया ईक्षतिशब्देन धातूपादानं नार्थोपादानं, * तथासतीक्षितेरितिहि वक्तव्य स्यात् । अनेन *चशब्दस्य विवक्षितार्थे स्वारस्य सूचितमित्यभिप्रायेणाह—**धातोरिति** । श्रवणादित्यज्ञानासिद्धिपरिहारः । श्रूयमाणादीक्षतेरिति * सूत्रविवक्षितम् ; तत्फलितु षष्ठ्या निष्कृष्य व्याख्यातम् । ईक्षतिशब्देनेक्षण लक्षितमिति वेदान्तदीपे व्याख्यातमर्थस्वारस्याय । अत्रतु शब्दस्वारस्येन व्यख्यातम् ॥

ननु **'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त'** इति वाक्यद्वयगतमीक्षणमचित्सबन्धितया प्रतीयते । **'सेयं देवतैक्षत'** इत्यत्रापीक्षणमचिद्गतमुचित देवताशब्दस्य **'हन्ताहमिमास्तिस्रो देवताः'** इत्यासन्नवाक्यस्थदेवताशब्दविरूपार्थत्वायोगात् प्रथमेक्षण च सेयमिति सच्छब्दपरामृष्टसत्सबन्धित्वादचिद्गतमेवेत्याकाङ्क्षायामाह—**तदैक्षतेति** । चरमवाक्यानुरोधेनोपक्रमस्वारस्यभङ्गो न युक्त इतीद तावदीक्षण मुख्यमितिभावः । धात्वर्थाना क्रियात्वादचेतनस्य च क्रियायोगसम्भवान्नात्रानुपपत्तिरित्यत्राह—**ईक्षणक्रियेति** । अय क्रियाविशेषो नसंभवतीत्यर्थः । ततःकिमित्यत्राह—**अतइति** । अतः

## गूढार्थसंग्रहः

ईक्षतेरिति धातुनिर्देशे बीजं सूचयन्नर्थमाह—**सच्छब्दवाच्येत्यादिना** । 'तदैक्षत' इत्यादौ तच्छब्दस्य 'सदेव इत्यत्रोक्त सच्छब्दार्थ एवार्थः । तत्रोक्तैकत्वप्रतिकोटिरूपत्वाद्बहुभवनस्य । 'वाच्ये'त्यनेन 'सदेवे'त्यत्र वाच्यार्थः यः सविशेषपदार्थः सएव 'तदैक्षत' इत्यत्र तच्छब्दे विवक्षितइति बोधनाय । तेन निर्विशेषस्य नात्र प्रतीतिसंभवः एक अद्वितीयशब्दयोः यथा न निर्विशेषतात्पर्यग्राहकता तथा पूर्वमेवोपपादितम् (६२०—६३७.पु) ॥

'इतिकर्तव्यताविधेः यजतेःपूर्ववत्त्वम्' (जै.सू.७.४.१) इत्यत्र यजतेरिति यागविवक्षावत् अत्रापीक्षितधात्वर्थो विवक्षितः । 'रोगाख्याया ण्वुल्बहुलम्' (पा.सू.३.३.१०८) इतिसूत्रे 'इक्श्तिपौ धातुनिर्देशे' इति वार्तिकस्यार्थविवक्षायामपि प्रवृत्तिः । धात्वर्थनिर्देशेऽप्येतौ बाहुल्कात् । अतएव ईक्षतेर्नाशब्दम् 'आहो प्रभृतादिभ्यः' 'गच्छतौपरदारादिभ्यः' (पा.सू.७.३.७.सूत्रवार्तिकम् ।) इति प्रयोगास्सङ्गच्छन्ते' इत्यत्र उद्योते नागेशेनाभिहिता । अतः भाष्यदीपयोः ईक्षतिधातुतदर्थयोरत्राविवक्षितत्वप्रतिपादनं नानुपपन्नम् । 'तदैक्षत बहुस्याम्' 'सेय देवतैक्षत' इत्यादौ 'ऐक्षत' इति तिङन्तधातुः प्रयुक्तः तिङन्तधातुतात्पर्येणैव ईक्षणादित्यनभिधाय ईक्षतेरित्युक्तम् । ईक्षणादित्युक्तौ कृदन्तस्थले सिद्धावस्थापन्नधात्वर्थस्यैव प्रतीतिरस्यात् नतु साध्यावस्थापन्नस्य । ज्ञानादिशब्दवत् नात्र सिद्धधर्मिबोधकता अपितु साध्यावस्थापन्नबोधकत्वमेव विवक्षितम् । साध्यत्व च मयूपोक्तदिशा निष्पाद्यत्वमेवेत्यभिप्रेत्य व्यापारविशेषेत्युक्तम् । सच्छब्दवाच्यकर्तृक

## श्रीभाष्यम्

**अत ईदृशेक्षणक्षमश्चेतनविशेषस्सर्वज्ञस्सर्वशक्तिः पुरुषोत्तमस्सच्छब्दाभिधेयः। तथा च सर्वेष्वेव सृष्टिप्रकरणेष्वीक्षापूर्विकैव सृष्टिः प्रतीयते। 'स ईक्षत लोकान्नु सृजा इति' (ऐ.१.१ २) 'सइमाँल्लोकानसृजत' 'स ईक्षाञ्चक्रे सप्राणमसृजत '(प्र.६.३.४)इत्यादिषु। ननु च**

## श्रुतप्रकाशिका

अचेतनस्यासम्भावितत्वेनेक्षणस्य स्वपक्षविरुद्धत्वादित्यर्थः। ईदृशेक्षणक्षमइति। अनेनाचिद्व्यावृत्तिरुक्ता ईदृशशब्देन चेतनविशेषशब्देनचेक्षणस्वभावफलिता॰चेतनमात्रादपि व्यावृत्तिरुक्ता यच्चेतनमात्रेऽपि नसम्भवति तत्कथमचेतने संभवती तिभावः। 'तदैक्षत' इति सिद्धं गुणमाह–सर्वज्ञइति। 'बहुस्याम्' इति फलितमर्थमाह–सर्वशक्तिरिति। चिदचिद्व्यावर्तकलिङ्गवत्वसिद्धं सदिति सामान्यश्रुतेः पर्यवसानस्थल दर्शयति। पुरुषोत्तमइति। 'सेयं देवता' इति देवताशब्दोऽपीक्षणविशेषसामर्थ्याच्छागपशुन्यायेन चानुगृहीतः प्रकरणान्तरोक्तदेवताविशेषविषयइति भावः। सद्विद्यावाक्यस्योक्तार्थपरत्वमनेकश्रुत्यन्तरस्वारस्येनोपपादयति। तथाचेति। नात्र विषयवाक्यतया श्रुत्यन्तरोपादानम्। सर्वेष्वेव सर्वेष्वपि अनेन प्राचुर्यमभिप्रेतम्। ईक्षणस्य गौणत्वाश्रयणे अनेकश्रुतिस्वारस्यभङ्गप्रसङ्ग इतिभावः। प्रतीयतइति। प्रतीतिस्तावदविगीतेतिभावः॥

स्वपक्षसाधकमुक्त्वा पूर्वपक्षयुक्तिं परिहर्तुं चोद्यमुपक्षिपति। ननुचेति। कार्यकारणयोस्सालक्षण्यं तावदङ्गीकार्यं मृत्कार्यादिषु दर्शनात्। तच्चसालक्षण्य ब्रह्मणस्त्रिगुणात्मकत्वादियोगेन वा जगतस्तद्विधुरत्वेन वा निर्वाह्यम्। आद्ये शब्दान्तरेण

## गूढार्थसंग्रहः

व्यापारः ज्ञानतद्विशेषवाचिपदसमभिव्याहारे वैयाकरणमतवत् नैयायिकमतेऽपि कर्तृत्वमाश्रयत्वरूपमेव। अभिधायिनइत्यनेन ईक्षतिधातुवाच्यार्थाश्रयत्व प्रधानस्य न सम्भवतीति सूचितम्॥

अत्र ईक्षतेरिति सामान्यनिर्देशेन 'सेयदेवतैक्षत' इत्यादि ईक्षणसामान्यस्यापि सङ्ग्रहः। 'नामरूपे व्याकरवाणि इत्यत्र 'विकारो नामधेयम्' इति पूर्वप्रयुक्तविकारशब्दस्थाने रूपशब्दः प्रयुक्तः। विकारः स्वरूपसङ्कोचविकासात्मकःपरिणामः। रूपशब्दस्तु तदतिरिक्तपरिणामस्यापि सङ्ग्राहकः। तेन दार्ष्टान्तिके अन्तर्यामित्वपरिणामेन ब्रह्मणः उपादानत्वसंभवस्सूचितः अयमर्थः प्रागेव निरूपितः। ईदृशेक्षणक्षमः चेतनविशेषस्सर्वज्ञइत्यादि। सर्वज्ञत्व सिद्धान्तएव सङ्गच्छते नतु परमत इति पूर्वमेवोपपादितम्। एव त्रय्यन्तसारामृतेऽपि। एवमीक्षणकर्तृत्वमपि निर्विशेषे नघटते। यद्यपि 'तदैक्षत' इत्येनदपि ब्रह्मण्युपपद्यते। स्रष्टव्यालोचनरूपतया वृत्तिप्रतिबिंबिताचित्प्रकाशरूपेक्षणे ब्रह्मणः तदवच्छेदकमायावृत्तिकर्तृत्वस्योपचारसंभवाच्च। यद्यप्येव धात्वर्थाश्रयत्व तत्कर्तृत्वञ्चेत्युभयमप्यौपचारिकमेव। तथाऽपि प्रधानपक्षे निरपेक्ष प्रकृत्यर्थस्यामुख्यत्वं स्यात्। ततोवरं सापेक्षप्रत्ययार्थस्य अमुख्यत्वप्रकल्पनमिति' इति न्यायरक्षामणावुक्तम्। तथाऽपि कामादीनामन्तःकरणधर्मत्व साङ्ख्याना परेषा च समम्। प्रमातृत्व च चितः वृत्तिप्रतिबिंबदशायामौपचारिकमित्यपि। एवंस्थिते मायावृत्तिप्रतिबिंबितत्वेन चिति औपचारिकःप्रयोगस्साङ्ख्यमते परमतेचौपचारिकः मायावृत्त्याश्रयत्वेन ईक्षितृत्वं साङ्ख्यमते संभवत्येव। अन्यत्र वृत्तिप्रतिबिंबितत्वेनौपचारिकत्वेऽपि अत्र इत्थमुपपत्तिरसम्भवत्येवेति निरपेक्षप्रकृत्यर्थस्य मायावृत्तिरूपस्यौपचारिकत्व कथम्? सर्वेषु सृष्टिप्रकरणेषु निर्विशेषाविवक्षाबाधकस्य ईक्षितृत्वादेस्सत्त्वे निर्विशेषमत्र विवक्षितमित्युक्तिरपि नघटते। एतत्तात्पर्येणैव ईक्षतिधातुघटितानेकश्रुत्युपादान भाष्ये। ननुचेति। स्वरूपपरिणामाभिप्रायेण

## श्रीभाष्यम्

**लेनोक्तं प्रधानमेव प्रतिपाद्यते। प्रतिज्ञादृष्टान्तरूपेणानुमानवेषमेवचेदं वाक्यमिति सच्छ-ब्दवाच्यमानुमानिकमेव—इत्येवंप्राप्तेऽभिधीयते ' ईक्षतेर्नाशब्दम् ' इति। यस्मिन्शब्द एव प्रमाणं नभवति, तदशब्दम् आनुमानिकं प्रधानमित्यर्थः।**

## श्रुतप्रकाशिका

हेतुत्वेनाभिप्रयन्नाह—जगत्कारणेति। उक्तन्यायेन श्रुत्यविरोधात् स्मृतिनिरासो नयुक्तइतिभावः, महर्षिणेतिपदेन 'ऋषिं प्रसूतं कपिलं महान्तम्' इति श्रुतिस्स्मारिता। हेत्वन्तरमाह—प्रतिज्ञेति। प्रतिज्ञादृष्टान्तयोर्हेत्वाक्षेपकत्वाभिप्रायेणोक्तमनुमानवेषमेवेति॥

ननु नकारणविषया प्रतिज्ञा अपित्वेकविज्ञानेन सर्वविज्ञानविषया अतोऽनुमानवेषत्वेऽपि न प्रधानकारणत्वसिद्धिरिति न वाच्यम् एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायास्सर्वस्यैकस्य चानन्यत्वेन निर्वाह्यत्वादनन्यत्वस्य कार्यकारणभावनिबन्धनत्वाच्च। प्रधानकारणत्वप्रतिज्ञान फलितत्वात् अत्राय प्रयोगोऽभिमतो वेदितव्यः जगत् स्वानन्योपादानकं कार्यत्वाद्घटवत्। यद्वा इदजगत् स्वकारणैकज्ञानेन ज्ञात भवितुमर्हति कार्यत्वात् एकमृत्पिण्डारब्धघटादिवदिति पूर्वपक्ष निगमयति इतीति। इतिहेतौ सुखदुःखमोहात्मेयसत्त्वरजस्तमोमयस्येदशब्दवाच्यस्य कारणत्वमेकः पूर्वपक्षहेतुः। कार्यकारणानन्यत्वफलभूतमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं तदुत्तम्भकम्। अनुमानाकारप्रतीतिश्चान्यो हेतुः॥

अस्मिन्पूर्वपक्षे सिद्धान्तस्थापनाय सूत्रस्यावतीर्णत्व दर्शयति। इत्येवंप्राप्तइति। उच्यमानाः विषयसंशयपूर्वपक्षा अस्याधिकरणस्येति ज्ञापनाय पूर्वं सूत्रोपादानम्। अस्य राद्धान्तसूत्रत्वज्ञापनार्थमक्षरव्याख्यानार्थं चेदानीं तदुपादानमिति वैषम्यम्। शब्दवेद्यतयाऽभिमतस्य कथमशब्दत्वमिति शङ्कायामाह—यस्मिन्निति। अब्भक्षो वायुभक्ष इतिवदवधारणगर्भितमितिभावः। शब्दैकप्रमाणकत्व नचेत्तत्र किमन्यत् प्रमाणमित्यत्राह—आनुमानिकमिति। तर्हि प्रमाणान्तरप्राप्त शास्त्र न प्रतिपादयतीतिचेन्न। सामान्यतो दृष्टानुमानेन कारणमात्रे प्रतिपन्नेऽपि तद्विशेषाणामप्रतिपन्नतया तद्विशिष्टेन रूपेण शास्त्रप्रतिपाद्यत्वात्। अप्राप्तेहि शास्त्रमर्थवत् इति मीमांसकाना मत नतु साङ्ख्यानामिति पूर्वपक्षिणोऽभिप्राय.। तस्यानुपपन्नता च ज्ञापयितुमशब्दशब्दप्रयोगः आनुमानिकत्वमिन्द्रियाणां परमाणूनामप्यविशिष्टमिति तद्व्युदासार्थं सौत्रमेकवचनमित्यभिप्रायेणाह—प्रधानमिति। प्रधानंह्येकसदनेकेषा कारण परमाणवस्त्वनेके सन्तएकैकस्य कार्यस्य कारण इन्द्रियाणितु बहूनि ज्ञानकारणानि नत्वर्थकारणानीति तद्व्यवच्छेदसिद्धिः॥

## गूढार्थसङ्ग्रहः

स्वरसम्। एतत्तात्पर्येणैव न्यायरक्षामणौ, वेदान्तसूत्रमुक्तावल्या च पक्षसाध्यवाचकयोरुभयोरप्यध्याहार उक्तः। अध्याहाराभावेऽप्युपपत्तिसम्भवे अध्याहारकल्पनमनुचितम्। 'अशब्द' शब्देन पूर्वपक्षसूचनेन तस्य पक्षसमर्पकत्वमेवोचितम्। यतः जगज्जन्मादि तत् इत्यस्यानुवृत्ते. उत्तरत्राङ्गीकारेण जगत्कारणमित्यर्थो लभ्यते इत्यभिप्रेत्य 'अशब्द'शब्द विवृणोति यस्मिंशब्दएवेति। अत्र एवकारः अशब्दार्थस्फुटीकरणाय प्रयुक्तः। ननु तदर्थस्याप्यत्र घटकत्वेन, अतएव वेदान्तदीपे शब्दःप्रमाण यस्य नभवति तदशब्दमित्येव विवृतम्। प्रमाणमित्यपि यच्छब्दोत्तरविभक्त्यर्थप्रकटीकरणार्थम्। 'अर्थेऽनुपलब्धे तत्प्रमाण बादरायणस्यानपेक्षत्वात्' इत्युक्तदिशा 'अतीन्द्रियाणा प्रतीतिरनुमानात्' इति साङ्ख्यसम्मतप्रधानपरत्वमशब्दशब्दस्य। शास्त्रयोनित्वात् इतिसूत्रे शास्त्रशब्दः अर्थविशेषबोधनायेति प्रागुक्तम्। अत्र च शब्दशब्दएवा

## श्रीभाष्यम्

न तज्जगत्कारणवादिवाक्यप्रतिपाद्यं ;

## श्रुतप्रकाशिका

नेति पदस्य प्रधानस्वरूपप्रतिक्षेपार्थत्वशङ्कां व्युदस्यन् वाक्यार्थं योजयति । नतदिति । धर्मिनिषेधपरत्वेऽपि—शास्त्रस्य वाक्यनिरूपणपरत्वाद्धेतुपदेन धातुस्वरूपोपादानाच्च, प्रतिपाद्यताविशेषेण निषेध्यत्वं विवक्षितमिति भावः । वाक्यप्रतिपाद्यत्वाभावः प्रमाणान्तरप्रतिपन्नत्वबाधितत्वाभ्यां वाक्यस्यान्यपरत्वाद्वा स्यात् योग्यानुपलम्भाद्यभावादप्रतिपन्नाकारवैशि-

## गूढार्थसङ्ग्रहः

ष्टमित्यशब्दशब्दमिति पक्षनिर्देशः । तत्र नैयायिकेन ब्रह्मणः अङ्गीकारेण वेदपौरुषेयत्वानुमानमेव ब्रह्मणो जगत्कारणत्वानुमानमपि भवतीति 'जन्मादिसूत्रस्य अनुमानसिद्धजगत्कारणानुवादेन ब्रह्मत्वविधायकत्वेन ब्रह्मलक्षणपरस्य 'यतो वा' इत्यादिवाक्यार्थस्य प्रतिपादकत्वशङ्कानिरसनार्थं जगत्कारणस्य औपनिषदपुरुषरूपतासमर्थनं 'शास्त्रयोनित्वात्' इत्यत्र । तेन कारणवाक्यानां प्राधान्यं न परसम्मतमहावाक्यानाम् इत्यर्थो बोधितो भवति । अत्रतु नैयायिकविवक्षाया असंभवः उपादानोपादेयभावस्य तन्मतेऽनङ्गीकारात् । जगत्कारणस्य शास्त्रयोनित्वसिद्धान्तानन्तरं नैयायिकमतशङ्काया एवासम्भवात् । ईक्षतेरिति हेतुना तन्मतनिरसनालाभाच्च । साङ्ख्यैः (भा.प्र.१.सपु.१००—१०१.पु) जगत्कारणस्यानुमानिकत्वं तत्त्वसृष्टिक्रमादेरागमार्थत्वं वेदापौरुषेयत्वं च अभ्युपगम्यते । 'सदेव' इत्यादौ अनुवादताऽऽदिबोधकपदाभावेन प्राधान्यात् अस्य स्वरूपपरिणाम्युपादानभूतप्रधानकारणपरत्वे 'यतो वा' इत्यादेरपि तत्परतया अचिद्विलक्षणब्रह्मणि कारणत्वस्यासम्भवेन समन्वयो न सम्भवतीति शङ्कानिरासकत्वेन 'ईक्षतेर्नाशब्दम्' इति शास्त्रोपक्रमे विचारो युक्तः । पादार्थभेदेनान्ययोगव्यवच्छेदपादे प्रधानकारणत्वाभ्युपगमेनात्र तन्निरसनासम्भव इति शङ्काया (च) नावसरः ॥

यद्यपि 'नाशब्दम्' इति समभिव्याहारेण अशब्दशब्दार्थस्य नञर्थेऽन्वयः प्रतीयते । तत् जगत्कारणमशब्दभिन्नम् इति तदर्थोऽपि । तथाऽप्येवमङ्गीकारे नञः सामान्यधर्मावच्छिन्नप्रतियोगिताकाभावबोधकतया विशेषधर्मावच्छिन्नप्रतियोगिताकबोधस्य विवक्षितस्यासम्भवेन अशब्दशब्दार्थस्यैव पक्षत्वं प्रतीयते । एवंसति ईक्षतेरित्यस्य वैयधिकरण्यस्यात् अतः वाक्यपक्षकानुमानमेवात्र विवक्षितमिति भाष्ये 'इदानीं जगत्कारणवादिवाक्यानामानुमानिकप्रधानप्रतिपादनानर्हतोच्यते' इत्युपक्रमे 'अत्र सृष्टिवाक्यानि न प्रधानप्रतिपादनयोग्यानीत्युच्यते' इत्युपसंहारे च एतत्सूत्रे उक्तम् । 'ईक्षतेर्धातोरश्रवणात्' इति वाक्येन ईक्षतेरिति शब्देन सूत्रकृतः इत्थमाशयस्सूचितः । दीपेतु 'ईक्षतेरितीक्षणधात्वर्थः ईक्षणम् । 'सदेव सोम्येदम्' इति जगत्कारणतया प्रतिपादितान्वयिनः ईक्षणव्यापाराद्याचेतनमशब्दं तत् अपितु सर्वज्ञं सत्यसङ्कल्पं ब्रह्मैव जगत्कारणमिति निश्चीयते' इत्युक्त्या तत् जगत्कारणं अशब्दभिन्नमीक्षणवत्त्वादित्यनुमानं सूत्रकाराभिप्रेतमिति बोधितम् । पक्षेचात्र अशब्दशब्दे शब्दशून्यं शब्दावाच्यं शब्दतात्पर्याविषयं इति बह्वर्थप्रतीतावपि 'शास्त्रयोनित्वात्' 'तत्तुसमन्वयात्' इति सूत्रद्वये तात्पर्यविषयार्थप्रतीत्या अशब्दशब्देऽपि शब्दतात्पर्याविषयरूपार्थ एव ग्राह्य इति निर्णयेन । सद्विद्यावाक्यस्य प्राधान्येऽपि 'नाशब्दम्' इत्यत्र नञः विशेषधर्मावच्छिन्नाभावबोधपरत्वमादरणीयम् । 'सदीक्षतेः' इत्यनुक्तौ मूलन्तु श.भाष्ये श्रीभाष्येच सद्विद्यावाक्यव्यतिरिक्तेक्षतिधातुघटितवाक्यानामुपादानेन सर्वत्र सच्छब्दाभावः प्रधानव्यावृत्तिबोधकेक्षतिशब्दसत्त्वं 'उत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतम्' इत्यादिपूर्ववाक्य एव दृष्टान्तानुसारेण साङ्ख्यसम्मतपरिणाम्युपादानपूर्वपक्षयुक्तिसत्त्वेन तत्सूचनाभावश्चेत्यादिकं बोध्यम् ॥

### श्रीभाष्यम्

**कुतः ? ईक्षतेः-सच्छब्दवाच्यसम्बन्धिव्यापारविशेषाभिधायिन ईक्षतेर्धातोदश्रवणात् । 'तदैक्षत बहुस्यां प्रजायेय' (छा.६.२.३) इति ईक्षणक्रियायोगश्चाचेतने प्रधाने नसंभवति ।**

### श्रुतप्रकाशिका

प्त्यसद्भावाच, बाधितत्वप्रतिपन्नत्वासम्भवः । अन्यपरत्वंतु पूर्वपक्षयुक्तिभिरेव निरस्तम् । अतो हेतुर्न सभवतीत्यभिप्रायेण हेत्वाकाङ्क्षा दर्शयति **कुतइति** । हेतोरसिद्धिमन्यथासिद्धिं च व्युदसितुं व्याचष्टे । **सच्छब्दवाच्येति** । सच्छब्दवाच्यस बन्धीति * व्यधिकरणासिद्धिव्युदासः । प्रकृतं सदेवहि 'तदैक्षत' इति तच्छब्देन परामृश्यत इतिभावः । व्यापारविशेषशब्देनाभिधायिशब्देन चान्यथासिद्धिव्युदासः । नहि चेतनाचेतनसाधारणं कार्योन्मुख्यमात्रमीक्षतिधात्वभिधेयं अपितु चेतनरूपकर्त्रसाधारणो व्यापारविशेषः । नच मुख्ये संभवति उपचारो युक्तइतिभावः * '**इक्श्तिपौ धातुनिर्देशे— वक्तव्यौ**' इति प्रक्रियया ईक्षतिशब्देन धातूपादानं नार्थोपादानं, * तथासतीक्षितेरितिहि वक्तव्य स्यात् । अनेन *चशब्दस्य विवक्षितार्थे स्वारस्यं सूचितमित्यभिप्रायेणाह—**धातोरिति** । श्रवणादित्यज्ञानासिद्धिपरिहारः । श्रूयमाणादीक्षतेरिति * सूत्रविवक्षितम् ; तत्फलितंतु षष्ठ्या निष्कृष्य व्याख्यातम् । ईक्षतिशब्देनेक्षणं लक्षितमिति वेदान्तदीपे व्याख्यातमर्थस्वारस्याय । अत्रतु शब्दस्वारस्येन व्याख्यातम् ॥

**ननु 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त'** इति वाक्यद्वयगतमीक्षणमचित्संबन्धितया प्रतीयते । '**सेयं देवतैक्षत**' इत्यत्रापीक्षणमचिद्गतमुचित देवताशब्दस्य '**हन्ताहमिमास्तिस्रो देवताः**' इत्यासन्नवाक्यस्थदेवताशब्दविरूपार्थत्वायोगात् प्रथमेक्षणं च सेयमिति सच्छब्दपरामृष्टसत्सम्बन्धित्वादचिद्गतमेवेत्याकाङ्क्षायामाह-**तदैक्षतेति** । चरमवाक्यानुरोधेनोपक्रमस्वारस्यभङ्गो न युक्त इतीदं तावदीक्षणं मुख्यमितिभावः । धात्वर्थानां क्रियात्वादचेतनस्य च क्रियायोगसम्भवान्नात्रानुपपत्तिरित्यत्राह—**ईक्षणक्रियेति** । अयं क्रियाविशेषो नसंभवतीत्यर्थः । ततःकिमित्यत्राह-**अतइति** । अतः

### गूढार्थसंग्रहः

ईक्षतेरिति धातुनिर्देशे बीजं सूचयन्नर्थमाह—**सच्छब्दवाच्येत्यादिना** । 'तदैक्षत' इत्यादौ तच्छब्दस्य 'सदेव इत्यत्रोक्तसच्छब्दार्थ एवार्थः । तत्रोक्तैकत्वप्रतिकोटिरूपत्वाद्बहुभवनस्य । 'वाच्ये'त्यनेन 'सदेवे'त्यत्र वाच्यार्थः यः सविशेषपदार्थः सएव 'तदैक्षत' इत्यत्र तच्छब्दे विवक्षितइति बोधनाय ।,तेन निर्विशेषस्य नात्र प्रतीतिसंभवः एक अद्वितीयशब्दयोः यथा न निर्विशेषतात्पर्यग्राहकता तथा पूर्वमेवोपपादितम् (६२०—६३७.पु) ॥

'इतिकर्तव्यताविधेः यजतेःपूर्ववत्त्वम्' (जै.सू.७.४.१) इत्यत्र यजतेरिति यागविवक्षावत् अत्रापीक्षितधात्वर्थो विवक्षितः । 'रोगाख्यायां ण्वुल्बहुलम्' (पा.सू.३.३.१०८) इतिसूत्रे 'इक्श्तिपौ धातुनिर्देशे' इति वार्तिकस्यार्थविवक्षायामपि प्रवृत्तिः । धात्वर्थनिर्देशेऽप्येतौ बाहुलकात् । अतएव ईक्षतेर्नाशब्दम् 'आहो प्रभूतादिभ्यः' 'गच्छतीपरदारादिभ्यः' (पा.सू.७.३.७.सूत्रवार्तिकम् ।) इति प्रयोगास्सङ्गच्छन्ते' इत्यत्र उद्योते नागेशेनाभिहिता । अतः भाष्यदीपयोः ईक्षतिधातुतदर्थयोरत्राविवक्षितत्वप्रतिपादनं नानुपपन्नम् । 'तदैक्षत बहुस्याम्' 'सेयं देवतैक्षत' इत्यादौ 'ऐक्षत' इति तिङन्तधातुः प्रयुक्तः तिङन्तधातुतात्पर्येणैव ईक्षणादित्यनभिधाय ईक्षतेरित्युक्तम् । ईक्षणादित्युक्तौ कृदन्तस्थले सिद्धावस्थापन्नधात्वर्थस्यैव प्रतीतिस्स्यात् नतु साध्यावस्थापन्नस्य । ज्ञानादिशब्दवत् नात्र सिद्धधर्मिबोधकता अपितु साध्यावस्थापन्नबोधकत्वमेव विवक्षितम् । साध्यत्वं च मञ्जूषोक्तदिशा निष्पाद्यत्वमेवेत्यभिप्रेत्य **व्यापारविशेषे**त्युक्तम् । सच्छब्दवाच्यकर्तृकः

### श्रीभाष्यम्

अत ईदृशेक्षणक्षमश्चेतनविशेषस्सर्वज्ञस्सर्वशक्तिः पुरुषोत्तमस्सच्छब्दाभिधेयः । तथा च सर्वेष्वेव सृष्टिप्रकरणेष्वीक्षापूर्विकैव सृष्टि प्रतीयते । 'स ईक्षत लोकान्नु सृजा इति' (ऐ.१.१ २) 'सइमान्लोकानसृजत' 'स ईक्षाञ्चक्रे सप्राणमसृजत '(प्र.६.३.४)इत्यादिषु । ननु च

### श्रुतप्रकाशिका

अचेतनस्याप्रभावितत्वेनेक्षणस्य स्वपक्षविरुद्धत्वादित्यर्थः । ईदृशेक्षणक्षमइति । अनेनाचिद्व्यावृत्तिरुक्ता ईदृशशब्देन चेतनविशेषशब्देनचेक्षणस्वभावफलिताश्चेतनमात्रादपि व्यावृत्तिरुक्ता यच्चेतनमात्रेऽपि नसंभवति तत्कथमचेतने संभवतीतिभावः । 'तदैक्षत ' इति सिद्धं गुणमाह–सर्वज्ञइति । 'बहुस्याम्' इति फलितमर्थमाह–सर्वशक्तिरिति । चिदचिद्व्यावर्तकलिङ्गबलसिद्धं सदिति सामान्यश्रुतेः पर्यवसानस्थल दर्शयति । पुरुषोत्तमइति । 'सेयं देवता ' इति देवताशब्दोऽपीक्षणविशेषसामर्थ्याच्छागपशुन्यायेन चानुगृहीतः प्रकरणान्तरोक्तदेवताविशेषविषयइति भावः । सद्विद्यावाक्योक्तार्थपरत्वमनेकश्रुत्यन्तरस्वारस्येनोपपादयति । तथाचेति। नात्र विषयवाक्यतया श्रुत्यन्तरोपादानम् । सर्वेष्वेव सर्वेष्वपि अनेन प्राचुर्यमभिप्रेतम् । ईक्षणस्य गौणत्वाश्रयणे अनेकश्रुतिस्वारस्यभङ्गप्रसङ्ग इतिभावः। प्रतीयतइति । प्रतीतिस्तावदविगीतेतिभावः ॥

स्वपक्षसाधकमुक्त्वा पूर्वपक्षयुक्तिं परिहर्तुं चोद्यमुपक्षिपति । ननुचेति । कार्यकारणयोस्सालक्षण्यं तावदङ्गीकार्यं मृत्कार्यादिषु दर्शनात्। तच्चसालक्षण्यं ब्रह्मणस्त्रिगुणात्मकत्वादियोगेन वा जगतस्तद्विधुरत्वेन वा निर्वाह्यम्। आद्ये शब्दान्तरेण

### गूढार्थसंग्रहः

व्यापारः ज्ञानतद्विशेषवाचिपदसमभिव्याहारे वैयाकरणमतवत् नैयायिकमतेऽपि कर्तृत्वमाश्रयत्वरूपमेव । अभिप्रायेणइत्यनेन ईक्षतिधातुवाच्यार्थाश्रयत्व प्रधानस्य न संभवतीति सूचितम् ॥

अत्र ईक्षतेरिति सामान्यनिर्देशेन 'सेयंदेवतैक्षत ' इत्यादि ईक्षणसामान्यस्यापि सङ्ग्रहः । ' नामरूपे व्याकरवाणि इत्यत्र ' विकारो नामधेयम् ' इति पूर्वप्रयुक्तविकारशब्दस्थाने रूपशब्दः प्रयुक्तः । विकारः स्वरूपसङ्कोचविकासात्मकःपरिणामः । रूपशब्दस्तु तदतिरिक्तपरिणामस्यापि संग्राहकः । तेन दार्ष्टान्तिके अन्तर्यामित्वपरिणामेन ब्रह्मणः उपादानत्वसंभवस्सूचितः अयमर्थः प्रागेव निरूपितः । ईदृशेक्षणक्षमः चेतनविशेषस्सर्वज्ञइत्यादि । सर्वज्ञत्व सिद्धान्तएव सङ्गच्छते नतु परमत इति पूर्वमेवोपपादितम् । एवं त्र्यन्तसारामृतेऽपि । एवमीक्षणकर्तृत्वमपि निर्विशेषे नघटते । यद्यपि 'तदैक्षत ' इत्येतदपि ब्रह्मण्युपपद्यते। स्रष्टव्यालोचनरूपतया वृत्तिप्रतिबिंबितचित्प्रकाशरूपेक्षणे ब्रह्मणः तदवच्छेदकमायावृत्तिकर्तृत्वस्योपचारसंभवाच्च । यद्यप्येवं धात्वर्थाश्रयत्व तत्कर्तृत्वचेत्युभयमप्यौपचारिकमेव । तथाऽपि प्रधानपक्षे निरपेक्षप्रत्ययार्थस्यामुख्यत्वं स्यात् । ततोवरं सापेक्षप्रत्ययार्थस्य अमुख्यत्वप्रकल्पनमिति ' इति न्यायरक्षामणावुक्तम् । तथाऽपि कामादीनामन्तःकरणधर्मत्व साख्याना परेषां च समम् । प्रमातृत्व च चितः वृत्तिप्रतिबिंबदशायामौपचारिकमित्यपि । एवंस्थिते मायावृत्तिप्रतिबिंबितत्वेन चिति औपचारिकःप्रयोगस्साङ्ख्यमते परमतेचौपचारिकः मायावृत्त्याश्रयत्वेन ईक्षितृत्वं साङ्ख्यमते संभवत्येव । अन्यत्र वृत्तिप्रतिबिंबितत्वेनौपचारिकत्वेऽपि अत्र द्वयमुपपत्तिस्सम्भवत्येवेति निरपेक्षप्रकृत्यर्थस्य मायावृत्तिरूपस्यौपचारिकत्व कथम् ? सर्वेषु सृष्टिप्रकरणेषु निर्विशेषाविवक्षाबाधकस्य ईक्षितृत्वादेस्सत्वे निर्विशेषमत्र विवक्षितमित्युक्तिरपि नघटते । एतत्तात्पर्येणैव ईक्षतिधातुघटितानेकश्रुत्युपादानं भाष्ये । ननुचेति । स्वरूपपरिणामाभिप्रायेण

## श्रीभाष्यम्

**कार्यानुगुणेनैव कारणेन भवितव्यम् । सत्यम् ; सर्वकार्यानुगुण एव सर्वज्ञस्सर्वशक्तिस्सत्यसङ्कल्पः पुरुषोत्तमस्सूक्ष्मचिदचिद्वस्तुशरीरकः । यथाऽऽह—' परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ' (श्वे.६.८) ' यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः ' (मु.१.१.९) ' यस्याव्यक्तं शरीरं यस्याक्षरं शरीरं यस्य मृत्युश्शरीरम् एष सर्वभूतान्तरात्मा' (सु.७.ख.च.१) इति । तदेतत् 'न विलक्षणत्वात्' (शारी.२.अ.१.पा.४.सू) इत्यादिषु प्रतिपादयिष्यते । अत्र सृष्टिवाक्यानि न प्रधानप्रतिपादनयोग्यानीत्युच्यते । वस्तुविरो-**

## श्रुतप्रकाशिका

प्रधानाङ्गीकारः, द्वितीये सुखदुःखमोहान्वयाद्युपलम्भाविरोध इतिभावः । परिहरति **सत्यमिति** । अर्थाङ्गीकारे सत्यशब्दः कार्यानुगुण्यमङ्गीकृतम् नतु प्रधानत्वमिति । **सर्वेति** । प्रधानस्यैवहि सर्वकार्याननुगुणत्व कार्यानुप्रविष्टचिदपेक्षया तस्य कारणत्वौपयिकाकारविरहादिति भावः ।| कार्यानुगुणनिमित्तोपादानभावसिद्ध्यर्थं सर्वज्ञसर्वशक्तिपदद्वयम् । तदुभयफलितमाह-**सत्यसङ्कल्पइति** । सर्वशक्तित्वासङ्कोचान्न*तस्य सङ्कल्पप्रतिबन्धसम्भावनेति भावः । विकारादीना सद्वारकत्वसिद्ध्यर्थं सूक्ष्मेत्यादिपदम् उक्ताकारविरहे कारणत्वायोगात् । तद्धत्वे श्रुतिवाक्यानि दर्शयति **पराऽस्येति** । चिदचितोश्शरीरत्व कथम् ? शरीरत्वे च तद्गतः कर्मवश्यत्वादिदोषस्स्यादित्यत्राह—**तदेतदिति** ॥

' **न विलक्षणत्वात्** ' इत्यादिसूत्रैरेषा सूत्राणा पौनरुक्त्यमाशङ्क्याह—**अत्र सृष्टीति** । वस्तुविरोधः अर्थसामर्थ्यविरोधः । अत्र वाक्यतर्केणार्थनिष्कर्षः तत्रत्वाभिमानिकव्याख्या भाननिबन्धनबाह्यतर्कविमर्शतन्निरासमुखेनार्थनिष्कर्षइति भिदेत्यर्थः, एव सत्त्वादिगुणमयस्येदशब्दवाच्यस्य कारणत्व तदुत्तम्भकमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानच परिहृतभवति

## गूढार्थसग्रह

शङ्का-**सूक्ष्मचिदचिद्वस्तुशरीरकइति** । सूक्ष्मेति कारणावस्थाऽभिप्रायकम् । यादृशावस्थाया साख्यैः प्रधान कारणमित्युच्यते तदा प्रधानान्तर्यामित्वास्था ब्रह्मणि वर्तते । यस्यामवस्थाया महदादेः कार्यत्व तदा तदवस्थाऽन्तर्यामित्व ब्रह्मणि। एवं जीवस्य ज्ञानविकासाऽवस्थायां कार्यत्वे सङ्कुचितज्ञानावस्थजीवान्तर्यामिणः ब्रह्मण. विकसितज्ञानजीवान्तर्यामित्वेन परिणामेनोपादानत्वमिति सर्वकार्यानुगुण्य ब्रह्मणि सभवत्येव । ' सन्मूलास्सोम्येमास्सर्वाःप्रजाः ' ' ऐतदात्म्यमिद सर्वम् ' इत्यत्र जीवस्यापि विवक्षायाः स्फुटतया ' सदेव सोम्येदमग्र आसीत् ' 'तदैक्षत बहुस्याम् ' इत्यत्रापि जीवविवक्षा निश्चीयते । एव च प्रधानस्य जीवकार्यानुगुण्य न कथञ्चिदप्युत्प्रेक्षितु शक्यमिति भावः ॥

नवीनास्तु 'तत् ब्रह्म अशब्द न शब्दावाच्य न ईक्षतेः 'परात्पर पुरिशय पुरुषमीक्षते ' इत्यादिश्रुतिप्रतिपाद्येक्षणकर्मत्वात् इति सूत्रार्थः ' यतो वाचो निवर्तन्त ' इत्यादिश्रुतिभि· परब्रह्म अवाच्यमिति निर्विशेषवादिमतनिरासोऽत्राभिप्रेतः इति वदन्ति ॥

अत्र 'सकलजगज्जन्मादिकारणत्वेन ब्रह्मैव शास्त्रस्य मुख्यार्थ इत्यभिहितम् । उपक्रमादिभिर्निर्णीतस्य मुख्यार्थत्वात् तच्च वाच्यत्व एव समवतीति । तन्मुख्यतश्शास्त्रयोनित्व विषयः । ब्रह्मणो युक्तमयुक्तवेति सन्देह. वादिविप्रतिपत्तिस्सन्देहबीजम् ' इति तत्त्वप्रकाशिकायामुक्तम् । जन्माद्यस्य यतः इति सूत्रोक्तजगत्कारण एव 'तदि'त्यनेन परामर्शः । 'यतो वा इमानि भूतानि ' इत्यादिवाक्य वाच्यसमर्पकम् । ' सत्य ज्ञानमनन्तम् ' इतितु लक्ष्यसमर्पकम् । ' तत्त्वमसि ' इत्यत्र

## श्रीभाष्यम्

धस्तु तत्रैव परिहरिष्यते। यत्तूक्तं प्रतिज्ञादृष्टान्तयोगादनुमानरूपमेवेदं वाक्यम्-इति। तदसत्; हेत्वनुपादानात्। 'येनाश्रुतं श्रुतम्' (छां.६-१.३) इत्येकविज्ञानेन सर्वविज्ञाने प्रतिपिपादयिषिते सर्वात्मना तदसम्भवं मन्वानस्य तत्सम्भवमात्रप्रदर्शनाय हि दृष्टान्तोपादानम्

## श्रुतप्रकाशिका

अथ परोक्तं हेत्वन्तरमनुवदति। यत्तूक्तमिति। तस्यानुपपन्नत्वमाह—तदसदिति। कथमित्यत्राह—हेत्वनुपादानादिति। वक्तुरनुमानविवक्षाऽस्तिचेत्तत्र प्रधानावयवो हेतुरवश्योपादेयः *तदभावान्नतद्विवक्षेति भावः। प्रतिज्ञादृष्टान्ताभ्यां हेत्वाक्षेपोऽप्ययुक्त इत्याह—येनाश्रुतमिति। अनन्यथासिद्धह्याक्षेपकं सर्वप्रमाणसाधारणत्वात्प्रतिज्ञाऽन्यथासिद्धेति सिद्धकृत्वा दृष्टान्तस्य हेत्वाक्षेपकत्वायोग उच्यते। न केवलं व्याप्तिप्रदर्शनायैव दृष्टान्तोपन्यासः अपित्वसम्भवव्यावृत्तिप्रदर्शनायापि संभवतीत्यन्यथासिद्धत्वात् स नाक्षेपकइत्यर्थः। सर्वात्मना तदसम्भवमिति। एकविज्ञानेन * सर्वविज्ञानं

## गूढार्थसंग्रहः

तदादिशब्दाना लक्ष्यार्थविषयकएव मुख्यार्थबोध इति परेषां सिद्धान्तः। एवंस्थिते जगत्कारणस्यावाच्यत्व यदि परसमतं स्यात् तदानीमित्थं शङ्का सम्भावितास्यात् नच तथा परैरुच्यते इति कथमियं शङ्का घटते। शक्यार्थस्यैव मुख्यत्वं नतु लक्ष्यार्थस्येत्यर्थः समन्वयपद एव विवक्षितः। विवरणकारमते परब्रह्मणः वेदान्तवाक्यजन्यवृत्तिविषयत्वाङ्गीकारेण 'तत्त्वमसि' इति वाक्यजन्यसाक्षात्कारविषयत्वं संभवत्येवेति 'पुरुषमीक्षते' इत्युक्तेक्षणकर्मत्वस्य सम्भवेन ईक्षतेरिति हेतुना अवाच्यत्वनिराकरणं कथम्? 'अथ कस्मादुच्यते ब्रह्मेति। बृहन्तोह्यस्मिन्गुणा' इति श्रुतेः (त.प्र) इति प्रथमसूत्रएवोदाहरणेन तत्र शक्यार्थ एव गुणवतो ब्रह्मपदशक्यत्वस्योक्तया तेनावाच्यत्वानिरासस्सम्भवति। 'एव बृहति बृंहयति—तस्मादुच्यते परब्रह्म' 'नेतिनेति' इत्यनन्तरं 'अथ नामधेयं सत्यस्य सत्यम्' इति श्रुत्याऽप्यवाच्यत्वानिरसनं संभवति 'तत्वौपनिषद पुरुषम्' इति श्रुतिः उपनिषज्जन्यसाक्षात्कारविषयत्वे प्रमाणमिति विवरणएवोक्तम्। एतच्छ्रुत्यर्थमनभिधाय 'ईक्षतेः' इति वदतः सूत्रकृतः नवीनसमतार्थोऽनभिप्रेतः। एतेन सुधाऽनुसारेण चन्द्रिकाया—'समन्वयात्' इत्यत्र 'सशब्दार्थस्य वाच्यत्वस्य कात्स्न्यस्य च इहाक्षिप्य समाधानादनन्तरसङ्गतिः' इत्युक्तिर्निरवकाशा॥

यद्यपि चन्द्रिकायां—'सर्वे वेदा.' इत्यादिश्रुत्यादिकमुदाहृत्य 'तथाऽप्यवाच्यत्वेऽपि श्रुतेस्सत्वात् वाच्यत्वश्रुतिर्विशिष्टविषया नतु शुद्धविषयेति शङ्कोदयाच्च न श्रुत्यादिमात्रेण वाच्यत्वनिश्चय इति सूत्रे प्रसिद्धश्रुत्यनुग्राहकन्यायएवोक्तः। अतएव वाच्यत्वस्य श्रुतत्वादित्यर्थस्येक्षतिसूत्रएव विवक्षितत्वात् 'श्रुतत्वाच्च' इति सूत्रं तत्परतया भाष्ये नव्याख्यातम्' इत्युक्तम्। अत्र प्रकाशः—'न्यायएवेति। तथा च न्यायानुगृहीतया प्रबलया वाच्यत्वश्रुत्या अवाच्यत्वश्रुतेर्बाधइतिभावः तथा च ईक्षतेः इत्यस्येक्षतिरूपन्यायानुगृहीतया श्रुत्या वाच्यत्वादित्युक्तं भवति' इति। श्रुतिं साक्षादभिधाय तदनुग्राहकत्वेन 'च' शब्देन न्यायो वक्तव्यः। अत्र चशब्दाभावेऽपि वाच्यत्वबोधकपदाभावेऽपि एवमर्थस्य सूत्रकृदभिप्रेतत्वंकथं? वाच्यत्वश्रुतिः विशिष्टविषया नतु शुद्धविषयेति चन्द्रिकायामेव शङ्कितुराशयाभिधानेन विशिष्टे शक्तिः शुद्धे लक्षणा। शुद्धे कल्पितसम्बन्धमादाय लक्षणाऽप्युपपद्यते। लक्षणाया अभावेऽपि सुप्तोत्थापकवाक्यवत् साक्षात्कारउपपद्यते। शक्यसम्बन्धविनाऽपि प्रतिबन्धकक्षये अन्तःकरणशुद्ध्या तत्त्वसाक्षात्कारः। शक्यसम्बन्धो न लक्षणा अपितु अर्थोपस्थितिरेव लक्षणा इत्यपि कैश्चिदुच्यते। सा रीतिर्वा आश्रीयते इति परैः बहुप्रकारकथनेन तन्निरसनयुक्तिरस्मिन्सूत्रे उत्तरसूत्रादौ च नका-

### श्रीभाष्यम्

ईक्षत्यादिश्रवणादेवह्यनुमानगन्धाभावोऽवगतः ॥

अथस्यात्—नचेतनगतं मुख्यमीक्षणमिहोच्यते, अपितु प्रधानगतं गौणमीक्षणम्, ‘तत्तेज ऐक्षत—ता आप ऐक्षन्त ’ (छा.६.२.३,.४) इति गौणेक्षणसाहचर्यात्। भवति चाचेतनेष्वपि चेतनधर्मोपचारः। यथा ‘ वृष्टिप्रतीक्षाश्शालयः’ ‘ वर्षेण बीजं प्रतिसञ्जहर्ष ’ (रामायणे सुन्दर.२९.सर्ग.६) इति। अतो गौणमीक्षणमितीमामाशङ्कामनुभाष्य परिहरति

## ६.सू—गौणश्चेन्नात्मशब्दात् (१.१.५)

### श्रुतप्रकाशिका

धर्म्यैक्यादेकाकारान्वयाद्वा वस्त्वन्तरव्यतिरेकाद्वा संभवति, घटपटादिषु त्रेधाऽपि तदसम्भवति, घटपटादिषु धर्म्यैक्यस्यान्वयेनान्यसाध्यतिरेकेण वा समानाकारयोगस्य चाभावादिभावः। अस्तु दृष्टान्तस्यानुमानाङ्गत्वे संभवप्रदर्शनार्थत्वे च साधारण्यं तथा सत्यस्तन्मतेऽपि संभवः पाक्षिकस्स्यादित्यत्राह—ईक्षत्यादीति। आदिशब्देन वक्ष्यमाणहेतवो विवक्षिताः प्रतिज्ञादृष्टान्तयोस्साधारण्येनानुमानत्वं शङ्कितं ईक्षणाद्यसाधारणहेतुसद्भावाच्छङ्काऽपि निरस्तेत्यभिप्रायेणोक्तमनुमानगन्धाभाव इति ॥

उत्तरसूत्रमवतारयितुमीक्षणस्य गौणत्वं शङ्कते—अथ स्यादिति। चेतनगत चेतनत्वानुगुणम्। इहेति। प्रकरणमालोचनीयमिति भावः। प्रधानगतं * अचेतनत्वानुगुणमित्यर्थः। प्रथमेक्षणस्य तेजःप्रभृतिकार्याचिद्गतत्वायोगात् प्रधानशब्दः। हेतुमाह—तत्तेजइति। प्रायदर्शनाय वाक्यद्वयमुपात्तं अग्रयप्रायन्यायोऽपि बाधकाभावे जीवतीति भावः। ‘ सेयं देवता ’ इति देवताशब्दोऽपि अनेनैव न्यायेन ‘ इमास्तिस्रो देवता ’ इतिवत् अचिद्विषयत्वौचित्यान्नगौणत्वबाधकइति भावः; गौणप्रयोगं दर्शयति भवतिचेति। ईक्षणतुल्ययोगक्षेमहर्षादिधर्मान्तरसङ्ग्रहाय चेतनधर्मशब्दः। लोके शास्त्रे च प्रयोगद्वय दर्शितम्। गौणत्वं निगमयदुक्तशङ्कापरिहाराय सूत्रस्यावतीर्णत्वमाह—अतइति। शङ्काया उत्सूत्रत्वाभावात् अनुभाष्येत्युक्तम्

## ६.गौणश्चेन्नात्मशब्दात् (१.१.५)

### गूढार्थसंग्रहः

ऽपि वर्तते। एवंस्थिते न्यायेन स्वाभिप्रेतार्थस्य साधन सूत्रकृदभिप्रेतमित्युक्तिः न विदुषा हृदयङ्गमा। अशब्दशब्दस्य शब्दावाच्यमित्यर्थोऽपि नैव निर्णेतुं शक्यः। ‘ शब्दस्पर्शविहीनं तत् रूपादिभिरसंयुतम्। त्रिगुणं तज्जगद्योनि ’ इत्युक्तदिशा शब्दशून्यम् ‘ शास्त्रयोनित्वात् ’ इत्यादिसूत्रानुसारेण शब्दतात्पर्याविषयइत्यर्थसम्भवात्। लक्षणया शब्दगम्यस्य शब्दतात्पर्यविषयत्वं परैरभ्युपगम्यत एव। ईक्षतेरित्यत्र कर्मतासम्बन्धेनेक्षण विवक्षितमित्यत्रापि ननियामकं। ईक्षणकर्तुरेव तत्तो झटित्युपस्थितेः। अतः प्रागुक्तदिशा जगत्कारणविचारपरत्वमेव ‘ ईक्षतेर्नाशब्दम् ’ इति सूत्रस्य युक्तम् ॥

तत्तेज ऐक्षत इत्यादि। अत्र ‘ऐक्षत’ इति गौणनिर्देशइति सिद्धान्तिभिरङ्गीकरणीयम्। ‘ तदैक्षत बहुस्यांप्रजायेय ’ इतिश्रुतिः। अत्र बहुपदेन तेजोऽबन्नानि विवक्षितानीति श्रुतिक्रमपर्यालोचनयैव सिद्ध्यति। एवं च ‘ तदैक्षत ’ इत्यत्र तच्छब्दार्थस्य तेजआद्यभिन्नत्वनिश्चयेन ईक्षतिधातुर्गौणएवाङ्गीकरणीयइति शङ्कितुराशयः ॥

## श्रीभाष्यम्

यदुक्तं–गौणेक्षणसाहचर्यात्सतोऽपीक्षणव्यपदेशस्सर्गनियतपूर्वावस्थाभिप्रायो गौण इति, तन्न ; 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' (छा.६.८.७) इति सच्छब्दप्रतिपादितस्य आत्मशब्देन व्यपदेशात्। एतदुक्तं भवति 'ऐतदात्म्यमिदं सर्वम्–स आत्मा' (छा.६.८.७) इति चेतनाचेतनप्रपञ्चोद्देशेन सत आत्मत्वोपदेशोऽयं नाचेतने प्रधाने सङ्गच्छते इति। अतस्तेजोयन्नानामपि परमात्मैवात्मेति

## श्रुतप्रकाशिका

केन गुणयोगेन गौणत्वमिति शङ्कां परिहरन् सूत्रं योजयति यदुक्तमिति। पुल्लिङ्गगौणशब्दाविशेष्यः प्रकृत ईक्षतिरित्यभिप्रायेणोक्तमीक्षणव्यपदेशइति। गौण ईक्षतिर्नेत्युक्ते विशेष्यप्रतिक्षेपशङ्काव्युदासाय यत्तच्छब्दाभ्यां विशेषणनिषेधपरत्वेन व्याख्यातम्। यद्गौणत्वमुक्तं तन्नेत्यर्थः। सर्गेति। गौणोऽर्थस्सर्गप्रागवस्था तत्र नियतपूर्वत्वलक्षण कार्यानुरूप्यं गुणयोगइत्यर्थः। आत्मशब्दादिति सौत्रेण पदेनाविशेषेण 'ऐतदात्म्यम्' 'स आत्मा' इति वाक्यद्वयगतात्मशब्दो विवक्षित इत्यभिप्रायेण वाक्यद्वयमुपात्तम्। सच्छब्दप्रतिपादितस्येति। ऐतदात्म्यमित्यत्र एतच्छब्दस्य आत्मेत्यत्र स इति पदस्य च प्रकृतपरामर्शित्वादितिभावः। आत्मशब्दोऽपि मृदात्मकोघटः घटस्य मृदात्मेतिवत् स्वरूपानतिरिक्तार्थस्स्यादित्यत्राह—एतदुक्तमिति। चेतनाचेतनप्रपञ्चोद्देशेनेति। 'इदंसर्वम्' इति सर्वशब्दासङ्कोचस्य स्वतःप्राप्तत्वात् 'सन्मूलास्सर्वाःप्रजाः' इति पूर्ववाक्यैकार्थ्यात् 'इदंसर्वमसृजत' 'सच्चत्यच्चाभवत्' 'विज्ञानंचाविज्ञानं च' इति श्रुत्यन्तरैकार्थ्याच्च, सर्वशब्दः चिदचिदात्मकजगद्गोचरइतिभावः। नाचेतनइति। नहि चेतनस्या*चेतनस्वरूपैक्यं संभवतीत्यर्थः॥

एवं गौणेक्षणसाहचर्यमभ्युपगम्य दूषणमुक्तम्। अथ तदेव नास्तीत्याह—अतइति। अतः चिदचिदात्मकप्रपञ्चस्यात्मत्वादित्यर्थः। किमर्थमीक्षणोपदेशरहितस्यान्नस्योपादानम्, उच्यते–ईक्षणोपदेशविरहनिबन्धनाब्रह्मात्मकत्वशङ्कानिराकरणार्थम्। अन्यथा सर्वस्य कार्यस्य ब्रह्मात्मकत्वानवगमादिदं सदिति सामानाधिकरण्यायोग्यत्वेनैकविज्ञानेन सर्ववि-

## गूढार्थसंग्रहः

ईक्षणव्यपदेशइति। ईक्षणबोधकः ईक्षतिधातुरित्यर्थः। दीपसारयोः 'ईक्षतिःगौण'इत्येवोक्तेः। धात्वर्थपरिशीलनेनैव मुख्यत्व गौणत्वविभागनिर्णयो भवतीत्यभिप्रेत्य ईक्षणव्यपदेश इत्युक्तम्। परैः 'आत्मशब्दात्' इत्यत्र आत्मशब्दः स्वरूपवचनः धर्मपरः स्वरूपत्वप्रतिपादकशब्दात्' इत्येकोऽर्थः। 'सेय देवतैक्षत अनेन जीवेनात्मना' इत्यत्र 'तत्त्वमसि' इत्यत्र च जीवस्य सत्स्वरूपत्व प्रतिपादितत्। 'ऐतदात्म्यमिद सर्वं तत्सत्य स आत्मा' इत्यत्र आत्मनः चेतनत्वं प्रतिपादितमिति 'आत्मशब्दात्' इत्यस्य चेतनत्वप्रतिपादकशब्दात् इत्यन्योऽप्यर्थ इत्यभिहितम्। तत्र 'तदैक्षत बहुस्या प्रजायेय' इत्यत्रेक्षतेः गौणत्वशङ्काया निरासः तद्वाक्यार्थानुरोधेनैव 'आत्मशब्दात्' इत्यत्र विवक्षितइति व्यासाशयः स्फुटं प्रतीयते। 'ऐतदात्म्यमिद सर्वं तत्सत्यं स आत्मा' इत्युपसंहारे सर्वशब्दः 'बहुस्याम्' इत्यत्र बहुशब्दैकार्थकः। तत्र सर्वस्य एतदात्मकत्वमुक्तम्। 'ऐतदात्म्यम्' इत्यत्र 'एषः आत्मा यस्य तत् एतदात्म एतदात्मैवैतदात्म्यं स्वार्थे ष्यञ् विवक्षित' इत्यर्थः जिज्ञासाऽधिकरण एव निरूपितः। अत्र ब्रह्मविद्याऽऽभरणपर्यालोचनं तत्रैव कृतम्।— 'ऐतदात्म्यम् इत्येतद्घटकात्मशब्दः 'सआत्मा' इत्यत्रात्मशब्दैकार्थकः। 'तदैक्षत' इत्यत्र नपुंसकलिङ्गतच्छब्द-

## श्रीभाष्यम्

### तेज प्रभृतयोऽपि शब्दाः

### श्रुतप्रकाशिका

ज्ञानप्रतिज्ञान नघटेत । अतस्तदुपादानेन प्रतिज्ञासिद्धयौपयिकमनुप्रवेशश्रुतिसिद्धमसत्स्य ब्रह्मात्मकत्वमिहानुषङ्गिक दर्शितम् । नहि किंचिदप्यतदात्मकमिति अपिशब्दाभिप्रायः * अतदात्मकत्वेनत्वदभिमतानामपीति वा । यदाश्रयतया प्रथममीक्षण मुख्य सदेवेत्येवकाराभिप्रायः । तेजःप्रभृतयोऽपीति । सच्छब्दवदित्यपिशब्दस्य भावः । लोके तेजःप्रभृतिमात्र

### गूढार्थसंग्रहः

निर्दिष्टार्थः 'तत्त्वमसि' इत्यत्र नपुंसकतच्छब्देनोक्तः । 'बहुस्याम्' इत्यत्र तेजआदिवत् जीवोऽपि विवक्षितः । 'तेषा खल्वेषा भूताना त्रीण्येव बीजानि भवन्ति आण्डज जीवजमुद्भिज्जचेति' इत्यत्र इतराविशेषेण जीवजमित्युक्तेः । 'ऐतदात्म्यमिदं सर्वम्' इत्यत्र सर्वशब्दे तेजोजीवादि सर्वं विवक्षितम् । तत्पूर्वं 'सन्मूलास्सोम्येमास्सर्वाःप्रजाः' (छा.६.८.४) इति द्विवारमभ्यस्तवाक्ये 'एवमेव खलु सोम्येमास्सर्वा प्रजास्सति संपद्य नविदुः' (६.९.२) 'एवमेव खलु सोम्येमास्सर्वाःप्रजास्सत आगत्य नविदुः' (६.१०.२) इत्येत्रव प्रजाशब्दस्य जीवपरत्वात् । एवच 'तत्त्वमसि' इत्यत्रोपक्रमोपसहारानुरोधेन श्वेतकेतुरपि सर्वशब्दान्तःपात्येव । तेन श्वेतकेतोःपरमात्मात्मकत्वेनैवाभेदव्यपदेश इति उपसहारे निर्णीयते । तेन 'बहुस्याम्' इत्युपक्रमेऽपि तदात्मकत्वेनैव बहुभेदः । 'अनेन जीवेनात्मना' इत्यत्रापि उपसहारे जीवस्य परमात्मात्मकत्वाभिधानेन तदनुसारेणात्मशब्दार्थो निर्णेयः । 'तत्तेज ऐक्षत' इत्यत्र तेजश्शब्दे परमात्मविवक्षायास्सर्वैरापि सिद्धान्तिभिरेषितव्यत्वात् । तत्र परैः 'तेजोरूपसस्थित सदैक्षतेत्यर्थः' (शा.उ.भा) 'तेजःपदेन तदधिष्ठान लक्ष्यते' (रत्नप्रभा) 'तेजआद्यवच्छिन्न ब्रह्मैव प्रतिपाद्यमिति' (ब्रह्मविद्याऽऽभरणे) इतिचोक्तम् । 'तेषा खल्वेषा भूतानाम्' इति प्राक् (जि.अ.९२४.पु) उदाहृत (शा.उ.भा, आ.गी.श्री) वाक्यानुसारेण शरीरसंबद्धजीवाना ब्रह्मकार्यत्वस्य विवक्षिततया 'अनेन जीवेन' इत्यत्र 'अनेन' इत्यनेन तेजआदिवत् ब्रह्मकार्यत्वस्य जीवेऽपि प्रतीत्या जीवस्यापि तेजआदितुल्यत्वमेव ॥

एवं च तेजोवत् जीवस्य ब्रह्मकार्यतायाः परेषामपि सम्मततया तेजआदिशब्दाना जीवशब्दस्यचैकरीत्यैव ब्रह्मबोधकत्वौचित्ये तत्परित्यज्य भिन्नरूपेण आत्मशब्दतात्पर्यकल्पन परेषामनादरणीयम् । परमतेऽपि 'जीवेनात्मना' इतिशब्दद्वयस्य लक्ष्यार्थपरत्वएवाभेदसङ्गतिः । परसमतलक्ष्यार्थपरत्वे गमक नास्ति । 'तेषा खल्वेषा भूतानाम्' इति पूर्ववाक्ये जीवशब्दप्रयोगः 'अनेन जीवेन' इत्यत्र जीवशब्दतात्पर्यनिर्णयार्थइति 'अनेन' इत्यनेन सूचितम् । तदपि नघटते। 'विकारो नामधेयम्' इत्यत्र प्रयुक्तविकारशब्द परित्यज्य रूपशब्दोपादान परमते विफलम् । 'ऐतदात्म्यम्' इत्यत्रात्मशब्दः उभयोरेकरूपेणाभेदनिर्णायकः । 'यतो वा इमानि भूतानि' इति श्रुतावपि ब्रह्मादिजीवाना परब्रह्मकार्यत्व परैरुपनिषद्भाष्य एव स्पष्टमुक्तम् । एव च अस्यामपि श्रुतौ अचिज्जीवयोः एकरीत्याऽभेदस्यैव विवक्षितत्वेन 'तत्त्वमसि' इत्यत्रापि अचिद्वदेवाभेदव्यपदेशः । श्वेतकेतोरपि सर्वान्तःपातित्वात् । 'ऐतदात्म्यम्' इत्येतद्वाक्यसहभाविनैव 'तत्त्वमसि' इति वाक्यस्य नवकृत्वोऽभ्यासात् 'आत्मशब्दात्' इत्यस्य एवमाशयनिर्णयो युक्तः । जीवमनु परमात्मप्रवेशस्याभिधानेन 'सेय देवता' इत्यत्र तच्छब्दस्य 'तमादेशम्' इत्यत्रेव देवशब्दाभिप्रायानुवृत्तिपरत्वेन 'अन्तःप्रविष्टश्शास्ता जनानाम्सर्वात्मा' इति श्रुत्यन्तरानुसारेण च 'सिंहेन भूत्वा सह ते मयाऽऽत्ताः' इत्यादिवत् जीवेन इति जीवशरीरकेणेत्यर्थकम् । आत्मशब्दार्थः पूर्वमेव निरूपितः ॥ तेजःप्रभृतयोऽपि शब्दाइति । 'यद्यपि सत्तामूर्तिवत्सप्तचिकरणे तेज-

## गूढार्थसङ्ग्रहः

आदिसृष्टिः त्रिवृत्करणमित्यादिकं च अध्यात्मक्तेः प्राकालिकम्। तदानीं जीवस्य शरीरसम्बन्धो नास्ति। नामरूपव्याकरणमपि त्रिवृत्करणानन्तरकालिकमित्येव प्रतीयते। अयमर्थः संज्ञामूर्तिक्लृप्त्यधिकरणभाष्ये स्फुटं वक्ष्यते। तथाऽपि अन्तर्यामिब्राह्मणाद्युक्तार्थ एव नामरूपव्याकरणश्रुतौ विवक्षितः। त्रिवृत्कृततेजोऽबन्नानां नामरूपव्याकरणश्रुतौ विवक्षा संभवति। 'तेषां सर्वेषां भूतानाम्' इत्यत्र त्रिवृत्कृतानां विवक्षा स्फुटा इत्यत्रिवृत्कृतानां त्रिवृत्कृतानां च भूतानामेकतया अन्तर्यामिब्राह्मणाभिसंधानेन च इत्थमुक्तिः। किंच सति समानप्रकरणस्थायाः 'सोऽकामयत बहुस्यां प्रजायेय' इत्यादितैत्तरीयश्रुतेरुदाहरणेन तत्र सद्वस्तुसामान्येऽनुप्रवेशस्याभेदप्रयोजकस्य स्फुटतया तेजआदिशब्दानामपि परमात्मपरत्वं सिद्ध्यतीति ध्येयम्

नवीनास्तु 'नच गौण आत्मा दृश्यो वाच्यश्च। न निर्गुणइति युक्तम्; आत्मशब्दात्' 'योगुणैस्सर्वतो हीनः यश्च दोषविवर्जितः। हेयोपादेयरहितः स आत्मेत्यभिधीयते ॥' 'नच मुख्ये संभवति अमुख्यं युज्यते' इतिभाष्ये 'यत ईक्षति श्रुतौ जीवाख्यो गौण आत्मा दृश्य उच्यते' इत्यादि तत्त्वप्रकाशिकायां, द्वितीयसूत्रे 'आत्मन्येवात्मानं पश्येत्' इत्यादौ 'आत्मा न गौणः आत्मशब्दात्' इति आत्मशब्दसामानाधिकरण्याय 'गौणश्चेत्' इति पुल्लिङ्गनिर्देशः। ईक्षतेरिति न धातुनिर्देशः किंतु तदर्थस्येति वदतः गौणश्चेति पुल्लिङ्ग क्लिष्टम् ईक्षणस्य पुल्लिङ्गनिर्देशात्। ईक्षतेरित्यस्य शब्दप्रामाणसाधकतया ज्ञानकर्मत्वस्यैव विलक्षणीयत्वात्। तस्य 'आत्मन्येव' इति वाक्येष्वपि सत्त्वेन तथामावि भाष्ये 'ईक्षति'सूत्रे उदाहृतत्वात्, (चन्द्रिकायां) इत्यादिक्रमेण द्वितीयसूत्रार्थं वदन्ति। अत्र 'बृहन्तोह्यस्मिन्गुणाः' इति श्रुत्या गुणपूर्णं ब्रह्मैव ब्रह्मशब्दमुख्यार्थः नतु जीवादिरिति नवीनैः पूर्वमुक्तम्। नच मुख्ये संभवत्यमुख्यं युज्यते' इति भाष्यवाक्येन गौणशब्दः अमुख्यपर इति प्रतीयते। गौणशब्दस्य निर्गुणशब्दप्रतिकोटितया लोके न प्रसिद्धिः। 'योगुणैस्सर्वतो हीनः' इति वचने गुणदोषसामान्यशून्यत्वमेव प्रतिपाद्यते। नतु सत्त्वादिगुणशून्यत्वम् तच्च परमते प्रसिद्धम्। पूर्वं विशिष्टस्य वाच्यत्वं शुद्धस्य लक्ष्यत्वमिति शङ्कितुस्तात्पर्यस्य नवीनैरुक्तया ईशस्य गुणवत्त्वं वाच्यत्वंचेति परासिद्धान्तेन जीवस्य गुणवत्त्वं नशङ्कितुमर्हम्। गौणशब्दस्य गुणिवाचकत्वमपि लोके न प्रसिद्धम्। 'गुणी' इत्यनिर्देशेन गौण इत्यत्र गुणवत्त्वं नाविवक्षितम्। तदर्थस्य विवक्षितत्वे 'श्रुतत्वाच्च' इति सूत्रे 'एको देवः—साक्षी चेता केवलो निर्गुणश्च' (श्वे. ६) इति श्रुतेः भाष्ये उदाहरिष्यमाणतया तस्याः पूर्वं परत्र च गुणिशब्दस्य सत्त्वेन सूत्रे तन्निर्देश एवकर्तव्यस्स्यात् निर्गुणशब्दे गुणसामान्यशून्यबोधके 'आत्म' शब्दमात्रेण सत्त्वादिगुणशून्यइत्यर्थः कथं सिद्ध्यति? आत्मशब्दप्रवृत्तिनिमित्तभूतानां गुणानां नवीनैरपि त्यागायोगेन गुणवाचवाच्यः अपितु निर्गुण इत्यर्थः कथं घटते? अतः गौणमुख्यशब्दयोः सर्वदर्शनेषु कोटिप्रतिकोटिभावाङ्गीकारेण 'ईक्षतिः' न गौणः किंतु मुख्यइत्येवार्थो युक्तः। 'ईक्षतेः' इति निर्देशे बीज प्रागेव प्रदर्शितम्। ईक्षतिघटितवाक्योत्तर उपक्रमोपसंहारयोरात्मशब्दो वर्तत इति न नवीनमतवदुपनिषदन्तरगवेषणकृतमस्वारस्यमपि वर्तते ॥

अत्र 'सच्छब्दाभिहिते ईक्षितरि' 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' इति श्रूयमाणात् चेतनवाचिनः—आत्मशब्दात्' इति दीपसूक्तिः। अयमाशयः 'तदैक्षत बहुस्यां प्रजायेय' इत्यत्र बहुभेदकर्मकेक्षणकर्ता सदुक्तः सएव 'ऐतदात्म्यमिदं सर्वम्' इत्यत्र सर्वस्यात्मत्वेनाभिहितः। आत्मशब्दश्चान्तर्यामिब्राह्मणे 'सत आत्माऽन्तर्यामी' 'एष त आत्माऽन्तर्यामी' 'अन्तःप्रविष्टश्शास्ता जनानाँ सर्वात्मा' इत्यत्र चेतनाचेतनोभयान्तःप्रवेशपूर्वकनियमनकर्तरि प्रसिद्धः। प्रधानस्य एतदात्मत्वं न संभवतीति ॥

'स्तब्धोऽस्युतमादेशमप्राक्ष्यः' इत्युपक्रमे प्रष्टव्यत्वेनोपदेशयोग्यत्वमभिधाय श्वेतकेतुप्रति स्वयमुपदिशता पित्रा

### श्रीभाष्यम्

परमात्मनएव वाचका । तथा हि 'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छा.६.३.२) इति परमात्मानुप्रवेशादेव तेजःप्रभृतीनां वस्तुत्वं तत्तन्नामभाक्त्वञ्चेति 'तत्तेज ऐक्षत' 'ताआप ऐक्षन्त' (छा.६.२.३—४) इत्यपि मुख्य एवेक्षणव्यपदेश । अतस्साहचर्यादपि 'तदैक्षत', इत्यत्र गौणत्वाशङ्का दूरोत्सारितेति सूत्राभिप्रायः ॥

इतश्च नप्रधानं सच्छब्दप्रतिपाद्यम्

### श्रुतप्रकाशिका

परत्वे व्युत्पन्ना अपीति वा । **परमात्मनएवेति** । विशेष्यतया प्राधान्येन प्रतिपाद्यः परमात्मैव तेजःप्रभृतयस्तु द्वारमात्रमिति भावः । परमात्मवाचित्वमुपपादयति **तथाहीति** । वस्तुत्व तद्रूपत्वत्व तेजसो वस्तुत्वं तेजस्त्व अपा वस्तुत्वमप्त्व पृथिव्या वस्तुत्व पृथिवीत्व देवमनुष्यादीना वस्तुत्व देवत्वमनुष्यत्वादिक तत्तदवस्थाभाक्त्वमित्यर्थः । **नामभाक्त्वं** नामवाच्यत्वम् ॥

ननु कथ परस्य नामव्याकर्तृत्वश्रवणान्नामवाच्यत्वसिद्धिः ? उच्यते '**तन्नामरूपाभ्यां व्याक्रियते**' इति समान वाक्ये व्याकृतत्वश्रवणात् । नाम्ना विशेषितत्वंहि नामरूपव्याकृतत्वम् । नामविशेषितत्व च नामवाच्यत्वरूपमिति प्रसिद्धम् नतु तदुत्पादकत्वमात्र, नह्याकाशस्य वा मातापित्रादेर्वा देवदत्तादिनामविशेषितत्वप्रसिद्धिः । अतो नामव्याकृतत्व नामवाच्यत्वम् । अतस्तदैकार्थ्यादिहापि नामवाच्यत्व विवक्षितम् । '**वचसां वाच्यमुत्तमम्**' इति चायमर्थ उच्यते, एवं तेजःप्रभृतिशब्दाना परमात्मवाचित्वोपपादनफलमाह—**इतितत्तेज ऐक्षतेति** । इतिशब्दो हेतुपरः । मुख्यत्वफलमाह—**अतइति** । अपिशब्दो गौणत्वशङ्काहेतुसमुच्चयपरः । इदशब्दवाच्यजगत्कारणत्वादिना गौणत्वशङ्का परिहृता गौणेक्षणसाहचर्याच्च गौणत्वशङ्का निरस्तेत्यर्थः । यद्वा त्वन्मतसाधकादपि त्वन्मतं निरस्तमिति भावः । **दूरोत्सारितेति** । गौणसाहचर्येसत्यपि सर्वशब्दतत्प्रतिसम्बन्धिवाचकात्मशब्दस्वारस्येन 'तदैक्षत' इत्यत्र गौणत्वाशङ्कोत्सारिता गौणसाहचर्यासिद्ध्या दूरोत्सारितेत्यर्थः । गौणेक्षणसाहचर्येसत्यपि आत्मशब्दात् प्रथमेक्षणमगौण, आत्मशब्दादेव गौणेक्षणसाहचर्यमसिद्धंचेत्यर्थ द्वय कथमेकेन वाक्येनोच्यत इत्यत्राह—**इतिसूत्राभिप्रायइति** । प्रतिज्ञादृष्टान्तयोर्हेत्वनाक्षेपकत्वं मुख्यामुख्यार्थानुग्राहकेषु मुख्यानुग्राहकस्यानुरोद्धव्यत्व चास्मिन्नधिकरणे व्युत्पाद्यमिति सूत्रद्वये स्पष्टम् ॥

अवान्तरसाध्यविषयत्वशङ्कां व्युदस्यचुत्तरसूत्रमवतारयति—**इतश्चेति** । ● कारणत्वौपयिकेक्षणधर्मनिरूपणेन परमात्मत्वं सतस्समर्थितम् अथ '**कारणंतु ध्येयः**' इति कारणवस्त्वसाधारणमोक्षप्रदत्वधर्मेण परमात्मत्वं साध्यतइतिसङ्गतिः

### गूढार्थसंग्रहः

'आचार्यवान्पुरुषो वेद' इत्युपसंहारे आचार्योपदेशेनैव ज्ञेयत्वं प्रतिपादितम् । सच प्रशासिता बहुमवनमीक्षिता च आत्मा पूर्वप्रस्तुतः सर्वान्तर्यामी 'आचार्यवान् पुरुषो वेद' इत्यत्र वेद्यत्वेन विवक्षितः । 'आचार्याद्धैव विदिता विद्या साधिष्ठ प्रापत्'इति (छां.४.९.३) 'आचार्यस्तुते गतिंवक्ता'(४.१४.१) इत्यत्र आचार्यस्य प्राक् यन्महत्वमुक्तं तदत्राप्यनुसन्धेयम् । 'आत्मस्य प्रभु कारयितारं नापश्यत् गुणैर्घिरह्यमानः' इति (जि.अ.७७२.पु) उदाहृतश्रुत्युक्तदिशा—अन्तर्यामिब्राह्मणे 'नान्योऽतोऽस्ति द्रष्टा' इत्यत्र नियन्तुर्नियन्त्रन्तर निषिध्यत इति वृत्तिकारसमतार्थं परित्यज्य एकात्मपक्षएव संमत इति वदतां एतत्खण्डार्थपरिशीलने शुद्धचितः ज्ञेयत्वमपि नघटते । एवमुपक्रमे स्वरूपपरिणामस्यैव दृष्टान्तै

श्रीभाष्यम्

## सू–७ तन्निष्ठस्य मोक्षोपदेशात् (१.१.७)

श्रुतप्रकाशिका

## सू–७ तन्निष्ठस्य मोक्षोपदेशात् (१.१.७)

तस्य तावत्' इति श्रुतौ तस्येति पदस्य व्याख्यानं सूत्रे तन्निष्ठस्येति पदमिति दर्शयंस्तच्छब्दनिष्ठाशब्दयोरर्थं विवृ-

गूढार्थसंग्रहः

तिपादनेन दार्ष्टान्तिकस्यापि स्वरूपपरिणामवतः ज्ञानमेवोपसंहारे विवक्षितमित्यपि न सम्भवतीत्याह–तन्निष्ठस्य मोक्षोपदे-शादिति। उपक्रमे दृष्टान्तोक्तार्थस्य 'सदेव सोम्येदमग्र आसीत्' इत्यत्र दार्ष्टान्तिके निरूपणमिति प्रागेव निरूपितम् अत्र 'यथा सोम्यैकेन सर्वं मृण्मयं विज्ञातंस्यात्' इत्यादिवाक्ये सर्वकार्याभेदः कारणे प्रदर्शितः। 'तदैक्षत बहुस्याम्प्र-जायेय' इत्यादावपि दार्ष्टान्तिके सर्वकार्याभेदः तदीक्षणमुखेन निरूप्यत इति स्फुटम्। एवंस्थिते 'तमादेशम्' 'सदेव' 'तदैक्षत' 'ऐतदात्म्यमिदं सर्वम्' 'स आत्मा' इत्यत्र आदिष्टो बहुभवनेक्षणकर्ता आत्मा यः तस्य ज्ञानमेव 'आचार्य-वान्पुरुषो वेद' इत्यत्र विवक्षितम्। एवं च पूर्वसूत्रोक्तदिशा बहुभवनेक्षणकर्तृ आत्मत्वस्य प्रधाने यदाऽसम्भवः तदा 'आचार्यवान्पुरुषो वेद' इत्यत्र तस्य ज्ञेयत्वेऽपि तात्पर्यं न सम्भवति। अथ च श्रुतिक्रमः–'यथा सोम्य पुरुषं गन्धा-रेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत् स यथा तत्र प्राङ्वोदङ्वाऽधराङ्वा प्रत्यङ्वा प्रध्मायीताभिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टः॥ १॥ तस्य यथाऽभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति स ग्रामा-द्ग्रामं पृच्छन् पण्डितो मेधावी गन्धारानेवोपसम्पद्येत एवमेवेहाचार्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये इति' (छां.६.१४.१,२) इति॥

अत्र सूत्रे तन्निष्ठस्य इति 'तस्य तावदेव चिरम्' इति श्रुतौ तच्छब्दतात्पर्येण प्रयुक्तम्। अत्र सूत्रे 'सन्निष्ठस्य' इत्यनभिधाय तन्निष्ठस्य इत्युक्तिः उक्तदिशा 'उत तमादेशमप्राक्ष्यः' इत्यत्र स्वरूपपरिणामिकारणबोधनमुखेन पूर्वपक्ष-सूचनार्थं 'तमादेशमप्राक्ष्यः' 'तदैक्षत बहुस्याम्' 'सेयं देवतैक्षत' इत्यत्र तच्छब्दानामेकार्थकत्वबोधनमुखेन सिद्धान्तसू-चनार्थं च। 'तमादेशम्' इत्युपक्रमोक्ते दार्ष्टान्तिके 'तदैक्षत बहुस्याम्' 'सेयं देवतैक्षत' इति वाक्यद्वयेनैव कार्य-कारणयोरभेदनिर्धारणेन स्वरूपपरिणामिकारणं नात्र विवक्षितम्। 'तत्त्वमसि' इत्यत्र उपक्रमोक्तब्रह्मभेदवदेवाभेदो विवक्षितः उपक्रमोपसंहारयोःसर्वत्रावस्थाभेदेऽपि धर्म्यैक्येनैवाभेदव्यपदेशः एकरूप इति सिद्धान्तस्यैव युक्तत्वात्। परमते दृष्टान्ते कारणव्यतिरेकेण कार्यं नास्ति। 'ऐतदात्म्यमिदं सर्वम्' इत्यत्र बाधायां सामानाधिकरण्यं 'तत्त्वमसि' इत्यत्राखण्डार्थ सामानाधिकरण्यमित्यनेकप्रकारकल्पनं श्रुतितात्पर्याननुगुणमित्येतेन बोधितम्। श्रुतौ पूर्वतच्छब्दसामान्यविवक्षितार्थज्ञानितात्प-र्यक तस्येति। सूत्रे तच्छब्दः बहुभवनेक्षित्रात्मशब्दार्थं परामृशति। तस्यैव पूर्वसूत्रप्रस्तुतत्वात्। 'आचार्यवान्पुरुषोवेद' इत्यत्र वेदनवतः मोक्षोक्तया तन्निष्ठस्य इत्यत्र ईक्षितृपुरुषात्मज्ञानवानेव विवक्षित.। तज्ज्ञस्येत्यनभिधाय तन्निष्ठस्ये-त्युक्तिः 'आचार्यवान्पुरुषो वेद' इत्यत्र वेदनं उपासनरूपमेवेति व्यञ्जनाय 'यावन्न विमोक्ष्ये' इत्यनेन प्रारब्धकर्ममोक्ष-कालपर्यन्तं ज्ञानसत्ताप्रतीत्या वेदनमुपासनरूपमेव विवक्षितमिति सूत्रकाराशयः। अयमर्थः 'भोगेन त्वितरे क्षपयित्वाऽथ

## श्रीभाष्यम्

**मुमुक्षोश्श्वेतकेतोः ' तत्त्वमसि ' (छां.६.८.७) इति सदात्मकत्वानुसन्धानमुपदिश्य तन्नि-**

## श्रुतप्रकाशिका

ष्ठस्य सूत्रार्थमाह—मुमुक्षोरिति । अर्वाचीनफलकदृष्टिविधिसंभवात् चेतने कृत्स्नजगदुपादानतयोत्कृष्टप्रधानदृष्टिविधिरियमिति शङ्का मुमुक्षोरितिपदेन व्युदस्ता । तत्त्वमसीति सदात्मकत्वानुसन्धानमुपदिश्येति । सदात्मकत्वोपदेशवाक्यगतस्तच्छब्दः प्रकृतसद्विषय इति ज्ञानपरसूत्रे तच्छब्द इत्यभिप्रायेण सदात्मकत्वेत्युक्तम् । अनुसन्धानशब्देन निदिध्यासनशब्दार्थ उक्तः ॥

## गूढार्थसंग्रहः

संपत्स्यते ' इति सूत्रेऽपि स्फुटीकरिष्यते ॥

तत्सूत्रे वेदान्तदीपे—' यावन्नविमोक्ष्ये ' इत्यत्र संपत्तिप्रतिबन्धकपुण्यपापकर्मसामान्यक्षयः विवक्षित इति स्फुटम् । अत्र श्रुतौ ज्ञानवतः बन्धविमोचनान्तरं देशाद्देशान्तरगमनस्य दृष्टान्ते प्रतिपादनेनानन्तरखण्डे ' वाङ्मनसि संपद्यते ' इत्याद्युक्त्या अत्रापि देशाद्देशान्तरगमनं विवक्षितमिति तात्पर्येण 'अथ' शब्दः । आनन्तर्यं च व्यवधानसहमिति उत्क्रान्तिगतिपादाभ्यां सूत्रकारः स्थापयिष्यति । संपत्तिप्रतिबन्धकसामान्यक्षयस्य गतिमन्तरा असम्भवात् इत्यादिकं चतुर्थाध्याये व्यक्तीभविष्यति । ' पुरुषं सोम्योत हस्तगृहीतमानयन्त्यपहार्षीत्स्तेयमकार्षीत्परशुमस्मै तपतेति सयदि तस्य कर्ताभवति ततएवानृतमात्मानं कुरुते सोऽनृताभिसन्धोऽनृतेनात्मानमन्तर्धाय परशुतप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यते ॥ १ ॥ अथ यदि तस्याः अकर्ता भवति ततएव सत्यमात्मानं कुरुते सक्त्याभिसन्धः सत्येनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स नदह्यतेऽथ मुच्यते । सयथा तत्र नदह्येतैतदात्म्यमिदं सर्वम्' (छां.१६.१,२,३) इत्यादिवाक्यं जीवान्तर्यामिस्येयात्म्याभिसन्धिविषयम् । बहुमवनमीक्षितुः जीवस्याप्यन्तर्यामिणः ' आचार्यवान्पुरुषो वेद ' इत्यत्र विवक्षितत्वेन ' तत्त्वमसि—श्वेतकेतो' इत्यत्रापि श्वेतकेतोः 'ऐतदात्म्यमिदं सर्वम्' इत्यत्रोक्तसर्वान्तर्याम्यात्मकत्वमेव विवक्षितमिति निर्णीयते । ' हन्ताहमिमाः ' इत्यत्र सृष्टेर्दयामूलकत्वं विवक्षितमिति मैत्रायणीयश्रुत्युक्तार्थस्य अत्रापि विवक्षितत्वेन उभयोरैक्यज्ञानवान्चोरः अनृताभिसन्धिः ' इति निश्चयसम्भवात् । एतेनात्र परसम्मतार्थः (शं.भा) नघटत इति सिद्धम् । राजकुमारनयोऽपि सिद्धान्त एवानुकूल इति प्रागेव निरूपितम् ॥

नवीनैरपि 'उक्तं च विष्णुतत्त्वनिर्णये ' घातयन्तीह राजानो राजाऽहमिति वदन्तम् , ददाति च सर्वमभिप्रेतं गुणोत्कर्षं वदतः ' इत्याद्युक्तम् । ' तत्त्वमसि ' इत्यत्राप्यन्तर्यामिणः विवक्षितत्वस्य प्रागेव बहुषु स्थलेषु निर्णयेन ' द्वासुपर्णा ' इति ऋग्वेदश्रुत्यनन्तरं ' तद्योऽस्यः पितरं नवेद ' इत्यत्र पितुः ज्ञानाभावे पितृप्राप्त्यभावबोधनेन ' तत्त्वमसि ' इत्यत्रापि पितृप्राप्तिहेतुभूतस्य पितृज्ञानस्य विवक्षितत्वेन 'आचार्यवान्पुरुषो वेद' इत्यत्रोक्तज्ञानस्यैवाभिप्रेतत्वेन 'अथ संपत्स्ये' इत्यत्र उत्क्रान्तिगतिद्वारा तत्सम्पत्तेरेव प्रतिपादनेन जगत्कारणस्यैवान्तर्यामितया तस्यैव प्राप्यत्वेन ' आनन्दाद्ध्येव खल्विमानि ' ' आनन्दं प्रयन्ति ' इति श्रुत्युक्तानन्दप्राप्तिरपि तन्निष्ठस्य इति पदेन सूचिता कारणस्य फलत्व एव तत्र नितरांस्थितिः नान्यथा । अन्यस्य फलत्वे तदपेक्षया प्रवृत्त्या कारणे नितरां स्थित्ययोगात् अयमर्थः ब्रह्म सम्पत्तिलक्षणो मोक्ष — इत्यत्र विवक्षितः ब्रह्मणः आनन्दरूपत्वस्य पूर्वमुपपादनात् । एतेन उपादानकारणस्य ब्रह्मणः फलत्वेनोपादेयत्वमेतत्सूत्रेण प्रतिपादितं भवति । प्रधानस्यात्र प्रतिपाद्यत्वे प्रधाननिष्ठस्य मोक्षोपदेशो नसम्भवतीति भावः । तदेतत्सर्वमभिप्रेत्याह—मुमुक्षोश्श्वेतकेतोः इत्यादि ॥

## श्रीभाष्यम्

**श्वेतकेतुम्य 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' (छा० ६.१४.२) इति शरीरपातमात्रान्तरायो ब्रह्मसंपत्तिलक्षणो मोक्ष इत्युपदिशति।**

## श्रुतप्रकाशिका

इहोपदेशस्यानुसन्धानार्थत्वं कथमवगतम्। उच्यते—उपक्रमे 'येनाश्रुतं श्रुतं भवति अमतं मतमविज्ञातं विज्ञातम्' इति श्रवणमननसमनन्तरभाविविज्ञानशब्द उपासनपरः 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यनेनैकार्थ्यात्। उपसंहारेच 'तद्धास्य विजज्ञौ' इति तत्तुल्यार्थे • विजिज्ञाविति पदमावर्तितम्। मध्येऽपि 'आचार्यवान्पुरुषो वेद' इत्याचार्यवत्तासहत्वेन प्रतिपादितार्थविशेषवेदनवचनमाचार्योपदिष्टार्थस्या•नुसंधेयत्वे लिङ्गम्। एवमेभिःकारणैरस्यात्मकत्वोपदेशस्योपासनार्थत्वावगमः। शरीरपातमात्रान्तरायइति। अन्तरायशब्देन विलम्बो लक्ष्यते। शरीरपातावधिविलम्ब इत्यर्थः। 'यावन्नविमोक्ष्ये' इत्युक्ते कथं शरीरान्मोक्षसिद्धिः, उच्यते। मोक्ष इत्युक्ते कस्मान्मोक्ष इति बन्धकं किंचिदाकाङ्क्षितम् तच्च किमित्यपेक्षायामस्यामेव विद्यायां 'अथ यदाऽस्य वाङ्मनसि सम्पद्यते' इत्यादिना देहादुत्क्रमणश्रवणात् अन्यत्र च, 'अस्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य' 'धूत्वा शरीरम्' 'अशरीरंवाव सन्तं न प्रियाप्रिये स्पृशतः' इति श्रवणात् 'त्यक्त्वा देहं पुनर्जन्मनैति' इत्यादिश्रवणाच्च, • शरीरमित्यवगम्यते ब्रह्मसम्पत्तिलक्षणइति। 'अथ सम्पत्स्ये' इति संपत्तेः 'सता सोम्य तदा संपन्नो भवति' इति वाक्यान्तरप्रतिपन्नं ब्रह्मैव कर्मेति भावः॥

## गूढार्थसंग्रहः

श्वेतकेतोः 'तस्य तावदेव चिरं यावन्नविमोक्ष्ये' इत्यत्र वक्ष्यमाणमोक्षेच्छाभावे उपदेश एव नसंभवतीति मोक्षेच्छया 'आचार्यवान्पुरुषो वेद' इत्यत्रोक्तमोक्षसाधने प्रवृत्तिरवश्यमङ्गीकरणीया। श्रुतौचास्यां प्रारब्धकर्मक्षयो विवक्षितइति सर्वसंमतम्। तेन कर्मक्षय एव मोक्षः नतु परसंमताविद्याक्षयः। परमते आत्माऽन्यत्वेन तस्य कर्मणः अपरोक्षज्ञानानन्तरमविद्यानाशे प्रारब्धकर्मणः स्थितिरेव न संभवति। अविद्यानिवृत्तेः चरमवृत्तिरूपत्वे मोक्षेच्छया तत्साधने प्रवृत्तिर्न संभवतीत्यादिकं प्रागुक्तं सर्वमभिप्रेत्य मुमुक्षोरित्याद्युक्तम्॥

अत्र भाष्य,दीप,सारेषु सदात्मकत्वानुसन्धानशब्द एव प्रयुक्तः। ननु 'तदात्मकत्वानुसन्धानवतः' इति। सूत्रे तच्छब्दप्रयोगपर्यालोचने तदात्मकत्वानुसन्धानमिति वक्तव्यं भवति। तत्रचार्थविशेषः प्रागेवाभिहितः। 'तदैक्षत' इत्यतःपूर्वं 'सदेव सोम्येदमग्र आसीत्' इति वाक्यसत्वेन तस्यैव 'मृत्तिकेत्येव सत्यम्' इत्यत्र दृष्टान्ते 'इदं घटशरावादिकं पूर्वाह्णे मृत्तिकैवासीत्' इति अभेदप्रतीतितुल्यप्रतीतेः विवक्षितत्वेन तदनन्तरवाक्यानामेतदर्थोपपादकत्वेन दार्ष्टान्तिके अभेदोपपादकवाक्येषु प्राथम्यतात्पर्येण 'सदात्मकत्वानुसन्धान' इत्युक्तम्। एवं 'तत्वमसि' इत्यत्र 'तत् तस्मात् सर्वस्य एतदात्मकत्वात् त्वं असि सताऽऽश्रयः' इति श्रुतावर्थान्तराभिप्रायेणापि सदात्मकत्वानुसन्धान इत्युक्तम्॥

'प्राप्ते शरीरभेदे चरितार्थत्वात्प्रधानविनिवृत्तौ। ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति' (सा.का.६८)इत्यत्र ईश्वरकृष्णेन 'तस्य तावदेव चिरम्' इति श्रुत्यर्थोऽपि स्वमतेन दर्शित इति प्रतीयते। उत्तरार्धे 'अथ संपत्स्ये' इति भागार्थं उक्तः। 'अथ संपत्स्ये' इत्यस्यार्थः 'अस्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य' इत्यत्र निर्णीतः। अत्रापि वाक्ये 'आचार्यवान्पुरुषो वेद' इत्यत्र वेदनकर्म यत् तदेव संपत्तिकर्मेति विवक्षितम्। इत्थमर्थमभिप्रेत्यैव ब्रह्मसम्पत्तिलक्षणो मोक्षइति इति भाष्ये उक्तम्। मुक्तौ प्रधानसम्पत्तेरसम्भवेन प्रधानस्यानुपादेयत्वं पूर्वसूत्रे विवक्षितम्। अथमुक्ति

### श्रीभाष्यम्

यदि च प्रधानमचेतनं कारणमुपदिश्येत ; तदा तदात्मकत्वानुसन्धानस्य मोक्षसाधनत्वोपदेशो नोपपद्यते । ' यथाक्रतुरस्मिन्लोके पुरुषो भवति तथेतःप्रेत्य भवति ' (छा.३.१४.१) इति तन्निष्ठस्याचेतनसंपत्तिरेवस्यात् नच मातापितृसहस्रेभ्योऽपि वत्सलतरं शास्त्रमेवंविधतापत्रयाभिहतिहेतुभूतामचित्सम्पत्तिमुपदिशति । प्रधानकारणवादिनोऽपि हि प्रधाननिष्ठस्य मोक्षं नाभ्युपगच्छन्ति ॥ इतश्च न प्रधानम्

## सू–८ हेयत्वावचनाच्च (१.१.५)

### श्रुतप्रकाशिका

मोक्षइति । सौत्रस्य मोक्षशब्दस्य शरीरपातपूर्विका ब्रह्मसंपत्तिरेवार्थः नतु शरीरपातमात्रमित्यभिप्रायः । ततः किं प्रधानवैलक्षण्यस्येत्यपेक्षाया मुमुक्षोरिति पदेनाभिमतं विवृणोति । यदिचेति । कथमनुपपत्तिः तीर्थक्षेत्रसेवादिवदचिदुपादानस्य मोक्षोपयोगित्वं शास्त्रबलात् किंनस्यादिति शङ्कायामाह–यथाक्रतुरिति । उपासनानुरूपफलभाक्त्वं श्रुत्यर्थः । ततश्च हेयोपासनाद्धेयप्रहाणानुपपत्तिः, अचेतनसम्पत्तिः अचित्प्राप्तिः संसारित्वं । कर्तृताऽचित्संबन्धोहि संसारः * संपत्तिशब्दस्य प्राप्तयर्थत्वं तापत्रयाभिहतिहेतुभूतामचित्संपत्तिमित्यनन्तरभाष्येण व्यक्तम् । अचेतनसंपत्तिरस्तु ततःकिमित्यत्राह—नचेति अत्र ' शास्त्रंहि वत्सलतरं मातापितृसहस्रत ' इति पुराणवचन स्मारितम् मातापितृसहस्रेभ्यइति । मातापितरावेकस्मिन्जन्मन्यैहिकपोषणमात्रपरौ शास्त्रन्त्वनेकेषु जन्मसु ऐहिकामुष्मिकसर्वविधलक्षणपरमिति भावः । तापत्रयेति । शास्त्रस्य प्रयोजनपर्यवसानं नस्यादित्यभिप्रायः । एवं श्रुतिसिद्धन्यायविरोधप्रयोजनपर्यवसानाभावाभ्यां मोक्षोपयोगित्वं निरस्तम् । अस्मिन्नर्थे परमतसंवादं दर्शयति प्रधानकारणेति । प्रधाननिष्ठस्येति । ' व्यक्ताव्यक्तविज्ञानात् ' इति वदताऽपि साङ्ख्येन प्रधानस्य व्याधेरिव परिज्ञानमात्रं विवक्षितं नतूपासनमिति भावः ॥

ननु ' तत्त्वमसि ' इति सदात्मकत्वानुसन्धानोपदेशः किंतु 'स्थूलोऽह'मित्यादिदेहात्मभ्रमानुवादः । अतस्सच्छब्दवाच्याचेतनस्य मुमुक्षुणा ज्ञातव्यत्वं हानार्थमिति शङ्काया अनन्तरसूत्रसङ्गतिमभिप्रयन्नाह—इतश्चेति ।—

## सू–८ हेयत्वावचनाच्च [१.१.५]

### गूढार्थसंग्रहः

काले प्रधानस्य विनिवृत्तेः ईश्वरकृष्णेनाभिधानेन हेयत्वमुक्तप्रायम् । ' द्रष्टृदृश्ययोस्संयोगो हेयहेतुः ' (यो.सू.२.१७)'द्रष्टा दृशिमात्रश्शुद्धोऽपि प्रत्ययानुपश्यः (१७) तदर्थएव दृश्यस्यात्मा (२०) स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुस्संयोगः '(२३ ' तस्य हेतुरविद्या ' (२४) ' तदभावात्संयोगाभावो हानम् तद्दृशेःकैवल्यम् ' (२५) ' ततःकृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ' (४.३२) ' पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यम् स्वरूपप्रतिष्ठावाचितिशक्तिरिति (४.३४) इति योग(सांख्यप्रवचन) सूत्रेषु प्रकृतेः हेयत्वं मुक्तिकाले तदसम्बन्धश्च स्फुटः । सद्विद्यायामुपादानस्य ब्रह्मणः उपादेयत्वस्य कथनाद्धेयत्वाकथनाच्च प्रधानभिन्नं ब्रह्मैव सद्विद्यायां विवक्षित न प्रधानमित्याशयेनाह— इतश्च नप्रधानमित्यादि । अत्र सारे ' हेयत्वादध्येयत्वमुच्येत ' इति सूक्तौ अस्मिन्सूत्रे प्रधानस्याध्येयत्वापादनमपि विवक्षितमित्युक्तम् । ' चशब्दः ', पूर्वसूत्रोक्तहेतुसमुच्चायकः ॥

### श्रीभाष्यम्

यदि प्रधानमेव कारणं सच्छब्दाभिहितं भवेत् तदा मुमुक्षोश्श्वेतकेतोस्तदात्मकत्वं मोक्षविरोधित्वाद्धेयत्वेनैवोपदेश्यं स्यात्। नच तत्क्रियते, प्रत्युतोपादेयत्वेनैव 'तत्त्वमसि' (छा०६.८.७) 'तस्य तावदेव चिरम्' (७.१४.२) इत्युपदिश्यते ॥

इतश्च न प्रधानम्

## सू.९—प्रतिज्ञाविरोधात् [१.१.५]

प्रधानकारणत्वे प्रतिज्ञाविरोधश्च भवति। वाक्योपक्रमेह्येकविज्ञानेन सर्वविज्ञानं

### श्रुतप्रकाशिका

न परंप्रत्यानुकूल्याभावमात्रं किंतु प्रातिकूल्यं चास्तीत्याह—प्रत्युतेति। स्थूलोऽहमित्याद्यनुसन्धानस्येव न सदात्मकत्वानुसन्धानस्य हेयत्वं प्रतिपाद्यते अपितूपादेयत्वमेवोच्यते तच्च प्रधानपरत्वेऽनुपपन्नम्। 'अनादिमायया सुप्तः' मायया सन्निरुद्धः' 'अनीशया शोचति मुह्यमानः' 'जहात्येनां भुक्तभोगामजोऽन्यः' इत्यादिषु प्रधानप्रस्तावेषु तस्य हेयत्वेनैव प्रतिपादनादित्यर्थः। * एवं 'तदैक्षत' इत्यादिवाक्यप्रभृतितदुपरितनवाक्यावगतहेतव उक्ताः तेषां समाप्तौ च शब्दःप्रयुक्तः। * उपादेयतोत्त्यनुपादेयतानुक्त्योस्सूत्रद्वयप्रतिपादितयोरन्वयव्यतिरेकात्मना परस्परसङ्गतयोरेकीकारार्थ इह चशब्दः अतएवहि प्रत्युतेत्यादिना पूर्वसूत्रार्थनिगमनं कृतम् ॥

अथोपक्रमविरोधेसत्युत्तरवाक्यगतहेतूनां दौर्बल्यात् प्रधानमेव प्रतिपाद्यमिति शङ्कां परिहरति—

## सू=९ प्रतिज्ञाविरोधात् [१.१.५]

### गूढार्थसंग्रहः

हेयत्वेनैवोपदेश्यमिति। प्रकृतेः हेयत्वं साङ्ख्यसम्मतमिति प्रागुपपादनेन तदात्मकत्वमपि हेयमेवेति भावः। जगत्कारणतायाः परमतेऽपि हेयत्वेन कारणत्वेन सच्छब्दाद्युक्तब्रह्मणोऽपि हेयत्वेन उपादेयत्वं नसंभवतीति इदमपि सूत्रं परमते प्रतिकूलमेव ॥

प्रतिज्ञाविरोधात्। पूर्वपक्षिणः दृष्टान्तः स्वरूपपरिणामप्रतिपादनेन प्रधानकारणत्वानुकूलः। प्रतिज्ञाऽनन्तरं दृष्टान्तविचारः, प्रतिज्ञायाः प्रधानकारणत्वविरुद्धत्वे ब्रह्मकारणत्वानुकूल्ये दृष्टान्तोऽप्यवस्थाभेदेऽपि धर्म्यैक्येनान्तर्यामित्वपरिणामेन अनुकूलो भवति। एवमत्र प्रतिज्ञादृष्टान्तयोः ब्रह्मकारणत्वानुकूल्यमभिप्रेतम्। अत्र प्रतिज्ञाविरोधमात्रमुक्तम्। प्रकृत्यधिकरणे प्रतिज्ञादृष्टान्तानुपरोधः वक्ष्यते। तत्र नैयायिकमतेन विशेषतः पूर्वपक्षे तन्निरसनेनैतत्सूत्रार्थविशदीकरणम्। परिणामात् इत्यादौ परिणामिकारणत्वस्थापनच। अत्र परैः हेयत्वावचनाच्च इतिचशब्देन प्रतिज्ञाविरोधस्समुच्चीयत इत्युक्तम्। प्रतिज्ञाविचारस्य पूर्वप्रस्तुततया अस्य चशब्दार्थत्वं कथम्? उपादेयत्वहेयत्वाभावयोः क्रमेणोक्तौ ब्रह्मणः उपादेयत्वोपदेशस्य चशब्देन समुच्चयो युक्तः। उपक्रमे प्रतिज्ञाया योऽर्थ उक्तः सएव 'तत्त्वमसि' इत्यत्र वक्तव्यः। परमते प्रतिज्ञायामभेदः 'तत्त्वमसि' इत्यत्राभेदश्च नैकरूप इत्युपक्रमोपसंहारयोरैकरूप्यविरहेण प्रतिज्ञाविरोधो दुर्वारः। सिद्धान्ते तु

## श्रीभाष्यम्

**प्रतिज्ञातम्। तच्च कार्यकारणयोरनन्यत्वेन कारणभूतसद्विज्ञानात्तत्कार्यभूतचेतनाचेतनप्रपञ्चस्य ज्ञाततयैवोपपादनीयम्। तत्तु प्रधानकारणत्वे चेतनवर्गस्य प्रधानकार्यत्वाभावात् प्रधानविज्ञानेन चेतनवर्गविज्ञानासिद्धेर्विरुध्यते ॥**

## श्रुतप्रकाशिका

कस्मिन्नर्थे विरोध इत्यपेक्षा पूरयन्व्याचष्टे। प्रधानकारणत्वइति। स्वमतानुगुणत्वेन यदुक्तं तदेव त्वन्मतप्रतिकूलमिति सूत्रकारहृदयमिति भावः। कथमित्यत्राह—वाक्योपक्रमेहीति। प्रतिज्ञावाक्ये सर्वशब्दाभावेऽपि ‘कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति’ ‘आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वविज्ञातम्’ इति समानप्रकरणवाक्यैकार्थ्यात्, ‘सर्वाः प्रजाः’ इति वक्ष्यमाणस्वारस्याच्च सर्वविज्ञानं प्रतिज्ञातमित्युक्तम्। नच सर्वं मृण्मयमितिवत् कार्यभूतसर्वाचिद्विज्ञानमेव सर्वविज्ञानमितिवाच्यम्; ‘सन्मूलास्सोम्येमास्सर्वाःप्रजाः’ इति सर्वशब्दसमानाधिकरणप्रजाशब्दस्वारस्यावगतानां सन्मूलतया ज्ञातव्यसर्वकार्यान्तर्भावादिति भावः। ततःकिमित्यत्राह—कार्यकारणयोरनन्यत्वेनेति। नहि चिदचितोरनन्यत्वमितिभावः॥

नन्वन्यत्वेप्येकविज्ञानात् सर्वविज्ञानं घटते, पृथिव्यादीनां कार्यतया चिदंशस्याकार्यतया च ज्ञानसम्भवादित्यत्राह तत्कार्यभूतचेतनाचेतनप्रपञ्चस्येति। मृत्पिण्डतत्कार्यादिदृष्टान्तबलात् ‘सन्मूलास्सर्वाःप्रजाः’ इति वाक्ये प्रजाशब्दस्वारस्याच्च चेतनस्यापि कार्यतयैव ज्ञातत्वं वक्तव्यमितिभावः। ज्ञाततयैवोपपादनीयमिति। देवदत्तज्ञानेन ग्रामविज्ञानवन्नात्र सर्वविज्ञानमौपचारिकं औपचारिकत्वे सर्वविज्ञानस्य लोकदृष्टेन कथन्नु भगवइति प्रश्नायोगात् अनन्यभूतमृत्तत्कार्यादिदृष्टान्तमुखेन मुख्यतयैव सर्वविज्ञानोपपादनदर्शनाच्चेति भावः। उक्तविपर्ययेण प्रतिज्ञाविरोधं दर्शयति—तत्त्विति॥

## गूढार्थसंग्रहः

प्रतिज्ञादृष्टान्तानुरूप्यं जिज्ञासाऽधिकरणादावेव सम्यङ्निरूपितम्। चेतनवर्गस्येति। अत्राचिज्जीवयोरुभयोः ब्रह्मकार्यतया प्रतिपन्नयोः एकरूपेणाभेदानुक्तेः परमतेऽपि प्रतिज्ञाविरोधोऽभिप्रेतः॥

प्रथमसूत्रे—बहुभेदादेरीक्षतृत्वेन प्रधानव्यावृत्तिः। द्वितीयसूत्रेण अन्तःप्रविश्य नियन्तृबोधकात्मशब्देन नामरूपव्याकरणस्येक्षितृत्वमपि बहुभेदेक्षितृत्वस्य स्थापकं दृढीकृतम्। अनन्तरं दार्ष्टान्तिकं प्रशासितरि सर्वाभेदः यः ‘सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्’ इत्यत्र प्रळयकाले दृष्टान्तानुसारेण (‘इदं घटशरावादिकं पूर्वाह्णे मृत्तिकैवासीत्’ इत्याकारकेन) तस्य नामरूपनिबन्धनबहुत्वप्रतिकोटिभूतैकत्वप्रतिपादनमुखेन निर्धारणेन प्रधाने अचिज्जीवाभयाभेदासम्भवेन प्रधानव्यावृत्तिः प्रदर्शिता। सिद्धान्ते प्रतिज्ञाऽऽनुकूल्यप्रदर्शनेन ‘प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः’ इति सूत्रे स्वरूपपरिणामपरप्रतिज्ञेति वक्ष्यमाणाश्मरथ्यमतमेव व्याससम्मतमिति भ्रमस्स्यात्, तन्निरसनार्थं स्वाप्ययात् इति सूत्रम्। यथा ‘सुदीप्तात्पावकात् विस्फुलिङ्गास्सहस्रशः प्रभवन्ते सरूपाः। तथाऽक्षराद्विविधास्सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति’ (मु. द्वितीयमुण्डके १. मन्त्रः) इति श्रुतिः सृष्टिप्रळयप्रतिपादनपरा। अत्र भावाः जीवाः इत्युपनिषद्भाष्ये परैरपि व्याख्यातम्। अत्र ‘सरूपाः’ इत्यनेन कार्यकारणयोर्नैक्यमपितु एकरूपवत्त्वमित्युक्तम्। ‘सुदीप्तात्पावकात्’ इतिकारणे प्रकाशाधिक्यं कार्यप्रकाशन्यूनत्वं च दृष्टान्ते उक्तम्। ‘यथा तथे’त्यनेन दार्ष्टान्तिकेऽपि प्रमास्थानापन्नधर्मभूतज्ञानविकासाऽधिक्यं ब्रह्मणि विकासन्यूनत्वं जीवे विवक्षितमिति प्रतीयते। प्रवेशप्रशासनयोः अन्तर्यामित्वबोधकत्वेनान्तर्या

श्रीभाष्यम्

इतश्च न प्रधानम्

## सू.१०—स्वाप्ययात् (१.१.९)

तदेव सच्छब्दवाच्यं प्रकृत्याऽऽह–' स्वप्नान्तंमे सोम्य विजानीहीति यत्रैतत्पुरुषस्स्वपितिनाम

श्रुतप्रकाशिका

एकविज्ञाने सर्वविज्ञानप्रतिज्ञान कार्यकारणभावनिबन्धन सुषुप्तौ परमात्मनि चेतनस्य प्रळयश्च तन्निबन्धन इति कार्यकारणभावनिबन्धनत्वसाम्यात् सङ्गत सुषुप्तौ लय हेतुत्वेनाहेत्यभिप्रायन्नाह—इतश्चेति ।—

## सू.१०—स्वाप्ययात् (१.१.९)

गूढार्थसङ्ग्रह

भिन्नस्य जीवज्ञानविकासार्थत्वेन दयामूलकत्व 'हन्ताहमिमा.' इतिश्रुतौ 'हन्त'त्यत्र विवक्षितम् । एतच्च ' औपनिषदपरमपुरुष' इति श्रीसूक्तिविवरणावसरे जिज्ञासाऽधिकरणे (२३२.पु) निरूपितम् । ' यथा सुदीप्तात्पावकात् '(मु) इति श्रुत्युक्तप्रकारः ' यथाऽग्नेः क्षुद्रा विष्फुलिङ्गा व्युच्चरन्ति एवमेतस्मादात्मनः ' इति वाजसनेयिकश्रुतावपि प्रतिपादित । तत्र पूर्वं सुषुप्तिनिरूपणावसरे इन्द्रियव्यापारोपरमेण जीवाना ज्ञानसङ्कोच. प्रतिपादित. । प्रबोधकाल जीवाना ज्ञानविकासः सर्वानुभवसिद्धः । एव कौषीतकीब्राह्मणेऽपि ' सयदा प्रतिबुध्यते यथाऽग्नेर्ज्वलतो विष्फुलिङ्गा विप्रतिष्ठेरन् एवमेतस्मादात्मनः प्राणा यथाऽऽयतन विप्रतिष्ठन्ते ' (कौ.उ.४.१९) इत्यत्रायमर्थः स्फुटः । ' अन्यार्थंतु जैमिनिः प्रश्नव्याख्यानाभ्यामपिचैवमेक ' इतिसूत्रे श्रुतिद्वय विवक्षितम् । अत्र ' अपिचैवमक ' इत्यत्र जीवब्रह्मभेदएव विवक्षित इति परैरप्युक्तम् । 'तदभावो नाडीषु तच्छ्रुतेरात्मनिच ' इत्यत्र जीवस्य सुषुप्तिस्थानत्व परमात्मन एव वक्ष्यत एतत्सूत्र परैरप्यवमेव व्याख्यातम् एतच्छ्रुतिसूत्रार्थः श्रय्यन्तसारामृते विस्तरेण निरूपित. । एव च जीवब्रह्मणोर्भेदएव सुषुप्तौ विवक्षित । एव प्रळयेऽपि—सुषुप्तौ 'तीर्णोहि तदा सर्वान्शोकान् हृदयस्य भवति' (बृ) इति शोकसामान्यविरहस्य सुषुप्तौ प्रतिपादनेन पुत्रपितृसंश्लेषदशाया पितुरज्ञानेऽपि स्वभावात् दु खविरहवदन्तर्यामिणः पितुस्सुषुप्तौ जीवाना संश्लेषेण दु खविरहबोधनेन दया स्वल्पा प्रतिपन्ना धर्मभूतज्ञानस्यातिसङ्कोचेन विकासाभावेन सुखादेरलाभ पर्यालोच्य सुषुप्त्यनन्तरप्रबोधवत् ज्ञानविकासार्थं परमात्मन सृष्टिरित्यर्थस्योपनिषत्तात्पर्यविषयत्व सिध्यति । छान्दोग्येऽपि ' सदेव सोम्येदमग्र आसीत् ' इ त्युपक्रमे प्रळयसृष्टी चाभिधाय अष्टमखण्डे ' यत्रैतत्पुरुषस्स्वपिति नाम ' इत्यादिना सुषुप्तिं प्रक्रम्य ' सन्मूलास्सोम्येमा प्रजास्सदायतनास्सत्प्रतिष्ठा. ' इति द्विरभ्यस्तवाक्ये सृष्टिरपि कथिता । एवच सुषुप्तिप्रळययोरेकरूपता प्रतिपन्ना । ' सुषुप्त्युत्क्रान्त्योर्भेदेन ' इति सूत्रे स्फुट जीवब्रह्मणोर्भेद सूत्रकारोऽभिधास्यति । एवचात्मशब्दार्थान्तर्यामिणि अप्ययस्यैव 'स्वाप्ययात्' इत्यत्र कथनन आञ्जस्यमत न श्रुत्यननुगुणमिति 'स्वाप्ययात्' इतिसूत्रेणापि निर्धारित भवति । अतश्च नामरूपव्याकरणश्रुत्या अन्तर्यामिचपरिणामनिबन्धनमेवोपादानत्वमित्यर्थ 'गौणश्चेन्नात्मशब्दात्' इत्यत्रा मशब्द योनिराकृत तदविरोधेन अन्तर्यामिण्यप्यय एव स्वाप्ययात् इत्यत्र विवक्षित ॥

तदेत सर्वमभिप्रेत्याह–इतश्च नप्रधानमिति । प्रळयसुषुप्त्योरेकरूपताश्रुत्यभिप्रेत्याह—तदेव सच्छब्दवाच्यमिति

## श्रीभाष्यम्

**सतासोम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वंह्यपीतो भवति' (छा.६.९.१) इति सुषुप्तं जीवं सता सम्पन्नं स्वमपीतः स्वस्मिन्प्रलीन इति व्यपदिशति। प्रळयश्च स्वकारणे लयः। नचाचेतनं प्रधानं चेतनस्य जीवस्य कारणं भवितुमर्हति 'स्वमपीतो भवति' आत्मानमेव जीवोऽपीतो भवतीत्यर्थः। चिद्वस्तुशरीरकं तदात्मभूतं ब्रह्मैव जीवशब्देनाभिधीयत इति नामरूपव्याकरणश्रुत्योक्तम्। तज्जीवशब्दाभिधेयंब्रह्म सुषुप्तिकालेऽपि प्रळयकाल इव नामरूपपरिष्वङ्गाभावात् केवलसच्छब्दाभिधेयमिति 'सता**

## श्रुतप्रकाशिका

सच्छब्दस्य जीवोपस्थापकस्वशब्दसमानविषयत्वानिबन्धना*मर्थान्तरत्वशङ्कां व्युदस्यति। **तदेव सच्छब्दवाच्यमिति।** जगत्कारणवस्तुविषयएवात्रापि सच्छब्द इत्यभिप्रायः। यत्र यदस्यर्थ.। ननु सता सपत्तिः प्रकृतिसंसर्गोऽस्तु स्वाप्ययोऽपि जीवस्य स्वरूपेऽवस्थानमिति स्वसच्छब्दयोर्भिन्नार्थस्स्यादिति नैतद्वाक्य प्रधानकारणताविरोधीति। तदेतत्परिहरन्व्याचष्टे **सुषुप्तमिति। स्वमपीत** इतीदं विवृणोति। **स्वस्मिन्प्रलीनइति।** स्वमिति द्वितीया सतेति तृतीया च फलतस्सति सपद्येति सप्तम्यनुगुणार्थे। व्यपदेशभेदस्तु धातुस्वभावभेदादित्यभिप्रायः। अपीतेः प्राप्तिरूपत्वात् द्वितीयानिर्देशः **ब्रह्मैव सन्ब्रह्माप्येति' 'यत्प्रयन्त्यभिसंविशन्ति'** इतिहि श्रुत्यन्तर साहित्यसद्भावात् तृतीयानिर्देश·। **सम्पन्न** इति कर्मणि निष्ठा वा तदानीं सम्पत्तेः प्राप्तिरूपत्वात् सतः कर्तृत्वविवक्षयाऽत्र तृतीया **'प्राज्ञेनात्मना संपरिष्वक्त.'** इतिवत् अप्ययस्य स्थानसापेक्षत्वात् सप्तमीनिर्देश.। व्युत्पत्तिवशेन प्रळयवाचिना शब्दानां स्थानापेक्षया उत्कटत्वात् सप्तम्यनुरोधेन व्याख्यातम्। एव सम्पत्त्यप्ययशब्दयो. प्रळयपरतयैकार्थ्यमुक्तम्। स्वसच्छब्दयोश्च प्रळयस्थानपरतया ऐकार्थ्यमुक्तम्॥

अयमभिप्रायः **'सतासोम्य तदा सम्पन्न.' 'सति सम्पद्य'** इतिज्ञानिगमनवाक्यमध्यगतस्य स्वाप्ययवाक्यस्थानपेक्षितार्थान्तरपरत्वेऽन्वयवैघट्य स्फुटम्। **'अथैतदापियन्त्यन्तत.' 'ब्रह्मैव सन्ब्रह्माप्येति' 'तदा सपद्यते ब्रह्म'** इत्यादिप्रयोगप्राचुर्यादप्ययसम्पत्तिशब्दस्वारस्योपस्थापितस्य प्रळयस्य स्थानप्रतिपादकत्वात् स्वसच्छब्दयोरैकार्थ्यपर्यवसायित्व सूचितम्। **'जीवेनात्मना' 'तत्त्वमसि'** इति जीवात्मशब्दयोः त्व तच्छब्दयोरिव च स्वसच्छब्दयोरपि *जीवरूपेण स्वेन रूपेणव्यवस्थितकारणवस्तुविषयतयैकार्थपरत्व प्रकरणवशादप्युचितम्। *जीवादर्थान्तरेसति तस्याप्यनुपपत्तिशङ्कापरिहारार्थं स्वशब्दाभिधेयस्य तस्य सपर्यन्ततात्प्रतिपादनस्यापेक्षितत्वाच्च तयोरैकार्थ्यत्व युक्तमिति। अस्तु लयस्थानोपस्थापकयो स्वसच्छब्दयोरैकार्थ्यं तत्तु स्वशब्दस्य स्वीयपरत्वेन स्वसच्छब्दयोरुभयोरपि प्रधानपरत्वेऽप्युपपद्यत इत्यत्राह—**प्रळयश्चेति।** कार्यतारूपविसदृशावस्थाप्रहाणेन कारणान्तर्भावोहि लयः। तत किमित्यत्राह—**नचेति।** अचे

## गूढार्थसङ्ग्रह

अपिपूर्वक. इण्धातु प्रळयपर इति प्राह—**स्वस्मिन्नित्यादि।** 'स्वमपीत' इत्यत्र स्वशब्दे जीवब्रह्माभेदो विवक्षित इति भ्रमं निरस्यति **प्रळयश्चेति।** 'सदेव' इत्यत्र नामरूपवद्वस्तुप्रतिकोटिभूतैकत्वमुखेन यथा प्रलय. स्वकारणे तद्वत् सुषुप्तावपि स्वोपादानकारणे लय इत्यर्थः। गदाधरनागेशाभ्यां स्वशब्दस्य पूर्ववाक्यसमभिव्याहृतपदोपस्थाप्ये शक्त्यङ्गीकारेण सच्छब्दार्थस्यैव आत्मपदार्थत्वेन पूर्ववाक्ये उपस्थापितएवात्र आत्मशब्दार्थ. इत्यभिप्रेत्याह—**आत्मानमेवेति।** अथापि जीवब्रह्माभेदभ्रमो न निवृत्त इति शङ्कायामाह—**चिद्वस्तुशरीरकमित्यादि॥**

## श्रीभाष्यम्

सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति' (छा.६.८.१) इत्युच्यते। तथा समानप्रकरणे नामरूपपरिष्वङ्गाभावेन प्राज्ञेनैव परिष्वङ्गात्। 'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' (बृ.६.३.२१) इत्युच्यते आमोक्षाज्जीवस्य नामरूपपरिष्वङ्गादेवहि स्वव्यतिरिक्तविषयज्ञानोदयः। सुषुप्तिकाले हि नामरूपे विहाय सता सम्परिष्वक्तः पुनरपि जागरदशायां नामरूपे परिष्वज्य तत्तन्नामरूपो भवतीति श्रुत्यन्तरे स्पष्टमभिधीयते 'यदा सुप्तस्स्वप्नं न कञ्चन पश्यति अथहास्मिन्प्राण एवैकधा भवति एवमेतस्मादात्मनः प्राणा यथायथं विप्रतिष्ठन्ते' (कौषीतकी.४.१९) तथा 'तइह व्याघ्रो वा सिंहोवा वृको वा वराहो वा दंशो वा मशको वा यद्यद्भवन्ति तथा भवन्ति' (छा.६.९.३) इतिच। तथा सुषुप्तं जीवं 'प्राज्ञेनात्मना संपरिष्वक्तः' (बृ.६.३.२१) इति च वदति।

## श्रुतप्रकाशिका

वनम् अनित्यत्वादित्यर्थः। स्थूलावस्थस्य जीवस्य सूक्ष्मावस्थे स्वकारणीभूते सत्तायोगिनि स्वात्मनि लयोपपत्तेस्सच्छब्दस्य तत्परत्वं संभवतीति शङ्का व्युदसितुमाह–तथा सुषुप्तमिति। सच्छब्दस्य देहेन्द्रियानपेक्षेक्षणादिगुणकपरमकारणविषयत्वात् तत्संवादिश्रुत्यन्तरानुगुण्याच्च नात्र सच्छब्दोऽतिसङ्कुचितज्ञानसूक्ष्मावस्थजीवमात्रविषय इत्यभिप्रायः॥

ननु नित्यस्य जीवस्य लयोऽनुपपन्नः कार्यकारणयोरनन्यत्वात् जीवविलक्षणस्य परस्य तत्कारणत्वायोगात्, तस्मिन् जीवस्य लयश्चानुपपन्नः। नैवम्। सर्वदा जीवविशिष्टस्य परमात्मनोऽवस्थाविशेषरूपकार्यकारणभावोपपत्तेः। तथाहि— 'स्वमपीत' इत्यत्र स्वशब्दस्तावन्नजीवमात्रपरः 'सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति' इति स्वशब्दस्य सच्छब्दसमानविषयत्वात्, सच्छब्दस्यचास्मिन्प्रकरणे परमात्मविषयत्वात्, * नापि निष्कृष्टब्रह्मपरः नित्यनिर्विकारस्य तस्योपादानत्वायोगेनाप्ययस्थानत्वायोगात्। कार्यस्यहि प्रळय उपादान एव। अतो जीवरूपेणावस्थितपरमात्मप-

## गूढार्थसङ्ग्रहः

प्राज्ञेनात्मना सम्परिष्वक्तइति। अत्र बाह्यान्तरविषयज्ञानविरहस्य सपरिष्वङ्गस्य च प्रतिपादनम् नामरूपपरिष्वङ्गाभावःपरमात्मना नीरन्ध्रसंश्लेषश्च जीवस्य प्रतिपादितः। अत्र सपरिष्वङ्गप्रतिपादनेन जीवब्रह्माभेदव्यावृत्तिसिद्ध्या अत्र स्वशब्दमात्रेण न जीवब्रह्माभेदसिद्धिरितिभावः। यदासुप्त इत्यादि। एतदादि कौषीतकिवाक्यानामर्थनिर्णयेन जीवब्रह्मभेदः तत्र सर्वात्मना न श्रुतिता पर्यविषय इति त्रय्यन्तसारामृते निरूपितम्॥

तइह व्याघ्रो वा इत्यादि। सुषुप्तेः पूर्वमेव व्याघ्रादिनामरूपज्ञान नतु सुषुप्तौ। सुषुप्तेः पूर्वकाले योऽय नामरूपपरिष्वङ्गः सुषुप्त्यनन्तरप्रबोधे सएव परिष्वङ्ग इति सुषुप्तिपूर्वकालिकाहमर्थस्य सुषुप्त्युत्तरकालिकाहमर्थस्य च ऐक्यप्रत्यभिज्ञया सुषुप्तावप्यहमर्थास्मसिद्धिः 'सएवतु कर्मानुस्मृति' सूत्रे अनया श्रुत्या निर्णीयते। अत्र सुषुप्तौ व्याघ्रादिनामरूपज्ञानाभावः एतच्छ्रुत्याऽपि सिद्ध्यतीति एतच्छ्रुत्युपादानम्। प्रबोधकाले देवादिनामरूपज्ञ नदशायामिव स्वव्यतिरिक्तविषयज्ञानम्। प्रबोधे धर्मभूतज्ञानविकासेन देवादिनामरूपसम्बन्धेन तज्ज्ञान वर्तते। सुषुप्तौ इन्द्रियव्यापारोपरमेण धर्मभूतज्ञान सङ्कोचेन धर्मभूतज्ञानस्य देवादिरूपसम्बन्धाभावेन आत्मव्यतिरिक्तविषयज्ञानविरहः। एतेन सुषुप्तावपि तद्दृष्ट्या नामरूपविभागाभावेन प्रळयेऽपि नामरूपाविभागाभावात् उभयोरैकरूप्यम्॥

## श्रीभाष्यम्

तस्मात् सच्छब्दवाच्यः परं ब्रह्म सर्वज्ञः परमेश्वरः पुरुषोत्तम एव। तदाह वृत्तिकारः— 'सता सोम्य तदा सम्पन्नो भवति' इति सम्पत्त्यसम्पत्तिभ्यामेतदध्यवसीयते 'प्राज्ञेनात्मना सम्परिष्वक्तः' इति चाहेति॥ —इतश्च न प्रधानम्।

## श्रुतप्रकाशिका

विसदृशावस्थाया विवक्षितत्वात्। नामरूपाद्यौपाधिकाकाराभिमानविरहितजीवविशिष्टता कारणावस्था तदपेक्षया विसदृशावस्थान तादृगभिमानवज्जीवविशिष्टता। तत्प्रहाणस्यात्र विद्यमानत्वात् सुषुप्तौ लय उपपन्नः गोक्षेनेशितव्यत्वाकारेण नैरन्तर्यात्यन्तिकप्रलयविरोधि ईशितव्यतायाः अत्यन्तासत्त्वाभावात्। कादाचित्कधर्मोऽवस्था, ईशितव्यत्वादि तु नित्यम् 'स ईशोऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय' 'यस्यात्मा शरीरं य आत्मानमन्तरो यमयति' इत्यादिश्रुतेः। अतो नेशितव्यत्वादिकमवस्थेति वैधर्म्यरूपस्यापि तस्याप्रहाण न दोषः अतो धर्मान्तरस्य स्वाप्ययः॥

सौत्रं हेतु परमसाध्येन सङ्गमयति तस्मादिति। अप्ययस्थानस्य परमकारणत्वमाह—परंब्रह्मेति। जीवव्यावृत्त्यर्थं सर्वज्ञशब्दः। 'प्राज्ञेनात्मना' इति हि श्रुतिः 'तदैक्षत' इत्येतत्संवादिनी। अप्ययेऽपि जीवनियन्तृत्वज्ञापनार्थमीश्वरो ईशितं तत्त्वव्युदासार्थं च परमेश्वरशब्दः। मुमुक्षुपुरुषवैलक्षण्यपरो देवताविशेषपरश्च पुरुषोत्तमशब्दः। * व्याख्यानान्तर व्यावृत्त्यर्थमाह—तदाहेति। सम्पत्त्यसम्पत्तिभ्यामिति। 'सति संपद्य न विदुः सति संपत्स्यामहे' इति सत आगम्य न विदुः सत आगच्छामहे इत्युक्ताभ्यां सम्पत्तिनिर्गमाभ्यामित्यर्थः। * यद्वा परमात्मनि सम्पत्त्या अन्यत्रासम्पत्त्येत्यर्थः। स्वाप्ययशब्देनासम्पत्तिरप्यभिप्रेतेति * वृत्तिकारस्य भावः। एतत् परब्रह्मकारणत्वमित्यर्थः॥

* पूर्वसूत्रे 'प्राज्ञेनात्मना' इत्यादेः सुषुप्तिविषयस्य श्रुत्यन्तरस्य प्रकृतार्थोपपादकतया बुद्धिस्थत्वात् कारणस्य परमात्मत्वमपि कारणविषयैः श्रुत्यन्तरैरुपपाद्यते—

## गूढार्थसंग्रहः

तदाह वृत्तिकार इत्यादि। 'सता सोम्य तदा सम्पन्नो भवति' इतिश्रुतौ 'तदेत्य'नेन सम्पत्तिः न सार्वदिकीति बोधितम्। नवमदशमखण्डयोः 'सति संपद्य न विदुः' 'सत आगत्य न विदुः' इति वाक्यद्वयेन सम्पत्तेः जीवगमनपूर्वकत्वं जीवनिर्गमानन्तरमसम्पत्तिश्चेत्युभयं प्रतिपन्नम्। 'गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च' (१.३.५.१५) इति सूत्रे 'यस्माद्दहरवाक्यशेषे परमेश्वरस्यैव प्रतिपादकौ गतिशब्दौ भवतः 'इमास्सर्वाः प्रजा अहरहर्गच्छन्त्यः एतं ब्रह्मलोकं न विन्दन्ति' इति। तत्र प्रकृतं दहरं ब्रह्मलोकशब्देनाभिधाय तद्विषया गतिः प्रजाशब्दवाच्यानां जीवानामभिधीयमाना दहरस्य ब्रह्मतां गमयति। तथाह्यहरहर्जीवानां सुषुप्तयवस्थायां ब्रह्मविषयं गमनं दृष्टं श्रुत्यन्तरे 'सता सोम्य तदा संपन्नो भवति' इत्येवमादौ' इति (श्री) भाष्ये उक्तम्। अत्र छान्दोग्यश्रुत्योरनयोरेकार्थत्वं सूत्रकृत्सम्मतमिति स्पष्टं वक्तव्यम्। परमते दहरविद्या सगुणविद्या, सद्विद्या निर्गुणविद्या अयमर्थस्सूत्रकृतः नैव सम्मतः। 'सुषुप्त्युत्क्रान्त्योर्भेदेन' इति सूत्रे ब्रह्मणि जीवभेदस्य स्पष्टमभिधानात्। तत्र विवक्षितामेव श्रुतिमुदाहरति—प्राज्ञेनात्मना सम्परिष्वक्त इति चाहेति। 'प्राज्ञेनात्मना संपरिष्वक्तः' इति श्रुतिः अस्मिन्सूत्रे परैरप्युदाहृता। एवंस्थिते सूत्रकारसिद्धान्ते 'स्वमपीतो भवति' इति श्रुतौ 'स्वाप्ययात्' इतिसूत्रे च जीवब्रह्माभेदः विवक्षित इति कथं वक्तुं शक्यते। 'सुषुप्त्युत्क्रान्त्योः' इति सूत्रे तद्विषयवाक्यविरोधात्। 'तत्त्वमसि' इति नवकृत्वः अभ्यासमात्रेण नपरसमनः जीवब्रह्माभेदसिद्धिः। छान्दोग्यएव पूर्वं 'सर्वं खल्विदं ब्रह्म

श्रीभाष्यम्

## सू ११=गतिसामान्यात् (१.१.७)

### गूढार्थप्रमदः

तज्जलानिति शान्त उपासीत ' इतिश्रुतौ अचिदविशेषेणैव जीवस्य ब्रह्माभेदस्य स्फुटमभिधानात् । उपादानोपादेयभावनिबन्धनएवोभयत्राभेदः सोऽप्यात्मत्वेनैव । ' यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहःकश्शोक: एकत्वमनुपश्यतः ' इत्यत्र ईशावास्योपनिषदि एकत्व, ' यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति सर्वभूतेषुचात्मानम् ' ' ईशाऽऽवास्यमिद सर्वम् ' 'तदन्तरस्य सर्वस्य' इत्याद्युत्तरीत्या अन्तःप्रविश्य नियन्तृत्वनिबन्धनमिति प्रतिपादितमिति प्रागेवोक्तम्। अयमर्थः श्रुत्यन्तसारामृते निरूपितः । इममर्थमभिप्रेत्याहस्म वृत्तिकारः—सर्वंखल्विति सर्वात्मा ब्रह्मेशइति ॥

एतेन सर्वत्राभेदवाक्येषु ईशाभेदएव जीवस्य विवक्षितः नतु परमतनिर्विशेषचिदभेदः इति सूचितम् । शाण्डिल्यविद्यायामेव ' एषम आत्माऽन्तर्हृदय ' इति त्रिवारमभ्यस्तवाक्ये जीवभेदेनैव ब्रह्मण्यात्मत्व प्रतिपादितम् । 'शब्दविशेषात् ' इतिसूत्रे भेदः परैरप्यभिहितः, एवं 'स्मृतेश्च' इति सूत्रे ' ईश्वरस्सर्वभूतानाम् ' इति तद्विषयगीताश्लोकेच जीवब्रह्मभेदो विवक्षित इति परैरप्युक्तम् । एतेन ' सत आत्माऽन्तर्याम्यमृतः ' ' एषत आत्माऽन्तर्याम्यमृतः ' इति द्वाविंशतिवारं चतुर्विंशतिवारमभ्यस्तयोः काण्व माध्यन्दिन अन्तर्यामिब्राह्मणवाक्ययोः जीवब्रह्मभेद एव विवक्षित इति निर्मत्सरैरवश्यमभ्युपेयम् । एवं ' उभयेऽपिहि भेदेनैनमधीयते ' इति सूत्रेऽपि । अतएव ' गुहा प्रविष्टावात्मानौहि तद्दर्शनात् ' इत्यत्र ' आत्मानौ ' इति द्विवचनेन हृदयगुहासंबन्धः जीवपरयोः प्रतिपादितः । एतद्विषयवाक्ये ' ऋतंपिबन्तौ' इति कर्मफलभोक्तृत्वं ' द्वासुपर्णा ' इति श्रुत्यनुसारेण परमात्मनि प्रयोजककर्तृत्वेनोपपादनीयम् । 'द्वासुपर्णा' इति श्रुतिः *मुण्डकश्वेताश्वतरोपनिषदोरिव ऋक्संहितायामपि पठिता । तत्र एतच्छ्रुत्युत्तर परमात्मनः पितृत्वं जीवस्य पुत्रत्व जीवस्य* पितृज्ञानाभावे पितृप्राप्तिशून्यत्वमपि प्रतिपादितमित्ययमर्थः जिज्ञासाऽधिकरणे (७६५.पु) निरूपितः । एतच्छ्रुतितात्पर्यंच ' अर्भकौकस्त्वात्तद्व्यपदेशाच्च ' इतिसूत्रे सूत्रकारस्सूचयति । ' अल्पौकस्त्वात् ' इत्यनभिधाय ' अर्भकौकस्त्वात् ' इत्युक्त्या अर्भकस्य ओकः तदेव ओकः यस्य तत् अर्भकौकः ब्रह्म ' ओकस्सद्म 'त्यमरकोशेन (नानार्थवर्ग) ओकश्शब्दस्य गृहार्थकत्वम् । एतेन परजीवयोः पितृपुत्रभावः बोधितः । ' विवक्षितगुणोपपत्तेश्च ' इति तत्पूर्वसूत्रे दयारूपगुणस्यापि विवक्षितत्वेन परस्य हृदयस्थितेः दयामूलकत्वादिसिद्धयतीत्यपि जिज्ञासाऽधिकरणे निरूपितम् । एव च ' एषम आत्माऽन्तर्हृदय ' इत्यादिश्रुतिविरोधेन ' सर्वंखल्विद ब्रह्म ' इत्यत्रोक्ताभेदनियामकव्यतिरिक्तनियामककल्पनासम्भवेनच 'तत्त्वमसि' ' अनेन जीवेनात्मना ' इत्यत्र परमतजीवब्रह्माभेदः नैव विवक्षितः । सुषुप्तावन्तःकरणलयादरसम्भवस्य पूर्वमेवोपपादनेन ' सता सोम्य तदा संपन्नो भवति ' इत्यादौ अनौपाधिकगमनस्य प्रतिपादनेन च स्वाप्ययात् इत्यत्र जीवब्रह्माभेदो नैव विवक्षित इति सिद्धयति 'सम्पत्त्यसम्पत्तिभ्यामेतदध्यवसीयते' इति वृत्तिवाक्ये जीवकर्तृकसपरयसम्पत्तिसम्बन्धिजीवभिन्न सच्छब्दवाच्यं ब्रह्मनिश्चीयत इत्यर्थः ॥

इयद्भिस्सूत्रैः सद्विद्यावाक्यगतहेतुभिः प्रधानवैलक्षण्यं जगत्कारणस्य ब्रह्मणः प्रतिपादितम् । 'गौणश्चेन्नात्मशब्दात्' इत्यत्रात्मशब्देन चेतनवाचिना ईक्षणाश्रयस्य प्रधानवैलक्षण्य निरूपितम् । सद्विद्यायामात्मशब्द निर्दिश्य तदर्थस्य कारणत्वप्रतिपादनं नास्ति । आत्मशब्दानिर्देशेन तदर्थस्य कारणत्वप्रतिपादकोपनिषदन्तरवाक्यैरपि जगत्कारणस्य प्रधानवैलक्षण्यं प्रतिपादयति—गतिसामान्यादिति ॥

### श्रीभाष्यम्

' आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत् सईक्षत लोकान्नु सृजा ' इति ' स इमाँल्लोकानसृजत (ऐत.१.१) ' तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः । आकाशाद्वायुः वायोरग्निः । अग्नेरापः । अद्भ्यःपृथिवी ' (तै.आनन्दवल्लि.१) ' तस्यह वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदः ' (सुबा.२) इत्यादिसृष्टिवाक्यानां या गतिः प्रवृत्तिः, तत्सामान्यात् तत्समानार्थत्वादस्य ; तेषु च सर्वेश्वरः कारणमवगम्यते । तस्मादत्रापि सर्वेश्वर एव कारणमिति निश्चीयते ॥　　इतश्च न प्रधानम्-

## सू १२-श्रुतत्वाच्च (१.१.५)

### श्रुतप्रकाशिका

## सू ११-गतिसामान्यात् (१.१.५)

पूर्वं गौणश्चेन्नात्मशब्दात् इत्युक्तत्वादात्मशब्दवती श्रुतीरुदाहरति आत्मावा इत्यादिना । तस्यहवा एतस्य इत्यत्राप्यात्मशब्दश्श्रूयते ' आत्मावा अरे द्रष्टव्यः ' ' आत्मनि खल्वरे दृष्टे ' ' योऽन्यत्रात्मनस्सर्वं वेद ' इति च । गतिशब्दं व्याचष्टे-प्रवृत्तिरिति । बोधनव्यापारपरः प्रवृत्तिशब्दः ' भिन्नप्रवृत्तिनिमित्तानाम ' इत्यत्र प्रवृत्तिशब्दवत् । समानत्वमर्थद्वारकमित्याह—तत्समानेति । ततःकिमित्यत्राह-तेषुचेति । ततोऽपि किमित्यत्राह-तस्मादिति न केवलमुपनिषदन्तरेषु अत्रैव सर्वेश्वरकारणत्वं स्फुटमित्याह-

## सू १२-श्रुतत्वाच्च [१.१.५]

### गूढार्थसङ्ग्रहः

सईक्षतलोकान्नु इत्यादि । प्रथमसूत्रे ईक्षणानन्तरमेव सृष्टिः प्रतिपादिता इत्यंशोपपादनाय एतद्वाक्योपादानम् । अत्रतु आत्मशब्देन निर्दिश्य तस्य कारणत्वप्रतिपादकत्वेन एतद्वाक्योपादानम । अतएव पूर्वं ' आत्मा वा इदम् ' इति वाक्यस्यानुपादानम् । तस्य हवा एतस्य महतो भूतस्येत्यादि । एतत्पूर्वं ' आत्मा वा अरेद्रष्टव्यः ' इति वाक्यसत्त्वेन (बृ.६,५६) आत्मशब्दार्थस्यैवात्र कारणत्वं विवक्षितम् । कारणत्वान्वयार्थक आत्मशब्दघटितोपनिषद्वाक्यप्रवृत्तिसामान्यात् इति सूत्रार्थः । सद्विद्यायां च कारणत्वान्वयार्थकात्मशब्दो नास्ति । गतिसामान्यात् इत्यत्र सामान्यशब्दप्रयोगेण उपनिषदन्तरवाक्यानि विवक्षितानीति सूचितम् । एतेन एतदुपनिषद्विषयकत्वं श्रुतत्वाच्च इति सूत्रस्यापि व्यञ्जितभवति श्रुतत्वाच्च इतिसूत्रे दीपसारयोः ' आत्मतःप्राण ' (छां.७.　) इत्यादिछान्दोग्योपनिषद्वाक्योपादानेन आत्मशब्दनिर्देशपूर्वकं तदर्थस्य कारणत्वस्य श्रुतत्वमेतत्सूत्रे विवक्षितम् । षष्ठे सद्विद्यायां कारणत्वान्वयार्थकात्मशब्दाभावेऽपि छान्दोग्य एव सप्तमे भूमविद्यायां कारणत्वान्वयार्थकात्मशब्दस्य श्रुतत्वाच्चेति दीपसारयोरर्थः. भाष्यपक्षेतु पूर्वसूत्रे एव ' आत्मतः प्राण ' इत्यादिकारणत्वान्वयार्थकात्मशब्दघटितवाक्यस्य पूर्वसूत्रएव विवक्षितत्वम् । श्रुतत्वाच्च इत्यत्रात्मशब्दव्यतिरिक्तप्रधानव्यावर्तकधर्माणां श्रुतत्वं विवक्षितम् । ते च धर्माः अस्यामुपनिषदि प्रतिपादिताः एवमुपनिषदन्तरेऽपि ॥

## श्रीभाष्यम्

श्रुतमेव ह्यस्यामुपनिषदि अस्य सच्छब्दवाच्यस्य आत्मत्वेन नामरूपयोर्व्याकर्तृत्वं सर्वेशत्वं, सर्वशक्तित्वं, सर्वाधारत्वं, अपहतपाप्मत्वादिकं, सत्यकामत्वं, सत्यसङ्कल्पत्वं च ' अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि ' (छां.६.३.२) ' सन्मूलास्सोम्येमास्सर्वाःप्रजास्सदायतनास्सत्प्रतिष्ठाः' (छां.६.८.६) ' ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा (७) ' यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितम् । तस्मिन्कामास्समाहिताः ' (छां ८.१.३,५) ' एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः ' (८.१.५) इति ॥ तथाच श्रुत्यन्तराणि ' नतस्य कश्चित्पतिरस्ति लोके नचेशिता नैव च तस्यलिङ्गम् । सकारणं करणाधिपाधिपो नचास्य कश्चिज्जनिता नचाधिपः '

## श्रुतप्रकाशिका

आत्मत्वेन नामरूपव्याकर्तृत्वं दर्शयति अनेन जीवेनेति । सर्वेशत्व सर्वशक्तित्वे ' तदैक्षत बहुस्याम् ' इत्यादिवाक्येन पूर्वमेव दर्शिते सन्मूला इतिसूचिते च । आधारत्वं दर्शयति सदायतनाइति यच्चास्येति च । धारकत्वंचात्मत्वेनेति दर्शयति ऐतदात्म्यमिति । नह्यत्र कारणतया कर्माधारत्वमात्र विवक्षितमितिभावः । यच्चेत्यादिक सत्यकामत्वप्रतिपादनोपयुक्तं च । अपहतपाप्मत्वादिगुणान् दर्शयति एषआत्मेति । उक्तगुणवैशद्यार्थं, अनुक्तगुणदर्शनार्थं तद्गत ईश्वरत्वदेवताविशेषत्वस्फुटीकरणार्थं च पूर्वसूत्राभिप्रेतान्यनुदाहृतानि । श्रुत्यन्तराण्युदाहरति तथाचेति । ● नन्वेतत्सूत्रवाक्यविषयत्वेन अस्य सूत्रस्य छान्दोग्योपनिषन्मात्रविषयत्व दीपसारयोरपि ह्युक्तं ' श्रुतमेव ह्यस्यामेवोपनिषदि ' इति । नात्र क्रमविवक्षा लिङ्गं शरीरं ' नाशब्दम्' इत्युपक्रमसूत्रानुरोधेन प्रधानस्याप्रतिपाद्यत्व निगमयति—

## गूढार्थसंग्रहः

अत्र सूत्रद्वयस्य विषयभेदे उक्तरीत्या सिद्धेऽपि गतिसामान्यात् इत्यत्रोपनिषदन्तरस्य विवक्षायाः स्फुटत्वेन श्रुतत्वाच्च इतिसूत्रे एतदुपनिषदि श्रुतत्वस्य विवक्षायाः प्रतीतावपि उपनिषदन्तरे पूर्वोक्तार्थातिरिक्तार्थान्तरस्य श्रुतत्व विवक्षितमिति (ब्र.वि.आ,न्यायरक्षामणिः) परोक्तिरभिनिवेशमूलेव ॥ चशब्देन उक्तानामर्थानामुपनिषदन्तरेऽपि श्रुतत्व विवक्षितमित्यभिप्रेत्याह—तथा च श्रुत्यन्तराणीति ॥

नतस्य कश्चित्पतिरास्ति इत्यादि । ' तमीश्वराणा परममहेश्वरम् ' इति पूर्वश्रुतिः । तत्र सर्वेषामीश्वरत्व सर्वेशितृत्वं च प्रतिपादितम् । अस्यापि ईशिता कश्चित्स्यादिति शङ्कायाः निरासः पूर्वार्धे, उत्तरार्धे च कारणत्वमभिधाय अस्य कारणान्तरं नास्तीत्युक्त्या एकस्यैव सर्वकारणत्व सिद्धम् । एतेन उपनिषदुपक्रमे ' क्षरप्रधानममृताक्षर हरः क्षरात्मानावीशते देव एकः ' इत्यत्र प्रधानविशेषेण जीवस्यापि नियामकत्व देवस्य यदुक्त तत्प्रतिष्ठापित भवति । एतेन ' नान्योऽतोऽस्ति द्रष्टा' इति श्रुतौ 'नियन्तुर्नियन्त्रन्तरं निषिध्यते' इति वृत्तिकारमते ' प्रसक्त्यभावात् ' इत्यन्तर्याम्यधिकरणे (श्रु) प्राप्योक्तिर्निरवकाशा । अत्र सामान्यनिषेधो नविवक्षित इत्यादिक अत्रैव पूर्वं भावप्रकाशेच निरूपितम् । ' यईशेऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय' इत्युत्तरश्रुत्यादिक परसमतार्थप्रतिकूलमिति बहुत्र प्रतिपादितम् । श्वेताश्वतरोपनिषदि ईशादिशब्दयौगिकार्थस्योपक्रमप्रभृत्यभ्यासेन तत्र ता पर्यनिश्चयेन 'स्वामीत्वीश्वर.पतिरीशिता ' इत्यादिकोशोक्तार्थेन ' प्रोक्षणीष्वर्थसयोगात् ' (जै.सू.१.४.९.११) इतिनयेन सर्वप्रयोगोपपत्तौ पृथग्रूढिकल्पन केषांचिदभिनिवेशमूलकमेव

## श्रीभाष्यम्

'सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वाऽभिवदन् यदास्ते '(तै.आ.पुरुष.३.१२.१३)
' अन्तःप्रविष्टश्शास्ता जनानाँ सर्वात्मा ' (तै.आर.३.२१.२१) ' विश्वात्मानं परायणम् ।'

## गूढार्थसंग्रहः

अतएव गीतादावीश्वरशब्दानां ' ईशनशीलो नारायणः ' इति गीता (शं) भाष्ये, विवरण अन्तर्यामिब्राह्मणभाष्ये (शं) नारायण इत्युक्तिः, सुरेश्वरवार्तिके–' कृष्णद्वैपायनो व्यासः वेदात्मा ध्वान्तहानिकृत् । प्राहेममेव बहुशः प्राणिनां हितकाम्यया ॥ नारायणःपरोऽव्यक्ता दण्डमव्यक्तसम्भवम् । अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपाच मेदिनी ॥' (बृ.वा.५.७.३९, ४०) इत्याद्युक्तिः, ' आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा ॥ ' इति महाभारतान्ते भगवता श्रीवेदव्यासेनोपसंहारः , ' हरिरेकस्सदा ध्येयः भवद्भिस्सत्वसंस्थितैः । ओमित्येव सदा विप्राः पठत ध्यात केशवम् ॥' (३.८९.८) इति हरिवंशे कैलासयात्रायां हरिरेको ध्यातव्य इत्युक्तं श्रीमहेश्वरेणापि । एतत्सर्वमभिप्रेत्य 'एषमे सर्वधर्माणां धर्मोऽधिकतमो मतः ।' इत्याद्युक्तम् ' (श.वि.स.भा) इत्युक्तिश्च सङ्गच्छते ॥

हरिवंशे–' अहन्त्वं सर्वगोदेव त्वमेवाहं जनार्दन । आवयोरन्तरं नास्ति ॥ यस्त्वां द्वेष्टि देवेश समाद्वेष्टि नसंशयः' (३.८८) इति पूर्वाध्याये रुद्रोक्त्या हरिहराद्वैतं नसिध्यति । ' पठत ध्यात केशवम् ' इत्यत्र प्रयुक्तकेशवशब्दस्य 'क इति ब्रह्मणोनाम ईशोऽहं सर्वदेहिनाम् । आवां तवाङ्गे संभूतौ तस्मात्केशवनामवान्' इत्यत्र कृष्णस्य ब्रह्मरुद्रजनकत्वस्य 'अह त्वम्' इत्यतःपूर्वं ' आदिस्त्वं सर्वभूतानां मध्यमन्तस्तथा भवान् । त्वत्तस्समभवद्विश्वं त्वयिसर्वं प्रलीयते ॥ ' ३.८८.५५ इत्यत्र कृष्णस्यैव सर्वोत्पत्तिलयहेतुत्वस्य प्रतिपादनेन तद्विरोधात् । अन्यथा 'ममैवत्वं तवैवाहं ये मदीयास्तवैवते ॥ यस्त्वां द्वेष्टि समाद्वेष्टि यस्त्वामनु समामनु ॥ अनन्यःपार्थ मत्तस्त्वं त्वत्तश्चाहं तथैवच ॥ नावयोरन्तरं शक्यं वेदितुं भरतर्षभ ।' इत्यरण्यपर्वणि १२.४६ अर्जुनप्रति कृष्णोक्त्या रुद्रार्जुनयोरविशेषापत्तिः । परमते अद्वैताङ्गीकारेऽपि रुद्रेऽधिकाभिव्यक्तिः अर्जुनेतु न्यूना इत्येवोच्यते । सिद्धान्तेतु 'याते धामानि परमाणि' इत्यादिश्रुत्युक्तदिशा रुद्रस्य गौणप्रादुर्भावत्वं शक्त्याऽऽऽविश्यम् अर्जुनस्यतु ततोन्यूनता इति जीवब्रह्माभेदेऽपि सर्वमुपपद्यते । विस्तरस्तु हयशिरोरत्नभूषणदीधितौ द्रष्टव्यः ॥

सर्ववेदपठितस्य पुरुषसूक्तस्य नारायणपरत्वं नारायणाख्याने व्यास एव निर्धारयति । तत्रत्या श्रुतिमुदाहरति—सर्वाणि रूपाणीति । इयं च श्रुतिः ' अवस्थितेरिति काशकृत्स्नः ' (१.४.६) इतिसूत्र (श)भाष्ये परैरप्युदाहृता । अत्र 'अभिवदन्' इत्यस्य स्वाभिमुख्येन वदन् इत्यर्थेन स्वपर्यन्तता नामरूपयोस्सिद्ध्यति ॥

' स्वर्णघर्मानुवाकेन तथा पुरुषविद्यया । पौरुषेण च सूक्तेन सामभीराजनादिभिः ॥ ' (श्रीभाग.११.२७.३०) इति पुरुषसूक्तसहभावेन वासुदेवार्चने विनियुक्तां श्रुतिमुदाहरति–अन्तःप्रविष्टश्शास्ता जनानामिति । इयं च श्रुतिः उपदेशसहस्र्यां परैरप्युदाहृता । अत्र सर्वात्मत्वप्रयोजकत्वं अन्तःप्रविश्य शासनमभिहितम् सद्विद्यायां आदेशशब्दार्थस्य शासितुरेव प्रवेशहेतुकनामरूपव्याकरणमुक्तम् । ' अन्तःप्रविष्टश्शास्ता जनानाँ सर्वात्मा ' इत्यत्र प्रविश्य शास्तृत्वेन सर्वस्यात्मत्वप्रतिपादनेन ' जीवेनात्मना ' इत्यत्रापि जीवस्यात्मत्वमित्थमेवाङ्गीकरणीयमिति भावः । अत्रैव ' सर्वे वेदायत्रैकं भवन्ति ' इति श्रूयते । ' सर्वस्यचाहं हृदि सन्निविष्टो मत्तस्स्मृतिर्ज्ञानमपोहनं च । वेदैश्च सर्वैरहमेव वेद्यः ' इतिगीता एतदुपबृंहणरूपा । प्रवेशस्य शासनार्थत्वस्य श्रौतत्वेन परेषामन्यार्थः निरवकाशः । विश्वात्मानमिति । विश्वस्यात्मत्वं पूर्वश्रुत्युक्तदिशैव विवक्षितम् ॥

श्रीभाष्यम्

'पतिं विश्वस्यात्मेश्वरम्' 'यच्च किंचिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः' (तै.नारा.११.अनु) 'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' (सुबा.ख.७) इत्यादीनि । तस्माज्जगत्कारणवादिवाक्यं न प्रधानादिप्रतिपादनयोग्यम् । अतस्सर्वज्ञस्सर्वशक्तिस्सर्वेश्वरो निरस्तनिखिलदोषगन्धोऽनवधिकातिशयासंख्येयकल्याणगुणगणौघमहार्णवः पुरुषोत्तमो नारायण एव निखिलजगदेककारणं

श्रुतप्रकाशिका ।

तस्मादिति । तेन परिशेषं ब्रह्मणः प्रतिपादनं निगमयति । अत इति । सर्वज्ञ सर्वशक्तिरित्यादिना कारणवाक्येषु गुणाः शोधकवाक्योक्ता गुणा निरस्तनिखिलेत्यादिना विशेषाः । अनवधिकेत्यादिना पुरुषार्थत्वं च दर्शितम् । ओघशब्दोऽनेन गुणानामन्यत्रानवस्थानमपि दर्शयति । महार्णवशब्दो गुणेभ्योऽपि तदाश्रयस्य महत्त्वं दर्शयति ; पुरुषोत्तमनारायणशब्दौ पुरुषसूक्तनारायणानुवाकसिद्धविग्रहवत्त्वमपि च कारणवाक्यस्थानां दर्शयन्तौ निरतिशयत्वं च शरीरकत्वं च दर्शयतः निखिलजगदेककारणमिति । निखिलशब्देन गगनादिकमपि कार्यीकृतम् । एकशब्देन निमित्तोपादानयोरभेदोऽभिप्रेतः ॥

गूढार्थसंग्रहः

'पतिं पतीनाम्' इति श्वेताश्वतरश्रुतिः नारायणपरेत्यभिप्रेत्योदाहरति—पतिं विश्वस्येति ॥ 'तमीश्वराणां' इत्युक्तार्थ एव 'आत्मेश्वरम्' इत्यत्र विवक्षितः । 'न तस्येशे कश्चन' इति पूर्वोक्तश्रुतेः । आत्मेश्वरो यस्य आत्मेश्वरः इति विग्रहः । यच्च किंचिज्जगदित्यादि । इयं च श्रुतिः परैस्सहस्रनामभाष्ये उदाहृता । तथा च भाष्यम्—'नर आत्मा ततो जातान्याकाशादीनि नाराणि कार्याणि तानि कार्याणि अयं कारणात्मना व्याप्नोति ; तान्ययनमस्येति नारायणः 'यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः' इति श्रुतिवचनात् । नराज्जातानि तत्त्वानि नाराणीति ततो विदुः । तान्येव चायनं तस्य तेन नारायणस्स्मृतः' इति महाभारते । नराणां जीवानामयनत्वात् प्रळये इति वा, 'यत्प्रयन्त्यभिसंविशन्ति' इतिश्रुतेः । 'नाराणामयनं यस्मात्तस्मान्नारायणस्स्मृतः' इति ब्रह्मवैवर्तात्, 'आपो नारा इति प्रोक्ताः आपो वै नरसूनवः । ता यदस्यायनं पूर्वं तस्मान्नारायणस्स्मृतः' इति मनुवचनाद्वा नारायणः । 'नारायणाय नम इत्ययमेव सत्यः संसारघोरविषनिर्हरणाय मन्त्रः । शृण्वन्तु भव्यमतयो यतयोऽस्तरागा उच्चैस्तरामुपदिशाम्यहमूर्ध्वबाहुः' ॥ इति नारसिंहपुराणे 'नयतीति नरःप्रोक्तः परमात्मा सनातनः' इतिव्यासवचनम् इति ॥

'अनेन सर्वगतत्वमायामशब्दादिभ्यः' इतिसूत्रे 'आयाम'शब्दस्य व्याप्तिवचनतायाः परेषामपि सम्मततया तत्रत्यया श्रुत्या नारायणस्य सर्वस्मात्परत्वं व्याससम्मतमिति भाष्ये वक्ष्यते । 'कथितः' इति नाम (श) भाष्ये वेदादिभिरयमेव परत्वेन कथितः 'सर्वे वेदा यत्पदमामनन्ति' 'वेदैश्च सर्वैरहमेव वेद्यः' 'वेदे रामायणे पुण्ये भारते भरतर्षभ आदौ मध्ये तथाचान्ते च विष्णुस्सर्वत्र गीयते ॥' इति श्रुतिस्मृत्यादिवचनेभ्य.' इति । 'सोऽध्वनःपारमाप्नोति तद्विष्णोः परमपदम्' इति कठवल्लीभाष्ये 'विष्णोः व्यापनशीलस्य वासुदेवस्य पदं स्थानम्' इतिचोक्तया 'अङ्गुष्ठमात्रः पुरुषः' 'ईशानो भूतभव्यस्य' इत्यत्र ईशानशब्दश्रुत्या शिवस्य परत्वं व्याससम्मतमिति (ब्र.वि.आ.,न्यायरक्षामणिः) उक्तिःकथं घटते उदाहृतवाक्यविरोधात् । परैः सुबालोपनिषदः अनुदाहृतत्वेऽपि अन्तर्यामिब्राह्मणैककण्ठ्येन तदुपनिषद्वाक्यमपि प्रमाणं भवितुमर्हतीत्यभिप्रेत्य तदुपनिषद्वाक्यमुपादत्ते—एष सर्वभूतान्तरात्मा इति ॥

## श्रीभाष्यम्

जिज्ञास्यं ब्रह्मेति स्थितम् ॥

अत एव निर्विशेषचिन्मात्रब्रह्मवादोऽपि सूत्रकारेण आभिश्श्रुतिभिः निरस्तो वेदितव्यः पारमार्थिकमुख्येक्षणादिगुणयोगि जिज्ञास्यं ब्रह्मेति स्थापनात्। निर्विशेषवादे हि साक्षित्वमप्यपारमार्थिकम्।

## श्रुतप्रकाशिका

एषां सूत्राणां * ब्रह्माज्ञानवादिनोऽननुगुणत्वं पूर्वमुक्तं विस्तरेणाह—अतएवेति। सूत्रकारेणेति। न्यायनिबन्धनकृतेत्यभिप्रायः। आभिरित्यर्थप्रत्यायकत्वं विवक्षितम्। न्यायानुगृहीताभिर्विशदार्थाभिश्श्रुतिभिरिति भावः। किंच * प्रामाणिकस्याप्रामाणिकत्वाभिमानतापसिद्धान्तता, सिद्धान्तस्य भ्रान्तिमूलत्वादप्रामाणिकता च लोके दृष्टेति तदुभयव्यवच्छेदार्थः*सूत्रकारश्रुत्योर्निर्देशः। निरस्तो वेदितव्यइति। निरासः फलितइत्यर्थः। अतएवेत्युक्तं विवृणोति। पारमार्थिकेति। ईक्षणस्यापारमार्थिकत्वे साङ्ख्याभिमतं प्रधानमेव ब्रह्मस्यात् शुक्तित्वापारमार्थ्येहि रजतमेव परमार्थस्यादिति साङ्ख्यनिरासोऽनुपपन्नस्यादिति पारमार्थिकशब्दाभिप्रायः। सच्छब्दोक्तस्वरूपस्य सत्यत्वं वाच्यदतिरिक्तं व्यावर्तकेन भाव्यमिति गुणशब्दस्य भावः। अतस्सदादिशब्दानां साङ्ख्याभिमतप्रधानपरत्वव्यवच्छेदसिद्ध्यर्थमीक्षणादिगुणतत्पारमार्थिकत्वविवक्षावद्भिस्सूत्रैर्निर्विशेषनिरासः फलितइत्यर्थः ॥

'तदैक्षत' इत्यादिवाक्यानि साक्षित्वमात्रपराणि न तु गुणविशेषपराणि साक्षित्वमात्रेणापि सूत्रकाराभिमता प्रधानव्यावृत्तिरिसिद्ध्यतीत्यत्राह—निर्विशेषेति। सच्छब्दोपस्थापितविमतिपदस्वरूपातिरेकेण साक्षित्वमप्यपारमार्थिकं त्वन्मते

## गूढार्थसङ्ग्रहः

'कूटस्थनित्यं परिणामि नित्यम्' इति विभागे कूटस्थत्वं परिणामसामान्यशून्यत्वं धर्मसामान्यशून्यत्व एव पर्यवस्यति। सद्विद्यायां परिणाम्युपादानत्वस्यैव दृष्टान्तानुसारेण प्रतीत्या परिणाम्युपादानत्वं प्रधानस्यैव संभवति नत्वात्मनः इति साङ्ख्यमतनिरासः 'तदैक्षत' इतीक्षितृत्वश्रवणेन एतरेयोपनिषदि आत्मशब्दार्थस्यैव ईक्षितृत्वस्य स्फुटमुक्तया आत्मन ईक्षितुरेव बहुभेदोपपादनेनच तस्यैव परिणामिकारणत्वं सद्विद्याया विवक्षितम्। एतच्च पर्यवसितं 'गौणश्चेन्नात्मशब्दात्' इति सूत्रम्। कूटस्थे च दृष्टान्ते योऽयं विकारः तद्भिन्नरूपता पर्येण नामरूपं व्याकरवाणि' इति स्वपर्यन्तनामरूपव्याकर्तृत्वप्रतिपादनेन दृष्टान्ते यादृशः स्वरूपसङ्कोचविकासात्मकः परिणामः सएव नित्यविरोधी, नतु तदतिरिक्तः तयामि च परिणाम इति सगुण एवात्मा परिणाम्युपादानमिति 'गतिसामान्यात्' 'श्रुतत्वाच्च' इति सूत्रविवक्षितश्रुतिभिः निर्धारितभवति आत्मनः निर्धर्मकत्वं कूटस्थत्वमित्यभिप्रेत्य जगत्कारणत्वं न तात्त्विकम् ईक्षितृत्वमपि नतात्त्विकम्, किंतु विवर्तोपादानत्वमेवात्र विवक्षितमिति वदतां मतमपि सूत्रकारानभिप्रेतमिति दर्शयति—अतएवेत्यादिना। जिज्ञास्यम्ब्रह्मेति। 'तद्विजिज्ञासस्व तद्ब्रह्म' इत्यत्र विचारविधिरिति विवरणउक्तया जगत्कारणब्रह्मण एव 'ब्रह्मजिज्ञासा' इत्यत्र विचारविषयत्वं सूत्रकृदभिमतमिति परैरप्यङ्गीकरणीयम्। जगत्कारणत्वस्यापारमार्थिकत्वे ईक्षितृत्वं यदुक्तं तस्यापारमार्थिकत्वे कारणत्वस्यापि माध्यमिकवत् तन्मते साक्षित्वं 'तद्विजिज्ञासस्व तद्ब्रह्म' इतिश्रुतिः कथं घटते? अहमर्थस्य नाशश्च सुषुप्तौ नाशात् किंतु सुषुप्तौ सत्त्वात्साक्षिण एवात्मत्वमिति परैरभ्युपगमेऽपि साक्षिणो नाशाङ्गीकारेण नेष्टसिद्धिरित्याशयेनाह—साक्षित्वमप्यपारमार्थिकमिति। प्राक् (५४७-५४८-५४९.पु) अविद्यावृत्तिप्रतिबिंबितचित्स्साक्षित्वे अविद्यावृत्तेर्नाश

## श्रीभाष्यम्

**वेदान्तवेद्यं ब्रह्म जिज्ञास्यतया प्रतिज्ञातम्। तच्च चेतनमिति ' ईक्षतेर्नाशब्दम् ' इत्यादिभिस्सूत्रैः प्रतिपाद्यते। चेतनत्वंनाम चैतन्यगुणयोगः। अतईक्षणगुणविरहिणः प्रधानतुल्यत्वमेव। किंच निर्विशेषप्रकाशमात्रब्रह्मवादे तस्य प्रकाशत्वमपि दुरुपपादम्। प्रकाशो**

## श्रुतप्रकाशिका

इत्यर्थः। ज्ञातृत्वाभावे साक्षित्वमपि न सिद्ध्यतीति प्रागेवोक्तमित्यपिशब्दाभिप्रायः अपारमार्थिकत्वे किंस्यादित्यत्राह- वेदान्तेति। नह्यारोपिताकारस्तत्त्वावेदकप्रमाणविषयः। नन्वार्वाचीनं ब्रह्मजिज्ञास्यतया प्रतिज्ञातमिति भावः। ततः किं स्यत्राह—तच्चेति। ततोऽपि किं नह्यस्माभिरचेतनमुच्यत इत्यत्राह—चेतनत्वं नाम चैतन्यगुणयोगइति। ईक्षितृत्व न चिद्रूपतामात्रमित्यभिप्रायः। निर्विशेषनिरासस्य फलितत्वं निगमयति। अतइति। नह्यत्र चिद्रूपतामात्रेण प्रधानव्यावृत्तिस्सूत्रिता अपित्वीक्षणगुणयोगेन तदनभ्युपगच्छतो व्यावर्तकाभावे व्यावृत्तिरेव नस्यादित्यर्थः। पारमार्थिकत्यादिना एतदधिकरणविरोधउक्तः। वेदान्तेत्यादिना पूर्वाधिकरणैर्विरोध उक्तः॥

* यद्वा स्वरूपमेव साक्षित्व न धर्मः। अतो नापारमार्थिकमित्यत्राह—वेदान्तेति। स्वरूपमेवचेत्तत्पूर्वसूत्रैरिति प्रतिपाद्याधिक्याभावात् ' ईक्षतेः ' इत्यादिसूत्रवैयर्थ्यमित्यभिप्रायः स्वरूपविशेषोऽप्रतिपन्न इतिचेत्—किं स्वरूपे विशेषः, उत स्वरूपस्य विशेषः ? प्रथमे प्रागुक्तदोषः द्वितीये सविशेषत्वं पूर्वसूत्रे ब्रह्म कारणात्मना सिद्ध नतु चेतनरूपेण अतः ' ईक्षतेः ' इत्यादिसूत्राणामारम्भणीयत्वमिति शङ्कायां चेतनरूपेण प्रतिपाद्यत्वमभ्युपगच्छन्नाह—तच्चेति। चेतनतया प्रधानव्यावृत्तिश्चैतन्यगुणविरहे नसिद्ध्यतीति वक्तुं चेतनत्वं शोधयति चेतनत्वंनामेति। * गुणशब्दो धर्मपरः ततःकिमित्यत्राह—अतइति। व्यावर्तकाभावाद्व्यावृत्त्यसिद्धिरित्यर्थः॥

चेतनशब्दस्य स्वरूपमात्रपरत्वे अधिकरणारम्भवैयर्थ्यमर्थसिद्धम्। नप्रधानतुल्यत्वं प्रकाशत्वाभ्युपगमात् यथ आत्मधर्मभूतज्ञानस्य ज्ञानान्तरायोगेऽप्यचिद्व्यावृत्तिस्त्वन्मते तद्वदित्यत्राह—किंचेति। कथ दुरुपपाद त्वमित्यत्राह—प्रकाशो हीति। व्यवहारयोग्यता व्यवहारप्रतिसम्बन्धिता तदुभयरूपत्वाभावात् स्वव्यवहारहेतुत्व परव्यवहारहेतुत्वाभावादित्यर्थः।

## गूढार्थसंग्रहः

दशाया तन्नाशेनाविद्योपहिताचितस्साक्षित्वेऽपि अविद्यानाशदशायां नाशः। शुद्धचिति साक्षित्व नास्त्येवेति परमतस्य सम्यङ्निरूपणेन साक्षित्वस्यापारमार्थिकत्वं तैरेवाभ्युपगतमिति भावः। निर्गुणात्मवादिसाङ्ख्यसम्मतप्रधाननिराकरणयुक्तिभिः निर्विशेषमपि निरस्त भवतीत्याशयेनाह—अतईक्षणगुणविरहिण इत्यादि। ' सत्य ज्ञानमनन्तं ब्रह्म ' इति श्रुतिप्रतिपन्नस्य ब्रह्मणः ' आनन्दाद्ध्येव खलु ' इति जगत्कारणत्वं प्रतिपाद्यते। तत्र 'अर्थप्रकाशो ज्ञप्तिस्सवेदनम्' इतीविवरणे उक्तम्। एतच्च 'केवलैव संविदात्मानुभव इतिचेत् साच साश्रयेत्युपपादयिष्यते। अहमर्थवियोगेतु ज्ञप्तिरेव नसिद्ध्यति। छेत्तुः छेद्यस्यचाभावे छेदनादेरसिद्धिवत्॥ ' इत्यादिना जिज्ञासाऽधिकरणे पर्यालोचितम्। 'अर्थप्रकाश' इति विवरणपक्षोऽपि नघटतइत्याह—तस्य प्रकाशत्वमपि दुरुपपादमिति। ज्ञानत्वाद्युपपत्तौ अर्थप्रकाशत्वमेव ज्ञानत्वं मुक्तावर्थाभावेऽपि तत्ससृष्टार्थप्रकाशस्य कदाचिदर्थसम्बन्धेनाप्यनपायात् (अ.सि) इत्युक्तम्॥

अत्र लघुचन्द्रिका—' अर्थप्रकाशत्वमिति। अर्थव्यवहारजनकताऽवच्छेदकत्वम् अर्थेच्छाजनकताऽवच्छेदकत्वमिति यावत्। उक्तावच्छेदकं च ज्ञानत्वजातिरिति। यद्यप्युक्तजातिः विशिष्टचिन्निष्ठा शाब्दत्वाद्यताऽवच्छेदिका तथाऽपि

### श्रीभाष्यम्

हि नाम स्वस्य परस्य च व्यवहारयोग्यतामापादयन्वस्तुविशेषः। निर्विशेषस्य वस्तुनस्त-दुभयरूपत्वाभावात् घटादिवदचित्त्वमेव। तदुभयरूपत्वाभावेऽपि तत्क्षमत्वमस्तीति चेत्। तन्न, तत्क्षमत्वं हि तत्सामर्थ्यमेव सामर्थ्यगुणयोगे हि निर्विशेषवादः परित्यक्तस्स्यात्। अथ श्रुतिप्रामाण्यादयमेको विशेषोऽभ्युपगम्यत इति चेत् हन्त तर्हि ततएव सर्वज्ञता, सर्वश-क्तित्वं, सर्वेश्वरेश्वरत्वं, सर्वकल्याणगुणाकरत्वं, सकलहेयप्रत्यनीकत्वेत्यादयस्सर्वेऽभ्युप-गन्तव्याः। शक्तिमत्त्वं च कार्यविशेषानुगुणत्वं तच्च कार्यविशेषैकनिरूपणीयम्। कार्यवि-शेषस्य निष्प्रमाणकत्वे तदेकनिरूपणीयं शक्तिमत्त्वमपि निष्प्रमाणकं स्यात्। किंच निर्वि-शेषवस्तुवादिनो वस्तुत्वमपि निष्प्रमाणम्। प्रत्यक्षानुमानागमस्वानुभवाः सविशेषगो-चरा इति पूर्वमेवोक्तम्। तस्माद्विचित्रचेतनाचेतनात्मकजगद्रूपेण 'बहुस्याम्' (छां.६.२.३) इतीक्षणक्षमः पुरुषोत्तम एव जिज्ञास्य इति सिद्धम्॥

ईक्षत्यधिकरणं समाप्तम्



### श्रुतप्रकाशिका

अथ तदुभयक्षमत्वं शङ्कते तदुभयेति। तत्क्षमत्वमभ्युपगम्य दूषणमाह-तन्नेति। परस्यागतिं दर्शयितुमाह—अथेति। परिहरति हन्त तर्हीति। तत्क्षमत्वमेव नास्तीत्याह— शक्तिमत्त्वं चेति। कार्यविशेषस्य निष्प्रमाणकत्वे स्वपरव्यवहारयो-र्व्यवहारापादनाभावे निरूपकाभावे निरूप्याभाव इत्यर्थः. वस्तुत्व सम्भवत्यपि प्रधानदुष्टत्वमुक्तम्॥

अथ वस्तुत्वमेव नसिद्ध्यतीत्याह-किंचेति। वस्तुत्वं तुच्छव्यावृत्तत्वम्। कुत इत्यत आह—प्रत्यक्षेति। प्रत्यक्षान्त-र्भूतस्यापि स्वानुभवस्य पृथक्प्रमाणत्वं परमताभ्युपगमेनोक्तम्। सविशेषगोचराः वस्तुतस्सविशेषभूतार्थगोचरा इत्यर्थः। वस्तुत्वं चिदचित्साधारणम् तच्च तुच्छव्यावृत्तत्वम् तन्नसिद्ध्यतीत्यर्थः। परपक्षदूषणानन्तरं स्वपक्षं निगमयति तस्मादिति॥

### गूढार्थसंग्रह

ताद्विशिष्टाभिन्नायाः ज्ञानपदलक्ष्यव्यक्तेः मुक्तौ सत्त्वेन ज्ञानस्वरूपमविनाशीत्याद्याशयेनाह-मुक्तावपीति। इति च। एवमङ्गी-कारे अविद्यावतोपीत्थमविनाशि न सम्भवत्येवेति श्रुतिषु ज्ञानानन्दात्मन एव नित्यत्वेन व्यवहारः। अविद्यावतस्तु नित्य-त्वेन नव्यवहारः इत्यत्र गमकं नैव वर्तत इति परैरभ्युपगन्तव्यम्। व्यवहाराभावेऽपि व्यवहारजननयोग्यतासत्त्वेन व्यवहा-रजनकताऽवच्छेदकत्वमिति ब्रह्मानन्दपरिष्कारः। जनकताऽवच्छेदकस्याप्यभावे तद्धर्मिणाऽप्यभावः. सर्वदार्शनिकसम्मतः अतः तद्धर्मः मुक्तावपि परैरङ्गीकर्तव्यः। तथासति स्वसिद्धान्तहानिरित्याह—सामर्थ्यगुणयोगे हीति। सर्वदार्शनिकसम-तमर्थमाह--शक्तिमत्त्वं चेत्यादिना॥

कार्यविशेषस्य निष्प्रमाणकत्वे इति। ईक्षणादेः प्रकाशस्य च कार्यविशेषभूतयोः जगद्व्यवहारयोर्मिथ्यात्वे तज्जन-कताऽवच्छेदकधर्मोऽपि नघटते। कदाचित् कस्मिंश्चित् असत्त्वेऽपि जनकताऽवच्छेदकधर्मवत्त्वेन स्वरूपयोग्यत्वं सर्वसम-तम्। तदभावे ज्ञानानन्दात्मनः परसमतप्रक्रिया कस्यापि दार्शनिकस्यासम्मता। मुक्तौ निष्प्रमाणकत्वाङ्गीकार इति तदर्थः.

## श्रुतप्रकाशिका

परैस्त्वेवं सूत्रयोजना कृता प्रधानं न प्रतिपाद्यं अशब्दं हि तत् शब्देन प्रतिपादयितुमशक्यं हि तत् । अशक्यत्वं च ईक्षतिश्रवणादिति । नैषोचिता प्रतिज्ञावाक्ये धर्म्युपस्थापकशब्दस्याध्याहार्यत्वात् अशब्दं हि तदित्युक्तेऽपि हेत्वन्तरसाकाङ्क्षत्वाच्च, 'नानुमानमतच्छब्दात्' 'आनुमानिकमप्येकेषाम्' इत्यादिसूत्रेषु आनुमानिकादिशब्दवदशब्दस्याप्यवयवार्थमुखेन धर्म्युपस्थापनक्षमतयाऽध्याहारनिरपेक्षत्वादयवशात्तयैवानुमानाकारावगमरूपपूर्वपक्षबीजस्य सूत्रेणैव द्योतमा

## गूढार्थसंग्रहः

'दृष्टश्च सुप्ते चेतनस्य निष्प्रपञ्चतापुरुषार्थः। अद्वितीयब्रह्मप्रतिपत्त्यर्थं सर्वजगदुपादानत्वप्रतिपादनसामर्थ्यादेव प्राप्तस्य ब्रह्मणि प्रपञ्चस्य अद्वितीयपुरुषार्थसिद्ध्यर्थमनूद्य निषेधो युज्यते । जाग्रत्स्वप्नकालौ अहंममाध्यासपुरस्सरप्रमातृत्वादिव्यवहारवन्तौ तस्यैव सुषुप्तिकालादन्यकालत्वात् व्यवहारत्रितय वा दर्शिताध्यासोपादानमन्तरेणानुपपन्न अध्यासाभावे व्यवहारादर्शनात । सुषुप्ते' इति विवरणे उक्तया व्यवहाराभावकाल एव अद्वितीयपुरुषार्थः सुषुप्तौ इत्यङ्गीकारेण परैः जगत्कारणस्यानन्दरूपत्वमुपपादनीयम् । कारणत्वमानन्दत्वञ्चोभयमपि निर्विशेषे कल्पितमेव । एवं च ईक्षितृत्वेन प्रधानविलक्षणत्वं जगत्कारणस्य समर्थयता व्यासेन प्रधानोपादानतावादिसाङ्ख्यवत् कूटस्थनित्यात्माऽभ्युपगन्तृनिर्विशेषात्मवादिमतमप्यप्रामाणिकमिति निर्धारितम् । सुषुप्तावविद्यायाः अन्तःकरणस्य च परमतेऽङ्गीकारेण तदात्वेऽद्वितीपुरुषार्थस्य कथं सिद्धिः ? एवमङ्गीकर्तृमते अविद्यादिविरहदशायां पुरुषार्थनिरूपणमेव नसंभवतीति मुक्तौ पुरुषार्थसभावनाया एव नावकाशः । 'यनाक्षरपुरुषवेद सत्यम्' 'तंत्वौपनिषदं पुरुषम्' इत्युक्तःपुरुष एव असंकुचितार्थपुरुषशब्दवाच्यः छान्दोग्ये 'आचार्यवान्पुरुषो वेद अथ सपत्स्ये' इति श्रुत्यर्थस्य 'परंज्योतिरुपसंपद्य–सउत्तमःपुरुषः' इत्यत्र निर्धारणेन उत्तमपुरुषएव प्राप्यतया पुरुषार्थरूप इति तस्यैव जिज्ञास्यता ॥

अत्र पुरुषोत्तमशब्दोपादानेन अयमर्थस्सूचितः । 'द्वाविमौ पुरुषौ लोके, उत्तमःपुरुषस्त्वन्यः, अतोऽस्मि लोके वेदे च प्रथितःपुरुषोत्तमः' इति गीतायां पञ्चदशे अचिज्जीवविलक्षणस्यैवोत्तमपुरुषत्व प्रतिपादितम् । तस्यैव ब्रह्मत्वेन जगत्कारणलक्षणलक्ष्यत्व युक्तम् । एव सप्तमे गीतायां–'भूमिरापोऽनलो वायु –मे भिन्ना प्रकृतिरष्टधा' 'मे परा जीवभूताम्' 'मत्तःपरतरं नान्यत्' इत्यत्राचिदपेक्षया जीवस्योत्कर्षः उभयस्वामित्वं परमात्मनः, तत उत्कृष्टवस्तुनिषेधेन अचिज्जीवस्वामिनएव निरवधिकोत्कर्षं इत्यादिकस्फुट प्रतिपादितम् । एतेनापि ब्रह्मशब्दार्थनिरवग्रहमहत्वमचिज्जीवविलक्षणस्यैव प्रतिपादितं भवति । अयमर्थः 'ब्रह्मशब्देन–पुरुषोत्तमोऽभिधीयते' इति प्रथमसूत्रविवरणभाष्ये विवक्षितः। तेन अचिज्जीववैलक्षण्य ब्रह्मलक्षण लक्ष्यताऽवच्छेदक सिद्धम् । अस्यैव प्राप्यत्व 'पुरुषस्सपरःपार्थ भक्त्या लभ्य.' इत्यादौ गतिद्वारकं प्रतिपादितम् । तेन 'परात्पर पुरुषमुपैति दिव्यम्' 'अस्माच्छरीरात्समुत्थाय परज्योतिरुपसंपद्य' इति श्रुत्यर्थोऽपि निर्धारितः । एतेनाचिज्जीवविलक्षणस्यैव प्राप्य व सिद्धम् । 'ब्रह्मविदाप्नोति परम्' इति प्राप्यत्वेन ब्रह्मप्रस्तुत्य तद्विशदीकरणं 'सत्यज्ञानम्' इत्यादौ एतत्सर्वमभिप्रेत्य 'सत्यंज्ञानमनन्त ब्रह्म' इति श्रुतिरपि अचिज्जीवविलक्षणस्वरूपपरेतिप्राक् निरूपितम् । तत्राचिज्जीववैलक्षण्यरूपलक्ष्यताऽवच्छेदकैकदेशः ईक्षत्यधिकरणेन साधितो भवतीति भावः ॥

ईक्षत्यधिकरणं समाप्तम्

## श्रुतप्रकाशिका

नत्वसिद्धेश्च भाष्यकाराभिमता योजना साधीयसी । ‘गौणश्चेन्नात्मशब्दात्’ इत्यनात्मशब्दस्य स्वरूपपरत्वमाश्रित्य— जीवं निर्दिश्य सच्छब्दवाच्यस्वरूपत्वेन व्यपदेशादगौणमीक्षणमित्यप्ययुक्तम् । तस्यामोघेक्षणत्वायोगात् सूत्रास्वारस्याच्च नहि गौणश्चेन्नजीवशब्दादित्युक्तम् । * स्वरूपपरआत्मशब्दस्सापेक्षः जीववाचिपदसमभिव्याहारेणविना तस्याचिद्व्यावर्तनासा- मर्थ्यात् चेतनपरस्त्वात्मशब्दः ‘ऐतदात्म्यमिदं सर्वम्’ इति चिदचिदात्मकसमस्तप्रपञ्चप्रत्यात्मत्वं दर्शयन्नचिद्व्यावर्तने ऽतीव निराकाङ्क्षः । अतस्साकाङ्क्षहेतुनिर्देशादपि निराकाङ्क्षहेतुनिर्देशोवरमिति तस्यापि सूत्रस्य यथोक्तएवार्थः । चिदचि- दात्मकसमस्तजगदन्तरात्मवाचिन आत्मशब्दस्य ममात्मा भद्रसेन इतिवन्मुख्यार्थानुपपत्त्यभावेन गौणत्वशङ्कानुदयात् तदा त्मशब्दो नगौण इति प्रतिज्ञावाक्यान्तरनिरपेक्षत्वाच्च । तृतीय सूत्रमपि परमसाध्यहेतुवाचीति युक्तम् । सर्ववेदान्तानामै- ककण्ठ्य दर्शयता गतिसामान्यसूत्रेणैव श्वेताश्वतरवाक्यस्यापि क्रोडीकृतत्वाच्छ्वेताश्वतरवाक्यस्य ‘श्रुतत्वात्’ इति सूत्र- विषयत्वाश्रयणमयुक्तम् ॥

यत्तूक्तं यादवप्रकाशीयैः—‘सता सपन्न’ इति सत्प्राप्तिमात्रमुक्तं नत्वैक्यं सच्छब्दस्य प्रधानपरत्वेऽपि सतिसपत्ति र्घटते । स्वाप्ययश्च सर्वेषां जीवानां पृथक्पृथक्स्वस्मिन्नप्ययो भवत्विति शङ्कापरिहाराय सुषुप्तौ सर्वजीवानां गन्तव्यस्य वस्तुन एकत्वं तत्रसति तेषामैक्यापत्तिश्च गतिसामान्यसूत्रेणोच्यते, विषयश्च *‘यथा सोम्य मधुमधुकृतोनिस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसान् समवहारमेकतां सङ्गमयन्ति ते यथा तत्र न विवेकं लभन्ते अमुष्याहं वृक्षस्य रसोऽस्मि अमुष्याहं वृक्षस्य रसोऽस्मीति एवमेव खलु सोम्येमास्सर्वाःप्रजास्सति सम्पद्य नविदुरिति’ वाक्य मिति—तदप्ययुक्तम्; तथाहि दृष्टान्तानुगृहीतमैक्यतामवगमयत् ‘सति सम्पद्य’ इत्यादिवाक्य किं कारणत्वमुपजीव्यसतः प्रधानत्वव्युदासकं उत कारणत्वमनुपजीव्य ? प्रथमे गतिसामान्यसूत्रवैयर्थ्यं स्यात्, स्वाप्ययस्य कारणत्वापत्तिरूपतया स्वाप्ययसूत्रेणैव प्रधानत्वव्युदाससिद्धेः । दृष्टान्तवैघट्यं च; बहूनां रसानामेकस्मिन्कारणे लयस्य निदर्शितत्वाभावात् । रस वतामवयवानां मधुत्वरूपेण समानरसत्वापत्तिरेवहि तत्र दृश्यते । द्वितीये च जीवानां कीदृशमैक्यं सतः प्रधानत्वव्युदा- सकम् । नतावज्जीवत्वप्रहाणेन सतैकत्वं, जीवत्वप्रहाणस्य भवताऽनभ्युपगमात् जीवनित्यत्वश्रुतिविरोधात् ‘प्राज्ञेनात्मना सम्परिष्वक्तो नबाह्यं किंचन वेद नान्तरम्’ इत्यशस्य जीवस्य तदा प्राज्ञाऽधिष्ठितत्वश्रवणाविरोधात्, पुनरपि व्यव स्थितकर्मफलभोगाद्यनुपपत्तेश्च । नच सद्रूपेणैकत्वं तज्जाग्रद्दशायामप्यस्तीति तदानीमिव जीवानां स्वापे स्वस्वरूपावस्थानप्रधा- नसंसर्गयोरविरोधादभिमतासिद्धेः । नच देवत्व,मनुष्यत्व,रागद्वेषादिबाह्याभ्यन्तरविकल्पाभिमानविरहणैक्यं तस्यापि स्वस्व- रूपावस्थानप्रधानसंसर्गयोरविरोधित्वेन सम्पत्त्यप्ययाधिकरणस्य स्वस्वरूपप्रधानव्यतिरेकासिद्धेः । अतस्सूत्रवैयर्थ्यशङ्कापरि- हारासिद्ध्योरन्यतरावश्यम्भावात् परोक्तार्थपरत्वं सूत्रस्यायुक्तम् । यच्च ‘श्रुतत्वात्’ इति सूत्रस्य प्रतिज्ञावाक्यप्रभृति— ‘सयएषोऽणिमैतदात्म्यम्’ इत्यादिवाक्यजातं विषयतयोपात्तं तदप्ययुक्तं ‘प्रतिज्ञाविरोधात्’ ‘नात्मशब्दात्’ इत्यादिभिस्तोत्रपरस्य पुनरुक्तिप्रसङ्गात् । अतस्सूत्राणां यथोक्त एवार्थः ॥

ईक्षत्यधिकरणं समाप्तम्



श्रीमते रामानुजाय नमः

अथ वेदान्तसारः

तत्र तावत्प्रधानं वेदान्तप्रतिपादनानर्हमित्याह—

## सू.५—ईक्षतेर्नाशब्दम् (१.१.५)

अशब्दम्—आनुमानिकं प्रधानम् । तत् वेदान्तवेद्यं न ; कुतः ? ईक्षतेः ' सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ' (छा.६.२.१) इति प्रस्तुतजगत्कारणव्यापारवाचिनः ईक्षतेर्धातोःश्रवणात् ' तदैक्षत बहुस्याम् ' (छा.६.२.३)इति

## सू ६—गौणश्चेन्नात्मशब्दात् [१.१.५]

' तत्तेज ऐक्षत ' इत्यादिष्वचेतनेऽपि वस्तुनि ईक्षतिश्श्रूयते तत्र गौणइति चेन्नैतदुपपद्यते, प्रस्तुते सच्छब्दवाच्ये श्रूयमाणाच्चेतनवाचिनः आत्मशब्दात् । ' सआत्मा तत्त्वमसि श्वेतकेतो ' (छा.६.८.७) इति ह्युत्तरत्र श्रूयते । तेजःप्रभृतिष्वपि नगौणमीक्षणम् । तेजःप्रभृतिशब्दैरपि तत्तच्छरीरक ब्रह्मैवाभिधीयते ' अनेन जीवनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि ' (६.३.२) इति ब्रह्मात्मकजीवानुप्रवेशादेव सर्वस्य वस्तुनो नामरूपभाक्त्वात् । ' तत्सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य । सच्चत्यच्चाभवत् । निरुक्तंचानिरुक्तं च । निलयनंचानिलयनं च । विज्ञानञ्चाविज्ञानं च सत्यंचानृतं च सत्यमभवत् ' इति चेतनमचेतनं च पृथङ्निर्दिश्य तदुभयमनुप्रविश्य सत्यच्छब्दवाच्योऽभवत्—इति समानप्रकरणे स्पष्टमभिहितम् ॥

## सू ७—तन्निष्ठस्य मोक्षोपदेशात् (१.१.५)

इतश्च प्रधानादर्थान्तरभूतं सच्छब्दाभिहितं जगत्कारणम् । सच्छब्दाभिहिततत्त्वनिष्ठस्य मोक्षउपदेशात् ' तस्य तावदेव चिरं यावन्नविमोक्ष्ये अथ सम्पत्स्ये ' (छा.६.१४.२) इतिहि तन्निष्ठस्य मोक्षउपदिश्यते । प्रधानकारणवादिनामपिहि प्रधाननिष्ठस्य मोक्षो नाभिमतः ॥

## सू ८=हेयत्वावचनाच्च [१.१.५]

यदि प्रधानमात्र विवक्षितम् ; तदा तस्य हेयत्वात् अध्येयत्वमुच्येत । नतदुच्यते । मोक्षसाधनतया ध्येयत्वमेवात्रोच्यते ; ' तत्त्वमसि श्वेतकेतो ' इत्यादिना ॥ इतश्च न प्रधानम्—

## सू.९—प्रतिज्ञाविरोधात्[१.१.५]

एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधात् । सच्छब्दवाच्यतत्त्वज्ञानेन तत्कार्यतया चेतनाचेतनसर्ववस्तुज्ञानम् 'येनाश्रुत श्रुत भवति ' इत्यादिना प्रतिज्ञातम् । तद्धि प्रधानकारणवादे विरुध्यते, चेतनस्य प्रधानकार्यत्वाभावात् । प्रधानादर्थान्तरभूतब्रह्मकारणवादे चिदचिद्वस्तु शरीरं ब्रह्मैव नामरूपविभागाऽविभागाभ्यां कार्यं कारणंचेति ब्रह्मज्ञानेन कृत्स्नस्य ज्ञाततोपपद्यते ॥ इतश्च न प्रधानम्—

## सू.१०—स्वाप्ययात् (१.१.९)

'स्वप्नान्तमे सोम्य विजानीहीति यत्रैतत्पुरुषस्स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति । स्वमपीतो भवति । तस्मादेन स्वपितीत्याचक्षते । स्वंह्यपीतो भवति ' (छां.६.८.१) इति जीवस्य चेतनस्य सुषुप्तस्य सता सम्पन्नस्य स्वाप्यय-वचनात् प्रधानादर्थान्तरभूत सच्छब्दवाच्यमिति विज्ञायते । स्वमपीतो भवति आत्मानमेव जीवोऽपीतोभवतीत्यर्थः । चिदचिद्वस्तुशरीरकं तदात्मभूतं ब्रह्मैव जीवशब्देनाभिधीयत इति नामरूपव्याकरणश्रुत्युक्तम् । तज्जीवशब्देनाभिधेय परब्रह्मैव सुषुप्तिकालेऽपि प्रलयकालइव नामरूपपरिष्वङ्गाभावात् केवलसच्छब्दाभिधेयमिति ' सता सोम्य तदा सम्पन्नो भवति स्वम पीतोभवति ' (छा.६.८.१) इत्युच्यते । तथा समानप्रकरणे नामरूपपरिष्वङ्गाभावेन प्राज्ञेनैव परिष्वङ्गात् ' प्राज्ञेनात्मना सम्परिष्वक्तो नबाह्य किंचन वेद नान्तरम् ' (बृ.६.३.२१) इत्युच्यते । आमोक्षाज्जीवस्य नामरूपपरिष्वङ्गादेर्वाहि स्वस्य-तिरिक्तविषयज्ञानोदयः । सुषुप्तिकालेहि नामरूपे विहाय सता सपरिष्वक्तः पुनरपि जागरदशायां नामरूपे परिष्वज्य तत्त-न्नामरूपो भवतीति श्रुत्यन्तेर स्पष्टमभिधीयते । यथा ' सुप्तः स्वप्न न कञ्चन पश्यति ' (बृ.६.३.१९) ' अथाऽस्मिन्प्राण एवैकधा भवति एतस्माद्वा आत्मनःप्राणा यथायथ विप्रतिष्ठन्ते ' (कौषी.४.१९) तथा ' इह व्याघ्रोवा सिंहोवा वृको वा वराहोवा—यद्यद्भवन्ति तथा भवन्ति ' इति ॥

## सू ११=गतिसामान्यात् (१.१.९)

सकलोपनिषद्गतिसामान्यादस्यामप्युपनिषदि न प्रधान कारणमिति ज्ञायते । ' आत्मा वा इदमेक एवाग्र आसीत् नान्यत्किञ्चन मिषत्, स ईक्षत लोकान्नु सृजा इति सइमाल्लोकानसृजत ' (ऐत.१.१.१) ' तस्माद्वा एतस्मादात्मनं आकाशस्सम्भूतः ' (तै.आन.१) ' सकारण करणाधिपाधिपो नचास्य कश्चिज्जनिता नचाधिपः ' इत्यादिसकलोपनिषत्सु सर्वेश्वरएवाहि जगत्कारणमिति प्रतिपाद्यते ॥

## सू १२—श्रुतत्वाच्च (१.१.९)

श्रुतमेव तस्यामुपनिषदि—'आत्मतःप्राणः—आत्मत आकाशः' (छा७.२६.१) इत्यादौ आत्मनएव सर्वोत्पत्तिः ; अतः प्रधानादचेतनादर्थान्तरभूतस्सर्वज्ञः पुरुषोत्तम एव जगत्कारण ब्रह्मेति स्थितम् ॥

इति वेदान्तसारः



श्रीमते रामानुजाय नमः

अथ वेदान्तदीपः

## सू.५—ईक्षतेर्नाशब्दम् (१.१.५)

' येनाश्रुत श्रुत भवति ' (छा.६.१.३) इत्यादिजगत्कारणवादिवेदान्तवेद्य विषय । तत्किं साङ्ख्योक्त प्रधानम् उतानवधिकातिशयानन्द ब्रह्मेति संशयः । प्रधानमिति पूर्वपक्षः । कुत ? प्रतिज्ञादृष्टान्तान्वयनानुमानाकारवाक्यवेद्यत्वात्

'येनाश्रुतं श्रुतभवति' (६.१.३) इत्यादिना एकविज्ञानेन सर्वविज्ञान प्रतिज्ञाय 'यथा सोम्यैकेन मृत्पिण्डेन' (छां. ६.१.४) इति दृष्टान्तेनशुपपादने । एवमानुमानिकमेनद्वाक्यवेद्यमिति निश्चीयते । 'सदेव सोम्येदम्' (छा.६.२.१) इति सच्छब्द: प्रधानविषय: । 'तदैक्षत बहुस्याम्' (छा.६.२.३) इति च गौणमीक्षण भवितुमर्हति, 'तत्तेज ऐक्षत' (६.२.३) इत्यादिगौणेक्षणसाहचर्याच । राद्धान्तस्तु–'तदैक्षत बहुस्याम्' (६.२.३) इति बहुभवनसङ्कल्परूपेक्षणान्वयात्, 'सदेव सोम्य' (६.२.१) इति कारणाभिसच्छब्दविषया नाचेतन प्रधानम्; अपितु सार्वज्ञ्य सत्यसङ्कल्पत्वादियुक्त परब्रह्मैवेति निश्चीयते । नचानुमानाकारमेतद्वाक्यम् । हेत्वनुपादानात् । अन्यज्ञानेनान्यज्ञानासम्भवपरिजिहीर्षया तु दृष्टान्तोपादानम् नच मुख्येक्षणसम्भवे गौणपरिग्रहसम्भव: । तेज:प्रभृतिष्वपि न गौणमीक्षणम्, तेजआदिशब्दाना तेज:प्रभृतिशरीरकस्यान्तर्यामिणो वाचकत्वादिति परमेव ब्रह्म जगत्कारणवादिवेदान्तवेद्यम्–इति ॥

सूत्रार्थ–ईक्षते: इति ईक्षतिधात्वर्थ: ईक्षणम् । शब्द: प्रमाण यस्य नभवति तत् अशब्द परोक्तमानुमानिक प्रधानम् । 'सदेव सोम्येदम्' (छा.६.२.१) इति जगत्कारणतया प्रतिपादितान्वयिन: ईक्षणव्यापारान्नाचेतनमशब्द तत् अपितु सर्वज्ञ सत्यसङ्कल्प ब्रह्मैव जगत्कारणमिति निश्चीयते ॥

## सू ६–गौणश्चेन्नात्मशब्दात् [१.१.५]

'तत्तेज ऐक्षत' (छा.६.२.३) इत्यचेतनगौणेक्षणसाहचर्यात् 'तदैक्षत'(६.२.३) इत्यत्र ईक्षतिर्गौण इतिचेन्न, आत्मशब्दात् सच्छब्दाभिहिते ईक्षितरि 'ऐतदात्म्यमिद सर्वं तत्सत्य सआत्मा' (छा.६.८.७) इति श्रूयमाणाचेतनवाचिन: आत्मशब्दादयमीक्षतिर्मुख्यएवेति प्रतीयते । 'ऐतदात्म्यमिद सर्वम' ६.८.७ इति तेज प्रभृतानामपि तदात्मकत्वावगमात् तेज:प्रभृतीक्षणमपि मुख्यमेवेत्यभिप्राय. ॥

## सू ७–तन्निष्ठस्य मोक्षोपदेशात् (१.१.५)

इतश्च सच्छब्दाभिहित नप्रधानम् । अपितु परमेव ब्रह्म । 'तत्त्वमसि' (छा.६.८.७) इति सदात्मकतया प्रत्यगात्माऽनुसन्धाननिष्ठस्य 'तस्य तावदेव चिर यावन्नविमोक्ष्ये अथ संपत्स्ये' (छां.६.१४.२) इति मोक्षोपदेशात्कारण परमेव ब्रह्म ॥

## सू ८=हेयत्वावचनाच [१.१.५]

यदि प्रधानमिह कारणतया विवक्षितम् तदा तस्य मोक्षविरोधित्वाद्धेयत्वमुच्यते । नचोच्यते । अतश्च न प्रधानम्

## सू.९—प्रतिज्ञाविरोधात्[१.१.५]

प्रधानवादे प्रतिज्ञा च विरुध्यते । 'येनाश्रुत श्रुतम्' (छा.६.१.३) इति वक्ष्यमाणकारणविज्ञानेन चेतनाचेतनमिश्रकृत्स्नप्रपञ्चज्ञानमिह प्रतिज्ञातम् । चेतनांश प्रतिप्रधानस्याकारणत्वात् तज्ज्ञानेन चेतनांशो न ज्ञायत इति न प्रधान कारणम् ॥

## स्वाप्ययात् १.१.५।

'स्वमपीतो भवति—सता सोम्य तदा सम्पन्नो भवति' इति जीवस्य सुप्तस्य स्वाप्ययश्रुतेः। स्वकारणं ह्यप्ययः स्वाप्ययः। जीवं प्रतिप्रधानस्याकारणत्वात्स्वाप्ययश्रुतिर्विरुध्यते। अतश्च न प्रधानम्। अपितु ब्रह्मैव ॥

## गतिसामान्यात् १.१.९

इतरोपनिषद्गतिसामान्यादत्रापि चोपनिषदि न प्रधानं कारणं विवक्षितम्। इतरासु ह्युपनिषत्सु—'यस्सर्वज्ञस्सर्ववित् तस्मादेतद्ब्रह्म नामरूपमन्नञ्च जायते' (मु.१.१.९) 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' (श्वे.६.८) 'सकारणं करणाधिपाधिपः' (६.९) 'आत्मनि खल्वरे दृष्टे श्रुते मते विदिते सर्वमिदं विज्ञातं भवति' (बृ.६.५.६) 'तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतदृग्वेदः' (बृ.६.५.११) 'पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्, तस्माद्विराडजायत' (पुरुषसू.२) 'आत्मा वा इदमेक एवाग्र आसीत्—स इमाँल्लोकानसृजत' (ऐत.१.१.१) 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' (तै.आन.१) 'एको ह वै नारायण आसीत्—सएकाकी न रमेत' (महोपनिषदि.१.१) इति सर्वशःपुरुषोत्तम एव कारणतया प्रतिपाद्यते। अस्याश्च तद्गतिसामान्यादत्रापि स एव कारणतया प्रतिपादनमर्हतीति च न प्रधानम् ॥

## श्रुतत्वाच्च १.१.१०

श्रुतमेव ह्यस्यामुपनिषदि—'आत्मत एवेदं सर्वम्' (छा.७.२६.१) इति। अतश्च 'सदेव सोम्य' (६.२.१) इत्यादिजगत्कारणवादिवेदान्तेषु न प्रधानम्; सर्वज्ञ सत्यसङ्कल्प परमेव ब्रह्मेति स्थितम् ॥

वेदान्तदीपे ईक्षत्यधिकरणं समाप्तम् ॥

अथ अधिकरणसारावली

गौणेक्षासाहचर्याच्च तु बहुभवनप्रेक्षणं नैव मुख्यं
दृष्टान्ताद्यैरिहाभात्यनुमितिरचितस्तादृशाज्जन्म युक्तम्।
सच्छब्दस्तेन मूलप्रकृतिमविकृतिं व्याहरेदित्ययुक्तं
श्रुत्याऽन्येषां निरोधात्स्वदभिमततिरस्कारलिङ्गादिभिश्च ॥ १ ॥
ज्ञाते ह्येकत्र सर्वं विदितमिति भवत्यैक्यसिद्ध्यै प्रतिज्ञा
मृत्तत्कार्यादयश्च त्रय इह कथितास्तस्य दृष्टान्तभेदाः।
तेनाव्यक्तानुमानं कथितमिति वृथोत्कण्ठितं हेत्वनुक्ते-
स्सारूप्यादेश्च हेतोरुपरि परिहृतेरत्र संभावनोक्तेः ॥ २ ॥
आदेशात्मस्वशब्दैरनितरशरणैस्त्वन्तदैक्योपदेशा-
ज्जीवेन स्वेन साहंकरणमनहमोश्चिद्गणस्य प्रवेशात्।
एकज्ञानेन सर्वं विदितमिति गिरा सर्वतादात्म्यवाचा
शाखाविद्यान्तरादेरपि बहुभविता विश्वविद्विश्वमूर्तिः ॥ ३ ॥

ईक्षत्यधिकरणं समाप्तम्

## अथ आनन्दमयाधिकरणम्

एवं जिज्ञासितस्य ब्रह्मणश्चेतनभोग्यभूतजडरूपसत्त्वरजस्तमोमयप्रधानाद्व्यावृत्तिरुक्ता इदानीं कर्मवश्यात् त्रिगुणात्मकप्रकृतिसंसर्गनिमित्तनानाविधानन्तदुःखसागरनिमज्जनेनाशुद्धाच्छुद्धाच्च प्रत्यगात्मनोऽन्यन्निखिलहेयप्रत्यनीकनिरतिशयानन्दं ब्रह्मेति प्रतिपाद्यते—

## अथ आनन्दमयाधिकरणम्

### श्रुतप्रकाशिका

अथोत्तराधिकरणस्य पूर्वाधिकरणेन सङ्गतिमाह—एवं जिज्ञासितस्येति । जगत्कारणस्य निरूपणीयत्वे चतुस्सूत्र्यासिद्धे प्रत्यक्षसिद्धतया प्रसिद्ध्यतिशयादचेतने प्रथममवतरन्ती बुद्धिरीक्षणादिभिस्ततो व्यावर्त्य चेतनवस्तुन्यभिमुखीकृता।

## अथ आनन्दमयाधिकरणम्

### गूढार्थसङ्ग्रहः

ईक्षत्यधिकरणे आत्मशब्देन अचिद्वैलक्षण्यं साधितम् । अथ आत्मशब्दस्य जीवपरत्वसम्भवेन जीववैलक्षण्यं न सम्भवतीति शङ्कानिरासकत्वेनानन्दमयाधिकरणं प्रवृत्तम् । जीववैलक्षण्यरूपलक्ष्यताऽवच्छेदकैकदेशः आनन्दमयाधिकरणे साध्यते । 'गौणश्चेन्नात्मशब्दात्' इत्यादिभिः आत्मन्शब्दार्थनिर्धारणेन तस्यैव जगत्कारणतया प्रधानवैलक्षण्यमीक्षत्यधिकरणे निरूपितम् । 'तन्निष्ठस्य मोक्षोपदेशात्' इत्यत्र च तस्य जीवभेदोऽपि सिद्ध्यतीति तस्यैव जगत्कारणत्वमभिप्रेतम् । जगत्कारणत्वं 'यतो वा' इतिश्रुतौ जन्माद्यधिकरणे विवक्षितम् । तद्वाक्यैकवाक्यतया प्रतीतवाक्यार्थनिर्णयानन्तरमेव जगत्कारणनिर्णयः । तत्रचोपक्रमे 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' इति वाक्ये आत्मन्शब्दश्श्रुतः । आत्मन्शब्दश्च श्रुतिषु जीवपरतयाऽपि प्रयुक्तः । जीवेनैव मुख्यं संभवति इतरवाक्येषु शारीरशब्दनिर्देशेन 'स वा एष पुरुषोऽन्नरसमयः' इत्यादिना शरीरप्राणमनसामेव सम्बन्धस्य प्रतिपादनेन च शरीरसम्बन्धी जीवात्मैव विवक्षितः । 'अन्योऽन्तर आत्माऽऽनन्दमयः' इत्यत्रापि स एव विवक्षितः तस्यैव परिशुद्धस्यानन्दरूपत्वेन 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यादिकमप्युपपद्यते । जीवस्य कार्यत्वं शरीरसम्बन्धित्वेनैव, परिशुद्धस्तु न कार्यः । तस्यैव ब्रह्मत्वमिति जीववैलक्षण्यं ब्रह्मणो न सम्भवतीति अचिज्जीवाभिन्नत्वस्य ब्रह्मलक्षणलक्ष्यताऽवच्छेदकत्वं न घटते । 'सत्यं ज्ञानमनन्तम्' इतिश्रुतेः प्रामाण्योक्तार्थोऽपि न सम्भवतीति शङ्कायां लक्षणवाक्यैकवाक्यं जीवविलक्षणं ब्रह्मण एव प्राधान्यं तस्यैव कारणत्वं विवक्षितमिति अचिज्जीववैलक्षण्यं ब्रह्मलक्षणलक्ष्यताऽवच्छेदकं सम्भवत्येवेति सिद्धान्तयति—आनन्दमयोऽभ्यासादिति ॥ चेतनभोग्यभूतेति । एतेन प्रधानस्य पुरुषार्थत्वेन लोकानुभवविषयत्वं तेनच समन्वयाधिकरणे प्रतिपादितसमन्वयः प्रधानस्य सम्भवतीति त्रिवर्गप्रवणबहुजनबुद्ध्यनुसारेण प्रथमतः अचिद्वैलक्षण्योपपादनमिति सूचितम् ॥

कर्मवश्यादित्यादि—अशुद्धात् इत्यन्तेन जीवस्य कार्यत्वं शरीरसम्बन्धकृतो हेय इति च दर्शितम् । 'शुद्धाच्च' इत्यादिसिद्धान्तकथनेन परिशुद्धस्य न कार्यत्वं किन्तु तस्यैव ब्रह्मत्वं पुरुषार्थत्वञ्च परमात्मानन्दानुभूतिः शारीरविलक्षणपुरुषस्य पूर्णत्वात्मत्वं सूचितम् । निखिलहेयप्रत्यनीकेति । 'यतो वाचो निवर्तन्ते' इति श्रुतिविवक्षितानन्दस्व-

श्रीभाष्यम्

## सू १३ आनन्दमयोऽभ्यासात् [१.१.६]

तैत्तिरीया अधीयते-'सवा एष पुरुषोऽन्नरसमयः' (तै.आन.१) इति प्रकृत्य 'तस्माद्वा एतस्माद्विज्ञानमयात्। अन्योऽन्तर आत्माऽऽनन्दमयः' (५.२)इति। तत्र सन्देहः किमय मानन्दमयो बन्धमोक्षभागिनः प्रत्यगात्मनो जीवशब्दाभिलपनीयादन्यः परमात्मा ; उत स एव इति। किं युक्तम्? प्रत्यगात्मेति। कुतः? 'तस्यैष एव शारीर आत्मा' (तै.आ. ५अनु) इत्यानन्दमयस्य शारीरत्वश्रवणात् ; शारीरोहि शरीरसम्बन्धी जीवात्मा॥

श्रुतप्रकाशिका

इदानीमचेतनापेक्षया प्रसिद्धिमान्द्येऽपि परमात्माऽपेक्षया प्रसिद्धतरेऽहंप्रत्ययसिद्धे * प्रत्यगात्मन्यवतरन्ती बुद्धिर्व्यावर्त्यत इत्यर्थः॥

## सू १३ आनन्दमयोऽभ्यासात् [१.१.६]

* कारणविषयस्य 'तस्माद्वा एतस्मादात्मनः' इति वाक्यस्योत्तरत्र चोद्यपरिहारमुखेनोदाहरिष्यमाणत्वात् प्रथमात्मशब्दव्याख्यानोपक्रमभूत 'सवा एष पुरुष' इत्यादिकमुपात्तम्। अतएवहि प्रबन्धान्तरे 'तस्माद्वा' इत्यादिकमुदाहृतम्। तत्रेति। शारीरत्वानन्दप्राचुर्याभ्यां संशय इत्यभिप्रायः। सद्विद्यायां 'जीवेनात्मना' इति सामानाधिकरण्यमत्र पूर्वपक्षोत्थानबीजमिति सूचनार्थं जीवशब्दाभिलपनीयादिति पदम्। किं कारणवादिनस्सर्वे वेदान्ताः परिशुद्धप्रत्यगात्मस्वरूपपराः? उत तद्विलक्षणपरा इति प्रथमविचारः तदर्थमानन्दमयः किं परिशुद्धावस्थः प्रत्यगात्मा उत परमात्मेति? तदर्थमिह प्रतिपन्नश्शरीरसम्बन्धः किं जीवात्मासाधारणः उत न, तदर्थं मयट् किं स्वार्थिकत्वविकारार्थकत्वयोरन्यतरस्थान्? उत प्राचुर्यार्थः। तदर्थं किं विकाराद्यर्थानुगुणहेतवोऽनुरोद्धव्याः? उत प्राचुर्यार्थानुगुणहेतवः विज्ञानमयशब्दः किं विज्ञानमात्रपरः? उत जीवपरः तदर्थं तत्र मयट् किं स्वार्थिकः? उतन। तदर्थं 'विज्ञानं यज्ञं तनुते' इति विज्ञानशब्दः किं ज्ञानमात्रे वर्तते? उत ज्ञानगुणके प्रत्यगात्मनीति। पूर्वे कल्पाः पूर्वपक्षाः इतरतु राद्धान्ताः। यदा विकारार्थत्वाद्यनुगुणहेतोरनुरोद्धव्यत्वेन मयट् स्वार्थिको विकारार्थो वा भवति। तदा निरतिशयप्राचुर्याप्रतिपत्तेरानन्दमात्रस्य जीवसंभवात् स्वतो जीवानुगुणतया प्रतिपन्नस्य शरीरसम्बन्धस्य जीवासाधारणत्वे विरोधाभावादानन्दमयो जीवः यदाच श्लोकस्थ विज्ञानशब्दो विज्ञानमात्रपरः तदा विज्ञानमयशब्दस्यापि स्वार्थिकमयडन्तत्वेन विज्ञानमात्रपरत्वाद्विज्ञानशब्दस्य बुद्धिपर

गूढार्थसङ्ग्रहः

शब्दार्थः। दीपसारयोः 'तस्माद्वा एतस्मादात्मनः' इति वाक्योपादानेन पूर्वोक्तपूर्वपक्षबीजं सूचितम्। भाष्येतु 'सवा एषपुरुषोऽन्नरसमयः' इति वाक्योपादानेन जीवात्मन एव 'तस्माद्वा एतस्मादात्मनः' इत्यत्र कारणतयोक्तस्य शरीरसम्बन्धप्रतिपादनेन पूर्वपक्षबीजं सूचितम्। आत्मशब्दार्थपरिसमाप्तिदशायां आनन्दमये शारीरत्वमुपपादितम्। तेनानन्दमयो जीवः इत्यानन्दमयस्य शारीरत्वश्रवणादित्यनेन बोधितम्। अत्र 'सवा एष पुरुषोऽन्नरसमयः' इत्युपक्रमोक्तशरीरसम्बन्धस्य आनन्दमये परिसमाप्तया उपक्रमोपसंहारयोरैकरूप्येन शरीरसम्बन्धीजीवात्मैव विवक्षितइति पूर्वपक्षयुक्तिस्सूचिता॥

### श्रीभाष्यम्

**ननु च जगत्कारणतया प्रतिपादितस्य ब्रह्मणः सुखप्रतिपत्त्यर्थमन्नमयादीननुक्रम्य तदेव जगत्कारणमानन्दमय इत्युपदिशति ; जगत्कारणं च 'तदैक्षत' (छां.६.२.३) इतीक्षणश्रवणात्सचेतनस्सर्वेश्वरइत्युक्तम् ॥ सत्यमुक्तम् ; स तु जीवान्नातिरिच्यते—**

### श्रुतप्रकाशिका

त्वसम्भवात् तदन्तर आनन्दमयः प्रत्यगात्मेति पूर्वपक्षे फलफलिभावः ॥

**राद्धान्ते**तु यदा प्राचुर्यार्थानुगुणहेतोरनुरोद्धव्यत्वेनानन्दमय इत्यत्र मयट् प्राचुर्यार्थः । तदानीमानन्दमयप्राचुर्यस्य *निरवधिकतयाऽवगतस्य श्रुतविरुद्धाश्रुतोपाधिकल्पनायोगेन स्वतो निरातिशयस्य जीवात्मन्यसम्भवात् तद्विरोधेन* शरीरसम्बन्धस्य जीवासाधारणकर्ममूलत्वाभावाच्च नानन्दमयः प्रत्यगात्मा । यदाच श्लोकस्थविज्ञानशब्दो विज्ञानगुणके प्रत्यगात्मनि वर्तते तदा विज्ञानमयशब्दस्यापि प्राचुर्यार्थमयडन्ततया प्रत्यगात्मवाचित्वाच्च तदन्तरआनन्दमयः परमात्मेति फलफलिभावः ॥

पूर्वपक्षोत्थानमाक्षिपति **ननुचेति** । **सुखप्रतिपत्त्यर्थमन्नमयादीननुक्रम्येति** । अनेन जगत्कारणप्रकरणस्याविच्छित्तिर्द्योतिता **तदेव जगत्कारणमिति** । वक्ष्यमाणपर्यालोचनया विभूतिप्रकर्षाधीनातिशयिताऽनन्दस्याश्रयित्वोपपादकं सकलजगत्कारणत्वमिति भावः । तत किमित्यत्राह—**जगत्कारणचेति** । ज्ञानशक्त्युपयोगज्ञापनाय जगत्कारणमिति पुनरुपादानम् । परिहरति—**सत्यमिति** । * चेतनत्वादावभ्युपगमः जीवादतिरेके विवादः सामानाधिकरण्यनिर्देशोऽस्तु । ततः

### गूढार्थसंग्रहः

'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यत्रोपक्रमे उक्तब्रह्मणएव 'तस्माद्वा एतस्मादात्मनः' इति श्रुतावभिप्रेतत्वेन सद्विद्यायामात्मशब्दमात्रसत्त्वेऽपि अत्र ब्रह्मशब्दस्यापि सद्भावेन तस्यैव मुख्यमचिज्जीवबहुभवनेक्षण नतु जीवस्येति पूर्वाधिकरण एव सिद्धान्तितत्वेन अत्र जीवपूर्वपक्ष एव नघटत इति शङ्कते—**ननुचेत्यादिना । सतु जीवान्नातिरिच्यते** इति । ईक्षत्यधिकरणे प्रधानवैलक्षण्यप्रतिपादनेऽपि 'अनेन जीवेनात्मना' इत्यत्र आत्मनि जीवाभेदस्याभिधानेन जीवस्यब्रह्माभेदतात्पर्येण 'तस्माद्वा एतस्मादात्मनः' इत्यत्र ब्रह्मणो विवक्षेति भावः । पूर्वपक्षसमर्थनार्थं सिद्धान्तयुक्तिमाशङ्कते—**ननुचेत्यादिना । यस्सर्वज्ञस्सर्वेश्वर इत्युक्तमिति** । एतदुभय परेषामपि सम्मतम् । सर्वज्ञत्व निर्विशेषवादे न स्वरसमिति प्रागेवोपपादितम् । 'सुषुप्तस्थानएकीभूतः प्रज्ञानघनएवानन्दमयो ह्यानन्दभुक्चेतोमुखः प्राज्ञस्तृतीयपादः एषसर्वेश्वरः एष सर्वज्ञः एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौहि भूतानाम्' (माण्डूक्य.५.६) इति श्रुतिरत्राभिप्रेता। अत्र सर्वेश्वरत्वसर्वज्ञत्वे प्राज्ञे प्रतिपादिते । 'प्राज्ञेनात्मना सम्परिष्वक्तः' इति बृहदारण्यकश्रुतौ जीवब्रह्मभेदो विवक्षित इति 'सुषुप्त्युत्क्रान्त्योर्भेदेन' इतिसूत्रे परेऽप्यभ्युपगच्छन्ति । एतद्भाष्यो(दा)क्तप्रकारः नस्वरस इति त्रय्यन्तसारामृते उपपादितम् । एतेन सर्वज्ञत्वसर्वेश्वरत्वे ब्रह्मणि जीवाभेदपक्ष एव अन्तर्यामिणि सङ्गेइति श्रुतियुक्तसिद्धान्तो निष्पन्नः एतच्छ्रुतेः जीवपरत्वासम्भवेनानन्दमयशब्दार्थः जीव इति नसिद्धान्तयितु शक्यत इत्यनेन बोधितम् ॥

**सत्यमुक्तं सतु जीवान्नातिरिच्यतइति** । माण्डूक्योपनिषदि सर्वज्ञसर्वेश्वरादिपदसत्त्वेऽपि 'सवा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः' इत्यत्र जीवब्रह्माभेदकथनपूर्वकं 'एषसर्वेश्वरः' इत्यादिनिर्देशेन जीवेऽपि सर्वेश्वरादिशब्दा न विरुध्यन्ते । तस्माद्वा एतस्मादात्मनः' इत्युपक्रमोक्तात्मशब्दाधिकरणपरे 'अन्योन्तर आत्म

## श्रीभाष्यम्

'अनेन जीवेनात्मनाऽनुप्रविश्य' (छां.६.३.२) 'तत्त्वमसि श्वेतकेतो' (६.८.७) इति कारणतया निर्दिष्टस्य जीवसामानाधिकरण्यनिर्देशात्। सामानाधिकरण्यं ह्येकत्वप्रतिपादनपरम्; यथा 'सोऽयं देवदत्तः' इत्यादौ। ईक्षापूर्विका च सृष्टिश्चेतनस्य जीवस्योपपद्यत एव। अतः 'ब्रह्मविदाप्नोति परम्' (तै.आ.१) इति जीवस्याचित्संसर्गवियुक्तं स्वरूपं प्राप्यतयोपदिश्यते। अचिद्वियुक्तस्वरूपस्य लक्षणमिदमुच्यते। 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै आन.१) इति, तद्रूपप्राप्तिरेव हि मोक्षः। 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' (छां.८.१२.१) इति। अतो जीवस्याविद्यादियुक्तं स्वरूपं प्राप्यतया प्रक्रान्तमानन्दमय इत्युपदिश्यते। तथाहि शाखाचन्द्रन्यायेनान्नमयस्वरूपं

## श्रुतप्रकाशिका

किं जीवादवैलक्षण्यमेवेत्यत्राह—**सामानाधिकरण्यमिति**। ईक्षतिश्रवणाज्जीवविलक्षणमुक्तमित्यत्राह—**ईक्षेति**। उपपद्यतएवेत्येवकारः * अस्वारस्यसूचकः * साक्षित्वमेवेक्षितृत्वमिति भावः। * 'भेदव्यपदेशाच्च' इति भेदव्यपदेश सिद्धान्तहेतु वदता सूत्रकारेणैक्यव्यपदेशस्य पूर्वपक्षहेतुत्वं विवक्षितमित्यवगम्यते। एवमुत्थानोपपत्तेरसौत्रहेतुवशाच्चैक्यव्यपदेशः पूर्वपक्षहेतुतयोपन्यस्तः। एवं पूर्वाधिकरणेन * जीवव्यतिरेकासिद्धेरधिकरणान्तरमारम्भणीयमिति भावः॥

ननु '**ब्रह्मविदाप्नोति परम्**' इत्यत्र ब्रह्म प्राप्यं श्रूयते, अनन्तरं लक्षणं कथ्यते तत्र सत्यत्वमानन्त्यचान्तर्भूतम्। जीवस्य नित्यप्राप्तत्वात् प्राप्यत्वमनुपपन्नं, ज्ञातत्वाल्लक्षणं च न वाच्यं, सत्यत्वानन्तत्वरूपलक्षणविशेषश्च * नैकरूपज्ञानस्य परिच्छिन्नस्य नोपपद्यते। अतःपरमात्मैव प्रतिपाद्यत इति शङ्कां परिहरन्पूर्वपक्षमाह—**अतोब्रह्मविदिति**। अतः शारीरत्वश्रवणात् सामानाधिकरण्यबलेनैक्यस्य प्रतिपन्नत्वाच्चाचिद्वियुक्तस्वरूपप्राप्यतापरत्वं कल्प्यमित्यर्थः। लक्षणकथनं तत्प्रतिपत्त्यर्थं तद्विशेषोक्तिश्चाचिद्वियुक्तं स्वरूपे सम्भवतीत्याह— **अचिद्वियुक्तेति**। नकेवलं शारीरत्वसामानाधिकरण्यबलादचिद्वियुक्तस्वरूपस्य प्राप्यत्वं, किंतु कण्ठोक्तं चेत्याह—**तद्रूपेति**। हिशब्दःश्रुतिप्रसिद्धिद्योतकः॥

यद्वा स्वरूपस्यैवौपाधिकाकारनिवृत्तिमात्रपरमोक्षशब्दस्वारस्यसूचकः श्रुतिमेव दर्शयति **नहवाइति**। इतिश्रवणादितिशेषः। * प्राप्यत्वानुगुणपुरुषार्थतां दर्शयन्निगमयति। **अतइति**। ननु नात्राचिद्वियुक्तजीवस्वरूपमुपदिश्यते 'सवा एषपुरुषोऽन्नरसमयः' इति शरीरसम्बन्धश्रवणादपरिच्छिन्नानन्दत्वश्रवणाच्चेत्यत्राह—**तथाहीति**। शरीरमुपलक्षणमात्र

## गूढार्थसंग्रह.

ऽनन्दमयः' इति वाक्येऽपि आत्मनशब्दः ब्रह्माभिन्नजीवपर इति 'अनेन जीवेनात्मना' इति श्रुत्यन्तरेण द्रढयति— **अनेन जीवेनेति**। 'सआत्मा' इत्यनन्तरं 'तत्त्वमसि श्वेतकेतो' इति श्रुतौ उपक्रमानुसारेण जीवपरमात्मनोरभेद एव विवक्षित इत्यभिप्रेत्याह—**तत्त्वमसि श्वेतकेतो इति**। 'ब्रह्मविदाप्नोति परम्' इत्युपक्रमे ब्रह्मशब्दोऽपि जीवे न विरुध्य तइत्यत्राह—**ब्रह्मविदाप्नोतिपरमिति**। तद्रूपप्राप्तिरेवहि मोक्षः इत्यत्र एवकारेण जीवभिन्नब्रह्मप्राप्तिर्व्यवच्छिद्यते अयमर्थश्श्रुत्यैव सिद्ध्यतीति श्रुतिमेवोदाहरति—**नहवै सशरीरस्य सतइति**। 'असाच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते सउत्तमःपुरुषः' इति श्रुतौ जीवाभिन्नब्रह्मण एव प्राप्यत्वोक्त्या अचिद्वियुक्तजीवस्वरूपप्राप्तिरेव मोक्षइति सिद्ध्यतीति भाव.॥

## श्रीभाष्यम्

**दर्शयितुम् ' अन्नमयः पुरुषः ' इति शरीरं प्रथमं निर्दिश्य तदन्तरभूतं तस्य धारकं पञ्चवृत्तिप्राणम् तस्याप्यन्तरभूतं मनः तदन्तरभूतां च बुद्धिं, ' प्राणमयो '(तै.आन.२.अ) 'मनोमयो' (३) 'विज्ञानमयः' (४) इति तत्र तत्र बुद्ध्यवतरणक्रमेण निर्दिश्य सर्वान्तरभूतं जीवात्मानं ' अन्योऽन्तर आत्माऽऽनन्दमयः ' (तै.आन.अ.५,२) इत्युपदिश्यान्तरात्मपरम्परां समापयति। अतो जीवात्मस्वरूपमेव ' ब्रह्मविदाप्नोति परम् ' (तै आन.१.अ) इति प्रक्रान्तं ब्रह्म; तदेवानन्दमय इति निश्चीयते ॥**

**ननु च ' ब्रह्मपुच्छं प्रतिष्ठा ' (तै.आन.१अनु) इत्यानन्दमयादन्यद्ब्रह्मेति प्रतीयते। नैवम्–ब्रह्मैव स्वस्वभावविशेषेण पुरुषविधत्वरूपितं शिरःपक्षपुच्छरूपेण व्यपदिश्यते।**

## श्रुतप्रकाशिका

नतु तद्विशेषणमिति तद्वियोगेनापरिच्छिन्नानन्दत्वादिकमुपदिश्यत इत्यर्थः। **तदन्तरभूतां च बुद्धिमिति**। प्राणमय मनोमययोर्मयट्प्रत्ययस्य स्वार्थिकत्वाद्विज्ञानमय इत्यत्रापि मयट् स्वार्थिकः **'विज्ञानं यज्ञंतनुते '** इति मयडन्तत्वं विना वक्ष्यमाणत्वात् **' विज्ञानसारथिर्यस्तु ' ' बुद्धिंतु सारथिं विद्धि '** इति बुद्धिविज्ञानशब्दयोरेकार्थत्वेन प्रयोगाच्च * विज्ञायतेऽनेनेति व्युत्पत्त्या विज्ञान बुद्धिरितिभावः। किमर्थमन्नमयादिनिर्देश इत्यत्राह–**तत्रतत्र बुद्ध्यवतरणेति**। अपरिच्छिन्नानन्दत्वमपि परिशुद्धात्मस्वरूपस्य संभवतीत्यर्थसिद्धम्। शारीरत्वश्रवणाजीवसामानाधिकरण्याद्विज्ञानमयशब्दस्यान्तःकरणपरत्वात् प्राप्यत्वादेः परिशुद्धस्वरूपेऽप्युपपन्नत्वाच्छरीरस्योपलक्षणत्वेन तद्वियुक्तस्वरूपेण प्राप्यत्वादिसंभवात मयट् प्रत्ययस्य स्वार्थिकत्वेन * विकारपरत्वाभावाच्च परिशुद्धप्रत्यगात्मस्वरूपविषयमिदं वाक्यमिति पूर्वपक्षसङ्ग्रहः। तत्र द्वौहेतू साधकौ अन्येतु शङ्कितदूषणान्यथासिद्धिरूपाः ॥

एवमानन्दमयशब्दस्य प्रत्यगात्मपरत्ववादिना पूर्वपक्षिणा सांख्य मृषावादिपक्षस्थश्चोदयति **ननुचेति**। तस्य पुच्छमितिषष्ठ्याऽन्यविसंबन्धप्रतीतेःसंबन्धस्य द्विनिष्ठतया * प्रतिष्ठा तद्भावेन च व्यतिरेकावगमादन्यत्वमित्यर्थः। परिहरति–**नैवमिति**। **' अन्वयं * पुरुषविधः '** इति श्रुतिवाक्यस्मरणार्थं पुरुषविधत्वरूपितमित्युक्तम् पुरुषविधत्वेन रूपितम्।

## गूढार्थसंग्रहः

**तदन्तरभूतां च बुद्धिमिति**। विज्ञानमयशब्दार्थः। अत्र विज्ञानशब्दोपादानेन ' विज्ञानसारथिर्यस्तु ' 'बुद्धिं तु सारथिं विद्धि ' इति श्रुत्यन्तरैकार्थ्यबोधनेन तदनुसारेणैव विज्ञानमयशब्दार्थो विवक्षितः। अतएव **अन्नमयप्राणमय मनोमय** शब्दानां पूर्वपर्यायेपूपक्रमवत् अत्र विज्ञानमयशब्दमनुपक्रम्य विज्ञानशब्दप्रयोगेणायमेवार्थः श्रुतावभिप्रेत इति निश्चीयते। अन्यथा विज्ञानशब्दप्रयोगवैयर्थ्यादिति भावः ॥

अपि च ' ब्रह्मपुच्छं प्रतिष्ठा ' इत्युक्त्वा इदमुच्यते ' तदप्येष श्लोको भवति असन्नेवसभवति असद्ब्रह्मेतिवेद चेत् अस्ति ब्रह्मेतिचेद्वेद सन्तमेनन्ततोविदुरिति ' अस्मिंश्च श्लोके अननुकृष्यानन्दमय ब्रह्मवेदनस्यैव भावाभावयोर्गुणदोषाभिधानाद्गम्यते ' ब्रह्मपुच्छं प्रतिष्ठा ' इत्यत्र ब्रह्मण एव स्वप्रधानत्वमिति ' इति शङ्करभाष्योक्तसिद्धान्तानुसारेण पूर्वपक्षं पर्यालोचयति–**ननुच ब्रह्मपुच्छंप्रतिष्ठेति**। पूर्वपक्षिणः आशय विवृणोति **नैवमित्यादिना**। शङ्करभाष्योक्तरीत्यनुसारेण तात्सिद्धान्तस्यैव युक्तत्वं शङ्कते—**ननुचेत्यादिना**। ' ब्रह्मविदाप्नोति परम् ' इत्युपक्रमे वेद्यत्वेन ब्रह्म प्रस्तुतम्।

## गूढार्थसंग्रह

'तदप्यभुक्ता', 'सत्य' मित्यादि 'विपश्चिता' इत्यन्ते ब्रह्मस्वरूपवेदनतत्फलानि प्रतिपादितानि 'तस्माद्वा एतस्मादात्मन' इत्यत्र उक्तब्रह्माभिन्नएवात्मा विवक्षित इति सर्वसंमतम्। तच्च ब्रह्म आनन्दमयपदबोध्य जीवाभिन्नं स्यात् जीवभिन्नं वा पदद्वय मपि नघटते। पक्षद्वयस्य श्रुतिता पर्यविषयत्वे आनन्दमयज्ञानाज्ञानयोरेव फलस्य श्रुतौ प्रतिपादनं स्यात्, नच तथावर्तते ब्रह्मज्ञानाज्ञानयोरेवफलस्य श्रुतौ प्रतिपादनात्। तत्पूर्ववात् 'ब्रह्मपुच्छप्रतिष्ठा' इत्यस्य पुच्छस्यैव ब्रह्मत्वं न त्वान दमयस्येति ज्ञायते। यद्यपि चतुर्षु पर्यायेषु पुच्छशब्दवत् अत्रमपि पुच्छशब्दः रूपणार्थ एव। 'प्रियाशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे' (ब्र सू. ३.३ १२) इति सूत्रे आदिपदेन ब्रह्मपुच्छकत्वस्यापि प्रतिपादनेन अस्य रूपणपरत्वं सूत्रकारोऽपि बोधयति। तथाऽपि उत्तरवाक्य ब्रह्मशब्दद्वयसत्त्वेन प्रेमब्रह्मण तत्र विवक्षाया आवश्यकतया पूर्ववाक्यस्थब्रह्मशब्दस्य गौण त्वकल्पनमन्याय्यम्। पुच्छशब्दस्य 'पुच्छोऽस्त्री लोमलाङ्गूलम्' इति पश्वादिपुच्छे प्रसिद्धस्य कोशोक्तार्थासम्भवेन प्रतिष्ठार्थे गौणत्वमेव कल्पनीयम्॥

अत्र पुच्छशब्दस्य शङ्करभाष्ये इत्थमर्थ उक्त, 'पुच्छवत् पुच्छप्रतिष्ठा—परायण एक नीड लौकिकस्यानन्दजातस्य ब्रह्मानन्द इत्येतदनेन विवक्ष्यते नावयवत्वम्' इति। अत्र ब्रह्मविद्याभरणम्— 'पुच्छपदमाधारत्वगुणयोगादुपचर्यते। नच तथासति पुच्छपदेनैवाधारत्वस्य लब्धतया प्रतिष्ठापद व्यर्थमेव स्यादिति वाच्यम्, स्थितिहेतुत्व प्रतिष्ठापदार्थ, नच स्थितिहेतुत्वेनैवाधार त्व लब्धमिति पुन. पुच्छपद किमर्थं तल्लक्षणेति वाच्यम्, 'कस्मिन्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामि' इति जीवरूपेण प्रविष्टस्य ब्रह्मण. स्थितिहेतुत्वेनाम्नानात्ऽपि प्राण ब्रह्माधारत्वाभावात् एवमाधारभूतानामपि पीठादीनामन्नादिवज्जीवनहेतुत्वादर्शनात् पुच्छपदेनाधारे प्रतिपादितेऽपि प्रतिष्ठापदेन 'कोह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्' इति वाक्यावगतस्थितिहेतुत्वप्रतिपादने न काचिदनुपपत्ति इति। तत्र नास्वारस्यम्। आनन्दमयस्य ब्रह्मत्वप्रतीतिनिगमकं न किंचि पश्याम प्रायपाठानुसारेण अन्नमयादितुल्यतया प्रतिपन्नस्यानन्दमयस्यान्नरसमयादिवदब्रह्मत्वम्। सर्वत्राप्युपाध्यवच्छिन्नजीवस्यैव विवक्षणीयत्वात्। उपसंहारे तु अन्यत्रैवा विशेषण सर्वत्र प्रतिपादन आनन्दमयस्य कथं ब्रह्मत्वं सम्भवति। अत उपक्रमे ज्ञेयब्रह्मण एव प्रस्तुततया ब्रह्मज्ञानाज्ञानयो फलस्यात्र निरूपणेन 'ब्रह्मपुच्छप्रतिष्ठा' इति प्रस्तुतब्रह्मज्ञानभावाभावयोरेव 'असन्नेव स भवति' इति वाक्यविवक्षा स्फुरति 'ब्रह्मपुच्छप्रतिष्ठा' इति वाक्यता पर्यविषयीभूत जीवाभिन्न ब्रह्मैवेति निर्णीयते। अत्र शङ्करभाष्यदूषणेषु प्रधानभूतैकदूषणस्य शङ्कितत्वेऽपि अन्यान्यपि दूषणानि अत्र शङ्कितुरभिप्रेतानि। तथाहि 'स वा एष पुरुषोऽन्नरसमय.' इत्युपक्रम्य विज्ञानमयपर्यन्त विकारार्थे मयट्प्रवाहेऽपि आनन्दमयएवाकस्मादर्धजरतीय यायेन कथमिव मयट् प्राचुर्यार्थे ब्रह्मविषयत्वञ्चाश्रीयत इति। मान्त्रवर्णिकब्रह्माधिकारादिति चेन्न अन्नमयादीनामपि तर्हि ब्रह्मत्वप्रसङ्ग। अन्नमयादिषु 'अन्योऽन्तर आत्मा' इति श्रूयमाणत्वादब्रह्मत्व आनन्दमयेतु तस्याश्रूयमाणत्वात्ब्रह्मत्वमितितु नशङ्क्यम् 'सत्य ज्ञानमनन्तम्' इत्यत्र यद्ब्रह्म प्रस्तुत तद्विजिज्ञापयिषयैव अन्नमयादय आनन्दमयपर्यन्ता पञ्चकोशा कल्प्यन्ते इति। अपिचानन्दमयस्य ब्रह्मत्वे प्रियाद्यवयवत्त्वेन सविशेष ब्रह्माभ्युपगन्तव्यम्। निर्विशेषन्तु ब्रह्म श्रूयते। वाङ्मनसयोरगोचरत्वाभिधानात् 'यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्द ब्रह्मणो विद्वान्। नबिभेति कुतश्चनेति' इति मयट् प्राचुर्यार्थकत्वे दु खाल्पत्वप्रतीतिरवर्जनीया स्यात्। नचानन्दमयाभ्यासश्श्रूयते। प्रातिपदिकार्थमात्रमेवहि सर्वत्राभ्यस्यते। 'रसो वै स.' इत्यारभ्य 'यदेष आकाश आनन्दो न स्यात्' 'सैषानन्दस्य मीमांसा भवति' 'आनन्द ब्रह्मणो विद्वान्। नबिभेति कुतश्चनेति' इति 'आनन्दो ब्रह्मेतिव्यजानात्' इति च। नचानन्दमयस्यब्रह्मत्व

## श्रीभाष्यम्

**यथाऽन्नमयो देहोऽवयवीस्वस्मादनतिरिक्तैः स्वावयवैरेव ' तस्येदमेवशिरः ' (तै.आन.१) इत्यादिना शिरःपक्षपुच्छवत्तया निदर्शितः । तथा आनन्दमयं ब्रह्मापि ;स्वस्मादनतिरिक्तैः प्रियाऽदिभिर्निदर्शितम् । तत्रावयवत्वेन रूपितानां प्रियमोदप्रमोदानन्दानामाश्रयतयाऽ-**

## श्रुतप्रकाशिका

अनतिरिक्तत्वमुपपादयति । यथेति । प्रकरणे स्वस्मादनतिरिक्तैस्स्वावयवैः पुच्छप्रतिष्ठात्वरूपणदर्शनात् अत्रापि पुच्छप्रतिष्ठात्वेन रूपितं ब्रह्म आनन्दमयादनतिरिक्तमित्यर्थः । षष्ठीनिर्देशस्समुदायतदेकदेशत्वनिबन्धनतयोपपन्न इति भावः ॥

## गूढार्थसंग्रह

प्रियाशिरस्त्वादिभिर्हेतुभिस्तदसम्भवात् । तस्माच्छ्रुत्यन्तरे ' विज्ञानमानन्दं ब्रह्म ' इत्यानन्दप्रातिपदिकस्य ब्रह्मणि प्रयोग दर्शनात् ' यदेष आकाश आनन्दो न स्यात् ' इत्यादिब्रह्मविषयप्रयोगः नत्वानन्दमयाभ्यासइत्यवगन्तव्यम् । (सू.भा) आनन्दमय इति कार्यात्मप्रतीतिः, अधिकारान्मयट्छब्दाच । अन्नादिमयाहि कार्यात्मनो भौतिका इहाधिकृताः तदधिकारपतितश्चायमानन्दमयः सङ्क्रमणाच्च । ' आनन्दमयमात्मानमुपसङ्क्रामति ' इति वक्ष्यति । कार्यात्मना च सङ्क्रमण अनात्मना दृष्टम् सङ्क्रमणकर्मत्वेन चानन्दमयः परमात्मा श्रूयते । यथा ' अन्नमयमात्मानमुपसङ्क्रामति ' इति । नचात्मन एवोपसङ्क्रमणमाधकारविरोधादसम्भवाच्च । नह्यात्मनैवात्मनो सङ्क्रमण संभवति स्वात्मनि भेदाभावात् आत्मभूतच ब्रह्म सङ्क्रमितुः, शिरआदिकल्पनानुपपत्तेश्च । नहि यथोक्तलक्षणे आकाशादिकारणे अकार्यपतिते शिरआद्यवयवरूपकल्पनोपपद्यते । 'अदृश्येऽनात्म्ये' 'नेतिनेति' इत्यादिविशेषापोहश्रुतिभ्यश्च ' इति (उ.भा)। विकारार्थमयट्प्रायपाठानुरोधेन आनन्दमयः न प्रधानः अपितु पुच्छ ब्रह्मैव प्रधानम् इति वदतामते ' अन्नाद्वै प्रजाःप्रजायन्ते ' इत्यादिवाक्यानां चतुर्णां यथा न पुच्छविषयकत्व, किंतु अन्नरसमयविषयकत्वमेव तत्प्रायपाठानुरोधेन . ' असन्नेवसभवति ' इति वाक्यस्यापि न पुच्छविषयकत्वम् अपितु, आनन्दविषयकत्वमेवेति समाधत्ते—भैयमित्यादि । ' यतो वाच ' इति श्रुतिरपि मनोविषयिण्येव नतु ब्रह्मविषयिणी, ' न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा । ज्ञानप्रसादेन विशुद्धसत्त्वः ततस्तु तं पश्यति निष्कळं ध्यायमानः ' (मु.३.१.८) इति श्रुतौ ' ओमित्येवात्मानं ध्यायथ, तद्विज्ञानेन परिपश्यन्ति धीरा. आनन्दरूपममृतं यद्विभाति ' इति तत्रैवोपनिषदि पूर्वोक्तस्य विशुद्धमनोजन्यज्ञानानन्तरकालिकसमाधेः— प्रतिपादनेन ' आनन्द ब्रह्मणो विद्वान् ' इत्यत्रापि तदर्थस्य विवक्षितत्वेन मनोविषयत्वस्य सूपपादत्वात् । ध्यानानन्तरकालिकसमाधिरेव मोक्षसाधनज्ञानप्रतिपादकवाक्येषु विवक्षित इति श्रुतिसूत्रादिसिद्धान्तइति प्रागेव निरूपितम् । अतएव ' मनसैवानुद्रष्टव्यम् ' इति (बृ) श्रुतिरुपपद्यते । अत्र तृतीयया ध्यानानन्तरकालिकसमाधौ मनसःकारणत्वं प्रतिपादितम् ।— योगसूत्रेषु अयमर्थः स्फुटः । शङ्कराचार्यादिसंमतश्चेत्यपि पूर्वमेव निरूपितम् । एतेन ' ज्ञानप्रसादेन विशुद्धसत्त्वः ततस्तु तं पश्यति ' इतिश्रुतौ ' ततः-श्रवणात् ' इत्यद्वैतसिद्धिव्याख्यानमभिनिवेशमूलकमिति छिन्नम् । ' न तत्र चक्षुर्गच्छति न वाग्गच्छति नोमनः ' इत्यादौ त्रयाणा ब्रह्मण्यप्रवृत्तिर्बोध्यते । तत्र विवरणकारमते वाचःप्रवृत्तिः, मण्डनवाचस्पतिमते मनसःप्रवृत्तिरङ्गीक्रियते । तत्वकारोपनिषदि कात्स्न्र्येन वेदननिषेध एव तत्प्रकरणपर्यालोचनायां प्रतीयत इत्यपि पूर्वमेव निरूपितम् । शिष्ट सिद्धान्तकथनावसरे निरूपयिष्यते । अतः मनोमयपर्यायेऽपि मानसज्ञानस्य विवक्षितत्वेन पुच्छस्य विवक्षिततया आनन्दमयवाक्येऽपि प्रायपाठानुरोधेन आनन्दमयस्यैव नन्तरनावेन विवक्षा युक्ता नतु पुच्छस्य । एतेन

## श्रीभाष्यम्

खण्डरूपमानन्दमयं 'ब्रह्मपुच्छं प्रतिष्ठा' (तै.आ.५.अनु) इत्युच्यते। यदिचानन्दमयादन्य ब्रह्माभविष्यत् 'तस्माद्वा एतस्मादानन्दमयादन्योऽन्तरआत्मा ब्रह्मेत्यपि निरदेक्ष्यत; नचैवं निर्दिश्यते। एतदुक्तंभवति 'ब्रह्मविदाप्नोतिपरम्' (तै.आ.१) इति प्रकान्तं ब्रह्म 'सत्यंज्ञानमनन्तं ब्रह्म' (तै.आन.१) इति लक्षणतस्सकलेतरव्यावृत्ताकारं प्रतिपाद्य तदेव 'तस्माद्वा एतस्मादात्मनः' (तै.आ.१) इत्यात्मशब्देन निर्दिश्य तस्य सर्वान्तरत्वेनाऽऽत्मत्वं व्यञ्जयद्वाक्यमन्नमयादिषु तत्तदन्तरतया आत्मत्वेन निर्दिष्टान् प्राणमयादीनतिक्रम्य 'अन्योन्तर-आत्माऽऽनन्दमयः' (तै.आ.५.२) इत्यात्मशब्देन निर्देशमानन्दमये समापयति। अत आत्मशब्देन प्रकान्तं ब्रह्मानन्दमय इति निश्चीयते॥

ननु च 'ब्रह्मपुच्छंप्रतिष्ठा' (तै.आ.५.३) इत्युक्त्वा 'असन्नेवसभवति। असद्ब्रह्मेति वेदचेत् अस्तिब्रह्मेतिचेद्वेद सन्तमेनन्ततो विदुः' (तै.आ.६.१) इति ब्रह्मज्ञानाज्ञानाभ्यामात्मनस्सद्भावासद्भावौ दर्शयति; नानन्दमयज्ञानाज्ञानाभ्याम्। नचानन्दमयस्य प्रियमो-

## श्रुतप्रकाशिका

ननु 'आनन्द आत्मा' इत्यानन्दोऽवयवित्वेन रूपितः नत्ववयवत्वेन, तत्कथमुच्यते अवयवत्वेन रूपितानां प्रियमोदप्रमोदानन्दानामिति। नैष दोषः आत्मशब्दस्य स्ववाचित्वाभावात् कायस्य मध्यभागोह्यात्मशब्दवाच्यः 'दश हस्त्या अङ्गुलयो दशपद्या द्वावूरू द्वौबाहू पञ्चविंश आत्मा' इत्यादौ प्रयोगदर्शनात्। अतएव तस्यानन्दआत्मेति षष्ठ्या * व्यतिरेकनिर्देशस्वारस्य सिध्यति, तस्मादानन्दो मध्यभागत्वेन रूपितः। नन्वेवमपि पुच्छतया निर्दिष्टं ब्रह्म त्वङ्गीकृतं स्यात्। * ततःकिं तर्हि किं निरसनीयम्? आनन्दमयस्याब्रह्मत्वम् अतस्तन्निरासमुखेन पुच्छस्य तदन्तर्भावोऽभिधीयते॥ हेत्वन्तरमाह—यदिचेति। ननु तस्माद्वाएतस्मादानन्दमयादन्योन्तरआत्मा ब्रह्मेत्यन्तरात्मतयैव भेदोवक्तव्य इति नह्यस्ति नियमः 'पृथगात्मानं प्रेरितारम्' 'पतिं विश्वस्य' इत्यादिवद्व्यावर्तकाकारान्तरेणाप्यन्यत्वप्रतिपादन सम्भवादित्याशङ्क्याह—एतदुक्तमिति। प्रकरणस्य तत्तदन्तरतयैवान्यत्वप्रतिपादनपरत्वात्तत्प्रकरणस्थेन वाक्येन तादृशेन भवितव्यमित्यर्थः। आत्मशब्दस्य श्रुत्यैव व्याख्यानं कृतमिति कथमवगम्यत इति शङ्कायां स्वोक्तस्य स्वयमेव व्याख्यानं प्रकरणसिद्धमिति दर्शयितुमात्मशब्दनिर्दिष्टस्यैव ब्रह्मत्वोपपादनोपयोगितया च 'ब्रह्मविदाप्नोति' इत्याद्युक्तम्। तत्र ब्रह्मशब्दव्याख्यानं सत्यज्ञानादिवाक्यम् आत्मशब्दव्याख्यानमानन्दमये समाप्तमस्तु ततः किमानन्दमये च ब्रह्म वा इति शङ्कायां ब्रह्मशब्देन प्रकृतस्यैवात्मशब्देन निर्दिष्टत्वं दर्शयति। तदेवेति। 'तस्माद्वा एतस्मात्' इति तदेतच्छब्दौ प्रकृतपरामर्शिनावित्यभिप्रायः॥

पुनश्चोदयति ननुचेति। पूर्वं प्राधान्येनोक्तानामन्नमयादीनां श्लोकेषु तत्तच्छब्दैरेव निर्देशो दृष्टः एवमत्राप्यानन्दमयः प्रधानश्चेत्तद्विषयश्लोकेऽपि तच्छब्देनैव निर्देष्टव्यम्। यद्वा यद्यानन्दमये आत्मशब्दव्याख्यानपरिसमाप्तिः—तर्ह्यात्मशब्देन निर्देष्टव्यम्। तथा च नकृतम् अपितु ब्रह्मशब्देन निर्दिष्टम्। तस्मादानन्दमयस्य न प्राधान्य अतः पुच्छब्रह्मैव प्रधानप्रतिपाद्यमित्यर्थः। ब्रह्मशब्दस्यानन्दमयविषयत्वे सिद्धे ब्रह्मशब्देन निर्देशो नदोष इति शङ्का*मर्थात्परिहरन् युक्त्यन्तरमाह—नचानन्दमयस्येति। आशङ्काशब्देनोदाहृतश्रुतिवाक्यद्वयस्यश्चेदर्थो व्याख्यातः। सर्वलोकप्रसिद्धस्य दर-

## श्रीभाष्यम्

दादिरूपेण सर्वलोकविदितस्य सद्भावासद्भावज्ञानाशङ्का युक्ता । अतो नानन्दमयमधिकृत्यायं श्लोक उदाहृतः । तस्मादानन्दमयादन्यद्ब्रह्म । नैवम् । ' इदंपुच्छंप्रतिष्ठा ' (तै.आ.१) ' पृथिवीपुच्छंप्रतिष्ठा ' (२.३) ' अथर्वाङ्गिरसःपुच्छंप्रतिष्ठा ' (३.३) ' महःपुच्छंप्रष्ठा '(४ २) इत्युक्त्वा तत्रतत्रोदाहृताः ' अन्नाद्वै प्रजाःप्रजायन्ते ' (तै.२.१) इत्यादिश्लोका यथा न पुच्छमात्रप्रतिपादनपराः ; अपित्वन्नमयादिपुरुषप्रतिपादनपराः ; एवमयमप्यानन्दमयस्यायम् ' असन्नेव ' (तै.आन.६.१) इति श्लोकः ; नानन्दमयव्यतिरिक्तस्य पुच्छस्य । आनन्दमयस्यैव ब्रह्मत्वेऽपि प्रियमोदादिरूपेण रूपितस्यापरिच्छिन्नानन्दस्य सद्भावासद्भावज्ञानाशङ्का युक्तैव । पुच्छब्रह्मणोऽप्यपरिच्छिन्नानन्दतयैव ह्यप्रसिद्धता । शिरःप्रभृत्यवयवित्वाभावाद्ब्रह्मणो नानन्दमयो ब्रह्मेतिचेत् ब्रह्मणः पुच्छत्वप्रतिष्ठात्वाभावात् पुच्छमपि ब्रह्म न भवेत् । अथ विद्यापरिकल्पितस्य वस्तुनस्तस्याश्रयभूतत्वात् ब्रह्मणः पुच्छप्रतिष्ठेति रूपणमात्रमित्युच्येत ; हन्त तर्हि तस्यासुखाद्व्यावृत्तस्यानन्दमयस्य ब्रह्मणः प्रियशिरस्त्वादिरूपणं भविष्यति । एवंच ' सत्यंज्ञानमनन्तंब्रह्म'(तै.आन.१) इतिविकारास्पदजडपरिच्छिन्नवस्त्वन्तरव्यावृत्तस्यासुखाद्व्यावृत्तिरानन्दमय इत्युपदिश्यते । ततश्चाखण्डैकरसानन्दरूपे

## श्रुतप्रकाशिका

पक्षत्वेनासद्भावस्य * सद्भावाऽप्याशङ्कावादो नयुक्त इत्यर्थः । परिहरति नैवमिति । ब्रह्मानन्दमयशब्दानामैकार्थ्ये निश्चिते आनन्दमयशब्दनिर्देशसमो ब्रह्मशब्दनिर्देश इति स्फुटमिति बुद्ध्या आनन्दमयप्राधान्ये युक्तिमाह—इदंपुच्छमिति । प्रकरणस्थपूर्वश्लोकानां पुच्छमात्रप्रतिपादनपरत्वाभावादयमपि श्लोको न पुच्छमात्रप्रतिपादनपर इत्यर्थः ॥

प्रसिद्धानन्दस्य सद्भावासद्भावशङ्काऽनुपपत्तिं परिहरति । आनन्दमयस्येति । प्रतिबन्दीमभिप्रेत्याह—पुच्छब्रह्मणोपीति । ' विज्ञानमानन्दं ब्रह्म ' ' आनन्दो ब्रह्म ' इत्यादिवाक्येन ब्रह्मण आनन्दरूपत्वस्योक्तत्वादानन्दस्य च प्रसिद्धत्वात्तस्य सद्भावासद्भावज्ञानाशङ्का युक्तेति चोदिते तस्यानन्दरूपस्य ब्रह्मणोऽविदितत्वमपरिच्छिन्नानन्दत्वादेवहि त्वयोपपादनीय तदत्रापि तुल्यमित्यर्थः । शङ्कते—शिरःप्रभृतीति । परिहरति—ब्रह्मणइति । पुच्छत्व अवयवविशेषत्वम् । प्रतिष्ठात्वं आधारत्वम् । ब्रह्मणोऽवयवित्वमनुपपन्नमितिचेत् अवयवत्वमप्यनुपपन्नमित्यर्थः । अवयवत्व रूपणमात्रमिति शङ्कते अथेति । परिहरति हन्ततर्हीति । असुखादिति । असुखव्यावृत्तिविशेषाः शिरः प्रभृति येन रूपिता इत्यर्थः । सत्यज्ञानादिवाक्येन सकलेतरव्यावृत्तत्वे सिद्धे किमत्र क्रियत इत्यत्राह—एवंचेति । सत्यशब्दनिर्दिष्टस्य ब्रह्मण. कस्यचिद्विकारत्वाभावादानन्दमयशब्दवाच्यत्वमप्ययुक्तमित्यत्राह—ततश्चेति । ततः उक्तानुपपत्तीनां परिहृतत्वादुपपत्त्यन्तरसद्भावाच्चेत्यर्थः ॥

## गूढार्थसंग्रहः

'तस्य यजुरेव शिरः''अथर्वाङ्गिरसःपुच्छंप्रतिष्ठा' इत्यत्र स्वस्मादनतिरिक्तैः स्वावयवैश्शिरःपुच्छादिकल्पन नास्तीति न्या.र. उक्तिरपि समाहिता । 'द्वे विद्ये वेदितव्ये पराचैवापराच तत्रापरा ऋग्वेदः' इत्यादिना उपनिषदन्तरे अपरविद्यात्वेन ऋग्वेदादीनां प्रतिपादनेन अत्रापि मनोवृत्तिरेव विवक्षितेति प्रागुक्तार्थे बाधकाभावात् । ' स वा एष पुरुषोऽन्नरसमयः'इत्यत्र रसशब्दोपादान ' अन्नमशितं त्रेधाविधीयते ' इत्याद्युक्तार्थबोधनाय तेन जीवविवक्षा न सिद्ध्यति । ' निमित्तमथाऽऽश्रय मृते ' (सा.का.४१) इति कारिकाविवरणतत्त्वकौमुद्यां स्मृत्यधिकरण(श्रु) भाष्यविवरणद्वये च पुरुषपदस्य शरीरपरत्वम्

## श्रीभाष्यम्

ब्रह्मण्यानन्दमय इति मयट् प्राणमय इव स्वार्थिको द्रष्टव्यः तस्मादविद्यापरिकल्पितविविध देवादिभेदभिन्नस्य जीवात्मनस्स्वाभाविकं रूपमखण्डैकरसं सुखैकतानमानन्दमय इत्युच्यत इत्यानन्दमयः प्रत्यगात्मा ॥

## श्रुतप्रकाशिका

किंच 'सोऽकामयत' इति वाक्ये स इति पुल्लिङ्गतच्छब्देन कारणवस्तुनिर्देशाद्यानन्दमयः परब्रह्म 'तस्माद्वा एतस्मादात्मनः' इत्यात्मशब्दनिर्दिष्टात्मार्थाभिप्रायोऽयं पुल्लिङ्गनिर्देश इति चेन्न, व्यवहितादत्यन्तभिन्नस्य ग्राह्यत्वेनानन्दमयस्य ग्राह्यत्वात् 'ब्रह्मपुच्छं प्रतिष्ठा' इति वाक्यात् पश्चात्पठितस्य 'तस्यैष एव शारीर आत्मा' इतिवाक्यस्थस्यात्मशब्दस्य व्यवधानाभावात्तदभिप्राय इति पुल्लिङ्गनिर्देशः आनन्दमयस्तत्वाद्वाक्यापेक्षया व्यवहित इति न स परामृश्यत इतिचेन्न ; 'तस्यैष एव शारीर आत्मा' इति वाक्यस्थस्यात्मनस्सर्वपर्यायसाधारणत्वेनैतत्पर्यायस्य प्रधानप्रतिपाद्यत्वाभावात् सर्वनामशब्दस्य प्रधानपरामर्शित्वस्वारस्याच्च सइत्यानन्दमयएवास्यते 'विज्ञानं ब्रह्मेति व्यजानात्' 'आनन्दो ब्रह्मेतिव्यजानात्' इत्यत्र 'विज्ञानमयमात्मानमुपसङ्क्रम्य, आनन्दमयमात्मानमुपसङ्क्रम्य' इत्यत्र च स्थानप्रमाणेनानन्दमयशब्दयोरेकार्थत्वावगमादानन्दशब्दस्य परब्रह्मविषयत्वप्रसिद्धेश्चानन्दमय परब्रह्म ॥

नच 'आनन्दो ब्रह्म' इत्यत्रानन्दशब्दोऽप्यानन्दमयशब्दवत् बाह्यकोशपरइति वाच्यम् ; 'अन्नंब्रह्म, प्राणो ब्रह्म' इत्यादिविज्ञानानन्तरमिव 'आनन्दो ब्रह्म' इति विज्ञानानन्तर भृगोर्वरुणोपसरणभावात् । नहि 'तद्विज्ञाय पुनरेव वरुणं पितरमुपससार' इति पुनश्श्रूयते । एतदुक्तं भवति 'अन्नं ब्रह्मेति व्यजानात्' इत्यत्र किमन्नाद्युपन्यास ब्रह्मवेदनमुक्तम् उतान्नमयादौ ब्रह्मबुद्ध्यवतरणम् । आद्येऽन्नब्रह्मेति ज्ञानानन्तर वरुणोपसत्तिर्न स्यात् उपलक्षणभूतेन तेन ब्रह्मणःप्रतिपन्नत्वात् । द्वितीयेऽन्नादावयथाब्रह्मबुद्धेर्यथात्वं स्यात् पुनर्वरुणोपसरणभावादिति । किंच 'आनन्दोब्रह्म' इत्यत्रानन्दशब्दस्य ब्रह्मपरत्वं युष्माभिरत्र व्याख्यातम् उत्तरहि 'सैषा भार्गवी वारुणी विद्या आनन्दोब्रह्मेति व्यजानात्' इति तत्र मयटोऽश्रवणात् प्रियशिरस्त्वाद्यश्रवणाच्च युक्तमानन्दस्य ब्रह्म त्वमिति । अतश्च 'आनन्दो ब्रह्म' इत्यस्य वाक्यस्य परमात्मपरत्वात् स्थानप्रमाणेन 'आनन्दमयमात्मानम्' इत्यत्रानन्दमयशब्दोऽपि परमात्मपर । आनन्दमयस्य शोध्यत्व च तदनुगुणससारनिर्हरणादिरूपमिति चानुसन्धेयम् ॥

प्रत्यगात्मस्वरूपमेवापरिच्छिन्नानन्दरूपचेत् कथ जीवाना दुःखित्वसुखित्वतारतम्यचोपलभ्यत इति शङ्का च परिहरन् पूर्वपक्षमुपसंहरति तस्मादिति । 'तस्य प्रियम्' इति सबन्धत्वाचिन्या षष्ठ्या व्यतिरेकप्रतीतेः ब्रह्मविषयस्योपरितनश्लोकस्य आनन्दमयविषयत्वाभावेन पुच्छतयात्त ब्रह्मण एव प्रधानत्वावगमात् । प्रियमोदादिरूपेण लोकविदितस्यानन्दमयस्य सद्भावासद्भावज्ञानशङ्काऽनुपपत्ते, निरवयवस्य परमात्मनोऽवयवित्वानुपपत्तेः अविकारस्य विकारित्वानुपपत्ते.—

## गूढार्थसंग्रह

ङ्गीकृतम् । स्थूलारुन्धतीन्यायेन अर्थनिरूपणप्रकरणे पुरुषशब्दोऽपि न विरुध्यते । अतः अन्नप्राणमनोमयपर्यायेषु उपाध्यवच्छिन्नजीवविवक्षासाधकं नैव वर्तत इति सिद्धम् ॥

आनन्दमयइति मयडित्यादि । एतेनात्र विकारार्थमयडसम्भवः परोक्तमयट्प्रायपाठनिर्णयायोगश्च सूचित. । आनन्दशब्दस्य वृद्धत्वेऽपि 'नित्यं वृद्धशरादिभ्यः' इतिसूत्रेऽपि 'भाषाया'मित्यस्यानुवृत्त्या द्व्यच्कत्वाभावेन '—

### श्रीभाष्यम्

एवं प्राप्ते प्रचक्ष्महे–' आनन्दमयोऽभ्यासात् ' आनन्दमयःपरमात्मा ।

### श्रुतप्रकाशिका

' तस्यैष एव शारीरआत्मा ' इत्यानन्दमयविषयवाक्यागतस्यात्मान्तरस्य परमात्मतया आनन्दमयस्य परमात्मत्वानुपपत्तेः ' अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयामे शुध्यन्ताम् ' इति श्रुतस्य शोध्यत्वस्य नित्यशुद्धे परमात्मन्यनुपपत्तेश्च नानन्दमयः परमात्मा अपितु पुच्छतया निर्दिष्टमेव ब्रह्म परमात्मेति पुच्छब्रह्मवादहेतुसङ्ग्रहः ॥

प्रकरणस्य स्वस्मादनतिरिक्तैस्स्वावयवैश्शिरःपक्षादिरूपणपरत्वात्तदन्तरतया आत्मशब्दस्यात्मनस्यानन्दमये पर्यवसितत्वादन्नमयादिविषयाणां प्रकरणस्थश्लोकानां पुच्छादिविषयत्वात् कारणत्वप्रतिपादके ' सोऽकामयत ' इत्यनन्तरवाक्ये सर्वनाम्ना पुल्लिङ्गेन प्रधानप्रकृतार्थपरामर्शिना तच्छब्देनाव्यवहितस्यानन्दमयस्यैव वक्तुं युक्तत्वात् ' आनन्दो ब्रह्म ' इत्यानन्दशब्दस्य ब्रह्मपरत्वोपपत्तेः ' आनन्दो ब्रह्मेति व्यजानात् ' ' आनन्दमयमात्मानमुपसङ्क्रम्य ' इत्यानन्दानन्दमयशब्दयोरेकार्थत्वादानन्दमयशब्दस्यापि परब्रह्मपरत्वात् । आनन्दमयशब्दतुल्यार्थानन्दशब्दवाच्यब्रह्मज्ञानानन्तर भृगोरसत्त्वश्रवणात् , सूत्रस्वारस्यात् स्वस्मादनतिरिक्तस्वावयवैरेव शिरःपक्षपुच्छादिरूपणपरप्रकरणानुगुण्येन पञ्चमीनिर्देशस्य समुदायसमुदायिभावनिबन्धनत्वोपपत्तेरानन्दमयात्मब्रह्मशब्दानामैकार्थ्येन तेष्वन्यतमेन तद्विषयश्लोके निर्देशस्य युक्तत्वादपरिच्छिन्नानन्दस्याप्रसिद्धत्वेन ' आनन्दो ब्रह्म ' इत्युक्ततयाऽभ्युपेतपुच्छब्रह्मण इव सद्भावासद्भावशङ्का सम्भवा, दवयवावयवित्वेन रूपणसम्भवादानन्दमय इत्यत्र मयट्प्रत्ययस्य स्वार्थिकत्वेन प्राचुर्यार्थत्वेन वा विकारपरत्वाभावेन ब्रह्मणो निर्विकारत्वाविरोधात् ' तस्यैष एव शारीर आत्मा ' इति वाक्यस्यानन्यात्मत्वप्रतिपादनपरत्वात् ' अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयामे शुध्यन्ताम् ' इत्यत्र शोधनं तत्तद्वस्त्वनुगुणं कार्यमिति प्रत्यगात्मविपक्षे संसारनिर्हरणेन शोध्यत्वात्तदतिरिक्तपक्षे भगवतः कालुष्यशान्तिरूपशोध्यत्वस्य प्रपदनसाध्यस्योपपन्नत्वाच्चानन्दमयानतिरिक्तपुच्छब्रह्मत्वादानन्दमय एव परमात्मेति पुच्छब्रह्मवादनिराकरणयुक्तिसङ्ग्रहः । अत्राद्य हेतुषट्कं सिद्धान्तसाधकं इतरहेतुगणश्शङ्कितविपक्षयुक्तिपरिहारपरः तस्मादित्यधिकरणपूर्वपक्षोपसंहारः ॥

अस्मिन्पूर्वपक्षे प्राप्ते सिद्धान्तसूत्रमवतारयति एवंप्राप्तइति । तत्र प्रतिज्ञांशं साध्यसमर्पकपदेन पूरयन्व्याचष्टे—आनन्दमयइति । उत्तराधिकरणे ' भेदव्यपदेशाच्चान्य. ' इत्यन्यशब्दःप्रयुक्तः इह तदाकर्षणलब्धोऽर्थ उक्त.परमात्मेति यद्वा पूर्वाधिकरणसूत्रस्थयानाशब्दमिति पदयोरनुषङ्गलब्धार्थमाह–परमात्मेति । यस्मिन्शब्द एव प्रमाणं नभवति स

### गूढार्थसंग्रह

न्दासि ' इति सूत्राप्रवृत्त्या च विकारार्थे मयट असम्भवात् ' तत आगत ' इतिसूत्र ' मयट्च ' इतिसूत्रेण मयटः प्रवृत्तिकल्पनापेक्षया स्वार्थे मयट्कल्पनमेवोचितम् । ' तत्प्रकृतवचने मयट् ' (पा.सू.५.४.२१) इत्यस्य स्वार्थिकप्रकरणे पाठेन स्वार्थिकप्रत्ययस्यैव युक्तत्वात् । अयमर्थः प्राक् (७४२.पु) जिज्ञासाऽधिकरणोदाहृतकाशिकाऽदिग्रन्थेषु स्फुटः ।–
किंच शब्देन्दुशेखरे नागेशेन ' तद्ग्रहणं वाक्यभेदेन प्राचुर्याभावेऽपि अत्यन्तस्वार्थिकमयडर्थं तेन चिन्मयं ब्रह्मेत्यादिसिद्धम् । ' इत्युक्त्या प्राचुर्याविवक्षायामपि उक्तसूत्रेण मयट्सम्भवति । एतेन ' यदेष आकाश आनन्दो नस्यात् आनन्दाद्ध्येव खल्विमानि ' इति मयड्रहितवाक्यानामेव जीवाभिन्नब्रह्मपरत्वं ननु मयडयुक्तवाक्यस्येति परोक्तिर्निरवकाशा, स्वार्थे

### श्रीभाष्यम्

**' यतो वाचोनिवर्तन्ते ' (तै.आन.९.१) इत्येवमन्तेन वाक्येन शतगुणितोत्तरक्रमेण निरतिशयदशाशिरस्कोऽभ्यस्यमान आनन्दः**

### श्रुतप्रकाशिका

इत्यस्यार्थमभिप्रेत्य निरतिशयदशाशिरस्क इत्युक्तम् ' सएको ब्रह्मण. ' इति वाक्यस्यार्थमभिप्रेत्याभ्यस्यमान इत्युक्तम् । शतगुणितोत्तरक्रमेण गुणितत्वादित्यर्थः । ' सएको ब्रह्मण आनन्दः ' इति वाक्यस्य चतुर्मुखानन्दविषयत्वेन ' यतो वाच ' इत्यादिवाक्यस्यैव ब्रह्मानन्दविषयत्वाङ्गीकारेऽभ्यासादिति हेतोर्व्यधिकरणता स्यात् ॥

किंच अत्र ब्रह्मशब्दः परमात्मवाचकः ब्रह्मशब्दस्य भगवत्येव मुख्यत्वात् ' ब्रह्मविदाप्नोति, अस्तिब्रह्मेति ' इत्यादिषु वाक्येषु परब्रह्मपरतयैव ब्रह्मशब्दस्य प्रयोगप्रकरणात् ' यतो वाचो निवर्तन्ते ' इति पूर्वोत्तरयोर्वाक्ययोरानन्दमतिसन्निधानाद्विषयभ्यन्तब्रह्मशब्दस्य परब्रह्मपरत्वदर्शनात् ' सैषानन्दस्य मीमाँसा ' इति प्रकृतब्रह्मानन्दनिगमनस्यापेक्षितत्वात् ' स यश्चाय पुरुष ' इति प्रकृतपरामर्शिनाऽनन्तरवाक्यस्थेन कारणपरतच्छब्देन पूर्ववाक्यस्थस्यास्य ब्रह्मशब्दस्य परब्रह्मपरत्वनिश्चयात् अन्यथा चतुर्मुखस्य सर्वान्तरात्मत्वपरमकारणत्वप्रसङ्गात् । ' तदप्येष श्लोकोभवति' इति भगवदानन्दविषयश्लोकोत्थानस्य भगवानन्दप्रसङ्गसापेक्षत्वात् निरुपपदप्रजापतिशब्दस्य चतुर्मुखे स्वरस वद्दक्षादिपरत्वे-एकवचनस्वारस्याभावात् ' देवानाम् ' ' देवगन्धर्वाणाम् ' ' इन्द्रस्य ' ' बृहस्पतेः ' इति बहुषु व्यक्तिषु बहुवचनस्य एकैकव्यक्तिषु चैकवचनस्य प्रकरणे प्रयुज्यमानत्वाच्च । तथा ' सएक प्रजापतिलोकआनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोथ तेयेशत प्रजापतिलोकआनन्दाःसएकोब्रह्मलोकआनन्दो यश्च श्रोत्रियोऽवृजिनोकामहतोथ एष एव परआनन्दएष ब्रह्मलोकःसम्राडितिहोवाच ' इति बृहदारण्यकवाक्यैकार्थ्याच्च, ' सएको ब्रह्मण आनन्द ' इति वाक्यस्य परमात्मानन्दपरत्व सिद्धम् ॥

नच ' सएक ' इति निर्देशाद्ब्रह्मानन्दस्य परिच्छिन्नत्व आधिक्यमात्रे वाक्यतात्पर्यात् । यथा ' क्षिप्रेपुरिव सर्पति ' इति वाक्यं सूर्यगतिमान्द्यनिवृत्तिपर नत्विषुसाम्यपर सूर्यस्य निमेषमात्रेण बहुयोजनातिलङ्घनस्य प्रमाणसिद्धत्वात् तथाऽत्रापि पूर्वापरवाक्यादिभिरपरिच्छिन्नानन्दत्वसिद्धेः ' सएक ' इति वाक्यस्य चतुर्मुखानन्दादाधिक्ये तात्पर्यमित्यवगम्यते । यद्वा रोमकूपेष्वनन्तानि ब्रह्माण्डानि भ्रमन्ति वै ।—

अण्डानां तु सहस्राणां सहस्राण्ययुतानि च । ईदृशानां तथा तत्र कोटिकोटिशतानि च ॥

गङ्गायां सिकता धारा यथा वर्षतिवासवे । शक्या गणयितुं लोके नव्यतीत.पितामहाः ॥

इत्यादिभिरण्डानां तत्तत्र चतुर्मुखानामानन्त्ययेयत्वागमात्प्रियाभ्यानियन्तृत्वशतगुणानन्द वे क थेते चतुर्मुखेभ्योऽसङ्ख्यातेभ्यः शतगुणानन्दतयाऽवगतस्य भगवतः अपरिच्छिन्नानन्दत्वमर्थसिद्धमिति अतो यथोक्तएवार्थः ॥

अभ्यस्यमानइति । अभ्यासशब्दः कर्मार्थघञन्तइत्यभिप्रायः । यद्वा भावार्थत्वेऽप्यानन्दस्याभ्यस्तत्व फलितमिति तथोक्तम् । तच्च हेतोर्वैयधिकरण्यशङ्काव्युदासार्थम् । ननु गुणनं वर्धनम् प्रजापत्यानन्दोहि शतगुणत्वेन वर्धते ननु—

### गूढार्थसङ्ग्रह.

शतगुणितोत्तरक्रमेणेति । अत्र शतगुणनस्य श्रुतौ प्रतिपादनेन आनन्दशब्दस्य धर्मभूतज्ञानावस्थावानेवार्थं इति भ्रमो व्युदस्त. विषयानुकूल्यनिबन्धनत्वात् ज्ञानानुकूल्यस्य विषयानुभवजन्यः आनन्दइति नैयायिकमतमनुभवविरुद्धम् ।

## गूढार्थसङ्ग्रह

विषयेष्वनुकूलत्वानुमत एवानन्दः [ शतगुणितोत्तरक्रमे एकस्यानुकूलत्वेन ज्ञातविषयापेक्षया अन्यस्य अनुकूलत्वेन ज्ञात विषयाधिक्य एव पर्यवसानम् । अत्र षष्ठ्यभ्यासेन मनुष्यगन्धर्वादीनामानन्दस्य च भेद. स्फुट प्रतीयत इति 'आनन्द ब्रह्मण ' इत्येतदुत्तरवाक्येऽपि ब्रह्मभिन्नानन्द एव विवक्षित । एव प्रकरणवशात् सर्वौ ब्रह्मसम्बन्ध्यानन्दोऽपि ब्रह्मसम्बन्धि गुणविभूत्यादिरेव । वेदार्थसङ्ग्रहाने ब्रह्मण एवानन्दरूपता ' रसो वैस. ' इत्यादिश्रुतिभि । तत्सम्बन्धादेवा मान्यसामा न्यस्य आनन्दरूप व इति सिद्धान्तितम् । अतश्च निरतिशयदशाशिरस्क ब्रह्मसम्बन्धिगुणविभूत्यादिरेव ' आनन्दब्रह्मणोवि- द्वान् ' इत्यत्र विवक्षित । गुणविभूत्यादेस्सर्वस्य वाङ्मनसापरिच्छेद्यत्वमत्र विवक्षितम् । एतेन आनन्त्य प्रागुक्त द्विविध सम्यक्प्रकाशित भवति, उपक्रमे आनन्त्यपुरस्कारेण ब्रह्मणो ज्ञान ब्रह्मविदित्यत्रापि विवक्षितम् । ' अस्तिब्रह्मेतिचेद्वेद ' इत्यत्र तदेव विवक्षितम् नतु निर्विशेषज्ञानम् ' ब्रह्मास्ति ' इत्यत्र असधा वर्थकर्तृत्वेनैव ब्रह्मणो ज्ञानस्य विवक्षित त्वात् । तेन सविशेषब्रह्मज्ञानमव तत्र विवक्षितम् । अत्र गुणाना प्राधान्याभिप्रायेण तद्विशेष्यकज्ञानमभिहितम् तस्यैवाभयहेतु व च

कठोपनिषद्यपि--' यदिद किंच जगत्सर्वम् ' इत्युपक्रम्य 'भयादस्याग्निस्तपति' इत्यादौ भीषास्माद्वात पवते' इत्यादि क्रमणैवार्थोऽभिहित । 'नाहमन्ये सुवेदेति' इत्यादौ सुशब्दादे.प्रयोगेण कार्त्स्न्येन वेदनस्यैव निषेधइति सिद्धया वाङ्मनसापरि- च्छेद्य वमपि सूचित भवति । अनन्तर--' अव्यक्तात्तु पर पुरुषो व्यापकोऽलिङ्गएवच । यज्ज्ञात्वा मुच्यते जन्तुरमृतत्व च गच्छति ।' 'नसदृशे तिष्ठति रूपमस्य न चक्षुषापश्यति कश्चनैनम्, हृदा मनीषा मनसाऽभिक्लृप्तो यएनविदुरमृतास्ते भवन्ति' इत्यत्र मानसज्ञानस्यैव मुक्तिहेतुत्वम् । 'ता योगमिति मन्यन्ते' ' विद्यामेतायोगविधिंच कृत्स्नम् ' इ युत्तरत्र योगस्य प्रति- पादनात् । नैव वाचा न मनसा प्राप्तु शक्यो नचक्षुषा । अस्तीति ब्रुवतोऽन्यत्र कथ तदुपलभ्यते ' (कठ २.६.१२) इत्यत्र वाच. मनसश्च प्राप्तिहेतु व निषिध्य 'अस्ति' इति ज्ञेयत्व ब्रह्मण. प्रतिपादितम् । अत्राप्यसधात्वर्थकर्तृ वेन ज्ञान सविशेषज्ञानमेव । ' उभयोस्तत्त्वभावेन ' इत्यत्र व्यापकपरपुरुषज्ञानस्य मुक्तिहेतु वप्रतिपादनेन व्याप्यव्यापकवस्तुनेरेकवि षपरमार्थ वेन अस्तीतिज्ञानमेव विवक्षितम् । पुरुषशब्दस्य बृहदारण्यकनिर्वचनप्रयानुसारणच सविशेषपर वमेव विवक्षितम् आनन्दवल्ल्यामपि ' सोऽकामयत बहुस्या प्रजायय ' इति सविशेषमभिधाय ' तस्माद्वा एतस्माद् मनआकाशस्सम्भूत.' इति पूर्वोक्तस्य विशदीकरणात् । अनन्तरानुवाक ' रसो वै स रसंह्येवाय लब्ध्वानन्दी भवति ' ' एषह्येवानन्दयाति' इत्यत्र जीवब्रह्मणोरुभयोस्सविशेष वस्यैव प्रतिपादनात् । ' आनन्द ब्रह्मणो विद्वान् ' इति वाक्येन ' यदेष आकाश आनन्दो न स्यात् ' इत्यत्र स्वयमान दशून्यस्य अन्यानन्दयितृ व न सम्भवतीति बोधितम् । ब्रह्मण आन दरूपत्वनैव ब्रह्मसम्बन्धिगुणविभूत्यादेरानन्दरूपतेति बोधनायैवानन्दशब्देन धर्मिणो निर्देश । अनन्तर ' यदाह्येवैष एतस्मिन् ' अथ सोऽभयङ्गतो भवति' इत्यत्र प्रागुक्तदिशा ध्यानेन अभयप्राप्तिरेव विवक्षितेति मनोभयपर्यायपाठेन निर्धारित भवति । 'भीषा स्माद्वात पवते ' इत्यादिना ब्रह्मणो भयहेतु वप्रतिपादनेन अभयहेतु वमपि सूचितम् । आनन्दयितृ वप्रतिपादननापि त सू चितम् । अतश्च ' यतो वाचो निवर्तन्त ' इति श्रुते. प्रागुक्तएवार्थ । श्रुतौ का र्त्स्न्यवेदनप्रतिषेध एव विवक्षित इति प्रागेव निरूपितम् ॥

अतश्च श्रुतौ (शङ्करभाष्यदूषित)सविशेषपरत्वमव विवक्षितम् । प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौहि भेद ' इति सूत्रेण सविशेषब्रह्मैव विवक्षितमिति साधनेन आनन्दमयस्य ब्रह्मत्वे प्रियाद्यवयवत्वेन सविशेष ब्रह्माभ्युपगन्तव्यम् । निर्वि शेषतु वाक्यशेषे श्रूयते ' इत्युक्त दूषण न घटत । एतत्सूत्र(श) भाष्ये ' ब्रह्मधर्मांस्त्वेतान् कृत्वा न्यायमाचार्यमिदमाचायण

## श्रीभाष्यम्

**अनन्तदुःखमिश्रपरिमितसुखलवभागिनि जीवात्मन्यसम्भवन्निखिलहेयप्रतीकं कल्याणैकतानं सकलेतरविलक्षणं परमात्मानमेव स्वाश्रयमावेदयति ॥ यथाऽऽह—**

## श्रुतप्रकाशिका

*ब्रह्मानन्दः सत्यम्—तथाऽपि गुणितःप्रजापत्यानन्द एव ब्रह्मानन्दइत्युपचारेणोक्तिः व्रीहिचतुष्टय गुञ्जेतिवत् गुणिततत्तदानन्दसदृशस्यैकदशतया प्रतिपाद्यमानो ब्रह्मानन्दइत्यर्थः ॥*

यद्वा मुहुर्मुहुरुक्तिरभ्यासः । तेन तात्पर्यलिङ्गवत्त्व सूचितम् । अस्त्वानन्दस्यापरिच्छिन्नत्वं, ततः किमित्यत्राह— **अनन्तदुःखेति** । अनेन निरतिशयानन्दविरुद्धधर्मयोग उक्तः परिमितेति निरतिशयानन्दाभावउक्तः, विरुद्धधर्मोपलम्भाच्छादिसम्भव इत्यर्थः । कथमसम्भवः मुक्तस्याप्यपरिच्छिन्नानन्दत्व श्रुतमित्यत्राह—**निखिलहेयेति** । प्रत्यनीकत्वमत्र निवर्तकत्व विवक्षितम् । मुक्तस्यापि परमात्मप्रसादादेवहि हेयानिवृत्तिपूर्वकनिरतिशयानन्दप्राप्तिः इह च स्वतएवापरिच्छिन्नानन्दत्वमवगम्यते हेतुश्रवणाचिरतिशयत्वश्रवणविरोधेन हतुकल्पनायोगाच । नच मुक्तस्य स्वतोऽनवच्छिन्नानन्द वं **'अथसोभयं गतो भवति' 'एषह्येवानन्दयाति' 'रसंह्येवायं लब्ध्वानन्दीभवति'** इति परमात्मायत्तत्वश्रुतेः नह्येव परमात्मानन्दस्यान्याधीनत्व श्रुतम् । **'श्रोत्रियस्य चाकामहतस्य'** इति मुक्तःपृथङ्निर्दिश्यते । *श्रोत्रियः श्रुतवेदान्तः अकामहतः उपासनानिवृत्तसमस्तक्लेशः* **'यश्च श्रोत्रियोवृजिनोऽकामहत'** *इति श्रुत्यन्तरम् मुक्तस्य जगद्व्यापाराभावाच परस्यैव स्वतो निरतिशयानन्दयोगः । एव निरतिशयानन्दस्य जीवात्मन्ययोग्यतारूपतर्कानुगृहीत आनन्दमयशब्दःपरमात्मविषयइत्युक्त भवति । न केवल निरतिशयानन्दत्वरूपवस्तुसामर्थ्यानुगृहीतत्वाद्वैलक्षण्यमवगत कण्ठोक्तञ्चेत्याह—* **यथाऽऽहेति** ॥

**ननु 'भेदव्यपदेशात्'** इति सूत्रस्य विषयवाक्यह्यिद तत्र व्याख्यास्यमानस्यास्य कथमिहोपादानमत्रोपपादन च उच्यते निरतिशयानन्दस्य जीवात्मन्ययोग्यतारूपतर्कोह्यानन्दमयशब्दस्य परमात्मविषयत्वव्यवस्थापक उक्तः । अस्य तर्कस्यानेन वाक्येन गर्भितत्वात्तत्सूचकत्वेनेद वाक्यमत्रोपन्यस्तम् अत्र ह्येतस्मादितिपदेन **'विज्ञानं यज्ञतनुते कर्माणि तनुतेऽपि च'** इति पूर्ववाक्यप्रकृतकर्मत्वादिवैशिष्ट्य जीवस्याभिप्रेत, धर्मिवाचिनाऽपि मयडन्तेन विज्ञानमयशब्देन सर्वोपाधिविनिर्मुक्त स्वाभाविकरूपमसङ्कुचितज्ञानमित्यवयवशक्त्या दर्शितम् । अनेन वाक्येन स्वभावपरिशुद्धस्यापि

## गूढार्थसंग्रहः

प्रद्योत प्रियशिरस्त्वाद्यप्राप्तिरिति । सच न्यायोऽन्येषु भिन्नेषु ब्रह्मधर्मेषूपासनायोपदिश्यमानेषु नेतव्यः सत्यद्यामादिषु सत्यकामादिषु च' (३.३.१२) इत्युक्तिरनुपादेया । निर्विशेषस्यैवाप्रामाणिकत्वात् 'आनन्दब्रह्मणो विद्वान्' इत्यत्र सविशेषब्रह्मणः वाङ्मनसापरिच्छेद्यानन्दो विवक्षितइति प्रागेवोक्तेश्च । मयटःप्राचुर्यर्थकत्वसम्भवः द्वितीयसूत्रविवरणे उपपादयिष्यते । धर्म्यानन्दस्य धर्मभूतानन्दस्यचाभ्यासस्य पूर्वमभिधानेन आनन्दमयाभ्यासस्यानुक्त्या 'नचानन्दमयाभ्यासःश्रूयते' इत्याद्युक्तेरपि नावकाशः ॥

कठोपनिषदैककण्ठ्येन 'मनसैवानुद्रष्टव्यम्' इति श्रुत्यन्तरानुसारेण च 'आनन्द ब्रह्मणो विद्वान्' इत्यत्र मानससमाधिरूपज्ञानमेव विवक्षितम् । एतत्तात्पर्येणैव मनोमयपर्याये 'यतो वाचो निवर्तन्ते' इति वाक्यप्रवृत्तिरिति पूर्वोक्त युक्तमेव । आनन्दमयस्य पूर्वप्रोक्तजीवपरत्वासम्भवेन जीवभिन्नपरमात्मपरत्वमित्याह—**अनन्तदुःखमिश्रेत्यादिना** ॥

## श्रीभाष्यम्

' तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमयः ' (तै.आनन्द. ) इति विज्ञानमयोहि जीवः न बुद्धिमात्रम् मयट्प्रत्ययेन व्यतिरेकप्रतीतेः। प्राणमयेत्वगत्या स्वार्थिकताऽऽश्रीयते। इहतु तद्वतो जीवस्य सम्भवात्तदानर्थक्यं न्याय्यम्। बद्धो मुक्तश्च प्रत्यगात्मा ज्ञातैवेत्यभ्यधिष्महि। प्राणमयादौ मयडर्थसम्भवोऽनन्तरमेव वक्ष्यते। कथं तर्हि विज्ञानमयविषयश्लोके ' विज्ञानं यज्ञं तनुते ' इति केवलविज्ञानशब्दोपादानमुपपद्यते। ज्ञातुरेवात्मनस्स्वरूपमपि स्वप्रकाशतया विज्ञानमित्युच्यतइति न दोषः। ज्ञानैकनिरूपणीयत्वाच्च ज्ञातुःस्वरूपस्य। स्वरूपनिरूपणधर्मशब्दाहि धर्ममुखेन धर्मिस्वरूपमपि प्रतिपादयन्ति। गवादिशब्दवत्। 'कृत्यल्युटो बहुलम् ' इतिवा कर्तरि ल्युडाश्रीयते। नन्द्यादित्वंवाऽश्रित्य ' नन्दिग्रही'त्यादिना कर्तरि ल्युः। अतएव च ' विज्ञानं यज्ञंतनुते कर्माणि तनुतेऽपि च 'इति यज्ञादिकर्तृत्वं विज्ञानस्य श्रूयते, बुद्धिमात्रस्यहि न कर्तृत्वं सम्भवति।

## श्रुतप्रकाशिका

जीवस्य कर्मकृतानन्तदुःखभाजनस्य निरतिशयानन्दासम्भवात्ततः परमात्मनो विलक्षणत्वं प्रतिपादितमित्यत्रेदमुपात्तम्। अस्मिन्वाक्ये विज्ञानमयशब्दस्य बुद्धिमात्रपरत्वं व्युदस्यति विज्ञानमयोहीति। 'योऽयं विज्ञानमयःप्राणेषु हृद्यन्तर्ज्योतिःपुरुषः ' इति श्रुतिप्रसिद्धिद्योतकोहिशब्दः। शब्दस्वारस्यानुग्राहकप्रत्यक्षप्रसिद्धिद्योतको वा ! अहं जानामीति ज्ञातृत्वंह्यात्मनःप्रतीयते॥

ज्ञप्तिमात्रवाचिनो विज्ञानमयशब्दस्य ज्ञायतेऽनेनेति व्युत्पत्त्याऽन्तःकरणपरत्वमप्यस्वरसमित्यभिप्रायेणाह—नबुद्धिमात्रमिति। मात्रचाभिप्रेतं प्रत्ययवैयर्थ्यं विशदयति। मयट्प्रत्ययेनेति। प्रकरणवशात्स्वार्थिकत्वमाशङ्क्याह—प्राणमयेत्विति। अगत्या विकारप्राचुर्याद्यर्थान्तरासम्भवात्। पक्षे वैषम्यमाह—इहत्विति। तद्वतइति। प्राचुर्यार्थत्व संभवतीत्यर्थः नात्र मयडर्थस्सम्भवति ज्ञप्तिमात्रस्वरूपोह्यात्मा ज्ञातृत्वंहि काल्पनिकम्। मुक्तावस्थाया तदपि नास्तीत्यत्राह—बद्ध इति। प्राणमयादौ स्वार्थिकत्वमभ्युपगम्य परिहार उक्तः। अथ तदेव नास्तीत्याह—प्राणमयादाविति। विज्ञानमयशब्दस्य तद्विषयश्लोकस्थविज्ञानशब्दसमानार्थत्वान्मयट्स्वार्थिकइत्यभिप्रायेण पृच्छति कथंतर्हीति। उपपद्यते नहि विज्ञानस्य विज्ञानान्तराश्रयत्वं संभवतीति भावः। विज्ञानशब्दस्य ज्ञातरि प्रवृत्तौ निमित्त दर्शयति ज्ञातुरेवेति। एवकारश्शङ्कितविरोधाभावद्योतकः। अपिशब्दः स्वरूपधर्मयोर्निमित्तसाधारण्यपरः। ज्ञातृशब्दतुल्यार्थतयाऽपि निर्वाहं दर्शयति—ज्ञानैकेति। ततःकिमित्यत्राह—स्वरूपेति। स्वरूपनिरूपणधर्मशब्दाः अयुतसिद्धधर्मवाचिशब्दाः आकृतिनयविषयतया सम्प्रतिपन्न शब्द निदर्शयति गवादीति॥

एवं सौत्रन्यायाभ्यां द्विधा निर्वाह उक्तः। अथ शाब्दमर्यादया द्विधा निर्वाहमाह—कृत्येति। प्रथमे पक्षे कर्तृपरत्वं कल्पनीयम्। द्वितीये गणान्तर्भावः कल्पनीय इत्युभयत्राश्रयणशब्दप्रयोगः। प्रत्यक्षानुगुण्यात् श्रुत्यन्तरप्रत्यभिज्ञानात् प्रथमश्रुतत्वात्प्रकृतिस्वारस्यात् प्रत्ययानर्थक्यानुपपत्तेश्च, प्रबलविज्ञानमयशब्दानुरोधेन विज्ञानशब्दो निर्वाह्य इति भावः। स्ववाक्यस्य युक्त्यन्तरमाह—अतएवेति। अतएव विज्ञानशब्दस्य चेतनपरत्वादेवेत्यर्थः। यज्ञादिकर्तृत्वे श्रुतेःकथं विज्ञानशब्दवाच्यस्य चेतनत्वमित्यत्राह—बुद्धिमात्रस्येति। बोद्धुर्हि कर्तृत्व प्रत्यक्षश्रुतिभिस्सूत्रैश्च सिद्धमिति भावः। ननु सर्वेषा स्वव्यापारकर्तृत्वमस्ति, सत्यं; नात्र तावन्मात्र विवक्षित, किंतु चेतनासाधारणः कर्तृत्वविशेषः प्रयत्नाधारत्वलक्षणः यज्ञादिकर्तृत्वमितिह्युक्तम्। अत्र विज्ञानशब्दस्वारस्यमुभयोरप्यविशिष्टं यज्ञादिकर्तृत्वास्वारस्यंतु परस्याधिकम्॥

## श्रीभाष्यम्

अचेतनेषु हि चेतनोपकरणभूतेषु विज्ञानमयात्प्राचीनेष्वन्नमयादिषु न चेतनधर्मभूत कर्तृत्वं श्रूयते । अत एव चेतनमचेतनं च स्वासाधारणैर्निलयनत्वानिलयनत्वादिभिर्धर्मविशेषैर्विभज्य निर्दिश्य, वाक्यम् ' विज्ञानञ्चाविज्ञानं च ' (तै आ.५.२) इति विज्ञानशब्देन तद्गुण चेतन वदति । तथाऽन्तर्यामिब्राह्मणे ' यो विज्ञाने तिष्ठन् ' (बृ ६ ७.२२) इत्यस्य काण्वपाठगतस्य पर्यायस्य स्थाने ' य आत्मनि तिष्ठन् ' इति पर्यायमधीयाना माध्यन्दिना काण्वपाठगतं विज्ञानशब्दनिर्दिष्ट जीवात्मेति स्फुटीकुर्वन्ति । विज्ञानमिति च नपुंसकलिङ्ग वस्तुत्वाभिप्रायम् । तदेवं विज्ञानमयाज्जीवादन्यस्तदन्तर परमात्मा आनन्दमय । यद्यपि ' विज्ञानं यज्ञ तनुते ' (तै आन ५ अनु) इति श्लोके ज्ञानमात्रमेवोपादीयते न ज्ञाता तथाऽपि ' अन्योऽन्तर आत्मा विज्ञानमय ' (तै.आन.४.१) इति तद्वान् ज्ञातैवोपदिश्यते । यथा--

## श्रुतप्रकाशिका

ननु ' अयतेऽत्ति च भूतानि' इत्यन्नमय इव प्राकरणिकमौपचारिक कर्तृत्वमुपकरण वाविशेषाद्बुद्धेरपि स्यादित्यत्राह—अचेतनेषुहीति । बाधकाभावे सत्युपचारएव दोष सच प्रकरणानुवृत्तश्चेत्सोढव्यस्स्यात् । नच तदनुवृत्ति प्राणमये मनोमय च तस्य विच्छिन्नत्वादित्यभिप्राय । विज्ञानशब्दस्य चेतनपरत्वे प्रयोगान्तर दर्शयति । अतएव चेतनमिति । अतएव विज्ञानशब्दस्य चेतनपरत्वादेवेत्यर्थं । चेतनमचेतनञ्चेति । नह्यन्त करणानन्त करणविभागोऽत्र क्रियते किंतु चिदचिद्विभाग एवेतिभाव , कुतइत्यत्राह—निलयनत्वेति , अचिद्विकारविशेषस्यान्त करणस्य ' जीवभूता महाबाहो ययेद धार्यते जगत् ' इति प्रकारेण चेतनधार्यस्य विश्वनिलयनत्वायोगात्, परण स्य स्वत्वानभ्युपगमाच्चेति भाव । विज्ञानशब्दस्य सवित्परत्वमप्ययुक्तम् । ' अनुप्रविश्य ' इत्यनेनानुप्रवेशश्रवणात् नहि सविद्रूप आत्मा आत्मान्तरव्याप्यतयाऽभिमत । परस्य विज्ञानशब्दस्य चेतनत्वेन प्रयोगान्तर दर्शयति । तथेति । विज्ञानशब्दस्यात्मशब्दस्थाने श्रुत वादन्त करणपरत्वमनुपपन्नम् । नचात्मशब्दोऽप्यन्त करणपर विज्ञानशब्दवत्तस्यापि तत्रास्वरसत्वात । यथा 'ज्ञायतेऽनेने'ति व्युत्पत्त्याऽश्रयण विज्ञानशब्दस्य क्लिष्टम्। तद्वच्चेतनव्यतिरिक्तेष्वात्मशब्दोऽपि ह्यस्वरस अन्त करणपरत्व विज्ञानात्मशब्दयोर्द्वयोरप्यस्वारस्य चेतनपरत्वेतु विज्ञानशब्दमात्रास्वारस्य नतु द्वयोरिति विशेष । अत्रात्मशब्दस्य परमात्मतया स्वाभिमतसंवित्परत्व च ' य आत्मनि तिष्ठन् ' इत्यत्रात्मान्तरास्थितिश्रवणात्, आत्मान्तरव्याप्यस्य परमात्मत्वा(नुपपत्ते)सिद्धे ॥

सर्वत्र प्रयुक्तस्य विज्ञानशब्दस्य ल्युट्प्रत्ययान्तत्वे विशेष्यानुगुणलिङ्गत्वादात्मविषयस्य तस्य कथ नपुंसकत्वमित्यत्राह—विज्ञानमितिचेति । उपपादितमर्थं परमभाष्येन घटयति । तदेवमिति । तत् उक्तोपपत्तिभि एव विज्ञानशब्दस्य चेतनपरत्वसिद्धेरित्यर्थं । श्लोकस्यविज्ञानशब्दस्य ज्ञातृपरत्वोपपादनेन विज्ञानमयशब्दस्य ज्ञातृपरत्वमुक्तम । अथ श्लोकस्य ज्ञातृपरत्वाभावेऽपि विज्ञानमयशब्दस्य ज्ञातृपरत्वमाह—यद्यपीति । मयडहितवाक्ये तदर्थ परित्यक्त इति ऽपि वाक्ये स न त्याज्यइत्यर्थ । तर्हि ब्राह्मणस्य श्लोकस्य च कथमैकार्थ्यमित्यत्राह—यथेति । पूर्ववाक्योक्तार्थं

## गूढार्थसङ्ग्रह

अन्योऽन्तर आत्मा विज्ञानमय इति तद्वान्ज्ञातैवोपदिश्यतइति । ' ब्रह्मवित् ' ' यो वेद निहितगुहायाम्—सोऽश्नुते सर्वान्कामान्सह ' इत्युपक्रमे वेदितु यत् सर्वकामाशनमुक्त तदेव ' विज्ञान यज्ञतनुते ' इत्यादौ 'शरीरेपाप्मनो

## श्रीभाष्यम्

' अन्नाद्वै प्रजा·प्रजायन्ते ' (तै.आ २.१) इत्यत्र श्लोके केवलान्नोपादानेऽपि ' स्वा एपपुरु षोऽन्नरसमय· ' इत्यत्र नाम्नमात्रं निर्दिष्टम्–अपितु तन्मय तद्विकार एतत्सर्वं इति निधाय सूत्रकारस्स्वयमेव ' भेदव्यपदेशात् ' (शारी.१.१.१८) इत्यनन्तरमेव वदति।

यदुक्त जगत्कारणतया निर्दिष्टस्य ' अनेन जीवेनात्मनाऽनुप्रविश्य ' (छां ५३ २)— तत्त्वमसि ' (६.८.७) इति च जीवसामानाधिकरण्यनिर्देशाज्जगत्कारणमपि जीवस्वरूपा न्नातिरिच्यत इति कृत्वा जीवस्यैव स्वरुप ' ब्रह्मविदाप्नोति परम् ' (तै आन १) इति प्रक्रा न्तमसुखाद्व्यावृत्तत्वेनानन्दमयइत्युपदिश्यत इति, तदयुक्त जीवस्य चेतनत्वे सत्यपि 'तदै क्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत ' इति स्वसङ्कल्पपूर्वकानन्तविचित्रसृष्टियोगानुप

## श्रुतप्रकाशिका

विषय वाक्यश्लोकस्य तदेकार्थ्ये यथाऽन्नमयविषयश्लोकस्येत्यर्थ । तन्मय इति श्रुतिवाक्यगतमयडथानुवाद तद्विकार इति तद्व्याख्यानम् । उक्तार्थजातस्य उत्सूत्र वशङ्का परिहरन् व्याख्यास्यमानसूत्रोपयोगित्व च दर्शयितुमाह–एतत्सर्वमिति। ' तस्माद्वा एतस्मात् ' इति वाक्य जीवपरयोर्भेदप्रतिपादक वदन् सूत्रकारो विज्ञानशब्दस्य ज्ञातृपर व तदुपपत्तीश्च हृदि निदधदेव वदतीत्यर्थ ॥

पूर्वपक्षे जीवसामानाधिकरण्य शारीरत्वश्रवण च हेतुद्वयमुक्तम् तत्र सामानाधिकरण्यस्य भेदासह त्वमुपपादयितु यदुक्तमित्यादिनोपदिश्यत इत्यनेनानूदित पूर्वपक्षहेतु दूषयति तदयुक्तमिति । प्राकरणिकवाक्यैरसमानाधिकरणदप्राति पदिकार्थेन विरुद्धधर्माध्यासप्रतिपत्त्या भेदसिद्धे कालात्ययापदिष्टहेतुरिव परोक्तहेतुन साध्यसाधक इति दूषण वक्तु त प दोषस्याप्य विशेषसमर्थकै प्राकरणिकवाक्यै पराभिमतैक्यविरुद्धभेदसिद्धि दर्शयति । जीवस्येति । प्रलयदशायामुपसंहृत करणकलेवरस्य कर्मवश्यस्य सङ्कल्पमात्रेण विचित्रजगत्सर्गायोगाद्बद्धस्य स्रष्टृत्वमनुपपन्नमित्यर्थ ॥

## गूढार्थसंग्रह

हित्वा सर्वान्कामान्समश्नुत ' इत्यत्र सर्वपापविमोकानन्तरकालिकत्वेन विशदीकृतम् । तेनापक्रमोक्तशतैवात्र प्रतिपिपाद- यिषितइति निश्चीयत इति भाव ॥

मैत्रेयीब्राह्मणे–' विज्ञानघनएवैतेभ्यो भूतेभ्यस्समु त्थाय' इत्यनन्तर ' नवा अरे मोह ब्रवीमि अल वा अरे इदवि- ज्ञानाय ' इत्यत्र विज्ञानयोग्यतोक्ता । तत्र विज्ञानशब्देन ज्ञानविशेषएव विवक्षित । तेनासङ्कुचितज्ञानयोग्यता बन्धद शायामपि वर्तत इत्युक्त भवति। अत्र 'विज्ञान' 'विज्ञानमय' शब्दाभ्या निर्देशपूर्वक 'शरीरे पाप्मनो हित्वा सर्वा कामान् समश्नुते ' इत्युपक्रमोक्तमुक्तेरभिधानेन कामनाविषयीभूतसर्वानुभवौपयिकज्ञानविशेषवान् जीवो ।व [illegible]ित इति निश्चीयत, अत्र कामनाविषयीभूता ' आनन्द ब्रह्मणो विद्वान् ' इत्यत्र आनन्दशब्देन निर्दिष्टा । ' यता वचो निवर्तन्ते 'इत्यत्र कार्त्स्न्यवेदननिषेधस्य विवक्षितत्वेन अपरिच्छिन्नगुणविभूत्यादिज्ञानमेव ' विद्वान् ' इत्यत्र विवक्षितम् । तादृशज्ञानस्वरूप योग्यताया बन्धदशाया सत्त्वेन पापनिवृत्त्यनन्तर उक्तगुणविभूत्याद्यनुभव एव ' सर्वा कामान् समश्नुत ' इत्यत्र विव क्षित । उपासनाफल गुणविभूत्यादिज्ञान मुक्तस्य परब्रह्मसमानमिति विज्ञानमयपर्याये ब्रह्मशब्दस्योभयत्र निर्देश साम्यश्रु त्यनुसारेण ब्रह्मसाम्यतात्पर्यक । एतदर्थमेव मनोमयपर्यायानन्तर विज्ञानमयपर्याये इत्थमुक्ति । आनन्दमयोपसङ्क्रा त्य-

## श्रीभाष्यम्

पत्तेः । शुद्धावस्थस्यापिहि तस्य सर्गादिजगद्व्यापारासम्भवो ' जगद्व्यापारवर्जम् ' [शारी,

## श्रुतप्रकाशिका

शुद्धावस्थस्य सम्भवतीत्यत्राह–शुद्धेति । उक्तं विपरीतं शङ्कते —

## गूढार्थसंग्रहः

नन्तर ' यतो वाचो निवर्तन्त ' इत्याद्यानन्दवल्ल्युपसंहारः उक्तार्थतात्पर्यं द्रढयति । एवं भृगुवल्ल्युपसंहारे ' अस्माल्लोकात्प्रेत्य एतमानन्दमयमात्मानमुपसङ्क्रम्य । इमान्लोकान्कामान्नी कामरूप्यनुसञ्चरन् ' इत्यत्रोपक्रमोक्तमुक्तिः विशदीकृता ' सोऽश्नुते सर्वान्कामान्' इत्युपक्रमोक्तार्थः विज्ञानमयपर्याये पापविमोकानन्तरमिति भृगुवल्ल्युपसंहारे च देशविशेषावच्छेदेनेति च प्रतिपादनेन उपक्रममध्योपसंहाररूपवाक्यत्रयैकरस्यम् अयमर्थः ' मान्त्रवर्णिकमेव च गीयते 'इतिसूत्रे 'गीयते' इत्यत्र विवक्षित इति सूत्रकृता निरूपयिष्यते । अन्नमयाद्युपसङ्क्रान्तिः पूर्वं परत्र च प्रतिपादिता । अत एव मुक्तिफलमुक्तम् । अत्रायमाशयः ' तस्माद्वा एतस्मादात्मनः ' इत्यत्रोपक्रमोक्तब्रह्मशब्दार्थजगत्कारणात्मत्वं प्रागानन्दमयादन्यत्वेन आत्मनः अप्रतिपादनेन आनन्दमय एव पर्यवस्यति । ' अधीहि भगवो ब्रह्म इति ' ब्रह्मशब्दार्थनिर्धारणयैव पितरंप्रति भृगुवल्ल्या प्रश्नः, अनन्तरं एकैककोटिनिरसनपूर्वकं आनन्दे परिसमाप्त्यभिधानेन आनन्दानन्दमययोरैक्यनिर्णयेन आनन्दस्य जगत्कारणब्रह्मप्रतिपादने जगत्कारणब्रह्मण एव ' तस्माद्वा एतस्मादात्मन इत्यादिविवक्षानिर्णयेन आनन्दमयस्य जगत्कारणत्वसर्वान्तर्यामित्वनिष्कर्षानन्तरमानन्दमयस्यैव सर्वान्तर्यामित्वनिश्चयेन अन्नमयाद्यन्तर्यामित्वनिश्चये तस्यैवेति निर्धारणं सम्भवतीति भृगुवल्ल्युपसंहारे मुक्तिर्विशदीकृता ॥

वृत्तिकारमते (श) भाष्योक्तदूषणेषु विकारार्थमयट्प्रायपाठः ' विकारशब्दान्नेतिचेन्न प्राचुर्यात् ' इति सूत्रेणैव—निरस्तः । ' प्रियशिरस्त्वाद्यप्राप्तिः ' इत्यत्र शङ्काऽनुसारेण सविशेषब्रह्मण एव सूत्रकृतो विवक्षेति सिद्ध्यति । वेदार्थसंग्रहान्ते ' आनन्दो ब्रह्म' इत्यादौ आनन्दशब्दस्य धर्मिपरत्वस्यैवाभ्युपगमेन ' तत्प्रकृतवचने मयट् ' इति सूत्रस्य विषयभेदेन द्विवारं प्रवृत्त्यभ्युपगमेन प्रकृतिप्रत्ययार्थयोः प्रकृत्यर्थस्यचाभ्यासः वृत्तिकृतः विवक्षितः आनन्दमयादन्यस्यानन्दवल्ल्यामप्रतिपादनेन आनन्दानन्तरं वरुणोपसम्पत्तेः भृगुवल्ल्यामप्रतिपादनेन आनन्दानन्दमयशब्दयोरेकार्थत्वेन तस्यैव उपक्रमोक्तब्रह्मशब्दार्थत्वनिर्णयः सम्भवति । आनन्दानन्दमयशब्दयोरेकार्थत्वेनाभ्यासोऽप्युपपद्यते । सङ्क्रमणविषयः प्रागेवाभिहितः । उत्तरत्र विशदीकरिष्यते । विशेषापोहश्रुतीनामर्थः प्रागेवाभिहितः । वाक्यशेषे निर्विशेषश्रवणेन निर्विशेषमेव वाक्यतात्पर्यविषय इति प्रधानं दूषणं परभाष्ये उक्तम् । पूर्वपक्षिणोऽपि तत्सम्मतम् । अतः विस्तरेण जिज्ञासाऽधिकरणे निर्विशेषस्याप्रामाणिकत्वं यदुक्तं तदेव साधयितुं शङ्कते–यदपिचेति । जिज्ञासाऽधिकरणे ' तत्त्वमसि ' इति वाक्यविचारकरणेन पौनरुक्त्यं प्रतिभाति । तथाऽपि ब्रह्मलक्षणवाक्यैकवाक्ये ब्रह्मणः जीववैलक्षण्यसाधने जीवाभिन्नमेव ब्रह्मेति भ्रमस्स्यात् । अत्र सूत्रेषु जीवभेदः स्फुटं प्रतिपाद्यत इत्यभिप्रेत्य तत्रानुक्तविषयाणां पूरणेन पुनरपि 'तत्त्वमसी' ति वाक्यार्थविचारोपक्रमः । जिज्ञासाऽधिकरणे कर्मविचारानन्तर्यमथशब्दार्थं इति वृत्तिकारमतं दूषयद्भिः परैः आनन्दमयाधिकरणेऽपि जीवभिन्नानन्दस्यैव ब्रह्मत्वं तस्यैवानन्दरूपत्वं, नतु पुच्छब्रह्मण इति वृत्तिकारमतं दूषितम् । एवं च उभयत्र ' तत्त्वमसि ' इत्यादिवाक्यबलेनैव वृत्तिकारमतदूषणं संपन्नम् । जन्माद्यधिकरणादौ कारणवाक्यानामेव प्राधान्यं नतु परसंमतमहावाक्यानामित्यर्थस्य निर्णीतत्वेन लक्षणवाक्यैकवाक्यविचारे तत्साधनमेव सिद्धान्तं दृढीकरणं भवतीत्यभिप्रेत्य—'तत्त्वमसि' इति वाक्यविचारः अत्र क्रियत इति बोध्यम् ॥ शुद्धावस्थस्यापिहीति—उपपादयिष्यत इत्यतन्त्रम् । अत्र

## श्रीभाष्यम्

४.४.१७) 'भोगमात्रसाम्यलिङ्गात्' इत्यत्रोपपादयिष्यते कारणभूतस्य ब्रह्मणो जीवस्वरूपत्वानभ्युपगमे 'अनेन जीवेनात्मना' (छां.६.३.२) 'तत्त्वमसि' (६.८.७) इति सामानाधिकरण्यनिर्देशः कथमुपपद्यत इति चेत्; कथं वा निरस्तनिखिलदोषगन्धस्य सत्यसङ्कल्पस्य सर्वज्ञस्य सर्वशक्तेरनवधिकातिशयासङ्ख्येयकल्याणगुणगणस्य सकलकारणभूतस्य ब्रह्मणः नानाविधानन्तदुःखाकरकर्माधीनचिन्तितनिमिषितादिसकलप्रवृत्तिजीवस्वरूपत्वम्? अन्यतरस्य मिथ्यात्वेनोपपद्यत इतिचेत् कस्य भोः? किं हेयसम्बन्धस्य? किं वा हेयप्रत्यनीककल्याणैकतानस्वभावस्य? हेयप्रत्यनीककल्याणैकतानस्य ब्रह्मणोऽनाद्यविद्याश्रयत्वेन हेयसम्बन्धमिथ्याप्रतिभासो मिथ्यारूप इति चेत् विप्रतिषिद्धमिदमभिधीयते, ब्रह्मणो हेयप्रत्यनीककल्याणैकतानत्वमनाद्यविद्याश्रयत्वेनानन्तदुःखविषयमिथ्याप्रतिभासाश्रयत्वंचेति। अविद्याश्रयत्वं तत्कार्यदुःखप्रतिभासाऽश्रयत्वं चैवहि हेयसम्बन्ध। तत्स-

## श्रुतप्रकाशिका

कारणेति। समानविभक्तयन्तगतैक्योपपत्तिः कथमित्यर्थः। कथंवेति। प्रातिपदिकावगतविशेषणान्वयः कथमित्यर्थः। निरस्तेत्यादिपदैस्तत्पदप्रातिपदिकावगतविशेषणान्वयो दर्शितः। 'तदैक्षत, असृजत' इति यथासङ्कल्प जगत्सृष्टिश्रवणेन सत्यसङ्क(ल्पत्वा)ल्पा)दिगुणानामतिरोहितत्वावगमात्तिरोधायकहेयसम्बन्धानर्हत्वमर्थसिद्धमित्यभिप्रायेण निरस्तनिखिलदोषगन्धत्वमुक्तम्। जगद्व्यापारोपयिकगुणान्तराणामन्यत्र कण्ठोक्तानां सद्विद्याया गतिसामान्यनयादर्थसिद्धत्वमभिप्रेत्यो सः अनवधिकेति। त्वम्पदप्रातिपदिकावगतविशेषणान्वयो दर्शितः। नानाविधेति। जीवस्वरूपत्व जीवेन सहस्वरूपैक्य जीवत्वमित्युक्ते जीवशरीरकत्वप्रातिपत्तिश्च सम्भवतीति तद्व्यावृत्त्यर्थं जीवस्वरूपत्वमित्युक्तम्। साक्षात्पराभिमत पदद्वयावगतविशेषणपरित्यागपक्ष दूषयिष्यन् सम्भावित पक्षद्वय शङ्कते अन्यतरस्येति। तत्र पदप्रतिपन्नविशेषणयोरन्यतरस्येत्यर्थः। विकल्पयति कस्येति। प्रत्यक्षसिद्धागमसिद्धत्वन्तत्पदावगतविशेषणजात दुस्त्यजमिति भावः॥

सहेतुकमविरुद्ध परेण प्रथमशिरः परिग्रह शङ्कते–हेयप्रत्यनीकेति। हेय दुःख मिथ्याप्रतिभासः भ्रान्तिज्ञानम्। स्वतश्शुद्धस्य परस्यौपाधिकमालिन्यमतत्परमार्थतो निर्मलस्य स्फटिकस्याव्यासादरुणिमवच्च ब्रह्मणो निर्दोषकल्याणैकतानत्वं हेयसम्बन्धश्च स्वाभाविकौपाधिकविभागेन परमार्थापरमार्थविभागेन वाऽविरुद्धः उभयोरपि स्वाभाविकत्वसत्यत्वाभ्युपगमेहि विरोध इति शङ्काऽभिप्रेता, दूषयति–विप्रतिषिद्धमिति। विप्रतिषेधमुपपादयति। अविद्याश्रयत्वमिति। नकेवलं दुःखमेव हेय अपितु तद्धेतुतत्प्रतिभासावपि हेयावित्यर्थः। ततः किमित्यत्राह— तत्सम्बन्धित्वमिति। अविद्यात कार्यदुःख तत्प्रतिभासरूपहेयानामाश्रयत्व तत्प्रत्यनीकत्व च विरुद्धमित्यर्थः॥

## गूढार्थसंग्रहः

परैरपि भाष्य मुक्तानामपि जगद्व्यापारासम्भव एव प्रतिपादितः। अनावृत्तिश्शब्दात् इत्यन्तिमसूत्रे पूर्वोक्तमुक्तस्यैवानावृत्तिप्रतिपादनेन अर्चिरादिगतिद्वारकफलप्रतिपादकश्रुतेरेव तत्र विवक्षितत्वेन सविशेषप्राप्तिरूपमुक्तेरेव सूत्रकृता निर्धारणेन निर्विशेषस्याप्रामाणिकता बोधितेति मुक्तिद्वैविध्यपरिकल्पनेन सगुणोपासकपरतया जगद्व्यापारमित्यादेरर्थवर्णनमनुपादेयम्॥

## श्रीभाष्यम्

म्बन्धित्वं तत्प्रत्यनीकत्वं च विरुद्धमेव । तथाऽपि तस्य मिथ्यात्वान्नविरोध इति मावोचः । मिथ्याभूतमप्यपुरुषार्थ एव; यन्निरसनाय सर्वे वेदान्ता आरभ्यन्त इति ब्रूपे । निरसनीया-पुरुषार्थयोगश्च हेयप्रत्यनीककल्याणैकताननतया विरुध्यते । किं कुर्मः ? 'येनाश्रुतं श्रुतंभवति' (छां.६.१.३) इत्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय ' सदेव सोम्येदमग्र आसीत् ' (छां.६.२.१) इत्यादिना निखिलजगदेककारणतां ' तदैक्षत बहुस्याम् ' (६.२.३) इति सत्यसङ्कल्पतां च ब्रह्मणः प्रतिपाद्य तस्यैव ब्रह्मणः ' तत्त्वमसि ' (छां६.८.७) इति सामानाधिकरण्येनान-न्तदुःखाश्रयजीवैक्यं प्रतिपादितम्; तदन्यथाऽनुपपत्त्या ब्रह्मण एवाविद्याऽश्रयत्वादिपरि-कल्पनीयमिति चेत्—श्रुतोपपत्तयेऽप्यनुपपन्नं विरुद्धं च न कल्पनीयम् । अथ हेयसम्ब न्धएव पारमार्थिकः कल्याणैकस्वभावता तु मिथ्याभूता; हन्तैवं तापत्रयाभिहतचेतनोज्जि-जीवयिषया प्रवृत्तं शास्त्रं तापत्रयाभिहतिरेव तस्य पारमार्थिकी कल्याणैकतानस्वभावस्तु भ्रान्तिपरिकल्पित इति बोधयत्सम्यगुज्जीवयति । अथैतद्दोषपरिजिहीर्षया ब्रह्मणो निर्विशेष

## श्रुतप्रकाशिका

सम्बन्धमिथ्यात्वादविरोध शङ्कते–तथाऽपीति । तथाऽपि अविद्यादीनां हेयत्वेऽपि तस्य आश्रयत्वस्वरूपसम्बन्ध-स्येत्यर्थः । दूषयति मिथ्याभूतमपीति । आश्रयत्वं मिथ्याभूतमप्यपुरुषार्थ इत्यर्थः । अपुरुषार्थत्वमुपपादयति यन्निर-सनायेति । ततःकिमित्यत्राह–निरसनीयेति । एतदुक्तं भवति मिथ्यात्वं किमत्यन्ताभावः ? उत ज्ञानबाध्यत्वम् । प्रथमे निरसनीयाभावात्तन्निरासाय शास्त्रारम्भो न स्यात्, द्वितीये च मिथ्याभूतस्यापुरुषार्थत्वमस्ति नवा नचेन्निरसनीयत्वाभा-वाच्छास्त्रारम्भवैयर्थ्यं, अपुरुषार्थत्वमस्तिचेद्धेयप्रत्यनीकत्वव्याघातो दुष्परिहरइति । तद्विरोधेऽपि हेयसम्बन्धस्य श्रुतिबलादभ्यु पगन्तव्यत्वं शङ्कते किंकुर्मइति । परिहरति श्रुतोपपत्तयइति । अनुपपन्नं तर्कपराहतं विरुद्धं प्रमाणविरुद्धम् ' अपहत-पाप्मा ' ' विशोको विजिघत्सः ' ' एषहिसर्वेभ्यःपाप्मभ्य उदितः ' ' अनश्नन्नन्यः ' ' अनीशया शोचति—मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशम् ' ' अस्मान्मायी सृजते ' ' तस्मिंश्चान्यो मायया सन्निरुद्धः ' ' तम-क्रतुं पश्यति ' ' अनार्तां देवतांप्रपद्ये ' इत्यादि श्रुतिविरोधः । एकस्मिन्हेयप्रत्यनीकत्वहेयास्पदत्वादिविरुद्धधर्मान्व-यानुपपत्तिस्तर्कविरोधः । शिरोऽन्तरं शङ्कते अथेति । दूषयति हन्तैवमिति । शास्त्रस्य प्रयोजनपर्यवसायित्वाभावादप्रा-

## गूढार्थसंग्रहः

सर्वे वेदान्ता आरभ्यन्त इतिब्रूपइति । ' क्षरात्मानावीशते देव एकः ' (श्वे) इत्युपक्रमोक्तेशनस्य निर्गु-णश्रुत्युत्तर ' य ईशेऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यतईशनाय ' (६) इत्यत्राविद्याद्यहेतुकत्वेन नित्यत्वं ' निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ' इत्यत्राविद्यारूपाविद्यासंबन्धित्वमपि निरस्तमिति वेदान्तानां अविद्यासंबन्धिजीवा-भिन्नब्रह्मपरत्वं न सम्भवतीति भावः । अर्थापत्त्याऽविद्या सिद्ध्यतीति शङ्कते किंकुर्मइत्यादिना । ' येनाश्रुतं श्रुतं भवती त्यादौ कारणव्यतिरिक्त कार्यस्यासत्यत्वं विवक्षितम् । दृष्टान्ते परिणामिकारणकथनमपि तदभिप्रायकमेवेति कल्याणैकतान स्वभावताया अविद्याहेतुत्वेन मिथ्यात्वमेवेति शङ्कते–अथ हेयसम्बन्धएवेति । परसिद्धान्ताभिप्रायेण शङ्कते अथैतद्दोष परिजिहीर्षयेति ॥




## श्रीभाष्यम्

चिन्मात्रस्वरूपातिरिक्तजीवत्वदुःखित्वादिकं सत्यसङ्कल्पत्वकल्याणगुणाकरत्वजगत्कारणत्वाद्यपि मिथ्याभूतमिति कल्पनीयमिति चेत् अहो भवतां वाक्यार्थपर्यालोचनकुशलता एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं सर्वस्य मिथ्यात्वे सर्वस्य ज्ञातव्यत्वाभावाच्च सेत्स्यति। यथैकविज्ञानं परमार्थविषयं तथैव सर्वविज्ञानमपि यदि परमार्थविषयं तदन्तर्गतं च, तदा तज्ज्ञानेन सर्वविज्ञानमिति शक्यते वक्तुम्। नहिपरमार्थशुक्तिज्ञानेन तदाश्रयमपरमार्थरजतं ज्ञातं भवति। अथोच्येत-एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया अयमर्थः निर्विशेषवस्तुमात्रमेव सत्यमन्यदसत्यमिति ; नतर्हि 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' (छां ६.१.३) इति श्रूयेत। येन श्रुतेनाश्रुतमपि श्रुतं भवतीति ह्यस्य वाक्यस्यार्थः। कारणतयोपलक्षितनिर्विशेषवस्तुमात्रस्यैव सद्भावश्चेत्प्रतिज्ञातः 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृ-

## श्रुतप्रकाशिका

माण्य प्रसजेदित्यर्थः। परस्य सिद्धान्तभूतमुभयप्रहाणं शङ्कते अथेदिति। परिहरति अहो भवतामिति। अर्थनिष्कर्षोपयुक्तपदद्वय,वाक्यैतत्प्रकरण प्रकरणान्तरोपनिषदन्तरप्रमाणान्तरतर्क सामानाधिकरण्यनिरूपण पर्यालोचनम्। प्रथममेतत्प्रकरणविरोध दर्शयति एकेति। सर्वसत्यत्वेऽपि कथ सेत्स्यतीत्यत्राह—यथैकेति। परमार्थविषयमिथ्याविषयत्वे ज्ञानयो वैरूप्य स्यादितिभावः। तदन्तर्गतंचेति। परिषज्ज्ञानेन तद्गताः पुरुषाहि ज्ञाता भवन्ति, नतु तद्बहिष्ठा इति भावः। ज्ञानस्य तदन्तर्गतस्य तद्विषयान्तर्गतत्वम्॥

यद्वा तदन्तर्गत सर्वमिति शेषः। परमार्थविषय तदन्तर्गतमित्युक्तमर्थ व्यतिरेकेणोपपादयति—नहिपरमार्थेति। नहि शुक्तिरजतयोरेकधीविषयत्वमित्यर्थः। एकत्वसर्वत्वावस्थाभेदेऽस्त्यपि धर्मैक्यादेकविज्ञानेन सर्वविज्ञानमुपपद्यते ज्ञातत्वसर्वत्वह्येकाश्रयवर्तिनी। नहि ज्ञातत्वविशिष्टाकारेण सर्वत्व सर्वत्वविशिष्टाकारेण ज्ञातत्व वा? प्रागेवाय मया ज्ञातइत्यपिहि धर्मिमात्रस्यैव ज्ञातत्व नत्वेतदवस्थाविशेषविशिष्टस्य देशकालादिभेदात्। नहि पूर्वमेत कालादिविशिष्टतया ज्ञातत्व, ब्रह्मैकमेव सत्यमिति ज्ञाते अन्यन्मिथ्यात्वेन ज्ञात स्यादिति शङ्कते—अथोच्येतेति। परिहरति नतर्हीति। सर्वं मिथ्यात्वेन ज्ञातं भवतीति वा श्रूयेतेत्यर्थः। एवचार्थे सति मिथ्यात्वेनेति पदस्याध्याहारः धर्म्यन्तरविषयतया ज्ञानशब्दयोर्वैरूप्य—स्वरसतः प्राप्तहि ज्ञानैकरूप्य तच्च भज्यते। ज्ञातभवतीति ज्ञातृज्ञेयतदवच्छिन्नज्ञानाभावान्निवृत्तिलक्षणाचेति दोषत्रयमभिप्रेतम्

श्रूयमाणान्वयप्रकारस्य पराविरुद्धतामाह—येनेति। एव प्रतिज्ञावाक्यस्वारस्यमुक्तम्। अथ दृष्टान्तवाक्याननुगुण वमाह

## गूढार्थसङ्ग्रह.

छान्दोग्यमुण्डकयोः प्रथम 'एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा' अन्ते 'तत्त्वमसि' 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादि समानाधिकरणनिर्देशः, तत्र 'तत्त्वमसि इत्यादौ एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाऽनुसार्यर्थः भवन्मते नघटत इति प्रागेवोक्तम् (१५९.पु.ई.अ)॥ अत्रतु प्रतिज्ञायाः परसम्मतार्थोऽपि नघटतइत्याह-एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमित्यादिना। शुक्तिरजतस्थले शुक्तिव्यतिरेकेण रजताभाववत् एकव्यतिरिक्तसर्वाभावः भवद्भिरुच्यते साच प्रक्रिया अत्र नघटत इत्याह—यथैकविज्ञानमित्यादिना। 'मृत्तिकेत्येव सत्यम्' इत्यत्र मृत्तिकैव सत्यम् अन्यन्मिथ्या इतिदृष्टान्तार्थं प्रकल्प्य अर्थ वर्णनमपि नघटत इत्याह—नतर्हीत्यादिना। 'वाचाऽऽरम्भणम्' इत्यादिश्रुत्या मिथ्यात्व सिद्ध्यतीति भ्रम निरस्यति—

## श्रीभाष्यम्

न्मयं विज्ञातमिति दृष्टान्तोऽपि न घटते। मृत्पिण्डविज्ञानेन हि तद्विकारस्य ज्ञातता निदर्शिता। तत्रापि विकारस्यासत्यताऽभिप्रेतेतिचेत् मृद्विकारस्य रज्जुसर्पादिवदसत्यत्वं शुश्रूपोरसिद्धमिति प्रतिज्ञातार्थसम्भावनाप्रदर्शनाय 'यथा सोम्य' (छां.६.१) इति प्रसिद्धवदुपन्यासो न युज्यते। नच 'तत्त्वमसि' इत्यादिवाक्यजन्यज्ञानोत्पत्तेःप्राग्विकारजातस्यासत्यतामापादयत्तर्कानुगृहीतमननुहीतं वा प्रमाणमुपलभामहे इति। अयमर्थः 'तदनन्यत्वमारम्भणशब्दादिभ्यः' (शारी.२.१.१५) इत्यत्र वक्ष्यते। तथा 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छां.६.२.१) 'तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत' (६.२.३) 'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (६.३.२) 'सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः ऐतदात्म्यमिदं सर्वम्' (६.८ ६) इत्यादिनाऽस्य जगतस्सदात्मकता, सृष्टेःपूर्वकाले नामरूपविभागप्रहाणं जगदुत्पत्तौ सच्छब्दवाच्यस्य ब्रह्मणस्स्वव्यतिरिक्तनिमित्तान्तरानपेक्षत्वं, सृष्टिकालेऽहमेवानन्तस्थिरत्रसरूपेण 'बहुस्याम्' इत्यनन्यसाधारणसङ्कल्पविशेषो, यथा सङ्कल्पमनन्तविचित्रतत्त्वानां विलक्षणक्रमविशेषविशिष्टासृष्टिस्समस्तेष्वचेतनेषु वस्तुषु स्वात्मकजीवानुप्रवेशेनैवानन्तनामरूपव्याकरणं स्वव्यतिरिक्तस्य समस्तस्य स्वमूलत्वं स्वायतनत्वं स्वप्रवर्त्यत्वं स्वेनैव जीवनं स्वप्रतिष्ठतत्वमित्याद्यनन्तविशेषादशास्त्रैकसमधिगम्या प्रतिपादिताः तत्सम्बन्धितया प्रकरणान्तरेष्वप्यपहतपाप्मत्वादिनिरस्तनिखिलदोषता सर्वज्ञता सर्वैश्वर्यत्वसत्यकामत्व सत्यसङ्कल्पत्वसर्वानन्दकरणनिरतिशयानन्दयोगादयस्सकलेतरप्रमाणाविषयास्सह स्रशः प्रतिपादिताः।

## श्रुतप्रकाशिका

त्तिर्निदर्शितेति भावः। दृष्टान्ताविरोधं शङ्कते तत्रापीति। प्रसिद्धवदुपन्यासानुपपत्त्या दूषयति मृद्विकारस्येति। मृद्विकारासत्यत्वमनुमानादिनाऽवगतमित्यत्राह—नचेति। अनुगृहीतमिति ज्वालैक्यबुद्धिवदापातप्रतीतिमात्रजनकत्वं विवक्षितम् उपरितनवाक्यपर्यालोचना दर्शयति। तथेति। सदायतनत्वफलितं स्वप्रवर्त्यत्वं स्वेनैव जीवनं च प्रशासनेनाहि धारणं धृत्वा च तज्जीवनं निषेधाय गुणानुवादइति शङ्काव्युदासायाह—शास्त्रैकेति। नहि विधेरनुवादित्वमिति भावः॥

श्रुत्यन्तरपर्यालोचना दर्शयति तत्सम्बन्धितया प्रकरणान्तरेष्वपीति। अपहतपाप्मत्वादिरूपो निरस्तनिखिलदोषतेत्यर्थः। अपूर्वतालक्षणं गुणेषु तात्पर्यलिङ्गं दर्शयितुं सकलेतरप्रमाणाविषयाइत्युक्तम्। ततःकिमित्याकाङ्क्षां पूरयन् कारणतयेति। अघटितत्वमुपपादयति मृत्पिण्डेति। नहि शुक्तिज्ञानाद्रजतनिवृत्तिवत् मृत्पिण्डज्ञानाद्घटादि(विकार)निवृ-

## गूढार्थसंग्रह.

तदनन्यत्वमित्यादिना। सूत्रे आरम्भणशब्दप्रयोगेण 'वाचाऽऽरम्भणम्' इत्यत्र परसम्मतवागालम्बनमित्यर्थकसमासः श्रुतौ न विवक्षित इति परसम्मतार्थस्य सूत्रकृत्तात्पर्यविषयत्वं नघटते 'तदनन्यत्वम्' इति निर्देशाच्चेतीति मूलएव व्यक्तीभविष्यति। एवं 'वाचा' इति शब्दप्रयोगाभावोऽपि परसम्मतार्थस्य सूत्रकृत्तात्पर्यविषयत्वाभावसूचकः, आरम्भणशब्दप्रयोगः सिद्धान्तिसम्मतार्थसूचकः नतु परसम्मतार्थस्येति प्रागेवोपपादितम् (६१८पु.जि.७)॥

## श्रीभाष्यम्

एवमनन्यगोचरानन्तविशेषविशिष्टप्रकृतब्रह्मपरामर्शितच्छब्दस्य निर्विशेषमात्रोपदेशपरत्व-मसङ्गतत्वेनोन्मत्तप्रलपितायेत । त्वंपदं च संसारित्वविशिष्टजीववाचि तस्यापि निर्विशेषस्व-रूपोऽपस्थापनपरत्वे स्वार्थः परित्यक्तस्स्यात् । निर्विशेषप्रकाशस्वरूपस्य च वस्तुनोऽविद्यया तिरोधानं स्वरूपनाशप्रसङ्गादिभिर्न सम्भवतीति पूर्वमेवोक्तम् । एवं च सति समानाधिकरणवृत्तयोस्तत्त्वमिति द्वयोरपि पदयोर्मुख्यार्थपरित्यागेन लक्षणा च समाश्रयणीया अथोच्येत—समानाधिकरणवृत्तानामेकार्थप्रतिपादनपरतया विशेषणांशे तात्पर्यासम्भवादेव विशेषणनिवृत्तेर्वस्तुमात्रैकत्वप्रतिपादनान्नलक्षणाप्रसङ्गः । यथा नीलमुत्पलमिति पदद्वयस्य विशेष्यैकत्वप्रतिपादनपरत्वेन नीलत्वोत्पलत्वरूपविशेषणद्वयं न विवक्ष्यते । तद्विवक्षायां हि नीलत्वविशिष्टाकारेणोत्पलत्वविशिष्टाकारस्यैकत्वप्रतिपादनं प्रसज्येत तत्तु न सम्भवति नहि नैल्यविशिष्टाकारेण तद्वस्तूत्पलपदेन विशेष्यते जातिगुणयोरन्योन्यसमवायप्रसङ्गात् । अतो नीलत्वोत्पलत्वोपलक्षितवस्त्वेकत्वमात्रं

## श्रुतप्रकाशिका

पदद्वयपर्यालोचनाभाव दर्शयति एवमिति । एवमनन्यगोचरानन्तविशेषविशिष्टप्रकृतेत्यनेन प्राकरणिकवाक्यविरोधो विवक्षितः प्रकृतब्रह्मपरामर्शितच्छब्दश्चेत्यनेन यत्र क्वापि प्रकृताकारविशिष्टपरामर्शितया तच्छब्दव्युत्पत्तिविरोध उक्तः । त्वपदस्यापि वस्तुमात्रपरत्वे मुख्यार्थप्रहाणमाह—त्वंपदञ्चेति । स्वाभिमुखचेतनस्त्वशब्दार्थः । आभिमुख्य च स्ववाक्यबोध्यत्वम् बोध्यत्वंचाशस्य संसारिणः स्वतःप्राप्तमिति भावः, तस्माद्बोधनार्हतोपयोग्याकारविशिष्टस्त्वमर्थः अतस्तपरित्यक्तोभवति । प्रमाणतर्कपर्यालोचनपूर्वोक्तेत्याह–निर्विशेषेति । पदद्वयनिमित्तप्रहाणे निर्विशेषत्वस्य बुद्धिस्थत्वात्तदनुपपत्तिरूपतर्कपर्यालोचन दर्शितम् । सामानाधिकरण्यबलान्निर्विशेषवस्त्वभ्युपगम इति शङ्कायां पदद्वयलक्षणालक्षण दूषणमाह–एवंचेति । एवं चसति निर्विशेषस्वरूपोऽपस्थापनपरत्वे मुख्यार्थसम्बन्धितया वस्तुमात्रावबोधनेऽभ्युपगते लक्षणास्वीकार इत्यर्थः

अथ परमतमुपन्यस्यति अथोच्येतेति । समानाधिकरणवृत्तानामित्यादिग्रन्थः पक्षविषयसङ्ग्रहरूपः । विशेषणांशे तात्पर्यासम्भवादिति । अन्यथा विशेषणबहुत्वादेकार्थत्वासिद्धेरिति भावः, पूर्वमप्युक्तादेवेत्येवकाराभिप्रायः प्रथमसूत्रेहि बहुश उक्तः । यद्वा अन्यनैरपेक्ष्यपरएवकारः । न लक्षणाप्रसङ्ग इति । वाच्याबहिर्भूतप्रतिपादनादिति भावः । एव पक्षविषये सङ्क्षेपेणोक्तमर्थमुपपादयति यथेत्यादिना । तत्र महाभाष्योक्तेऽप्युदाहरणे विशेषणांशे तात्पर्यसम्भव सिद्धकृत्वा उदाहृत. । कथ तत्र विशेषणांशाविवक्षेत्यत्राह तद्विवक्षायांहीति । प्रसक्तस्यानिष्टता दर्शयति तत्त्विति । युगपदभिधाने उद्देश्योपादेयविभागहानिप्रसङ्गात्पदद्वयप्रकृत्युपस्थापितविशिष्टैक्ये समानविभक्तया प्रतिपाद्यमाने विशेष्यांशस्येव विशेषणभूतजातिगुणांशयोरप्यैक्यप्रसङ्गाच्च । क्रमणाभिधानपक्षोऽभ्युपगन्तव्य इति हृदि निधायाह–नहीति । क्रमपक्षेऽपि पूर्वपदप्रतिपन्नाकारविशिष्टस्य पदान्तरप्रतिपन्नाकारविशिष्टवस्तुतादात्म्य किं समानविभक्तया बोध्यम् ? उत पूर्वपदप्रतिपन्ने विशिष्टे विशेषणान्तरान्वय इति विकल्पमभिप्रेत्य प्रथमे विशेषणभूतजातिगुणयोरप्यैक्यप्रसङ्ग सिद्ध बुद्ध्वा द्वितीये शिरस्यन्योन्यसमवायप्रसङ्गमाह—जातिगुणयोरिति । तात्पर्यबहिर्भूतस्यापि विशेषणस्योपयोगं दर्शयन्फलितमाह–अतइति ।

## गूढार्थसङ्ग्रहः

अतो नीलत्वोत्पलत्वोपलक्षितेति । यद्यपि परैः आधुनिकैः 'नीलमुत्पल'मित्यादौ गौणसामानाधिकरण्यवादिभिः

## श्रीभाष्यम्

सामानाधिकरण्येन प्रतिपाद्यते। तथा सोऽयं देवदत्त इत्यतीतकालविप्रकृष्टदेशविशिष्टस्य तेनैव रूपेण सन्निहितदेशवर्तमानकालविशिष्टतया प्रतिपादनानुपपत्तेरुभयदेशकालोपलक्षितस्वरूपमात्रैक्यं सामानाधिकरण्येन प्रतिपाद्यते। यद्यपि नीलमित्याद्येकपदश्रवणेप्रतीयमानं विशेषणं सामानाधिकरण्यवेलायां विरोधान्नप्रतिपाद्यते तथाऽपि वाच्येऽर्थे प्रधानांशस्य प्रतिपादनान्नलक्षणा अपितु विशेषणांशस्याविवक्षामात्रम्। सर्वत्र सामानाधिकरण्यस्यैष एव स्वभावइति नकश्चिद्दोष इति। तदिदमसारं सर्वेष्वेव वाक्येषु पदानां व्यु-

## श्रुतप्रकाशिका

नीलोत्पलमित्यत्र विशेषणान्वये स्फुटेऽपि तात्पर्याभाव उक्त । तत्र विशेषणानन्वयस्यास्फुटत्वाद्विशेषणान्वये स्पष्टतात्पर्याभावमुदाहरणान्तर दर्शयति तथेति ॥

विशिष्टवाचिनश्शब्दस्य विशिष्टपरित्यागेन विशिष्टैकदेशतया तत्सम्बन्धिनि विशेष्यस्वरूपमात्रे वृत्तिर्लक्षणैव स्यादित्यत्राह—यद्यपीति। परिहरति तथापीति ' वाच्येऽर्थे नहि शक्तिविषयाद्विशिष्टाद्बहिर्भूत विशेष्यमितिभाव । प्रधानांशस्येति। तात्पर्यविषयतया धर्मितया च प्रधानस्य विशेष्यांशस्यावर्जनादप्रधानविशेषणत्यागेऽङ्गुल्यादिविकले पुरुषशब्दस्येव न लक्षणेति भाव । मुख्यार्थत्वे तुल्येऽपि विशिष्टप्रतिपादनदशातो वैलक्षण्य दर्शयति अपित्विति। अविवक्षामात्रमिति। अशक्ये क्वचिद्व्यापाराभावात् व्यापारविषयांशेऽपि नह्यशक्तिरिति भाव., पूर्व पक्षे लक्षणाभावउक्तः इदानीं स्वपक्षे विशदीकृतो भवति। विशेषणाविवक्षायामस्वारस्य स्यादित्यत्राह—सर्वत्रेति। सामानाधिकरण्यव्युत्पत्तेरीदृशत्वान्नास्वारस्य, व्युत्पत्त्यननुरोधे सति ह्यस्वारस्यम्। अतएकार्थव्युत्पत्तिविरोधिविशेषणविवक्षायामेवास्वारस्यमितिभावः

इम पूर्वपक्ष प्रतिक्षिपति तदिदमसारमिति। प्रथम चरमोक्तत्तया बुद्धिस्थ व्युत्पत्त्यन्तराश्रयण निरस्यति—सर्वेष्वेवेति। सर्वेषु समानाधिकरणेषु व्यधिकरणेषु च वाक्येष्वित्यर्थ । गामानय गां बधानेत्यादिव्यधिकरणवाक्येषु

## गूढार्थसंग्रह

विशेष्यविशेषणभावे सामानाधिकरण्यस्थले उपहितान्वयबोधएवाङ्गीक्रियते नतूपलक्षितान्वयबोध । तथाऽपि विशेषणोपलक्षणव्यतिरिक्तोपाधेः केनापि दार्शनिकेनानङ्गीकारेण अप्रामाणिकतया इत्थमुक्तिः। विशेष्यविशेषणभावे गौणसामानाधिकरण्य विहाय 'तत्त्वमसि' इति समन्वयो मुख्य प्रदर्शितः। सोऽयमित्यादिवाक्यस्थपदानामिव ' इति पञ्चपादिका प्रत्यभिज्ञायामविगतमेकत्व परस्मै प्रतिपादयति सोऽयमिति। 'स्यादेतत् क्षणिकत्वपरिहाराय तं प्रत्यभिज्ञाप्रामाण्य तावद्वक्तव्यम्। एव तर्हि 'सोऽय'मित्यादिवाक्यस्याप्येवमेव प्रामाण्य भविष्यती'ति विवरणम्। सर्वसमतप्रकारेण एतत्सिद्धान्तो नघन्ते। 'सोऽय देवदत्त' इत्यत्र सर्वसमति उपलक्षितान्वयबोधमात्रे नतु परोक्तरीताविताह—सोऽयं देवदत्तइत्यादिना। उपलक्षणस्याप्रकारत्वमिति परसम्मतार्थ. जिज्ञासाऽधिकरणे प्रागेव (३२९.पु.जि.अ) पर्यालोचित । धर्मस्याप्रकारत्वे संसर्गोऽपि न विषयइति तदाशय । सर्वत्र समानाधिकरणव्यधिकरणवाक्येषु संसर्गविशेषावगाहित्वेनैव वाक्यार्थ. अन्विताभिधानवादिनस्सम्मत । धर्मस्याप्रकारत्वे संसर्गस्य भानमेव नसम्भवति। 'नीलमुत्पल'मित्यत्र नीलत्वोत्पलत्वयोः उपलक्षणत्व उपलक्षणस्य प्रकारत्वमेव 'नीलमुत्पलमानय' इत्यत्र आनयनांशे एव नैल्योत्पलत्वयो विशेषणत्वेनान्वयेन विशिष्टान्वयेबोध इत्याह—सर्वेष्वेव वाक्येष्वित्यादिना ॥

## श्रीभाष्यम्

त्पत्तिसिद्धार्थसंसर्गविशेषमात्रं प्रत्याय्यम्। तत्र समानाधिकरणवृत्तानामपि नीलादिपदानां नैल्यादिविशिष्टपदार्थो व्युत्पत्तिसिद्धः पदान्तरार्थसंसृष्टोऽभिधीयते। यथा नीलमुत्पलमानयेत्युक्ते नीलिमादिविशिष्टमेवानीयते, यथा च विन्ध्याटव्यां मदमुदितो मातङ्गगणस्तिष्ठतीति पदद्वयावगतविशेषणविशिष्टपदार्थः प्रतीयते। एवं वेदान्तवाक्येष्वपि समानाधिकरणनिर्देशेषु तत्तद्विशेषणविशिष्टमेव ब्रह्म प्रतिपत्तव्यम्। नच विशेषणविवक्षायामितरविशिष्टाकारं वस्त्वन्येन विशेष्टव्यम्। अपितु सर्वैर्विशेषणैस्स्वरूपमेव विशेष्यम् तथा हि 'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्यम्' (कैयटे

## श्रुतप्रकाशिका

नहि प्रतिवाक्यं पदानामर्थभेदव्युत्पत्तिकल्पनं 'क्लृप्तकल्प्याविरोधेतु युक्तःक्लृप्तपरिग्रहः' इति न्यायेन क्लृप्तव्युत्पत्त्यैव स्वार्थबोधनसम्भवे व्युत्पत्त्यन्तरकल्पनानुपपत्तेः। तथा समानाधिकरणवाक्येष्वपि न पदाना व्युत्पत्त्यन्तर प्रवृत्तिनिमित्ताविशिष्टार्थविषयं कल्पनीयमिति भावः। व्युत्पत्त्यन्तराभावेऽपि वाक्याना परस्परवैषम्यसम्भवोपपादनपर व्युत्पत्तिसिद्धार्थसंसर्गविशेषमात्रमितिपदम्। व्युत्पत्तिसिद्धार्थसंसर्गविशेषाद्वाक्यवैषम्य नतु प्रकृत्यादेस्स व्युत्पत्त्यनवगतार्थान्तरकल्पनादित्यभिप्रायः। एव सर्ववाक्यसाधारण रूपमुक्तम्। अनेन समानाधिकरणवाक्येषु फलितमर्थमाह—तत्रेति॥

तत्र तेषु वाक्येषु समानाधिकरणपदाना विशिष्टैकार्थप्रतीतिहेतुत्वमुदाहरणेन दर्शयति यथेति। प्रत्यक्षविषय परोक्षविषयंचोदाहरणद्वयम्। अतएव ह्यानीयते प्रतीयत इत्युक्तम्। कारकविभक्त्यन्तत्व न सामानाधिकरण्यविरोधीत्यभिप्रायेण नीलमुत्पलमानयेत्युक्तम्। नीलिमादिविशिष्टमेवानीयतइति। समानाधिकरणपदसमुदायो वस्तुमात्रप्रत्यायकश्चेद्वस्तुमात्रत्वाविशेषादनीलमप्यानीयेतेत्यभिप्रायः। किंच समानाधिकरणपदाना विशेषणपरित्यागे कोहेतुः समानविभक्त्यवगतमैक्यमितिचेन्न प्रातिपदिकावगतविशेषणान्वयबलात्समानविभक्तिरैक्य न प्रतिपादयेत् तदेव युक्त विभक्त्यर्थादपि प्रातिपदिकार्थप्राधान्यात् 'अदितिःपाशान्' 'गृहं संमार्ष्टि' इत्यादिषुहि विभक्त्यर्थोऽनादृतः ऐक्यविषयप्रयोगदर्शनादैक्यमितिचेत् विशेषणान्वयेऽपि प्रयोगदर्शनाद्विशेषणान्वयमपि प्रतिपादयति शाब्दप्रतीतिर्वस्तुमात्रस्यैव विशेषणान्वयस्तु प्रत्यक्षबला स्वीक्रियते प्रत्यक्षागोचरेतु यथाशब्दं नविशेषणप्रतीतिरितिचेन्न विशेषणान्वयश्शाब्दप्रतीतिविषयः ऐक्यतु प्रत्यक्षबलादङ्गीक्रियत इति किं न स्यात्॥

प्रत्यक्षागोचरेऽपि 'देवदत्तः श्यामो युवे'त्यादिप्रयोगेष्वैक्यधीदर्शनादैक्य शाब्दप्रतीतिविषय इतिचेत् तत्रैव परोक्षविषयप्रयोगे विशेषणान्वयस्यापि प्रतीतिर्विशेषणान्वयश्शाब्द एव न प्रत्यक्षसिद्ध इति। इत्थ प्रत्यक्षपरोक्षविभागरहितं समानाधिकरणपदानामनेकविशेषणविशिष्टैकार्थबोधकत्वं दृश्यत इति चरमपर्वाभिप्रायेणोदाहरणद्वय दर्शितम्। तस्मात् 'यएव लौकिकास्त एव वैदिकाः' इति लोकवेदाधिकरणन्यायेन वेदान्तवाक्येष्वपि पदद्वयावगतविशेषणापरित्यागेनैवार्थः प्रतिपत्तव्य इत्याह—एवंवेदान्तेति॥

अन्योन्यसमवायप्रसङ्गं परिहरति नचेति। अरुणाधिकरणे विस्तरेण परिहारो वक्ष्यत इत्यत्र संक्षिप्तः, नहियथाऽनुपपत्तिस्यात्तथा वक्तव्यमिति भावः। युगपदभिधान हृदि निधाय सर्वैर्विशेषणैः स्वरूपमेव विशेष्यमित्युक्त सर्वविशेषणैः स्वरूपस्यैव विशेष्यत्वेऽनुगुणं सामानाधिकरण्यलक्षणमित्याह—तथाहीति। नहि विशेषणान्तरविशिष्टाकारे विशेष-

श्रीभाष्यम्

वृद्ध्याधिके) इत्यन्वयेन निवृत्त्याचा पदान्तरप्रतिपाद्यादाकारादाकारान्तरयुक्ततया तस्यैव वस्तुनः पदान्तरप्रतिपाद्यत्वं सामानाधिकरण्यकार्यम्। यथा देवदत्तश्श्यामो युवा लोहिताक्षोऽदीनोऽकृपणोऽनवद्य इति। यत्रत्वेकस्मिन्वस्तुनि समन्वयायोग्यं विशेषणद्वयं समानाधिकरणपदनिर्दिष्टं तत्राप्यन्यतरत्पदममुख्यवृत्तमाश्रीयते ; न द्वयम्। यथा 'गौर्वाहीक'

श्रुतप्रकाशिका

णान्तरान्वयप्रतिपादन सामानाधिकरण्यमित्युक्तमित्यर्थ.। सामानाधिकरण्यलक्षणग्रन्थं विवृणोति अन्वयेन निवृत्त्यावेति। अन्वयरूपार्थस्य व्यावृत्तिरूपार्थत्व न कल्प्यम् यथा व्युत्पत्त्यन्वयमुखेन व्यावृत्तिमुखेन वा वस्तुनः पदान्तरप्रतिपाद्याकारादाकारान्तरयुक्तताप्रतिपादन समानाधिकरणपदसमुदायकार्यमित्यर्थः। तत्रोदाहरति यथेति। अन्वयमुखेनानेकप्रवृत्तिनिमित्तवैशिष्ट्योदाहरण श्यामो युवेति। व्यतिरेकमुखेनानेकाकारान्वयोदाहरणमदीन इत्यादि। दीनत्व— अभास्वरमनस्कत्व कृपणत्व निर्धनत्वम् ॥

अत्रायमर्थः क्रमेणाभिधाने व्यधिकरणवाक्येऽपि करणकारकविशिष्टेऽधिकरणकारकान्वयस्स्यात्। तद्विशिष्टे इतरकारकान्वयो वा प्रसजेदित्यन्योन्यविशेषणविशेष्यभावचोद्य व्यधिकरणवाक्येऽपि समानम्। तत्र य. परिहारः सएवात्रापि तथाहि—

पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम्। न्यायसम्पादितव्यक्ति पश्चाद्वाक्यार्थबोधकम् ॥

इत्युक्तप्रकारेण स्मरणदशाया सर्वै.पदैः पृथक्पृथक्स्वार्थस्मरणाद्भविशेषणानामन्योन्यसमवायप्रसङ्ग.। परामर्शदशाया यथाचोपपन्नं भवति तथा परामर्शोनाय प्रसङ्गः। पश्चाद्युगपत्सर्वै. पदैर्वाक्यार्थबोधनान्नमियस्समवायप्रसङ्गः। तस्मात्समानाधिकरणपदैर्युगपत्तत्तत्पदप्रवृत्तिनिमित्तविशिष्टैकविशेष्यप्रतिपादनेन क्रमाभावान्नान्योन्यसमवाय इति सर्वैर्विशेषणैस्स्वरूपमेव विशेष्यमिति ग्रन्थे अयमर्थोऽभिप्रेतः। अत्र सामानाधिकरण्यलक्षणग्रन्थोपादानेन अन्यदपि चोद्य परिहृतभवति युगपदभिधाने विशिष्टयोरैक्य समानविभक्तिः प्रतिपादयतीति विशिष्टैक्यवद्विशेषणैक्यमपि स्यादितिचोद्यम्। अत्र परिहार — एकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्यमिति समानविभक्तौ विशेष्यस्यैवैक्यप्रतिपादनान्नविशेषणैक्यमिति ॥

ननु विशेषणे विशेष्येचाविशेषेण प्रातिपदिकेनावगतेसति समानविभक्तिर्विशेष्यैक्यपरा नतु विशेषणैक्यपरेति किं नियामकमितिचेत् ? समानविभक्तिरैक्यबोधिका नतु भेदबोधिकेति किं नियामकम् ? व्युत्पत्तिरितिचेत् साऽत्रापि तुल्या किंच पदान्तरासमानाधिकृते घटइति पदे प्रयुक्ते तत्रस्था विभक्तिः प्रातिपदिकावगताना विशेषणविशेष्यतत्सम्बन्धानामैक्य न प्रतिपादयति विशेष्यमात्रैक्यमेव प्रतिपादयतीति किं नियामकम्। प्रत्यक्षमूलाहि व्युत्पत्तिः प्रत्यक्ष च विशेष्यमात्रैक्य दर्शयति नतु विशेष्यतत्सम्बन्धानामैक्यम् अतःप्रत्यक्षमूला व्युत्पत्तिर्नियामिकेतिचेत् सैवात्रापि नियामिकेति तुल्यमिति ॥

एव सर्वत्र व्युत्पत्तिसिद्धार्थ एव स्वीकार्यश्चेत्क्वचिदपि वृत्त्यन्तरकल्पन व्युत्पत्त्यन्तरकल्पन वा स्यादित्यत्राह— यत्रत्विति। विशेषणद्वयमिति त्रित्वादेरप्युपलक्षणम्। व्युत्पत्तिसिद्धार्थस्वीकार एवहि सर्वत्र स्वतःप्राप्तः तस्य प्रमाणविरोधादन्वयायोग्यत्वेसति वृत्त्यन्तरकल्पनं प्राप्त तदसम्भवे व्युत्पत्त्यन्तरकल्पनम्। गोशब्दस्य किरणवाचित्वे वृत्त्यन्तराभावाद्धि शक्तिकल्पनम् यदा वृत्त्यन्तरकल्पन तदानीमप्यन्यतरपदस्यामुख्यत्वकरणेन तावतैव विरोधशमनात्। न पुनस्सर्वेषां पदानां तात्पर्यनिश्चायकाभावप्रसङ्गात् गौर्वाहीकइति प्रयोगे गौरित्यस्यैवह्यमुख्यत्व नतु वाहीकपदस्यापि। अन्यतरपदस्य वृत्त्यन्तरकल्पनेऽपि न निर्विशेषवस्तुपरत्व मुख्यवृत्त्युपनीतविशेषणान्वयेऽपि वृत्त्यन्तरोपनीतविशेषणान्वयादित्यभिप्रायः ॥

श्रीभाष्यम्

इति। नीलोत्पलादिषु विशेषणद्वयान्वयाविरोधादेकमेवोभयविशिष्टं प्रतिपाद्यते ॥
अथ मनुषे एकविशेषणप्रतिसम्बन्धित्वेन निरूप्यमाणं विशेषणान्तरप्रतिसम्बन्धित्वाद्विलक्षणमिति घटपटयोरिवैकविभक्तिनिर्देशेऽप्यैक्यप्रतिपादनासम्भवात्समानाधिकरणशब्दस्य न विशिष्टप्रतिपादनपरत्वम्। अपितु विशेषणमुखेन स्वरूपमुपस्थाप्य तदैक्यप्रतिपादनपरत्वमेवेति। स्यादेतदेवम्; यदि विशेषणद्वयप्रतिसंबन्धित्वमात्रमेवैक्यं निरुन्ध्यात् नचैतदस्ति। एकस्मिन्धर्मिण्युपसंहर्तुमयोग्यधर्मद्वयविशिष्टत्वमेव ह्येकत्वं निरुणद्धि। अयोग्यता च प्रमाणान्तरसिद्धा घटत्वपटत्वयोः। नीलमुत्पलमित्यादिषु दण्डित्वकुण्डलित्वचद्रूपवत्त्वरसवत्त्वगन्धवत्त्वादिवच्च विरोधो नोपलभ्यते न केवलमविरोध एव प्रवृत्तिनिवृत्तिभेदेनैकार्थनिष्टत्वरूपं सामानाधिकरण्यमुपपादयत्येव धर्मद्वयविशिष्टतां

श्रुतप्रकाशिका

नीलोत्पलादिवाक्येषु वृत्त्यन्तकल्पनहेतुरेव नास्तीत्याह—नीलेति। विशेषणभेदेन विशेष्यभेद शङ्कते—अथमनुप इति। विशेषणप्रतिसम्बन्धित्व विशेषणविशिष्टता। एकविशेषणप्रतिसम्बन्धित्वेन निरूप्यमाणमिति भावप्रधाननिर्देशः निरूप्यमाणत्व विवक्षितम्। एकविशेषणप्रतिसम्बन्धित्व विशेषणान्तरप्रतिसम्बन्धित्वाद्विलक्षणमित्यर्थः। यद्वा एकविशेषणप्रतिसम्बन्धित्वेन निरूप्यमाण वस्तु विशेषान्तरप्रतिसम्बन्धित्वाद्धेतोस्तस्माद्विशेषणान्तरविशेष्यात्पदार्थाद्विलक्षणमित्यर्थः। विशेषणप्रतिसम्बन्धित्वभेदाद्विशेष्यस्वरूपभेद निदर्शयति। घटपटयोरिवेति। यथा घटत्वविशिष्टताया. पट त्वविशिष्टतायाश्च भेदेन तद्विशिष्टयोर्घटपटयोर्विशेष्ययोर्भेदः तथा विशेषणान्तरान्वयस्यान्यविशेषणान्वयस्य च भेदेन तद्विशेष्ययोश्च भेद. समानविभक्तिनिर्देशे सत्यप्यवर्जनीय इति सामानाधिकरण्य न विशिष्टैक्यप्रतिपादनक्षममित्यर्थः। नविशिष्टप्रतिपादनपरत्वमिति विशेषणान्वयप्रतीतिरवर्जनीयत्वेऽपि न तत्र तात्पर्यमिति भावः। विशेषणत्यागे तत्प्रतिसम्बन्धिविशेष्योपस्थापनायोगात्तदैक्यमपि दुष्प्रतिपादमित्यत्राह—अपित्विति। तात्पर्याविषयस्यापि विशेषणस्य परामर्शदशाप्रतीतिमात्रेण तद्विशेष्यप्रतीतिसिद्धेस्तदैक्यप्रतिपादन सम्भवतीत्यर्थः। परिहरति स्यादेतदिति ॥

यत्रायोग्यत्वमभ्युपगत तत्रापि विशेषणत्वमेवह्ययोग्यत्वे प्रयोजकम्। अतो नील त्वादिविशेषणमपि विरुद्धस्यादित्यत्राह—अयोग्यताचेति। प्रमाणान्तरसिद्धेति। नपुनर्विशेषणत्वप्रयुक्तमयोग्यत्वमिति भावः। प्रमाणान्तरमपि घटत्वपटत्वयोर्भिन्नाधिकरणत्वलक्षण विरोधमवगमयति नीलत्वोत्पल त्वयोरपि सविरोधस्तुल्यः, षट्पदे कुमुदे च पृथग्दर्शनादित्यत्राह—नीलमुत्पलमित्यादिष्वित्विति। नकेवल भिन्नाश्रयत्वमात्र विरोधः अपितु तन्नियमः। नच नीलत्वोत्पलत्वयोस्तादृशविरोध. क्वचित्सहप्रतीतत्वादिति भावः। दण्डित्वेति। दण्डादिकं युतसिद्ध, रूपादिकमयुतसिद्धम्। युतसिद्धत्वा-(दिविभाग)युतसिद्धत्वादि)वद्विशेषणत्वमपि विरोधाप्रयोजकमिति भावः यद्वा दण्डित्वादिक परस्परपरिहारेण वर्तते। रूपतु रस परिहृत्य वर्तते रसस्तु रूप परिहृत्य नवर्तते तत्र रूपापरिहारिणो रसस्य रूपस्याविरोधो दुरन्हव. क्वचित्सहोपलम्भात् तथा परस्परपरिहारिणोरपि नीलत्वोत्पलत्वयो. क्वचित्सहोपलम्भादविरोध इत्यभिप्रायेणोदाहरणद्वय दर्शितम् ॥

अविरोधे निवक्षितैक्यानुपयोगाद्विशेषणाविवक्षेत्यत्राह—नकेवलमिति। अपर्याययो. पदयोरेकार्थवृत्तौ निमित्त-

गूढार्थसङ्ग्रह.

अथ मनुषे इत्यादिना—सङ्क्षेपशारीरकविवरणादिपर्यालोचन सूचितम् ॥

## श्रीभाष्यम्

अन्यथा स्वरूपमात्रैक्ये अनेकपदप्रवृत्तौ निमित्ताभावात्सामानाधिकरण्यमेव न स्यात् । विशेषणानां स्वसम्बन्धानादरेण वस्तुस्वरूपोपलक्षणपरत्वे सत्येकेनैव वस्तूपलक्षितमित्युपलक्षणान्तरमनर्थकमेव उपलक्षणान्तरोपलक्ष्याकारभेदाभ्युपगमे तेनाकारेण सविशेषत्वप्रसङ्गः ॥

सोऽयं देवदत्त इत्यत्रापि लक्षणागन्धो न विद्यते विरोधाभावात् । देशान्तरसम्बन्धितयाऽतीतस्य सन्निहितदेशसम्बन्धितया वर्तमानत्वाविरोधात् । अतएव हि सोऽयमिति प्रत्यभिज्ञया कालद्वयसम्बन्धिनो वस्तुन ऐक्यमुपपाद्यते वस्तुनः स्थिरत्ववादिभिः अन्यथा

## श्रुतप्रकाशिका

सापेक्षत्वात्तेनविना तत्र प्रवृत्त्ययोगाच्चात्यन्तोपयोगाद्विशेषणस्य विवक्षितत्वमित्यर्थः । उपपादकत्वमेव विपक्षे बाधकदर्शनेन द्रढयति अन्यथेति । अन्यथा विशेषणत्यागे उपलक्षणतया निमित्तत्वं स्यादित्यत्राह—विशेषणानामिति । अनादरः तात्पर्याभावः यथोपलक्षणभूतायां शाखाया न तात्पर्यम् अपितु चन्द्र एव तात्पर्ये तद्वदित्यर्थः, ननूपलक्षणान्तरवैयर्थ्यं तवापि प्रसजेत् एकस्मिन्नुपलक्ष्ये जन्माद्यनेकोपलक्षणाभ्युपगमादित्यत्राह–उपलक्षणान्तरेति । अस्माभिस्तु जन्मादिभिरुपलक्षणैरुपलक्ष्यास्तदनुगुणज्ञानशक्त्याद्याकारभेदाः स्वीकृता इति नैनैरर्थक्यमितिभावः तेनाकारेणेति । अन्ततोगत्वाऽप्यवर्जनीयं सविशेषत्वम् । एवं च सत्युपलक्ष्याकारान्तराभ्युपगमेन तस्योपलक्षणत्वाङ्गीकारादप्युपलक्षणतयाऽभिमतानामेव विशेषणत्वाङ्गीकारोवरमिति भावः ॥

पूर्वं लक्षणाङ्गीकारपक्षेऽन्यतरपदामुख्यत्वादिदूषणान्युक्तानि । यत्तु वाच्ये प्रधानांशस्य प्रतिपादनाच्चलक्षणेति तत्रापि लक्षणा स्यादेव द्वारभूतप्रवृत्तिनिमित्ताभावेन तद्द्वारकस्याभिधानस्यानुपपत्तेरिति । इदं च दूषणं प्रवृत्तौ निमित्ताभावादिति भाष्येण फलितम् । अथोभयपदविशेषणाविवक्षायामपि सामानाधिकरण्य सोऽयं देवदत्त इत्यादिषु दृश्यत इति यदुक्तं तत्प्रतिवक्ति सोऽयमित्यादिना । विरोधाभावात् मुख्यार्थभूतविशेषणद्वयसम्बन्धे विरोधाभावात्, प्रथमं कालद्वयसम्बन्धाविरोधाभावमुपपादयति देशान्तरेति । वस्तुविशेषणतया निर्दिष्टावपि देशान्तरसम्बन्धसन्निहितदेशसम्बन्धावतीतवर्तमानकालोपाधितया विवक्षितौ, इद च कालोपाध्यन्तराणामुपलणक्षम् । अतीतवर्तमानशब्दावतीतवर्तमानकालसम्बन्धिपरौ देशान्तरसम्बन्धितयाऽतीतस्य देशान्तरसम्बन्धाद्युपाध्यवच्छिन्नातीतकालसंबन्धिनः सन्निहितदेशसम्बन्धाद्युपाधिमद्वर्तमानकालसम्बन्धाविरोधादित्यर्थः । अतीतत्वं चान्यापेक्षया विवक्षितम् । नतूभयकालानुगतवस्त्वपेक्षया ॥

एतदुक्तंभवति एकस्य कालद्वयासम्बन्धं वदतोऽतीतत्ववर्तमानत्वविरोधो विवक्षितः । स किं प्रध्वस्तस्य वर्तमानत्वविरोधो विवक्षितः सनास्ति प्रध्वसानभ्युपगमात् । यद्यतीतोपाधिमत्कालसम्बन्धिनो वर्तमानत्वविरोध उच्यते तन्निरूप्यं किं स्वापेक्षयाऽतीतोपाधिमत्कालसम्बन्धित्वम् उतान्यापेक्षयाऽतीतोपाधिमत्कालसम्बन्धित्वम् ? नप्रथमः स्वापेक्षयाऽतीतोपाधिमत्कालसम्बन्धित्वाभावाद्व्यादेः । नद्वितीयः एकक्षणसम्बन्धस्यापि विरोधप्रसङ्गात् । एकस्य वस्तुनः एकोऽपिहिक्षणः स्वपाश्चात्ययात्किञ्चिदुपाध्यपेक्षयाऽतीतो भवति । अतोऽन्यापेक्षयाऽतीतोपाधिमत्कालसम्बन्धिनो वर्तमानत्वमविरुद्धम् । एवमेकस्य स्वप्रागभावस्वध्वंसोपहितकालसम्बन्धस्यैव विरुद्धत्वादन्यापेक्षयाऽतीतागाम्युपाधिमत्कालसम्बन्धे तदभावाच्च । स्वाभावानुपहितकालद्वयसम्बन्ध एकस्य वस्तुन उपपन्नइति ॥

युक्त्यन्तर चाह–अतएवेति । अतएव कालद्वयसम्बन्धाविरोधादेव । उपपाद्यते सौगतान् प्रतीतिशेषः सौगतमतनिरासकस्य कालद्वयसम्बन्धाविरोधाभ्युपगमो विरुद्धइत्यर्थः । तदेवोपपादयति अन्यथेति । अन्यथा कालद्वयसम्बन्ध-

## श्रीभाष्यम्

प्रतीतिविरोधे सति सर्वेषां क्षणिकत्वमेव स्यात्। देशद्वयसम्बन्धविरोधस्तु कालभेदेन परिह्रियते । यतस्समानाधिकरणपदानामनेकविशेषणविशिष्टैकार्थवाचित्वम् अतएव— 'अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति' (यजु.६.१.६] इत्यारुण्यादिविशिष्टैकहायन्या क्रयस्साध्यतया विधीयते। 'अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमस्स्या'दिति । तत्रैवं पूर्व-

## श्रुतप्रकाशिका

विरोधेन प्रतीतिविरोधे वस्तुस्थिरत्वविषयप्रतीतिविरोधे। सर्वेषां क्षणिकत्वमेव स्यादिति । एकस्य देशद्वयकालद्वयान्वयविरोधे देशकालान्तरसाध्यफलसाधनविधानमात्मनित्यत्वोपदेशश्चाप्रमाणं स्यादित्यभिप्रायः। देशद्वयसम्बन्धविरोधं परिहरति देशद्वयेति । परिच्छिन्नस्य वस्तुनः स्थानपरिच्छिन्नदेशसम्बन्धो यौगपद्य एव विरुध्यते नतु क्रमभाविन्व इत्यर्थः । एवं लोकसिद्धस्य नीलोत्पलादिसमानाधिकरणपदप्रयोगस्य विशेषणविवक्षा स्थापिता। एवं प्रवृत्तिनिमित्तभेदेनैकार्थपर्यवसायित्वं समानाधिकरणपदानां वैदिकप्रयोगसिद्धमित्याह—यतइति । अनेन वस्तुमात्रपरत्वे अरुणाधिकरणसिद्धान्तन्याय विरोधश्चोक्तस्स्यात्। यतः अतएवेति लौकिकप्रयोगसिद्धत्वकारोक्तया पूर्वोक्तस्वपक्षपरपक्षसाधनदूषणान्यरुणाधिकरणनिवन्धिनानीति भावः ॥

'अरुणयैकहायन्या' इत्यादिवाक्ये पदानां न सामानाधिकरण्यमित्यत्राह—तदुक्तमिति । 'अर्थैकत्व' इत्यादिसूत्रस्यान्यथा व्याख्यातत्वात्र सामानाधिकरण्यपरत्वमित्यत्राह—तत्रैवमिति । एवमिति । असदुक्तावेव पूर्वपक्ष सिद्धान्तौ सूत्रकाराभिप्रेताविति भावः। किमत्रारुणयेति पदोक्तमारुण्यमेकहायनीमात्रान्वयि ? उत प्राकरणिकसर्वद्रव्यान्वयीति प्रथमविचारः। तत्रारुणयेतिवद् किमेकहायन्येत्यादिपदैरेकवाक्यतयाऽन्वेति उत भिन्नवाक्यतया स्थितमिति तदर्थ विचारः। इदं विचारद्वयं पूर्वमीमांसाव्याख्यातृभिरभ्युपेतम्। अधिकस्तदर्थविचार उच्यते किमरुणयेत्यादिपदानि व्यधिकरणानि उत समानाधिकरणानीति ? पुनस्तदर्थविचारः कारकविभक्त्यन्तत्वं किं सामानाधिकरण्यविरोधि ? उताविरोधीति ; विरोधीति पूर्वपक्षः अविरोधीति सिद्धान्तः। यदा विरोधि तदा सामानाधिकरण्याभावेनैकवाक्यत्वाभावात्प्राकरणिकसर्वद्रव्यान्वयीति पूर्वपक्षे फलफलिभावः अविरोधे सामानाधिकरण्येन वाक्यभेदाभावादेकहायन्यन्वयनियम इति सिद्धान्ते फलफलिभावः ॥

## गूढार्थसंग्रहः

क्षणिकत्वमेव स्यादिति । एतेन पञ्चपादिकाविवरणपर्यालोचनं सूचितम्। प्रत्यभिज्ञाया धर्मभासकसामग्रीसत्त्वेन धर्मभानवत् महावाक्येष्वपि धर्मभासकपदसत्त्वे धर्मभानं नष्टत इति भावः॥

जिज्ञासाऽधिकरणे आकृत्यधिकरणार्थवर्णनेन तन्न्यायेन महावाक्यानामर्थ उक्तः। 'प्रयोगचोदनाभावादर्थैकत्वमविभागात्' इत्याकृत्यधिकरणसूत्रम्। अधिकरणसूत्राणामर्थः पूर्वमेव(९१९..जि.अ) निरूपितः। 'अविरुद्धविशेषणद्वयमभवत्वेऽपि' इति संक्षेपशारीरकोक्तार्थः अरुणाधिकरणे जैमिनिनैव निरस्त इत्यभिप्रेत्य तत्सूत्रार्थमेव दर्शयति—अतएवेत्यादिना। अरुणयैकहायन्या इत्यादि। अरुणाधिकरणसरणिविवरिण्या तत्त्वमार्ताण्डादिबहुग्रन्थकृद्भिः श्रीनिवासाचार्यैः, वादनक्षत्रमालायां अप्पय्यदीक्षितेन, भाट्टकौस्तुभे खण्डदेवेन च उक्तार्थपर्यालोचनपूर्वकं एतदधिकरणार्थः सम्यक्प्रतिष्ठापितः तत्रैव द्रष्टव्यः॥ एतेन विशेष्यविशेषणभावे सामानाधिकरण्यं गौणम् अखण्डार्थसामानाधिकरण्यमेव

## श्रीभाष्यम्

**पक्षी मन्यते यद्यप्यरुणयेति पदमाकृतेरिव गुणस्यापि द्रव्यप्रकारतैकस्वभावत्वाद्द्रव्यप-र्यन्तमेवारुणिमानमभिदधाति तथाऽप्येकहायन्यन्वयनियमोऽरुणिम्नो न सम्भवति 'एक हायन्या क्रीणाति तच्चारुणये' त्यर्थद्वयविधानासम्भवात्। ततश्चारुणयेति वाक्यं भित्वा प्रकरणविहितसर्वद्रव्यपर्यन्तमेवारुणिमानमविशेषेणाभिदधाति।**

## श्रुतप्रकाशिका

अस्माकन्तु पूर्वपक्षे सिद्धान्तेचारुणयेति पदस्य द्रव्यपर्यन्तत्वमनुयायि परेषान्तु गुणमात्रपर्यन्तत्वमुभयत्रानुयायि। आकृत्यधिकरणे गुणवाचिशुक्लादिपदाना जातिवाचिगवादिशब्दवद्द्रव्यपर्यन्तत्व निर्णीतम्। 'आक्षिप्तद्रव्ये गुणजाती' इतिहि टीकाकारः। तत्रचात्र च कोविशेष इतिचेत्? एकैकप्रातिपदिकार्थनिरूपणमाकृत्याधिकरणे अत्रत्वनेकप्रातिपदिकस्य समानविभक्त्यर्थनिरूपणमिति भेदः। ननु गुणवाचिपदस्य द्रव्यपर्यन्तत्वे एतदधिकरणपूर्वपक्षोत्थान न स्यात् गुणमात्र-पर्यन्तत्वेहि गुणस्य कारणतया निर्दिष्टस्य क्रयान्वयस्य द्रव्यान्वयस्य चैकवाक्येन बोधयितुमशक्यत्वेन वाक्यभेदात्प्राकर-णिकसर्वद्रव्यान्वयीति पूर्वपक्षोत्थान स्यात्। द्रव्यपर्यन्तत्वेत्वेकहायनीपदसामानाधिकरण्येन विशिष्टकरणैकत्वात्तस्य क्रयान्वय मात्रस्य एकवाक्येन बोधयितु शक्यत्वेन वाक्यभेदाभावादेकहायनीमात्रान्वयीति वाक्यभेदायत्तपूर्वपक्षानुदय इत्याश-ङ्क्याह—**यद्यपीति**। आकृतेरिव गुणस्यापि द्रव्यप्रकारतैकस्वभावत्वात्तद्वाचिशब्दो यद्यपि द्रव्यमात्रपर्यन्तः तथाऽप्येक हायनीत्वाश्रयद्रव्यविशेषपर्यन्तत्व न सिद्ध्यतीत्यर्थः। कुतइत्यत्राह—**एकहायन्या क्रीणाति तच्चारुणयेत्यर्थद्वयविधानास-म्भवादिति**॥

**नच** वाच्यमरुणयेति पदं क्रीणातीत्यत्र नान्वेति द्रव्यविशेषाकाङ्क्षायां सविशेष. स्ववाक्यस्थैकहायनीपदोपस्थापित द्रव्य भवतीति क्रयस्यैकहायन्यवरुद्धतयाऽरुणापदविभागे साकाङ्क्षत्वाभावादाकाङ्क्षोत्थापकचशब्दद्वन्द्वाद्यभावाच्च। अत आरुण्यस्य क्रयान्वयद्वारा नैकहायन्यन्वयः स किं पदयोस्सामानाधिकरण्येन उत वैयधिकरण्येन स्ववाक्यस्थतया? न तावत्पदद्वयसा-मानाधिकरण्येनैकहायन्यन्वयनियम आरुण्यस्य संभवति कारकविभक्त्यन्तत्वप्रयुक्तानुपपत्त्या विशेषणविवक्षाऽनुपपत्त्या च सामानाधिकरण्यायोगात्। *तत्र यद्यपि विशेषणविवक्षाया विशेषणभेदेन विशेष्यभेदो जन्माद्यधिकरणन्यायेन परिहृतः।* विशेषणैक्यान्योन्यसमवायादयश्च पूर्वमेव परिहृताः, तथाऽपि कारकविभक्त्यन्तत्वप्रयुक्तानुपपत्तिः स्थिता कारकविभक्तिर्हि क्रियान्वयबोधोपक्षीणत्वात्र परस्परान्वयबोध जनयितुं शक्नोति। परस्परान्वयेहि विशेष्यैक्य एव विशेषणविवक्षाकारक-विभक्त्यन्तत्वप्रयुक्तानुपपत्तिभिर्न सामानाधिकरण्यम् अतोऽरुणयैकहायन्येति पदद्वय पृथक्करणवाचीत्येतावत्सिद्ध कृत्वा वैय धिकरण्येसति *स्ववाक्यस्थतया आरुण्यस्यैकहायन्यन्वयनियमेऽनुपपत्तिरुच्यते। एकहायन्या क्रीणाति इति वाक्येन एक* हायन्याः क्रयस्य च सबन्धःप्रतिपन्नः। तच्च क्रयणमरुणया कर्तव्यमिति वाक्येनैकहायनीसाध्यत्वविशिष्टरूपेण क्रयणमरुण द्रव्यसाध्यमिति प्रतिपन्न तत्पदश्चैकहायनीसाध्यत्वविशिष्टक्रययोपस्थापकम्। तत्र द्रव्यांशस्य तत्साध्यक्रयणस्य च पूर्वप्र-तिपन्नत्वेन अनूदितत्वादेकहायनीद्रव्यस्यारुणिमसम्बन्धएव विधेयः। एवञ्चैकहायन्या क्रयस्साध्यः तयाचारुणया भवि-*तव्यमित्युक्त भवति। ततश्चैकहायन्याः क्रयसम्बन्धोऽरुणिमसम्बन्धश्चेत्यर्थद्वयस्यैकवाक्येन विधानासम्भवादित्यर्थः। ततः* किमित्यत्राह—**ततश्चेति**। वाक्यभेदेसति स्ववाक्यस्य चाभावादवान्तरप्रकरणेन वा महाप्रकरणेन वा द्रव्यविशेषनिश्चये वासो यजमानादि सर्वद्रव्याणां प्रकरणान्वयाविशेषात् क्रीणातीति वाक्यं भित्वाऽरुणयेतिपदं प्राकरणिकसर्वद्रव्यपर्यन्तं स्वार्थमरुणि

## श्रीभाष्यम्

अरुणयेति स्त्रीलिङ्गनिर्देशः प्रकरणविहितसर्वलिङ्गकद्रव्याणां प्रदर्शनार्थः। तस्मादेकहायन्यन्वयनियमोरुणिम्नो न स्यादिति ॥

अत्राभिधीयते—(अर्थैकत्वेद्रव्यगुणयोरैककर्म्यान्नियमस्स्यात्) 'अरुणयैकहायन्या' इत्यारुण्यविशिष्टद्रव्यैकहानीद्रव्यवाचिपदयोस्सामानाधिकरण्येनार्थैकत्वे सिद्धे सत्येकहायनीद्रव्यगुणयोररुणयेतिपदेनैव विशेषणविशेष्यभावेन सम्बन्धितयाऽभिहितयोः क्रयार्थैककर्मान्वयाविरोधादरुणिम्नः क्रयसाधनभूतैकहायन्यन्वयनियमस्स्यात्। यद्येकहायन्याः क्रयसम्बन्धवदरुणिमसम्बन्धोऽपि वाक्यावसेयस्स्यात् तदा वाक्यस्यार्थद्वयविधानं स्यात्। नचैतदस्ति। अरुणयेति पदेनैवारुणिमविशिष्टद्रव्यमभिहितम्। एकहायनीपदसामानाधिकरण्येन तस्यैकहायनीत्वमात्रमवगम्यते न गुणसम्बन्धः

## श्रुतप्रकाशिका

मानमभिदधानीत्यर्थः। अरुणयेति स्त्रीलिङ्गनिर्देशः कथमित्यत्राह—अरुणयेति। पूर्वपक्षमुपसंहरति तस्मादिति ॥

अत्राभिधीयतइति। अस्मिन्पूर्वपक्षे प्राप्ते सूत्रकारः स्वसिद्धान्तमाहेत्यर्थः। सूत्रमुपादत्ते अर्थैकत्वइति। सूत्रस्याक्षरार्थमाह—अरुणयेत्यादिना। कयोरर्थैकत्व इत्याकाङ्क्षाया शब्दस्यार्थप्रतिसंबन्धित्वात्पदविशेषयोस्सन्निहितविषयवाक्यस्थत्वचारुण्यविशिष्टद्रव्यैकहायनीद्रव्यपदयोरित्यध्याहृतम्। पदद्वयसन्निधिज्ञापनार्थं अरुणयैकहायन्येतीत्युक्तम्। आरुण्यविशिष्टमेकहायनीत्वविशिष्टं च द्रव्यम् तद्वाचिपदयोस्सामानाधिकरण्येन तत्तद्विशेषणद्वारैकविशेष्यवृत्तित्वादर्थैकत्वसिद्ध इत्यर्थः। द्रव्यगुणयोरैककर्म्यादित्येतद्व्याचष्टे एकहायनीद्रव्यारुण्यगुणयोरित्यादिना। गुणान्वयस्य क्रयान्वयस्यच वाक्यबोध्यत्वे वाक्यभेदप्रसङ्गो विरोध उक्तः, गुणान्वयस्य प्रातिपदिकासिद्धत्वान्न वाक्यबोध्यत्व नार्थसिद्धत्व च अतः क्रयान्वयबोधनमेव वाक्यकृत्यमित्यभिप्रायेणारुणयेति पदेनैवेत्युक्तम्। क्रयार्थैककर्मान्वयाविरोधादिति। वाक्यभेदप्रसङ्गरूपविरोधाभावादित्यर्थः। नियमस्स्यादित्येतद्व्याचष्टे अरुणिम्नइत्यादि। सर्वद्रव्यसाधारणप्रकरणानपेक्षत्वाद्वाक्यस्यतयैव नियमसिद्धइत्यर्थः। अत्र गुणद्रव्ययोर्विशेषणविशेष्यभावः प्रातिपदिकावसेयः विशेष्यैक्य सामानाधिकरण्यावसेय क्रयान्वयो वाक्यावसेय इति वाक्यस्य क्रयान्वयबोधनमेव कृत्य तस्मादेकस्मिन्वाक्येऽर्थद्वयविधानप्रसङ्गाभावाद्वाक्यभेदाभावेन आरुण्य न प्राकरणिकसर्वद्रव्यान्वयि अपित्वेकहायनीमात्रान्वयीति सूत्रार्थः ॥

वैयधिकरण्येन पदयोरर्थभेद इति पूर्वपक्षे प्राप्ते अर्थैकत्व इत्युक्तम्। द्रव्यगुणयोः क्रयान्वये द्वारद्वारिभावेनविना तदयोगाद्द्वारान्वयद्वार्यन्वयरूपार्थयोर्भिन्नत्वाद्वाक्यभेदप्रसङ्गरूपविरोधप्रसङ्गादिति शङ्कायामैककर्म्यादित्युक्तम् एकहायन्यन्वयानियम इति पूर्वपक्षे नियमस्स्यात् इत्युक्तमिति। अत्र गुणसम्बन्धः प्रातिपदिकावसेयोस्तु ततःकिं? वाक्यभेदायत्ता नियमपरिहारस्येतिशङ्काया सूत्राक्षरयोजनाया सग्रहेणोक्तमर्थं विवृणोति यदीत्यादिना। किमारुण्यस्य द्रव्यमात्रान्वये वा द्रव्यविशेषान्वये वा वाक्यबोध्ये तद्भेद उच्यत इति विकल्पे द्रव्यमात्रान्वयस्य प्रातिपदिकावसेयत्वमाह— अरुणयेति। यदि गुणगुणिसम्बन्धः प्रातिपदिकावसेयः तर्हि सामानाधिकरण्यस्य किंकृत्यमित्यपेक्षा शमयन् द्वितीय शिरःप्रतिवक्ति— एकहायनीपदेति। तस्यैकहायनीत्वमात्रं अरुणिमविशिष्टद्रव्यस्यैकहायनीत्वाश्रयत्वम् विशेष्यैक्यमित्यर्थः। अनेन आकृत्यधिकरणारुणाधिकरणयोः प्रतिपाद्यभेदश्चोक्तो भवति। प्रातिपदिकस्य धर्मिपर्यन्तत्वमाकृत्यधिकरणार्थः अनेकप्रातिपदिकस्य समानविभक्तेर्विशेष्यैक्यपरत्वप्रतिपादकमरुणाधिकरणमिति ॥

## श्रीभाष्यम्

विशिष्टद्रव्यैक्यमेव हि सामानाधिकरण्यस्यार्थः ; 'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्यम्' (पू.मी.३.१.१२) इति हि सामानाधिकरण्यलक्षणम् ॥

अत एवहि 'रक्तःपटो भवति' इत्यादिष्वैकार्थ्यादेकवाक्यत्वम्। पटस्य भवनक्रियासम्बन्धे हि वाक्यव्यापारः ; रागपदस्तु रक्तसम्बन्धेनैवाभिहितः। रागसम्बन्धिद्रव्यं पट इत्येतावन्मात्रं सामनाधिकरण्यावसेयम्। एवमेकेन गुणेनद्वाभ्यां बहुभिर्वा तेनतेन पदेन समस्तेन व्यस्तेन वा विशिष्टमुपस्थाप्य सामानाधिकरण्येन सर्वविशेषणविशिष्टोऽर्थ एक इति ज्ञापयित्वा तस्य क्रियासम्बन्धाभिधानमविरुद्धम्। देवदत्तश्श्यामोयुवा लोहिताक्षो दण्डी कुण्डली तिष्ठति। शुक्लेन वाससा यवनिकां सम्पादयेत्, नीलमुत्पलमानय नीलोत्पलमानय ; गामानय शुक्लां शोभनक्षीम्, अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्'

## श्रुतप्रकाशिका

कथं गुणसम्बन्धो न सामानाधिकरण्यावसेय इत्यत्राह–विशिष्टद्रव्यैक्यमेवहि सामानाधिकरण्यस्यार्थइति। विशिष्टैक्यमित्युक्ते विशेषणांशस्यैक्यं माभूदिति विशिष्टद्रव्यैक्यमित्युक्तम्। द्रव्यशब्देन विशेष्यांशो विवक्षितः। एतदुपपादकत्वेन सामानाधिकरण्यलक्षणग्रन्थमाह—भिन्नेति। नहि विशेषणविशेष्यवाचिनोः पदयोः विशेषणविशेष्यभावसम्बन्धे वृत्तिस्सामानाधिकरण्यमित्युक्तमित्यर्थः। एवं प्रातिपदिकेन गुणान्वयः समानविभक्त्या परस्परान्वयो वाक्येन क्रियान्वयश्च बोध्यत इति कृत्यत्रयमुक्तम् ॥

एतत्परैरभ्युपेतमित्याह–अतएवेति। किंच द्रव्यपर्यन्ताभिधानेऽप्येकहायनीपदेन वाक्यस्य निराकाङ्क्षत्वादरुणयेति पदं न तत्रान्वेतीति शङ्का च परिहृता भवति। अर्थवादाधिकरणे अर्थवादनैरपेक्ष्येण विधेरेव प्रवर्तकत्वाद्विधिवाक्येनार्थवादस्य नैकवाक्यत्वमिति शङ्कायां अर्थवादस्य श्रूयमाणत्वात्तत्रापि विधेराकाङ्क्षाऽस्तीति कल्प्यम्। तस्मादुत्थापिताकाङ्क्षो ह्यर्थवादो विधिनैकवाक्यतयाऽन्वित इति निश्चितः। तत्र तैरेवोक्तमुदाहरणमिदं रक्तः पटो भवतीति। तत्रहि पटो भवतीत्येतावता निराकाङ्क्षत्वेऽपि वाक्यस्य प्रयुक्तं रक्तपदं कीदृशः पट इत्युत्थापिताकाङ्क्षमन्वेति एवमत्राप्यरुणयेतिपदं श्रूयमाणमुत्थापिताकाङ्क्षत्वादेकवाक्यतयाऽन्वितमिति भावः। अतएव कृत्यत्रयस्यापि यथोक्तप्रकारत्वादेव। रक्तःपटोभवतीति वाक्ये यथोक्तप्रकारेण कृत्यत्रयं दर्शयति। पटस्येति ॥

रक्तःपट इत्यादिवाक्ये विशेषणस्यैकत्वादुत्थापिताकाङ्क्षामन्वेति बहूनि विशेषणानि समस्तपदोक्तानिचेदन्वितानि स्युः नतु व्यस्तपदोक्तानि। अत्रतु पदानि व्यस्तानि तत्र प्रथमान्तत्वात्सामानाधिकरण्यं अत्रतु पदानि कारकविभक्त्यन्तानि। तस्मादत्र सामानाधिकरण्यमिति शङ्कात्रयमभिप्रेत्याह–एवमेकेनेति। पदेन समस्तेन व्यस्तेनवेति। कारकविभक्त्यन्तेन प्रथमान्तेनवेतिचात्राभिप्रेतम्। तत्र प्रथमान्तबहुविशेषणान्वये उदाहरणमाह–देवदत्तइति। देवदत्तश्श्याम इत्यादिकमुदाहरतोऽयभावः रक्तःपट इति पदद्वयमचिद्वाचकं अरुणयेतिपदं चेतनवाचकमिति वैषम्यं यथा न प्रयोजकं तथा प्रथमान्तत्वकारकविभक्त्यन्तत्ववैषम्यमप्यप्रयोजकमिति। अन्तरङ्ग बहिरङ्गविशेषणे अप्येवमित्यभिप्रायेण दण्डीकुण्डली युक्तम्। कारकविभक्त्यन्तैकपदान्वयोदाहरणमाह–शुक्लेन वाससेति। कर्मकारकमुदाहरति नीलमुत्पलमिति। समस्तोदाहरणमाह–नीलोत्पलमिति। कारकविभक्त्यन्तानेकपदान्वयोदाहरणमाह—गामिति। संप्रदानकारकविषयं वैदिकंचोदाहरणमाह–अग्नयइति।

## श्रीभाष्यम्

(यजुपि.२ २) इति । एवं 'अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति'(यजुपि.६.१.६) इति
एतदुक्तंभवति-यथा 'काष्ठैस्स्थाल्यामोदनं पचेत्' इत्यनेककारकाविशिष्टैका क्रिया युगपत्प्रतीयते ; तथा समानाधिकरणपदसङ्घाताभिहितमेकैकं कारकं तत्तत्कारकप्रतिपत्ति वेलायामेवानेकविशेषणविशिष्टं युगपत्प्रतिपन्नं क्रियायामन्वेतीति नकश्चिद्विरोधः। खादिरैः शुष्कैःकाष्ठैस्समपरिमाणे भाण्डे पायसं शाल्योदनं समर्थःपाचक पचेत् इत्यादिपु इति ।

## श्रुतप्रकाशिका

पुरोडाशमष्टाकपालमिति कर्मकारकमपि सिद्धम् । एव 'अरुण'येत्यादिवाक्येऽपि तुल्यमित्याह-एवमिति ॥

ननु कारकविभक्तेः क्रियान्वयबोधोपक्षीणत्वान्नपरस्परान्वयबोधकत्व ? उच्यते—कारकविभक्तिः क्रियान्वयबोधिका स्यात् किमत्रायोगव्यवच्छेद एव उतान्ययोगस्य व्यवच्छेदश्च ? अयोगव्यवच्छेदमात्र न विरुद्धम् । अन्ययोगव्यवच्छेदश्चेत्तर्हि क्रियान्वयबोधोपक्षीणा कारकविभक्तिः 'पशुना यजेत' इत्यादिपु सङ्ख्यान्वयमपि नबोधयेत् कारकविभक्तित्वाकारात् क्रियान्वयबोधन एकवचनत्वाद्विवचनत्वाकारा सङ्ख्यान्वयबोधनमित्याकारभेदादविरोध इतिचेत् समानविभक्तित्वाकारविशेषेण तद्वत्परस्परान्वयमपि बोधयेत् । नत्वेकपदस्था कारकविभक्तिर्युगपत्सङ्ख्यान्वय च बोधयतीति तुल्यबन्त्वा चान्योन्यासहत्व परस्परान्वयस्तु पदान्तरपरामर्शसापेक्ष इति विलम्बितत्वात्स बाधितइतिचेत् किं विलम्बितत्वाविलम्बित व-मात्रमेव प्राबल्यदौर्बल्यहेतुः तर्हि प्रत्यक्षमेकमेव प्रमाणमन्यद्दुर्बल स्यात् तत्सापेक्षत्वेन विलम्बितत्वात् तस्माद्विजयीलौकायतिकः । किंच श्रुतिरेव न स्मृतिः विलम्बात् श्रुतिलिङ्गादिष्वपि श्रुतिरेव प्रमाण न लिङ्गादि विलम्बादेव प्रथमाविभक्त्यन्तेपु चैकपदस्यैकवचनादिना प्रागेव सङ्ख्यान्वयप्रतीते. पदान्तरस्थसमानविभक्तिपरामर्शसापेक्षसामानाधिकरण्यासिद्धिस्स्यात् । इहापि द्रव्यगुणयो॰ पराभिमत आर्थ॰ परस्परान्वयो नसिद्धयेत् शब्दतः प्रथमावगतक्रियान्वयापेक्षया तस्य आर्थत्वेन चरमावगतत्वाभ्युपगमात् । नैव विरोधस्सतिहि विलम्बिताविलम्बितयोर्बाध्यबाधकभावइतिचेत् । तर्ह्यत्रापि क्रियान्वयसङ्ख्यान्वयवत् परस्परान्वयस्यापि विरोधाभावात् विलम्बाविलम्बावकिञ्चित्करौ अत्राविरोध॰ परैरभ्युपेतः पश्चादार्थान्वयस्सिद्धयतीति सिद्धान्तोक्तेः न केवलमविरोधमात्रात्परस्परान्वयसिद्धिः प्रयोगस्य नियामकत्वात् कारकविभक्त्यन्तपदाना सङ्ख्यान्वयेन सहक्रियान्वयबोधनेहि प्रयोगो दृश्यत इतिचेत् तथा परस्परान्वयबोधनमपि प्रयोगसिद्धमिति परमयुक्त्यभिप्रायेण प्रथमान्तकारकविभक्त्यन्तबहूदाहरणमुदाहृत देवदत्तश्श्याम इत्यादिकम् । यथैकवचनादीनामेकत्वादिसङ्ख्यान्वयबोधकत्व प्रथमान्तेपु कारकविभक्त्यन्तेपु चाविशिष्टमङ्गीक्रियत उभयत्राविशेषेण प्रयोगदर्शनात् समानविभक्तेरप्यविरुद्धार्थैक्यबोधकत्वमुभयत्राविशेषेण प्रयोगदर्शनादङ्गीकरणीयमित्यर्थः । एव कारकविभक्तिप्रयुक्ताऽनुपपत्ति॰ परिहृता तथा विशेषणविवक्षाया यदनुपपत्तित्रयम् । तत्र विशेषणभेद विशेष्यभेदो जन्माद्यधिकरणन्यायेन परिहृतइति नात्र विवक्षितः विशेषणैक्यपरिहारः प्रागुक्तोऽत्रानुसन्धेयः । अथान्योन्यसमवायः परिहर्तव्यः विशिष्टत्वमुपस्थाप्य विशिष्टोऽर्थ एक इति ज्ञापयित्वेति ल्यबन्तत्वान्ततिर्देशेन कृत्यत्रयस्य क्रमभावित्व प्रतीयते ततश्चान्योन्यसमवायप्रसङ्ग इति तदपनोद्यम् । करणकारकविभक्त्यन्तसामानाधिकरण्य वदतः सूत्रकारस्य तावन्मात्राभिप्रायत्वशङ्का च निवार्या । अतस्तदर्थमाह—एतदुक्तंभवतीति । 'पदजातं श्रुत सर्वं स्मारितानान्वितार्थकम्' इति न्यायेन युगपद्बोधनात्क्रमभावित्वाभावान्नविशेषणान्तरविशिष्टे विशेषणान्तरान्वयविधानेन विशेषणानामन्योन्यसमवायप्रसङ्ग इत्यर्थः । यौगपद्यकथनेन पूर्वं ल्यबन्तनिर्देशःकृत्यत्रयभेदनिर्वाहकपरामर्शक्रमप्रकटनार्थमित्युक्त भवति । तत्तत्कारकप्रतिपत्तिवेलायामित्यनेन इद सूत्र सर्व-

## श्रीभाष्यम्

यत्तूपात्तद्रव्यकवाक्यस्थगुणशब्दः केवलगुणाभिधायीत्यरुणयेति पदेन केवलगुणस्यैवाभिधानमिति ; तन्नोपपद्यते, लोकवेदयोर्द्रव्यवाचिपदसमानाधिकरणस्य गुणवाचिनः क्वचिदपि केवलगुणाभिधानादर्शनात् । उपात्तद्रव्यकवाक्यस्थं गुणपदं केवलगुणाभिधायीत्यप्यसङ्गतम् 'पटश्शुक्लः' इत्यादिपूपात्तद्रव्यकेऽपि गुणविशिष्टस्यैवाभिधानात् । पटस्य शुक्लः' इत्यत्र शौक्ल्यविशिष्टपटाप्रतिपत्तिरसमानविभक्तिनिर्देशकृता ; न पुनरुपात्तद्रव्य-

## श्रुतप्रकाशिका

कारकविभक्त्यन्तपदप्रदर्शनार्थमिति दर्शितम् । इत्यादिषु न कश्चिद्विरोध इत्यन्वयः विरोधोऽन्योन्यसमवायादिर्विवक्षितः युगपत्प्रतिपन्नमित्यनेन तत्र परिहारो विवक्षितः । यथा काष्ठैरित्यादिकं वदता समानाधिकरणपदविषयचोद्यपरिहाराः व्यधिकरणवाक्येऽपि समाना इति प्रतिबन्ध्यभिप्रेता ॥

अयमर्थः व्यधिकरणानि पदानि तत्तत्कारकविशिष्टां क्रियां किं युगपत्क्रमेण वा प्रतिपादयन्ति । यौगपद्ये उद्देश्योपादेयविभागाभावप्रसङ्गः । अनेककारकविशिष्टक्रियैकत्वे विशेष्यक्रियैक्यवद्विशेषणभूतकारकैक्यमपि स्यात् । क्रमेणचेत्कारकान्तरविशिष्टक्रियाया कारकान्तरान्वयविधानं स्यात् । तदा काष्ठस्थाल्यादेरन्योन्यसमवायप्रसङ्गेन काष्ठस्य स्थाल्यधिकरणं स्थाल्याः काष्ठमधिकरणं वा स्यात् । नतदस्ति विशेष्यभूतक्रियाया एवैकत्वं वाक्यप्रतिपाद्यं नतु विशिष्टस्य अतो न विशेषणभूतकारकैक्यप्रसङ्गः । सर्वकारकैः क्रियाया एव विशेष्यत्वेन नान्योन्यसमवायप्रसङ्ग इतिचेत् तथा समानविभक्तिर्विशेष्यांशमात्रैक्यपरत्वान्नविशेषणैक्यं प्रत्यक्षमूला व्युत्पत्तिरत्र नियामिका यथा पट इत्येकपदप्रयोगे तत्स्थमेकवचनं न विशेषणविशेष्यैक्यं प्रतिपादयति, किंतु विशेष्यैक्यमेव तत्र नियामिका व्युत्पत्तिः इहापि तद्वत् युगपत्सर्वैर्विशेषणैरेकस्यैवार्थस्य विशिष्टव्यत्वेन न विशेषणानामन्योन्यसमवायप्रसङ्गश्चेति, एवं सूत्रकाराभिप्रेतपूर्वपक्षराद्धान्तावभिहितौ ॥

अथ परोक्तपूर्वपक्षराद्धान्तयोरनुयायिनमर्थं तत्तदसाधारणार्थं च व्युदस्यति । यत्त्वित्यादिना । कृष्णो गच्छति 'श्वेतमालभेत' इत्यादिषु गुणवाचिपदाना गुणिपर्यन्तत्व तैरभ्युपेतमाकृत्यधिकरणनयात्, तत्रोपात्तद्रव्यकवाक्यस्थत्वं गुणवाचिपदानां गुणमात्रपर्यन्तत्वे प्रयोजकमभ्युपेतं पटस्य शुक्लइत्यादिषु तथादर्शनात् पटश्शुक्लइत्यादिषूपात्तद्रव्यकवाक्यस्थत्वेऽपि तदपवादकसामानाधिकरण्यात् गुणिपर्यन्ताभिधानमितिचाभ्युपेतम् । तत्र गुणमात्रपर्यन्तत्वे यत्प्रयोजकमुक्तं तदभ्युपगम्य प्रकृते गुणमात्रपर्यन्तत्व दूषयति तन्नोपपद्यत इति । कुतइत्यत्राह—लोकवेदयोरिति । कारकविभक्त्यन्तत्वस्य सामानाधिकरण्याविरोधित्वोपपादनमुपजीव्येद दूषितम् । गुणिपर्यन्तत्वापवादकमुपात्तद्रव्यकवाक्यस्थगुणवाचिपदस्थं यत् तस्यापवादरूपसामानाधिकरण्यस्य अरुणयेत्यादिवाक्ये विद्यमानत्वोपपादनात्केवलगुणाभिधायित्वमयुक्तमित्यर्थः, एवं परोक्तप्रयोजकाभ्युपगमेन तत्साध्यप्रयोज्यं गुणमात्रपर्यन्तत्व दूषितम् ॥

अथ तदुक्तं प्रयोजकं दूषयति उपात्तद्रव्यकेति । तत्र हेतुमाह—पटश्शुक्लइत्यादिष्विति । गुणमात्रपर्यन्तत्वे गुणिपर्यन्तत्वेऽपि साधारणमुपात्तद्रव्यकवाक्यस्थगुणवाचित्वं गुणमात्रपर्यन्ततायाः प्रयोजकं न भवतीत्यर्थः । ननु न तस्य प्रयोजकत्वहानिः अपवादेनहि क्वचिद्गुण्याभिधानमित्यत्राह—पटस्येति । असमानविभक्तिनिर्देशः प्रयोजकइत्यर्थः । असमानविभक्तिनिर्देशः असमानायाविभक्तेर्निर्देशः न समानविभक्तिनिर्देशाभावः श्वेतो यातीत्यादिष्वपि गुणमात्रपर्यन्तत्वप्रसङ्गात् । व्यभिचारिणः प्रयोजकत्वकल्पनं व्यभिचारस्थले तदपवादकल्पनं चायुक्तम् अव्यभिचारिप्रयोजकसद्भावादित्यभिप्रायः गुणमात्रपर्यन्तत्वे नेदमपि प्रयोजकमसाधारणं पटस्य शुक्लो भागइत्यसमानविभक्तिनिर्देशेऽपि गुणिपर्यन्तत्वादितिचे-

## श्रीभाष्यम्

करवक्रता। तत्रैव 'पटस्य शुक्लोभागः' इत्यादिषु समानविभक्तिनिर्देशे शौक्ल्यविशिष्टद्रव्यं प्रतीयते। यत्पुनः क्रयस्यैकहायन्यवरुद्धतयाऽरुणिम्नः क्रयान्वयो न सम्भवतीति; तदपि विरोधिगुणरहितद्रव्यवाचिपदसमानाधिकरणगुणपदस्य तदाश्रयगुणाभिधानेन क्रियापदान्वयाविरोधादसङ्गतम्। राद्धान्ते चोक्तन्यायेनारुणिमशब्दे द्रव्यान्वये सिद्धे द्रव्यगुणयोः क्रयसाधनत्वानुपपत्त्या अर्थात्परस्परान्वयस्सिद्ध्यतीत्यप्यसङ्गतम्। अतो यथोक्तएवार्थः॥

## श्रुतप्रकाशिका

तत्राह–तत्रैव पटस्येति। अयमर्थः पटशब्देनासमानविभक्तिनिर्देशेऽपि शुक्लशब्दस्य विशेष्यवाचिभागशब्देनासमानविभक्तिनिर्देशाभावात् तस्य गुणमात्रपर्यन्तत्वे प्रयोजकत्वभङ्गः। यथा त्वत्पक्षे गुणमात्रपरत्वापवादकाभिमतभागशब्दसामानाधिकरण्यात्तस्य धर्मिपर्यन्तत्वात्प्रयोजकत्वहानिरिति। किंच न केवलमुपात्तद्रव्यकवाक्यस्थताया व्यभिचार एव कल्पनागौरवमप्यस्ति, परमते श्वेतमालभेत इत्यादिषु गुणवाचिपदस्य गुणिपर्यन्तत्वमुक्तम्। पटस्य शुक्लइत्यादिषु तदपवादकत्वेनोपात्तद्रव्यकवाक्यस्थत्वमभ्युपेत तस्याप्यपवादकत्वेन पटश्शुक्ल इत्यादिषु सामानाधिकरण्यमुक्तमिति प्रयोजकत्रयकल्पनाऽस्ति अस्मत्पक्षेतु श्वेतमालभेत पटश्शुक्ल इत्यादिप्रयोगेष्वपृथक्सिद्धधर्मवाचित्वादेव गुणिपर्यन्तत्व सिद्ध पटस्य शुक्लइत्यत्र असमानविभक्तिनिर्देशकृत गुणपर्यन्तत्वमिति प्रयोजकद्वयमेवेति इदमर्थसिद्धमिति न कल्पनागौरव कण्ठोक्तम्। एव परस्य पूर्वपक्षसिद्धन्तानुगतमरुणयेतिपदस्य गुणमात्रपरत्व निरस्तम्॥

अथ पूर्वपक्षासाधारणार्थस्य स्वसिद्धान्तयुक्त्या परिहृतत्व वक्तुमाह–यत्पुनरिति। एकहायिन्यवरुद्धतया एकहायन्या निराकाङ्क्षत्वात्। विभागे साकाङ्क्षत्वे सत्येव ह्येकवाक्यत्वमिह तदभावान्नक्रयान्वयइत्यर्थः। तस्य परिहृतत्व दर्शयति तदपीति। नील शुक्लमित्यादिव्यावृत्त्यर्थे विरोधिगुणराहितशब्दप्रयोग., गुणपदस्यैव गुणिपर्यन्तत्वेन गुणविशिष्टैककरणमिति अरुणिम्नो द्रव्यद्वारा क्रयान्वयासम्भवोऽनुपपन्न इत्यर्थः। राद्धान्तासाधारणमर्थं दूषयति राद्धान्तेचेति।—'सम्भवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते।' इति न्यायेन वाक्यैकत्वे कथञ्चित्सम्भवति वाक्यभेदाश्रयणायोगात्। 'गुणे द्रव्यव्यपेक्षे च द्रव्ये च गुणकांक्षिणि।' इति न्यायेन द्रव्यगुणयोःपरस्परापेक्षत्वान्नष्टाश्वदग्धरथन्यायेनार्थादन्वयइति तद्राद्धान्तः, तदयुक्त शाब्दान्वयसिद्धेरित्यर्थः। स्वोक्ताधिकरणार्थमुपसहरति अतो यथोक्तएवार्थइति॥

किंच गुणे शुक्लादय.पुंसि इति गुणपर्यन्तत्वे पुल्लिङ्गताया.प्राप्तत्वादरुणयेति स्त्र्यन्तपदस्य गुणमात्रपर्यन्तत्वदुर्वचम्। किंच पूर्वपक्षश्चात्यन्ताभासः भिन्न वाक्यमितिहि पूर्व.पक्षः तथासत्यरुणयेतिपद नोपात्तद्रव्यकवाक्यस्थ भवति। उपात्तद्रव्यकवाक्यस्थत्वे सिद्धेहि गुणमात्रपर्यन्तत्वसिद्धिरिति। वाक्यभेदेऽपि अरुणयैकहायन्या इति प्रत्यासत्त्यतिशयादेकवाक्यतुल्यतयोपात्तद्रव्यकवाक्यस्थत्वमितिचेत् सन्निधिविशेषादेकवाक्यस्थत्वफलभूतगुणमात्रपर्यन्तत्वसिद्धिश्चेत् ततएवैकवाक्य(स्य)ताफलभूतैकहायन्यन्वयनियमोऽपि स्यादिति वाक्यभेदहेतुकस्य पूर्वपक्षस्यानुदयएवस्यादिति। राद्धान्तोऽपि दुस्थः एकहायन्या आरुण्येन च क्रयस्साध्यइत्येकक्रियायाः करणद्वयसाकाङ्क्षत्वकल्पकस्य चशब्दस्य द्वन्द्वसमासस्यचाश्रवणात्। अतइमौ पूर्वपक्षराद्धान्तावतिदुस्स्थतया सूत्रकाराभिमताविति वक्तुमयुक्तम्। अतोऽस्याधिकरणस्य यथोक्तावेव पूर्वपक्षराद्धान्तौ सूत्रकाराभिमतौ॥

## श्रीभाष्यम्

तस्मात्तत्त्वमस्यादिसामानाधिकरण्ये पदद्वयाभिहितविशेषणापरित्यागेनैवैक्यप्रतिपादनं वर्णनीयम् । तच्चानाद्यविद्योपहितानवधिकदुःखभागिनश्शुद्धयशुद्ध्युभयावस्थाच्चेतनादर्थान्तरभूतमशेषहेयप्रत्यनीकानवधिककल्याणैकतानं परमात्मानमनभ्युपगच्छतो न सम्भवति अभ्युपगच्छतोऽपि समाधिकरणपदानां यथाऽवस्थितविशेषणविशिष्टैक्यप्रतिपादनपरत्वाश्रयणे त्वम्पदप्रतिपन्नसकलदोषभागित्वं परस्य प्रसज्येतेति चेत् नैतदेवम् । त्वम्पदेनापि जीवान्तर्यामिणः परस्यैवाभिधानात् ॥ एतदुक्तं भवति सच्छब्दाभिहितं निरस्तनिखिलदोषगन्धं सत्यसङ्कल्पमिश्रानवधिकातिशयासङ्ख्येयकल्याणगुणगणं समस्तकारणभूतं परं ब्रह्म बहुस्यामिति सङ्कल्प्य

## श्रुतप्रकाशिका

एवमस्तु ततः किं प्रस्तुतसामानाधिकरण्यस्येत्यत्राह—तस्मादिति । तस्मात् सामानाधिकरण्यस्यानेकविशेषणविशिष्टैकार्थस्य लोकवेदसिद्धत्वात् ईदृश सामानाधिकरण्यं परपक्षे न संभवति पदद्वयावगतगुणहानादित्याह—तच्चेति । जीवब्रह्मभेदमनभ्युपगच्छतो न सभवतीति प्रतिज्ञाया उपपादनार्थमनाद्यविद्येत्यादिकमशेषहेयप्रत्यनीकेत्यादिकं च विशेषणमुभयत्र प्रवृत्तिनिमित्तफलतयोक्तम् । कर्मवश्यो निग्राह्योऽनुग्राह्यश्च जीवो निग्राहकोऽनुग्राहकश्च परमात्मा भवितुं नार्हतीत्येषां विशेषणानामभिप्रायः । मुक्तिदशायामैक्यशङ्काव्युदासार्थं शुद्ध्यशुद्ध्युभयावस्थादित्युक्तम् । नहि निग्रहदशाया निग्रहकर्तुर्नरपतेरन्यः पुरुषोऽनुग्रहदशायामनुग्राह्योयमनुग्रहकृता तेन नृपेणाभिन्नो भवतीति भावः । स्वेतरवैलक्षण्यं तृणादेरप्यस्तीति तद्व्यावृत्त्यर्थं उभयलिङ्गत्वेन वैधर्म्यमुक्तम् । अशेषहेयेत्यादिना निर्विशेषवादिन इत्येतावता पर्याप्तत्वेऽपि स्वपक्षमनभ्युपगच्छतो दूषणवचनं कुदृष्टिपक्षत्रयेऽपि दूषणसाम्यज्ञापनार्थं तच्छब्दावगतविशेषणाभ्युपगमवत् त्वंशब्दावगतविशेषणमभ्युपगन्तव्यं तथासति ब्रह्मणो दुःखित्वादिप्रसङ्ग इति शङ्कते—अभ्युपगच्छतोपीत्यादिना । परिहरति नैतदिति । कुत इत्यत्राह—त्वमिति । एवेति । त्वंपदप्रतिपन्नस्य जीवविलक्षणस्यैवेति भावः । जीववाचित्वेन व्युत्पन्नस्य पदस्य तदन्तर्यामिपरत्वं लाक्षणिकं तत्कथं परस्यैवाभिधानादित्युक्तमित्यत्राह—एतदुक्तमिति । द्वारद्वारिभावविपर्ययशङ्काव्युदासार्थोऽयमारम्भः । वेदव्युत्पत्तिसिद्धं सर्वशब्दाना परमात्मवाचित्वमभ्युपपादयति सच्छब्देत्यादिना । सामानाधिकरण्यबलात्तत्वंपदावगतविशेषास्स्वीकार्याः, ब्रह्मणो निर्दोषत्वमङ्गलाकरत्वादिश्रुत्यन्तरसिद्धं च अतस्तदविरोधायान्तर्यामिपरत्वं युक्तमिति तत्त्वंपदसामानाधिकरण्यमुख्यत्वनिर्दोषत्वश्रुत्यन्यथाऽनुपपत्त्यभिप्रायेण निरस्तनिखिलेत्यादिविशेषणमुक्तम् । सच्छब्दाभिहितमिति । कारणवस्तुवाचिसच्छब्दः कारणत्वानुगुणगुणान्वितवस्तुपर इति भावः । बहुस्यामिति । यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्र लिङ्वाच्येन ग्राहकेण परमापूर्वेण सन्निधिसमाम्नातेषु पदार्थेष्वविशेषेण स्वशेषतया गृहीतेषु तत्र प्रोक्षणावघातगोत्वादेः परमापूर्वं प्रतिशेषत्वं व्रीहिगवादिद्वारकं यागादेस्तु तच्छेषत्वमद्वारकं च

## गूढार्थसंग्रहः

मुख्यमिति पञ्चपादिकासंक्षेपशारीरकोक्तार्थः आकृत्यधिकरणारम्भणाधिकरणोक्तार्थनिष्कर्षेण अखण्डार्थसामानाधिकरण्यस्य परसम्मतस्य केनापि दार्शनिकेनानङ्गीकृततया प्रमाणविरुद्धतया च पूर्वमेवायोग्यस्योपपादनेन विशेष्यविशेषणभावे सामानाधिकरण्यस्यैव मुख्यत्वं स्थापितं भवति । अतः उपनिषद्यपि सद्वार्थो मुख्य इत्याह—तस्मात्तत्त्वमसि इत्यादिना—सामानाधिकरण्यं मुख्यमेवेत्यन्तेन ॥

## श्रीभाष्यम्

तेजोऽबन्नप्रमुखं कृत्स्नं जगत्सृष्ट्वा तस्मिन् देवादिविचित्रसंस्थानसंस्थिते जगति चेतनं जीववर्गं स्वकर्मानुगुणेषु शरीरेष्वात्मतया प्रवेश्य स्वयं च स्वेच्छयैव जीवान्तरात्मतया ऽनुप्रविश्य एवम्भूतेषु स्वपर्यन्तेषु देवाद्याकारेषु सङ्घातेषु नामरूपे व्याकरोत्। एवंरूप-सङ्घातस्यैव वस्तुत्वं शब्दवाच्यत्वं चाकरोदित्यर्थः। अनेन जीवेनात्मना जीवेन मयेति निर्देशो जीवस्य ब्रह्मात्मकत्वं दर्शयति। ब्रह्मात्मकत्वं च जीवस्य जीवान्तरात्मतया ब्रह्मणो ऽनुप्रवेशादित्यवगम्यते 'इदꣳसर्वमसृजत यदिदं किञ्च तत्सृष्ट्वा तदेवानुप्राविशत् तदनु

## श्रुतप्रकाशिका

र्निश्चीयते तथा 'बहुस्याम्' इति ग्राहकग्रहणेन तेजःप्रभृतिसर्वनामरूपेषु सामान्येन परमात्मीयतयाऽवगतेषु तत्रानुप्रवेशपूर्वकनामरूपव्याकरणश्रुत्यादिभिस्सद्वारकम(ध्य)वसीयत इत्यनुसन्धेयम्। यथोपबृंहणेषु—'गुणवान्' 'तमेवं गुणसम्पन्नम्' इत्यविशेषोक्तेषु भगवद्गुणेषु 'समस्समविभक्ताङ्गः स्निग्धवर्णः' इत्युक्तानां स्निग्धवर्णत्वादीनां 'धर्मज्ञ स्सत्यसन्धश्च' इत्युक्तानां सत्यसन्धत्वादीनां च गुणानां दिव्यविग्रहद्वारकत्वमद्वारकत्वं च दृश्यते, तथेहापीश्वरशरीरभूतचिद्वारकोऽद्वारकश्च गुणान्वयो यथाश्रुतिस्वीकार्य इतिभावः। बहुस्यामिति। बहुनामरूपभाग्भवेयमित्यर्थः॥

तेजोऽबन्नप्रमुखमिति। प्रमुखशब्देन तत्त्वान्तरसृष्टिर्विवक्षिता। देवादिविचित्रसंस्थानसंस्थित इति च वक्ष्यमाण चिदचिदंशविभागार्थं जगदाकारकथनं नतु जीवानुप्रवेशपूर्वावस्थाकथनं, परमात्मन एव कृत्स्नजगच्छरीरित्वे कथं जीवात्मनश्शरीरित्वमिति शङ्काऽपनोद्यते चेतनमिति शब्देन चेतनत्वं शरीरित्वे प्रयोजकमित्यर्थः। चेतनमित्यनेन 'विज्ञानं चाविज्ञानं च' इत्यत्र विज्ञानशब्दस्य ज्ञातृवाचित्वं दर्शितम्। जीववर्गशब्देन 'विज्ञानम्', 'जीवेन' इतिचैकवचनं 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' इत्यादिभिरैकार्थ्याज्जाताविति व्याख्यातं भवति। 'अनेन जीवेन' इत्यत्रानेनेति निर्देशस्याभिप्रायविवरणं स्वकर्मानुगुणेष्विति जीवविशिष्टपरमात्मविशेषणेदंशब्दस्य जीवद्वारकवैचित्र्यस्य च कर्मवैचित्र्याधीनत्वात्। जीवकर्तृकप्रवेशव्यावृत्त्यर्थं स्वेच्छयैवेत्युक्तम्, पारतन्त्र्य स्वातन्त्र्ये च अनुप्रवेशहेतुवैषम्यमित्यर्थः। एवम्भूतेषु द्वारद्वारिभावेन व्यवस्थितेषु चिदचिदात्मकेष्वित्यर्थः स्वपर्यन्तेषु देवाद्याकारेषु सङ्घातेषु तत्तद्देवादयस्स्वात्तसङ्घातशब्दाश्चाकरोदित्यर्थः। 'नामरूपे व्याकरोत्' इत्युक्ते नामरूपव्याकरणस्य परमात्मपर्यन्तत्वस्यास्फुटत्वात्तद्विशदयति एवमिति। पूर्वं ल्यबन्तनिर्दिष्टानां क्रियाणां क्रमविवक्षाराहित्यं चानेन प्रदर्श्यते॥

एवंरूपसङ्घातस्य चिदचिदीश्वरात्मकस्य सङ्घातस्येत्यर्थः। एवं स्वरूपसङ्घातस्येति पाठेऽयमर्थः स्वरूपं च स्वरूपं तस्य सङ्घातः स्वशब्देन शरीरी ईश्वर उच्यते। रूपशब्देन चिदचिद्वस्तुनी शरीरिशरीरसङ्घातस्येत्यर्थः। वस्तुत्वं देवादिवस्तुत्वं, जीवेनात्मना इत्यत्र जीववैलक्षण्यस्यास्पष्टत्वादात्मशब्दस्यानेकार्थसाधारण्याच्च, तद्विशृण्वन् स्वपरपक्षसाधारणमन्यार्थं तावदाह—अनेनेति। मयेत्यात्मशब्दव्याख्यानं आत्मशब्दस्यासद्वाचित्वेऽसतीहि ब्रह्मात्मकत्वं दर्शितं भवति। स्वरूपैक्यशङ्कां व्युदस्यति ब्रह्मात्मकत्वंचेति। इदंसर्वमिति निर्दिष्टं चेतनाचेतनवस्तुद्वयमित्यत्र सर्वशब्दस्यासङ्कोचोऽभिप्रेतः 'तदनुप्रविश्य, सच्चत्यच्चाभवत्' 'विज्ञानंचाविज्ञानं च' इत्यनन्तरवाक्येन सर्वशब्दस्य स्वतः प्राप्तमसङ्कुचितत्वं स्थापितमित्याह—इदंसर्वमिति। 'अनुप्रविश्य नामरूपे व्याकरवाणि' इत्यत्र नामरूपव्याकरणस्यानुप्रवेशपूर्वकत्वं गम्यते 'तत्सृष्ट्वा तदेवानुप्राविशत्' इत्यनुप्रवेशस्य सृष्टिपूर्वकत्वं गम्यते तस्मादत्र पौर्वापर्यविवक्षा समानकर्तृकत्वमेवात्र विवक्षितम्। 'तस्य त्वष्टाविदधद्रूपमेति' इति वाक्ये सृष्ट्यनुप्रवेशयोस्समानकालीनत्वावगमात्।

## श्रीभाष्यम्

**प्रविश्य सच्चत्यच्चाभवत् ' (तै.आन.६.२) इत्यत्रेदंसर्वमिति निर्दिष्टं चेतनाचेतनवस्तुद्वयं सत्यच्छब्दाभ्यां विज्ञानाविज्ञानशब्दाभ्यां च विभज्य निर्दिश्य चिद्वस्तुन्यपि ब्रह्मणोऽनुप्रवेशाभिधानात्। अत एवं नामरूपव्याकरणात्सर्वे वाचकाश्शब्दा अचिज्जीवविशिष्टपरमात्मवाचिन इत्यवगतमिति ॥**

**किंच ' ऐतदात्म्यमिदं सर्वम् ' (छां.६.८.७) इति चेतनमिश्रं प्रपञ्चम् इदं सर्वमिति निर्दिश्य ' तस्यैष आत्मा ' (तै.आन.५) इति प्रतिपादितम्। एवं च सर्वचेतनाचेतनंप्रति ब्रह्मण आत्मत्वेन सर्वं सचेतनं जगत् तस्य शरीरं भवति। तथा च श्रुत्यन्तराणि ' अन्तःविष्टश्शास्ता जनानाँ सर्वात्मा ' (यजुषि.आरण्यके.३.११) ' यःपृथिव्यां तिष्ठन् पृथिव्या अन्तरोयं पृथिवी नवेद। यस्य पृथिवी शरीरम्। यःपृथिवीमन्तरोयमयति। सत आत्माऽन्तर्याम्यमृतः ' (बृ.५.७.३) इति प्रारभ्य ' य आत्मनि तिष्ठन्नात्मनोऽन्तरोऽयमात्मा न वेद यस्यात्मा शरीरम्। य आत्मानमन्तरोयमयति। सत आत्माऽन्तर्याम्यमृत ' (बृ.५.७.२२) इत्यादि ' य पृथिवीमन्तरे सञ्चरन् यस्य पृथिवीशरीरम्। योऽपामन्तरे सञ्चरन् यस्यापश्शरीरम् ' (सुबाल.७) इत्यारभ्य ' योऽक्षरमन्तरे सञ्चन्यस्याक्षरं शरीरम्। यमक्षरं न वेद। एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः ' (सुबाल.७) इत्यादीनि सचेतनं जगत् तस्य शरीरत्वेन निर्दिश्य तस्यात्मत्वेन परमात्मानमुपदिशन्ति। अतश्चेतनवाचिनोऽपि शब्दाश्चेतनस्याप्यात्मभूतं चेतनशरीरकं परमात्मानमेवाभिदधति। यथा अचेतनदेवादिसंस्थानपिण्डवाचिनश्शब्दाः तच्छरीरकजीवात्मन एव वाचका ' चत्वार पञ्चदशरात्रादेवत्वं गच्छन्ति ' इत्यादिषु। देवा भवन्तीत्यर्थः।**

## श्रुतप्रकाशिका

तस्मान्द्राध्येऽप्यनुप्रविश्येति ल्यबन्तनिर्देशोऽनुप्रवेशसृष्ट्योर्विनिम्य ज्ञापनार्थं इत्यवगन्तव्यम् सृष्ट्वानुप्राविशदिति— *स्थित्यर्थानुप्रवेशो वा। एवं नामरूपव्याकरणप्रकारउक्त.* ॥

ततःकिं प्रस्तुतस्येत्यत्राह—अतएवमिति। अतः उदाहृतश्रुतिवाक्यात् एव परमात्मपर्यन्तनामरूपव्याकरणप्रतिपादनात् स्वशब्दानां *परमात्मपर्यन्तत्वे मानं दर्शितम्।* देहवाचिशब्देष्वाकृतिनयमसञ्चारणेन *परमात्मपर्यन्तत्वमुपपादयिष्यन्* शरीरत्वाक्षेपकं वाक्यं दर्शयति किंचेति। तत किमित्यत्राह—एवंचेति। न केवलमात्मशब्देन शरीरत्वं गम्यम् *अपितु शरीरत्वं शरीरलक्षणेन सह कण्ठोक्तमित्याह*—तथाच श्रुत्यन्तराणीति। 'अन्त.प्रविष्टश्शास्ता' इति सर्वात्मशब्दाविवरण विशेषणद्वयेन नूपनभोव्याप्तिः भगवतो नियन्तृत्वकथनात्तदेकनियाम्यत्वं शरीरलक्षणमुक्तं भवति। *जग परमात्मशरीरमस्तु* तत किं प्रस्तुतसामानाधिकरण्यस्य शरीरात्मभावोहि भेदरूपतया सामानाधिकरण्यस्य *विरोधीत्यत्राह* **अतश्चेतनवाचिनइति।** अतः चिदचिदात्मकजगत. परमात्मशरीरत्वात् शरीरभूतचेतनवाचिपदानां तच्छरीरिपरमात्मवाचित्वं कथमितिशङ्कायां शरीरवाचिपदानां शरीरिपर्यंताभिधायित्वदर्शनादित्याह—यथेति। शरीरिपर्यन्त वैदिकप्रयोग दर्शयति चत्वारइति। तत्र देवशब्दस्य शरीरिपर्यन्तत्वं स्पष्टयति देवा भवन्तीति। देवत्वं गच्छन्तीत्युक्तम्। ननु देवं गच्छन्तीति देवशब्दस्य शरीरमात्रपरत्वे शरीरत्वं गच्छन्तीत्युक्तं स्यात् ततश्च देहात्मैक्यमुक्तं स्यात्। अतश्शरीरं गच्छन्तीत्यभ्युपगन्तव्यम् अतो भावप्रत्ययान्तत्व प्रकृतिभूतदेवशब्दस्य शरीरिपर्यंतत्वज्ञापकमित्यर्थः। शरीरवाचिपदानां शरी

## श्रीभाष्यम्

**शरीरस्य शरीरिणंप्रति प्रकारत्वात् प्रकारवाचिनां च शब्दानां प्रकारिण्येव पर्यवसानात् शरीरवाचिनां शब्दानां शरीरिपर्यवसानं न्याय्यम्। प्रकारोहि नाम इदमित्थमिति प्रतीयमाने वस्तुनि इत्थमिति प्रतीयमानोऽशः तस्य तद्वस्त्वपेक्षत्वेन तत्प्रतीतेस्तदपेक्षत्वात् तस्मिन्नेव पर्यवसानं युक्तमिति तस्य प्रतिपादकोऽपि शब्दस्तस्मिन्नेव पर्यवस्यति। अतएव 'गौरश्वोमनुष्यः' इत्यादिप्रकारभूताकृतिवाचिनश्शब्दाः प्रकारिणिपिण्डे पर्यवस्यन्तः पिण्डस्यापि चेतनशरीरत्वेन तत्प्रकारत्वात् पिण्डशरीरकचेतनस्यापि परमात्मप्रकारत्वाच्च परमात्मन्येव पर्यवस्यन्तीति सर्वशब्दानां परमात्मैव वाच्य इति परमात्मवाचिशब्देन सामानाधिकरण्यं मुख्यमेव॥**

## श्रुतप्रकाशिका

रिपर्यन्तबोधकत्वमपि लाक्षणिकमित्यत्राह—**शरीरस्येति**। शरीरवाचिनां प्रकारिपर्यन्तत्वं जातिगुणवाचिपदानामिव आकृत्यधिकरणन्यायसिद्धमित्यर्थः॥

जातिगुणवाचिनां द्रव्यपर्यन्तवाचित्वं कथमित्यपेक्षायामाकृत्यधिकरणन्यायं विवक्षुस्तदर्थं प्रकारप्रकारिणौ विविच्य दर्शयति **प्रकारोहिनामेति**। तद्वाचिशब्दस्य प्रकारिपर्यन्तत्वमुपपादयति **तस्येति**। तस्य तद्वस्त्वपेक्षत्वेन प्रकारस्य प्रकार्यपेक्षस्वरूपस्थितित्वेन। तत्प्रतीतेः प्रकारस्य यथाऽवस्थितस्वरूपप्रतीतेः तदपेक्षत्वात् प्रकारिसापेक्षत्वात् **तस्मिन्नेव पर्यवसानं युक्तमिति**। प्रकारप्रतीतेः प्रकारिण्येव पर्यवसानं युक्तमिति प्रकारवाचिशब्दः प्रकारिणि पर्यवस्यतीत्यर्थः। शब्दशक्तेर्विशेषणमात्रविषयत्वेऽप्यर्थसामर्थ्याद्विशेष्यावबोधनम्। अतोऽर्थसामर्थ्यसचिवा शब्दशक्तिर्विशिष्टार्थबोधनसामग्री तच्च बोधनं मुख्यकोटिनिविष्टं यथा संस्कारसचिवेन्द्रियजन्यमपि प्रत्यभिज्ञानमिन्द्रियप्रसूतत्वात्प्रत्यक्षमेव न स्मृतिर्भवति। तथाऽत्र मुख्यत्वं अतश्शब्दशक्तिः प्रवृत्तिनिमित्तमात्रे पर्यवस्यति विशेष्यबोधनमर्थसामर्थ्यादिति केचिदाहुः। तदयुक्तम् शब्दशक्तेर्विशेष्यपर्यन्तत्वाभावे निष्कर्षकशब्देऽप्यर्थसामर्थ्याद्विशेष्यपर्यन्तबोधनप्रसङ्गात्। रूपग्रहणे नयनशक्तिः रूपिज्ञानमर्थसामर्थ्यजन्यं स्यात् तदभ्युपगमे गन्धशब्दादिग्रहणे सत्यर्थसामर्थ्यात्पृथिवीगगनादिप्रतिपत्तिश्च स्यात् नच तथाप्रतीतिरस्ति। जात्यादिशब्दशक्तिर्जात्यादिस्वरूपमात्रविषया गवादिशब्दशक्तिर्द्रव्यपरतन्त्रजात्यादिविषयेति निष्कर्षकानिष्कर्षकशब्दविभाग इतिचेत् तर्हि शब्दशक्तेः प्रकारिविषयत्वमभ्युपगतं स्यात् धर्मिपरतन्त्ररूपतावगतेर्धर्मिप्रतिपत्तिसापेक्षत्वाच्छब्दशक्तेस्तत्प्रतिपत्तिहेतुत्वाच्च॥

किंच 'वचसां वाच्यमुत्तमम्' 'नतास्स सर्ववचसां प्रतिष्ठा यत्र शाश्वती' इत्यादिवचनस्वारस्यं च शब्दशक्तेरेव विशेष्यपर्यन्तत्वे सिध्यति। अतो विशेष्यपर्यन्ता शब्दशक्तिरित्यत्र तात्पर्यम्। एवं न्यायशिक्षाकृता इत्थं प्रमाणोपपत्तिसिद्धत्वात्सर्वशब्दानां परमात्मैव वाच्यइति परमात्मवाचितत्पदेन स्वपदसामानाधिकरण्य मुख्यवृत्तमित्याह— **अतएवेति**। पर्यवस्यन्तः पूर्वपक्षं कानिच्चिद्व्यावृतस्य तत्रानुपरम्य तदन्वयिन्यन्यत्र व्यापारः पर्यवसानमिह विवक्षितम् नतु व्यापारोपरमः व्यापारोपरमवाचित्वे सत्यपर्यवस्यन्त इति पदच्छेदः। यद्वा पर्यवस्यन्तः पर्यवसातुं प्रवृत्ता इत्यर्थः। परमात्मप्रकारत्वाच्चेत्यन्तेन पूर्वोक्तन्यायस्सञ्चारितः। नामरूपव्याकरणश्रुतिः प्रमाणत्वेन पूर्वोदाहृताऽत्राभिप्रेता विशेषणवाचिशब्दो विशेष्यपर्यन्तोऽस्तु ननु विशेषणवाचिशब्दस्य परमविशेष्यवाचिशब्देन सामानाधिकरण्यं दृष्टमितिचेत्, उच्यते यथा नैल्यगुणगतावान्तरजातिवाचिनीलशब्दो 'नैल्यगुणद्वारा तद्विशिष्टे पर्यवसितः उत्पलशब्देन समानाधिकरणो दृश्यते' यथा

### श्रीभाष्यम्

नन्वु 'खण्डो गौःखण्डश्शुक्लः' इति जातिगुणवाचिनामेव पदानां द्रव्यवाचिपदैस्सह सामानाधिकरण्यं दृष्टम्; *द्रव्याणां तु द्रव्यान्तरप्रकारत्वे मत्वर्थीयप्रत्ययो दृष्टः, यथा*— 'दण्डी कुण्डली' इति; नैवम् जातिर्वा गुणो वा द्रव्यं वा नैतेष्वेकमेव सामानाधिकरण्ये प्रयोजकम् अन्योन्यस्मिन्व्यभिचारात्, यस्य पदार्थस्य कस्यचित्प्रकारतयैव सद्भावः तस्य तदपृथक्सिद्धिस्थितिप्रतीतिभिस्तद्वाचिनां शब्दानां स्वाभिधेयविशिष्टद्रव्यवाचित्वाद्धर्मान्तरविशिष्टतद्द्रव्यवाचिना शब्देन सामानाधिकरण्यं युक्तमेव। यत्र पुनः पृथक्सिद्धस्य स्वनिष्ठस्यैव द्रव्यस्य कदाचित्कचिद्द्रव्यान्तरत्वमिष्यते; तत्र मत्वर्थीयप्रत्यय इति निरवद्यम्। तदेवं परमात्मनश्शरीरतया तत्प्रकारत्वादचिद्विशिष्टजीवस्यापि जीवविशिष्टनिर्देशरूपा अहंत्वमित्यादिशब्दाः परमात्मानमेवाचक्षत इति 'तत्त्वमसि' (छां.६.८.७) इति सामानाधिकरण्येनोपसंहृतम्; एवंच सति परमात्मानंप्रति जीवस्य शरीरतयाऽन्वया-

### श्रुतप्रकाशिका

गवादिशब्दा गोत्वादिजातिवाचिनस्तद्विशेष्यपिण्डद्वारा तद्विशिष्टचेतने पर्यवसिता, खण्डादिशब्दैस्समानाधिकरणा दृश्यन्ते तद्वत् ॥

उक्तं प्रयोजकमतिव्याप्त्या दूषयंश्चोदयति नन्विति। परिहरति नैवमिति। प्रयोगदर्शनमविशिष्टमित्यभिप्रायेण द्रव्यंचेत्युक्तं सामानाधिकरण्ये मत्वर्थीयप्रत्ययानपेक्षे इतिभावः। हेतुमाह—अन्योन्यस्मिन्निति। *व्यभिचारात् साध्यस्य* सामानाधिकरण्यस्य जातिवाचिमात्रं गुणवाचिमात्रंचातिलङ्घ्य वृत्तेरित्यर्थः। जातिर्वा गुणो वा मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यस्य जातिगुणवाचिशब्दयोरविशेषेण प्रयोगदर्शनादितिचेत् तर्हि शरीरवाचिशब्दानामपि मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्येन प्रयोगदर्शनात्सर्वप्रयोगविषयानुयायिप्रयोजक वाच्यमिति भावः। जातिगुणयोरन्यतरत्वंचाव्याप्त*मित्यर्थः। इदमव्याप्तं, प्रकारत्वंचातिव्याप्तं तर्कि प्रयोजकमित्याह—यस्येति। तदपृथक्सिद्धिस्थितिप्रतीतिभिरिति।* सिद्धिः सत्ता प्रमाणसम्बन्धयोग्यस्वरूपा। स्थितिः तदनुवृत्तिः अपृथक्शब्दस्सिद्ध्यादिसाधारणः प्रतीतिशब्देनापृथक्प्रतीते स्वतः प्राप्तत्वं विवक्षितम्। प्रकारैकस्वभाववस्तुवाचिशब्दत्व मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये प्रयोजकमित्यर्थः। निष्कर्षकशब्दान्यत्वेसतीति विशेष्य मत्वर्थीयप्रत्ययसापेक्षसामानाधिकरण्ये हेतुं पक्षे तदभावज्ञापनाय दर्शयति यत्रपुनरिति। *इतिनिरवद्यमिति। मत्वर्थीयप्रत्ययसापेक्षदण्डकुण्डलादिव्यावृत्तं मत्वर्थीयप्रत्ययनिरपेक्षसर्वप्रयोगविषयानुयायि* प्रयोजकं सिद्धमिति नाव्याप्त्यादिदोष इत्यर्थः। इति निरवद्यमित्यनेन सहोपलम्भनियमादेः प्रयोजकत्वशङ्कापरिहारादिः प्रथमसूत्रोक्तोऽभिप्रेतः। परिहृतचोद्येन शिक्षितेन न्यायेन परमसाध्यसिद्धिमाह—तदेवमिति। तत् चोद्यस्य परिहृतत्वात् एवं पूर्वं शिक्षितप्रकारेण 'ऐतदात्म्यमिदंसर्वम्' इति पूर्वमेव वैयधिकरण्येन *ब्रह्मात्मकत्वं सर्वस्य विहितं तस्य सामा*नाधिकरण्येन जीवविशेषे उपसंहारः यथा 'सत आत्माऽन्तर्याम्यमृतः' इति जीवविशेष कृत्स्नस्य ब्रह्मशरीरत्वं वैयधिकरण्येनोपसंहृतं तद्वदित्यर्थः। अनेनोद्देश्योपादेयविभागनिबन्धनचोद्यपरिहारोऽभिप्रेतः स्वपदप्रतिपन्नदोषमात्त्वप्रसङ्गस्य परिहृतत्वं दर्शयति ॥

*यद्वा अपुरुषार्थस्य ब्रह्मण्यस्पर्शायहि शरीरशरीरिभाव उक्तः, तथाऽपि तत्संसर्गात्तत्प्रसङ्ग इत्यत्राह*—एवंचसतीति। जीवशरीरगतधर्मा जीवमिव जीवधर्माः परमात्मानं न स्पृशन्तीत्यर्थः। पूर्वं यानि दूषणानि परमते स्वोक्तानि तानि

श्रीभाष्यम्

जीवगताधर्माः परमात्मानं न स्पृशन्ति यथा स्वशरीरगता बालत्वयुवत्वस्थविरत्वादयो धर्माः जीवं न स्पृशन्ति। अतः 'तत्त्वमसि' (छां.६.८.७) इति सामानाधिकरण्येतत्पदं जगत्कारणभूतं सत्यसङ्कल्पं सर्वकल्याणगुणाकरं निरस्तसमस्तहेयगन्धं परमात्मानमाचष्टे त्वमिति च तमेव सशरीरजीवशरीरकमाचष्ट इति सामनाधिकरण्यं मुख्यवृत्तम् प्रकरणाविशेषस्सर्वश्रुत्यविरोघो ब्रह्मणि निरवद्ये कल्याणैकताने अविद्यादिदोषगन्धाभावश्च। अतो जीवसामानाधिकरण्यमपि विशेषणभूताज्जीवादन्यत्वमेवापादयतीति विज्ञानमयाज्जीवादन्य एवानन्दमयःपरमात्मा॥ यदुक्तम् 'तस्यैष एव शारीर आत्मा' (तै.आन.५) इत्यानन्दमयस्य शारीरत्वश्रवणाज्जीवादन्यत्वं न सम्भवतीति तदयुक्तम्। अस्मिन्प्रकरणे सर्वत्र 'तस्यैष एव शारीर आत्मा यःपूर्वस्य' (तै.आ.५) इति परमात्मन एव शारीरात्मत्वाभिधानात्। कथं 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' (तै.आन.१) इत्याकाशादिसृज्यवर्गस्य परमकारणत्वेन प्रज्ञातजीवव्यतिरेकस्य परस्य ब्रह्मण आत्मत्वेन व्यपदेशात्तद्व्यतिरिकाकाशादीनामन्नमयपर्यन्तानां तच्छरीरत्वमवगम्यते 'यस्य पृथिवीशरीरं यस्यापदशरीरं यस्य तेजश्शरीरं यस्याकाशश्शरीरं यस्याक्षरंशरीरं यस्य मृत्युश्शरीरम्। एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' (सुबाल.७) इति सुबालश्रुत्या सर्वतत्त्वानां परमात्मशरीरत्वं स्पष्टमभिधीयते। अतः 'तस्माद्वा एत

श्रुतप्रकाशिका

स्वपक्षेनायान्तीत्याह—अतइत्यादिना। अतः सामानाधिकरण्यस्य शरीरशरीरिभावनिबन्धनत्वोपपादानात् अयंहेतुः प्रकरणाविरोधादीनामपि साधारणः पदद्वयावगतविशेषणपरित्यागेन विशेष्यैक्यात्सामानाधिकरण्यस्य मुख्यत्वसिद्धिः प्रकरणाविरोधइति। 'तदैक्षत' 'ऐतदात्म्यमिदं सर्वम्' 'अनुप्रविश्य नामरूपे व्याकरवाणि' इत्यादिवाक्याविरोध इत्यर्थः। सर्वश्रुत्यविरोध इति भेदश्रुतिघटकश्रुत्यविरोध उक्तः। अविद्यादिदोषगन्धाभाव इत्यनेन [illegible] श्रुतिसिद्धार्थविरोधाभावउक्तः। पूर्वोक्तजीवगतधर्मास्पर्शस्य फलमविद्याद्यभावइति नपौनरुक्त्यम्, पूर्वपक्षिणा जीवानतिरेकसाधकतयोक्तस्य जीवसामानाधिकरण्यस्य राद्धान्तानुगुणत्वमाह—अतइति। अतः तत्त्वंपदयोः [illegible] णीयत्वात्त्वंशब्दावगतधर्माणां ब्रह्मणि साक्षादन्वयविरोधेन जीवद्वाराऽन्वयात् द्वारभूतजीवाद्द्वारिणो ब्रह्मणो वैलक्षण्यसाधकं सामानाधिकरण्यमित्यर्थः। उक्तमर्थं परमप्रकृतेन सङ्गमयति इतिविज्ञानमयादिति। इतिशब्दो हेतौ पूर्वपक्षे जीवानतिरेकसाधकतयोक्तस्य जीवसामानाधिकरण्यस्य भेदावहत्वादेतदधिकरणसाध्यमानन्दमयस्य जीवादन्यत्वं सुस्थमित्यर्थः॥

अथ शारीरत्वश्रवणं पूर्वपक्षहेतुमनुवदति यदुक्तमिति। परिहरति तदयुक्तमिति। ननु प्राणमयपर्यायस्थशारीरात्मशब्दो मनोमयपरः मनोमयपर्यायस्थस्तु विज्ञानमयपरः तत्तदन्तरसद्भावज्ञापनार्थत्वाच्छारीरात्मशब्दस्य अतस्सर्वत्र शारीरात्मत्व परमात्मनएवेति कथमवगतमिति पृच्छति कथमिति। प्रतिवक्ति तस्माद्वा इत्यादिना। अन्नमये शारीरात्मत्वकण्ठोक्त्यभावात्प्राणमये 'तस्यैष एव शारीरआत्मा यःपूर्वस्य' इत्युक्तत्वाच्च तस्य वाक्यस्यार्थं विवक्षुस्तत्सङ्गत्यनायाह—तस्माद्वाइति। आकाशादिसृष्टेः पश्चाद्धि जीवस्य करणकलेबरसृष्टिः अतस्ततःपूर्वं जीवस्य सृष्ट्यक्षमत्वादाकाशादिस्रष्टृत्वं जीववैलक्षण्यसाधकम्। तस्य जीवविलक्षणस्यात्मशब्देनाभिधानादात्मशब्दस्य पुत्रादिवत्सप्रतियोगिकत्वादन्नमयादीनां परमात्मशरीरत्वमर्थादवगतमित्यर्थः। शरीरत्वं कण्ठोक्तंचेत्याह—यस्य पृथिवीति। अतइति। श्रुत्यन्तरेषु

## श्रीभाष्यम्

स्मादात्मनः’ (तै.आन.१) इत्यत्रैवान्नमयस्य परमात्मैव शारीरआत्मेत्यवगतः। प्राणमयंप्रकृत्याह–‘ तस्यैष एव शारीर आत्मा य पूर्वस्य ’ (तै.आन.५) इति पूर्वस्यान्नमयस्य यश्शारीर आत्मा श्रुत्यन्तरसिद्धः परमकारणभूतःपरमात्मा सएव तस्य प्राणमयस्यापि शारीरआत्मेत्यर्थः। एवं मनोमयविज्ञानमययोर्द्रष्टव्यम्। आनन्दमयेतु ‘ एषएव ’ (तै.आन.५) इति निर्देशस्तस्यानन्यात्मत्वं दर्शयितुम्। तत्कथम् ? विज्ञानमयस्यापि पूर्वोक्तया नीत्या परमात्मैव शारीर आत्मेत्यवगतः। एवंसति विज्ञानमयस्य यश्शारीर आत्मा सएवानन्दमयस्यापि शारीरआत्मेत्युक्ते आनन्दमयस्य अभ्यासावगतपरमात्मभावस्य परमात्मनस्स्वयमेवात्मेत्यवगम्यते । एवं च स्वव्यतिरिक्तं चेतनाचेतनवस्तुजातं स्वशरीरमिति स एव

## श्रुतप्रकाशिका

शरीरत्वस्य कण्ठोक्तत्वात् ‘ तस्माद्वा ’ इत्यादिवाक्ये आत्मशब्दनिर्देशादन्नमयादीनां शरीरत्वस्यार्थसिद्धत्वाच्च। परमात्मैवान्नमयस्यात्मेत्यवगतइत्यर्थः एवमात्मशब्दनिर्दिष्टःपरमात्मैवान्नमयस्यात्मेति ‘ यःपूर्वस्य ’ इत्युत्तरत्र अनुवादस्य पुरोवादनिर्वाहः कृतःउपादित्सितस्य ‘ तस्यैष एव ’ इति वाक्यस्य प्राणमयपरत्वज्ञापनायाह—प्राणमयं प्रकृत्येति। तद्व्याचष्टे पूर्वस्येति। यइति प्रसिद्धवन्निर्देशः श्रुत्यन्तरसिद्धमेतत्प्रकरणसिद्धं च ज्ञापयतीत्यभिप्रायेण श्रुत्यन्तरसिद्धः परमकारणभूतइति विशेषणद्वयमुक्तम्। उक्तमर्थं मनोमयादावतिदिशति एवमिति। आनन्दमयस्य परमात्मत्वमयुक्तम्। तस्यात्मान्तरश्रवणादित्यत्राह–आनन्दमयेत्विति। अनन्यात्मत्वं दर्शयितुं ‘ पतिंविश्वस्यात्मेश्वरम् ’ ‘ नतस्येशे कश्चन ’ ‘ नान्योऽतोऽस्ति द्रष्टा ’ इत्यादिवदयं निर्देश इत्यर्थः॥

अत्रोपपत्तिजिज्ञासया पृच्छति तत्कथमिति। अनन्यात्मत्वप्रदर्शनार्थत्वं कथमित्यर्थः परिहरति विज्ञानमयस्यापीति। आनन्दमयप्रति श्रूयमाणे ‘ य पूर्वस्य ’ इति वाक्ये पूर्वशब्दविवरणार्थं विज्ञानमयस्येत्युक्तम् विज्ञानमयशारीरात्मनः परमात्मत्वेसिद्धे ह्यानन्दमयशारीरात्मनः परमात्मत्वसिद्धिरिति शङ्कान्युदासाय विज्ञानमयस्यापीत्युक्तम्। पूर्वोक्तया प्राणमयादावुक्तया। ततः किमित्यत्राह— एवंसतीति। अभ्यासावगतपरमात्मभावस्येति। ‘ आनन्दं ब्रह्मणो विद्वान् ’ इति पूर्वमभ्यस्तस्यानन्दस्य ब्रह्मसम्बन्धिनिर्देशाद्ब्रह्मणश्च ‘ आनन्दो ब्रह्म ’ इत्यानन्दशब्दवाच्यत्वात् ‘ आनन्दो ब्रह्मेति व्यजानात् ’ इत्यानन्दशब्दवाच्यस्थाने ‘ एतमानन्दमयमात्मानमुपसङ्क्रम्य ’ इत्यानन्दमयशब्दनिर्देशेनानन्दानन्दमयशब्दयोः पर्यायत्वाच्चानन्दमयस्य परमात्मभावोऽवगतइत्यभिप्रायः अभ्यासावगतपरमात्मभावत्वं पुच्छब्रह्मवादनिरासयुक्तीनामुपलक्षणतयोक्तम् ‘ ब्रह्मपुच्छंप्रतिष्ठा ’ इति पुच्छब्रह्मप्राधान्येन निर्दिष्टंचेत् ‘ सोऽकामयत ’ इत्यनन्तरवाक्येऽपि तच्छब्देन पुच्छब्रह्मपरामर्शनीय तदयुक्त सइति पुल्लिङ्गनिर्देशात् ‘ आत्मन आकाशस्सम्भूतः ’ इत्यात्मशब्दाभिप्रायः पुल्लिङ्गनिर्देश इतिचेन्न व्यवहिताद्व्यवहितस्यानन्दमयस्यैव परामर्शनीयत्वात् ‘ तस्यैष एव शारीर आत्मा ’ इत्यनन्तरपूर्वोक्तात्मनः पुल्लिङ्गनिर्देशेन परामर्श इतिचेन्न तस्यान्नमयादिसर्वपर्यायसाधारणत्वेन एतत्पर्याय(स्य) प्रधानप्रतिपाद्यत्वाभावात्। अतःप्रधानप्रतिपाद्याव्यवहितानन्दमयएव सइति परामृश्यते। अत.कारणभूतस्सएवपरमात्मेति

एव विज्ञानमयस्य जीवस्यान्तरात्मतया व्यपदेशादभ्यासावगतपरमात्मभावात्तदन्तरत्वेनात्मशब्दव्याख्यानपर्यवसानभूमित्वादात्मशब्दवाच्यस्यादावेव जगत्कारणत्वेनोक्तत्वादनन्तरकारणवाक्ये ‘ सोऽकामयत ’ इति पुल्लिङ्गनिर्देशात्पुच्छतया निर्दिष्टब्रह्मणोऽप्यानन्दमयानतिरिक्तत्वाद्वक्ष्यमाणसूत्रस्थहेतुभिश्चानन्दमयः परमात्मेत्यवगत तस्य च परमात्मन

## श्रीभाष्यम्

**निरुपाधिकश्शारीर आत्मा। अतएवेदं परंब्रह्माधिकृत्य प्रवृत्तं शास्त्रं शारीरकमित्यभियुक्तैरभिधीयते। अतो विज्ञानमयाज्जीवादन्य एव परमात्मा आनन्दमय ॥**

## श्रुतप्रकाशिका

आत्मान्तरवत्त्व 'आत्मेश्वरम्' 'नतस्येशे कश्चन' 'नान्योऽतोऽस्ति द्रष्टा' इत्येवमादिश्रुतिविरुद्धमुपपत्तिविरुद्ध च आकाशादिसृज्यवर्गपरमकारणत्वादिना शारीरा मनः परमात्मत्वमवगतम्। एवमानन्दमयस्य शारीरात्मनश्च परमात्मत्वेऽपि परमात्मद्वित्वासम्भवात्परमात्मन आत्माऽन्तरवत्त्वव्याघाताच्च, 'तस्यैष एव शारीर आत्मा' इत्युक्तिः 'आत्मेश्वरम्' इत्यादिवत्तस्यानन्यात्मत्वज्ञापनार्थेत्यर्थसामर्थ्यादवगम्यत इत्यर्थः। शारीरात्मत्व परमात्मन एव मुख्यमित्याह—एतचेति। निरुपाधिकइति। कश्चित्कदाचित्किञ्चि प्रतिकर्मानुगुणाहि कश्चिदात्मा भवति, अयतु सर्वेषां सर्वदा सर्वत्रात्मकर्मवश्य. स्वत आत्मेति निरुपाधिक इतिभावः। तदेवोपपादयति अतएवेति। अभियुक्तैः, भगवद्बोधायनादिभिः 'संहितमेतच्छारीरकम्' इतिहि वृत्तिकारवचः। सूत्रार्थमुपसहरति अतइति ॥

## गूढार्थसंग्रह.

**अतो विज्ञानमयाज्जीवादन्यएव परमात्मा आनन्दमयइति।** यद्यपि ब्रह्मविद्याऽऽभरणे—शङ्करभाष्यासिद्धान्तरस्यस्यप्रतिष्ठापितः अथापि निर्विशेषस्याप्रामाणिकतायाः जिज्ञासाऽधिकरण एव निरूपणेन जीवभिन्नपरमात्मनिरूपणपरमेवेद प्रकरणम्। 'उपक्रमेचानन्त्यमतिपादितम्' इत्यत्र नविवादः। देशकालपरिच्छेदशून्यत्वस्य देशकालव्यापितत्वरूपतायास्सर्वसम्मततया वस्तुपरिच्छेदशून्यत्वमपि वस्तुव्यापितत्वरूपमेव 'अनेन सर्वगतत्वमायामशब्दादिभ्यः' (३.२.३८) इति सूत्रे आयामशब्दस्य व्याप्तिवाचित्व परैरप्यभ्युपगतम्। तथोदाहृतश्रुतिषु आकाशस्य स्वसमानसत्ताकसम्बन्धेनैव व्याप्तिसिद्धयति। 'व्याप्यव्यापकतामिथ्या' इति वदता परेषामते त्रिविधपरिच्छेदशू.यत्व नघटते। 'तथाऽन्यप्रतिषेधात्' इति पूर्वसूत्रे तथेत्यस्य वैयर्थ्यान्यथाऽनुपपत्त्या 'परत्वेनैवान्यस्य प्रतिषेध.' इति जिज्ञासाऽधिकरण एवादौ निरूपितम्। (जि.अ.५दा) 'नान्त गुणानाम्' इति (श) सहस्रनामभाष्योपात्त.वि.पु वचनानुसारेण गुणैरानन्त्यच नकथञ्चिदपि निर्विशेषे समवर्तीति पूर्वमेव निरूपितम्। 'घटस्य स्वरूपम्' इत्यादौ स्वरूपशब्दसमभिव्याहारे अभेदप्रतिपत्त्यङ्गीकारेऽपि 'आनन्द ब्रह्मण' इति द्विरभ्यस्तवाक्ये अभ्यासरूपतात्पर्यलिङ्गेन 'शब्दविशेषात्' (ब्र.सू.३७) इति सूत्रोक्तन्यायेन ब्रह्मणः आनन्दस्य च भेद एव विवक्षित इत्यास्थेयम्। श्रुतौ 'आनन्दमय' शब्दनिर्देशेनापि अत्र भेदविवक्षा निर्णीयते। 'यद्वाचाऽनभ्युदितम्' इति तलवकारश्रुतौ 'अभि' इत्यनेन वाचा कार्त्स्न्येन प्राप्तेरेव निषेधेन ब्रह्मानन्दैकदेशे प्रवृत्तिसत्त्वेऽपि ब्रह्मानन्दे कार्त्स्न्येन प्रवृत्त्यभावतात्पर्येण निवर्तन्त इत्युक्तिः ॥

ब्रह्मसम्बन्ध्यानन्दबहिर्भूतविषयाभावेन वाक् सामान्यस्यापि निवृत्तिसिद्धान्तेऽपि युक्तैव। 'आनन्दमयवाक्यानन्तर 'तस्यैष एव शारीर आत्मा' इत्यत्रानन्दस्य स्वरूपपरतायाः लोके प्रसिद्धत्वेन सिद्धान्ते उपपत्तिः एवमुपपत्तावपि तत्र तत्परित्यज्य ब्रह्मविद्याऽऽभरणे 'आनन्दमय' शब्दार्थविवरणपरे 'आनन्द ब्रह्मणो विद्वान्' इति वाक्ये षष्ठ्याः अभेदोक्तिरतीव विचित्रा। 'विज्ञानमय' शब्दनिर्देशात्पूर्वे मनोमयपर्याये 'आनन्द ब्रह्मणो विद्वान्' इत्युक्त्या 'विज्ञानमय' इत्यत्र मयडर्थस्य 'आनन्दमय' इत्यत्र मयडर्थस्य च वैलक्षण्य सूचितम्। आनन्दवल्ल्यन्ते अस्यैव वाक्यस्य पुनरुपादानेनाभ्यासेन अयमेवार्थो दृढीकृत.। कठवल्ल्याम् 'बुद्धिंतु सारथिं विद्धि' 'विज्ञानसारथिर्यस्तु'

## गूढार्थसङ्ग्रहः

इत्युक्त्या 'बुद्धि' 'विज्ञान' शब्दयोः एकार्थकत्व काममास्ताम् । बुद्धिशब्दस्य ज्ञानार्थकत्वं कोशेष्वेव प्रसिद्धम् । 'विज्ञानमानन्दं ब्रह्म' इत्यादयः वैदिकाःप्रयोगाः विशब्दापरित्यागेन प्रयुक्ताः ज्ञानार्थकत्वमुत्तम्भयन्ति । विज्ञानमयपर्याये 'विज्ञानं यज्ञंतनुते' इत्युक्त्या ज्ञानस्वरूपत्वमपि जीवस्य प्रदर्शितम् । 'आनन्दाद्ध्येव खलु' इति वाक्यानन्तरं वरुणोपलम्भप्रत्ययकथनेन अत्रानन्दमयादन्यस्याकथनेन च शब्दद्वयार्थः एकएवेति प्रतीयते । 'ब्रह्मविदाप्नोति परम्' इत्यत्र प्राप्तिमुक्त्वा 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' इति सृष्टिमुपक्रम्य अनन्तरं 'यतोवा इमानि' 'यत्प्रयन्त्यभिसंविशन्ति' 'आनन्दाद्ध्येव खल्विमानि' 'आनन्दं प्रयन्ति' इत्यत्र कारणस्य प्राप्यत्वकथनेन राजकुमारनयसूचनेन अभ्यासरूपतात्पर्यलिङ्गेन प्राप्तिर्दृढीकृता 'आप्लृ' धातोः भवत्यर्थकत्वं नक्वापि प्रसिद्धम् । 'भू'धातोः प्राप्त्यर्थकत्वं वैयाकरणैरेवाङ्गीकृतम् । 'परात्पर पुरुषमुपैति दिव्यम्' इति पूर्वं प्रस्तुतप्राप्तिरेव 'ब्रह्मवेद ब्रह्मैव भवति' इत्यत्र भवतिनोच्यत इत्युक्तौ न कोऽपि विरोधः । श्रुतिश्चेय परेषा नानुकूलेति जिज्ञासाऽधिकरणे भावप्रकाशे च निरूपितम् ॥

'असतोमा सद्गमय तमसोमा ज्योतिर्गमय मृत्योर्माऽमृतं गमयेति । सयदाह असतोमा सद्गमयेति मृत्युर्वाऽसत् सदमृतं मृत्योर्मामृत गमय अमृत माकुर्वित्येवैतदाह—तमसोमा ज्योतिर्गमयेति मृत्युर्वै तमः ज्योतिरमृतम् मृत्योर्माऽमृतं गमय अमृतं माकुर्वित्येवैतदाह—मृत्योर्माऽमृतगमयेति नात्र तिरोहितमिवास्ति' (बृ.३.३.२८) इति वाक्ये मृत्योर्माऽमृतं गमयेति नात्र तिरोहितम्' इत्यन्ते उक्त्या 'अमृत माकुरु' इत्यर्थेऽपि अमृतगमन वर्तत एवेति निर्धारितं भवति । अमृतशब्दः मुक्त्यर्थकः मुक्तार्थकश्च मा मुक्तकुरु इत्येतदर्थे मुक्तिगमनमप्यतिरोहितमेवेत्यर्थ एव विवक्षितः एतत्तात्पर्येणैव 'मृत्योर्माऽमृतं गमयेति' नात्र तिरोहितमिवास्ति इत्यन्ते उक्त्या प्राप्तिर्वर्तत एवेति निष्कर्षस्सम्भवत्येव । अतः'ब्रह्मविदाप्नोतिपरम्' इत्यत्रोक्तायाः प्राप्तेरभ्यासेन दृढीकरणेन सविशेषपरमेवेद प्रकरणम् । ब्रह्मशब्दादिस्सविशेषपरएवेति पूर्वमेव साधितम् । 'तदेषाऽभ्युक्ता' इति तदनन्तरवाक्येन पूर्ववाक्यार्थस्य पादचतुष्टयात्मकऋचा विशदकिरणस्य परेषामपि सम्मतत्वेन 'सत्यंज्ञानम्' इत्यादिवाक्यचतुष्टयस्यापि वाक्यार्थबोध एव विवक्षित इति निश्चयेन एकवाक्यतया वाक्यार्थबोधस्य विवक्षितत्वे 'सह' इत्यत्र विरामेण साहित्यार्थकत्व नाभिप्रेत, किंतु युगपदित्यर्थकत्वमेवेत्युक्तिरनुपादेयैव 'तदेषाभ्युक्ता' इति वाक्यमेव परसम्मतनिर्विशेष विघटयति । 'सोऽश्नुते सर्वान्कामान्' इत्यर्थः विज्ञानमयपर्याये 'शरीरे पाप्मनो हित्वा सर्वान्कामान्समश्नुते' इत्यत्र 'अस्माल्लोकात्प्रेत्य एतमानन्दमयमात्मानमुपसङ्क्रम्य इमाल्लोकान्कामान्नी कामरूप्यनुसञ्चरन् एतत्सामगायन्नास्ते' इत्यत्र च विशदीकरणेन अत्र निर्विशेष न विवक्ष्यत इति सूत्रकृतैव 'मान्त्रवर्णिकमेव च गीयत' इत्यत्र 'गीयत' इत्यनेनैव निर्धारयिष्यते । अन्यत्सर्वं प्रागेव पर्यालोचितम् ॥

ब्रह्मविद्याऽऽभरणे पश्चाल्लभ्यमानावयवस्य प्रथमपर्याये पुच्छत्वोक्त्या चरमपर्यायेऽपि पुच्छत्व तादृशमेवाङ्गीकरणीयं नत्वाधारत्वरूपम् । उपक्रमप्रभृतिषु चतुर्षु पर्यायेषु रूपणमङ्गीकृत्य पञ्चमपर्याये रूपणानङ्गीकारस्यानुचितत्वात् । 'प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौहि भेदे' इति सूत्रेणापि सूत्रकारः प्रकरणस्य सविशेषविषयत्वमेव ननु निर्विशेषविषयत्वमिति बोधयति । तत्रादिपदेन 'ब्रह्मपुच्छंप्रतिष्ठा' इति वाक्यार्थस्यापि प्रतिपादनेन परसम्मतार्थस्य सूत्रकृदनाभिमतत्वं स्फुट प्रतीयते । सूत्रस्य क्रत्वाचिन्तापरत्वोक्तिरभिनिवेशमूलैव । एवञ्च सूत्रद्वयेन सूत्रकारसूचितसविशेषपरत्वमेव प्रकरणस्य युक्तम् । पुच्छशब्दस्य परसम्मतार्थकत्वमनुचित प्रायपाठानुसारेण रूपणमात्रस्यैव न्याय्यत्वात् इति सूत्रकाराशयस्य तत्रैव व्यक्तीकरणात् । रूपणस्थले सदृशामिदएव विवक्षितइति जैमिनिकुमारिलसिद्धान्तः भावप्रकाशे तृतीयसम्पुटएव निरूपितः ॥

नन्वयापि विज्ञानमयाज्जीवादन्यः परमात्मेति न घटत इति यद्यपि चन्द्रिकादौ आनन्दतीर्थानुयायिभिः व्यास-

## गूढार्थसंग्रहः

तीर्थादिभिरुक्तम् । अथापि सिद्धान्ते स्थूलारुन्धतीन्यायेन 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' इत्यत्रोक्तमात्मत्व आनन्दमये प्रदर्शितम् इत्यङ्गीकारेण 'विज्ञानं देवास्सर्वे' इत्यत्रोक्तार्थस्य जीवेऽसम्भवेऽपि नानुपपत्तिः ॥

एतेन पञ्चसु पर्यायेषु ब्रह्मशब्दाभ्यासः 'योऽन्नंब्रह्म' इत्यादिरूपादभ्यासात्तैत्तिरीयके 'आनन्दमय' इत्यादिशब्दे वाच्यो हरिस्स्वयम् । उपलक्षणत्व शब्दानामानन्दमयपूर्विणाम् । सूत्रस्याल्पाक्षरत्वेन सर्वशाखाविनिर्णये' (आर्ता.अनुव्याख्याने) इत्याद्युक्तिरपि नन्नाधिका । स्थूलारुन्धतीन्यायेन प्रथमतोऽन्नमयादीनां ब्रह्मत्वमभिधाय विज्ञानमयादन्यत्वे नानन्दमयस्याभिधाने स्थूलनक्षत्रसमीपवर्त्यरुन्धतीनक्षत्रनिर्णयवत् विज्ञानमयस्याप्यात्मनः आनन्दमयस्य प्रदर्शनस्यैव युक्तत्वात् । विज्ञानमयादन्यत्वस्यानन्दमयेऽभिधानेन विज्ञानमयस्य ब्रह्मत्वासिद्धेः । आनन्दमयादनन्तरं अन्यस्यात्मनोऽकथनेन आनन्दमयएव उपक्रमोक्तात्मत्वपरिसमाप्तेर्निश्चयात् ॥

एवमुत्तरानुवाके अन्नप्राणमनोविज्ञानवाक्यानन्तरं 'तद्विज्ञाय पुनरेव वरुणं पितरमुपससार' इति वरुणोपसम्पत्तिवत् 'आनन्दो ब्रह्मेति व्यजानात्' इत्यनन्तरं पुनरुपसम्पत्तेरकथनेन आनन्दस्य ब्रह्मत्वात् स्थानप्रमाणेनाभेदात् आनन्दमयस्यैव ब्रह्मत्वनिश्चयात् । अन्नादीनां मुख्यत्वेन ब्रह्मत्वबोधनसम्भवात् स्थूलारुन्धतीन्यायेनोक्तानां द्वारत्वज्ञानस्येन पुनरुपसम्पत्तिसम्भवात्वेन । आत्मन्शब्दार्थबोधनायान्नमयानादीनां उक्तिः, तत्र शरीराद्यन्तर्वर्तित्वं प्राणादीनां केषांचिद्ज्ञायत इति आन्तरपदार्थस्य द्वारत्वोक्तिर्युक्तैव । 'यथा सोम्य मधुमधुकृतोनिस्तिष्ठन्ति' इत्यादेरनन्तरं 'भूयएवमया भगवान्विज्ञापयतु' इत्याद्युक्तिरेषु (छा) 'ऐतदात्म्यमिदम्' इत्यादिप्रतिपर्यायमनुवृत्त्या अनेकदृष्टान्तैः उक्तार्थदृढीकरणतात्पर्येणोपपत्त्वने इति न तत्राब्रह्मत्वशङ्का अन्यत्वस्यायुक्तत्वात् । तत्र 'ऐतदात्म्यमिदंसर्वम्' 'तत्त्वमसि' इति वाक्यस्यैव नवकृत्वोऽभ्यासः । अत्रतु ब्रह्मशब्दाभ्यासत्त्वेऽपि अन्नप्राणादीनां भिन्नतया अन्यत्वोक्तिबाधकत्वेनच अभ्यासो नघटते इत्यन्यत्वमन्नमयादेरब्रह्मत्वबोधकमेव । एवं पुनरुपसपत्तिश्च । अत्रतु अन्यत्वं स्पष्टमेवोक्तमिति पञ्चानां ब्रह्मत्वं नविवक्षितम् । सूत्रे अभ्यासशब्दोवाभ्यास. धर्मधर्मिणोरुभयोरानन्दमयोरिति पूर्वमेवो(१९१.पु)क्तम् । तेनानन्दमयस्यैव ब्रह्मत्वं सिद्ध्यति ॥

परमते 'आनन्दमयोऽभ्यासात्' इत्यत्रानन्दमयपदं 'ब्रह्मपुच्छंप्रतिष्ठा' इतिवाक्यं लक्षयति प्राधान्येन ब्रह्मप्रतिपादकमिति साध्याध्याहारः इदञ्च साध्यं 'अभ्यासादिति' हेतुबलादेव लभ्यते तात्पर्यलिङ्गान्तर्गतस्याभ्यासस्य प्राधान्यसाधनएव स्वारस्यात् । आनन्दमयस्य ब्रह्मत्वसाधनपरतया सूत्रव्याख्यानेचाभ्यासादितिहेतो. स्वारस्यं न लभ्यते जैवानन्दविलक्षणस्यापि ब्रह्मलिङ्गत्वेन तल्लिङ्गादित्येव निर्देशे तत्सम्प्रहोपपत्तेः तदभ्यासपर्यन्तधावनस्य निष्फलत्वात् । प्राधान्यरूपेच साध्ये आनन्दमयस्यानन्वयात् तेन पदेन 'ब्रह्मपुच्छंप्रतिष्ठा' इति वाक्यलक्षणया नकाचिदनुपपत्ति. ' इति । 'आनन्दमयः न निगमनश्लोकप्रतिपाद्यः इति साध्याध्याहारेण सूत्रयोजना तत्रचाभ्यसादित्यनेन निगमनश्लोके ब्रह्मपदाभ्यासात्तत्रैव स इत्येनाभिनिपदेनानन्दमयस्य ब्रह्मपदार्थगोचरसदसत्त्वाधीनसदसत्त्वाश्रयतया अभ्यासाच्च नैकमुपक्रमस्थपुच्छपदमनुसृत्यानेकबाधेन निगमनश्लोकस्यानन्दमयविषयत्वं कल्पनीयमिति च ब्रह्मविद्याभरणे यद्यप्युक्तम्; तथाऽपि नायमर्थः श्रुतौ विवक्षितः । अयमशः निरतिशयदशाशिरस्कतयाऽभ्यस्यमानः आनन्द इति भगवदुक्त्या धर्म्यानन्दबोधकवाक्यानां धर्मानन्दबोधकवाक्यानां चैकार्थकत्वस्य प्रतिपादनेन च परोक्तार्थस्य श्रुत्यनभिप्रेत स भगवतैव प्रदर्शितम् । लिङ्गादित्युक्तौ एकएव हेतुर्भवेत् 'तात्पर्यविशेषसूचनायाभ्यासादित्युक्तमिति निरतिशयदशाशिरस्कः अभ्यस्यमान आनन्दः' इत्यनेनैव बोधितम् ।

किंच 'आनन्दं ब्रह्मणो विद्वान्' इत्यभ्यासस्य विवक्षितत्वेन तत्र षष्ठ्याः परोत्प्रेक्षितरीत्या अभेदार्थकत्वं न संभवतीति बोधनायापि अभ्यासादित्युक्तिः । पुच्छपदसमभिव्याहृतब्रह्मशब्दवैलक्षण्यमप्यत्र विवक्षितम् । पुच्छशब्दा .

## गूढार्थसंग्रहः

अनेके अभ्यस्ताः, तत्रच पूर्वपुच्छपदार्थाविलक्षणार्थकं यमत्र पुच्छपदस्य परिदष्यते। सिद्धान्तेतु आनन्दशब्दस्य एकार्थकत्व मेव निर्विशेषस्यात्र विवक्षा नास्तीति सूचनायाऽप्यभ्यासादित्युक्तम् । षष्ट्यभ्यासेनापि 'शब्दविशेषात्' इतिसूत्रोक्तदिशा सविशेषपरत्वं बोध्यते । अवाङ्मनसगोचरानन्दपरस्य 'यतो वाचो निवर्तन्त इत्यभ्यस्तवाक्ये विवक्षितम् । तेन सविशेषस्यैवात्र प्रतिपाद्यता बोधिता भवति । 'अभ्यासात्' इत्यत्र एवमर्थस्य विवक्षितत्वादेव आनन्दमयस्य सविशेषस्य परमात्मत्वं सिद्ध्यति । प्रकृतार्थस्यैवाभ्यासेन आनन्दमयस्य परमात्मत्वं न संभवतीति परोक्तशङ्काऽपि निरवकाशा । धर्मधर्म्यानन्दबोधकस्याभ्यासस्यैव सूत्रे विवक्षितत्वेन सङ्कोचे मानाभावात् । धर्मिण आनन्दत्वेन तद्धर्मस्यानन्दत्वबोधनाय प्रथमं तद्धर्मिणः आनन्दत्वोक्तिः । श्रुतिलिङ्गादिसूत्रोक्तप्रक्रिया भिन्ना, उपक्रमोपसंहारादिता पर्यालिङ्गप्रक्रियाचान्या । 'आनन्दं ब्रह्मणो विद्वान्' इत्यभ्यासस्यैव विवक्षितत्वेन पुच्छपदाभ्यासेऽपि 'प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौहि भेदे' इति सूत्रोक्तदिशा सविशेषस्यानन्दमयस्यैव तात्पर्यविषयत्वं ख्यापयति । तत्र रूपणमात्रतायाः सर्वैरप्यङ्गीकर्तव्यत्वात् । धर्मधर्म्यानन्दाभ्यासस्य आनन्दमयस्यपरमात्मसाधकत्वमुक्तंभवति पुच्छपदाभ्यासेऽपि । तत्र 'ब्रह्मविदाप्नोति परम्' इति वल्ल्युपक्रमः । 'आनन्दं ब्रह्मणो विद्वान्' इति वल्ल्युपसंहारः अभ्यासश्च । उपसंहारवाक्यस्यैताभ्यासेन उपक्रमे सविशेषब्रह्मविवक्षितमिति निर्धारितं भवति । एतेन 'सत्यज्ञानमनन्तम्' इत्यत्र गुणानन्त्यमेव विवक्षितमिति च निर्धारितम्। एव तात्पर्यसूचनार्थैवाभ्यासादिति हेतुःप्रयुक्तः, अनेन हेतुना आनन्दमयस्य परमात्मत्वं निर्धारितं भवति ॥

माण्डूक्योपनिषदि 'सुषुप्तिस्थान एकीभूतः प्रज्ञानघनएव ह्यानन्दमयोह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयःपादः एष सर्वेश्वरः एष सर्वज्ञः एषोन्तर्यामी एषयोनिस्सर्वस्य प्रभवाप्ययौहि भूतानां' (मा.का.२.ख.५.६) इत्यत्र प्रज्ञानघनस्यैव आनन्दमयत्वाभिधानेन सुषुप्तौ परमात्मनि जीवानां शयनस्य श्रुत्यन्तरे प्रतिपादनेन आनन्दमयो न जीवः किंतु परमात्मैवेत्युक्तिरेव युक्ता । आनन्दमयस्य सर्वान्तरत्वोपपादनार्थमेवैतत्प्रकरणप्रवृत्त्या माण्डूक्योक्तान्तर्यामि वैकार्थ्यम् । एतेन 'असन्नेवसभवति' इत्यादावपि आनन्दमयस्यैव ब्रह्म वनिश्चयेन ब्रह्मसदसत्त्वज्ञानाधीनानन्दमयसदसत्त्वविषयकत्वं परोक्तं निरवकाशम् ।'घटमय' इत्याद्यर्थयोगेन 'आनन्दमय' इत्यत्र विकारार्थे मयट् न संभवतीत्युत्तरत्र स्फुटीभविष्यति । माण्डूक्ये सर्वज्ञत्वं यदुक्तं 'ब्रह्मणा विपश्चिता' इत्युपक्रमे विपश्चिच्छब्दे विवक्षितमानन्दमये सङ्गतमिति 'नेतरोऽनुपपत्तेः' इत्यत्र भाष्ये वक्ष्यते। आनन्दमयस्य माण्डूक्ये 'एषयोनिस्सर्वस्य प्रभवाप्ययौहि भूतानाम्' इति सर्वकारणत्वोक्त्या 'यदिदंकिंच' इत्युत्तरत्र आनन्दमयस्यापि सृज्यत्वमुच्यत' इति न्यायरक्षामण्युक्तिरपि न घटते । अत्र माण्डूक्यवाक्ये प्रतिपन्ने आनन्दमये प्राज्ञे सुषुप्तौ जीवानां शयनस्य श्रुत्यन्तरतसिद्धया 'सुषुप्त्युत्क्रान्त्योर्भेदेन' 'तदभावोनाडीषु तच्छ्रुतेरात्मनि च' इति सूत्रद्वयानुसारेण आनन्दमये जीवभेदोऽपि सिद्ध्यतीति अत्र विज्ञानमयाज्जीवादन्यत्वमानन्दमयस्य यदुक्तं तदप्रकम्प्यम् । 'अभ्यासादिति हेतुना आनन्दमयस्य ब्रह्मत्वं सूत्रकृत्तात्पर्यविषय इति साधनेन ब्रह्मविद्याऽऽभरणे यः सूत्रार्थः स अभिनिवेशनिबन्धनस्तोत्प्रेक्षामूलक एवेति सिद्धम् ॥

नवीनास्तु—'येऽन्नं ब्रह्मोपासते' 'अन्नं ब्रह्मेतिव्यजानात्' इत्याद्यभ्यासेनानन्दानन्दमययोः स्थानप्रमाणैनैकत्वेन अन्नमयादीनां पञ्चानां ब्रह्मत्वं ब्रह्मशब्दाभ्यासस्याविशेषात् । श्रुतावन्नमयस्यादित्वेऽपि सूत्रे आनन्दमयस्येतरोपलक्षकत्वम्। सूत्रस्याल्पाक्षरत्वात्। अन्नमय इत्युक्तौ ततोऽप्यल्पाक्षरत्वं संभवतीति अन्नमय इत्येव किमिति नोक्तमितिचेत् 'आनन्दमयरूपेतु ब्रह्मणः पुच्छतोक्तितः । समस्तब्रह्मता प्राप्तेः आनन्दमयनामहि ॥' (अनु) इत्युक्तदिशा पूर्वपक्षयुक्तित्वेनान-

श्रीभाष्यम्

आह-नायमानन्दमयो जीवादन्यः, विकारशब्दस्य मयट्प्रत्ययस्य श्रवणात् ' मयड्वैतयोः ' (अष्टाध्याय्यां.४.३.१४३) इति प्रकृत्य ' नित्यं वृद्धशरादिभ्यः ' (अष्टाध्ययी.४.३—१४४) इति विकारार्थे मयट्स्मर्यते। वृद्धश्चायमानन्दशब्दः। ननु प्राचुर्येऽपि मयडस्ति

श्रुतप्रकाशिका

सुत्रान्तरेणानन्दमयशब्दस्य परमात्मपरतामाक्षिप्य प्रतिवक्ति विकारेत्यादिना सूत्रेण, तत पूर्वपक्षमुपन्यस्यति—आहेत्यादिना। मयटो विकारवाचित्वमुपपादयति मयड्वैतयोरित्यादिना। विकारार्थत्वस्य ज्ञापनार्थं मयड्वैतयोः इत्युक्तम्। एतयोः तस्य विकारः अवयवे च प्राण्योषधिवृक्षेभ्यः इति प्रकृतयोर्विकारावयवयोरितिहि तस्यार्थः। अयमर्थ. प्राग्दीव्यतोणित्यधिकारसूत्रम्, आसिन्नर्थद्वयेऽपि वृद्धसंज्ञानां शरादिगणान्तर्गतानां च मयडेव नाण्प्रत्यय इत्यपवदति ' नित्यं वृद्धशरादिभ्यः ' इति सूत्र ' वृद्धिर्यस्याचामादिस्तद्वृद्धम् ' इति सूत्रेणानन्दशब्दस्य वृद्धसंज्ञत्वाद्विकारार्थे मयट्प्रत्ययो विहित इति॥

गूढार्थसङ्ग्रहः

न्दमयशब्दनिर्देशः' इति वदन्ति। ' अभ्यासादिति सूत्रार्थतुः ' येऽन्नब्रह्म ' ' अन्न ब्रह्मेतिव्यजानात् ' इति ब्रह्मशब्दाभ्यासस्यैव नवीनसम्मतत्वेन सूत्रस्याल्पाक्षरत्वेनेतरोपलक्षकत्वं वदतामते ततोऽप्यल्पाक्षरत्वेन अन्नादिशब्दनिर्देशं विहाय आनन्दमयशब्दनिर्देशेन सूत्रकृतो नायमर्थोऽभिप्रेतः। ब्रह्मनिष्ठगुणक्रियाऽवयवादीनां ब्रह्माभेदवादिमते ' आनन्द ब्रह्मणो विद्वान् ' इति षष्ठ्यभ्यासेऽपि अभेदएव विवक्षित इति सिद्धान्तेन अवयवावयविनोरभेदः निश्चितएवेति समस्ता ब्रह्मता प्राप्तिर्न घटते। अनेनावयवावयविनोरभेदः सूत्रकृतो विवक्षित इत्यत्र न किंचिन्नियामकं पश्यामः। सूत्रे तद्वाचकपदाभावात्। किंच विकारशब्दान्नेतिचेदिति शङ्कायाः अन्नमय एव सम्भवेन पञ्चानां ब्रह्मत्वं सूत्रकृतो विवक्षितमिति सूत्रार्थमणिमञ्जर्यामुक्तत्वेन लाघवादन्नादिशब्दानामेव निर्देश उचितः नवीनमत इति आनन्दमयशब्दानिर्देशेन श्रुतावन्नमयाद्यन्यत्वप्रतिपादनेन च आनन्दमयस्यैकस्यैव ब्रह्मत्वं सूत्रकृतो विवक्षितमिति निश्चीयते। सूत्रस्याल्पाक्षरत्वेनेतरोपलक्षकत्ववादिमते आनन्दमयपदस्य बह्वक्षरत्वात्। विज्ञानमयपर्यायेऽपि ब्रह्मशब्दाभ्याससत्वाच्च। आनन्दमयवाक्ये ब्रह्मणः पुच्छत्वोक्त्या समस्ता ब्रह्मता कथं साध्यते? पुच्छशब्दस्य गौणार्थकत्वमङ्गीकृत्य ब्रह्मशब्दस्य मुख्यार्थकत्वंखलु वाच्यम्; प्रतिपर्यायं ब्रह्मशब्दवत् पुच्छशब्दोऽपि पठित. आनन्दमयपर्याये ब्रह्मणः पुच्छतोक्तौ इतरब्रह्मशब्दानामभ्यासेनान्नादेः ब्रह्मत्वं प्रागेव निश्चितमिति सर्वेषामब्रह्मत्वस्य प्रसङ्गाभावात् अतः अन्नादिशब्द परित्यज्य आनन्दमयशब्द प्रयोक्तुस्सूत्रकृतः आनन्दमयमात्रस्य ब्रह्मत्वं सम्मतम्। अन्यत्र ब्रह्मशब्दः द्वारतया उपयुज्यते। श्रुतावन्तरशब्दप्रयोगेण तत्पूर्वमात्मशब्दसद्भावाच्च अन्नाद्यन्तरत्वेनानन्दमयस्य बोधनार्थमन्नादेर्द्वारत्वं सम्भवत्येव। एवं बोधनंतु स्थूलारुन्धतीनयेन युक्तमेव। ' यतोवाचो निवर्तन्त ' इत्यत्र अवाङ्मनसगोचरानन्दवत्त्वस्य नवीनानामपि सम्मतत्वेन निरतिशयत्वविशिष्टस्य अभ्यासो नैवेति चन्द्रिकोक्तिर्निरवकाशा। भृगुर्वरुणोपदिष्टानां द्वारत्वं वरयेव तावन्मात्रेण नान्नब्रह्मेति व्यजनादित्येव वक्तव्यमिति नियमः। पुनरुपसम्पत्त्यैवान्नस्य ब्रह्मताशानं नास्तीति निश्चयसम्भवात्। नह्येकयैव रीत्या सर्वत्र वाच्यमिति नियम.। अतोऽन्नादीनां द्वारत्वोक्तिर्युक्तैव अतश्च विज्ञानमयाज्जीवादन्यत्वमानन्दमयस्याप्रकम्प्यमित्यभिप्रेत्योक्तम्—अतो विज्ञानमयादित्यादि॥

वृद्धश्चायमानन्दशब्दइति। यद्यपि ' नित्यं वृद्धशरादिभ्यः ' इतिसूत्रे 'मयड्वैतयोः ' इतिस्थान [illegible]

### श्रीभाष्यम्

' तत्प्रकृतवचने मयट् ' इति स्मृतेः । यथा ' अन्नमयो यज्ञः ' इति । सएवायं भविष्यति नैवम्—अन्नमय इत्युपक्रमे विकारार्थत्वं दृष्टम् , अत औचित्यादस्यापि विकारार्थत्वमेव युक्तम् । प्राचुर्यार्थत्वेऽपि जीवादन्यत्वं न सिद्ध्यति । तथाहि आनन्दप्रचुर इत्युक्ते दुःख मिश्रत्वमवर्जनीयम् । आनन्दस्यहि प्राचुर्यं दुःखस्याल्पत्वमवगमयति । दुःखमिश्रमेवहि जीवत्वम् । अत औचित्यप्राप्तविकारार्थत्वमेव युक्तम् ॥

किञ्च लोके मृन्मयं हिरण्मयं दारुमयमित्यादिषु, वेदे च ' पर्णमयी जुहः ' (यजुषि.३. कां.५.प्र.७ अनु) ' शमीमय्यस्स्रुचः ' (      ) ' दर्भमयीरशना ' (यजुषि.३.अष्टके.२.प्र ८-अनु) इत्यादिषु मयटो विकारार्थे प्रयोगबाहुल्यात्सएव प्रथमतरं धियमधिरोहति जीवस्य चानन्दविकारत्वमस्त्येव तस्य स्वत आनन्दरूपस्य सतस्संसारित्वावस्था तद्विकारएवेति अतो विकारवाचिनो मयट्प्रत्ययस्य श्रवणादानन्दमयो जीवादनतिरिक्त इति । तदेतदनु भाष्य परिहरति—

### श्रुतप्रकाशिका

सिद्धान्तच्छायया चोदयति नन्विति । सएवायंभविष्यतीति । विकारार्थत्वेऽपि जीवात्मनि विकारासम्भवा द्विकारपरत्व त्वन्मतेऽप्यनुपपन्नमिति भावः । अन्नप्रायन्यायेन परिहरति नैवमिति । अत. उपक्रमदर्शनात् औचित्यात् उपक्रमप्रतिपन्नस्वीकारौचित्यात् । प्राचुर्यार्थत्वेऽप्यभिमतासिद्धिमाह—प्राचुर्येति । जीवादनन्यत्वे हेतुमाह—तथाहीति । दुःखमिश्रत्वे हेतुमाह—आनन्दस्येति । प्राचुर्यार्थत्वस्वभावात्प्रतियोगिन्यपेक्षिते सुखप्रतिसम्बन्धितया साहचर्यप्रसिद्धदुःख- गताल्पत्वस्य प्रतियोगित्वमिति भावः । ततःकिमित्यत्राह—दुःखेति । उभयथाऽपि जीवत्वसिद्धौ किमिति विकारार्थत्व माद्रियत इत्यत्राह—अतइति । अतः प्राचुर्येऽपि जीवान्यत्वासिद्धेरौचित्याधिक्याच्च विकारार्थत्वमेव ग्राह्यमित्यर्थ. प्रयो- गप्राचुर्यमाह—किञ्चेति । अवयवार्थादपि प्राचुर्यार्थे प्रयोगबाहुल्याच्चद्याद्व्यर्थे प्रथमतरमिति तरपः प्रयोग. । प्रसिद्ध- मप्ययोग्य न ग्राह्यमिति शङ्कायां जीवस्य विकारत्वमुपपादयति जीवस्यचेति । तर्ह्यजत्वनित्यत्वादिविरोध इत्यत्राह— तस्येति । स्वत आनन्दरूपस्य तस्य दुःखित्वाद्यवस्थायोगो जीवत्व अत आनन्दविकारो जीव. आनन्दात्मकस्वरूपापेक्षया नित्यत्वादिवाद इत्यर्थः । शङ्कायास्सूत्रत्वात्तदनुभाष्येत्युक्तम् ॥

### गूढार्थसंग्रह

विहाय सर्वस्यानुवृत्तिरितिकाशिकोक्त्या वेदे आनन्दमयशब्दे विकारार्थे मयट् न सम्भवति । विकारार्थमयट्प्रायपाठात् ' आनन्दमय इत्यत्र विकारार्थे मयडिति परोक्ति(श)रपि नघटते । तथाऽपि 'नित्यं वृद्ध' इत्यत्र भाषाग्रहण नानुवर्तते । अनुवृत्तावपि भाषायां नित्यमन्यत्र कात्विकः इत्याश्रित्य मयट् सुसाधः । अथवा ' हेतुमनुष्येभ्यः ' इत्यनुवर्तमाने 'मयट्च'इति सूत्रेण आगतार्थे मयड्विकारइतितु आर्थिकार्थकथनमेवेत्यभिप्रेत्येत्यमुक्ति एतेनानन्दमयशब्दे विकारार्थे मयटः असम्भवेन सूत्रे आनन्दमयमात्रस्य विवक्षाया अयोगेन आनन्दमयशब्दस्य अन्नमयाद्युपलक्षक वाङ्गीकारे अन्नप्राणमन श्शब्दाना द्व्यच्त्वेन 'द्व्यचः छन्दसि' इतिसूत्रेण विकारार्थे मयट् सम्भवतीति पश्चात् प्रकृत्य सूत्रकाराभिमतमिति सूत्रार्थ मणिमञ्जर्युक्तिर्निरवकाशा । आनन्दमयो जीवादनतिरिक्तइति । उपाध्यवच्छिन्नजीव एवानन्दमयइति परमन्थेऽपिस्फुटम्

श्रीभाष्यम्

## सू.१४—विकारशब्दान्नेतिचेन्नप्राचुर्यात् (१.१.६)

नैतदुक्तम्; कुत.? (प्राचुर्यात्) परस्मिन्ब्रह्मण्यानन्दप्राचुर्यात् प्राचुर्यार्थे च मयट्सम्भवात्। एतदुक्तं भवति शतगुणितोत्तरक्रमेणाभ्यस्यमानस्यानन्दस्य जीवाश्रयत्वासम्भवाद्ब्रह्माश्रयोऽयमानन्द इति निश्चिते सति तस्मिन्ब्रह्मणि विकारासम्भवात् प्राचुर्येऽपि मयड्विधिसम्भवाच्चानन्दमय. परं ब्रह्म इति। औचित्यात्प्रयोगप्रौढ्या च मयटो

श्रुतप्रकाशिका

## सू. १४—विकारशब्दान्नेतिचेन्नप्राचुर्यात् [१-१-६]

सूत्रमुपादत्ते विकारशब्दान्नेतिचेन्नप्राचुर्यादिति। द्वितीयस्य नञा निषेध्य पूर्वपक्षिमतस्यापपन्नत्वमित्यभिप्रायेण नैतद्युक्तमित्युक्तम्। प्रतिज्ञा हेतुवदन घटयितुमाकाङ्क्षा दर्शयति कुत इति। कस्मिन्कस्य प्राचुर्यमित्यपेक्षायामाह—परस्मिन्निति। नकेवल प्राचुर्यरूपार्थसद्भावेनाल शब्दशक्तिश्चापेक्षितेति शङ्काया सूत्राभिप्रेतार्थमाह—प्राचुर्यार्थेचेति। मयट्प्रत्ययस्य प्राचुर्यार्थत्वमपि सम्भवतु तथाऽपि विकारार्थत्वपरित्यागे कोहेतुरित्यत्राह—एतदुक्तमिति। अभ्यस्यमानानन्दयोग उत्तरसूत्रगतानामन्येषामपि हेतूना प्रदर्शनार्थं अयोग्यत्व त्यागहेतुरित्यर्थ बाधकसद्भावाद्विकारार्थ न त्यज्यतेचेत् पूर्वोक्तबाधकसद्भावात् तत् स्वीक्रियतामिति शङ्काया परेण विकारार्थत्वस्वीकारसाधकतयोक्तमप्रयुक्तप्रायत्वाय प्रयोगप्राचुर्य च परिहरति औचित्यादिति। औचित्य प्रकरणौचित्य तल्लिङ्गबाध्य प्रयोगप्रसिद्धिरपि गङ्गापदादिष्वर्थविरोधेन बाधिता। अत उभयमपि प्रमाणा तराबाधितत्वेऽस्यैवार्थसाधक अत्र त्वर्थविरोधान्नसाधकमित्यर्थ अर्थविरोधात् आनन्दमय जीव इति विका-

गूढार्थसङ्ग्रह

आनन्दस्य जीवाश्रयत्वासम्भवादिति। अयमर्थ प्रागेव निरूपित। औचित्यादित्यादि। एतेन ' स वा एष पुरुषोऽन्नरसमय ' इत्यत्र नान्नमात्र निर्दिष्टम्। किंतु त मय तद्विकारस्त्व' इति प्रागुक्त्यनुसारेण 'अन्नरसमय' इत्यत्र विकारार्थ मयडिति भगवदाशय प्रतीयते। प्रयोगप्रसिद्धेरर्थविरोधाभावात्। यद्यपि अन्नरसशब्दस्य व्युत्पत्त्य नास्ति तथाऽपि 'अन्नात्पुरुष, स वा एष पुरुषोऽन्नरसमय ' इत्यत्र 'अन्नात्पुरुष' इति पुरुषस्य अन्नविकारत्वकथनानन्तर ' अन्नरसमय ' इति पदप्रयोगेण ' बहुलं छन्दसि ' इति सूत्रेण मयट्। 'तत आगत' इत्यधिकारे ' मयट् च ' इति सूत्रेण वा ' अन्नात्पुरुष ' इति पुरुषस्यान्नविकारत्वस्य पूर्वमेवाभिधानेन अन्नविकारत्व पर्यवसानम्। यद्यपि पुच्छब्रह्मवादिभि आनन्दमयशब्देऽपि आनन्दमयस्य कोशत्वाङ्गीकारेण अविकारत्वरूपार्थविरोधो नास्तीति दूषण परिह्रियते। ' अन्नरसमय ' इत्यत्र विकारार्थे मयडुपपत्तिर्यथा तथैवानन्दमय इत्यत्रापीत्युच्यते तथाऽप्युभयत्र श्रुतिवाक्यवैरूप्येण तदुक्त नघटते। ' अन्नात्पुरुष ' इत्यन्नविकारत्वमभिधाय अन्नरसमयशब्दप्रयोगेण तत्र यथाकथञ्चनविधया विकारार्थे मयट उपपत्तिर्वाच्या, आनन्दमयशब्देतु नेत्थम् आनन्दात्—आनन्दमय इति श्रौतनिर्देशो वर्तते इति ' अन्नरसमय ' शब्दतुल्यन्यायत्व नानन्दमयशब्दस्य। अत्र प्रकरणे आनन्दमयपर्यन्तमेव अन्नमयादिपूर्वपूर्वा यत्वप्रतीति भृगुवल्ल्या अन्नप्राणमनोविज्ञानानन्तर वरुणोपसपत्ति, नतु आनन्दानन्तरम् इति प्रकरणद्वयमेकार्थक प्रतीयते। तेनानन्दहेतुकत्वमानन्दमयस्य

## श्रीभाष्यम्

**विकारार्थत्वमर्थविरोधान्न सम्भवति। किंच औचित्यं प्राणमय एव परित्यक्तम् तत्र विकारार्थत्वासम्भवात्। अतस्तत्र पञ्चवृत्तेर्वायोः प्राणवृत्तिमत्तामात्रेण प्राणमयत्वम्। प्राणापानादिषु पञ्चसु वृत्तिषु प्राणवृत्तेः प्राचुर्याद्वा। नच प्राचुर्ये मयट्प्रत्ययस्य प्रौढिर्नास्ति— अन्नमयो यज्ञः शाकटमयी यात्रेत्यादिषु दर्शनात्। यदुक्तमानन्दप्राचुर्यमल्पदुःखसद्भावमवगमयतीति तदसत् तत्प्रचुरत्वंहि तत्प्रभूतत्वम्। तच्चेतरस्य सत्तां नावगमयति, अपितु तस्याल्पत्वं निवर्तयति इतरसद्भावासद्भावौतु प्रमाणान्तरावसेयौ। इह च प्रमाणान्तरेण तदभावोऽवगम्यते ' अपहतपाप्मा ' (छां.८.१.५) इत्यादिना। तत्रैतावदेव वक्तव्यम्**

## श्रुतप्रकाशिका

रत्वयोः पूर्वोक्तादसम्भवादित्यर्थः। प्रकरणरूपमौचित्यमेव नास्तीत्याह—किंचेति। अर्थान्मयट्प्रत्ययस्य विकारवाचित्वं प्रकरणविवक्षितमिति शङ्कामपि शमयन्प्राणमयशब्दस्यार्थमाह—अतइति। प्राणशब्दोऽननरूपवृत्तिमात्रपरः। मयट्प्रत्ययः प्राचुर्येण सह संबन्धमभिदधाति। तत्र सबन्धमात्रपरत्वेन प्रथमयोजनायां प्राणनवृत्तिमानित्यर्थः। कृत्स्नमुख्यार्थत्यागादपि मुख्यार्थैकदेशाङ्गीकारो न्याय्य इतिभावः॥

यद्वा प्राणाख्यवृत्तिविशेषसम्बन्धित्वमात्रेण प्रत्ययस्यानर्थक्यादमुख्यार्थत्व वरमितिभावः। उचिततम योजनान्तरमाह—प्राणापानादिष्विति। पूर्वपक्षयुक्त्यन्तरमनुवदति यदुक्तमिति। आनन्दप्राचुर्यप्रतियोगितत्समानाश्रय दुःखाल्पत्वमेव, आश्रयान्तरगतस्यानन्दप्राचुर्यस्याश्रयान्तरगतमानन्दाल्पत्व न प्रतियोगितामर्हति स्वाश्रयगतदुःखाल्पत्वस्यैवान्तरङ्गत्वेन ग्राह्यत्वादिति पराभिप्रायः। दूषयति तदसादिति। प्रमाणान्तराविरुद्धप्रतियोग्यपेक्षत्वं न युक्तम्, अपितु प्रमाणान्तरासिद्धप्रमाणान्तराविरुद्धप्रतियोग्यपेक्षत्वमेव युक्तमिति परिहर्तुं प्रचुरशब्दस्यार्थान्तरसद्भावव्याप्त्यर्थमाह—तत्प्रचुरत्वं हीति। ततःकिमित्यत्राह—तच्चेति। तर्हि व्यवच्छेद्याभावे प्रत्ययवैयर्थ्यमित्यत्राह—अपित्विति। यदि प्राचुर्यवाचिमयट्प्रत्ययः नार्थान्तरसद्भावे प्रमाणं, तर्हि तत्सद्भावः केनावगम्यत इत्यत्राह—इतरेति। ततःकिमित्यपेक्षाया पराभिमतप्रतियोग्यभावो ब्रह्मणि प्रमाणसिद्ध इत्याह—इहचेति॥

तर्हि ब्रह्मणि प्रमाणविरुद्धप्रतियोगिदुःखान्वयद्योतको मयडर्थस्त्यज्यताम् इतरया तस्यानन्दप्राचुर्यस्य प्रतियोगि किमित्यत्राह—तत्रैतावदिति। प्रमाणान्तरासिद्धार्थान्तरप्रतियोगिक प्राचुर्यमभिदधतो मयट्प्रत्ययस्य स्वयमर्थान्तरसाधकत्वाभावात् ब्रह्मणि च दुःखसम्बन्धस्य प्रमाणबाधितत्वात्। जीवानन्दाल्पत्वस्य लोकसिद्धत्वाच्च, ब्रह्मानन्दप्राचुर्यप्रतियोगिजीवानन्दाल्पत्वमित्यर्थात् सिद्धमित्यर्थः जीवानन्दाल्पत्वस्य प्रतियोगित्व न केवलमर्थसिद्धम्। अपितु कण्ठोक्तंचेत्याह

## गूढार्थसङ्ग्रहः

नैव सम्भवति। अतश्चार्थविरोधात्प्राचुर्यार्थं एव मयट्। एवं विज्ञानमयशब्देऽपि प्राचुर्यार्थं एव मयट्। विज्ञानमयपर्याये ब्रह्मशब्दप्रयोगेण मुक्तौ ब्रह्मसाम्यस्य सूचनेन मयटः प्राचुर्यार्थत्व सम्भवति। जीवस्याप्यविकारित्वेन विकारार्थे मयडर्थविरोधान्न सम्भवत्येव॥

प्राणमय एव परित्यक्तामिति। अन्नप्राणमनश्शब्दानां द्व्यच्कत्वेन 'द्व्यचश्छन्दसी'ति सूत्रेण विकारार्थे मयटसम्भवः। अन्नप्राणमनःपर्यायेषु जीवस्य नविवक्षा स्थूलारुन्धतीनयेन द्वारतयैवात्मन्शब्दः उपपद्यत इति पूर्वमेवोक्तम्

## श्रीभाष्यम्

ब्रह्मानन्दस्य प्रभूतत्वमन्यानन्दस्याल्पत्वमपेक्षत इति। उच्यते च तत् 'स एको मानुषआनन्दः' (तै.आन.८.अ) इत्यादिना जीवानन्दापेक्षया ब्रह्मानन्दो निरतिशयदशापन्नः प्रभूत इति। यच्चोक्तम् जीवस्यानन्दविकारत्वं सम्भवतीति, तदपि नोपपद्यते

## श्रुतप्रकाशिका

उच्यतेचेति। अयमर्थः यदि सजातीयाल्पत्व समानाश्रय प्रतियोगि, तद्व्याहत यदि विजातीय समानाश्रयं तत्प्रमाणान्तराधीनम् ।यावद्भावं अन्याश्रयमपि सजातीय विजातीय वा प्रतियोगि, मानान्तरावसेय तत्रच यथा तेज.प्रचुरो गभस्तिमानित्युक्तः तेज:प्राचुर्यस्य चन्द्रादिगत सजातीयतेजोमान्द्य प्रतियोगि न गभस्तिमद्गततिमिराल्पत्वादि तद्धि प्रमाणबाधितम् इतरत्प्रमाणसिद्ध तारतम्यवाचिनश्शब्दस्य सजातीयप्रतियोगिज्ञापनपरत्व स्वारसिकं, बल्वत्तर इत्युक्ते पुरुषान्तरबलहि प्रतियोगितया प्रतीयते, नतु स्वगत विजातीय ज्ञान अतोऽन्तरङ्गत्व विप्लम् ॥

एवं ब्रह्मणि समानाश्रयमानन्दविजातीयदु:खाल्पत्वरूप प्रतियोगिश्रुतिनिषिद्धमन्याश्रय सजातीयाल्पत्वलक्षण प्रतियोगिश्रुत्यैव सिद्धमिति। जीवस्यानन्दविकारत्वमनुवदति यच्चोक्तमिति। आनन्दविकारत्व मयड्वाच्यत्वमित्यर्थः, दूषयति तदपीति। स्वरूपान्यथाभावलक्षणविकारार्थत्वमेव मयटो व्युत्पत्तिसिद्ध तच्चात्र नास्तीत्यर्थः। ज्ञानानन्दौ जीवस्व-

## गूढार्थसंग्रहः

अतः प्राण अचेतनएव विवक्षितः अथापि विकारार्थत्व न सम्भवतीत्याशयः। अन्यानन्दस्याल्पत्वमपेक्षतइति। प्रचुरप्रकाशस्सविता प्रकाशप्रचुरस्सविता इत्युभयत्रापि नक्षत्रादिगतप्रकाशाल्पत्वापेक्षमेव प्राचुर्यं प्रतीयत इत्यनुभवस्यापलापासम्भवात् 'प्रकाशमयो रविः' इतिवत् 'आनन्दमय' इत्यत्राप्यानन्दाल्पत्वसापेक्षमेव प्राचुर्यम्। 'घनतुहिनसैहिकेयाच्छादनारोपिततमोऽल्पत्वमपेक्ष्य घनाद्यपसारणसमये तथा प्रयोगो वर्तत इत्यत्रापि तथा स्यादिति शङ्कायामेतत्प्रकरणतत्पर्यानुरोधेन 'अभ्यासात्' इत्यत्र विवक्षितार्थमेवाह—उच्यते च तदित्यादिना। नक्षत्रादिगतप्रकाशाल्पत्वापेक्षया 'प्रकाशमयो रविः' इत्यादिप्रयोगा. नापह्नोतु शक्या.। अत्रतु जीवानन्दापेक्षया ब्रह्मानन्दस्योत्कर्षः श्रुत्यैव प्रतिपादित इति श्रुतिता पर्यवसानविषयीभूतएवार्थः अभ्यासात् इतिसूत्रे विवक्षितइति नदोष इत्याशयः॥

तदपि नोपपद्यते इति। सङ्कोचविकासात्मकपरिणाम एव विकारशब्दार्थः नतु परिणामसामान्यम् इति जीवस्य विकारः यः परोक्त. स नघटत इत्याशय.। यद्यपि 'तत आगत' इत्यधिकारे 'मयट्च' इत्यनेन मयडप्युक्तः। तथाऽप्यानन्दमयशब्दे विकारार्थे मयडिति नसभवति। आनन्दमये आनन्दविकारत्वानुक्त्या 'तत आगत' इत्यस्याधिकारतया मध्यमात्रासाधारण्यविरहेणच असाधारणार्थबोधकसूत्रविहितमयडेवात्र विवक्षितइति युक्तत्वात्। किंच स्वार्थेऽपिमयटः 'तत्प्रकृतवचने मयट्' इति सूत्रेण सिद्धया अर्थद्वयस्य आनन्दमय इत्यत्र विवक्षितत्वे आनन्दभृगुवल्लीवाक्यैकार्थ्य सम्भवतीति प्रागेवोपपादनेन 'तत आगत' इत्यर्थः अत्र नविवक्षित इति सूत्रकाराशयः। सूत्रे विकारशब्दस्य प्राचुर्यशब्दस्यच प्रयोगेणानन्दमय इत्यत्र मयट.पूर्वे प्रस्तुतस्यैव अर्थविषये शङ्कासमाधाने अत्र विवक्षितेति स्फुट प्रतीयेतेति विकारशब्दप्राचुर्यशब्दयोः मयट्शब्दघटितसूत्रस्य च वृत्तिकाराणां मत एव स्वारस्य निर्मत्सराणां स्फुटम्। यद्यपि मनोरमायां 'मयड्वैतयोर्भाषायाम्' इतिसूत्रे भाषायामितित्याज्य'मिति 'नित्यंवृद्धे'तिसूत्रे भाषायामित्यस्यानुवृत्तावपि भाषाया नित्यमन्यत्र क्वाचित्क इत्याभिप्रेत्य मयट्सुलभ.। यद्वा 'हेतुमनुष्येभ्य' इत्यनुवर्तमाने मयट्चेतिसूत्रेण आगतार्थे

### श्रीभाष्यम्

**जीवस्य ज्ञानानन्दैकस्वरूपस्य केनचिदाकारेण मृदइव घटाद्याकारेण परिणामस्सकलश्रुतिस्मृतिन्यायविरुद्धः। संसारदशायांतु कर्मणा ज्ञानानन्दौ सङ्कुचितावित्युपपादयिष्यते। अतश्चानन्दमयो जीवादन्यः परंब्रह्म ॥**

**इतश्च जीवादन्य आनन्दमयः परंब्रह्म–**

### श्रुतप्रकाशिका

रूपचेत् कथ दुःखाज्ञानसम्भव इत्यत्राह–संसारदशायांत्विति। सूत्रार्थे प्रकृतार्थेन सङ्गमयति अतइति। प्रसिद्धतरमुख्यार्थासम्भवे तदनुग्राहकहेत्वनुरोधेन सम्भवदनतिप्रसिद्धमुख्यार्थानुग्राहकहेतूनामनुरोद्धव्यत्वमस्मिन्प्रकरणे व्युत्पाद्यमिति स्फुटम् ॥

हेत्वन्तरचाह सूत्रकारः।

### गूढार्थसंग्रहः

मयड्विकार इतितु आर्थिकार्थकथनमेव इति वृत्तिकारमतेन पूर्वपक्षदूषणपरशङ्कराचार्योक्तिस्साधिता ॥

तथाऽपि 'भाषायाम्' इत्यस्य त्याज्यता भाष्यकाशिकयोर्नोक्ता। 'नित्यवृद्धे'त्यत्र भाषाग्रहण नानुवर्तत इत्यत्र न किंचिद्गमकम्। भाषाया नित्यमन्यत्र क्वाचित्क इति कल्पनमपि स्वोत्प्रेक्षामूलकमेव। अन्यन्नगमक किञ्चित्। 'ततआगत' इत्यधिकारे 'मयट्चे'तिसूत्रेण मयडङ्गीकारे आगतार्थस्यैव सिद्धिर्न विकारार्थस्यति प्रयासनैष्फल्यमेव स्यात्। तत्र आनन्दादागतः आनन्दमयशब्दार्थः विज्ञानादागतः विज्ञानमयशब्दार्थ इति पर्यवस्यति विज्ञानमयानन्दमयशब्दयोरेकैव रीतिर्वाच्या, 'विज्ञानयज्ञ तनुते' इति विज्ञानविज्ञानमयशब्दयोरेकार्थकत्व तत्र स्फुटमुक्तम् तत्रापि मनोरमोक्तरीतेरसम्भवः इतिप्राचीनवृत्तिकारमतदूषणमभिनिवेशमूलमेव। वृत्तिकारमतमेव निर्दुष्टमिति लघुमञ्जूषाया नागेशेन साधितम्। यथा 'तत्प्रकृतवचने मयट्' प्रकृतशब्देनात्र प्रचुरभावे ल्युट् तेन प्रचुरार्थबोधकात् प्रथमान्तात् स्वार्थे मयट् यथा घृतमय वर्तते प्रचुरघृतमित्यर्थः। यद्वा अधिकरणे ल्युट् प्राचुर्यवदन्नादिबोधकादधिकरणेऽर्थे मयट् यथा 'अन्नमयो यज्ञः प्रचुरान्नवानित्यर्थः। 'आनन्दमयो ब्रह्म चिन्मय ब्रह्म' इत्यादावयमेव मयट् प्राचुर्यंतु तत्रापरिच्छेद्य व अनन्तत्वप्रतिपादकश्रुते नच प्राचुर्यस्य स्वसमानाधिकरणविरोध्यल्पतासापेक्ष त्वेन दुःखानुवृत्तेरपि प्रतीत्यापत्तौ तस्य ब्रह्महानिरिति वाच्यम्। वैपुल्य रूपप्राचुर्यस्य तदपेक्षत्वेऽप्यपरिच्छेद्यत्वरूपस्य तस्य तदनपेक्ष त्वात् 'सत्यज्ञानमनन्त ब्रह्म' इति तैत्तरीयश्रुतौ अनन्तत्वोक्तेः प्राणमयादावप्ययमेव मयट् विकाररूपार्थस्याश्रुतेनोपपत्त्यभावात्। तदवच्छिन्नत्वेन तद्विकारत्वस्यादृष्टत्वात्, नहि घटमयः आकाश इति भवति। विज्ञानन्दमये न ब्रह्मानन्दविकारत्व तस्याविकारित्वात्, नापि वृत्त्यानन्दविकारत्व तद्विषयविज्ञानस्य तत्रान्तरत्वेन तस्य विज्ञानमयान्तरत्वानुपपत्तेः। प्रव्रज्याहोमे 'अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयामे शुद्ध्यन्ताम्' इति मन्त्रे शुद्धिस्तद्विषयावरणनाशरूपेति नविरोध इति व्याख्यश्रुतिकृतः हार्दिकमयीमिति प्रकाशप्रयोगेऽप्ययमेव मयडेकपदप्रयोगात् सनिरूपणोक्तरीत्या च तत्राप्यपरिच्छेद्य त्वरूपप्राचुर्यस्यैव भानात्। ब्रह्मणः आनन्दरूपत्वन्तु 'आनन्दोब्रह्म' इति श्रुतिबलात्'इति। एतेन ब्रह्मविद्याऽऽभरणाद्युक्तिः अभिनिवेशमूलेति सिद्धम् ॥

'आनन्दमयः' 'विकारशब्दात्' 'प्राचुर्यात्' इति पदत्रयस्वारस्य वृत्तिकारमतएवेति निर्मत्सराणा विदुषा स्फुटम्। तेन ब्रह्मविद्याऽऽभरणन्यायरक्षामण्योः स्वारस्यविरुद्धाप्रसिद्धार्थकल्पनमभिनिवेशमूलकमेव। 'प्राचुर्यात्' इत्यत्र

श्रीभाष्यम्

## सू. १५-तद्धेतुव्यपदेशाच्च(१-१-६)

'कोह्येवान्यात्कःप्राण्यात्। यदेष आकाश आनन्दो न स्यात्। एषह्येवानन्दयाति' (तै. आन.१) इति एषएव जीवानानन्दयतीति जीवानामानन्दहेतुरयं व्यपदिश्यते। अतश्चानन्दयितव्याज्जीवादानन्दयिताऽयमन्य आनन्दमयः परमात्मेति विज्ञायते। आनन्दमय एवात्र आनन्दशब्देनोच्यत इति चानन्तरमेव वक्ष्यते॥

इतश्च जीवादन्य आनन्दमयः-

श्रुतप्रकाशिका

## सू.१५—तद्धेतुव्यपदेशाच्च (१.१.६)

पूर्वोक्तमानन्दप्राचुर्यमप्यनेनोपपादितभवति, अनितरसुकरमोक्षप्रदानक्षमत्वाहि नितरामानन्दहेतुर्भवति। किंच धनप्रचुरोहि पुरुषोऽन्यस्मै तदभिप्रेत धन ददातीति सूत्रानन्तर्यम्। अस्यसूत्रस्य विषयवाक्यमाह—कोह्येवेति। श्रुतेरर्थमाह-एषएवेति। अन्यात्प्राण्यादिति भोगापवर्गसुखहेतुत्वमुक्तम्। यद्वा सत्ताहेतुत्व सुखहेतु वञ्चोक्तम्। पूर्वोक्तएव सम्यगर्थ, फलितहेतुमाह-अतश्चेति। कर्मकर्त्रैक्य न सभवतीति हेतुः, आनन्दशब्दवाच्यस्य ह्यानन्दयितृत्वमुक्तम्, नत्वानन्दमयस्येत्यत्राह-आनन्दमय एवेति॥

एवमानन्दमयप्रकृतिप्रत्ययार्थविषय सूत्रत्रय प्रवृत्तम्। अथानन्दवल्लीमादिमध्यान्ततोऽनुसन्धायार्थं निष्कृष्टुकामः प्रथममुपक्रमस्थहेतुमवतारयति-इतश्चेति।

### गूढार्थसंग्रह

प्राचुर्यं स्वव्यधिकरणसजातीयाल्पत्वप्रतियोगिकम् इति 'स एको मानुष आनन्द' इत्यादिश्रुतिवाक्यपर्यालोचनया निर्णयेन जीवानन्दस्य प्राचुर्यपदार्थघटकत्वेन बुद्धिस्थतया तद्धेतुत्वस्य श्रुतावुक्त्याऽपि प्राचुर्यं पूर्वोक्तमेव विवक्षितमिति सिद्ध्यति। प्रथमसूत्रे 'अभ्यासात्' इत्यत्र धर्म्यानन्दस्याभ्यास विवक्षित इत्यर्थस्यापि दृढीकरणमुखेन हेत्वन्तरेणानन्दमयस्य जीवान्यत्वं साधयति—तद्धेतुव्यपदेशाच्चेति। 'इदँसर्वमसृजत यदिद किंच' इति सानन्दमय विकारजातप्रति ब्रह्मणः स्रष्टृत्वोपदेशादपि ब्रह्म स्वप्राधान्यनैव प्रतिपाद्य पुच्छरूपमिति (न्यायरक्षामणि) परेषामत निरस्यति—आनन्दमयएवात्रानन्दशब्देनोच्यत इति। 'आनन्दाद्ध्येव खल्विमानि भूतानि' इति वाक्ये आनन्दशब्दार्थ आनन्दमयशब्दार्थश्चैकएवेति पूर्वमुपपादितम्। जगत्कारणत्व यस्यानन्दस्य तस्यैव जीवानन्दहेतुत्वमत्र प्रतिपाद्यते इति 'आनन्दमयन्त्यभिसंविशन्ति' इत्यत्रोक्तप्राप्तिरपि आनन्दमयहेतुकैवेत्यर्थ एतेन सिद्ध। आनन्दमयस्य हेतुत्व जगत्कारणत्व मुक्तिहेतुत्वचेति द्विविधम्। 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूत' इत्युपक्रमोक्तार्थस्य 'अन्योऽन्तर आत्माऽनन्दमयः' इत्यत्रैव परिसमापनेनानन्दमयस्य जगत्कारणत्व सिद्धम्। आनन्दानन्दमययोरैक्यनिरूपणेन 'एषह्येवानन्दयाति' इत्यत्र आनन्दमयस्य मुक्तिहेतुत्वमपि सिद्ध्यति। एतेन सृष्टिवाक्यानां मुक्तिवाक्यानां च सामरस्य सिद्ध्यति। 'च' शब्देन आनन्दमयप्रति इतरस्य हेतुत्वानुक्तिः समुच्चीयते तेन (न्या र) परोक्ति अभिनिवेशमूलैव। 'यदिद किंच'इत्यत्र आनन्दमयो विवक्षित इत्यत्र नियामकाभावात्॥

श्रीभाष्यम्

## सू.१६=मान्त्रवर्णिकमेव च गीयते (१.१.६)

'सत्यंज्ञानमनन्तं ब्रह्म' (तै.आन.१) इति मन्त्रवर्णोदितं ब्रह्मैवानन्दमय इति गीयते। तत्तु जीवस्वरूपादन्यत् परं ब्रह्म। तथाहि 'ब्रह्मविदाप्नोति परम्' (तै.आ.१) इति जीवस्य प्राप्यतया ब्रह्मनिर्दिष्टम्। 'तदेषाऽभ्युक्ता' (तै.आन.१) इति तत् ब्रह्म अभिमुखीकृत्य प्रति पाद्यतयापरिगृह्य ऋगेषा अध्येतृभिरुक्ता। ब्राह्मणोक्तस्यार्थस्य वैशद्यमनेन मन्त्रेण क्रियत इत्यर्थः। जीवस्योपासकस्य प्राप्यं ब्रह्म तस्माद्विलक्षणमेव। अनन्तरं च 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' (तै.आन.१ अनु) इत्यारभ्योत्तरोत्तरैर्ब्राह्मणैर्मन्त्रैश्च तदेव विशदी क्रियते। अतो जीवादन्य आनन्दमयः॥

श्रुतप्रकाशिका

## सू. १६—मान्त्रवर्णिकमेव च गीयते [१.१.६]

*अक्षरार्थमाह*—**सत्यमिति**। *शब्दएवार्थः नतुच्छन्दः फलित इति ज्ञापयितु वर्णशब्दः। ततःकिमित्यत्राह*—**तदित्यादि**। ब्राह्मणस्थपरशब्दप्रत्यभिज्ञानाय परब्रह्मेत्युक्तम्। मान्त्रवर्णिकस्य जीवादन्यत्व कथमित्यत्राह—**तथाहीति**। प्राप्यत्वमस्तु *ततःकिं मान्त्रवर्णिकब्रह्मणो जीवादन्यत्वइत्यपेक्षाया ब्राह्मणमन्त्रयोर्घटक वाक्यमाह*—**तदेषाभ्युक्तेति**। *तद्व्याचष्टे* **तदिति**। तत्पदं ब्रह्मवाचि। अभिमुखीकरण चेतनधर्म इति तद्व्यावृत्त्यर्थमाह—**प्रतिपाद्यतयेति**। एषेति पदस्य विशेष्यमाह—**ऋगिति**। उक्तेति कथिते पौरुषेयत्वशङ्का स्यादिति तद्व्युदासार्थमाह—**अध्येतृभिरिति**। किमुक्त भवतीत्यत्राह—**ब्राह्मणेति**। श्रुतिषु मन्त्राणा प्राबल्य केचिद्वदन्ति तद्व्युदासार्थमाह—**ब्राह्मणोक्तस्येति**। ब्राह्मणोक्तार्थविशदीकरणरूपो मन्त्र इति प्रयोजकम्। सङ्ग्रहेणोक्तस्य विस्तरेण कथन, विस्तृतस्य प्रतिपत्तिसौकर्याय सङ्ग्रहेण कथनमपि वैशद्यावह नित्यनिर्दोषत्वाविशेषान्मन्त्रब्राह्मणयोः प्राबल्यदौर्बल्यविभागोऽनुपपन्नइति भावः॥

एव मन्त्रवर्णेन जीवब्रह्मभेदसिद्धि फलिता दर्शयति **जीवस्येति**। प्रासुरस्योपासकान्मस्वरूपस्यप्राप्तव्यस्य परब्रह्मणश्च कथमैक्यमित्यर्थः मान्त्रवार्णिक ब्रह्म जीवादन्यदस्तु अस्यैवानन्दमयत्वं कथमित्यत्राह—**अनन्तरंचेति**। पूर्वस्मिन्नस्मिन्नपि सूत्रे चशब्दो हेतुसमुच्चये **विकारशब्दात्** इतिसूत्रे स्वतन्त्रहेत्वन्तराभावात् न चशब्दः नाद्धि **आनन्दमयोऽभ्यासात्** इति सूत्रशेषम्॥

### गूढार्थसंग्रहः

'ब्रह्मविदाप्नोतिपरम्' इत्युपक्रमे उक्ता ब्रह्मप्राप्तिरूपा मुक्तिः 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता' इत्यनेन विशदीकृता। सैव 'शरीरे पाप्मनो हित्वा सर्वान्कामान्समश्नुते' इति विज्ञानमयपर्याये प्रतिपादिता। ब्रह्मप्राप्तिः सर्वकामावाप्तिः 'रसोवैसः रसꣳह्येवाय लब्ध्वानन्दी भवति एषह्येवानन्दयाति' इत्यत्र प्राप्तेरानन्दरूपत्वं तद्धेतुत्व परमात्मनः इति पूर्वसूत्रे उक्त भवति। सर्वकामावाप्तिः एतावता नैव विशदीकृता भवति, अतः ब्रह्मप्राप्तिः आनन्दमयप्राप्तिरेव। प्राप्तिश्च नैतस्मिन्लोके, अपितूर्ध्वलोक एव। तत्रैव सर्वकामावाप्तिरित्यर्थं साधयति— **मान्त्रवर्णिकमेव च गीयते** इति। (जि.अ.७७६.पु) 'ब्रह्मविदाप्नोति परम्, सोऽश्नुते' इति मन्त्रवर्णोक्तार्थ एव 'अस्माल्लोकात्प्रेत्य एत

### श्रीभाष्यम्

अत्राह—यद्यप्युपासकात्प्राप्यस्य भेदेन भवितव्यम्; तथाऽपि न वस्त्वन्तरं जीवान्मान्त्रवर्णिकं ब्रह्म; किंतु तस्यैवोपासकस्य निरस्तसमस्ताविद्यागन्धनिर्विशेषचिन्मात्रैकरसं शुद्धं स्वरूपम् तदेव 'सत्यंज्ञानमनन्तं ब्रह्म' (तै.आन.१.अनु) इति निर्दिश्यते। तदेव च 'यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह' (तै.आन.९) इति वाङ्मनसागोचरतया निर्विशेषमिति गम्यते। अतस्तदेव मान्त्रवर्णिकमिति तस्मादनतिरिक्त आनन्दमय इति। अत उत्तरं पठति—

## सू.१७—नेतरोऽनुपपत्तेः (१.१.६)

### श्रुतप्रकाशिका

उत्तरसूत्रस्य शङ्कामाह—अत्राहेति। अत्र उपासकप्राप्यभेदऽभिहितसतीत्यर्थः तस्यैवेति। कारणाविद्या आच्छादिकाऽविद्या कार्याविद्या विक्षेपकाऽविद्या च विवक्षिता समस्तशब्देन गन्धशब्देनापारमार्थ्यं फलितम्। अपुनरसम्बन्धोऽभिप्रेत: शुद्ध कर्म तत्फलान्वयरहितम्। निर्विशेषत्वमेवोपपादयति तदेवेति। ज्ञानपदेन निर्विशेषत्वमर्थसिद्धं ज्ञानस्य ज्ञानान्तराश्रयत्वाद्ययोगात्। वाङ्मनसनिवृत्तिवचनाच्च निर्विशेषत्वसिद्धिमाह—तदेवचेति। तदेव शुद्धस्वरूपमेव उपासकप्राप्यभेदोऽवस्थाभेदेनाप्युपपन्न इति न जीवविलक्षणत्वसिद्धिरित्यर्थः॥

## नेतरोऽनुपपत्तेः (१.१.६)

### गूढार्थसङ्ग्रहः

मानन्दमयमात्मानमुपसङ्क्रम्य इमाल्लोकान्कामान्नी कामरूप्यनुसञ्चरन् एतत्सामगायन्नास्ते' इत्यत्र विशदीक्रियत इति जिज्ञासाऽधिकरण एव भगवता निरूपणन सूत्रे गीयत इत्यनेन तदर्थो विवक्षित इति निश्चयस्सम्भवति। भगवताऽत्र अन्तिमवाक्यानुपादानेतु पूर्वमेव वाक्यत्रयोपादानेन बोधस्सम्भवतीत्यभिप्रायेण। एतेन 'सोऽश्नुत' इत्यत्र मुक्तिर्विवक्षिता 'एतमानन्दमयमात्मानमुपसङ्क्रम्य' इत्यादितु अविद्यावद्विषयमेव इति (श) परोक्तिः 'गीयत' इति वदतः सूत्रकृतोऽनभिमत इति सिद्धम्॥

वाङ्मनसागोचरतया निर्विशेषमिति गम्यतइति। अयमर्थः ब्रह्मविद्याऽऽस्मरणे साधितः। वाच इति ब्रह्मानन्देयत्ताप्रतिपादकविषयसत् सङ्कुचितार्थं स्यात्। निवर्तन्त इति पदस्वारस्येन प्रवृत्तिरप्यवगम्यते, प्रवृत्तस्यैव हि निवृत्तिः। इयत्तापरिच्छेदकाना च वाचां प्रवृत्तिर्नास्तीति तदपि पदमसङ्गतमेव स्यात्। ततश्च वाच इत्यसङ्कोचेन सर्ववाग्विषयम् नच तथापि सगुणानां वाचां शबलितस्वरूपपर्यन्तं प्रवृत्तानां विशुद्धस्वरूपपर्यन्तमप्राप्य निवृत्तिर्मनसा सगुणवस्तुग्राहिज्ञानाश्रयेण सहेति वक्तुं शक्यत्वऽपि निर्गुणप्रतिपादकवाचां तादृशमनसा सहप्रवृत्तानां निवृत्तिर्नास्तीति सगुणवाग्विषयतया वाच इति सङ्कुचितार्थं वक्तव्यमेवेति वाच्यम्; निर्गुणप्रतिपादकवचनजातस्य गुणानप्रतिपाद्य विशुद्धस्वरूपमात्रप्रतिपादकत्वेसत्यपि निर्गुणवाक्यार्थगोचरसाक्षात्कारपर्यन्तं औपाधिकगुणजातस्य विद्यमानतया तस्यां दशायामधिष्ठानमात्रपरिशेषेण विशुद्धस्वरूपाभावात् तासामपि वाचां मुक्तिदशाऽभिव्यङ्ग्य यादृश विशुद्धस्वरूप ततो निवृत्तिरस्त्येवेति न वाच इत्यस्य सङ्कोचः। नवा निवृत्तिपदस्वारस्यपरित्यागः॥

### श्रीभाष्यम्

**परमात्मन इतरो जीवशब्दाभिलप्यो मुक्तावस्थोऽपि न भवति मान्त्रवर्णिकः कुतः? (अनुपपत्तेः) तथाविधस्यात्मनो निरुपाधिकं विपश्चित्त्वं नोपपद्यते। इदमेवहि निरुपाधिकं विपश्चित्त्वं ‘सोऽकामयत बहुस्यां प्रजायेय’ (तै.आन.६) इति सत्यसङ्कल्पत्वप्रदर्शनेन विवरिष्यते। विविधंपश्यच्चित्त्वंहि विपश्चित्त्वम्। पृषोदरादित्वात्पश्यच्छब्दावयवस्य**

### श्रुतप्रकाशिका

इतरशब्दस्य सप्रतियोगिकत्वात् परमात्मन इत्युक्तम्। अनुपपत्तेरित्यस्मिन्पदे पञ्चम्यर्थे पश्चादस्यानुपपत्तिस्वरूपमाह—**तथेति**। **निरुपाधिकं विपश्चित्त्वमिति**। कर्मविशेषेन्द्रियाद्यनपेक्षत्वं निरुपाधिकत्वमिह चोपाधिरस्तिचेत् स वक्तव्यः तदभावादेव तदनुक्तिरिति केवलविपश्चिच्छब्दो निरुपाधिकविपश्चित्त्वमाहेत्यर्थः। नकेवलं निरुपपदत्वाद्विपश्चित्त्वस्य निरुपाधिकत्वमर्थसिद्धं श्रुतिसिद्धमपीत्याह—**इदमेवेति**। मुक्तस्य निरुपाधिकविपश्चित्त्वं संभवतीति शङ्कायां किं भवदभिमतमुक्तस्य विपश्चित्त्वोपपत्तिः? उतास्मदभिमतमुक्तस्येति विकल्पमभिप्रेत्य स्वाभिमतस्य मुक्तस्य तदनुपपत्तिरिदमेवेत्यादिभाष्येणोच्यते। विपश्चिच्छब्दार्थे ज्ञातेहि जीवे तदनुपपत्तिर्वाच्येत्यत्राह—**विविधमिति**। तर्हि विपश्यच्चिदिति वक्तव्यमित्यत्राह—**पृषोदरादित्वादिति**। ‘पृषोदरादीनि यथोपदिष्टम्’ इति पाणिनिः। पृषच्छब्दावयवतकारलो-

### गूढार्थसंग्रहः

नच प्रकरणाधीतानेकसगुणवाक्यानुसारेण ‘यतो वाच’ इत्यस्य एकस्य यथाकथंचित् व्याख्याने नदोष इति वाच्यम्; तात्पर्यग्राहकलिङ्गवतैकेनैवानेकबाधोपपत्तेः। इदं वाक्यमस्मिन्प्रकरणे द्विरभ्यस्यते मनोमयपर्याये ब्रह्मवल्ल्यन्ते च। तत्र कथमेकरूपेण द्विरभ्यस्यमानस्य वाक्यस्यान्यथानयनम्। उपक्रमेचानन्त्यं प्रतिज्ञातम् तदुपपादकतया सृष्टिवाक्यप्रवृत्तिः तत्र सृष्टितदुपयोगिगुणमात्रप्रतिपादने वस्तुपरिच्छेदस्य प्रसक्तेः आनन्त्यमप्रतिपादितमेव भवेदिति अस्मिन्प्रकरणे सृष्टिवाक्यजातमपवादमपेक्षमाणमेव भवतीति ‘यतो वाच’ इति वाक्य तदनुगुणमेव। ननु तत्प्रतिकूलम्। तदुद्देश्यसिद्ध्युपयोगित्वात्। ‘सोऽश्नुते सर्वान्कामान्सह’ इत्यत्र पाठविच्छेदेन ‘सह’त्यस्य युगपदित्येवार्थः। ननु ब्रह्मणा-हित्यम्। तथाचोपक्रमोपसंहारैकरूप्यमपि तात्पर्यग्राहक लिङ्ग ‘यतो वाच’ इत्यस्य मध्ये च ‘अदृश्येऽनात्म्ये’ इत्यादिरपवाद उपलभ्यते। ‘उदरमन्तर कुरुत’ इति च भेदनिन्दा। अतो निर्गुणप्रकरणेऽस्मिन् आनन्दमये सगुणे उपक्रान्तब्रह्मपर्यवसान कर्तुमशक्यम्। ‘आनन्दं ब्रह्मण’ इति षष्ठीच निर्गुणप्रकरणानुरोधात् ‘यदेष आकाश आनन्दो न स्यात् आनन्दो ब्रह्मेति व्यजानात्’ इति च पूर्वोत्तरवाक्यपर्यालोचनया अभेदसम्बन्धपरैव व्याख्येया ‘आनन्दमय’ इत्यत्र ‘मयट्च’ इतिसूत्रेण मयट्। विकार एवागतत्वोपचाराश्रयणात्। अतः विकारप्रायपाठेन आनन्दमयो नब्रह्म अतः ‘सत्यं ज्ञानमनन्त ब्रह्म’ इति मान्त्रवर्णकं ब्रह्म ‘यतो वाच’ इति वाक्यपर्यालोचनया निर्विशेषमेवेति निर्णयः। तेनानन्दमयः जीव एव नब्रह्मेति—**आनन्दमयः मान्त्रवर्णिकम्** इति पूर्वसूत्रपदद्वयेन मान्त्रवर्णिकत्वमानन्दमयस्यैवेति स्फुटप्रतीयते तस्मादितरः ‘एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमयः’ इति वाक्ये जीवभेदस्यानन्दमये प्रतिपादनात् जीवएवेन्यभिप्रेत्याह—**परमात्मन इतरः इत्यादिना** ॥

परैः विपश्चिता सहेत्यन्वयमनङ्गीकृत्य ‘ब्रह्मणाविपश्चिता’ इत्यत्र जीवस्य ब्रह्माभेदः विवक्षित इति प्रतिपाद्यते। ‘सह’त्यस्य ‘ब्रह्मणा’ इत्यनेन योगानङ्गीकारेऽपि विपश्चिच्छब्दस्यैव बाधकत्वेन परोक्तो जीवब्रह्माभेदः नात्र विवक्षामर्हति विपश्चिच्छब्दार्थस्य निर्विशेषे असम्भवात्। अनुपपत्तेः इत्यत्र विपश्चित्वाद्यनुपपत्तिर्विवक्षिता इति विपश्चिच्छब्दार्थमेव दर्शयति—**विविधं पश्यच्चित्त्वंहि विपश्चित्त्वमिति**। ‘विपश्चिता मेधाविना सर्वज्ञेनेति’ (शं.उ.भाष्यम्)। विपश्चिच्छब्दस्य

## श्रीभाष्यम्

यच्छब्दस्य लोपं कृत्वा व्युत्पादितो विपश्चिच्छब्दः। यद्यपि मुक्तस्य विपश्चित्त्वं सम्भवति तथाऽपि तस्यैवात्मनस्संसारदशायामविपश्चित्त्वमप्यस्तीति निरुपाधिकं विपश्चित्त्वं नोपपद्यते। निर्विशेषचिन्मात्रतापन्नस्य मुक्तस्य विविधदर्शनाभावात्सुतरां विपश्चित्त्वं न सम्भवतीति न केनापि प्रमाणेन निर्विशेषं वस्तु प्रतिपाद्यत इति पूर्वमेवोक्तम्। 'यतो वाचो निवर्तन्त' (तै.आन.९) इति च वाक्यं यदि वाङ्मनसयोर्ब्रह्मणो निवृत्तिमभिदधीत न ततो निर्विशेषतां वस्तुनोऽवगमयितुं शक्नुयात् अपितु वाङ्मनसयोस्तत्राप्रमाणतां वदेत् तथा च सति तस्य तुच्छत्वमेवापद्यते

## श्रुतप्रकाशिका

पश्यच्छब्दलोपः। पाणिनिवदासतममुनिभिः कृतनिर्वाहत्वादीदृशशब्दानां साधुत्वस्य पाणिन्यभिमत वचनेन ज्ञातंभवति। अतो विविधं पश्यच्चेतनत्वं विपश्चित्त्वमित्यर्थः। चिच्छब्दस्य ज्ञानवाचित्वे विविध पश्यच्चित्त्वमिति बहुव्रीहिः स्वपक्षेमुक्तस्य निरुपाधिकविपश्चित्त्वायोग उक्तः॥

अथ पराभिमतमुक्तस्य विपश्चित्त्वायोगमाह—निर्विशेषेति। विपश्चित्त्वमात्रमेव न सम्भवतीत्यभिप्रायेण सुतरामित्युक्तम्। न संभवतीत्यत्रेतिशब्दः सूत्रस्यपक्षर्मीव्याख्यान नकेवल विपश्चिच्छब्दमात्राद्धानिः। सर्वप्रमाणविरोधश्चेत्याह—न केनापीति। आर्थगुणनिषेधपरस्य सत्यज्ञानादिवाक्यस्य परिहारः प्रथमसूत्रोक्तोऽनुसन्धेयः 'यतो वाच' इत्यस्य वाक्यस्य निर्विशेषपरत्वं व्युदस्यति यतोवाचइत्यादिना। यदीत्यनुज्ञानप्रदर्शनार्थं तर्हि किमवगमयेदित्यपेक्षाया नकेवलमिथ्याबोधकत्वं किंत्वनिष्टबोधकत्वचेत्यभिप्रयन्नाह—अपितिवति। कथमस्यानिष्टत्वमित्यत्राह—तथाच सतीति। मनसोऽप्यगोचरत्वेन सर्वप्रमाणगोचरत्वं सिद्धं कृत्वा प्रमाणान्तरागोचरत्वमप्युपजीव्य तुच्छत्वमापादितम्। किं सर्वथा वाङ्मनसनिवृत्तिरुच्यते उतेयत्तागोचरवाङ्मनसनिवृत्ति। द्वितीयशिरसोऽभ्युपगमो वक्ष्यतइति प्रथमशिरसि तुच्छत्वमुक्तम्।

## गूढार्थसङ्ग्रह.

विविधेत्यर्थः। दृशिधातोः 'प्राघ्राध्मास्थाम्नादाण् दृश्यर्तिसर्तिशदसदांपिब जिघ्रधमतिष्ठ मनयच्छ पश्यर्च्छ धौशीयसीदाः' (७.३.७८) इति सूत्रेण पश्यादेशः। 'पश्' इत्यनेन पश्यादेशः सूच्यते। पृषोदरादित्वाच्छब्दसाधुत्वम्। अत्र ब्रह्मणा चिता' इति वाक्यद्वये चिदभेदविवक्षासम्भावनाया अवकाशः। जीवेश्वरयोः चित्त्वेनैकत्वोक्तिसम्भवात्। चिच्छब्दमात्रस्य श्रुतावनभिधानेन सर्वद्रष्टृचितः अत्र प्रतिपादनेन 'ब्रह्मणा विपश्चिता' इत्यत्र निर्विशेष न विवक्षितम्। किंतु सविशेषमेवेत्याशयः। तदेतत्प्रकाशयति —निर्विशेषचिन्मात्रतापन्नस्य इत्यादिना॥

न ततो निर्विशेषतां वस्तुनोऽवगमयितुं शक्नुयादिति। विवरणकारमते शब्दजन्यसाक्षात्कार एव मुक्तिहेतुः। वाचस्पतिमते मानससाक्षात्कारस्तथा। एतन्मतद्वय वाचो मनसश्चात्र निवृत्त्यभिधानेन श्रुतौ न विवक्षितमिति स्फुटम्। 'तत्त्वमसि' इति वाक्यस्यापि 'वाच' इत्यत्र सङ्ग्रहण 'आनन्द ब्रह्मणो विद्वान्' इत्यत्र मुक्तिहेतुज्ञानस्य परेषामपि विवक्षितत्वेन मुक्तिहेतुज्ञानविषयात् 'तत्त्वमसि' इति वाक्यस्यापि निवृत्तौ निर्विशेषस्यासिद्धेरेव स्यात्। एवं मनसोऽपि निवृत्तौ मानससाक्षात्कारोऽपि मुक्तिहेतुर्नस्यात्। अतश्च तुच्छत्व एव पर्यवसानं स्यादित्याह—तथाच तुच्छत्वमेवापद्यत इति। शक्त्या बोधकत्वरूपप्रवृत्त्यभावस्यैव निवर्तन्त इत्येतदर्थत्वात्। न तुच्छत्वम् 'कस्माद्युच्यते परं

### श्रीभाष्यम्

'ब्रह्मविदाप्नोति' (तै.आन.१) इत्यारभ्य ब्रह्मणो विपश्चित्त्वं जगत्कारणत्वं ज्ञानानन्दैकतानतामितरान्प्रत्यानन्दयितृत्वं कामादेव चिदचिदात्मकस्य कृत्स्नस्य स्रष्टृत्वं, सृज्यवर्गानुप्रवेशकृततदात्मकत्वं भयाभयहेतुत्वं वाय्वादित्यादीनां प्रशासितृत्वं शतगुणितोत्तरक्रमेण निरतिशयानन्दत्वमन्यच्चानेकं प्रतिपाद्य वाङ्मनसयोर्ब्रह्मणि प्रवृत्त्यभावेन निष्प्रमाणकं ब्रह्मेत्युच्यत इति भ्रान्तजल्पितं 'यतो वाचो निवर्तन्त' (तै.आ.१) इति यच्छब्दनिर्दिष्टमर्थं 'आनन्दं ब्रह्मणो विद्वान्' (तै.आ.१) इत्यानन्दशब्देन प्रतिनिर्दिश्य तस्य ब्रह्मसम्बन्धित्वं

### श्रुतप्रकाशिका

'ब्रह्मविदाप्नोतिपरम्' इति पूर्वापरवाक्यविरोधात् ब्रह्मणस्तुच्छत्वं व्याहतमित्यत्राह–ब्रह्मविदिति। व्याहतार्थं श्रुतिर्न प्रतिपादयतीतिचेत्तन्निर्विशेषपरत्वेऽपि तुल्यमित्यभिप्रायेण तत्तद्वाक्यप्रतिपन्नान् गुणानाह––विपश्चित्त्वमित्यादिना। 'ब्रह्मणा विपश्चिता' 'आकाशस्सम्भूतः' 'रसोवैसः' 'एषह्येवानन्दयाति' 'सोऽकामयत बहुस्यां प्रजायेय' 'तदनुप्रविश्य' 'अथसोऽभयङ्गतो भवति' 'भीषास्माद्वातःपवते' 'सएको मानुष आनन्दः' इत्येषां वाक्यानामर्थो विपश्चित्त्वमित्यादिनोक्तः। शतगुणितोत्तरक्रमेणेति। निर्विशेषत्वं विवक्षितंचेत् गुणापकर्षो वाच्यः गुणप्रकर्षमुक्त्वा वाङ्मनसनिवृत्त्यभिधानमानन्त्यविवक्षाकृतमित्यभिप्रायः। अन्यच्चेति। आदित्यमण्डलान्तर्वर्तित्वादिकं विवक्षितम्। एवं पूर्वापरवाक्यव्याहतिपरिहारार्थं स्वरूपमङ्गीक्रियतेचेत् तद्वद्गुणाश्च स्वीकार्या इत्युक्तंभवति एवं प्रकरणविरोध उक्तः॥

अथ स्ववाक्यविरोधमाह–यतोवाचइति। यच्छब्दनिर्दिष्टमानन्दमित्यत्र 'कश्चैष मौनः' 'यतोनवेदाः' इति सनत्सुजातोक्तश्लोकद्वयैकार्थ्यमनुसन्धेयम् व्यतिरेकनिर्देशेन भेदनिर्देशेन वैयधिकरण्येनेत्यर्थः। यच्छब्देनानन्दनिर्देशः आनन्दशब्देन प्रतिनिर्देशो ब्रह्मसम्बन्धित्वनिर्देशश्च वागविषयत्वे व्याहतास्स्युः, विद्वानिति तद्वेदनाभिधानं मनोगो

### गूढार्थसंग्रहः

ब्रह्म ! ' 'अथ नामधेय सत्यस्य सत्यम्' इत्यादेः बोधकत्वमात्रपरत्वेन न तुच्छत्वम्' (अ.सि.ल.चं) इत्यङ्गीकारे निवर्तन्ते' इत्यत्र सङ्कुचितार्थत्वमपरित्याज्यम्। शुद्धे ब्रह्मणि शक्त्यभावस्य परसम्मतस्य एतच्छ्रुतिविरुद्धत्वात्। एवं सङ्कोचे नियामकाभावाच्च॥

किंच आनन्दवल्लीप्रकरणस्य निर्विशेषपरत्वमेतच्छ्रुतिबलात् साधित ब्रह्मविद्याऽऽभरणादौ। श्रुतिश्चेयं न पराभीष्टं साधयितुमलम् क्वापि शब्दावाच्ये प्रमाणज्ञानस्य केनापि प्रवृत्त्यनङ्गीकारेण तस्य तुच्छत्वमपरित्याज्यमेव। उपक्रमोपसंहारैकरूप्यं परमते न सङ्गच्छते, किंतु सविशेषात्मवाद एव सम्भवतीत्याह—ब्रह्मविदाप्नोति परमित्यारभ्येत्यादिना। द्विरभ्यासेन 'यतो वाचो निवर्तन्त' इतिवाक्यं सविशेषपरमेवेत्याह–यतो वाचो निवर्तन्त इत्यादिना॥

यद्यपि न्यायरक्षामणौ–'ततश्च ब्रह्मणो लक्षणे आनन्त्यान्तर्गत वस्तुपरिच्छेदराहित्य प्रपञ्चस्य प्रतिपन्नोपाधिगतनिषेधप्रतियोगित्वलक्षणमिथ्यात्वेनोपपादयितुं 'आत्मन आकाश' इत्यादिना ब्रह्मणो जगदुपादानत्वप्रतिपादनेन तत्र प्रपञ्चाध्यारोपःकृतः। ब्रह्मण उपादानत्वेऽपि सृष्टिनियमनादिषु निमित्तान्तरसद्भावे वस्तुपरिच्छेदस्स्यादिति शङ्कानिरासार्थं 'सोऽकामयत' इति सृष्टौ 'भीषास्माद्वातःपवते' इति नियमनेऽपि निमित्तत्वं दर्शितम्। एवमारोपितस्य प्रपञ्चस्य

### श्रीभाष्यम्

**ब्रह्मण इति व्यतिरेकनिर्देशेन प्रतिपाद्य तदेव वाङ्मनसागोचरं विद्वानिति तद्वेदनमभिदध-**

### श्रुतप्रकाशिका

चरत्वाभावे व्याहतं स्यादित्यर्थः। अनर्थकं वाच्यनन्तर्गतं च स्यादिति। अनर्थकं व्याहतार्थं स्यात्। व्याहतिपरिहारोऽभिमतश्चेत् ब्रह्म न शब्दवाच्यमितीदं समुद्रघोषादिवद्वाक्यमेव न स्यादित्यर्थः, वाक्यत्वे व्याहतिरनिवार्येति भावः। ब्रह्मणोऽशब्दगोचरत्वं ब्रह्म न शब्दगोचर इत्यनेनापि शब्देन व्याहतं स्यादितिचाभिप्रायः। 'सत्यं ज्ञानम्' इति स्वरूपस्य सत्यत्वं कण्ठोक्तं न गुणानाम् अतस्तन्निषेध इतिचेत्, न तत्र सत्यपदेनाविकारित्वमुक्तम्। ननु मिथ्यात्वव्यावृत्तिः मिथ्यात्वव्यावृत्तिरुक्ताऽस्तु तथाऽपि गुणानां च सत्यत्वं दुरपह्नवं प्रमाणसिद्धत्वात्। प्रामाणिकत्वंहि सत्यत्वं किंच गुणानां

### गूढार्थसंग्रहः

'यतो वाचो निवर्तन्ते' इत्यत्रापवाद उपदिश्यते। अस्यहि मन्त्रस्यायमर्थः यथा शुक्तिकायामध्यस्तरजततादात्म्योल्लेखिनया प्रवृत्तेन मनसासह 'रजतमिदम्' इति व्यवहारः शुक्तिस्वपर्यन्तमप्राप्य 'नेदं रजतम्' इति बाधेसति निवर्तते एवं ब्रह्मण्यध्यस्तप्रपञ्चतादात्म्योल्लेखितया 'सन्घटस्सन्पटः' इत्यादि प्रकारेण प्रवृत्तेनान्तःकरणेनसह तत्र प्रवृत्ता घटपटादिशब्दा अप्यखण्डाकारपर्यन्तमप्राप्य 'अथात आदेशो नेतिनेति' इत्यादिश्रौतबाधेसति निवर्तन्ते' इत्युक्तम्॥

अयमर्थः स्वमताभिनिवेशेन श्रुतावारोपितः। अध्यारोपस्थले शुक्तेः रजतं सम्भूतमिति लोके न व्यवहारः शुक्तिरजतदृष्टान्तश्च सृष्टिप्रकरणे क्वापि नोक्तः। सृष्टिवाक्यानां तात्पर्यं पूर्वमेवोक्तम्। अतः सृष्टिवाक्येषु अध्यारोपो न विवक्षितः। 'अथात आदेशो नेतिनेति' इत्यादिपरमतं साधयितुं नालमिति जिज्ञासाऽधिकरण एव (२४३.पु) निरूपितम्। शुक्तिरजतस्थले भवदुक्तप्रकारेणार्थः लोके न क्वापि व्यवह्रियते। 'आनन्दब्रह्मण' इत्यत्रानन्दरूपब्रह्मसम्बन्धित्वेन आनन्दतया प्रतिपन्नगुणविभूत्यादौ एकदेश एव वाङ्मनसयोः प्रवृत्तिः नतु कार्त्स्न्येन। इयत्तायास्सत्त्वे कार्त्स्न्येन प्रवृत्तिः स्यात् कार्त्स्न्येन प्रवृत्त्यभावेन निवृत्तिकथनेन इयत्ताराहित्यं पर्यवस्यति 'नान्तं गुणानां गुणिनोऽधिगम्यते' इति पराशरवचनानुसारी 'सत्यज्ञानमनन्तम्' इत्यत्र अनन्तशब्दार्थः 'यतो वाचः' इति श्रुत्या दृढीक्रियत इत्यसकृदावेदितम्

**ब्रह्मण इति व्यतिरेकनिर्देशेन प्रतिपाद्यतइति।** एतेन षष्ठ्याः द्विरभ्यासेन 'स एको मनुष्यगन्धर्वाणामानन्दः' इत्याद्युपक्रमेऽपि षष्ठ्यभ्यासेन च 'आनन्दं ब्रह्मणः' इतिवाक्यं ब्रह्मभिन्नानन्दमेव बोधयति। 'यदेष आकाश आनन्दो नस्यादि'ति धर्मिणः आनन्दबोधकवाक्यस्य धर्मानन्दबोधकवाक्यबोधकत्वं नसम्भवत्येव। आनन्दरूपधर्मिणि धर्मानन्दसत्त्वे विरोधाभावात्। धर्मानन्दस्यापरिच्छिन्नत्वेन वाङ्मनसयोस्तत्रैकदेशेन प्रवृत्तावपि सर्वत्र प्रवृत्त्यभावेन 'निवर्तन्ते' इत्यस्योपपत्तिः। अतः उपक्रमोपसंहारैकरूप्यं द्विरभ्यासश्चेत्युभयं सिद्धान्त एवानुकूलम्। अत्राध्यारोपस्य प्रसक्तिरेव नास्ति तद्बोधकशब्दाभावात्। 'यदाह्येवैष एतस्मिन्नुदरमन्तरं कुरुते' इत्यत्र सिद्धान्तिसम्मत एवार्थो युक्तः न परसम्मतार्थ इति प्रागेव (६९४,६९५.पु) निरूपितम्। 'आनन्दमय' इत्यत्र मयडर्थः पूर्वमेवोपपादितः। अतो निर्गुणप्रकरणमसिद्धमेव॥

'नेतरोऽनुपपत्तेः' इत्यत्र आनन्दमयः इह पर्याये उपास्यो न भवति। उपक्रमोपसंहारावधृतज्ञेयब्रह्मतात्पर्यके प्रकरणे उपासनाविवक्षाऽनुपपत्तेः' इत्यर्थवर्णनमप्यनुपादेयम्। परसम्मतज्ञेयब्रह्मप्रकरणस्यैवासिद्धेः। आनन्दस्य द्विविधस्य सिद्धान्तसिद्धस्यैव युक्ततायाः प्रागेव निरूपणात्। मनोमयपर्याये 'आनन्दं ब्रह्मणो विद्वान्' इति वाक्येन मानसमरं वेदनं ध्यानपर्यवसितं विवक्षितमिति पूर्वमेवोक्तम्। 'यतोवाचो निवर्तन्ते, आनन्दं ब्रह्मणो विद्वान्' इत्यत्र आन-

### श्रीभाष्यम्

द्वाक्यं जरद्गवादिवाक्यवदनर्थकं वाच्यनन्तर्गतं च स्यात् । अतश्शतगुणितोत्तरक्रमेण ब्रह्मानन्दस्यातिशयेयत्तां वक्तुमुद्यम्य तस्येयत्ताया अभावादेव वाङ्मनसयोस्ततो निवृत्तिः ' यतो वाचो निवर्तन्त ' (तै.आन. ) इत्युच्यते—एवमियत्तारहितं ब्रह्मण आनन्दं विद्वान् कुतश्चन न बिभेतीत्युच्यते । किंच अस्य मान्त्रवर्णिकस्य विपश्चित ' सोऽकामयत ' (तै.भृ ) इत्यारभ्य वक्ष्यमाण(स्य)स्वसङ्कल्पावक्लृप्तजगज्जन्मस्थितिजगदन्तरात्मत्वादेर्भुक्तात्म स्वरूपादन्यत्वं सुस्पष्टमेव ।

इतश्चोभयावस्थात्प्रत्यगात्मनोऽन्य आनन्दमयः ।

## सू.१८=भेदव्यपदेशाच १.१.६

' तस्माद्वा एतस्मादात्मन आकाशः ' (तै.आन) इत्यारभ्य मान्त्रवर्णिकं ब्रह्म व्यक्षय-द्वाप्यमन्नप्राणमनोभ्य इव जीवादपि तस्य भेदं व्यपदिशति ' तस्माद्वा एतस्माद्विज्ञानमयात् अन्योन्तरआत्माऽऽनन्दमयः ' (तै.आन) इति । अतो जीवाद्भेदस्य व्यपदेशाच्चायं मान्त्र-वर्णिक आनन्दमयोऽन्य एवेति विज्ञायते ।

### श्रुतप्रकाशिका

सत्यत्व कण्ठोक्तम् ' सत्यकामस्सत्यसङ्कल्प. ' ' तइमे सत्याःकामा. ' एतांश्च सत्यान्कामान् ' इत्यादिभिः अत स्वरूपवद्गुणाअपि स्वीकार्याः, प्रमाणोपपत्तिसाम्यात् । अतो न वाङ्मनसनिवृत्तिर्निर्विशेषत्वनिबन्धना । ननु न शब्देन मुख्यवृत्त्या प्रतिपाद्यते ब्रह्म अपितु लक्षणया अतो ' यतोवाच ' इति मुख्यवृत्तिविषयो निषेधइति विषयविभागान्न व्याहतिरितिचेन्न । निवर्तन्त इत्येकस्य वाक्यस्य मुख्यत्वायानेकवाक्यलक्षणाश्रयणायोगात् । भूयसा स्याद्बलीयस्त्वमितिन्या-यादेकवाक्यस्वारस्यभङ्गेनानेकवाक्यस्वारस्यह्यनुवर्तनीयम् ॥

किंच अत्र ' नहिंस्यात्सर्वभूतानि ' अग्नीषोमीयं पशुमालभेत ' इतिवद्विषयविभागेनोभयमुख्यत्व सिध्य-तिचेत्तदेवहि युक्तम् लोके च 'गामानय बलीवर्दविने'ति विषयविभागो मुख्य वानुरोधी दृश्यते । अविरुद्धार्थः कइत्यपे-क्षाया विषयविभाग दर्शयति अतइति । वाङ्मनसनिवृत्तिरस्तिचेत् कथ वेदनवचनमित्यनाह— एवमिति । इयत्तार-हितत्वेन वेदनमुच्यत इत्यर्थः । ' अनुपपत्ते ' इति सौत्रपदस्य विपश्चिच्छब्दोक्तसर्वज्ञत्वानुपपत्तिरर्थं उक्तः । अथ सर्वशक्तित्वानुपपत्तिमर्थान्तरमाह–किंचेति । इदसूत्र मान्त्रवर्णिकसूत्रोक्तहेत्वन्यथासिद्धिपरिहारपरत्या तच्छेषमिति स्वत-न्त्रहेतुपरत्वाभावात् चशब्दाप्रयोगः । एवमनेन सूत्रद्वयेनोपक्रमस्थहेतुरनुसहितः । अथ मध्यगत स्फुटतर हेतुमनुसन्धत्ते-

### गूढार्थसंग्रह

न्दमयशब्दार्थंशनस्यैव फलनिर्देश. । तेनात्र फलनिर्देशाभावात् उपासनाविवक्षा नघटत इति ' भेदव्यपदेशाच्च ' इति सूत्रे (ब्रह्मविद्याऽऽभरणे) परोक्तिर्निरवकाशा ॥

आनन्दमयोऽभ्यासात् इति सूत्रोक्तानन्दमयस्यैव भेदव्यपदेशाच्च इत्यत्रानुयोगितयापस्थित्या तत्र जीवभेदएव विवक्षित इत्याह–इतश्चोभयावस्थादित्यादिना । ' भेदविरोधी अपदेशः भेदव्यपदेशः । भेदप्रपञ्चमिथ्यात्वपर्यवसायी

श्रीभाष्यम्

इतश्च जीवादन्यः

## सू.१९–कामाच नानुमानापेक्षा [१-१-६]

जीवस्याविद्यापरवशस्य जगत्कारणत्वेहायर्जनीया आनुमानिकप्रधानादिशब्दाभिधेयाचिद्वस्तुसंसर्गापेक्षा। तथैव हि चतुर्मुखादीनां कारणत्वम्। इह च 'सोऽकामयत बहुस्यां प्रजायेय' (तै.आ.) इत्यचित्संसर्गरहितस्य स्वकामादेव विचित्रचिदचिद्वस्तुनस्सृष्टिः 'इदंसर्वमसृजत यदिदं किंच' (तै.आन)इत्याम्नायते। अतोऽस्यानन्दमयस्य जगत्सृजतो नानु-

श्रुतप्रकाशिका

ऽनन्तरसूत्रेण आनन्दमयस्य जीवादन्यत्व स्ववाक्यैकदेशमयडन्तपदवाच्यनिरतिशयानन्दयोगेन -प्रथमसूत्रेणोपपादितम् अतोऽत्र स्ववाक्यस्थहेतुश्रोक्तो भवति ॥

## सू.१८=भेदव्यपदेशाच १.१.६

यदि जीवात्मस्वरूपं शुद्धावस्थं ब्रह्म । तर्ह्यन्नमयादिविवेकावस्थायां भेदव्यपदेशो न सम्भवति तस्मादन्नमयादिभिरिव जीवैनैक्य ब्रह्मणो न संभवतीत्यर्थः । विज्ञानशब्दस्यान्तःकरणपरत्वानुपपत्त्यादिकं पूर्वोक्तमिहानुसन्धेयम् ॥

अथोपसंहारार्थहेतुमाह—

## सू.१९.कामाच नानुमानापेक्षा [१.१.६]

केचित्प्रधानव्यावृत्तिपरमिदं सूत्रं व्याख्यात तत्पक्षोऽतिदुरस्तत्वान्नानूद्य दूषितः, पूर्वाधिकरणे अचिद्व्यावृत्तिः कृता, प्रधानत्वशङ्काहेतुश्चास्मिन्ननुवाके नास्ति, अपेक्षाशब्दवैयर्थ्यं च स्यादिति जीवस्येति । अत्यन्तमचिदनपेक्षत्वे स्वरूपपरी-

गूढार्थसङ्ग्रहः

'यतोवाचो निवर्तन्ते अप्राप्य मनसासह आनन्दब्रह्मणो विद्वान् नबिभेति कुतश्चन' इत्युपदेशः । तद्विरोधात् प्रियाद्यवयवयुक्तस्याविशेष आनन्दमयउपास्यो नप्रतिपाद्यः' इति न्यायरक्षामण्युक्तिरभिनिवेशमूलैव । व्यपदेशशब्दस्य अप्रसिद्धोऽयं इत्यस्य स्फुटत्वात्। 'यतोवाचो निवर्तन्त' इत्यस्य भेदमिथ्यात्वबोधकत्वासम्भवाच्च । भेदो वैलक्षण्यं पूर्वेषु पर्यायेषु फलनिर्देशः । इहतु नास्तीति वैलक्षण्यम् । ततश्च फलनिर्देशान्यथाऽनुपपत्त्या तत्रोपासनाविवक्षायामपि आनन्दमयस्य फलनिर्देशं विनैव व्यपदेशान्नेहोपासनाविवक्षा' इति (ब्रह्मविद्याऽऽभरणे) परोक्तिरनुपादेया । 'आनन्दं ब्रह्मणो विद्वान् नबिभेति' इत्यत्र आनन्दमयशब्दार्थज्ञानेन फलस्यापि प्रतिपादनात् । 'सोऽश्नुते सर्वान्कामान्' इत्युपक्रमोक्तार्थः 'अस्माल्लोकात्प्रेत्य एतमानन्दमयमात्मानमुपसङ्क्रम्य इमांल्लोकान्कामान्नी कामरूप्यनुसञ्चरन्' इति वल्ल्युपसंहारे विशदीकरणम् उपक्रमोपसंहाराभ्यामानन्दमयब्रह्मज्ञानस्य फलस्य दृढीकरणाच्च ॥

'कामाच नानुमानापेक्षा' 'सोऽकामयत' इति वाक्ये पुल्लिङ्गतच्छब्दनिर्देशेन आनन्दवल्ल्याः सविशेषपरत्वासम्भवेन पुच्छब्रह्मवादायोगन 'सन्तमेनं ततो विदुः' इत्यनन्तरं 'तस्यैष एव शारीर आत्मा' इत्यस्य परोक्तनिर्विशेष-

श्रीभाष्यम्

**मानिकाचिद्वस्तुसंसर्गापेक्षा प्रतीयते ।**

*इतश्च जीवादन्य आनन्दमय.*

## सू.२०—अस्मिन्नस्य च तद्योगं शास्ति (१-१-६]

श्रुतप्रकाशिका

णामप्रसङ्ग. देहातिरिक्ताचिदनपेक्षत्व देवादिसृष्टौ चतुर्मुखादीनामप्यस्ति अतस्तत्परिहारार्थमाह—इतश्चेति । सङ्कल्पद्वेद्भूतकरणकळेबरावस्थाचित्संसर्गापेक्षा नास्तीत्यर्थः ॥

देहानपेक्ष(त्व)सत्यसङ्कल्पत्वकार्यं स्रष्टृत्वमाविर्भूतगुणाष्टकस्य मुक्तस्यापि श्रूयतइति शङ्कां परिहरन् 'सोऽकामयत' इति वाक्यादुपरितनहेत्वन्तरमाह—

## सू'२०—अस्मिन्नस्य च तद्योगं शास्ति (१.१.६)

गूढार्थसंग्रह·

परत्वासम्भवेन आनन्दमयस्यैव अनन्यात्मत्वपरत्वावश्यम्भावेन 'सोऽकामयत' इत्यत्र आनन्दमयविवक्षाया एवावश्यकत्वात् । परमते 'कामस्सङ्कल्प.' इत्यादिश्रुत्या कामादीनामन्तःकरणधर्मत्वस्यैव प्रतिपादनेन मायापरिणाम वग्राहक श्रुत्यभावेन 'सोऽकामयत' इत्यत्र निर्विशेषविवक्षाया असम्भवाच्च । 'तस्माद्वा एतस्मादा मनः अन्योऽन्तर आत्माऽऽनन्दमय.' इतिपूर्वं जीवभिन्नत्वेन प्रतिपादितस्यात्मनः आनन्दमयस्य कामर्य व विव क्षि तेन प्रधानापेक्षा नास्ति जीवविवक्षायां प्रधानापेक्षा स्यादितिभाव.। अत्र न्यायरक्षामण्यादौ 'काम्यत इति कामः भृगुवल्ल्यां ब्रह्म त आन दः । तद्दृष्टान्तमवलम्ब्यानन्दमयस्य प्राधान्यानुमानेऽपि प्रत्याशा न कार्या । तत्र श्रुतौवानन्दस्य उपक्रमे ब्रह्मरूपतायाः 'आनन्दो ब्रह्मेति व्यजानात्' इति साक्षात् 'आनन्दाद्ध्येव खल्विमानि भूतानि' इति लक्षणमुखेन च पर्यवसानप्रतिपादनात्' इत्युक्तोऽर्थं शब्दत्रये स्वोत्प्रेक्षामूलकएवेति स्फुट विदुषाम् ॥ 'कामात्' इत्यत्र 'सोऽकामयत' इति श्रुतौ कामधात्वर्थ. 'नानुमानमतच्छब्दात्' इति सूत्रोक्तएवात्रापि नानुमानेत्यस्यार्थ. 'अपेक्षा' इत्यर्थ(न्या.र.म)इति अर्थद्वय परित्यागस्य अभिनिवेशमूलकताया. स्फुटत्वात् ॥

'तद्धेतुव्यपदेशाच्च' इत्यत्र जगत्कारणस्यानन्दमयस्य मुक्तिहेतुत्वाभिधानेन सृष्टिवाक्याना मुक्तिवाक्यानां च सामरस्यमाभिहितम् । 'मान्त्रवर्णिकमेवच गीयते' इत्यत्र 'ब्रह्मविदाप्नोति' इत्याद्युपक्रमवाक्यस्य 'अस्माल्लोकात्प्रेत्य एतमानन्दमयमात्मानमुपसङ्क्रम्य' इति वाक्यस्यैकार्थकत्वम् । 'नेतरोऽनुपपत्तेः' इत्यत्र उपक्रमप्रभृत्युपसंहारपर्यन्त प्रतिपादितधर्माणां आनन्दमयएव सम्भव नतु जीवइति निरूपितम् । तेन विज्ञानमयपर्याय 'शरीरे पाप्मनो हित्वा सर्वान्कामान् समश्नुते' इ युपक्रमोपसंहारयोरुक्तार्थस्य मुक्तिरूपस्य प्रतिपादनेन जीवएवेति निर्धारितम् । एवमुपक्रमोपसंहारवाक्योक्तार्थस्यैव सर्वकामावाप्तिरूपस्य मध्ये प्रतिपादनेन विज्ञानमयस्य जीव त्वनिर्णयानन्तरमानन्दमये परमात्मनि जीवभेद एव 'तस्माद्वा एतस्माद्विज्ञानमयात्' इति श्रुत्युक्तः भेदव्यपदेशाच्च इत्यत्र निरूपित । तदनु तदानुगुण्योक्तार्थः कामाच्च नानुमानापेक्षा इत्यभिहित । तदनन्तरानुगुण्यकार्यं अस्मिन्नस्य च तद्योगं शास्ति इति सूत्रेऽभिधीयते

## श्रीभाष्यम्

अस्मिन्—आनन्दमये अस्य—जीवस्य तद्योगं—आनन्दयोगं शास्ति, शास्त्रम् । ' रसो वै सः रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति ' (तै.आन.७.१) इति रसशब्दाभिधेयादानन्दमयल्लाभादयं जीवशब्दाभिलपनीय आनन्दी भवतीत्युच्यमाने यल्लाभाद् आनन्दी भवति स एवेत्यनुन्मत्तः कोऽब्रवीतीत्यर्थः । एवमानन्दमयः परं ब्रह्मेति निश्चिते सति ' यदेष आकाश

## श्रुतप्रकाशिका

कस्मिन् कस्य केन योगं किं शास्तीत्यपेक्षायामक्षरार्थमाह—अस्मिन्नानन्दमय इति । अस्मिन्निति विषयसप्तमी ब्रह्मानुभवस्यानन्दस्य अवच्छेदकं ब्रह्म । शास्तिशब्दार्थः कः ? शास्त्रं किं ? एतत्सूत्रार्थस्य हेतुत्वं कथमित्यत्राह—रसो वै स इति । 'रसो वै सः' इति शास्त्रमुक्तम् उच्यमाने इति शास्तिशब्दार्थ उक्तः । हेतुत्वमुपपादयति यल्लाभादिति । हेतुत्वस्य स्फुटतरत्वात् सूत्रे हेतुत्वानिर्देश इत्यभिप्रायेण अनुन्मत्तः कोऽब्रवीतीत्युक्तं, मान्त्रवर्णिकसूत्रेऽपि हेतुत्वानिर्देशे एवमेवाभिप्रायः । कथमानन्दमये जीवस्यानन्दयोगं वदति शास्त्रम् आनन्दे ह्यानन्दयोगं वदतीति शङ्कायामानन्दानन्दमयशब्दयोरेकविषयत्वमाह एवमिति । कथमानन्दशब्दस्यानन्दमयवाचित्वमित्यपेक्षायां विज्ञानशब्दनिर्वाहे पूर्वोक्तन्यायमिहातिदिशति यथा विज्ञा

## गूढार्थसङ्ग्रहः

आनन्दमय इति प्रथमसूत्रे प्राधान्येनोक्तार्थ एव अस्मिन् इत्यत्र विवक्षितः । आनन्दमये जीवभेदस्य पूर्वमभिधानेन 'तस्माद्वा एतस्मादात्मन आकाशः' इति उपक्रमोक्तात्मत्वमानन्दमये यन्निरूपितम् तेनानन्दमयस्य अन्तःकारणत्वेन राजकुमारनयेन जीवस्य राज्यप्राप्तिवदानन्दः विवक्षित इत्यभिप्रेत्य अस्य जीवस्यानन्दयोगमित्याद्युक्तिः । यल्लाभाद् आनन्दी भवति स स एवेत्यनुन्मत्तः कोऽब्रवीतीत्यर्थ इति । एतेन 'रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति' इत्यनन्तरं 'एष ह्येवानन्दयाति यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति' इत्यनन्तरवाक्ये जीवब्रह्मभेदनिन्दया जीवब्रह्माभेदः विवक्षित इति परे वदन्ति । सोऽर्थो नात्र विवक्षित इति बोधितम् । आनन्दयितृत्वं पूर्वमभिधाय अनन्तरवाक्ययोरेतच्छब्दप्रयोगे एतच्छब्दस्यानन्दयितैवार्थः । 'रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति' इत्यत्र जीवानामानन्दप्रतिपादनेन 'एष ह्येवानन्दयाति' इत्यत्र जीवानानन्दयितेत्येवार्थः । पूर्ववाक्ये जीवब्रह्मभेदस्य स्फुटमभिधानेन उत्तरत्र जीवब्रह्माभेदबोधकान्यथासिद्धपदाभावेऽपि 'आत्मन्येतस्मिन् ब्रह्मणि उत् अपि अरं अल्पं अन्तरं छिद्रं भेदं अल्पमप्यन्तरं भेददर्शनं कुरुते । भेददर्शनमेव हि भयकारणं, भेदं पश्यतीत्यर्थः । अथ तस्माद्भेददर्शनाद्धेतोः तस्य भेददर्शिनः आत्मनः भयं भवति' इति परोक्तविवरणं (श.उ.भा) निरवकाशम् । अन्तरशब्दस्य छिद्रार्थकत्वमास्ताम् । तावता भेदसिद्धिः कथम् ? अन्तरशब्दस्य नानार्थकत्वेन भेदैकान्तत्वाभावात् भेददर्शनमित्यर्थोऽपि तद्बोधकपदान्तरं विनानुपादेयः । पूर्ववाक्ये 'अदृश्येऽनात्म्येऽनिरुक्तेऽनि[illegible]ऽभयं प्रतिष्ठां विन्दते' इत्यत्र ब्रह्मणि सर्वेषां सर्वदा प्रतिष्ठितत्वेन ज्ञाननिबन्धनप्रतिष्ठैव विवक्षितेत्यवश्यमङ्गीकरणीयम् । तेन चाविच्छिन्नब्रह्मज्ञानं सिद्धम् । तदुत्तरवाक्ये अन्तरं छिद्रं अवकाशो वा भवतु । पक्षद्वयेऽपि अविच्छिन्नज्ञानाभावे भयमित्येव विवक्षितम् । 'यन्मुहूर्तं क्षणं वाऽपि—सा विक्रिया' इति प्रागुदाहृतवचनानुसारात् इत्येव युक्तम् ।

आनन्दमयस्य ब्रह्मत्वं निश्चितं भवतीत्यभिप्रेत्याह— एवमानन्दमयः परं ब्रह्मेति निश्चिते सतीति । आनन्दानन्दमयशब्दयोः भिन्नार्थकत्वं परोक्तं पर्यालोचयति—यदेष आकाश आनन्द इत्यादिना । 'ब्रह्मविदाप्नोति' इत्युपक्रमे

## श्रीभाष्यम्

मानन्द' (तै.आन.७) 'विज्ञानमानन्दं ब्रह्म' (बृ.९.२७) इत्यादिष्वानन्दशब्देनानन्दमय एव परामृश्यते, यथा विज्ञानशब्देन विज्ञानमयः। अतएव 'आनन्दं ब्रह्मणो विद्वान्' (तै.आन.९.१) इति व्यतिरेकनिर्देशः। अतएव च आनन्दमयमात्मानमुपसङ्क्रामति' (तै.आन ८.१) इति फलनिर्देशश्च। उत्तरेष्वनुवाकेषु पूर्वानुवाकोक्तानामन्नमयादीनां 'अन्नं ब्रह्मेति व्यजानात्। *प्राणो ब्रह्मेति व्यजानात्। मनो ब्रह्मेति व्यजानात्। विज्ञानं ब्रह्मेति व्यजानात्'*

## श्रुतप्रकाशिका

नेति। अत्र पूर्वोक्तहार्दोऽनुसन्धेयः। स्वरूपस्यानुकूलवेदनीयत्वादानन्दशब्दो धर्मिपरः, धर्मपरोऽप्यप[illegible]
इतिभावः। *व्यतिरेकनिर्देश इत्युमाह*—अतएवेति। *अतएव आनन्दानन्दमयशब्दयोरेकविषयत्वेनेत्यर्थः।* [illegible]
अतएवेति। स्थानप्रमाणमाह—उत्तरेष्विति। पूर्वानुवाके एतदनुवाकोत्तरभागे च मयडन्तपदनिर्दिष्टानामत्र मयडुक्तिपद
निर्देशप्रकरणे आनन्दशब्देन प्रतिपादनादानन्दमयपदानन्दशब्दवाच्य इत्यर्थः। आनन्दशब्दवाच्यस्य परमात्मत्वं हि
पराङ्गीकृतम् तद्धेतुव्यपदेशाच्च, अस्मिन्नस्य च तद्योगं शास्ति इति सूत्रयोरियमिदा पूर्वत्र सामान्येन समस्तसुखहे
तुत्व उत्तरत्र मोक्षसुखहेतुत्वचोक्तमिति तदा 'कोह्येवान्यात्कः प्राण्यात्' इत्यत्रान्यात् प्राण्यादिति पदाभ्यां सत्ताहेतुत्वं
सुखहेतुत्वञ्चोक्तं भवति॥

यद्वा पूर्वसूत्रमुपादानपरं एतत्सूत्रमपवर्गान्तिमिदा 'आनन्दयाति रसो वैसः' इति तादात्म्यप्रतीतेः तदा अन्यात् प्रा
ण्यादिति पदाभ्यां सांसारिकसुखहेतुत्वं मोक्षसुखहेतुत्वचोक्तं भवति। अथवा अन्यादिति सत्ताहेतुत्वं प्राण्यादित्य[illegible]

## गूढार्थसंग्रहः

कप्राप्तिरेव, 'आनन्दमयमात्मानमुपसङ्क्रामति' इत्यत्र विवक्षिता, नतूपसङ्क्रमणं परमतवत् [illegible]
अतएवचेति। 'ननु मुख्यमेव संक्रमणं श्रूयते उपसङ्क्रामतीतिचेन्न अन्नमये अदर्शनात न मुख्यो[illegible] सङ्क्रमणम् नह्यन्न
मयमुपसङ्क्रामतो बाह्यादस्माल्लोकात् जलूकावत्सङ्क्रमणं दृश्यते। अन्यथा वा मनोमयस्य बहिर्निर्गतस्य दिश[illegible] पुनः
प्रत्यावृत्त्या सङ्क्रमणमितिचेन्न स्वात्मनि क्रियाविरोधात्। अन्योऽन्नमयमुपसङ्क्रामतीति[illegible] पक्षे [illegible]
स्वात्मानमेवोपसङ्क्रामतीति विरोधस्स्यात्। तथा नानन्दमयस्यात्मसङ्क्रमणमुपपद्यते। तस्मात्प्राप्तिस्सङ्क्रमणम्। नाप्यन्न
मयादीनामन्यतमकर्तृकम्। पारिशेष्यादन्नमयाद्यानन्दमयान्तात्मव्यतिरिक्तकर्तृकं [illegible] ज्ञानमात्र[illegible] । ज्ञानमा
त्रत्वे च आनन्दमयान्तस्यैव सर्वान्तरस्याकाशाद्यन्नमयान्तकार्यं सृष्ट्वा अनुप्रविष्टस्य हृदयगुहाभिसम्बन्धादन्नमयादिषु अना
त्मस्वात्मविभ्रमः सङ्क्रमणात्मकविवेकज्ञानोत्पत्त्या विनश्यति। तदेतस्मिन्नविद्यादिभ्रमनाशे सङ्क्रमणशब्द उपचर्यते, (शं.
उ.भा) इति परैः सङ्क्रमणं न प्राप्तिरिति दूषितम्॥

'अपिचानन्दरूपस्य ब्रह्मत्वं बहुशश्श्रुतम्। तथाचानन्दवल्लीति व्यपदेशोऽपि युज्यते॥ आनन्दवल्ल्या ब्रह्म[illegible]
तदुपायविधित्सया। अधीहि भगवो ब्रह्मेत्यवोचत् वरुणं भृगुः॥ व्याख्यातत्वादुपेयस्य ह्युपायोऽत्र विशिष्यते। उपायाः
*कोशगास्तत्रापि यस्मात्तैः तत्प्रपद्यते॥ तस्मात् ज्ञानक्रियाकार्यं प्रियाद्यात्मकसुद्धिगम। आनन्दमयमात्मानं श्रुतिरुपाधिक*
जगौ॥' इत्यादिना वार्तिकेऽपि तत्साधितम्। अयमपि परोक्तार्थः न श्रुतितात्पर्यानुगुणः। किंतु सङ्क्रमणं प्राप्तिरूपमेव
विवक्षितमित्यभिप्रेत्याह—फलनिर्देशश्चेति॥

**श्रुतप्रकाशिका**

प्रत्यगात्मा व्यतिरिक्तत्वे हेतुः। स्वतःसिद्धनिरतिशयदशाशिरस्कानन्दाभ्यास, आनन्दयितृत्वं, भयाभयहेतुत्व समस्तप्रशासितृत्व प्राप्यत्व निरुपाधिकविपश्चित्त्वम् । बद्धमुक्तयोरसम्भावितमाकाशादिसमस्तजगत्कारणत्व बद्धदशायामेव विज्ञानमयाज्जीवात् भेदव्यपदेशः करणकळेबराद्यनपेक्षसत्यसङ्कल्पत्व मुक्तानां निरतिशयभोग्यत्वं च सिद्धान्तहेत । शरीरशरीरिभावः तस्य निरुपाधिकत्व प्रशासितृत्व प्राचुर्यसम्भवः बद्धदशायामेव भेदव्यपदेशस्यावस्थाभेदेन निर्वाहानुपपत्तिः प्रभाप्रभावन्न्यायेन स्वरूपतो धर्मतश्च ज्ञानत्वोपपत्तिः वाङ्मनसनिवृत्तेरियत्तारहित्यनिबन्धनत्व च पूर्वपक्षयुक्तिपरिहारहेतव

षष्ठ्यान्यत्वमवेदि नैनमवदच्छ्लोको नचाज्ञातता<br>
ज्ञातस्यास्य तथाऽपि नावयविता तस्यान्य आत्मा श्रुतः ।<br>
शोध्यत्वं च विकारवाचकवचस्तद्ब्रह्मपुच्छं भवेत्<br>
नत्वानन्दमयस्सचान्नमयवत्कोशो यदि कथ्यते ॥

पुल्लिङ्गान्तप्रधानप्रकृतवचो रूपणंचाप्यनन्यैः<br>
श्लोका पुच्छ नचाङ्गुस्वरसमाप्तिर्हि नस्सूत्रमन्योऽन्तरो न ।<br>
षष्ठ्यादिश्चांशभावान्निरविशयतया रूपणादानुरूप्यात्<br>
पर्यायत्वादनन्यात्मकवचनतया पुच्छहेतु परास्ते ॥

इति पुच्छप्रधानवादतन्निरासङ्ग्रहः ॥

भास्करीयेतु अभ्यासादिति पदस्यानन्दशब्दाभ्यासादित्यर्थ उक्तः कथमानन्दशब्दाभ्यासात् परमात्म यथावगम मित्यपेक्षायामानन्दशब्दस्य कारणविषयत्वान्निरतिशयानन्दविषयत्वाद्वेति वक्तव्य, तत्र हेत्वन्तरसाकाङ्क्षस्य हेतुत्वोक्तेरपि निराकाङ्क्षस्य हेतुत्वपरत्वं युक्तम् । 'नेतरोऽनुपपत्तेः' इत्यत्र च संसारिजीवादन्यत्वोपपादनमयुक्तम निरतिशयानन्दयोगिनो मान्त्रवर्णिकस्य ब्रह्मणस्संसारित्वशङ्काया अभावात 'भेदव्यपदेशाच्च' इति सूत्रस्यापि 'रसंह्येवायं लब्ध्वाऽऽनन्दीभवति' इति लब्धृलब्धव्यभावेन भेदोपपादकत्वमुक्तम । ततोऽपि विज्ञानमयादन्य इत्यन्यत्वव्यपदेशस्यैव हेतुत्वोक्तिपरत्वमत्यन्तोचित भेदव्यपदेशशब्दस्वारस्यात् 'कामाच्च' इत्यादिसूत्रं च न प्रधानव्युदासपरम् अपेक्षायाऽन्दमै-

**गूढार्थसंग्रहः**

प्राप्तिः उपक्रमोक्तसर्वकामाशनयो रुभय प्रतिपादित भवति । अन्नमयप्रभृति विज्ञानमयपर्यन्तमुक्तानामर्थानां द्वारत्वस्य पूर्वमभिधानेन द्वारभूतसमष्टिव्यष्टिविभूतिकः आनन्दमय परमात्मैव अत्र सङ्क्रमणकर्मत्वेन श्रुतौ विवक्षित इति व्यवसायोणामाशयः । प्राप्तः अनुभवरूपतया विभूतेरप्यनुभाव्यत्व वर्तेत इत्यन्नमयाद्युपसङ्क्रमणस्य नविरोधः । 'उपसङ्क्रम्य' च समानकर्तृकत्वमात्र विवक्षित नतु पौर्वापर्यम् । 'तत्सृष्ट्वा तदेवानुप्राविशत्' इतिवदिति भावः । 'सोऽश्नुते सर्वान्कामान्' इत्युपक्रमश्रुतेः 'आनन्दमयमात्मानमुपसङ्क्रम्य इमान्लोकान्कामान्नी कामरूप्यनुसञ्चरन्' इत्युपसंहारश्रुतेश्च एकपुरुषविषयकत्वमेकार्थकत्वञ्चेति जिज्ञासाऽधिकरणे (७७६.पु) भगवतैव स्थापितम् ॥

एतेनानन्दमयविद्या सगुणविद्येव। आनन्दवल्लीति व्यवहारः धर्मानन्दविशिष्टस्य धर्मिणः आनन्दरूपत्वेन सङ्ग्रहे भवति । 'यतोवाचो निवर्तन्ते' इत्यत्र परोक्तरीत्या निर्विशेषपरत्वस्वारस्यायोगेन द्विविधस्यानन्दस्य सविशेष एव संभवेन— 'आनन्द ब्रह्म' इति व्यतिरेकानिर्देशेन प्राप्तिसर्वकामाशनफलप्रतिपादनेन च आनन्दवल्ली सविशेषपरैवेति सिद्धम् ॥

॥ आनन्दमयाधिकरणं समाप्तम् ॥

## श्रुतप्रकाशिका

यथार्थं निरतिशयानन्दयोगिनः प्रधानस्य तच्छङ्काया हेत्वभावात् तृतीयसूत्रप्रभृत्युत्तरयोस्सूत्रयोरानन्दमयता एकरूपार्थ वाचित्व मुक्तम् ' यदाह्येवैष ' इत्यादिवाक्यविषयतया निर्वाहे तत्प्रसिद्ध्यति । वक्ष्यमाणमपि दूषणमिहानुसन्धेयम् ॥

यादवप्रकाशीये च ' अभ्यासात् ' इति पदस्य ब्रह्मशब्दाभ्यासपरत्वमयुक्तम् विज्ञानमयपर्यायेऽपि ' ब्रह्मज्येष्ठमुपासते, विज्ञानं ब्रह्म चेद्वेद ' इति ब्रह्मशब्दस्याभ्यस्ततया हेत्वनैकान्त्यात् ' तद्धेतुव्यपदेशाच्च ' इत्यस्य प्राचुर्यस्य हेतुव्यपदेशादित्यर्थो न युक्तः तद्विषयस्य ' एष ह्येवानन्दयाति ' इति वाक्यस्यानन्दहेतुत्वप्रतिपादकस्य प्राचुर्यहेतुत्वाभिधानाभावात् प्रथमसूत्रस्य साध्यस्य हेत्वन्तरवाचित्वाभावेन चशब्दान्वयश्च नेतरः, भेदव्यपदेशात् इत्यनयोरनुपपत्तिः पूर्ववत् । कामाच्च इत्यादिसूत्रे च ' अधीहि भगवो ब्रह्म ' इति ब्रह्मविषयायाऽविद्यायाः 'सैषाभार्गवी वारुणीविद्या परमे व्योमन्प्रतिष्ठिता ' इति परमव्योमविषयत्वावगमात् परमाकाशस्यचाचेतनस्य स्वकार्यापेक्षया कारणत्वसम्भवाच्च ब्रह्मशब्दवाच्यं प्रधानमित्याशङ्क्य निराक्रियत इति यदुक्तं तदयुक्तम् परमव्योमप्रतिष्ठितत्वमात्रेण तद्विषयत्वासिद्धेः, नहि ब्रह्म भूपिष्ठदेवो वेदविद्याप्रतिष्ठिते युक्ते तस्यास्तद्विषयप्रतिपादकत्वम् ' परमेव्योमन् सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता ' इति परमाकाशस्य ब्रह्माधारत्वावगमात्तस्य ब्रह्मत्वशङ्कानिराकरणमस्मिन् सूत्रे क्रियत इत्यप्ययुक्तम्—मान्त्रवर्णिकमेव च गीयत इति मन्त्रवर्णं विषयीकुर्वता सूत्रेणैवास्याश्शङ्कायाःप्रतिहतोदयत्वात् । नापि सत्यत्वज्ञानत्वश्रितिपरिच्छेदविविधादयः परमाकाशस्य सामस्त्येन समवयन्ति । अपेक्षाशब्दवैयर्थ्यं च पूर्ववत् चरमसूत्रमप्येवं व्याख्यातम् । अस्मिन्ब्रह्मणि प्रतिबुद्धस्यास्य जीवस्य तद्योग परमात्मप्राप्तिं दर्शयति ' सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता ' इति । तथा 'यदाह्येवैष ' इत्यादिवाक्यैश्चास्मिन्निष्ठां गतस्यास्य ' अथसोऽभयङ्गतो भवति ' इति ब्रह्मप्राप्तिरुच्यत इति तदनुपपन्नं मन्त्रवर्णोदितायाः परमात्मविदस्तत्प्राप्तेः ' मान्त्रवर्णिकमेवच गीयत ' इति सूत्रेणैव दर्शितत्वादिह तदुक्त्यनपेक्षणात् । यदाह्येवैष इत्यादिवाक्योक्ताभयप्राप्तिहेतुत्वं च ' तद्धेतुव्यपदेशाच्च ' इति सूत्रेणैव दर्शितमितीह तदुक्तिरनपेक्षिता तद्विषयभूतवाक्योक्तमानन्दयितृत्वं हि मोक्षानन्दहेतुत्वं मोक्षानन्दश्च संसारभयनिवृत्तिपूर्वकः तस्मादानन्दयितृत्ववाक्यानन्तरवाक्योक्तमभयप्राप्तिहेतुत्वं मोक्षप्रदत्वान्तर्भूतमिति न पृथगुपेतुः, ' आनन्दयाति ' इति वाक्ये आनन्दहेतुत्वमुक्तं ब्रह्मप्राप्तस्यैवचानन्दः अतोऽस्मिन्वाक्ये अभयशब्दवाच्यब्रह्मप्राप्तिरुच्यत इतिचेन्न तस्य ब्रह्मशब्दसामानाधिकरण्याभावात् ' अथ तस्य भयं भवति ' इत्युक्तभयाभावप्राप्तरेव ' अथसोऽभयङ्गतो भवति ' इत्युच्यमानत्वाच्च, अतो भयनिवृत्तिपूर्वकनिरतिशयानन्दहेतुत्वं ' तद्धेतुव्यपदेशात् ' इत्यन्तर्भूतमिति न पृथग्वक्तव्यम् अतो मोक्षप्रदत्वेऽभिहिते मुक्तप्राप्यत्वकथनं प्राप्तेर्निरतिशयानन्दत्वरूपविशेषकथनंचात्यन्तापेक्षितमिति तदेव वक्तव्यम् । अतस्सूत्राणां—यथोक्त एवार्थः ॥

समाप्तमानन्दमयाधिकरणम्



श्रीमते रामानुजाय नमः

अथ वेदान्तसारः

## सू. १३ आनन्दमयोऽभ्यासात् [१.१.६]

यद्यपि प्रधानादर्थान्तरभूतस्य प्रत्यगात्मनश्चेतनस्य ईक्षणगुणयोगस्सम्भवति, तथाऽपि प्रत्यगात्मा बद्धो मुक्तश्च न जगत्कारणम्, 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' (तै.आन.१.अ) इत्यारभ्य 'तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमयः' (तै.आन.५.) इत्यस्य आनन्दमयत्वप्रतिपादनात् कारणतया व्यपदिष्टोऽयमानन्दमयः प्रत्यगात्मनोऽर्थान्तरभूतस्सर्वज्ञः परमात्मैव । कुतः? अभ्यासात्—आनन्दमयस्य निरतिशयदेशाशिरस्कानन्दमयत्वेनाभ्यासात् । 'ते ये शतं प्रजापतेरानन्दाः । स एको ब्रह्मण आनन्दः' (तै.आन.८ ४) 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चन' इति हि वेद्यत्वेनायमानन्दमयोऽनवधिकातिशयोऽभ्यस्यते

## सू.१४—विकारशब्दान्नेतिचेन्नप्राचुर्यात् (१.१.६)

'स वा एष पुरुषोऽन्नरसमयः' (तै.आन.१) इति विकारार्थमयट्प्रकरणात् 'आनन्दमयः' (तै.आन.५.२) इत्यस्यापि विकारार्थत्वं प्रतीयते । अतोऽयमानन्दमयः नाविकाररूपः परमात्मा इति चेन्न अर्थविरोधात् प्राचुर्यार्थ एवायं मयडिति विज्ञायते, 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' (तै.आन.१) इति ह्यविकार आत्मा प्रकृतः । प्रकरणे च विकारार्थत्वं प्राणमय एव परित्यक्तम् । उक्तेन न्यायेन आनन्दप्राचुर्यात् परमपुरुष एवानन्दमयः ॥

## सू.१५तद्धेतुव्यपदेशाच्च [१-१-६]

'एष ह्येवानन्दयाति' (तै.आन.७.१) इति जीवान्प्रत्यानन्दहेतुरयमानन्दमयो व्यपदिश्यते; अतश्च न प्रत्यगात्मा ॥

## सू.१६=मान्त्रवर्णिकमेव च गीयते (१.१.६)

'सत्यज्ञानमनन्तं ब्रह्म' (तै.आन.१) इति मन्त्रवर्णोदितमेव 'तस्माद्वा एतस्मात्' (तै.आन.१) इत्यादिना—आनन्दमय इति गीयते ; अतश्च न प्रत्यगात्मा ॥

## सू.१७—नेतरोऽनुपपत्तेः (१.१.६)

इतरः प्रत्यगात्मा मन्त्रवर्णोदित इति नाशङ्कनीयम्, 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति प्रत्यगात्मनो बद्धस्य मुक्तस्य च ईदृशविपश्चित्वानुपपत्तेः । 'सोऽकामयत बहुस्यां प्रजायेय' (तै.आन.६) इति विचित्रस्थिरत्रसरूपबहुभवनसङ्कल्परूपमिदं विपश्चित्वमिति ह्युत्तरत्र व्यज्यते मुक्तस्य सर्वज्ञस्यापि जगद्व्यापाराभावादीदृशविपश्चित्वासम्भवः ॥

## सू.१८=भेदव्यपदेशाच्च १.१.६

'तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तरआत्माऽऽनन्दमयः' (तै.आन.५) इतिहि विज्ञानमयात् प्रत्यगात्मनो भेदेनायमानन्दमयो व्यपदिश्यते। नच विज्ञानमयविषयतया उदाहृतश्लोके 'विज्ञानं यज्ञं तनुते' (तै.आन.५) इति व्यपदेशात् विज्ञानमयो बुद्धिमात्रमित्याशङ्कनीयम्; यतस्सूत्रकार एव इमामाशङ्कां परिहरिष्यति 'व्यपदेशाच्च क्रियायां नचेन्निर्देशविपर्ययः' (शारी.२.३.३५) इति। 'विज्ञानं यज्ञं तनुते' (तै.आन.५) इति यज्ञादिक्रियायां जीवस्य कर्तृत्वव्यपदेशाच्च जीवः कर्ता। विज्ञानशब्देन जीवस्याव्यपदेशे बुद्धिमात्रव्यपदेशे च विज्ञानेनेति निर्देशविपर्ययस्स्यात्, बुद्धेःकरणत्वादिति॥

इतश्च-

## सू.१९.कामाच्च नानुमानापेक्षा [१.१.६]

'सोऽकामयत। बहुस्याम्' (तै.आन.६) इति स्वकामादेवास्य जगत्सर्गश्श्रूयते। प्रत्यगात्मनोहि यस्य कस्यचित्सर्गे अनुमानापेक्षा दृश्यते। अनुमानगम्यं प्रधानम् आनुमानम्॥

## सू.२०—अस्मिन्नस्य च तद्योगं शास्ति (१-१-६]

अस्मिन्नानन्दमये अस्य-प्रत्यगात्मनः, आनन्दयोगं शास्ति 'रसोवैसः। रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' (तै.आन.७,१) इति। अतः प्रत्यगात्मनोऽर्थान्तरभूतः सर्वज्ञः पुरुषोत्तमः जगत्कारणभूतः आनन्दमयः॥

इति वेदान्तसारः



श्रीमते रामानुजाय नमः

अथ वेदान्तदीपः

## सू.१३ आनन्दमयोऽभ्यासात् [१.१.६]

तैत्तिरीयके—'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' इति प्रकृत्य (तै.आन.१) 'तस्माद्वा एतस्माद्विज्ञानमयात्। अन्योऽन्तर आत्माऽऽनन्दमयः' (तै.आन.५) इत्यत्र जगत्कारणतयाऽवगत आनन्दमयः किं प्रत्यगात्मा? उत परमात्मेति संशयः। प्रत्यगात्मेति पूर्वःपक्षः। कुतः? 'तस्यैष एव शारीर आत्मा' (तै.आन.२) इति आनन्दमयस्य शारीरत्वश्रवणात् शारीरोहि शरीरसम्बन्धी। सच प्रत्यगात्मैव। तस्य चेतनत्वेनेक्षापूर्विका च सृष्टिरुपपद्यत इति। राद्धान्तस्तु—'सैषाऽऽनन्दस्य मीमाꣳसा भवति' (तै.आन.८) इत्यारभ्य 'यतो वाचो निवर्तन्ते। अप्राप्य मनसासह आनन्दं ब्रह्मणो विद्वान्' (तै.आन.९) इतिनिरतिशयदशाशिरस्कोऽभ्यस्यमान आनन्दः प्रत्यगात्मनोऽर्थान्तरभूतस्य परस्यैव ब्रह्मण इति निश्चीयते। शारीरात्मत्वं परमात्मन एव, 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' (तै.आन.१) इत्याकाशादिजगत्कारणतयाऽवगत एवान्नमयस्य शरीरआत्मेति प्रतीयेत, आत्मान्तरानिर्देशात्। श्रुत्यन्तरेषु पृथिव्यक्षरादीनां शरीरत्व

परमात्मन आत्मत्वं च श्रूयते 'यस्य पृथिवी शरीरम्' इत्यारभ्य 'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्योदेव एको नारायणः' (सुबाल.७) इति अन्नमयस्यात्मैव प्राणमयादिषु 'तस्यैष एव शारीर आत्मा। यः पूर्वस्य' (तै.आन.५) इत्यनुकृष्यते इति प्रत्यगात्मनो विज्ञानमयस्य च स एव शारीर आत्मा। आनन्दमयेतु 'तस्यैष एव शारीर आत्मा यः पूर्वस्य' (तै.आन.५) इति निर्देशः आनन्दमयस्यानन्यात्मत्वप्रदर्शनार्थं। अतो जगत्कारणतया निर्दिष्ट आनन्दमयः परमात्मैवेति ॥

सूत्रार्थस्तु–आनन्दमयशब्दानिर्दिष्टः आकाशादिजगत्कारणभूतः प्रत्यगात्मनोऽर्थान्तरभूतः परमात्मा। कुतः? तस्यानन्दस्य निरतिशयत्वप्रतीतिबलात्। 'सएको मानुष आनन्द.। तेयेशतम्' (तै.आन.८) इत्याद्यभ्यासात् तस्यच प्रत्यगात्मन्यसम्भावितस्य तदतिरिक्ते परमात्मन्येव सम्भवात् ॥

## सू.१४—विकारशब्दान्नेतिचेन्नप्राचुर्यात् (१.१.६)

'आनन्दमयः' (तै.आन.५) इति विकारार्थान्मयट्छब्दान्नायमविकृत. परमात्मा। न्छस्य च विकारार्थत्वमेव युक्तम्, 'अन्न...मय.' (तै.आन.१) इति विकारोपक्रमादितिचेन्न प्रत्यगात्मन्यपि 'नजायते म्रियते वा' (कठवल्ली १.२.१८) इत्यादिविकारप्रतिषेधात्प्राचुर्यार्थ एवाय मयडिति निश्चयात्। अस्मिश्चानन्दे 'यतो वाचोनिवर्तन्ते' (तै.आन.४)इति वक्ष्यमाणात्प्राचुर्यादयमानन्दप्रचुर. परमात्मैव। नह्यनवधिकातिशयरूपे प्रभूतानन्द. प्रत्यगात्मनि सम्भवति

## .१५तद्धेतुव्यपदेशाच्च-[१-१-६]

'एषह्येवानन्दयाति' इति जीवान्प्रत्यानन्दयितृत्वव्यपदेशाच्चाय परमात्मैव

## सू.१६=मान्त्रवर्णिकमेव च गीयते (१.१.६)

'सत्य ज्ञानमनन्त ब्रह्म' (तै.आन.१) इति मन्त्रवर्णोदित ब्रह्मैव 'तस्माद्वा एतस्मादात्मन.' (तै.आन.१) इत्यारभ्य 'आनन्दमय:' (तै.आन.५) इति च गीयते ; ततश्चानन्दमयो ब्रह्म ॥

प्रत्यगात्मनः परिशुद्ध स्वरूप मन्त्रवर्णोदितमित्याशङ्क्याह —

## सू.१७—नेतरोऽनुपपत्तेः (१.१.६)

परस्माद्ब्रह्मणः इतरः प्रत्यगात्मा न मन्त्रवर्णोदित तस्य 'विपश्चिता ब्रह्मणा' (तै.आन.१) इति विपश्चित्त्वानुपपत्तेः; विविध पश्यचित्वीह विपश्चित्त्वम्। तच्च 'सोऽकामयत। बहुस्या प्रजायेय' (तै.आन.६) इत्यादिवाक्योदितानिरुपाधिकबहुभवनसङ्कल्परूप सर्वज्ञत्वम्। तत्तु प्रत्यगात्मन परिशुद्धस्यापि न सम्भवति, 'जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च' (शारी.४.४.१७) इति वक्ष्यमाणत्वात्। अतः परब्रह्मैव मान्त्रवर्णिकम् ॥

## भेदव्यपदेशाच्च [१-१-६]

'भीषास्माद्वातःपवते' इत्यादिना अग्निवायुसूर्यादिजीववर्गस्य आनन्दमयात् प्रशासितृ. प्रशासितव्यत्वेन भेदो व्यपदिश्यते। अतश्चानन्दमयः परमात्मेति योजनान्तरम् 'तस्माद्वा एतस्माद्विज्ञानमयात्। अन्योऽन्तर आत्माऽऽनन्दमय.

(तै.आन.५.१) इति विज्ञानमयाज्जीवादानन्दमयस्य भेदो व्यपदिश्यते । विज्ञानमयोहि जीव एव । नत्वेमात्रं, मयट्श्रुतेः अतश्चानन्दमयः परमात्मा ॥

## सू.१९—कामाच नानुमानापेक्षा [१-१-६]

'सोऽकामयत' (तै.आन.१) इत्यारभ्य 'इदं सर्वमसृजत' (तै.आन.६.२) इति कामादेव जगत्सर्गश्रवणात् अस्यानन्दमयस्य जगत्सर्गे नानुमानगम्यप्रकृत्यपेक्षा प्रतीयते । प्रत्यगात्मनो यस्यकस्यचिदपि सर्गे प्रकृत्यपेक्षाऽस्ति । अतश्चायं प्रत्यगात्मनोऽन्यः परमात्मा ॥

## सू.२०—अस्मिन्नस्य च तद्योगं शास्ति (१.१.६)

'रसोवै सः । रसंह्येवायं लब्ध्वाऽऽनन्दीभवति' (तै.आन.७.१) इति अस्मिन्—आनन्दमये रसशब्दनिर्दिष्टे, अस्य अयंशब्दनिर्दिष्टस्य जीवस्य तल्लाभादानन्दयोगं शास्ति शास्त्रम् । प्रत्यगात्मनो यल्लाभादानन्दयोगः सतस्मादन्यः परमात्मैवेत्यानन्दमयः परं ब्रह्म ॥

॥ इति वेदान्तदीपे आनन्दमयाधिकरणं समाप्तम् ॥

अथ अधिकरणसारावली

मुख्येक्षा यद्यभीष्टा भवतु तदुचिते'सा पुनर्जीवतत्त्वे
सद्विद्यायांहि शब्दैस्त्रिभिरपरि सतस्तस्य जीवैक्यमुक्तम् ।
इत्यूहादुज्जिहानं प्रशमयितुमथ प्रस्तुतो विश्वकर्ता
जीवस्याप्यन्तरात्मा निरुपधिकमहानन्दधुरस्थाप्यतेऽत्र ॥ १ ॥
दृष्टःपूर्वं विकारे मयडिति चरमेऽप्येवमस्त्वित्ययुक्तम्
मध्ये तद्वद्ब्रदृष्टेःप्रचुरमिह वदेत् प्रत्ययोऽन्यस्य बाधात् ।
आनन्दप्राचुरी च प्रकृतपरसुखाल्पत्वलब्ध्यावधित्वा
दुःखाल्पत्वानपेक्षा परद्युरितिभिदश्शासितुस्तद्विरोधात् ॥ २ ॥
आत्मा तस्यैष पूर्वेत्युदितमनितरात्मत्वमस्यैव वक्तुं
शारीरोक्तिश्च तस्मिन्नखिलतनुतया स्यादसङ्कोचवृत्तिः ।
गोप्यत्वन्तत्तदर्थानुगुणमिति विभोस्तत्प्रसाद्यत्वमात्रं
प्राप्येऽस्मिन्प्राप्तिरूपा परविद उपसङ्क्रान्तिरानन्दसिन्धौ ॥ ३ ॥
निर्देहेऽस्मिन्निरंशे नहि भवति शिर पक्षपुच्छादिकिञ्चि
त्तस्मात्पुच्छं प्रतिष्ठेत्युदितमिह परं ब्रह्म भातीति चेन्न ।
साद्धापुच्छत्वक्लृप्तिर्यदिह कथमितरन्नानुमन्येत कल्पम्
ब्रह्मण्यात्मप्रतिष्ठा वचनमनितराधारताख्यापनाय ॥ ४ ॥
समाप्तमानन्दमयाधिकरणम्

## श्रीभाष्यम्

इदमाम्नायते छान्दोग्ये 'य एषोऽन्तरादित्ये हिरण्मयःपुरुषो दृश्यते हिरण्यश्मश्रु हिरण्यकेश आप्रणखात्सर्व एव

## श्रुतप्रकाशिका

निरस्ता। अत्र चानन्दमयस्यैवादित्यान्तर्वर्तिनः करचरणादिमत्त्वं तु ते, अत.पूर्वाधिकरणे शरीरमात्रेण संबन्धमात्रेण समुत्थिताया जीवत्वशङ्काया निरस्ताया पुनः करचरणादिसंस्थानकदेहविशेषणोपकरणित्वलक्षणसम्बन्धविशेषादन्येन जीवत्वशङ्कास्यादिति तन्निरासार्थमानन्दमयाधिकरणशेषत्वेनैतदधिकरणारम्भ इति। अयमर्थो यदर्पालादिरङ्गग्रन्थेऽभिप्रेतः॥

## सू.२१—अन्तस्तद्धर्मोपदेशात् (१-१-७)

विषयं दर्शयति— इदमिति। 'यएष' इति प्रसिद्धवन्निर्देशात्मानुवादरूपताशङ्कया अस्यार्थस्य प्रमाणान्तराप्राप्तत्वात् 'यदाग्नेयोऽष्टाकपालः' इतिवत् आदित्यशब्दः 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इति ण्यप्रत्ययान्तो

## गूढार्थसङ्ग्रहः

छान्दोग्ये प्रथमे षष्ठसप्तमखण्डयोः 'अन्तरादित्ये अन्तरक्षिणि' इति अन्तरशब्दघटितवाक्यद्वयमभिप्रेत्य सूत्रे अन्तरशब्दप्रयोग इतिभावेन वाक्यद्वय विवक्षितमित्याशयेनाह–यएषोऽन्तरादित्ये हिरण्मयःपुरुषो दृश्यतइत्यादिना तैत्तरीये–'आदित्यो वा एष एतन्मण्डल तपति तत्र ताऋचस्तदृचा मण्डलꣳ सऋचा लोकोऽथ यएष एतस्मिन्मण्डलेऽर्चिर्दीप्यते तानि सामानि ससाम्ना मण्डलꣳ ससाम्ना लोकोऽथ यएष एतस्मिन्मण्डलेऽर्चिषि पुरुषस्तानि यजूꣳषि सयजुषा मण्डलꣳ सयजुषा लोकस्सयजुषा त्रय्येव विद्या तपति यएषोऽन्तरादित्ये हिरण्मय पुरुषः' इति श्रूयते। अत्रपूर्व नारायण एव परब्रह्मेति कथनानन्तर 'अन्तर्यामी नारायण' इति व्याससिद्धान्तमभिधाय 'ध्येयोऽग्निप्रतीकाद्यम्' इत्यस्य नारायणस्यैवोपासनस्थानमुच्यते' इति विद्यारण्यभाष्ये उक्तम्। एतच्छ्रुतिव्याख्यानेऽपि नारायणशब्दवाच्यो य परमेश्वरः पूर्वानुवाकेऽभिहितः 'सएष' इत्युपक्रम्य 'अन्तरादित्ये—आदित्यमण्डलमध्य हिरण्मय वर्तते। हिरण्मयत्वं च श्रुत्यन्तरे प्रतिपादितम्। 'अथ यएषोऽन्तरादित्ये हिरण्मय पुरुषो दृश्यत' इति छान्दोग्यश्रुतिरुदाहृता। 'ततोह जज्ञे भुवनस्य गोपा. हिरण्मयश्शकुनिर्ब्रह्म नाम। येन सूर्यस्तपति तेजसेद्धः। पिता पुत्रेण पितृमान् योनियोनौ। नावेदविन्मनुते तबृहन्तम्। सर्वानुभुमा मानꣳ सपराय। एष नित्योमहिमा ब्राह्मणस्य। नकर्मणा वर्धते नोकनीयान्। तस्यैवात्मा पदवित्त विदित्वा। नकर्मणा लिप्यत पापकेन।' इति तैत्तरीयब्राह्मणान्ते काठके श्रूयते॥

अत्र सायणीये–हिरण्मयो ज्योतिर्मय. ब्रह्मेति यस्यनाम परब्रह्मैव विश्वसृजामनुष्ठान पारयितु हिरण्यशकुनिरूपं स्वीचकारेति' इत्युक्तम्। हितरमणीयरूप. हिरण्यवर्णो शकुनिः शक्तः प्रज्ञा पादने' इति भट्टभास्करीयम्। शकुनिशब्दस्य शक्तइत्येवार्थो युक्तः। येन सूर्य इत्युत्तरवाक्ये 'सर्वानुभुमात्मानम्' इत्यत्रोक्तादित्यमण्डलान्तर्वर्तिहिरण्मयपुरुषस्यैव ब्रह्मणः विवक्षाया स्फुटत्वात् 'येन हिरण्मया मना तेजसा इद्ध सूर्यस्तपति' इत्यनेन सूर्यस्य तापयितृत्व नस्वातन्त्र्येण अपितु तदन्तर्यामिहिरण्मयपुरुषाधीनतया इतिचैतत बोधितम्। 'योनियोनौ पुत्रेण पितृमान्' भवतीत्यत्र दशरथ वसुदेवादेः परब्रह्मसृष्टत्वेन पुत्रत्वम्। तेन दशरथवसुदेवादिना पितृमानपि भवति, 'पितर रोचयामास तदा दशरथं

## अथ अन्तरधिकरणम्

### श्रीभाष्यम्

यद्यपि मन्दपुण्यानां जीवानां कामाद्यगतस्थिरतिशयितानन्दयोगो भयाभयहेतुत्व-मित्यादि नसम्भवति, तथापि विलक्षणपुण्यानामादित्येन्द्रप्रजापतिप्रभृतीनां सम्भवत्येवे-तीमामाशङ्कां निराकरोति—

## सू.२१—अन्तस्तद्धर्मोपदेशात् [१.१.७]

## अथ अन्तरधिकरणम्

### श्रुतप्रकाशिका

अथावान्तरसङ्गतिमाह—यद्यपीति । कारणवादिवाक्यानां परमात्मपरत्वंहि निरूप्यते, तत्र कारणवाक्यत्वाभावेऽपि कथमन्तरादित्यविद्याऽत्र निरूप्यत इतिचेत् । उच्यते—आनन्दमयाधिकरणशेषतयेति । कथमुपनिषद्भेदेऽस्यापि तच्छेष-निरूपणम् । इत्थं आनन्दवल्ल्या—'सयश्चायं पुरुषे यश्चासावादित्ये सएकः' इत्यानन्दमयस्यैवादित्यमण्डलव-र्तित्वमुक्तम् छान्दोग्यप्रतिपादितस्यादित्यान्तर्वर्तिनो देहसम्बन्धेन जीवानतिरेके सत्यानन्दवल्ल्यामपि जीवानतिरिक्त आदि त्यान्तर्वर्ती पुरुष उक्तस्यादित्यानन्दमयो जीव एवेतिशङ्कायां तच्छेषत्वेनोत्तराधिकरणारम्भ इति । अधिकरणभेदः उक्त न्यायाविषयभूतोपनिषद्भेदहेतुकः ॥

ननु 'तस्यैष एव शारीर आत्मा' इति वाक्यप्रतिपन्नशरीरसम्बन्धस्य परिहृतत्वात् शरीरत्वश्रवणहेतु कजीवत्व शङ्का नोपपद्यत इतिचेत्—उच्यते तत्रान्नमयादीनां शरीरत्वमुक्तं नहि ते प्रत्येकं करचरणादिसंस्थानवन्तः तैस्सम्बन्धश्चा धिष्ठात्रधिष्ठेयभावलक्षणः शेषशेषिभावलक्षणो वा येन केनापि प्रकारेणोपपद्यते । अत्रतु 'हिरण्यश्मश्रुर्हिरण्यकेशः' इत्यादिना करचरणादिसंस्थानक शरीरं श्रूयते, तस्य च कर्तृत्व लोकप्रसिद्धम् । अत उपकरणोपकरणित्वलक्षणसम्बन्ध आर्थसिद्धः । ननु तत्राप्यन्नमयस्यात्मत्वश्रवणात्तदभिसंबन्धिनश्शरीरस्य करचरणादिमत्त्वात्तत्कृतजीवत्वशङ्काऽपि तत्रैव निरस्तेतिचेन्न । प्राणमयादीनां करचरणादिमत्त्वाभावात् अन्नमयस्यतु तथाविधत्वेऽप्यपि तंप्रतिविज्ञानमयस्यैव शरीरत्वात् विज्ञानमयंप्रति शरीरिण आनन्दमयस्य करचरणादिमच्छरीरकत्वाभावात् शरीरमात्रेण सम्बन्धमात्रनिबन्धनशङ्केव तत्र

## अथ अन्तरधिकरणम्

### गूढार्थसङ्ग्रहः

आनन्दवल्ल्याः सविशेषपरत्वेन ब्रह्मलक्षणैकवाक्यतात्पर्यमपि सगुणएवेति साधितम् । 'सयश्चायं पुरुषे यश्चास-आदित्ये' इत्यत्रादित्यान्तर्वर्तिनः आनन्दमयस्यापि ऐक्यप्रतिपादनेन जगत्कारणब्रह्मणो गुणवत्त्ववत् विग्रहवत्त्वमपि वर्ता-इति अन्तराधिकरणे निरूपयिष्यन् जीवविशेषभेदासिद्धौ आनन्दमयाधिकरणोक्तः जीवसामान्यभेदोऽपि न सिद्ध्यतीत्यत-स्तेन जीवविशेषभेदसाधनेन पूर्वाधिकरणोक्तार्थं दृढीकरोति—'अन्तरित्यादिना' इत्याशयेनावतारयति—यद्यपीत्यादिना ॥

## श्रुतप्रकाशिका

किंच दृश्यत इति व्यपदेशाच्च उपासनायामारोपितत्वमयुक्तम् । आत्मन्यारोप्यमाणंहि गरुडत्वं न ततःपूर्वं केनाप्यवगम्यते इहतूपासनविधानात्प्रागेव विद्यमानताऽनेन वर्तमानव्यपदेशेन प्रतीयते, अतो वास्तवत्वं, दृश्यत इत्यनेन पूर्वपूर्वोपासकप्रवाहैरारोपेणानुसंधीयमानत्वमुच्यत इतिचेन्न अशब्दत्वात् नह्यारोप्य यं दृश्यत इति श्रूयते । दृश्यत्वमेवारोपितत्वनिमित्तं चेन्न व्युत्पत्तिविरोधात् 'दृश्यतेत्वग्र्यया बुद्ध्या' इति दृश्यतयोक्तपरमात्मस्वरूपस्याप्यवास्तवत्वप्रसङ्गाच्च तन्मिथ्यात्वं प्रमाणविरुद्धमितिचेत् तुल्यम् 'आदित्यवर्णं तमसः परस्तात्' इति तमसः परस्तात् स्थितस्य विग्रहस्य स्वरूपस्येव मिथ्यात्वंहि प्रमाणविरुद्धं अतो वास्तवत्वसिद्धिः । अशरीरत्वश्रुतेरवकाशो वक्ष्यते तस्य यथेति । अस्य वाक्यस्य वाक्यकारेण षडर्थाः पूर्वपक्षत्वेन सिद्धान्तत्वेनचोक्ताः तत्रार्थत्रयस्य पूर्वपक्षत्वं तत्स्वभावादेवावगतम् । कपिः आदित्यः 'कपिचलने' इति धातोर्निष्पन्नः कपिशब्दः । कं पिबतीति च 'कपिर्बिभर्ति तेजनम्' इति च वैदिकप्रयोगः तस्य आसं मण्डलं कप्यासं यथाऽऽदित्यमण्डलं हृदयपुण्डरीकं च परमात्मन उपासनस्थानं तथा तदेवोपासकस्याक्षिणी अप्युपासनस्थानमित्येकोऽर्थः । अयं नोपपद्यते ॥

तथाहि 'अग्निश्चेन्द्रश्च' इतिवदपवादकचशब्दाद्यभावेऽपि समानविभक्त्यन्तयोः पदयोस्सतःप्राप्तसमानाधिकरण्यस्वारस्यभङ्गः पुण्डरीकसदृशे हृदये पुण्डरीकशब्दो गौणस्स्यात् । हृदयपुण्डरीकमिति प्रयोगस्तु पुरुषव्याघ्र इतिवत् 'उपमितं व्याघ्रादिभिस्सामान्याप्रयोगे' इति सूत्रविहितसमासत्वादुपमानोपमेयवाचकशब्दस्वारस्याद्य मुख्य एव अत्रतु तदभावात् गौणत्वमवर्जनीयम् उपासनस्थानमिति प्रथमान्तपदाध्याहार उपासकस्येति षष्ठ्यन्तपदाध्याहारश्च तत्परिहाराय तस्येत्युपासकपरत्वे सत्यप्रकृतपरामर्शित्वमनन्तरवाक्यस्थषष्ठ्यन्तशब्दविरूपार्थता च स्यात् । दिव्याङ्गवर्णनप्रकरणानौचित्यं च नामविधिवाक्यात्पूर्वं रूपकथनं ह्युदितम् 'यएष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षिन्' इति दक्षिणस्यैव उपासनस्थानत्वश्रवणादक्षिणी इति द्विवचनविरोधश्च । उर्ध्वमक्षिविद्याया उक्तत्वादिह तदुक्त्यनपेक्षणादस्य वाक्यस्य पुनरुक्तिश्च । अन्तरादित्यविद्याया 'यएषोऽन्तरादित्ये' इति स्थानस्योक्तत्वादक्षिविद्यायाच यएषोन्तरक्षिणि'

## गूढार्थसंग्रहः

च अपहतपाप्मत्वादयः ब्रह्मसम्बन्धितया जीवसम्बन्धितया च श्रुताः । एवं च अत्र दहराधिकरण(श) भाष्ये 'अपरेतु वादिनः पारमार्थिकमेव जैवरूपंमन्यन्तेऽस्मदीयाश्च केचित् ।' इत्युक्तिव्याख्यानभामत्या मतान्तरमाह—'अपरेतु वादिन इति' वाक्यस्य कल्पतरौ—'अस्यचौपाधिको जीवो अवाच्छेदे च अपहतपाप्मत्वादिसंभवइति मतम् । पारमार्थिकजीवब्रह्मविभागमतमाह—मतान्तरमिति' इत्युक्त्या जीवपरोभयवृत्ति अपहतपाप्मत्वादिगुणजातमिति पारमार्थिकजीवब्रह्मविभागवादिमतस्य प्राचीनत्वं सिद्धमिति प्रत्यग्गुणेति पदेन तस्यैवार्थस्य सूचनेन ततएव सद्विद्यादहरविद्ययोर्विकल्पसिद्ध इत्यर्थः सूचितो भवति । एतेनात्र आधुनिकप्रक्षिप्तदोषस्य नावकाशः । जीवसम्बन्धि अपहतपाप्मत्वादिगुणतुल्यगुणवती देवता 'अथ मत्स्य' इत्यत्र सपत्तव्यत्वेन विवक्षिता इति श्रुतिसूत्रतात्पर्यानुसारेण निर्णयः । अतश्च सद्विद्यायामपि—अपहतपाप्मत्वादिगुणविशिष्टदेवताया एव सपत्तव्यत्व सिद्धम् । उभयत्र एकपले सिद्धे विकल्प एव पर्यवसानम् । एतेन सद्विद्या निर्गुणविद्या दहरविद्या सगुणविद्येति परमत भाष्यकृता निराकृत भवति । निर्गुणस्य चाप्रामाणिकत्वेन तद्विद्यायास्सुतरामसंभवात् ॥

एवं गुणवत्त्वस्य पारमार्थिकत्वे विग्रहवत्त्वमपि पारमार्थिकमिति सिद्ध्यति । अतः सद्विद्याऽऽदहरविद्ययोः ब्रह्मणा गुणवत्त्वस्य विवक्षितत्वेन तस्य विग्रहः अन्तरधिकरणे प्रतिपाद्यते । 'हिरण्मयः' इत्यस्य हिरण्यवर्णो वा इति

## श्रुतप्रकाशिका

मण्डलवाची ' यएतस्मिन्मण्डले पुरुषो यश्चायदक्षिणेऽक्षिन्निति ' बृहदारण्यके ' यएष एतस्मिन्मण्डलेऽर्चिषि पुरुषः ' इति तैत्तरीयके च पुरुषस्य मण्डलवर्तित्वश्रवणात् हिरण्मयशब्दो रमणीय वपरः ' हिरण्मयः ' इति रूपसामान्यात् चन्द्रमुखवदितिहि वाक्यकारः । दृश्यते योगिभिरित्यर्थः ' दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ' इतिश्रुत्यैकार्थ्यात् ' यएवंवेद ' इत्युत्तरत्रोपासनविधानादुपासनार्थमारोपितरूपपरमिदं वाक्यमिति नाशङ्कनीयम् ' नसन्दृशे तिष्ठति रूपमस्य ' इत्युक्त्वा ' हृदा मनीषा मनसाऽभिक्लृप्तो यएवंविदुरमृतास्ते भवन्ति ' इति ' यदा पश्यः पश्यते रुक्मवर्णम् ' इति प्रकरणे ' मनसातु विशुद्धेन ' इति च विशुद्धमनसो ग्राह्यत्वोक्तेः आरोपिताकारोहि दुष्टेनापि मनसा ग्राह्यः, नच ' रूपमस्य ' इति स्वरूपमुच्यते षष्ठीस्वारस्यभङ्गप्रसङ्गात् । अतो विग्रहविशिष्टस्य विशुद्धमनोग्राह्यत्वाद्विग्रहपारमार्थ्यम् ॥

## गूढार्थसंग्रहः

रूपम्' (रा-भा.)इत्यादिकमत्र भाव्यम् । एतेन परत्वमात्रप्रकाशने सर्वेषां स्वानुभवो नसम्भवति आश्रयणासम्भवात । अवतारेषु सौलभ्यवात्सल्यादीनां प्रकाशने सर्वेषामप्याश्रयणसम्भवेन अनुभवो घटते इत्याशय. प्रकाशितो भवति । तस्यैव ब्रह्मशब्दार्थबृहत्व न परत्वमात्रेण । ' सपराये- ' परलोकगमनवेलायां इति सायणीयम् । 'मरणकाले स्वारे वा' इति भट्टभास्करीयम् । ' सर्वानुभुम् ' इत्यत्र सर्वस्यानुभवितार अनुभावयितारमित्यर्थः । ब्राह्मणस्य-परब्रह्मरूपस्य यो महिमा इति सायणीयम् । तस्यैव ब्रह्मणः पदवित् व्यवसायवित् ज्ञाणवदङ्घ्रिवदिति वाऽर्थः । तद्विदित्वा हिरण्मयविग्रहविशिष्ट सौलभ्यसौशील्यवात्सल्यादिगुणवन्त विदित्वा इत्यर्थः ।

सुरेश्वरवार्तिके-' एतमेव समुद्दिश्य मन्त्रो नारायणस्तथा । वेदविद्भिर्महाप्राज्ञैः पुरुषैर्विनियुज्यते ॥ ' इत्युक्तम् । एतमेवेति ' सहस्रशीर्षं देव विश्वाक्ष विश्वशम्भुवम् । विश्व नारायण देवमक्षर परम प्रभुम् ' इत्यादिर्मन्त्रः वेदार्थविद्भिः अन्तर्यामिणमुद्दिश्य विनियुक्तः । अतस्सवैदिक इत्यर्थः ' इत्यानन्दगिरिः । एतेन-आनन्दमयाधिकरणे अन्तर्यामित्वेन प्रतिपादितस्य नारायणस्य आदित्यमण्डलान्तर्वर्तित्व ' स यश्चाय पुरुषे यश्चासावादित्ये ' इति श्रुतिसिद्धम् अन्तरधिकरण विवक्षितमितिसिद्धम् । अत्र 'निर्विशेष परब्रह्म साक्षात्कर्तुमनीश्वराः । येमन्दास्तेऽनुकम्प्यन्ते सविशेष निरूपणैः । वशीकृतेमनस्येषां सगुणब्रह्मशील्नात् । तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनम्' इति कल्पतरावुक्तम् । प्रकृत्यधिकरणे आत्रेयवाक्यमपि सत्यवहारमात्रम् ' इत्यादिसक्षेपशारीरकाभिप्रेतवाक्यवचनानि स्वपक्षसाधकतयोपन्यस्तानि एतानि वाक्यानि न परपक्षसाधकानि अपितु,परिणामसाधकानीति भावप्रकाशे २.स.३४८,अत्रैव जिज्ञासाधिकरणेच उक्तम् । सक्षेपशारीरकएव 'अन्तर्गुणा भगवती परदेवतेति प्रत्यग्गुणेति ' (स.शा) इत्यादिवाक्ये गुणशब्दोपादानेन मधुसूदनव्याख्ये सरीत्या अर्थो न विवक्षित इति (७८३, ७८४ पु) गूढार्थसङ्ग्रहे प्रागेव निरूपितम् । अत्र ' प्रत्यग्गुणा' इत्यत्र प्रत्यक्शब्दः जीवपरः । जीवस्य गुणाएव गुणा.यस्याःसा इत्यर्थः । अयमाशयः अत्र अन्तर्गुणेत्युक्त्या बहिर्गुणत्वमपि क्वचित्प्रतिपाद्यतइति सूचितम् । अन्तर्गुणत्वमुपासनस्य गुणिविशेष्यकत्वेन, बहिर्गुणत्वतु गुणविशेष्यकत्वेनापि गुणविशेष्यकोपासन-अथ यदिदमस्मिन् ब्रह्मपुरे-दस्मिन् यदन्तस्तदन्वेष्टव्यम् ' इति दहरविद्यायाम् । सद्विद्याया-' तस्य तावदेव चिर यावन्नविमोक्ष्ये ' इति फलवाक्यम् । सद्विद्यायामेवोत्क्रान्तेः द्विवारमभिधानेन उत्क्रान्तिरवर्जनीयेति अवेत्यस्य उत्क्रान्त्यनन्तरमित्यर्थः अवश्यंफलवाक्यम् । सद्विद्यायामेवोत्क्रान्तेः सपत्स्य ' इत्यत्र सपत्ते. ' अस्माच्छरीरात्समुत्थाय परज्योतिरुपः । उत्क्रान्त्यङ्गीकारे गतिरपि स्वत एव सिद्ध्यति । ' सपत्स्य ' इत्यत्र सपत्ते. ' अस्माच्छरीरात्समुत्थाय परज्योविद्यतमय ' इति-दहरप्रजापतिवाक्ययो निर्णय इति सूत्रकारएव स्मारयति । दहरविद्यायां प्रजापतिविद्यायां

## गूढार्थसङ्ग्रहः

एवमस्य देवस्य अक्षिणी उपमितोपमन्वाऽर्हं नोपमा' इति (श.उ.मा) परोक्तवाक्यप्रतिपाद्यार्थोऽपि परित्यक्तार्थान्तःपाती। अत्र श्रुतौ यथा इत्येकमेव पदम् तेनैकैवोपमा 'कप्यासम्' इत्यस्य पुण्डरीकविशेषणतया तत्रोपमाविवक्षागमकाभावान्नोपमा कप्यासशब्दस्य लक्षणाङ्गीकारे गौणता स्यादिति व्यासार्यैरुक्तम्। अत्र प्रोद्गातृनयेन रूढिपूर्वकलक्षणासम्भवे योगानौचित्यम् 'य उद्गात्—लोहिताक्ष' इति मन्त्रे मण्डलान्तर्वर्तिनो लोहिताक्षत्ववर्णनदर्शनेन अत्रापि श्रुत्यन्तरप्रतिपादितार्थवर्णनसंभवे अर्थान्तरवर्णनानौचित्यं परैरुक्तम्। (म.नि.आ, शि.म.दी) ॥

प्रोद्गातृनये उद्गातृशब्दस्य यौगिकत्वमेव भाट्टदीपिकायां खण्डदेवेन स्थापितम्। पुण्डरीकशब्दस्य शबरस्वामिना नवमे 'पौण्डरीकाणि बर्हींषि भवन्ति' इति स्मरणार्थत्वेन विहितेषु पुण्डरीकेष्वतिदेशप्राप्तस्य 'दर्भैस्तृणीत हरितै.' इतिमन्त्रस्य दर्भपदस्थाने पुण्डरीकपदमिव हरितपदस्थाने रक्तपदमूहितव्यम् इत्युक्त्या पुण्डरीकपदस्य रक्तपुण्डरीकपरत्व सिद्धमिति ततएव लोहिताक्षत्वमपि सिद्ध्यतीति पृथक् 'कप्यास' पदे तदर्थविवक्षायाः नावश्यकत्वम्। पुण्डरीकाक्ष शब्दः भगवति सर्वग्रन्थेषु प्रयुक्ततया प्रसिद्धः। तेन अक्षिशब्दसमभिव्याहृतपुण्डरीकशब्देन रक्तपुण्डरीकमेव शीघ्रमुपस्थाप्यते। तत्र सूर्य एव लोहिताक्षत्वमुक्तम्। तस्मिन्मन्त्रे पुण्डरीकशब्दो नास्त्येव। पुण्डरीकशब्दसत्त्वेऽपि तेन लौहित्यप्रतीत्यर्थं रक्तबोधकपदप्रयोगस्य परैरप्रदर्शनेन तदभावेन च 'लोहिताक्षस्सूर्य' इत्युक्त्या न परेष्ट सिद्ध्यति। रक्तबोधकपदसत्त्वेऽपि शोभातिशयप्रतीत्यभावे विवक्षितार्थाबोधनेन न्यूनता। अतः शोभाऽतिशयप्रतीत्यनुरोधेन अर्थवर्णनमुचितम्। एवंचैतदर्थकवाक्यकारवाक्यानामिव सिद्धान्तवाक्यत्वम्। तत्र—'आदित्याक्षिस्थ वा श्रीमत्त्वात्' इति वाक्यानुसारेण कशब्दोपपदात् 'पापाने' इति धातोः औणादिकेकारप्रत्यये आतो लोपे च सति निष्पन्नः कपिशब्दः। 'असुक्षेपणे' इतिधातोः आस्यते विकास्यत इति कर्मणि घञन्तः। ततश्च कपेरासं विकास्यमिति कृद्योगलक्षणषष्ठीसमासे 'कप्यासम्' इत्यस्य रविकरविकसितमित्यर्थः। तात्पर्यदीपिकायां व्यासार्यैः 'कपिर्भमस्ति तेजनम्' इति वैदिकप्रयोगः (तै.आ.४.२३.३) अत्र भट्टभास्करीयम्—'तेजन तेजः, कपिः आदित्यः, क उदक भूयिष्ठ पिबति रश्मिभिरादत्त इति पुनः वीप्सायालोपो द्रष्टव्य.। बभस्ति भक्षयति रात्रौ प्रवेशित तेज. प्रातरुपादत्ते। 'अग्निंवावाऽऽदित्यस्साय प्रविशति उद्यन्तंवावाऽऽदित्यमग्निरनुसमारोहति' (तै.ब्रा.२.१.२.१) इति। अत्रादित्यस्य तेजोऽतिशयः विवक्षित.। 'क्षिपप्रेरणे' इति धातुः। प्रेरणं च आदित्यप्रेरण विकास एव। परैरपि सहस्रनामभाष्ये—'क जलं रश्मिभिःपिबन् सूर्यः' इत्युक्तम् ॥

अत्र परैः—'रात्रौ मुकुलता दिवा विकासः पद्मानामिति नियमोपगमेऽपि कालकृतोऽसौ न सूर्यकृतः। अतएव रामायणे कविप्रौढोक्तिसिद्धं दिवा गाढान्धकारं प्रस्तुत्य 'निलीयमानैर्विहगैः निमीलद्भिश्च पङ्कजैः। विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः॥' इति कालकृतावेव पद्मसङ्कोचविकासौ प्रतिपादिताविति। तथा विकसितत्वमपि आसशब्दतः क्लेशेन लम्भनीयम्' इति (ब्र.वि.आ) उक्तम् ॥

'निलीयमानैः' इतिश्लोके पङ्कजनिमीलनं पङ्कजानां सूर्यसंबन्धाभावबोधकम्। तेन कारणाभावाद्विकासाभावइत्यर्थः प्रतीयते। 'सप्तर्षिहस्तावचितावशेषाण्यधोविवस्वान् परिवर्तमानः। पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखैः' (कु.सं.सर्ग.१) अतिविततगगनसरणिप्रसरणपरिमुक्तविश्रमानन्दः। मरुदुल्लासितसौरभकमलाकरहासकृद्रविर्जयति ॥ (काव्यप्रकाश.सप्तमोल्लासे अपुष्टोदाहरणम्.श्लो.२५५) आगत्य सम्प्रति वियोगविसंष्ठुलाङ्गीमम्भोजिनीं क्वचिदपि क्षपितत्रियामः। एतां प्रसादयति पश्य शनैःप्रभाते तन्वङ्गि पादपतनेन सहस्ररश्मिः॥ इदं ध्वनिमर्यादासवलित का.प्रकाशे. पु.२४४.प.उल्लासे.श्लो.१२७। मित्रे क्वापिगते सरोरुहवने बद्धानने ताम्यति क्रन्दत्सु भ्रमरेषु वीक्ष्यदयिताऽऽसन्नपुरस्सा

## श्रीभाष्यम्

**सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद तस्यर्क्च साम च गेष्णौ इत्यधिदैवतमथाध्यात्मम् अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क् तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम ' (छां.८.१२.१) इति**

## श्रुतप्रकाशिका

इति स्थानस्योक्तत्वादुभयत्र स्थानविध्यपेक्षा नास्तीत्यनाकाङ्क्षितत्वादिदं वाक्यं नान्वितं स्यात्। 'अन्तरादित्ये' इत्यादित्यमण्डलस्य स्थानतया विहितत्वात् 'एवमक्षिणी' इत्यंशः स्थानत्वे विहिते सति स्थानभेदाद्रूपभेदेन विद्याभेदे देकवाक्ये विद्याद्वयस्य विधातुमशक्यत्वाच्च, वाक्यभेदात् सत्येकवाक्यत्वे सम्भवति नोपपद्यते कप्यासं पुण्डरीकं च दृष्टान्ततया अनूद्य 'एवमक्षिणी' इत्यंशः स्थानत्वस्य विधेयत्वं गम्यत इति चेत् तथा च 'अन्तरादित्ये' इत्युपक्रमविरोधः उपक्रमेऽपि आदित्यमण्डलस्यानुवाद इति चेत् तथा सतीयमक्षिविद्यैव स्यात्। तथा चान्तरादित्यविद्येत्याख्याविरोधः, अक्षिविद्यायामेतद्विद्योक्तरूपाद्यतिदेशानुपपत्तिश्च नकेवलं कप्यासवाक्यमात्रस्य अपितु कृत्स्नाया अन्तरादित्यविद्यायाः पुनरुक्तिश्च स्यात्, उभयोरप्यक्षिविद्यात्वाविशेषात् रूपादिवैषम्याभावाच्च। तस्मादस्य वाक्यस्योपात्तस्थानविधिपरत्वं न युज्यते [illegible] कपिः मर्कटः तस्य आस जघनप्रदेशः मर्कटपृष्ठभाग्यमुच्यत इति यावत्। तदप्ययुक्तम् मर्कटपृष्ठं पुण्डरीकं च विमुपमानद्वयम्? उतैकोपमा तत्रोपमाद्वित्वमयुक्तम् स्वतःप्राप्तसामानाधिकरण्यपरित्यागप्रसङ्गात् अन्यथाप्यर्थेन निर्वाहे सम्भवत्यपि हीनोपमाश्रयणायोगाच्च यद्येकोपमा तथा सति मर्कटपृष्ठसदृशपुण्डरीकसदृशे इत्युक्तं स्यात्, तदा कप्यासपदस्य गौणता स्यादिति। कप्यास, ईषद्विकसितमित्यपरोऽर्थः तत्रात्यन्तार्थानौचित्यं नास्त्येव, तथाऽप्यवयवशक्त्या वा रूढ्या वा प्रसिद्धिकाष्ठापरत्वं नास्तीति सोऽप्ययुक्तः एवं शब्दार्थस्वभावपर्यालोचनायामिदमर्थत्रयं पूर्वपक्षतया वाक्यकाराभिप्रेतमित्यवगतम् ॥

अर्थान्तरत्रयं तूपपन्नम् कं पिबतीति कपिः आदित्यः तेन अस्यते—क्षिप्यते विकास्यत इति कप्यासं तथाऽऽह वाक्यकारः 'आदित्याक्षिप्तं वा श्रीमत्त्वात्' इति कं पिबतीति कपिः नालं तस्मिन्नास्त इति कप्यासम्। अपाचितादपि पङ्कनान्नालस्थपुण्डरीकस्य शोभाऽतिशयोऽस्तीति सोऽत्र विवक्षितः। कं जलं 'आस उपवेशने' इति धातुरपि पूर्वकः 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इति वचनादपरकारलोपः। कप्यासं सलिलस्थमित्युक्तं भवति ॥

एवमस्यार्थत्रयस्योपपन्नतया वाक्यकारेण सिद्धान्ततयोक्तत्वमभिप्रेत्याहि भगवता भाष्यकारेण वेदार्थसङ्ग्रहेऽभिहितम् 'गम्भीराम्भस्समुद्भूतसुमृष्टनालरविकरविकसितपुण्डरीकदलामलायतेक्षणः' इति। गेष्णौ गानविशेषौ अधिदैवतं देवतायामुपासनम्। अध्यात्म, आत्मन्युपासनम्। आत्मशब्दो देहवचनः अमुष्य आदित्यस्थस्य आदित्येतद्धर्मोपदेशादिति वा अक्षणि तद्धर्मोपदेशादिति वा नसूत्रितम् अपि त्वन्तरशब्दस्सूत्रकारेण प्रयुक्तः अन्तरशब्दस्य 'अन्तरादित्ये'

## गूढार्थसंग्रहः

भट्टभास्करव्याख्याऽनुसार्यर्थः। 'हिरण्मय' इति रूपसामान्यात् 'चन्द्रमुखवत्' इति वाक्यमपि अमुमेवार्थं प्रतिपादयति—कप्यासमिति। अस्यार्थः 'गम्भीराम्भस्समुद्भूतसुमृष्टनालरविकरविकसितपुण्डरीकदलामलायतेक्षणः' इति वेदार्थसङ्ग्रहे उक्तः। अत्र वाक्यकारोक्तार्थषट्के अर्थत्रयं भगवता परिगृहीतम्। अर्थत्रयं च परित्यक्तम्। 'यथा कपेः मर्कटस्य कप्यासः—आसेरुपवेशनार्थस्य करणे घञ्। कपिपृष्ठान्तः येनोपविशति। कप्यास इव पुण्डरीकमत्यन्ततेजस्वि।

## गूढार्थसङ्ग्रहः

एवमस्य देवस्य आक्षिणी उपमितोपमत्वात्सर्वोपमा' इति (श.उ.भा) परोक्तवाक्यप्रतिपाद्यार्थोऽपि परिलसत्तार्थान्तःपाती। अत्र श्रुतौ यथा इत्येकमेव पदम्, तेनैकैवोपमा 'कप्यासम्' इत्यस्य पुण्डरीकविशेषणतया तत्रोपमाविवक्षागमकाभावान्नोपमा कप्यासशब्दस्य लक्षणाङ्गीकारे गौणता स्यादिति व्यासार्यैरुक्तम्। अत्र प्रोद्गातृनयेन रूढिपूर्वकलक्षणासम्भवे योगानौचित्यम् 'यउद्गात्—लोहिताक्ष' इति मन्त्रे मण्डलान्तर्वर्तिनो लोहिताक्षत्ववर्णनदर्शनेन अत्रापि श्रुत्यन्तरप्रतिपादितार्थवर्णनसम्भवे अर्थान्तरवर्णनानौचित्यं परैरुक्तम्। (ब्र.वि.आ, शि.म.दी) ॥

प्रोद्गातृनये उद्गातृशब्दस्य यौगिकत्वमेव भाट्टदीपिकायां दण्डदेवेन स्थापितम्। पुण्डरीकशब्दस्य शबरस्वामिना नवमे 'पौण्डरीकाणि बर्हींषि भवन्ति' इति स्मरणार्थत्वेन विहितेषु पुण्डरीकेष्वतिदेशप्राप्तस्य 'दर्भैस्तृणीत हरितैः' इतिमन्त्रस्य दर्भपदस्थाने पुण्डरीकपदमिव हरितपदस्थाने रक्तपदमूहितव्यम् इत्युक्त्या पुण्डरीकपदस्य रक्तपुण्डरीकपरत्व सिद्धमिति ततएव लोहिताक्षत्वमपि सिद्ध्यतीति पृथक् 'कप्यास' पदे तदर्थविवक्षायाः नावश्यकत्वम्। पुण्डरीकाक्ष शब्दः भगवति सर्वग्रन्थेषु प्रयुक्ततया प्रसिद्धः। तेन अक्षिशब्दसमभिव्याहृतपुण्डरीकशब्देन रक्तपुण्डरीकमेव शीघ्रमुप स्थाप्यते। तत्र सूर्य एव लोहिताक्षत्वमुक्तम्। तस्मिन्मन्त्रे पुण्डरीकशब्दो नास्त्येव। पुण्डरीकशब्दसत्त्वेऽपि लोहि त्यप्रतीत्यर्थं रक्तबोधकपदप्रयोगस्य परैरप्रदर्शनेन तदभावेन च 'लोहिताक्षसूर्ये' इत्युक्त्या नपरेष्ट सिद्ध्यति। रक्तबोधकपदसत्त्वेऽपि शोभातिशयप्रतीत्यभावे विवक्षितार्थाबोधनेन न्यूनता। अतः शोभाऽतिशयप्रतीत्यनुरोधेन अर्थवर्णनमुचितम्। एवंचैतदर्थकवाक्यकारवाक्यानामेव सिद्धान्तवाक्यत्वम्। तत्र—'आदित्याक्षिस वा श्रीमत्त्वात्' इति वाक्यानुसारेण कशब्दोपपदात् 'पापाने' इति धातोः औणादिककारप्रत्यये आतो लोपे च सति निष्पन्नः कपिशब्दः। 'असुक्षेपणे' इतिधातोः आस्यते विकास्यत इति कर्मणि घञन्तः। ततश्च कपेरासं विकासमिति कृद्योगलक्षणषष्ठीसमासे 'कप्यासम्' इत्यस्य रविकरविकसितमित्यर्थः। तात्पर्यदीपिकायां व्यासार्यैः 'कपिर्भमस्ति तेजनम्' इति वैदिकप्रयोगः (तै. आ.४.२३.३) अत्र भाट्टभास्करीयम्—'तेजनं तेजः, कपिः आदित्यः, क उदकं भूयिष्ठं पिबति रश्मिभिरादत्त इति पुनः वीप्सायालोपो द्रष्टव्यः। बभस्ति भक्षयति रात्रौ प्रवेशितं तेज. प्रातरुपादत्ते। 'अग्निंवावाऽऽदित्यस्सायं प्रविशति उदन्तंवावाऽऽदित्यमग्निरनुसमारोहति' (तै.ब्रा.१.२.१) इति। अत्रादित्यस्य तेजोऽतिशयः विवक्षितः। 'क्षिपप्रेरणे' इति धातुः। प्रेरणं च आदित्यप्रेरणं विकास एव। परैरपि सहस्रनामभाष्ये—'क जलं रश्मिभिःपिबन् सूर्यः' इत्युक्तम् ॥

अत्र परैः—'रात्रौ मुकुलता दिवा विकासः पद्मानामिति नियमोपगमेऽपि कालकृतोऽसौ न सूर्यकृतः। अतएव रामायणे कविप्रौढोक्तिसिद्धं दिवा गाढान्धकारं प्रस्तुत्य 'निलीयमानैर्विहगैः निमीलद्भिश्च पङ्कजैः। विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः॥' इति कालकृतावेव पद्मसङ्कोचविकासौ प्रतिपादिताविति। तथा विकसितत्वमपि आसशब्दतः क्लेशेन लम्भनीयम्' इति (ब्र.वि.आ) उक्तम् ॥

'निलीयमानैः' इतिश्लोके पङ्कजनिमीलनं पङ्कजानां सूर्यसंबन्धाभावबोधकम्। तेन कारणाभावाद्विकासाभावइत्यर्थः प्रतीयते। 'सप्तर्षिहस्तापचितावशेषाण्यधोविवस्वान् परिवर्तमानः। पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखैः' (कु.सं.सर्ग.१९) अतिविततगगनसरणिप्रसरणपरिमुक्तविश्रमानन्दः। मरुदुल्लासितसौरभकमलाकरहासकृद्रविर्जयति ॥ (काव्यप्रकाश.सप्तमोल्लासे अपुष्टोदाहरणम्.श्लो.२५५) आगत्य संप्रति वियोगविसंष्ठुलाङ्गीमम्भोजिनीं क्वचिदपि क्षपित त्रियामः। एतां प्रसादयति पश्य शनैःप्रभाते तन्वङ्गि पादपतनेन सहस्ररश्मिः॥ इदं ध्वनिमर्यादासंवलित का.प्रकाशे. पु.२४४.पं.उल्लासे.श्लो.१२७। मित्रे क्वापिगते सरोरुहवने बद्धानने ताम्यति क्रन्दत्सु भ्रमरेषु वीक्ष्यदयिताऽऽसन्नपुरस्था

## गूढार्थसंग्रहः

रसम् । चक्रहेन वियोगिना विसलतानास्वादिता नोज्झिता कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः ॥ का.प्रकाशे. अष्टमोल्लासे श्लो.३४४. उदयन्नेव सविता पद्मेष्वर्पयति श्रियम् । विभावयन् समृद्धीनां फलं सुहृदनुग्रहम् ॥ चन्द्रालोके निदर्शनालङ्कारप्रकरणे । 'भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः' (कुवलयानन्दः) इत्यादौ बहुत्र सूर्यस्य पद्मविकासहेतुत्व स्फुटम् । अत एव शिवार्कमणिदीपिकाया-अप्पयदीक्षितैः महाविद्याऽऽभरणोक्तेतरदोषाणामभिधानेऽपि अयं दोषः परित्यक्तः । 'नकर्माविभागात्' इतिसूत्रे यथा सवितृकिरणसन्दोहे सममेव सन्ततेऽपि कान्येव पद्मानि विकसितानि नाप कानि' इति श्रीकण्ठभाष्ये सवितृकिरणानां पद्मविकासहेतुत्वं स्पष्टम् । एतेन श्रीमत्त्वमपि सिद्ध्यति । श्रीशब्दस्य शोभार्थकत्वात् पुण्डरीकशब्दमात्रप्रयोगे मुकुलितम्लानव्यावृत्तिर्न भवति । अतः कप्यासपदप्रयोगः । एतेन अक्ष्णोः निमीलनावस्था व्यावृत्तिः । तेन सर्वदा अक्ष्णोरुन्मीलनमेवेत्यर्थस्सूचितः । कं पिबतीति व्युत्पत्त्या सपूर्णशोषणं सूच्यते । तेन जलसम्बन्धदशायामेव पुण्डरीकस्य विकासः विकासप्रयोजकजलसामान्यशोषकः यः स एव जलशोषेऽपि वा विकासहेतुरपि भवतीति आदित्यस्य विरुद्धधर्मसम्बन्धः सूच्यते । एतेन अक्ष्णोरपि आदित्यमण्डलान्तर्वर्ति पुरुषसंबन्धिनो.पातेन पापिनां दु.खं पुण्यवतां भक्तानां सुखमित्यर्थोऽपि सूच्यते । एतदेवाभिप्रेत्य आदित्यमण्डलान्तर्वर्तिपुरुष दृशोः आदित्यविकसित पुण्डरीकसादृश्यमभिहितम् । उपमानोपमेययोः आदित्यसंबन्धाभिधानेन विशेषस्सूचितः । (ख) सहस्रनामभाष्ये 'कपिः वराहो वा । 'कपिर्वराहश्श्रेष्ठश्च' इति वचनात् इत्यत्र कपिशब्दस्य श्रेष्ठार्थकत्वकथनेन तद्विवक्षायामुक्तविशेषलाभो न सम्भवति । आदित्यसम्बन्धेन विकासबोधनेन दलानामपि गुणातिशयः प्रतीयते । व्यासार्योदाहृतप्रमाणेषु दलानामेवोपमानता स्फुटा । मर्कटासस्यावमक्षायाः ल सम्बन्धिनः मलस्य क्षटिति सूचनेन स एव दोषः । उक्तार्थे तु मलसम्बन्धप्रतीतेरभाव स्सूचकः 'अमल'शब्दः पुण्डरीकेषु रविकरविकसितत्वप्रतिपादनेन साक्षाद्दलानामप्यायतत्वं, तेनाक्ष्णोरप्यायतत्वं सिद्ध्यति परोक्तार्थे तु नायमर्थस्सिद्ध्यति ॥

'कं पिबतीति कपिः—नालम् । तस्मिन्नास्ते इति कप्यासम् । अपचितादपि पद्मात् नालस्थपुण्डरीकस्य शोभाऽतिशयोऽस्तीति अत्रापि श्रीमत्त्वम् । तेन 'सुमृष्टनाळ' इत्यर्थवर्णने अपचितपद्मव्यावृत्तिः । कपिशब्दस्य मर्कटपरत्वे तु न व्यावृत्तिः । 'क जल—असभुवि' तस्मात् अपिपूर्वकात् के जले अप्यास्ते इति कप्यासम् । अपिपूर्वकधातुप्रयोगेण जलस्यापि विशेषस्सूच्यत इति तात्पर्येण 'गम्भीराम्भस्समुद्भूत' इत्युक्तम् । अस्यामपि योजनायां पद्मशोभाऽतिशयेन दृशोः शोभाऽतिशयस्सिद्ध्यति । वाक्यकारोक्तार्थत्रयेऽपि श्रीमत्त्वं सिद्धम् । श्रीमत्त्वस्य यथा प्रतीतिः तथा योजनात्रयमेव *वाक्यकारतात्पर्यविषय इत्येतेन निष्पन्नम् । अत्र निहतार्थादिदोषोद्भावनं महाविद्याऽऽभरणादौ 'वक्त्राद्यौचित्यवशात्* दोषोऽपि गुणः' इति काव्यप्रकाशे (७.५९) मम्मटोक्त्या निरवकाशम् ॥

*अत्र* 'हिरण्मयः पुरुषो दृश्यत' इत्यत्र पुरुषशब्दस्य 'स वा अयं सर्वासु पूर्षु पुरिशयः' *(बृ.उ)* इत्यौपनिषदनिर्वचनानुसारेण सर्वशरीरी इत्यर्थः । अन्तर्यामिब्राह्मणं च नारायणपरमिति शङ्कराचार्यतच्छिष्याभ्यां व्यवस्थापितमिति अत्रैव पूर्वमुक्तम् २५३. । हयशिरोरत्नभूषणदीधितौ तद्विस्तरः । 'य आदित्ये तिष्ठन्' इत्यादिना आदित्ये स्थितिरपि तत्रैवोक्ता । 'आदित्यो वा एष' इति मन्त्रस्य नारायणपरत्वं विद्यारण्यैनैवोक्तमिति पूर्वमेव निरूपितम् । 'नारायणपरं तत्त्वम्' इत्यत्र नारायण एव परतत्त्वमित्यर्थः. विद्यारण्येनैवोक्तः । तत्र तैत्तरीये रुद्रादिपदसत्त्वेऽपि दुर्गाऽऽदिपदवत् तदुपासकविषयेणैव तन्मन्त्राणां ऋक्संहितायां 'कद्रुद्राय' (१.४२.सूक्त १.मन्त्र) इति रुद्रसूक्तं सर्वरुद्रमन्त्रेषु दिशामुपस्थानमिति आश्वलायनेन (सू.४.९.२२) उक्तया स्फुटम् । तत्र 'यश्शुक्र इव सूर्यो हिरण्यमिव रोचते श्रेष्ठो देवानां वसुः' (ऋ.१,

## गूढार्थसंग्रहः

४३.५) इत्यत्र रुद्रस्य सूर्यसाम्यमेवोक्तम् नतु सूर्यान्तर्वर्तित्वम् । सूर्यइव शुक्रः दीप्तिमान् इति भाष्यम् । देवानां अप्ययं रुद्रोपासनोपयोगित्वमुक्तम् । एवमन्यत्रापि द्रष्टव्यम् अतः 'ध्येयस्सदा सवितृमण्डलमध्यवर्ती नारायणः' इत्यादिपुराणवचनोक्तार्थः श्रुत्यनुगुणएव। 'एतेन तन्मण्डलस्थं मां ध्यायेत्तेजो मूर्तिं चतुर्भुजम् । उद्युतं तज्जपेन्मन्त्र चित्रं देवानामुदगादनीकं चक्षुरित्यपि गायत्रीं च यथाशक्ति जप्त्वा सूक्तं च मामकम् ॥' इति कृष्णवचनेन विष्णोरादित्यान्तर्वर्तित्व गायत्र्युपास्यत्व च सिद्धम्। एतेषां वचनानां विष्णुभक्तमात्रविषयकत्व 'भर्ग' इत्यस्य नकारान्तत्व किंतु अकारान्तत्वेन रुद्रपरत्वमेव नतज परत्वमिति अप्पय्यदीक्षितैरुक्तम् (शि.दी) ॥

एवं 'ध्येयस्सदा' इत्यपि आग्नेयपुराणे विष्णुपूजाप्रकरणे पठितत्वेन न विष्णोः आदित्यमण्डलान्तस्थत्वसाधकम् अथापि देवस्य द्योतमानस्य सवितुरादित्यस्य सर्वंग्भिभूत तद्ब्रह्म भर्गः तेजोरूप वरेण्य धीमहि ध्यायेमहीति सम्बन्धः । तच्छब्दस्य ब्रह्मवाचकत्वात् तदुक्तं भगवद्गीतासु—'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधस्स्मृतः' इति, यएवंविधःपरमात्मा स नोऽस्माकं बुद्धीः दृष्टादृष्टार्थफलेषु कर्मसु प्रचोदयात् प्रेरयेत् इति । एवं च सवितृमण्डलान्तस्थ हिरण्मय पुरुष ध्यायन् जपेदित्युक्तं भवतीति स्मृतिचन्द्रिकायामुक्तम्। वैद्यनाथीयेऽपि अगस्त्यः—'योदेवस्सविताऽस्माकं धियोबुद्धीः धर्मादिगोचराः । प्रेरयेत्तस्य यद्भर्गस्तद्वरेण्यमुपास्महे ॥' इत्युपक्रम्य देवस्य सवितुर्वरेण्य यद्भर्गस्तद्ध्यायामि । तच्छब्दो ब्रह्मवाचकत्वेन च प्रसिद्धः । 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधस्स्मृतः' इति गीतास्मरणात् आदित्यमण्डलान्तर्वर्तिनं पुरुषमनुचिन्तयामि । 'यएषोऽन्तरादित्ये हिरण्मयःपुरुषः' 'यएष एतस्मिन्मण्डलेऽर्चिषि पुरुषः' इत्यादिश्रुतेः यस्सविता अस्माकं धियः ज्ञानादिप्रचोदयात् प्रचोदयति प्रवर्तयति तत्सवितुः तद्भर्गः चिन्तयामीति । 'ध्येयस्सदा सवितृमण्डलमध्यवर्ती नारायणस्सरसिजासनसन्निविष्टः केयूरवान् मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्र.' इति चोक्तम् ॥

भगवद्गीतायां तत्रतत्र ईश्वरशब्दस्य 'ईशनशीलो नारायण' इति शङ्कराचार्यादिभिर्विवरणेन गीता नारायणपरैवेति सिद्धम् । गीतायां 'वेदैश्च सर्वैरहमेव वेद्यः' 'पुरुषस्सपरःपार्थ भक्त्या लभ्यस्त्वनन्यया' इत्यादेः मूलभूता 'यथाऽचिरात् सर्वपापं व्यपोह्य परात्पर पुरुष याति विद्वान्' (कै.उ) 'वेदैरनेकैरहमेव वेद्यः वेदान्तकृद्वेदविदेवचाहम्' इति कैवल्य श्रुतिः । कैवल्योपनिषदि अन्ते 'यश्शतरुद्रीयमधीयते' इत्युपक्रम्य 'अत्याश्रमी सर्वदा सकृद्वा जपेत् । अनेन ज्ञानमाप्नोति संसारार्णवनाशनम् ॥ तस्मादेव विदित्वैन कैवल्य फलमश्नुते' इत्यत्र रुद्रस्याचार्यवदुपकारकत्व विवक्षितम् । 'रुद्रस्तारकं ब्रह्मोपदिदेश' इत्यत्र रुद्रस्याचार्यकत्व स्पष्टम्। काश्यां मणिकर्णिकाघट्टे मुमूर्षूणां दक्षिणश्रवसि रुद्रेण रामतारकोपदेश. (रामतापनीयोपनिषत्) स्पष्टमुक्तः । एतेन 'किं जप्येनामृतत्वं ब्रूहीति स्होवाच याज्ञवल्क्य शतरुद्रीयेणेत्येतानि हवा अमृतनामधेयानि एतैर्हवा अमृतो भवतीत्येवमेवैतद्याज्ञवल्क्यः' (जा.मु.ख.३) इति जाबालोपनिषदुक्तिरपि रुद्रस्याचार्यत्वाभिप्राया । अत्रैव प्रथमखण्डे 'अत्रहि जन्तोःप्राणेषु उत्क्रममाणेषु रुद्रस्तारकं ब्रह्मव्याचष्टे येनासावमृतोभूत्वा मोक्षी भवति तस्मादविमुक्तमेव निषेवेत' (जा.उ.१.ख) इति स्पष्टमुक्तम् । तेन 'मयैवैते निहताःपूर्वमेव' इति गीतोक्त्या अन्यत्र रुद्रस्य एवमेव हननसाधनत्वोक्तिः द्वारत्वविवक्षया निर्वाह्या । सहस्रनामभाष्ये विष्णुशब्दविवरणे 'आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः । इदमेक सुनिष्पन्न ध्येयो नारायणस्सदा ॥' इति महाभारतान्ते भगवता श्रीवेदव्यासेनोपसंहृतम् । 'हरिरेकस्सदा ध्येयो भवद्भिस्सत्त्वसंस्थितैः । ओमित्येव सदा विप्राः पठत ध्यात केशवम् ।' इति हरिवंशे। कैलासयात्रायां 'हरिरेको ध्यातव्यः' इत्युक्तं श्रीमहेश्वरेणापि। एतत्सर्वमभिप्रेत्य 'एषमे सर्वधर्माणां धर्मोऽधिकतमो

## श्रीभाष्यम्

आदित्यामिलप्योपजीव एव आहोस्वित्तदतिरिक्तः परमात्मेति किं युक्तम् ? उपचितपुण्यो-जीवएवेति। कुतः ? सशरीरत्वश्रवणात् शरीरसंबन्धोहि जीवानामेव सम्भवति। कर्मा-नुगुणप्रियाप्रिययोगायहि शरीरसम्बन्धः अतएवहि कर्मसम्बन्धरहितस्य मोक्षस्य प्राप्यत्व-मशरीरत्वेनोच्यते 'न हवै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति। अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः॥' इति, (छां.८.१२.१)

## श्रुतप्रकाशिका

आदित्यादिशब्दाभिलप्योपजीवएवेति। यत्रयत्र प्रकरणेषु करणकळेबरावस्थशरीरसम्बन्धेन जीव वशङ्का तेषां प्रकरणानां सर्वेषां परमात्मपरत्वस्य प्रदर्शनार्थमयमधिकरणारम्भ इत्यभिप्रायेणादिशब्दः प्रयुक्तः। अतएव हिरण्यगर्भादिजीवेभ्योऽन्य इत्यधिकरणोपसंहारे, मध्येऽप्यादित्यादिजीवव्यतिरिक्त इतिचोक्तं वेदान्तवेद्य कारण ब्रह्म किं प्रकृष्टपुण्योजीवः उत नेति विचारः ? तदर्थमानन्दमयः किं जीवः उत परमात्मेति ? तदर्थमन्तरादित्येऽन्तरक्षणि च वर्तमानः किं जीवः उत परमात्मा ? तदर्थं सशरीरत्वं किं जीवस्यैव उत परमात्मनोऽपि सम्भवतीति, तदर्थं शरीरसम्बन्धस्यैच्छिकत्व सम्भवति नेति तदर्थं पाप्मोदितत्वादिश्रुतिः 'अजायमान' इत्यादिश्रुतिरादित्यवर्णत्वादिश्रुतिश्च किमैच्छिकत्वं ज्ञापयति नेति तदर्थमिह पाप्मशब्दः किं पापमात्रपरः उत पुण्यपापरूपकर्मपरः ? अपहतशब्दः किं प्रध्वसपरः उतात्यन्ताभावपरः अजत्वादिश्रुतिः किं कर्मकृतजन्मविषयतया व्यवस्थापयितुं शक्यते नेति आदित्यवर्णत्वादिश्रुतिर्विग्रहस्य प्रकृतिप्राकृतविलक्षणत्वज्ञापिका नवेति चतुर्धा संशयः॥

अत्र पूर्वे कल्पाः पूर्वपक्षाः अपरेतु सिद्धान्ताः। यदा पाप्मशब्दः पापमात्रपरः अपहतिश्च प्रध्वसः जन्मनिषेधश्च नकर्ममूलजन्मविषयः, विग्रहश्च न प्राकृतविलक्षणः तदानीं विग्रहसम्बन्धस्येच्छामात्रमूलत्वाभावेन कर्मनिबन्धनतया परस्मिन्नसंभवेन जीवसाधारण्यादादि(स्थान)वर्ती पुरुषो जीवइत्यन्तरादित्यवाक्यैकार्थ्यादान दहराद्विवाक्येऽपि जीवस्यप्रतिपाद्यत्वात् सर्वाणि कारणवाक्यानि प्रकृष्टपुण्योपचयजीवपराणीति पूर्वपक्षः। यदा पाप्मशब्दः कर्ममात्रपरः अपहतशब्दोऽत्यन्ताभावपरः जन्मनिषेधश्च कर्ममूलजन्मविषयः, विग्रहश्च प्राकृतविलक्षणः तदानीं विग्रहस्यैच्छिकतया तस्य जीवापरस्मिन् सम्भवादादित्याद्यन्तर्वर्ती पुरुषः परइति तदैकार्थ्यादानन्दवल्लीप्रतिपाद्यस्य परमात्मत्वसिद्धेस्तदैकार्थ्यात्सर्वाणि कारणवाक्यानि परमात्मपराणीति राद्धान्त फलफलिभाव॥

पूर्वपक्षमाह—उपचितेति। जीवानामेव शरीरसम्बन्धमुपपादयति कर्मानुगुणेति। कर्मकृतप्रियाप्रिययोगार्थत्वं व्यतिरेकेणोपपादयति अतएवहीति। अतएव शरीरसम्बन्धस्य कर्ममूलप्रियाप्रिययोगार्थत्वादेवहि कर्मसम्बन्धरहितो मोक्षो

## गूढार्थसंग्रहः

न्वारभेते पूर्वप्रज्ञाच' (बृ.६.४.२) इत्यादौ 'अन्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यंवा गान्धर्वं वा दैवं वा प्राजापत्यंवा ब्राह्मंवा अन्येषां वा भूतानाम्' इति४'पुण्य पुण्येन कर्मणा भवती'तिच(बृ.६.४.५)उक्त्या शरीरसम्बन्ध पुण्यविशेषनिबन्धन इति प्रतीयते। अक्षिविद्यायां 'सएष येचैतस्मादर्वाञ्चो लोकास्तेषाचेष्टेमनुष्यकामानाच' (छा.१.८) इति। अन्तरादित्यविद्यायां 'सएष येचामुष्मात्पराञ्चो लोकास्तेषाचेष्टे देवकामानां च' (छां.६ ८) इत्यैश्वर्यं प्रतिपाद्यते। तद्धि ऐश्वर्यं पुण्यविशेषनिबन्धनमेव। आदित्यः देवगणे पठितः, अत पुण्यविशेषनिमित्तैश्वर्यवत्त्वं युक्तमेव। नहवैसशरीरस्येति। प्रियाप्रिययोर-

श्रीभाष्यम्

सम्भवति च पुण्यातिशयाज्ज्ञानाधिक्यं शक्त्याधिक्यं च अतएव लोककामेशत्वादि तदर्थोपपद्यते, ततएवचोपास्यत्वं, फलदायित्वं पापक्षपणकरत्वेन मोक्षोपयोगित्वं च मनुष्येष्वप्युपचितपुण्याः केचिज्ज्ञानशक्त्यादिभिरधिकतरा दृश्यन्ते । ततश्च सिद्धगन्धर्वादयः— ततश्च देवाः ततश्चेन्द्रादयः । अतो ब्रह्मादिष्वन्यतमएवैकस्मिन् कल्पे पुण्यविशेषेणैवम्भूतमैश्वर्यंप्राप्तोजगत्सृष्ट्याद्यपि करोतीति जगत्कारणत्वजगदन्तरात्मत्वादिवाक्यमस्मिन्नेवोपचितपुण्यविशेषे सर्वज्ञे सर्वशक्तौ वर्तते । अतो नजीवादतिरिक्तः परमात्मा नाम कश्चिदस्ति । एवं च सति 'अस्थूलमनण्वह्रस्वम्' (बृ.५.८.८) इत्यादयो जीवात्मनस्स्वरूपाभिप्राया भवन्ति । मोक्षशास्त्राण्यपि तत्स्वरूपतत्प्राप्त्युपायोपदेशपराणीति ॥

एवंप्राप्तेऽभिधीयते (अन्तस्तद्धर्मोपदेशात्) अन्तरादित्येऽन्तरक्षणि च यः पुरुषः प्रतीयते

श्रुतप्रकाशिका

ऽशरीरतया प्राप्यत्वेनोच्यत इत्यर्थः । ज्ञानशक्त्यादिकं लोककामेशित्वादिकं च कथं जीवस्य स्यादित्यत्राह–संभवति चेति । तथा दर्शयति मनुष्येष्वपीति । अत्र 'सएको मानुषआनन्दः' इत्याद्यभिप्रेतम् । आदित्येन्द्रप्रजापतिप्रभृतीनां सर्वेषां कारणत्वश्रवणाद्व्याहतिस्स्यात् पुण्यहेतुत्वात् क्षयित्वं च स्यादित्यत्राह–अतो ब्रह्मादिष्विति । सर्वविधवाक्यानां जीवपरत्वमाह–जगदित्यादिना । अपहतपाप्मत्वादिश्रुतयो नाकर्मवश्यतां वदन्ति, अपितु केवलपुण्यहेतुकशरीरवतः पापराहित्यं पापहेतुकम्, पुण्यहेतुकं, मिश्रहेतुकम् चेति त्रिविध शरीरमित्यभिप्रायेण [illegible] । मोक्षशास्त्रपराणि उपायपराण्युपेयपराणिचेत्यर्थः ॥

राद्धान्ते सौत्रं प्रतिज्ञापरमन्तरशब्दं व्याचष्टे अन्तरादित्यइति । द्वितीयसूत्रस्थान्यशब्दान्वयरब्ध साध्यधर्ममाह सजीवादन्यइति । तेन फलितमाह–परमात्मेति । हेत्वंशमवतार्य व्याचष्टे कुतइत्यादिना । 'तद्धर्मोपदेशात्' इति तच्छब्दः परमात्मपरः परमात्मनि सिद्धे तद्धर्मोपदेशः तद्धर्मोपदेशात्परमात्मसिद्धिरिति परस्पराश्रयशङ्कायामाह—

गूढार्थसंग्रहः

पहत्यभावे शरीरसंबन्धः प्रयोजक इत्युक्तम् । शरीरसंबन्धवतः प्रियाप्रिययोरपहत्यभावे रस्य परमात्मत्व न सम्भवति । अयोगव्यवच्छेदपादे जगत्कारणलक्षणलक्ष्यत्व अचिज्जीवविलक्षणस्य उपपादनीयम् । जगत्कारणत्वव्याहत [illegible] शिष्टस्य जीवस्य अस्याश्रुतो विवक्षितत्वे उक्तलक्ष्यासिद्धिः ॥

'अस्थूलमनण्वित्यादीनां कागतिरिति शङ्कायामाह–अस्थूलमनण्वित्यादीति । अन्तरादित्ये अन्तरक्षणिचेति । एतेन "'यएषोऽक्षिणि पुरुषो दृश्यते'" इत्यन्तराधिकरणविषयवाक्ये अन्तरशब्दो नास्तीति वाक्यद्वयमभिप्रेत्यैव सूत्रे अन्तरशब्दःप्रयुक्तः । अत्रान्तरशब्दप्रयोगेण वाक्यद्वयं विवक्षितमिति भावः । आनन्दमयाधिकरणे आत्मन्शब्दस्य— व्यापकचेतनार्थकतया आनन्दमयस्य सर्वशरीरत्व शारीरशब्दैकार्थ्येन च सिद्ध्यतीत्युक्तम् । अत्र 'हिरण्मयःपुरुषो दृश्यते' इति पुरुषशब्दःप्रयुक्तः । पुरुषशब्दश्च जगत्कारणसर्वशरीरिवाचकः । एवचान्तरादित्ये जगत्कारणत्वेन सर्वशरीरत्वेन प्रतिपादितंब्रह्म 'नेतरोऽनुपपत्तेः' इति पूर्वाधिकरणसूत्रे जीवभिन्नत्वेन साधितमिति 'नेतर' इत्यस्यानुषङ्गेण जीव

## श्रीभाष्यम्

सर्जीवादन्यः परमात्मैव कुतः? तद्धर्मोपदेशात् जीवेष्वसम्भवंस्तदतिरिक्तस्यैव परमात्मनो धर्मोऽयमपहतपाप्मत्वादिः ' सएष सर्वेभ्यःपाप्मभ्य उदितः ' (छां.१.६.७)इत्यादिनोपदिश्यते। अपहतपाप्मत्वंह्यपहतकर्मत्वं कर्मवश्यतागन्धरहितत्वमित्यर्थः

## श्रुतप्रकाशिका

जीवेष्वसम्भवन्निति। जीवेष्वसम्भवन्नेव धर्मो जीवातिरिक्तस्वाश्रयप्रतिपादकत्वं श्रुतेर्निश्चाययति। योग्यतापरामर्शसहकृतेयं श्रुतिः परमात्मानमभिधत्त इत्यर्थः अपहतपाप्मत्वं पापहेतुकशरीरसम्बन्धव्यावर्तकमित्यत्राह—अपहतेति। ॥

यद्यपि 'सर्वेभ्य.पाप्मभ्यउदितः' इति विषयवाक्ये तथाऽपहतपाप्मशब्दप्रयोगः श्रुत्यन्तरस्मरणार्थः। अपहतकर्मत्वमिति। पाप्मभ्यइति पाप्मशब्दः पुण्यपापरूपोभयविधकर्मपर इत्यर्थः हिशब्दः परमात्मप्रकरणेषु पापशब्दस्य पुण्यपापपरत्वमसिद्धि सूचयति 'नैतं सेतुमहोरात्रे तरतो नजरा नमृत्युर्नशोको नसुकृतं नदुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते' इति 'स नसाधुना कर्मणा भूयान्नो एवासाधुना कनीयान्' 'नकर्मणा वर्धते नोकनीयान्' इत्यादिश्रुतयोऽस्मिन्नर्थे प्रमाणं स्युः 'पाप्मान. कालजरामृत्युशोकादयस्सङ्घातःघात्' इति वाक्यकारवचः अलौकिकत्वेऽप्यनिष्टफलसाधनत्वरूपप्रवृत्तिनिमित्तयोगादुपपद्यन्न पुण्यस्यापि पापशब्दाभिधेयत्वमुक्तं हि मुमुक्षुदपेक्षया स्वर्गादीनामनिष्टफलत्व 'अमूनि यानि स्थानानि देवानां परमात्मनः' इत्यारभ्य 'एतेवै निरयास्तात स्थानस्य परमात्मनः' इति—

फनाकपृष्ठगमनं पुनरावृत्तिलक्षणम्। फजपो वासुदेवेति मुक्तिबीजमनुत्तमम् ॥

इतिच पाप्मशब्दव्याख्यानमुखेन बद्धव्यावृत्तिरुक्ता। अथापहतशब्दव्याख्यानमुखेन मुक्तव्यावृत्तिमाह—कर्मेति। जीवव्यावृत्तिं स्फुटयति कर्माधीनेति। अपहतपाप्मशब्दोऽसङ्कोचात् स्वासिम्परत्वं च पाप्मनामपघातकत्व स्वतस्सिद्धवदतीति हयग्रन्थनीकत्वसिद्धिः ॥

## गूढार्थसंग्रहः

सामान्यभिन्नब्रह्मभेदस्यान्तरादित्यपुरुषे साध्यताविवक्षामभिप्रेत्याह—सर्जीवादन्य.परमात्मेति। पूर्वाधिकरणे 'नेतरोऽनुपपत्तेः' इत्यत्र आनन्दमयेजीवसामान्यभेदे साधिते जीवसामान्याभिन्नब्रह्मणः पूर्वमुपस्थिततया तच्छब्दस्य सूत्रस्थस्य जीवसामान्यभिन्न ब्रह्मैवार्थः। तेन पर्यवसितार्थमाह—जीवेष्वसम्भवन्नित्यादिना। 'आवृत्तिरसकृदुपदेशात्' इत्यादौ सद्विद्यावाक्यमेव विवक्षितमिति परमाप्ये व्यक्तम्। सद्विद्या निर्गुणविद्या प्रजापतिविद्याऽपि तथैवेति परेवदन्ति। अन्तरादित्यविद्यातु सगुणविद्या, अयं च विषयविभागः औपेक्षिकः उभयत्र उपदेशशब्दप्रयोगादित्यभिप्रेत्य प्रजापतिविद्यायामपि प्रतिपादितमपहतपाप्मत्वादितद्धर्मत्वेन विवक्षितमित्याशयेनाह—अपहतपाप्मत्वादि इति। 'तस्योदिति नाम सएष सर्वेभ्यः पाप्मभ्यउदितः। उदेति हवै सर्वेभ्यः पाप्मभ्यः' (छां.१.६. . ) इत्यत्र उ पूर्वकेणधातोः गत्यर्थकतया पूर्वं सम्बन्धः अनन्तर तन्निवृत्तिः प्रतीयत इति पूर्वपक्षिणोऽभिप्रायः। 'नहवै देवान् पापं गच्छति' इति श्रुतिरपि तदभिप्रेता। तथाऽपि 'एष आत्मा अपहतपाप्मा' इति दहरविद्यायामपहतपाप्मत्वं परमात्मनिष्ठतया प्रतिपादितमिति तदेवात्र विवक्षितम्। 'य आत्मा अपहतपाप्मा' इत्यादौ जीवस्याप्यपहतपाप्मत्वश्रवणात् तद्व्यावृत्तिर्न सम्भवतीत्याशङ्कामपि निरस्यन्नपहतपाप्मत्वस्वरूप निरूपयति अपहतपाप्मत्वंहीति। कर्मवश्यस्य पापानामपहतिः विद्यामहिम्ना कदाऽपि,पाप-

## श्रीभाष्यम्

**कर्माधीनसुखदुःखभागित्वेन कर्मवश्याहि जीवा· अतोऽपहतपाप्मत्वं जीवादन्यस्य परमात्मन एव धर्मः । तत्पूर्वकं स्वरूपोपाधिकं लोककामेशत्वम् ।**

## श्रुतप्रकाशिका

न ह्यपहतशब्दः प्रध्वंसपरः । उत्पन्नस्यैव प्रध्वंसः अतः प्रध्वस्तपाप्मत्वश्रवणात्परमात्मनः कर्मसम्बन्धस्य प्रागविद्यमानत्वमवगम्यते ततश्च प्रध्वस्तपाप्मनः परमात्मनो मुक्तादवैलक्षण्यं स्यात् । यदि नित्यासंसृष्टपाप्मत्वं विवक्षितं तदत्यन्तमशब्द परस्य कुर्वतोऽकुर्वतो वा पाप्मसंस्पृष्टत्वम् । प्रथमे व्याघातः कर्तृसमवेतत्वात्क्रियायाः द्वितीयेऽसदादेरवैलक्षण्यं नह्यकृतेन कर्मणा कश्चिल्लिप्यत इति । उच्यते—परस्य तावत्पाप्माभावपराणि वाक्यानि विविधानि श्रूयन्ते 'ससर्वेभ्यः पाप्मभ्यउदितः' इति पाप्मभ्यउदयश्श्रूयते । 'अपहतपाप्मा' इति पाप्मनामपहतिश्श्रुता 'नैतं सेतुमहोरात्रे तरतो नजरा नमृत्यु· नशोको नसुकृतं नदुष्कृतं सर्वे पाप्मनोऽतो निवर्तन्ते' इति तरतेःप्राप्तिवाचित्वदप्राप्तिर्निवृत्तिश्च श्रूयते, 'स नसाधुना कर्मणा भूयान्नो एवासाधुना कनीयान्' इति कर्मफलास्पर्श उच्यते तत्र प्रथममुदितशब्दस्य मुख्यार्थोऽनुपपन्नः । विभोः परस्य पाप्मान्वितदेशादूर्ध्वगमनायोगात् । तस्माद्विश्लेषलक्षणा युक्ता तत्राकृतकर्माश्लेषस्य सर्वसाधारणस्य प्रतिपादनवैयर्थ्यं स्यात् अतः कृतानामपि कर्मणामश्लेषपरत्वं तस्य वाक्यस्याभ्युपगन्तव्यम् । क्रियायाःकर्तृसमवेतत्वेन स्वरूपासंश्लेषस्य व्याघातादेव फलासंश्लेषपरत्वमाश्रयणीयम् । तत्र हेत्वकथनात्तिरोधानाविर्भावयोः निष्प्रमाणकत्वाच्च तस्य स्वाभाविकत्वं नित्याविर्भूतत्वं च सिद्धम् ॥

अपहतशब्दश्च हिंसारूपघात्वर्थासम्भवाद्विनाशं लक्षयन् क्रियास्वरूपस्य नश्वरतया स्वरूपनाशप्रतिपादनवैयर्थ्यात् फलजननशक्तिविशिष्टरूपेण नाशं प्रतिपादयति यथा 'सर्वमेकपदे नष्टं दामश्रोत्रिये यथा' इति नाशशब्दो दानस्य फलजननशक्तिहानिं प्रतिपादयति तद्वत् ; अतईश्वरेण कृतानि पुण्यपापसजातीयानि कर्माणि न शुभाशुभफलजननशक्तानि स्युः । ईदृशमपहतपाप्मत्वं च पूर्वोक्तन्यायान्निरुपाधिकं नित्याविर्भूतंचाभ्युपगन्तव्यम् । 'स नसाधुना कर्मणा' इत्यत्राप्यसाधुकर्मफलास्पर्शोक्तः प्रायश्चित्तरूपसाधुकर्मनिबन्धन इति शङ्का च साधुकर्मप्रतिषेधेनैव निरस्ता । नच साधुकर्मंहतिस्तस्यापि निवर्तकविद्याबलादिति शङ्कनीयम् ध्यानकर्तृत्वानुक्तेः 'उदेतिहवै सर्वेभ्यः पाप्मभ्यो यएवंवेद' इति तस्य ध्येयत्वश्रवणाच्च, साधुकर्मनिषेधादेव ध्यानकर्तृत्वमपि निषिद्धं भवति यज्ञादिकमुपासनात्मकं च कर्मंहिसाधु

## गूढार्थसंग्रहः

सम्बन्धाभावएव स्वाभाविकी पापानामपहतिः, सैवात्र स्वाभाविकी पापहतिर्विवक्षिता तस्या एव मुख्यत्वात् जीवस्यतु न स्वाभाविकीसा इतिभावः । तमेव प्रकाशयति—कर्माधीनसुखदुःखभागित्वेनेत्यादिना ॥

एतेन 'सर्वेभ्यः पाप्मभ्यउदितः' इत्यत्र पूर्वं पापसम्बन्धवतः उद्गमनं न विवक्षितम् । अपहतपाप्म वत्तुल्यन्यायेन स्वाभाविकपापापहतिरेव विवक्षिता । तस्यैवात्र विवक्षितत्वं स्थापयति—तत्पूर्वकमित्यादिना ॥

यद्यपि 'उदेतिहवै' इति वाक्यानन्तरं—'सएष येचामुष्मात्पराञ्चो लोकास्तेषाचेष्टे देवकामानां च' इत्यन्तरादित्यविद्यायां पराग्लोककामेशितृत्वमुक्तम् । अथापि पराग्लोककामेशत्वेन इतरलोककामेशत्वमपि सिद्ध्यति । अक्षिविद्यायां 'तदेव रूपं यदमुष्य रूपम्' इत्यतिदेशप्रतिपादनेन अर्वाग्लोककामेशितृत्वमपि सिद्ध्यति । फलस्यातिदेशाभावेन कथं सिद्ध्यतीतिचेत् फलं पृथगेव निर्दिष्टं तेन सर्वलोककामेशत्वं विवक्षितम् । 'अन्तरादित्य' इत्युक्तया ऊर्ध्वदेशप्राप्ति

### श्रीभाष्यम्

सत्यसङ्कल्पत्वादिकं सर्वभूतान्तरात्मत्वं च तस्यैव धर्मं यथाऽऽह–' एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघित्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः '(छां.८.१.५ इति । तथा ' एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः ' (सुबाल.७) इति । ' सोऽकामयत । बहु स्यां प्रजायेय ' (तै.आन.६) इत्यादिसत्यसङ्कल्पत्वपूर्वकसमस्तचिदचिद्वस्तुसृष्टियोगो निरुपाधिकभयाभयहेतुत्वं वाङ्मनसपरिमितिकृतपरिच्छेदरहितानवधिकातिशयानन्दयोग इत्यादयोऽकर्मसम्पाद्यास्स्वाभाविका धर्मा जीवस्य न संभवन्ति,

### श्रुतप्रकाशिका

कर्मशब्दाभिलापार्हम् । अतः प्रायश्चित्तादिभिर्विनैव कर्मफलाश्लेष इत्यपहतपाप्मशब्दस्य हन्तिधातुश्च हानिपरः न प्रध्वंसपरः । ' नैनं सेतुम् ' इत्यत्रापि कृतानामेव कर्मणां फलजननशक्तिमत्त्ववेषेण प्राप्तवभाव उच्यते । अतो निरुपाधिकमपहतपाप्मत्वं नाम कर्मवश्यत्वानर्हत्वं न च परमात्मनि फलजननासमर्थस्य कृतकर्मणः प्रति न पाप्मत्वमिति श्रुतिगतपाप्मशब्दस्यामुख्यत्वमिति वाच्यम् ; अनन्तरत्यातिनिर्वीर्यं जरयामास तद्विषम् । जघन्विषधरोदरः इत्यादिषु निगीर्णजीर्णविषानीश्वरादीन् प्रति विषशब्दस्यैव मुख्यत्वोपपत्तेः क्षेत्रज्ञेषु प्रत्यवायकरपापसजातीयानां कर्मणां स्वलीलाकृतानामपि फलजननशक्तिप्रतिभटत्वं नाम कश्चिदयमीश्वरस्य स्वभावविशेषः परिशुद्धात्मस्वरूपविषयस्यापहतपाप्मशब्दस्यायमेवार्थः स तु तस्य तिरोधानार्हः प्रतिबन्धनिवृत्तावाविर्भवति, ईश्वरस्य तु तिरोधानानर्हो नित्याविर्भूत इति विशेषः । अतोऽपहतपाप्मत्वविषयश्रुतीनां यथोक्त एवार्थ इति तेन धर्मेणान्तरादित्येऽवस्थितस्य भगवतो जीववैलक्षण्यसिद्धिः । गुणान्तराणामपि जीवेष्वसम्भवं दर्शयति तत्पूर्वकं स्वरूपोपाधिकमिति । अपहतपाप्मत्वपूर्वकं वा स्वरूपोपाधिकं स्वाभाविकमित्यर्थः ।

एवं प्रसिद्धाप्रसिद्धयोरर्थयोरेकनिमित्तत्वभ्रमे प्रसिद्धवाचिनैकेनैव शब्देनोपादानार्हत्वमिहत्युदाहृतम् । आदित्यान्तर्वर्तिनोऽपहतपाप्मत्वगुणयोगेनानन्दवल्लीदहरविद्या सुबालोपनिषत्प्रतिपाद्यस्येह प्रत्यभिज्ञानात् । तत्रत्योक्ता गुणा अप्यरैव हिरण्मयपुरुषस्य धर्मा इत्यभिप्रायेण सत्यसङ्कल्पत्वादिकं सर्वभूतान्तरात्मत्वं चेत्युक्तम् । अपहतपाप्मत्वपूर्वकसत्यस-

### गूढार्थसंग्रह.

त्यप्रतीत्यानुगुण्येन पराग्लोकदेवकामेशत्वं तत्र प्रतिपादितम् । अक्षिविद्यायां तु अर्वाग्लोकमनुष्यकामेशितृत्वं मनुष्याणामर्वाग्लोके शयानत्वमुक्तम् । देवकामेशत्वं देवस्य न सम्भवतीत्युपचितपुण्यविशेषस्यापि तदसम्भवः । पराग्लोकदेवकामेशत्वप्रतिपादनेन ततो न्यूनार्वाग्लोकमनुष्यकामेशत्वं स्वत एव सिद्ध्यतीत्यभिप्रायः, इदं च स्वरूपोपाधिकमेव । 'न सुकृतं न दुष्कृतम्' इत्युक्त्या 'सर्वे पाप्मानोऽतो निवर्तन्ते' इति छान्दोग्यवाक्यया 'सर्वेभ्यः पाप्मभ्य.' इत्यत्र पाप्मशब्दस्य पुण्यपापोभयपरत्वं विवक्षितमिति सर्वलोककामेशत्वस्य पुण्यविशेषनिमित्तत्वं न सम्भवतीति भावः । अत्र ' सर्वेभ्यः पाप्मभ्य उदितः इति तेषां चेष्टे देवकामानां च ' इत्युक्त्या ' अपहतपाप्मा सत्यकाम. ' इति पदद्वयघटितछान्दोग्योक्तश्रुत्यर्थोऽपि विवक्षितः अनेनेतरेऽपि धर्मा आकृष्टा भवन्तीत्यभिप्रेत्य सत्यसङ्कल्पत्वादिकमित्याद्युक्तिः । इममेवार्थं व्यनक्ति—अकर्मसम्पाद्यास्स्वाभाविका धर्मा. इति । कर्मसम्बन्धाभावस्यात्र प्रतिपादनेन कर्मामूलककतिपयधर्मोक्त्या इतरेऽपि धर्मास्सिद्ध्यन्तीत्यभिप्राय. । 'तद्धर्मोपदेशात्' इत्यत्र तच्छब्द, उपदेशशब्दप्रयोगेण धर्माणां स्वाभाविकत्वं सिद्ध्यतीत्याशयः

## श्रीभाष्यम्

यत्तु शरीरसम्बन्धाच्च जीवातिरिक्त इत्युक्तम्; तदसत्, नहि सशरीरत्वं कर्मवश्यतां साधयति, सत्यसङ्कल्पस्येच्छयाऽपि शरीरसम्बन्धसम्भवात् । अथोच्येत-शरीरं नाम त्रिगुणात्मकप्रकृतिपरिणामरूपभूतसङ्घातः ; तत्सम्बन्धश्चापहतपाप्मनस्सत्यसङ्कल्पस्य पुरुषस्येच्छया न सम्भवति, अपुरुषार्थत्वात् । कर्मवश्यस्य तु स्वस्वरूपानभिज्ञस्य कर्मानुगुणफलोपभोगायानिच्छतोऽपि तत्सम्बन्धोऽवर्जनीयः इति । स्यादेवम्; यदि गुणत्रयमयः प्राकृतोऽस्य देहस्स्यात्; सतु स्वाभिमतस्स्वानुरूपोऽप्राकृत एवेति सर्वमुपपन्नम् ॥

## श्रुतप्रकाशिका

तत्पूर्वकसर्वभूतान्तरात्मत्वे श्रुतिमुदाहरति एषसर्वभूतान्तरात्मेति । तत्तदङ्कल्पत्वादौ श्रुतिं दर्शयति एषआत्मेति । न्तरत्वेनात्मत्वव्याख्यानपरस्यान्तर्यामिब्राह्मणस्य नारायणपरत्वज्ञापनार्थं च एष सर्वभूतान्तरात्मा- इति वाक्योपादानम् केषुचिद्वाक्येष्वपहतपाप्मत्वपूर्वकगुणविधानात् सर्वशाखाप्रत्ययन्यायेन वाक्यान्तरेष्वपि तत्पूर्वकत्वं विवक्षितमित्यभिप्राये णाह-सोऽकामयतेति । जगत्कारणत्वमेव वेदान्तवेद्यस्य ब्रह्मणो लक्षणं कारणत्वे सत्यसङ्कल्पः सत्यसङ्कल्पत्वे चापहतपाप्म- त्वपूर्वकं तच्च नारायणप्रत्यभिज्ञापकं च सुबालोपनिषदैकार्थ्यादिति भावः ॥

वाङ्मनसेति परिच्छेदकासिद्धिमाह पूर्वपक्षमनुवदति यत्त्विति । परिहरति तदसदिति । शास्त्रैकप्रमाणे वस्तुनि लोकदृष्टव्याप्तिमूलस्तर्को न कर्मवश्यत्वसाधक इत्यभिप्रायेणाह—नहीति । कल्पकस्याप्यसिद्धिमाह—सत्यसङ्कल्पस्येति । सत्यसङ्कल्पस्य कर्मनैरपेक्ष्यमपहतपाप्मत्वपूर्वकसत्यसङ्कल्पत्वश्रुत्युपपादनेन समर्थितम् । अतएव 'सएष येचामुष्मात्पराञ्चो लोकास्तेषाचेष्टे देवकामाना च' 'सएष येचैतस्मादर्वाञ्चो लोकास्तेषांचेष्टे मनुष्यकामानां च' इत्यादित्याक्षिपुरुषविषयवाक्यद्वयेन प्रतिपन्नमैश्वर्यमनवच्छिन्नं तदवच्छेदे शङ्क्यमानेऽपि सोऽवच्छेदोऽप्यैच्छिकः अन्यथाऽसिद्ध इति फलितत्वान्न कण्ठोक्तम् । विग्रहविषयाया इच्छाया असम्भवं शङ्कते अथोच्येतेति । हेयत्वसूचकस्त्रिगुणात्मकशब्दः 'सत्त्वं लघुप्रकाशकमिष्टमुपष्टम्भकं चलं च रजः । गुरुवरणकमेव तमः' इत्युक्ते इच्छाया अभावेऽपि कर्मपारवश्यात् जीवस्य तत्सम्बन्धसम्भवमभिप्रेत्याह—कर्मेति । कर्मावरणहेतुं स्वस्वरूपानभिज्ञस्येति विशेषणम् । परिहरति स्यादिति । स्वाभिमतेत्युक्तेऽभिमतत्वमयोग्येऽपि न सम्भवतीति तद्व्यावृत्त्यर्थमाह-अनुरूपेति । कुतइत्यत्राह-अप्राकृत इति । परमात्मस्वरूपंहि निरतिशयानन्दरूपं सर्वज्ञ वास्तव्य आनात्मवति स्वस्वरूपाद यत्र भोग्यत्वश न न दक्तु युत्तम, अतस्सर्वज्ञस्य तस्य विग्रहे स्पृहणीये स्वरूपस्य भोग्यतावैकल्यं स्यादित्यत्राह— सर्वमुपपन्नमिति । कथमुपपन्नमित्यत्राह—

## गूढार्थसंग्रह

इच्छयाऽपि शरीरसम्बन्धसम्भवादिति । उक्तं च शङ्करभाष्येऽपि 'स्यात् परमेश्वरस्यापीच्छावशात् मायामयं रूपं साधकानुग्रहार्थम्' इति अत्र 'भक्तानुग्रहविग्रह(ब्र.नै प्र ख ७ ८८) इति वचनम्' विवक्षितम् । सर्वकारण वस्तु विकार धर्मैरपि कैश्चिद्विशिष्टं परमेश्वरं उपास्यत्वेन निर्दिश्यते 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः' इत्यादिना । तथा हिरण्यश्मश्रुत्वादिनिर्देशाऽपि भविष्यति इति च । 'पश्य मे पार्थ रूपाणि' इति गीताशङ्करभाष्ये 'दिविभवानि दिव्यान्यप्राकृतानि' इत्युक्तम् । उपासनमपरब्रह्मविषयकं अपरमुक्तिफलकं सविशेषस्य मिथ्यात्वेन मिथ्यार्थविषयकमित्यर्थः लघुसिद्धान्त एव पर्यालोचितः । सविशेषस्यापि कौटस्थ्य सम्भवति, निर्विशेषस्याप्रामाणिकत्वमिति च महासिद्धान्ते निरू-

## श्रीभाष्यम्

एतदुक्तं भवति—परस्यैव ब्रह्मणो निखिलहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपतया

### गूढार्थसङ्ग्रहः

षेयम् । परब्रह्मणः सगुणत्वसिद्धौ ततएव विग्रहवत्त्वमपि सिद्ध्यति । 'इच्छावशात्' इति (श्री) भाष्योक्तौ 'इच्छागृहीताभिमतोरुदेहः' इति विष्णुपुराणोक्तार्थो विवक्षितः । 'साधकानुग्रहार्थम्' इत्युक्त्या 'ससाधिताशेषजगद्धितोऽसौ' इत्युक्तार्थः अङ्गीकृतप्राय एव 'तेजोबलैश्वर्य' इत्युक्तषाड्गुण्यं च 'स च भगवान् ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः' (श्री) इति गीताभाष्योपक्रमे शङ्कराचार्यैरङ्गीकृतमेव । 'मायाह्येषा' इत्यतः पूर्वं 'सत्त्वं रजस्तमश्चैव न गुणास्तं भजन्ति वै । द्विर्द्वादशेभ्यस्तत्त्वेभ्यः ख्यातोऽयं पञ्चविंशकः । यं प्रविश्य भजन्तीह मुक्ता वै द्विजसत्तमाः । स वासुदेवो विज्ञेयः परमात्मा सनातनः ॥' इत्युपक्रम्य वासुदेवस्य व्यष्टिसमष्टिप्रळयकारणत्वं सर्वभूतात्मभूतो हि वासुदेवो महाबलः । पृथिवीवायुराकाशमापो ज्योतिश्च पञ्चमम् । तदा विशति योब्रह्मन् अदृश्यो लघुविक्रम.' इत्यादौ सङ्कर्षणप्रद्युम्नानिरुद्धानां जीवमनोऽहङ्कारपदसामानाधिकरण्यमुखेन तत्त्वं निरूप्य 'मायाह्येषा मया सृष्टा' इत्यादिश्लोकः पठितः अनन्तरं 'मयैतत्कथितं सम्यक् तव मूर्तिचतुष्टयम् । अहं सर्वत्रगो ब्रह्मन् भूतग्रामशरीरक । भूतग्रामशरीरेषु नश्यत्सु न नशाम्यहम्' इत्याद्युक्तम् सर्वभूतात्मभूतः स : प्रद्युम्न. अनिरुद्धः सोऽहङ्कार' इत्यादौ पूर्वं प्राकृतपदार्थाभेदो वासुदेवस्य प्रतीयत इति भ्रमं व्युदस्यति—मायेति यत् जगद्रूपं मां पश्यसि एषा जगद्रूपा मया सृष्टा माया मूलप्रकृतिरित्यर्थः । मायाशब्देन जगतो न मिथ्यात्वसिद्धिरिति अन्यत्र स्पष्टम् प्राकृतजगन्नियामकत्वमात्रमेव न तु प्राकृतवस्त्वभेदः अत. स्वस्य सत्त्वरजस्तमो गुणवत्त्वं न कदापीत्याह—सर्वभूतगुणैर्युक्तमिति । एतेन पूर्वोक्तनिर्गुणत्वं प्राकृतगुणशून्यत्वमेव न तु गुणसामान्यशून्यत्वमिति सिद्धम्। इति अयमर्थः हयशिरोरत्नभूषणदीधिनौ उपपादितः । प्रकरणपर्यालोचनायामयमेवार्थो युक्तः ॥

'भारूप' इत्यत्र विग्रहोपाधिकरूपवत्त्वमेव विवक्षितम् । अन्यथा साधकानुग्रहासम्भवात् अतएव (न्या.र) उपासकानुग्रहार्थपरिगृहीतविग्रहोपाधिकदीप्तिमत्त्वं वा' इति भाष्ये समभिहितम् । तन्निबन्धनमेव सर्वगन्धत्वं सर्वरसत्वं च । उपासकानुग्रहार्थमेते गुणा विवक्षिता इति 'विवक्षितगुणोपपत्तेश्च' इति सूत्रे व्यक्तम् । सूर्यस्य ऋग्यजुस्सामसम्बन्धः 'वेदैरशून्यस्त्रिभिरेति सूर्यः' (काठक) 'आदित्यो वा एष एतन्मण्डलं तपति तत्र ता ऋचः' (तै.उ) इत्यादौ प्रसिद्धः । ऋग्यजुस्सामगैः सन्ध्यावन्दनादौ अस्य रूपस्योपास्यत्वं सर्वसम्मतम् । तेन साधकानुग्रहार्थं रूपगुणवत्त्वस्य मिथ्यात्वे सर्वस्यापि वेदभागस्याप्रामाण्यमेव स्यात् अतः गुणानां विवक्षावत् रूपस्यापि विवक्षाऽवश्यमेषितव्या । शाण्डिल्यविद्यायां जीवब्रह्माभेदो विवक्षित इति सूत्रकाराभिप्रायः परैरपि निरूपितः शाण्डिल्यविद्याया. सविशेषविषयत्ववदन्तरादित्यविद्याया अपीति परे वदन्ति । तस्यां विद्यायां 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इति प्रथमवाक्यम् इदञ्च सामानाधिकरण्यवाक्यम् । अत्र जन्मस्थितिलयैस्सर्वस्य ब्रह्माभेदः प्रतिपादित. तेनोपादानोपादेयभावनिबन्धनएव सामानाधिकरण्यनिर्देश इति स्थापितं भवति । अन्तर्यामित्वनसत्ताऽनुवृत्तिलक्षणस्थितेरपि सामानाधिकरण्यनियामकत्वम् । परसम्मतमहावाक्येष्वपि पूर्वमुपादानोपादेयभावस्य प्रतिपादनेन तन्निबन्धनमेव सामानाधिकरण्यमिति पूर्वमेव निरूपितम् । एवं च निर्विशेषस्याप्रामाणिकतया निर्विशेषविद्यैव शशशृङ्गतुल्या । अतस्सर्वाऽपि विद्या सविशेषविद्यैव , अतश्च गुणानां विवक्षासत्वे विग्रहस्य विवक्षा उक्तनीत्यापि स्वीकर्तव्या । 'भारूप' इत्यत्र दिव्यमङ्गलविग्रहः तद्वदेव 'हिरण्मयः पुरुषो' 'हिरण्यश्मश्रुः' इत्यादावप्यप्राकृतविग्रहो विवक्षितइति श्रुतिसूत्रसिद्धान्तः । अमुमेव सिद्धान्तं व्यनक्ति— परस्यैव ब्रह्मण इत्यादिना ॥

## श्रीभाष्यम्

नुग्रहेण तत्तत्प्रतिपत्त्यनुरूपसंस्थानं करोत्यपारकारुण्यसौशील्यवात्सल्यौदार्यजलनिधिः

## श्रुतप्रकाशिका

परमात्मविग्रहो युज्यत इति 'नित्यालिङ्गस्वभावसंसिद्धिरिन्द्रियाकाराङ्गप्रत्यङ्गव्यञ्जनवती' 'उज्जहारात्मनः केशौ सितकृष्णौ' 'अंशांशेनावतीर्योर्व्याम्' 'समस्तशक्तिरूपाणि तत्करोति जनेश्वर' 'वसुदेवगृहे जायमानस्स्वमूर्त्या' 'सोऽंशो विष्णुमयं स्थानम्' इत्याद्यप्रानुसन्धेयम्। उपासकानुग्रहोपयुक्ता गुणा उच्यन्ते अपारेति। कारुण्यं—परदुःखासहिष्णुत्वम्। सौशील्यं—महतो मन्दैस्सह नीरन्ध्रेण संश्लेषस्वभावत्वम्। वात्सल्यं दोषेऽपि गुणबुद्धिहेतुस्नेहः—यथा मातुःपुत्रे औदार्यं, दातृप्रतिग्रहीतृविभागबुद्धिरहितं दातृत्वम्। एते सौलभ्योपयुक्ता गुणाः॥

## गूढार्थसंग्रहः

नीरन्ध्रसंश्लेषएव। रूपविषयेऽपि तथा संश्लेषस्सम्भवति एतद्रूपस्य वासुदेवरूपांशमात्रत्वमेव। पुरुषशब्दस्य वासुदेवपरत्वात्। अत्र विष्णोः इतराविशेषेण क्षयः प्रतीयते। अथापि 'ओमित्येतदक्षर—विष्णुसंज्ञितम्' मै.६.२३ इतिप्रागुक्तं तदुपनिषच्छ्रुतिवाक्ये अच्युतशब्दे 'च्यवनोत्पत्तियुक्तेषु ब्रह्मेन्द्रवरुणादिषु। यस्मात्त्वं च्यवसे स्थानात् तस्मात्सङ्कीर्त्यतेऽच्युतः' किंच ब्रह्मा च रुद्रश्च—प्रळयं नाधिगच्छन्ति' (भा.मो.३५९-२६१) इत्यत्राच्युतिराहित्यस्य प्रतिपादनेन ध्रुवत्वप्रतिपादनेन च स्वेच्छामूलकशरीरसंबन्धविगमएव विष्णोः क्षयो विवक्षितः। विष्णुवासुदेवयोः अखण्डप्रणवार्थयोरैक्यम्(इ.शि.र.दीधितौ)व्यक्तम्।

अपारकारुण्येत्यादिना। विग्रहस्य मिथ्यात्वं न विवक्षितमिति सूचितम्। एतेन प्रागुक्तगुणेषु उपाश्रयणस्यात्यन्तानुगुणाः कारुण्यादय इति बोधितम्। 'इन्द्रोमायाभिःपुरुरूप ईयते तदेतद्ब्रह्म—अयमात्मा ब्रह्म सर्वानुभूः'। 'येन इत्यत्र सूर्यस्तपति—सर्वानुभुमात्मानं सम्पराये' इत्यत्र यस्सर्वानुभवउक्तः एतेषां गुणानां सत्त्वएव स निर्वहति नान्यथा। 'सर्वानुग्राहकत्वेने'ति प्रागुदाहृतब्रह्मबिन्दूपनिषद्वाक्ये अन्तर्यामिरूपस्य उपासकानुग्रहार्थत्वं स्पष्टम्। 'मायाभिः' मायाशब्दस्य न मिथ्याबोधकत्वमिति जिज्ञासाऽधिकरणे ८७५.पु. स्पष्टम्। अत्र कारुण्यवात्सल्यस्वरूपनिष्कर्षः भावप्रकाशे(३.सं)द्रष्टव्यः। वात्सल्यं दोषानादरहेतुः स्नेह इत्येव व्यासार्याणां सिद्धान्तः। वस्तुतः दोषेषु गुणत्वबुद्धिः इति व्यासार्यीयेषु गुणत्वं गुणो ज्यासूत्रतन्तुषु; रज्जौ सत्त्वादिसन्ध्यादौ शौर्यादौ भीमइन्द्रिये॥ रूपादावप्रधानेच दोषान्यस्मिन्विशेषणे' इति (अमर.क्षत्रि. ८५) अमरसुधोदाहृतहैमवचनेन दोषान्यत्वरूपं विवक्षितम्। दोषत्वचालङ्कारिकैः उद्देश्यप्रतीतिप्रतिबन्धकत्वमिति परिष्करणेन दोषान्यत्वं उद्देश्यप्रतीत्यप्रतिबन्धकत्वम्। सम्बन्धविशेषान्वितेषु प्रीतिः स्नेहः यस्य विपाकः अस्थानभयशङ्कित्वं दोषानवभासः दोषेषु गुणत्वबुद्धिरित्यादयइति जिज्ञासाऽधिकरणान्ते व्यासार्यैरुक्तम्। अस्मिन्प्रकरणे सर्वसाधारणार्थं एव निरूपितः, अत्र प्रीतिकारितार्थत्रयं सर्वसाधारणम्। व्यासार्यैः भगवद्विषये प्रयुक्तवात्सल्यशब्दस्य बहुत्र दोषेषु गुणवत्त्वबुद्धिरित्येवोक्तम् नत्वर्थद्वयम्। अतः अर्थद्वयं न भगवद्विषयकं दोषेषु गुणवत्त्वबुद्धिरित्येव भगवद्विषयंभवति। अत्रप्रीतिः स्नेहइति दोषेषु गुणवत्त्वबुद्धिहेतुः यः स्नेहउक्तः सएव वत्सशब्दप्रवृत्तिनिमित्तभूतार्थः 'वत्सांसाभ्यां कामबले' ५.२.९८ इतिसूत्रात्' इति दोषानादरहेतुस्स्नेह इत्यनेन व्यासार्यैरेव निर्णीतंभवति। अनेन स्नेहेन दोषे भगवत्परिग्रहस्याप्रतिबन्धकत्वं नास्ति 'जीवानुप्रवेशेषु शोकादयो जीवांशगताः। साक्षादवतारेषु अभिनयमात्रम्' इत्युक्त्या 'व्यसनेषु मनुष्याणां भृशं भवति दुःखितः' 'संजातबाष्पः परवीरहन्ता' (रामायणम्) इत्यादेरभिनयमात्रत्वमुक्तम्। 'दयाहि स्वार्थनिरपेक्षा परदुःखासहिष्णुता। अत्र अनुकूलेतरजनः परइतिविवक्षितः अर्थादिकामनया परदुःखं शिशमयिषोः तद्दुःखानुवृत्तिरिष्टा स्यादिति

## श्रीभाष्यम्

निरस्तनिखिलहेयगन्धोऽपहतपाप्मा परमात्मा परं ब्रह्म पुरुषोत्तमो नारायणः इति ॥

'यतो वा इमानि भूतानि जायन्ते' (तै.भृ.१) 'सदेव सोम्येदमग्र आसीत्' (छां.६ २.१) 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐतरेय १.१.१) 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः' (महोप.१.श्लो.१) इत्यादिषु निखिलजगदेककारणतयाऽवगतस्य परस्य ब्रह्मणः 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.आन.१) 'विज्ञानमानन्दं ब्रह्म' (बृ.५.९,२८) इत्यादिष्वेवंभूतं स्वरूपमित्यवगम्यते। 'निर्गुणम्' (आत्मोप.) 'निरञ्जनम्' (श्वेता,६.१९) 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः' (छां.८.५.१) न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' (श्वे.६.८) 'तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं

## श्रुतप्रकाशिका

अथ परत्वमुच्यते निरस्तेति। परत्वसौलभ्ये अप्युपास्यत्वोपयोगिनी। मनुष्यादिसाजात्येऽपि न प्रयुक्तशोकमोहास्पृष्टत्वमभिप्रयन्नाह–निरस्तेति। जीवानुप्रवेशेषु शोकादयो जीवाश्रयगताः साक्षादवतारेष्वभिनयमात्रम्। निखिलशब्देन चिदचिद्गता दोषा विवक्षिताः। शोकाद्यस्पर्शहेतुमाह–अपहतेति। अर्वाचीनात्मव्यावृत्त्यर्थः परमात्मशब्दः. प्रधानत्वाद्युपस्थितस्य समानाधिकृत.परब्रह्मशब्दः पुरुषोत्तमशब्दो वैलक्षण्यपर.। नारायणशब्दो घटक.। यथा परमात्मपरब्रह्मशब्दौ सामान्यशब्दावेकविषयौ यथा पुरुषोत्तमनारायणशब्दौ विशेषशब्दावेकविषयौ तथा सामान्यविशेषशब्दा एकविषया इति भावः। अत्र स्वरूपस्य भोग्यत्ववैकल्यशङ्का च परिहृता भवति स्वसम्बन्धिभोग्यत्वं स्वस्य नभोग्यताविरोधि, अपितु स्वभोग्यत्वातिशयावह यथा स्वसम्बन्धिगुणगणभोग्यत्वम् नहि स्वसम्बन्धिनामप्यामोदकत्वस्य कस्तूरिकादेरामोदवैकल्यम्। अपितु तत्पौष्कल्यमेव तथा स्वसम्बन्धिविग्रहभोग्यत्वमपि स्वभोग्यत्वातिशयावहमिति ॥

अथोक्तार्थे प्रमाणान्याह –यतो वा इमानीत्यादि। जगत्कारणत्वधर्मिस्वरूपविषयप्रमाणोपन्यासो दृष्टान्तार्थः गुणविभागकथन वादिविवादशमनार्थं दृष्टान्तार्थं च विद्युत विद्युद्वर्णात् 'आदित्यवर्णम्' 'रुक्मवर्णम्' इतिवाक्य सरूपार्थस्वाकारस्योचितत्वात्। आदित्यवर्णो विग्रहश्च न प्राकृतः 'तमसः परस्तात्' इति श्रुतेः अतिसूक्ष्मप्रकृतिर्हि तमः

## गूढार्थसंग्रहः

तद्व्युदासाय स्वार्थानपेक्षशब्द.। 'दयाभूतेषु' (गी.१६.२) इति गीताभाष्ये सर्वभूतेषु दुःखासहिष्णुत्वमिति भगवतोक्तम्। सहनं अनिष्टताभावः असहनमनिष्टता 'अलङ्कृञ्निराकृञ्' इति सूत्रविहितेष्णुच्प्रत्ययस्य 'आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु' इति सूत्रोक्तदिशा तत्साधुकारी इत्यर्थ.। अनित्यत्वसाधुकारित्व –अनिष्टत्वार्थकारित्व। एवं च परदुःखानिष्टतप्रयोज्यतच्छिद्रामयिषा परदुःखासहिष्णुशब्दार्थ.। इतरार्थेष्णुचोऽविवक्षणे छिद्रामयिषापर्यन्त नसूत्रस्याध्याहृत्य हरथं इति दया दुःखासहिष्णुत्वमिति प्रमाणानुसारिणि 'दया सर्वेषु भूतेषु' (गौ.सू.) 'मैत्री करुणा' (यो.सू.) इत्येतद्विवरणप्रमाणिकोक्तयनुसारिण्यर्थे दया दुःखासहिष्णुत्वमिति अहिर्बुध्न्यसंहितानुसारिण. भाष्यकृत्स्वाशयमिति व्याख्यातॄणामाशयः अस्मिन्विषये आचार्यपादानां व्याख्यातॄणां वैकल्यादय। कारुण्यसौशील्ययात्मकानि रामकृष्णाद्यवतारेषु विशेषेण प्रकाशितानि–निखिलजगदेककारणतयाऽवगतस्येति ॥

श्रीभाष्यम्

च दैवतम्' (श्वे.६.७) 'सकारणं करणाधिपाधिपो नचास्य कश्चिज्जनिता नचाधिपः' (६.९) 'सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाऽभिवदन् यदास्ते, वेदाहमेतं पुरुषंमहान्तम् । आदित्यवर्णं तमसः परस्तात्' (यजु.आरण ३ १२.पुरुषसूक्त) 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि' (तै.नारायणीये.१.अनु ८) इत्यादिषु परस्य ब्रह्मणः प्राकृतहेयगुणान् प्राकृतदेहसम्बन्धं तन्मूलकर्मवश्यतासम्बन्धं च प्रतिषिध्य कल्याणगुणान् कल्याणरूपं च वदन्ति । तदिदं स्वाभाविकमेव रूपमुपासकानुग्रहेण तत्प्रतिपत्त्यनुगुणाकारं देवमनुष्यादिसंस्थानं करोति स्वेच्छयैव परमकारुणिको भगवान् । तदिदमाह श्रुतिः—'अजायमानो

श्रुतप्रकाशिका

अजस्तःकार्यवैलक्षण्यासिद्धिः अन्यथा स्वरूपस्य तमसोऽन्यत्वकथनं स्यात् इदानीं परस्तादित्यस्तात्प्रत्ययस्य आदित्यवर्णोक्तेश्च वैयर्थ्यं स्यात् । अतो विग्रहविशिष्टस्यैव तमस्पर्शाभावोक्तिरिति विग्रहवैलक्षण्यसिद्धिः । प्राकृतहेयेति । यदि स्वतोऽहि काचिन्निषेधः अतो निषेध्यहेयगुणाना । प्रकृतित संश्लिष्टजीवेषु विद्यमानत्व प्रकृत्त्यादिना शब्देन दर्शितम् । विग्रहविशेषविधानदर्शनाद्विग्रहसामान्यनिषेधस्तद्व्यतिरिक्तविषय. 'न हिंस्यात्' इतिवत् 'निर्गुणम्' इतिवच्च, विशेषनिषेधदर्शनाद्देहसामान्यनिषेधो विशेषे पर्यवस्यति । 'पशुना यजेत' इति पशुशब्दवन्निर्गुणशब्दवच्चेति तात्पर्यम् । पूर्वोक्तमर्थं वक्ष्यमाणवचनस्यैतदर्थविषयताज्ञापनार्थमनुवदन् पूर्वोक्तसंस्थानशब्द विवृणोति तदिदमिति । परमकारुणिकइति दयादिसाजात्यं न कर्मनिबन्धनम् । उपासकानुग्रहार्थं वादित्यर्थ ॥

गूढार्थसङ्ग्रह

एतेन सृष्टिदशाया मूलभूता या दया सा अन्तर्याम्यवतारमात्रेण प्रकाशयितुमशक्ता विभवावतारादेव स्वरूपप्रकाशितेति सूचितम् । 'न तस्य कार्यं करणं च विद्यते' इत्यत्र न शरीरसम्बन्धसामान्यनिषेधः । 'आदित्यवर्णं' 'विद्युतः पुरुषात्' इत्याद्यनुरोधात् 'निर्गुण' इत्यत्र न गुणसामान्यनिषेध. 'पराऽस्य शक्ति.' इत्यादिना गुणतद्विशेषप्रतिपादनात् । 'सर्वाणि रूपाणि' इतिसर्वरूपनामकारकत्वेन श्रुतस्य पुरुषस्य पुरुषइति नाम्न आदित्यवर्णत्वस्य च प्रतिपादनेन नामरूपसम्बन्धो वर्तनइति विवक्षितम् तदिदं स्वाभाविकमेव रूपमिति । 'स्वाभाविकी ज्ञानबलक्रियाच' इत्यत्र गुणेषु स्वाभाविकत्वकथनेन रूपस्यापि स्वाभाविकत्वं सिद्ध्यति ॥

ननु 'आदित्यवर्णम् भारूप' इत्याकारवत्त्वमात्मन. श्रूयते । न । तमोरूपत्वप्रतिषेधार्थत्वात् तद्वाक्याना । द्रव्यगुणाद्याकारप्रतिषेधे आत्मनः तमोरूपत्वे प्राप्ते त प्रतिषेधार्थानि 'आदित्यवर्णम्' इत्यादीनि वाक्यानि । 'अरूपम्' इति च विशेषत रूपप्रतिषेधात् अविषयत्वाच्च । 'न स दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्च नैनम्' 'अशब्दमस्पर्शम्' इत्यादे. (शा.भा) इति गीताभाष्ये (अ.१८.श्लो.५०) परोक्तमनादरणीयम् । शुद्धाशुद्धभेदेन मनोद्वैविध्यस्य उपनिषत्सु तदुपबृंहणेषु च व्यक्तमुक्ततया शुद्धमनसा रूपदर्शनसम्भवात् । अन्यथा 'यद्वाचाऽनभ्युदितम्' इत्यादेः 'नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा' 'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा ज्ञानप्रसादेन विशुद्धसत्त्व· ततस्तुतं पश्यति निष्कलं ध्यायमान.' (मु. ) इत्यादेश्च शब्दजन्यसाक्षात्कारस्य शब्दजन्यज्ञानविषयत्वस्य च निर्विशेषे निषेधेन निर्विशेषस्य गगनकुसुमतौल्यापत्ते. । 'अशब्दमस्पर्शमरूपम्' इत्यत्र स्पर्शादिसहपठित-

## श्रीभाष्यम्

बहुधा विजायते' (पुरुषसू.) इति। स्मृतिश्च 'अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्। प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया। परित्राणाय साधूनां विनाशाय च दुष्कृताम्' (गी.४.६) इति। साधवो ह्युपासकाः तत्परित्राणमेवोद्देश्यम्, आनुषङ्गिकस्तु दुष्कृतां विनाशः सङ्कल्पमात्रेणापि तदुपपत्तेः। 'प्रकृतिं स्वाम्' इति प्रकृतिः—स्वभावः। 'स्वमेव स्वभावमास्थाय' न संसारिणां स्वभावमित्यर्थः। आत्ममाययेति स्वसङ्कल्परूपेण ज्ञानेनेत्यर्थः। 'मायावयुनं ज्ञानम्' (वेदनिघण्टौ.धर्मवर्ग.श्लो.२२) इति ज्ञानपर्यायमपि मायाशब्दं नैघण्टुका अधीयते।

## श्रुतप्रकाशिका

श्रुतिं दर्शयति तदिदमिति। अजायमान इति सहेतुकसुखाद्यर्थप्राकृतदेहसङ्घातिरूपजन्मनिषेधः बहुधा विजायत इतीच्छाहेतुकजगद्रक्षणार्थाप्राकृतविग्रहाधिष्ठानरूपजन्मविधिः। ननु अजायमान इति परमार्थजन्मनिषेधः—बहुधा विजायत इत्यपरमार्थजन्मविधिरस्तु। न कृत्स्नमिथ्यात्ववादिपक्षे प्रयोजनाभावात् प्रपञ्चमिथ्यात्ववचनेनैवेश्वररूपमिथ्यात्वमपि हि सिद्धम्। किं विशेषतोऽभिधानेन विहितस्य निषेधायोगाच्चोक्तमानान्तरगोचरजन्माभिप्रायत्वे कथं निषिध्यते। स्वरूपस्याजस्य शरीरद्वारा बहुभवन, चोद्यत इतिचेन्न शरीरनित्यत्वदेहद्वारकजन्मनोः जीवानामपि समानतया 'तस्य धीराः परिजानन्ति योनिम्' इति अनन्तरवाक्यप्रतिपन्नवैलक्षण्यानुपपत्तेः सर्वसाधारणलोकविदितजन्मप्रकारवैजात्येसत्येवबहुत्वं वक्तुं युक्तम्। नहि देवदत्तस्य जन्मधीरैरेव परिज्ञायत इति वक्तव्यं यज्ञदत्तजन्मनो वैलक्षण्यभावात् स्वरूपेणाजस्य विचित्रसमस्तजगद्रूपेण बहुभवमुच्यते तद्धि जीवेषु संभवतीतिचेन्न 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते' इति पूर्वानुवाकेऽभिधाय 'तस्य त्वष्टा विदधद्रूपमेति' इत्यस्मिन्नप्यनुवाके बहुभवनस्योक्तार्थत्वात्। एवमर्थान्तरपरत्वे सत्यानर्थक्यप्रसङ्गात्तत्परिहारायास्याः श्रुतेः अवतारपरत्वमभ्युपगन्तव्यम्। तथाऽस्याश्श्रुतेरवतारविषयत्वे सत्येव 'अजोऽपिसन्' इत्याद्युपबृंहणैकार्थ्यं सिद्ध्येत् अतोऽस्य वाक्यस्य यथोक्त एवार्थः॥

उपबृंहणैकार्थ्यं दर्शयति—स्मृतिश्चेति। अजोऽपिसन् सम्भवामीति विधिनिषेधयोरपि यथोक्त एवार्थः, उपासकानुग्रहार्थत्वं कथमत्रावगम्यत इत्यत्राह—साधव इति। आनुषङ्गिक इति। 'विनाशाय च दुष्कृताम्' इति चशब्दोऽन्वाचयपर इति भावः, समुच्चयः सप्रधानयोः अन्वाचयः प्रधानानुषङ्गिकयोः दुष्कृद्विनाशस्यानुषङ्गिकत्वमुपपादयति—सङ्कल्पेति। प्रकृतिसंबन्धभ्रमनिवृत्त्यर्थं व्याचष्टे। प्रकृतिं स्वामित्तीति। स्वभावः निरुपाधिकधर्मः; अनेन विग्रहश्च स्वाभाविक इत्युक्तं भवति। अपारमार्थिकत्वभ्रमनिवृत्त्यर्थं व्याचष्टे। आत्ममाययेति। नैघण्टुकाः वेदनिघण्टुकाराः

## गूढार्थसङ्ग्रहः

तथा रूपं पञ्चभूतगुणएव नतु विग्रह इति स्फुटम्। अन्यथा शब्दसामान्यनिषेधे शब्दजन्यज्ञानसामान्यस्यापि निषेधेन परब्रह्मण एवासिद्धिप्रसङ्गात्। 'ततो यदुत्तरतरं तदरूपमनामयम्' इत्यत्रापि रूपसामान्यनिषेधो न विवक्षितः 'विश्वस्रष्टारमनेकरूपम्' इति श्वेताश्वतर एव अनेकरूपवत्त्वप्रतिपादनात्। 'यत्ते रूपं कल्याणतमं तत्ते पश्यामि' इति (ई.षा) कल्याणतमविशेषणे अकल्याणप्राकृतरूपप्रतिषेधस्यैव स्पष्टत्वात्। अतः 'आदित्यवर्णम्' 'रुक्मवर्णम्' इत्यत्र शब्दबलावार्थस्य विग्रहस्य नकिञ्चिद्बाधकम्॥ सन्ध्यायां गायत्रीजपस्य त्रैवर्णिकसामान्यकर्तव्यत्वेन एतद्रूपानुसन्धानेन एवं

## श्रीभाष्यम्

'समस्ताश्शक्तयश्चैता नृप यत्र प्रतिष्ठिताः । तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥ समस्तशक्तिरूपाणि तत्करोति जनेश्वर । देवतिर्यङ्मनुष्याख्या चेष्टावन्ति स्वलीलया ॥ जगतामुपकाराय न सा कर्मनिमित्तजा' (वि.पु.६.७.७०) इति ; महाभारतेचावतारस्पस्याप्यप्राकृतत्वमुच्यते 'न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः' (महाभारते.उद्योगपर्वणि) इति । अतः परस्यैव ब्रह्मण एवंरूपवत्त्वादयमपि तस्यैव धर्मः । अत आदित्यमण्डलाद्यधिकरणः आदित्यादिजीवव्यतिरिक्तः परमात्मैव ॥

## श्रुतप्रकाशिका

न्मूलभूतप्रयोगश्च 'यावन्त पांसवो भूमेः सङ्ख्याता देवमायया' इति स्वोक्तार्थे वेदप्रमाणमाह चेति । अयमपि धर्मः एवंरूपमपि जीवादन्यवसाधकमित्यर्थः । 'तद्धर्मोपदेशात्' इति सौत्रधर्मशब्देनैवरूपवत्त्वमपि विवक्षितमिति भावः । सूत्रार्थमुपसंहरति अतइति । —ह त्वनन्तरमाह—

## गूढार्थसङ्ग्रह.

शनैश्च वैदिकानामनुभवसिद्धम् । तेन विग्रहस्य न मिथ्यात्वमित्याशयेन व्याप्त्यन्तरादित्यविद्यावाक्यनिरूपणम् ॥

एतेन छान्दोग्योपनिषद्भाष्ये 'हिरण्मयइव हिरण्मयः, नहि सुवर्णविकारत्वं देवस्य सम्भवति ऋक्सामगेष्णत्वापहतपाप्मत्वासम्भवात् । अतो लुप्तोपम एव हिरण्मयशब्दः ज्योतिर्मय इत्यर्थ' इत्यभिधाय 'हिरण्यश्मश्रुः, हिरण्यकेश' इत्यादिकं ज्योतिर्मयार्थकतयैव यद्व्याख्यानं तदनुपादेयमिति सिद्ध्यति। हिरण्मय वस्य लुप्तोपमत्वं कामं स्यात् अथापि दिव्यमङ्गलविग्रहस्यैव हिरण्मय इत्यत्र लुप्तोपमत्वेन ग्रहणम् । दृश्यत इति ध्यानानन्तरकालिकदर्शनपरम् । 'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा । ज्ञानप्रसादेन विशुद्धसत्त्वः ततस्तु तं पश्यति निष्कलं ध्यायमानः' मु. इत्यत्र दर्शनस्य ध्यानानन्तरकालिकत्वप्रतिपादनात् । ध्यानं च परब्रह्मविषयकमिति जिज्ञासाऽधिकरण एव निरूपितम् । एतेन 'भारूपः सत्यकामः' इत्यादिशाण्डिल्यविद्यावाक्यमपि परब्रह्मविषयकमेव । शाण्डिल्यविद्यैव 'सर्वंखल्विदं ब्रह्म' इत्यभेदमुपन्यस्य गुणविग्रहविशिष्टस्योपास्यत्वप्रतिपादनेन 'तत्त्वमसि' 'अहंब्रह्मास्मि' इति समानाधिकरणवाक्यानां गुणविग्रहवाक्यानां च न भिन्नविषयकत्वम् अपित्वेकविषयकत्वमेवेति निर्विशेषस्य अप्रामाणिकत्वं स्थापयति। अत्र सारे 'तदेतद्वाक्यकारश्चाह— 'हिरण्मयं पुरुषो दृश्यते' इति प्राज्ञस्सर्वान्तरस्स्यात् लोककामेशोपदेशात् तथोदयात्पाप्मानम्' इत्युक्त्वा तद्रूपस्य कार्यं च मायामयत्वं चेति विचार्य 'स्याद्रूपकृतकमनुग्रहार्थं तच्चेतसामैश्वर्यात्' इति निरसनीयमतमुपन्यस्य 'रूपवानतीन्द्रियमन्तःकरणप्रत्यक्षनिर्देशात्' इति व्याख्यातं च द्रमिडाचार्यैः. 'नवा मायामात्रमञ्जसैव विश्वसृजो रूपम् । तत्तु न चक्षुषा ग्राह्यम् मनसात्वकलुषेण साधनान्तरवता गृह्यते । 'नचक्षुषा गृह्यते नापि वाचा' 'मनसातु विशुद्धेन' इतिश्रुतेः नह्यरूपाया देवताया रूपमुपदिश्यते 'यथा भूतवादिहि शास्त्रम्' यथा 'माहारजतवासः' 'वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णम्' इति प्रकरणान्तरनिर्देशात् इति 'साक्षिणः' इति 'हिरण्मयः' इति 'रूपसामान्याच्च चन्द्रमुखवत्' इतिच वाक्यम् । तच्च व्याख्यातं तैरेव 'न मयडत्र विकारमादाय प्रयुज्यते अनारभ्यत्वादात्मनः' इत्यादिना वेदार्थसङ्ग्रहेऽप्ययमर्थ उक्तः अत्र कृतकशब्दप्रयोगेण तस्य पूर्वपक्षवाक्यत्वं सूच्यते । 'कृतकः कृन्तति स्वरूपं कृत्रिमस्य स्वरूपाच्छादकत्वात्तथात्वम् । कृत्रिम इति उणादिकोश.' इति शब्दकल्पद्रुमः । कृत्रिम बोत्तया चक्षुरिन्द्रियजन्यप्रत्यक्षाविषयत्वेनाविद्यमानत्वं प्रतीयते ।

## गूढार्थसंग्रहः

अविद्यमानरूपोपासनस्यापि सफलत्वं 'अनुग्रहार्थं तच्चेतसामैश्वर्यात्' इत्यत्र विवक्षितम्। 'अन्तःकरणप्रत्यक्षनिर्देशात्' इत्युत्तरवाक्येन पूर्ववाक्यस्य चक्षुरिन्द्रियजन्यप्रत्यक्षाविषयत्वेनाविद्यमानरूपपरत्वं सूचितम्। मुण्डकोपनिषदि 'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा, ज्ञानप्रसादेन विशुद्धसत्त्वः, ततस्तु तं पश्यति निष्कळं ध्यायमानः' इति भाष्ये व्यक्तः। 'अञ्जसैव विश्वसृजो रूपम्' इति भाष्ये 'तत्त्वेनाञ्जसाद्रदम्' इति कोशेन परमार्थभूतत्वं स्फुटमुक्तं भवति। 'मनसातु विशुद्धेन' इति भाष्योक्त्या मुण्डकोपनिषदुत्तरार्धार्थः प्रकाशितो भवति। स च 'अन्तःकरणप्रत्यक्षनिर्देशात्' इति वाक्ये व्यक्तः। एवमुत्तरवाक्यार्थे पूर्ववाक्यस्य मिथ्यारूपविषयकपूर्वपक्षपरत्वं स्फुटमिति भगवत आशयः। अत्र 'लोककामोपदेशात्तथोदयात्पाप्मनाम्' इति हेतुद्वयानन्तरं 'रूपवत्त्वा अतीन्द्रियमि'त्युक्तया हेतुत्रयमत्र विवक्षितमिति प्रतीयते इत्यभिप्रायेण परस्यैव ब्रह्मण इत्यादि तस्यैव धर्मं इत्यन्तं भाष्यम्॥ अत्र वाक्यक्रमपर्यालोचनाया लोककामेशत्वं प्रथमत उपात्तमिति तस्यैव भाष्ये प्रथमत अभिधानं युक्तमिति सर्वपाप्मोदितत्वस्य प्रथममभिधाने किंबीजमिति चेत्—उच्यते। लोककामेशित्वं आदित्यादिवाक्यद्वये श्रूयमाणम्—एकमेव फलं नान्यत्र अर्वाक्पराक्शब्दप्रयोगेण फलभेदइति वाक्यद्वयप्रतिपाद्यैकफलनिरूपणेन एकविद्यात्वोपपादनार्थमस्य प्रथमत उपादानम्। अक्षिपुरुषविषये अतिदेशेन ऐक्यसिद्धिः। सर्वपाप्मोदितत्वंतु प्रथमत उपात्तं 'उदेतिहवै—यएववेद' इति तद्वेदनफलस्य श्रवणेन तस्यैवप्राधान्यम्। उत्पूर्वकः 'इणगतौ' इतिधातुः तेन सर्वपापापादानकोद्गमनमेवात्र विवक्षितम्। तेन सर्वपापविरहः परस्य ब्रह्मण एव धर्मः तद्वेदितुः सर्वपापविरहप्रतिपादने मुक्तिफलकत्वं विद्यायाःसिद्धंभवति इत्यभिप्रेत्य सर्वपाप्मोदितत्वस्यैव भगवतःप्रथममुपन्यासः। तेन लोककामेशत्वं वाक्यद्वये अभिप्रेतं सिद्ध्यति एकत्र मनुष्यकामेशत्वं अन्यत्र देवकामेशत्वं प्रतिपाद्यभेदेन वाक्यद्वये प्रतिपादनात् निरङ्कुशैश्वर्यं नात्र विवक्षितमिति प्रतीतिरस्यात् एतद्भ्रमनिवृत्तिरपि सर्वपाप्मविरहकथनेन सिद्ध्यति। 'नशोको न सुकृतं नदुष्कृत—सर्वे पाप्मानोऽतो निवर्तन्ते' इति श्रुत्यनुसारेण 'सर्वेभ्यःपाप्मभ्यः' इत्यत्र पाप्मशब्दस्यापि सुकृतदुष्कृतोभयपरतया पुण्यपापसामान्यविरहस्य परमात्मासाधारणस्य उपाध्यनिर्देशेन स्वाभाविकस्य सिद्ध्या पुण्यपापसम्बन्धनिबन्धनमेव साङ्कुशमैश्वर्यं पुण्यपापविरहे स्वाभाविकेसति प्रतिपादितस्य लोककामेश्वरत्वस्य निरङ्कुशत्वात्र विवक्षा सिद्ध्यति॥

एवं श्रुयुक्तरूपस्य पारमार्थिकत्वं वाक्यभाष्यसिद्धं श्रुतौ पापसम्बन्धसामान्यविरहप्रतिपादनेन सिद्ध्यति। शरीरसम्बन्धः कर्ममूलकः श्रुतिषु प्रतिपन्नः कर्मसम्बन्धाभावे स्वेच्छानिबन्धनं इति सिद्ध्यति कर्मसम्बन्धत्वे मिथ्यात्वप्रसक्तिः कर्मसम्बन्धाभावेन स्वेच्छाकृतत्वे न कदाऽपि मिथ्यात्वं शङ्कितुमपि शक्यम्। तेन पारमार्थिकत्वमपि रूपस्य सिद्ध्यति। एवं च वाक्यतात्पर्यविषयीभूते धर्मत्रये सर्वपापोद्गमनं लोककामेशत्वस्य निरङ्कुशतायाः रूपस्यानित्यत्वापारमार्थिकत्वभ्रमनिवृत्तिमुखेन पारमार्थिकत्वस्य च निदानं भवतीति तस्यैव प्रथमतः भाष्ये उपादानमिति बोध्यम्। एतेन 'अञ्जसैव विश्वसृजो रूपम्' इति द्रमिडभाष्यं सुस्थम्। अत्र 'विश्वसृज' इत्यनेन 'सर्वंखल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इति श्रुत्यनुसारेणाभेदनिर्वाहकत्वमुपादानोपादेयभावस्येति कारणवाक्यानामेव प्राधान्येन परसम्मतमतहानावचनात्। परसम्मतार्थासाधकत्वेन सृष्टेर्दयामूलकत्वेन च रूपस्यापि परानुग्रहार्थस्य तात्त्विकस्य सिद्धिरिति रूपस्य अञ्जसेति पदेन तात्त्विकत्वबोधनमुक्तम्। रूपस्य दयामूलकत्वं 'अपारकारुण्यसौशील्य वात्सल्यौदार्यजलनिधिः' इत्यनेन भगवता सम्प्रकाशितम्। एतेन 'विश्वसृज' इति पदतात्पर्यमेव भगवता प्रदर्शितं भवति॥

'सयश्चायं पुरुषे यश्चासावादित्ये' इति वाक्यानुसारेण आनन्दमयाधिकरणशेषभूते अन्तरधिकरणे प्राणाङ्के

श्रीभाष्यम्

## सू.२२=भेदव्यपदेशाच्चान्यः (१.१.७)

श्रुतप्रकाशिका

## सू.२२–भेदव्यपदेशाच्चान्यः (१.१.७)

### गूढार्थसङ्ग्रहः

...धिकरणे जीवसामान्यभेदसाधकः 'भेदव्यपदेशाच्च' इति योहेतुरुक्तः तद्वत् जीवविशेषभेदसाधिकां श्रुतिमभिप्रे-त्याह—भेदव्यपदेशाच्चान्यइति ॥

'सयश्च यम्' इत्यत्र शाङ्करोपनिषद्भाष्यम्—'अद्वैतत्वादानन्दानन्दिनोश्चाविभागोऽत्र। तदेतन्मीमांसाफलमुपसंह्रियते, 'सयश्चायं पुरुषे' इति। गुहाया निहितः परमव्योम्न्याकाशादिकार्यं सृष्ट्वा अन्नमयान्त तदेवानुप्रविष्टः स य इति निर्दिश्यते कोऽसौ 'अयपुरुषे यश्चासावादित्ये' यः परम आनन्दः श्रोत्रियप्रत्यक्षनिर्दिष्टः यस्यैकदेशं ब्रह्मादीनि भूतानि सुखार्हाण्युपजीवन्ति, स 'यश्चासावादित्ये' इति निर्दिश्यते। सएकः भिन्नप्रदेशस्थघटाकाशाकाशैकत्ववत्। ननु तन्निर्देशे 'सयश्च यं पुरुषे' इत्यविशेषतोऽध्यात्म नयुक्तो निर्देशः 'यश्चायंदक्षिणेऽक्षिन्' इतितु निर्देशो युक्तः प्रसिद्धत्वात्—न–परााधिकारात् परोह्यात्माऽत्राधिकृतः 'अदृश्ये अनात्म्ये भीषास्माद्वातःपवते' 'सैषानन्दस्य मीमाँसा' इति, नह्यकस्माद प्रकृतो युक्तः निर्देष्टुं परमात्मविज्ञानं च विवक्षितम्। तस्मात्पर एव निर्दिश्यते 'सएक' इति। नन्वानन्दस्य मीमांसा प्रकृता तस्या अपि फलमुपसंहर्तव्यम्। अभिन्नः स्वाभाविक आनन्दःपरमात्मैव। न विषयविषयिसम्बन्धजनित इति। ननु तदनुरूप एवायं निर्देशः 'सयश्चायं पुरुषे यश्चासावादित्ये सएकः' इति भिन्नाधिकरणस्थविशेषोपमर्दनेन। नन्वेवम प्यादित्यविशेषग्रहणमनर्थकं? नानर्थकं उत्कर्षापकर्षापोहार्थत्वात् द्वैतस्यहि यो मूर्तामूर्तलक्षणस्य परउत्कर्षः सवित्रन्तर्गतः—सचेत्पुरुषगतविशेषोपमर्देन परमानन्दमपेक्ष्य समो भवति नकश्चिदुत्कर्षोऽपकर्षो वा तांगतिं गतस्येति अभय प्रतिष्ठां विन्दत इत्युपपन्नम् इति 'अदृश्ये अनात्म्ये' इत्यत्र शाङ्करभाष्योक्तार्थः जिज्ञासाऽधिकरणे (१५१.पु) निरूपितः ॥

अत्र वार्तिकम्–'आनन्दानन्दिनोश्चात्र नभेदस्स्यान्मनागपि। श्रुत्यैवापोदितो यस्मात् छिद्र कुर्वन्मनागपि ॥अरं छिद्रं भिदाऽन्यत्वं वेद्यवेत्तृत्वलक्षणम्। यस्माद्कुरुते मोहादात्मनो ब्रह्मणस्सतः ॥ अन्योऽसावीश्वरो मत्तः तस्माद्याहमनीश्वरः। इति छिद्रयतोऽछिद्र छिद्रेऽनर्थो भवेद्भयम् ॥ अनूद्य सयइत्येवमपकृष्ट नृबुद्धिगम्। उत्कृष्टेनेश्वरेणाथ विशिनष्ट्य हिरण्मवत् ॥' इत्यादि। अत्र 'तत्त्वपदार्थयोरैकत्वबोधनप्रकारं प्रकटयति अनूद्येति। यथा यः सर्पः सा रज्जुरित्युच्यते। तथा बुद्धिस्थमपकृष्टत्वेन कल्पित त्वंपदार्थमनूद्य आदित्यमण्डलस्थेन प्रकृष्टतया कल्पितेन तत्पदार्थेनैक्यमत्र बोध्यते। तथाचोत्कर्षापकर्षहीनं सच्चिदानन्दात्मकं वस्तु परिशिष्ट भवतीत्यर्थः' इत्यानन्दगिरिः ॥

'सयएवंवित् अस्माल्लोकात्प्रेत्य' इत्यादेः अस्माल्लोकात्प्रेत्य प्रत्यावृत्य निरपेक्षो भूत्वा यथा व्याख्यातं 'अन्नमय मात्मानमुपसङ्क्रामति' विषयजातमन्नमयात् पिण्डात्मनो व्यतिरिक्त नपश्यति। सर्वं स्थूलभूतमन्नमयमात्मानं पश्यतीत्यर्थः विज्ञनमात्रं सङ्क्रमणश्रुतेरर्थः। ज्ञानमात्रत्वेच आनन्दमयान्तरस्थस्यैव सर्वान्तरस्याकाशादन्नमयान्तं कार्यंसृष्ट्वा अनुप्रविष्टस्य हृदयगुहाभिसम्बन्धात् अन्नमयादिष्वनात्मसु आत्मविभ्रमसङ्क्रमणात्मकविवेकज्ञानोत्पत्त्या दिनश्यति। तदेतस्मिन्नविद्याविभ्रमनाशे सङ्क्रमणशब्द उपचर्यते। नह्यन्यथा सर्वगतस्यात्मनस्संक्रमणमुपपद्यते वस्त्वन्तराभावाच्च। नच स्वात्मनएव सङ्क्

### श्रीभाष्यम्

आदित्यादिजीवेभ्यो भेदो व्यपदिश्यतेऽस्य परमात्मनः—' य आदित्ये तिष्ठन्नादित्या-

### गूढार्थसंग्रहः

मन नहि जल्का स्वात्मानमेव रुद्णाति । तस्मात् 'सत्यं ज्ञानमनन्तं ब्रह्म' इति यथोक्तलक्षणात्मप्रतिपत्यर्थमेव बहु भरनसर्वप्रोहारभयाभयसङ्क्रमणादिपरिकल्पने । आनन्देन्व ब्रह्मणि संव्यवहारविषये नतु परमार्थतो निर्विकल्पे ब्रह्मणि कश्चिदपि विकल्प उपपद्यते । तमेत निर्विकल्पमात्मानमेव क्रमेणोपसङ्क्रम्य विदित्वा 'न बिभेति कुतश्चन अभयप्रतिष्ठां विन्दते' इत्येतस्मिन्नर्थे विशेषश्लोको भवति सर्वस्यैवास्य प्रकरणस्य आनन्दवल्ल्यर्थस्य संक्षेपतः प्रकाशनाय एषमन्त्रो—भवति' इति (श.उ.भा) ॥

'सत्यज्ञानमनन्तं ब्रह्म' इत्यत्र आनन्त्यघटकवस्तुपरिच्छेदराहित्यमपि देशकालपरिच्छेदशून्यत्वस्य देशकालव्यापित्वरूपतया वस्तु व्यापकत्वरूप 'यच्च किंचिज्जगत्यस्मिन्— व्याप्य नारायणस्थितः' इति श्रुतिद्वय सामानाधिकरण्यनियामकमेव भवति । 'नान्तगुणानां गच्छन्ति' इति पराशरवचनानुसारेण अन्तशून्यगुणवत्वरूप (अनन्तत्वम्) तत्त्वविशेषेऽपि तदुपपादके इति प्रागेवोपपादितम् । 'तस्माद्वा एतस्मादात्मनः' इत्यत्र पूर्वश्रुतिप्रस्तुत एवात्मा, तस्य निर्विशेषत्वं न कथञ्चिदपि शङ्कितुमर्हम् । 'यदा ह्येवैष एतस्मिन्' इति वाक्यादव्यवहितपूर्ववाक्ये 'एष ह्येवानन्दयाति' इत्यत्र आनन्दयितुः प्रस्तुततया आनन्दयितैव एतच्छब्दार्थः । तत् पूर्वमानन्दरूपब्रह्मणः प्रस्तुतत्वात् आनन्दरूप एव आनन्दयिता इत्यर्थः स्फुटमुक्तः । एवं पूर्ववाक्यार्थे सपद्ये आनन्दरूपस्य ब्रह्मणः आनन्दवत्त्वस्य पूर्वमभिधानेन अस्यार्थस्य उपक्रमोक्तानन्तत्वानुगुणतया 'आनन्दं ब्रह्मणो विद्वान्' इत्यत्र उपक्रमोक्तान्तशून्यगुणवत्त्वज्ञानस्यैव भयनिवृत्तिहेतुत्वं श्रुतौ विवक्षितम् । एवं गुणवत्त्वज्ञान एव गुणवदाश्रयेण भयनिवृत्तिः । तज्ज्ञानाभावे तदाश्रयणाभावेन भयानिवृत्तिरेव । तच्च ज्ञानं ध्यानरूपमेवेति 'यदा ह्येवैष' इत्यादिग्रघट्टकार्थः । अयमर्थः प्राक् जिज्ञासाधिकरणे (६९४.पु) परमपर्यालोचनपूर्वकं श्रुतौ विवक्षित इति साधितम् । बहुपर्यवस्यायस्थले आनन्दानन्दिनोरविभागोक्तिरभिनिवेशमूलैव ॥

एवं निर्विशेषस्य परमात्मनस्तत्र श्रुत्यप्रामाणिकस्य शशशृङ्गवद्विवक्षाया एवासम्भवे 'स यश्चायम्' इति वाक्यस्यार्थान्तरकल्पनेन जीवब्रह्माभेदपरत्वोक्तिरभिनिवेशमूलैव । 'अस्माल्लोकात्प्रेत्य' इत्यत्र 'प्रेत्य' इत्यस्य परावृत्य इत्यर्थवर्णनमपि विचित्रमेव । प्रेत्यइत्यस्य तादृशार्थस्य क्वाप्यप्रतीतेः । सङ्क्रमणं विज्ञानमात्रमित्युक्तिरपि तथैव पर्वक्रमेणानन्दमयपदार्थस्य सर्वान्तरत्वस्य पूर्वं बोधिततया उपसङ्क्रमणमपि तथैव वर्णितम् । 'इमाँल्लोकान् कामान्नी कामरूप्यनुसञ्चरन्' इतिवाक्यं 'सोऽश्नुते' इत्युपक्रमवाक्यानुरूपम् । एवमङ्गीकारे एव उपक्रमोपसंहारयोरैकार्थ्यं च युक्तत्वं च । एतदप्रिप्रेत्यैव च मान्त्रवर्णिकमेव च गीयते इतिसूत्रम् अतः परोक्तार्थः सूत्रे नविवक्षितः । 'एतत् सामगायन्' इति वाक्यस्य 'साम' सम वाङ्क्षैव साम सर्वात्म यत्स्वरूप गायन् उदयन्नात्मैक्य प्रख्यापयन्लोकानुग्रहार्थम्' इति शाङ्करोपनिषद्भाष्यप्रदर्शितार्थोऽपि अतीव विचित्रः । शब्दानां तादृशार्थस्य लोके कुत्राप्यप्रसिद्धेः । आनन्दवल्ल्या उपक्रमोपसंहारैकरूप्येन उक्तार्थस्यैव युक्ततया 'स यश्चायं पुरुष' इत्यस्य परसम्मतार्थस्यायुक्तत्वेन च आनन्दमयाधिकरणशेषत्वमेव अन्तराधिकरणस्येति आनन्दमयाधिकरणे जीवसामान्य भेदसाधनं नसम्भवति जीवविशेषस्यैव छान्दोग्ये 'य एषोऽन्तरादित्ये' इत्यत्र प्रतिपादनेन तद्विरोधशङ्कायाः अन्तराधिकरणे परिहार उक्तः अतः जीवसामान्यभेदः जीवविशेषभेदश्च जगत्कारणे प्रतिपादितो भवति ॥

अन्तरधिकरणं समाप्तम्

श्रीभाष्यम्

इन्तरो यमादित्यो न वेद यस्यादित्यश्शरीरं य आदित्यमन्तरो यमयति ' (बृ.५.७.९) ' य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मनोऽन्तरो यमयति ' (बृ ५.७.२२) 'योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद यो मृत्युमन्तरे सञ्चरन्यस्य मृत्युश्शरीरं यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः ' (सुबाल.७ रा) इति चास्यापहतपाप्मनः परमात्मनस्सर्वान् जीवान् शरीरत्वेन व्यपदिश्य तेषामन्तरात्मत्वेनैनं व्यपदिशति । अतस्सर्वेभ्यो हिरण्यगर्भादिजीवेभ्योऽन्य एव परमात्मेति सिद्धम् ॥

अन्तरधिकरणं समाप्तम्

श्रुतप्रकाशिका

'अयमन्यशब्द' पूर्वापरसूत्रेष्वप्यन्वेतव्य । आदित्यादिजीवात् भेदव्यपदेशं श्रुतिराह— य आदित्यइति । आदित्यपर्यायोपादानं प्रकरणस्यजीवान्तरविषयपर्यायप्रदर्शनार्थम् आदित्यादीत्यत्रादिशब्दोपात्तदेवतादिभ्यो भेदव्यपदेश श्चात्मत्र दर्शितो भवति । अत्रहि प्रकरणे 'यस्सर्वेषु देवेषु तिष्ठन्' इतिपर्याये सर्वदेवताभ्यो भेदो व्यपदिश्यते । आसां देवतानां मुक्तावस्थायामपि ताभ्य परमात्मनो भेदज्ञानार्थं निष्कृष्टात्मन परमात्मनियाम्यत्वादिप्रतिपादक पर्यायमुदाहरति । यआत्मनीति । कारणावस्थायामपि भेदज्ञापनार्थमाह—यस्याक्षरमिति । अक्षरम् अत्र समष्टिरव्यक्त (जीव)पुरुषसमष्टिः मृत्यु रिति समष्टिरुतमोऽचित्समष्टि 'देवकामानाचेष्ट' इति वाक्यमस्य सूत्रस्य विषयतयोदाहृत्य यादवप्रकाशैः तत्ता दृश्नोचितम् । इन्द्रादीनामपि स्थावरदेव कामनिष्पादकत्वसम्भवेन क्षेत्रज्ञैश्वर्यसाधक वाभावाद्देवकामेशनस्य आदित्य पुरस्कारेणोक्तिने पूर्वपक्षे तमादित्य कण्ठोक्त्या निर्दिश्य तदितरदेवतानां तस्य च नियाम्य व व्याप्यत्वम्श वचोक्त्वा नियन्तृ त्वयोगि सर्वात्मैशे परमात्मनस्तेभ्य स्फुटतरभेदव्यपदेशपरप्रकरणस्य विषयतयोदाहरणं युक्तन्तोचितम् । शरीरसंबन्धाच्छिन्नैश्वर्यश्रवणसिद्धकर्मवश्य लोककामेशवादीनां सुकृतप्रकर्षेणोपपत्त । पाप्मोदयश्रवणस्य पापसम्बन्धनिवर्तकत्वेन पुण्यसम्बन्धनिवर्तकत्वाभावाच्च पूर्व पक्ष मोक्षप्रकरणेपूभयकर्मविषयपाप्मशब्दप्रयोगश्रुत्यन्तरैकार्थ्यप्रवृत्तिनिमित्तयोगैः पाप्मशब्दस्योभयपरत्वेन कर्मवश्यत्वनिषेधात्त पूर्वकगुणान्तराणामपि जीवेष्वसम्भव हेतु फलता द्व्यतश्च विलक्षणविग्रहयोगस्य जीववैलक्षण्यसाधकत्वादादित्यादि जीवेभ्यो भेदव्यपदेशाच्च परमात्मेति राद्धान्त । अधिकरणार्थमुपसंहरति अतइति ॥

अन्तरधिकरणं समाप्तम्

श्रीमते रामानुजाय नम

अथ वेदान्तसार

## अन्तस्तद्धर्मोपदेशात् १- -

१ १ अथ जगत्कारणभूतः विपश्चिदानन्दमय , कश्चिदुपचितपुण्यविशेषो जीवविशेष देहयोगादिरायते ...

त्मेति नाशङ्कनीयम् ; 'यदेषोऽन्तरादित्ये हिरण्मयःपुरुषः '(छां.१.६.६) इत्यादौ श्रूयमाणःपुरुषाकारः परमात्मैव ।कुतः 'तद्धर्मोपदेशात्' 'सएष सर्वेषां लोकानामीशः सर्वेषां कामानाम्, तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्यउदितः' (छां.१.६.७) इति निरुपाधिकसर्वलोकसर्वकामेशत्वं स्वत एवाकर्मवश्यत्वं च प्रत्यगात्मनोऽर्थान्तरभूतस्यहि परमपुरुषस्यैव धर्मः, 'वेदाहमेत पुरुषं महान्तम् । आदित्यवर्णं तमसःपरस्तात्' (यजु.आर.३.१३.पुरुषसू) इत्यादिषु त्रिगुणात्मकप्रकृत्यन्तर्गताप्राकृतस्वासाधारणरूपवत्त्वं च ज्ञानादिगुणवत्त्वमस्यैवहि श्रूयते ; ज्ञानादयोऽपि 'सत्यंज्ञानमनन्तं ब्रह्म' (तै.आन.१) 'यस्सर्वज्ञस्सर्ववित्' (मु.१.१.९) 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' (श्वे. ६.८) इत्यादिषु श्रुतत्वात् तस्य गुणा विज्ञायन्ते । तथा 'आदित्यवर्णं तमसःपरस्तात्' (यजु.आर.३.१३.पुरुषसू) इत्यादिषु अप्राकृतस्वासाधारणरूपश्रवणात् तद्वत्ता च विज्ञायते । तदेतद्वाक्यकारश्चाह—'हिरण्मयःपुरुषो दृश्यते' इति 'प्राज्ञस्सर्वान्तरस्स्यात् लोककामेशोपदेशात् तथोदयात्पाप्मनाम्' इत्युक्त्वा तद्रूपस्य कार्यत्वं मायामयत्वं वा इति विचार्य 'स्याद्रूपं कृतकमनुग्रहार्थं तच्चेतसामैश्वर्यात्' इति निरसनीयं मतमुपन्यस्य, 'रूपं वातीन्द्रियम् अन्तःकरणप्रत्यक्षनिर्देशात्' इति व्याख्यातं च द्रमिडाचार्यैः—'नवा मायामात्रमञ्जसैव विश्वसृजो रूपम्, तत्तु न चक्षुषा ग्राह्यम्, मनसा वकलुषेण साधनान्तरवता गृह्यते, 'न चक्षुषा गृह्यते नापि वाचा मनसातु विशुद्धेन' इति श्रुतेः ; नह्यरूपाया देवतायाः रूपमुपदिश्यते ; यथाभूतवादिहि शास्त्रम् ; यथा 'महारजतं वासः' 'वेदाहमेत पुरुष महान्तम् । आदित्यवर्णम्' इति प्रकरणान्तरनिर्देशात्' इति साक्षिण, इति 'हिरण्मय' इति रूपसामान्याच्चन्द्रमुखवत् इति च वाक्यम् । तत्र व्याख्यातं तैरेव 'नमयडत्र विकारमादाय प्रयुज्यते अनारभ्यत्वादात्मनः' इत्यादिना । अतः प्रधानात् प्रत्यगात्मनश्चार्थान्तरभूतो निरुपाधिकविपश्चिदनवधिकातिशयानन्दोऽप्राकृतस्वासाधारणदिव्यरूपः पुरुषोत्तमःपरं ब्रह्म जगत्कारणमिति वेदान्तैःप्रतिपाद्यत इति निरवद्यम् ॥

## भेदव्यपदेशाच्चान्यः १-१-२२

'य आदित्ये तिष्ठन् आदित्यादन्तरो यमादित्यो नवेद यस्यादित्यश्शरीरं य आदित्यमन्तरो यमयति सत आत्माऽन्तर्याम्यमृत इत्यधिदैवतम् । यश्चक्षुषि तिष्ठन् इत्यध्यात्मम् । यस्सर्वेषु लोकेषु तिष्ठन्नित्यधिलोकम् । यस्सर्वेषु भूतेषुतिष्ठन्नित्यधिभूतम् । यस्सर्वेषु वेदेषु तिष्ठन्नित्यधिवेदम । यस्सर्वेषु यज्ञेषु तिष्ठन्नित्यधियज्ञम्' (बृ.७.ब्रा.९) इत्यन्तर्यामिब्राह्मणे ; सुबालोपनिषदि च 'यःपृथिवीमन्तरे सञ्चरन्' इत्यारभ्य 'योऽव्यक्तमन्तरे सञ्चरन् योऽक्षरमन्तरे सञ्चरन् यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युश्शरीरम् य मृत्युर्न वेद एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः' (सुबा ७.ख) इति सद्व सर्वलोकसर्वभूतसर्ववेदसर्वयज्ञसर्वात्मोपरिवर्तमानतया तच्छरीरतया तत्तदन्तरात्मतया तत्तदवेद्यतया तत्तन्नियन्तृतया चैभ्यस्सर्वेभ्यः भेदव्यपदेशाच्च अयमपहतपाप्मा नारायणःप्रधानात् प्रत्यगात्मनश्च अर्थान्तरभूतो निखिल जगदेककारणमिति सिद्धम् ॥

इति वेदान्तसारः

अथ वेदान्तदीपः

## अन्तस्तद्धर्मोपदेशात् १-१-२१

छान्दोग्ये 'यदेषोऽन्तरादित्ये हिरण्मयःपुरुषो दृश्यते' (छां.१.६.६) 'यएषोऽन्तरक्षिणि पुरुषो दृश्यते' (छां

१.७.५) इत्यादित्याधारतया श्रूयमाणः पुरुषः किं जीवविशेषः, उत परमपुरुष इति संशयः। जीवविशेष इति पूर्वपक्षः। कुतः? सशरीरत्वात्। शरीरसंयोगो हि कर्मवश्यस्य जीवस्य स्वकर्मफलभोगायेति। राद्धान्तस्तु—'स एष सर्वेभ्यः पाप्मभ्य उदितः' (छा.१.६.७) इत्यादिना अपहतपाप्मत्वपूर्वकसर्वलोककामेशत्वोपदेशात्। तथा च जीवत्वासम्भवात्, अयमक्ष्यादित्याधारः पुरुषोत्तम एव। स्वासाधारणविलक्षणरूपवत्त्वं च ज्ञानबलैश्वर्यादिकल्याणगुणवतस्तस्य सम्भवति। श्रूयते च तद्रूपस्याप्राकृतत्वम् 'आदित्यवर्णं तमसस्तु पारे' (पुरुषसू.) इत्यादौ। सूत्रार्थस्तु—आदित्याद्यन्तश्श्रूयमाणः पुरुषः परब्रह्म। तदसाधारणापहतपाप्मत्वादिधर्मोपदेशात्॥

## भेदव्यपदेशाच्चान्यः १-१-२२

'य आदित्ये तिष्ठन्नादित्यादन्तरः' (बृ.५.७.९) 'य आत्मनि तिष्ठन्नात्मनोऽन्तरः' (बृ.५.७.२२.विज्ञानस्थाने माध्यन्दिनपाठ) इत्यादिभिः जीवाद्भेदव्यपदेशादन्तर्यामी परमात्मैव॥

॥ इति वेदान्तदीपे अन्तरधिकरणं समाप्तम् ॥

---

अथ अधिकरणसारावली

भूयिष्ठानन्तपुण्योपचयबलसमुद्बुद्धपूर्वोक्तभूम्ना
शक्राद्यन्यायतस्यात् त्रिगुणतनुभृतामीश्वराणां प्रवाहः।
तस्मात्कर्मोत्थदिव्याकृतिजनिमहिमा शासिता सर्वपुंसां
नित्यश्रीर्मण्डले श्रुतइति स य इत्युक्त एवैष एकः ॥ १ ॥
सर्वेभ्यः कल्मषेभ्योऽभ्युदित इति वदन्त्यन्तरादित्यविद्या
तस्माच्छेषाभ्यनुज्ञानयत इति विभोः पुण्ययोगोऽस्तु मैवम्।
आम्नातोऽनन्यशास्यस्स्ववशपरफलस्साधुना नैव भूयान्
स्यात्पुण्ये लक्ष्मयोगादपि न सुकृतमित्यादिना पाप्मशब्दः ॥ २ ॥
प्रख्यातं शुद्धसत्त्वं किमपि तदनघं द्रव्यमव्यक्ततोऽन्यत्
तद्रूपं रूपमीशं दिवि कनति तथा शेषशेषाशनाद्यैः।
नित्यं तत्सूरिसेव्यं परतरमजहत्स्वस्वभावस्स देवः
पुंसां संसारशान्त्यै विपरिणमयति व्यूहपूर्वैर्विभङ्गैः ॥ ३ ॥
देहत्वात् सप्तधातुत्रिमलमघभवन्दुःखसञ्जातयुक्तं
सांशत्वादेश्च हेतोरिति यदि तदसद्धर्मिमानेन बाधात्।
बाधश्शास्त्रैकवेद्ये क्वचिदपि न भवेदन्यथाऽतिप्रसङ्गात्
यत्तु स्वेच्छावतारेष्वभिनयति तदप्यासुरोपप्लवार्थम् ॥ ४ ॥

इत्थं विद्यात्रयेण स्थिरचरचिदचिद्देहिनस्सर्वहेतो-
रव्यक्ताज्जीवतत्त्वादपि समधिगता यद्यपि स्यात्तथाऽपि ।
उत्थानद्वारभेदात् क्रमत इह मुहूपक्रमान् सूरिनिष्ठान्
अध्यायेऽस्मिन्निरुन्धन्नधिकरणगणैस्तद्गुणानुद्गृणाति ॥ ५ ॥
शब्दैरसद्ब्रह्ममुख्यैश्श्रुतिशिरसि मितं कारणं किञ्चिदेकं
सङ्कल्पाभ्यासरूपैस्तदनुगुणैश्चिन्तितश्चिद्विशेषः ।
भूताकाशादिशङ्काजननसमुचितैर्नामभिः कारणस्थैः
क्षिप्त्वा तत्पादशेषश्रुतिसमुदयनासम्भवोक्त्या भुनक्ति ॥ ६ ॥
आकाशप्राणशब्दावनितरगतिकौ रूढिभङ्गेन नेयौ
ज्योतिश्शब्दस्तु रूढ्या प्रथयति पुरुषं दिव्यतेजोविशिष्टम् ।
प्रख्यातेन्द्रादिशब्दस्तदनु नियमितस्तद्विशिष्टप्रवृत्त्ये-
त्येवं स्यात्पेटिकैषा द्विरयुगलवती शब्दवृत्तिक्रमेण ॥ ७ ॥

॥ इत्यन्तरधिरणं समाप्तम् ॥



श्रीभाष्यम्

त्कारणे निर्दिष्टे ईक्षणविशेषानन्दविशेषरूपविशेषार्थं स्वभावात्प्रधानक्षेत्रज्ञादिव्यतिरिक्तं ब्रह्मेत्युक्तम्। इदानीमाकाशादिविशेषशब्दैर्निर्दिश्य जगत्कारणत्वजगदैश्वर्यादिवादेऽप्याकाशादिशब्दाभिधेयतया प्रसिद्धचिदचिद्वस्तुनोऽर्थान्तरमुक्तलक्षणमेव ब्रह्मेति प्रतिपाद्यते–'आकाशस्तल्लिङ्गात्-इत्यादिना पादशेषेण—

## २३–आकाशस्तल्लिंगात् (१.१.८)

इदमाम्नायते छान्दोग्ये–'अस्य लोकस्य का गतिरिति आकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशो ह्येवैभ्यो ज्या-

श्रुतप्रकाशिका

## सू.२३—आकाशस्तल्लिंगात् (१.१.८]

सिद्धान्ते कारणत्वानुवादस्य वक्ष्यमाणत्वाद्विधेयं किमित्यपेक्षायां विधेयार्थज्ञापनार्थं 'अस्य लोकस्य कागतिः'

गूढार्थसंग्रहः

दभिप्रेत्याह–साधारणैरशब्दैः जगत्कारणे निर्दिष्टे इति। इदानीमाकाशादिविशेषशब्दैरितिच। परैः 'यदेष आकाश आनन्दो न स्यात्' 'आकाशो है नामरूपयोः' इत्यादौ ब्रह्मणि आकाशशब्दप्रयोगात् तद्वाक्यानां ब्रह्मपरत्वनिर्णयेन तत्राकाशशब्दस्य गौणत्वम् अस्तु आकाशशब्दस्योपक्रमस्थस्य अभ्यासरूपतात्पर्यलिङ्गेन श्रुतित्वात् गौणत्वं स्वदन् न स भवतीति पूर्वपक्षिण आशय उक्तः। सच न युक्तः। सर्वत्रापि आकाशशब्दस्य प्रसिद्धाकाशे रूढत्वेन ब्रह्मशब्दार्थस्य निरवग्रहमहत्त्वस्य तदर्थ एव विश्रान्तिरिति पूर्वपक्षिण आशयः। ब्रह्मशब्दस्य 'बृहज्जातिजीव' इत्यादिरूढिग्राहकप्रमाणमुपन्यस्य रूढिमाशङ्क्य निरुक्तिबललभ्योऽर्थः निरवग्रहमहत्त्वं तेन रूढिर्न विशिष्यत इति पञ्चपादिकाविवरणयोर्व्यक्तम्। निरुक्तिबललभ्यार्थमङ्गीकृत्य अन्यार्थेषु रूढ्यैव प्रयोग इति विवरणप्रमेयसंग्रहे स्पष्टम्। इत्थं च आकाशपदस्य रूढिलब्धार्थपरिग्रहे श्रुतित्वमेवायतमिति ब्रह्मशब्दापेक्षया निष्कर्षः नैवापादयितुं शक्य इति सदाकाशशब्दार्थ एव ब्रह्म द्रष्टव्यं करणीयमित्येवाशयो युक्त इति भावः॥

अन्तरधिकरणविषयवाक्य(छा१.७) खण्ड उत्तरखण्डे (छा.९) 'अस्य लोकस्य कागति'रित्यादिवाक्यं वर्तते। एतत्पूर्वखण्डे शालावत्यदाल्भ्यजैवलीनां कथायां शालवत्यो दाल्भ्यं 'का साम्नो गतिरिति पप्रच्छ। तत्रैव प्रश्नपरम्परायां 'अमुष्य लोकस्य कागतिः' इत्यत्र दाल्भ्येनोक्ते 'अयं लोक' इति तेनोत्तरिते 'अस्य लोकस्य कागतिः' इति तदनन्तरं जैवलिना 'अन्तवत्किल ते शालावत्यसाम' इत्यारभ्य 'अस्य लोकस्य कागतिः' इत्याद्युत्तरवाक्यम्। अत्र 'अस्यलोकस्ये'त्युक्त्या एतल्लोकविषयत्वं वाक्यस्य प्रतीयते। अन्तराधिकरणस्य आनन्दमयाधिकरणशेषतया आनन्दमयाधिकरणविषयवाक्यभूतानन्दवल्ल्यां 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' इत्यत्राकाशस्य वाय्वादिक्रमेणोत्पादकत्वं स्पष्टम्। अत्राकाशशब्दः अभ्यस्त इति अभ्यासरूपतात्पर्यलिङ्ग श्रुतिश्चात्र पूर्वपक्षमूलम्। अनन्यथासिद्धलिङ्ग श्रुत्यपेक्षया प्रबलमिति समाधत्ते–'आकाशस्तल्लिङ्गादित्यादिना॥ अन्तरधिकरणे अपहतपाप्मत्वस्य सदाऽभिव्यक्तिस्वाभाविकत्वं उपदेशात् इति सौत्रशब्देन सूच्यते। अतस्तु लिङ्गशब्दस्यान्यदेव तात्पर्यम्॥

श्रीभाष्यम्

यानाकाशः परायणम् ' (छां.१.९.१) इति। तत्र सन्देहः-किं प्रसिद्धाकाश एवात्राकाश-शब्देनाभिधीयते, उतोक्तलक्षणमेव ब्रह्म-इति। किं प्राप्तम्। प्रसिद्धाकाश इति, कुतः ? शब्दैकसमधिगम्ये वस्तुनि य एवार्थो व्युत्पत्तिसिद्धशब्देन प्रतीयते स एव ग्रहीतव्यः। अतः प्रसिद्धाकाश एव चराचरभूतजातस्य कृत्स्नस्य कारणम्। अतस्तस्मादनतिरिक्तं ब्रह्म। नन्वीक्षापूर्वकसृष्ट्यादिभिरचेतनाज्जीवाच्च व्यतिरिक्तं ब्रह्मेत्युक्तम्। सत्यमुक्तम्, अयुक्तं तु तत्। तथाहि ' यतो वा इमानि भूतानि जायन्ते-तद्ब्रह्म ' (तै.भृ.१.अनु)इत्युक्ते कुत इमानि भूतानि जायन्त इत्यादि विशेषापेक्षायां ' सर्वाणि ह्वा इमानि भूतान्याका-शादेव समुत्पद्यन्ते ' (छां.१.९.१) इत्यादिना विशेषप्रतीतेः जगज्जन्मादिकारणमाकाश

श्रुतप्रकाशिका

इत्यादिकमुदात्तम्। गतिः प्राप्य, संशयमाह—तत्रेति। भूताकाशे प्रसिद्धयतिशयपरायणत्वाद्यनुपपत्तिभ्यां संशयः—भूताकाशे परमात्मनि चाकाशशब्दप्रयोगात्संशय इत्युक्त परैः। तदयुक्तम् अश्रुतवेदान्तस्य ' सर्वाणिह्वा इमानिभूतानि ' इति वाक्यस्याकाशशब्दवत् ' आकाशोहवै नामरूपयोर्निर्वहिते ' इत्यादिवाक्यस्याकाशशब्दस्य च परमात्मविषयत्वाप्रतिपत्तेः श्रुतवेदान्तस्य संशयाभावाच्च। चिदचिद्विलक्षणकारणास्तित्वायोगव्यवच्छेदो हि प्रथमपादसाध्यः नत्वन्ययोगव्यवच्छेदः स तु द्वितीयादिसाध्य एव, इतःपूर्वैरधिकरणैरयोगव्यवच्छेदात्सिद्ध इति चेन्न ' सदेव ' ' ब्रह्मविदाप्नोति ' ' आत्मन आकाशस्सम्भूत ' इत्यादिषु कारणविषयाणां सद्ब्रह्मादिशब्दानां साधारणानामाकाशप्राणेन्द्रादिविशेषपर्यवसानेसति चिदचिद्विलक्षणकारणास्तित्वासिद्धेराकाशादिपदानामीक्षणानन्दादिविशेषयोगानुगुणतया नेयत्वेनैव तत्सिद्धेश्च। अतो यथोक्तहेतुनिबन्धनस्संशयः ॥

जगत्कारणवादिवाक्यप्रतिपाद्य वस्तु किमाकाशः उत परमात्मेति विचारः तदर्थं ' अस्य लोकस्य कागतिः ' इत्याकाश इत्यत्राकाशः किंप्रसिद्ध ? उत पर तदर्थं किमाकाशशब्दो रूढ्या वर्तते उतावयववृत्तया। तदर्थे ज्यायस्त्वादिगुणाः किं मुख्यतया नेयाः उतन। तदर्थं ' आत्मन आकाशस्सम्भूतः ' इत्यात्मशब्दः किं कारणाकाशपरः उत परमात्मपरः ? तदर्थं किमयमात्मशब्दः स्वरूपपरः उत देहप्रतिसम्बन्धिपर इतिविचारः यदा स्वरूपपरः तदा आत्मन आकाश इत्यत्रात्मशब्दस्य कारणाकाशपरतया ज्यायस्त्वादिगुणानामपि कथञ्चिन्नेयत्वेन रूढिशक्तेः स्थितत्वाद्विषयवाक्यस्याकाशशब्दः प्रसिद्धाकाशपरइति वेदान्तवेद्य वस्तु प्रसिद्धाकाश इति पूर्वपक्ष फलफलिभावः। यदा आत्मशब्दः शरीरप्रतिसम्बन्धिपरः तदा आत्मन आकाश इत्यत्रात्मशब्दस्य परमात्मपरतया ज्यायस्त्वादिगुणानामपि मुख्यत्वाद्यौगिकवृत्त्या विषयवाक्यस्याकाशशब्दः परमात्मपर इति कारणवाक्यप्रतिपाद्यः परमात्मेति राद्धान्ते फलफलिभावः ॥

पूर्वपक्षसमर्थनौपयिक प्रयोजकं शिक्षयति शब्देति। प्रमाणान्तरसिद्धार्थानुवादेरूपति हि तदनुरोधाय क्लिष्टगत्याऽर्थस्य वर्णनीयत्व स्यात् ' आदित्यो यूप ' इत्यादिषु यूपादेः प्रमाणान्तरगोचरत्वाद्धि तदनुरोधादैक्यहानम् मानान्तरागोचरे वस्तुनि प्रतिपाद्ये न तथा व्युत्पत्तिसिद्धार्थस्त्याज्य.। आनुरोद्धव्यान्तराभावेन शब्दस्यानन्यस्य अकुण्ठितत्वादिति भावः। ततःकिमित्यत्राह—अतइति। प्रसिद्धाकाशएवेति। अर्थान्तरपरत्वेहि यौगिकवृत्तिराश्रयणीया नतद्युक्त रूढिर्हि योगात्प्रबलेतिभावः। अ(र्थान्तर)र्थ)विरोधाद्व्युत्पत्तिसिद्धार्थस्त्यज्यत इति चोदयति नन्विति परिहरति सत्यमिति। इत्यादौ यादिशब्देन किंप्रयान्ति केन जीवन्ति इत्यपेक्षा विवक्षिता विशेषण प्रतीतेरिति एतद्वाक्यविशेषेण वस्तुविशेषप्रतीतिर्हेतुतयोक्ता जगज्जन्मादिकारणमाकाशएवेति निश्चितइति। सद्विद्यादिप्रतिपन्नकारणानुवादिलक्षणवाक्योक्त

## श्रीभाष्यम्

एवेति निश्चिते सति 'सदेव सोम्येदमग्र आसीत्' (छां.६.२.१) इत्यादिष्वपि सदादिशब्दाः साधारणाकारास्तमेव विशेषमाकाशमभिदधाति। 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐतरेय.१.१.१) इत्यादिष्वात्मशब्दोऽपि तत्रैव वर्तते। तस्यापि हि चेतनैकान्तत्वं न संभवति ; यथा 'मृदात्मको घट' इति। आप्नोतीत्यात्मेति व्युत्पत्त्या सुतरामाकाशेऽप्यात्मशब्दो वर्तते। अत एवमाकाश एव कारणं ब्रह्मेति निश्चिते सतीक्षणादयस्तदनुगुणा गौणा वर्णनीयाः। यदि हि साधारणैश्शब्दैरेव सदादिभि कारणमभ्यधायिष्यत ; ईक्षणाद्यर्थानुरोधेन चेतनविशेष एव कारणमिति निरचेष्यत। आकाशशब्देन तु विशेष एव निश्चित इति नार्थस्वाभाव्यान्निर्णेतव्यमस्ति। ननु 'आत्मन आकाशस्सम्भूतः' (तै.आन.१.२) इत्याकाशस्यापि कार्यत्वं प्रतीयते। सत्यम्, सर्वेषामेवाकाशवाय्वादीनां सूक्ष्मावस्था स्थूलावस्था चेत्यवस्थाद्वयमस्ति। तत्राकाशस्य सूक्ष्मावस्था कारणम्। स्थूलावस्था तु कार्यम्। 'आत्मन आकाशस्सम्भूत' (तै.आन.१.९) इति स्वस्मादेव सूक्ष्मरूपात्स्वयं स्थूलरूपस्सम्भूत इत्यर्थः। 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' (छां.१.९.१) इति सर्वस्य जगत आकाशादेव प्रभवाप्ययादिश्रवणात्तदेव हि कारणं ब्रह्मेति

## श्रुतप्रकाशिका

ब्रह्म आकाश एवेति निश्चितइत्यर्थः। यद्वा आपातप्रतीतिः पूर्वमुक्ता निश्चित इति युक्तितो निर्णय उक्तः ॥

ननु 'यतो वा इमानी'त्यादि वाक्यप्रकरण एव 'आनन्दो ब्रह्म' इत्यानन्दशब्देन विशेषनिर्णयोऽस्ति। नैवम् 'यदेष आकाश आनन्दो नस्यात्' इत्याकाशशब्दसामानाधिकरण्यादानन्दशब्दः किमाकाशपरः आकाशशब्दः किमानन्दपरइति संशयस्स्यात् तस्मादानन्दशब्दसामानाधिकरण्यरहितात् 'आकाशादेव समुत्पद्यन्ते' इति वाक्यादेव विशेषनिर्णयइत्यभिप्रायेणाकाशएवेति निश्चितइत्युक्त साधारणाकाराः साधारणरूपाः 'छागोवा मन्त्रवर्णात्' इति न्यायोऽभिप्रेतः आत्मशब्दन विशेषनिर्णयशङ्कां निरस्यति। आत्मावा इत्यादिना। तत्रैव आकाशे आकाशशब्दापेक्षया आत्मशब्दोऽपि साधारण इत्यर्थः आत्मशब्दस्यावयवशक्त्याप्याकाशपरत्वं दर्शयति आप्नोतीति। व्यवस्थितरूढिशक्तेराकाशशब्दस्य रूढिभङ्गादपि नानार्थसाधारणरूढिशक्तेरात्मशब्दस्य रूढिभङ्गउचित इतिभावः। ईक्षणादीनां गौणत्वेन निर्वाह्यत्वमाह – अतएवमिति। श्रुतिप्राबल्यलिङ्गं तदनुगुणं नेयमित्यर्थः। ईक्षणादिमुख्यत्वानुरोधी सदादिशब्दैरेव विशेषनिर्णय इति शङ्कायां सदादिशब्देभ्य आकाशादिपदश्रुतेः प्राबल्यमुपपादयति यदिहीति। साधारणशब्दैरेवेति। ननु विशेषशब्दान्तरे सतीतिभाव.। यदीत्यभिप्रेतं विपर्ययेण विशेषनिश्चायकत्वाव दर्शयति आकाशशब्देनत्विति। रूढिर्हि योगमपहरतीति न्यायाद्विलम्बितप्रतिपत्तौ यौगिकादपि झटितिधीविषय रूढ्यर्थ एवाकाशशब्दस्य परिग्राह्य सदादिशब्दानामीक्षणादिलिङ्गपरामर्शसापेक्षत्वेन विलम्बितप्रवृत्तितया आकाशप्रवृत्तित्वात् प्रबलतरत्व शब्दश्रुत्याऽपेक्षिते विशेषे लब्धे अर्थस्वभावनिर्णेतव्यविशेषाभावादीक्षणादयस्तदनुरोधेन वर्णनीयाः। अतो नचेतनविशेषकारणत्वसिद्धिरित्यर्थः कार्यतयाऽवगतस्य परमकारणत्वानुपपत्तिमुखेन चोदयति नन्विति। परिहरति सत्यमिति। कार्यत्वेऽभिमतिः तस्य कारणत्वमङ्गीकृत्वेऽनङ्गीकारः वाय्वाद्युपादानं निदर्शनतया सूक्ष्मावस्थाशब्देन तन्मात्रावस्था कथ्यते 'आत्मनआकाश' इति वाक्ये आत्मशब्दः स्ववाचीत्यर्थः। कुत इत्थमस्वारस्येनार्थो वर्ण्यते इत्यत्राह–सर्वाणीति। प्रभवाप्ययादीत्यादिनाऽऽकाशप्रदानेन स्थितिहेतुत्वमुच्यते परायणम् इति यत्रोक्तम् ॥

## श्रीभाष्यम्

निश्चितम् । यतः प्रसिद्धाकाशादनतिरिक्तं ब्रह्म, अत एव च 'यदेष आकाश आनन्दो न स्यात्' (तै.आ.७) 'आकाशोऽहं नामरूपयोर्निर्वहिता' (छां.८.१४.१) इत्येवमादिनिर्देशोऽप्युपपन्नतरः । अतः प्रसिद्धाकाशादनतिरिक्तं ब्रह्मेति ॥

एवंप्राप्ते ब्रूमः—'आकाशस्तल्लिङ्गात्' आकाशशब्दाभिधेयः प्रसिद्धाकाशादचेतनादर्थान्तरभूतो यथोक्तलक्षणः परमात्मैव । कुतः ? तल्लिङ्गात्-निखिलजगदेककारणत्वम्, सर्वस्माज्ज्यायस्त्वम्, परायणत्वम् इत्यादीनि परमात्मलिङ्गान्युपलभ्यन्ते । निखिलकारणत्वं ह्यचिद्वस्तुनः प्रसिद्धाकाशशब्दाभिधेयस्य नोपपद्यते, चेतनवस्तुनस्तत्कार्यत्वासम्भवात् । परायणत्वं च चेतनानां परमप्राप्यत्वम् । तच्चाचेतनस्य हेयस्य सकलपुरुषार्थविरोधिनो न सम्भवति । सर्वस्माज्ज्यायस्त्वं च निरुपाधिकं सर्वैः कल्याणगुणैरसद्धंश्यो निरतिशयोत्कर्षः तदप्यचितो नोपपद्यते ॥

यदुक्तं जगत्कारणविशेषाकांक्षायामाकाशशब्देन विशेषसमर्पणादन्यत्सर्वं तदनुरूप

## श्रुतप्रकाशिका

नामरूपयोर्निर्वहिता इत्येवमादीत्यादिशब्देन 'कं ब्रह्म खं ब्रह्म' 'प्राणंचास्मै तदाकाशंचोचुः' 'परमे व्योमन्प्रतिष्ठिता' इति वाक्यान्यभिप्रेतानि । पूर्वपक्षमुपसहरति अतइति । राद्धान्तमारभते एवमिति । पूर्वाधिकरण इव नात्र तद्धर्मोपदेशात् इत्युक्तं वाक्यान्तरप्रसिद्धार्थस्यानूदितस्य हेतुतया विवक्षितत्वात् । लिङ्गसम्बन्धित्वेन प्रमाणान्तरोपलभ्यं हि लिङ्गं भवति । लिङ्गं च किमित्यत्राह—निखिलजगदिति । 'सर्वाणि ह वा इमानि' इत्यस्मिन्विषयवाक्ये सर्वशब्दस्यासङ्कोचमभिप्रेत्य निखिलेत्युक्तं भूतशब्दस्य वाय्वादिचतुष्टयमात्रपरत्वव्युदासाय जगच्छब्दः । महच्छब्दपञ्चशब्दपृथिव्यादिशब्दसमभिव्याहाराभावात् भूतशब्दस्याचित्समष्टिचेतनपरत्वं स्वतःप्राप्तम् । 'यतो वा इमानि भूतानिजायन्ते येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति' 'नहिंस्यात्सर्वा भूतानि' 'भूतानां प्राणिनश्श्रेष्ठाः' इत्यादिप्रयोगस्वारस्यात् । अतस्सर्वभूतकारणवोक्त्या चिदचिदात्मकसमस्तप्रपञ्चकारणत्वमुक्तं भवतीत्यभिप्रायेण निखिलजगदित्युक्तम् । तत्र निमित्तान्तराश्रवणादवधारणादित्यान्तरैकार्थ्याच्च निमित्तोपादानादिरूपसर्वविधकारणत्वाभिप्रायेणैककारणत्वमित्युक्तम् आकाशस्य तल्लिङ्गानुपपत्तिमाह—निखिलकारणत्वमिति । अनेनैककारणत्वानुपपत्तिश्चाभिप्रेता नह्याकाशो निमित्तकारणं भवितुमर्हति, पुरुषार्थविरोधित्वाच्च प्राप्यत्वं च न सम्भवतीत्याह—परायणत्वंचेति । अचेतनस्य चेतनत्वेन स्वरूपानन्तर्भूतत्वाद्धेयत्वमित्यर्थः सकलपुरुषार्थविरोधिनः सकलानां पुरुषाणां साक्षात्पुरुषार्थो मोक्षः तत्प्रतिबन्धकहेतुतया तस्य विरोधिन इत्यर्थः । यद्वा मोक्षविरोधितया हेयस्य शब्दादिनिषिद्धविषयप्रावण्यजननाद्धर्मादिसकलपुरुषार्थविरोधिनः एवं च सुखस्य मोक्षान्तर्भावात् सकलपुरुषार्थरूपो मोक्ष तद्विरोधिन इति वाऽर्थः ॥

यद्वा कारणावस्थायामत्यन्तज्ञानसङ्कोचहेतुतया चतुर्णामपि पुरुषार्थानां विरोधिन इत्यर्थः । ज्यायस्त्वं दर्शयति सर्वस्मादिति । अत्र पूर्वपक्षयुक्तेः कःपरिहारइत्यतो भवतीत्यपेक्षायां सूत्राभिप्रेतार्थं वदन् परोक्तमनुवदति यदुक्तमिति ।

## गूढार्थसंग्रहः

निखिलजगदेककारणत्वमिति । 'आकाशादेव समुत्पद्यन्ते' इत्यत्र एवकारेण कारणान्तरनिषेधेन उपादानकारणत्वं निमित्तकारणत्वं चैकस्यैवेति तात्पर्येण निखिलजगदेककारणत्वमित्युक्तम् । पूर्वाधिकरणे 'तद्धर्मोपदेशात्'इत्यत्र

## श्रीभाष्यम्

**मेव वर्णनीयमिति, तदयुक्तम् ' सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते ' (छां १.९.१) इति प्रसिद्धवन्निर्देशात्। प्रसिद्धवन्निर्देशो हि प्रमाणान्तरप्राप्तिमपेक्षते। प्रमाणान्तराणि च ' सदेव सोम्येदमग्र आसीत् ' (छा.६.२.१) इत्येवमादीन्येव वाक्यानि। तानि च यथोदितप्रकारेणैव ब्रह्म प्रतिपादयन्तीति तत्प्रतिपादितं ब्रह्माकाशशब्देन प्रसिद्धवन्निर्दिश्यते। सम्भवति च परस्य ब्रह्मणः प्रकाशकत्वादाकाशशब्दाभिधेयत्वम्—आकाशते, आ**

## श्रुतप्रकाशिका

परिहरति तदयुक्तमिति। प्रथमं पुरोवादसापेक्षेणानुवादेन पुरोवादिवाक्यविरुद्धार्थप्रतिपादनायोगं वक्तुं अनुवादलिङ्गत्वमाह—**सर्वाणीति**। **प्रसिद्धवन्निर्देशोऽस्तु,** तत: किमित्यत्राह—**प्रसिद्धवदिति**। सापेक्षत्वमस्तु इत किमित्यत्र ह—**प्रमाणान्तराणिचेति**। कथमाकाशशब्दस्य परब्रह्मवादित्वमित्यत्राह—**सम्भवतिचेति**। **प्रकाशकत्वात्** अन्यथा सर्वार्थ

## गूढार्थसंग्रह

तच्छब्दोपपादनेन अनन्यथासिद्धत्वं यथा तथाऽत्रापि तच्छब्दनिर्देशेन लिङ्गस्यानन्यथासिद्धत्वं बोध्यते। अनन्यथासिद्धलिङ्गस्य श्रुत्यपेक्षया प्राबल्यं सूत्रे विवक्षितम्। अत्र श्रुतिक्रमे 'आकाशादेव समुत्पद्यन्त' इत्यादिना कारणत्वं प्रथमतः अनन्तरं ज्यायस्त्वम् अनन्तरं परायणत्वम् अनन्तत्वं चान्तेऽभिहितम्। यद्यपि जैवलिना ' अन्तवत्किल शालावत्यसाम ' इति पूर्वमेव शालावत्यप्रतिसाम्नः अन्तत्वं प्रतिपादितम्। तत्प्रतिकोटिभूतमनन्तत्वं, तस्यैव प्रथममभिधानं युक्तमिति (न्या.प.म) कैश्चिदुक्तम्। तथाऽप्याकाशशब्दघटितविषयवाक्ये लिङ्गोक्तिक्रमपर्यालोचनायां कारणत्वमेव प्रथमतः अन्त एवानन्तत्वमुक्तम्। एतदनुसारेण परैरपि कारणत्वादिकमभिधाय अनन्तत्वमन्त एवाभिहितम्। युक्तं चैतत् अभ्यासरूपतापर्यलिङ्गयुगृहीताकाशशब्दश्रुतिः पूर्वपक्षलिङ्गमिति(ब्र.वि.आ) पूर्वपक्षिण आशयः परैरेवोक्तः। सिद्धान्तेऽपि एतत्प्रतिकोटितया कारणत्वं प्रथममभिहितम्। एवमुक्तविधानन्यथासिद्धं लिङ्गं पूर्वपक्षप्रतिकोटितया यद्वाक्यबलादुपन्यस्तं तस्मिन्नेव वाक्येऽनन्यथासिद्धलिङ्गप्रदर्शने तत्प्रकाशनमेव पूर्वपक्षानुगुणं सिद्धान्तस्य एवमुक्तविधं 'आकाशस्तल्लिङ्गात्' इति सूत्रयितुः व्यासस्याशयः सम्यक्प्रकाशितो भवति। अभ्यस्तश्रुतिरेव पूर्वपक्षबीजमिति परेषामपि सम्मतम्, तत्प्रतिकोटिभूतार्थस्य सिद्धान्ते वर्णनदशायामपि तद्वाक्योक्तकारणत्वस्यानन्यथासिद्धस्य प्रथमोक्तस्य पूर्वपक्षनिराकरत्वकथनमेवानुरूप्यम्। एवमाशयेनैव शङ्कराचार्यैरपि श्रुत्युक्तक्रमेणैव लिङ्गान्यभिहितानि। तद्रीतिरेव भगवद्भाष्यकारैरप्यादृता। इत्यादीनि इत्यत्रादिपदेन अनन्तत्वमपि सगृहीतं भाष्ये। तल्लिङ्गादित्यत्रैकवचनेन एकस्यैव लिङ्गस्य श्रुतिबाधकत्वं सम्भवतीत्यर्थो बोधितः अथापि श्रुतौ बहूनां लिङ्गानामभिधानेन बहूनि लिङ्गान्यत्रोपन्यस्तानि। एतेनाभ्यासरूपतापर्यलिङ्गस्य पूर्वपक्षसाधकस्यापि उपसंहारः सूचितो भवति। पूर्वतन्त्रे 'अर्थाद्वा कल्पनैकदेशत्वात्' (१.४.३०) इत्यत्र ' हस्तेनावद्यति स्वधितिनाऽवद्यति "अञ्जलिना सक्तून्प्रदाव्ये जुहोति ' इत्यादौ सामर्थ्यानुरोधेनावदानस्य द्रवद्रव्यपुरोडाशाद्यवदानपरत्वेन अञ्जलिशब्दस्य व्याकोचात्मकाञ्जलिपरतया च सङ्कोचः। एवं कृष्णलेऽष्टौ ' स्याद्वा प्रत्यक्षाशिष्टत्वात् प्रदानवत् ' (१०.२.१) इत्यत्र 'घृते श्रपयति ' इत्यादौ विक्लित्त्यनुकूलव्यापारसामान्यवाचकस्य श्राधातोः अग्निसंयोगमात्रपरत्वेन सङ्कोचः स्वीकृत इत्यनन्यथासिद्धलिङ्गस्य प्राबल्यं पूर्वमीमांसकानामपि सम्मतमिति सिद्धम् ॥

### आकाशाधिकरणं समाप्तम्

श्रीभाष्यम्

काशयति च—इति। किंच अनेनाकाशशब्देन विशेषसमर्पणक्षमेणापि चेतनांशं प्रत्यसमर्पितत्वात्, सामान्यमचेतनविशेषमभिदधानेन 'तदैक्षत बहु स्यां प्रजायेय' (छां.६.२.३) 'सोऽकामयत। बहु स्यां प्रजायेय' (तै.आन.६) इत्यादिवाक्यशेषावधारितसार्वज्ञ्यसत्यकाम सत्यसङ्कल्पत्वादिविशिष्टापूर्वार्थप्रतिपादनसमर्थानेकवाक्यगतिसामान्यं दैवेनानुवादस्वरूपेणान्यथाकर्तुं न शक्यते। यत्त्वात्मशब्दश्चैतनैकान्तो न भवति 'मृदात्मको घटः' इत्यादिदर्शनादित्युक्तम्; तत्रोच्यते—यद्यपि चेतनादन्यत्रापि क्वचिदात्मशब्दः प्रयुज्यते; तथाऽपि शरीरप्रतिसंबन्धिन्यात्मशब्दस्य प्रयोगप्राचुर्यात् 'आत्मा वा इदमेक एवाग्र आसीत' (ऐतरेय.१.१.१) 'आत्मन आकाशस्सम्भूतः' (तै.आन.१.२) इत्यादिषु शरीरप्रतिसम्बन्धिचेतन एव प्रतीयते। यथा गोशब्दस्यानेकार्थवाचित्वेऽपि प्रयोगप्राचुर्यात्सास्नादिमानेव स्वतः प्रतीयते; अर्थान्तरप्रतीतिस्तु तत्तदसाधारणनिर्देशापेक्षा; यथा स्वत प्राप्तं शरीरप्रतिसंबन्धिचेतनाभिधानमेव 'स ईक्षत लोकान्नु सृजा इति' (ऐतरेय.१.१.१) 'सोऽका-

श्रुतप्रकाशिका

प्रकाशकत्वात् आकाशते स्वस्मै प्रकाशते। आकाशयति अन्यं प्रकाशयति, स्वात्मने इत्यर्थः. यद्वा प्रकाशकत्वादिति णिजन्तत्वेनाणिजन्तत्वेन च व्युत्पत्तिद्वयस्य तत्रोक्तिः। तस्यैव विवरणम् आकाशते इत्यादि रूढिप्राबल्यमर्थाविरोधसतीत्यत्रशूद्राधिकरणन्यायप्रदर्शनेनावयवशक्त्या निर्वाहः कृतः। रूढ्यपरित्यागेनापर्यवसानवृत्त्या आकाशशब्दस्याकाशशरीरकपरमात्मपरतया निर्वाहोऽप्यभिमतः। वैश्वानराधिकरणे वैश्वानरशब्दस्योभयथाऽपि परमात्मपरत्वस्य वक्ष्यमाणत्वात्, आकाशादिशब्दानां तत्तच्छरीरकपरमात्मवाचित्वस्यानन्तरपादेऽनुवदिष्यमाणत्वाच्च। आकाशशब्दस्याव्याकृतशरीरकपरमात्मपरत्वं तु यादवप्रकाशोक्तं विलम्बद्वयवत्त्वादुपेक्षितम्। न केवलं प्रसिद्धवन्निर्देशमात्रमनुवादत्वसाधकं 'यदाग्नेयोऽष्टाकपालः' 'उपरिहि देवेभ्यो धारयति' इत्यादावदर्शनादिति शङ्कायामयोग्यत्वे निश्चिते सति प्रसिद्धवन्निर्देशोऽनुवादकत्वसाधक इत्यभिप्रायेणाह—किंचेति। विशेषसमर्पणक्षमेणापीति। एकपदश्रवणवेलायां विशेषसमर्पणक्षमेणापि परामर्शदायामयोग्यतया निश्चितोऽर्थो न प्रतिपादयितुं शक्य इत्यभिप्रेत्यासंभावितकारणभावमित्युक्तम्। 'सदैक्षत' इति सद्विद्यावाक्यशेषः 'सोऽकामयत' इति 'ब्रह्मविदाप्नोति' इत्यनुवाकवाक्यशेषः ब्रह्मणो योग्यार्थत्वज्ञापनाय सार्वज्ञ्यादिकमुक्तम्। न प्रमाणपदवीमधिरोहतीति। अयोग्यार्थेनानुवादरूपेण वाक्येन योग्यापूर्वार्थवाक्यानामन्यथाकरणमयुक्तमित्यर्थः। उक्तवैषम्यद्वयानुवादेनानेकवाक्यान्येकवाक्येन बाधयितुमशक्यानीत्याह—एवमिति। गतिसामान्यं प्रवृत्तिसामान्यं 'अस्य लोकस्य का गतिः' इत्युपक्रमवशात् अन्यपरत्वं स्फुटम्॥

एवमाकाशकारणपक्षे अन्यपरत्व,मेकवाक्यत्व,मयोग्यार्थत्व,मनुवादरूपत्वम् स्वपक्षे अनन्यपरत्वं वाक्यबहुत्वं योग्यार्थत्वमपूर्वत्व,ञ्चेति वैषम्यचतुष्टयमुक्तम्। एवमयोग्यार्थश्रुतिमूलं लिङ्गमयोग्यार्थश्रुतितः प्रबलमिति सिद्धान्तन्याय उक्तो भवति यथा गङ्गाशब्दस्वार्थसमर्पणक्षमोऽभूतलधर्मतया प्रत्यक्षसिद्धघोषाधिकरणत्वलिङ्गविरोधेनाऽत्यन्तायोग्यः स्वार्थप्रतिपादनक्षमत्वाभावाच्छ्रुत्याभासः, एवं योग्यार्थश्रुतिमूललिङ्गापेक्षया आकाशश्रुतिः श्रुत्याभास इति। आत्मशब्दानैकान्त्यमित्यादिनानूद्य परिहरति तत्रेति। स्वतःप्राप्तया आत्मशब्दो विशेषवाचीत्यर्थः। प्रकृतब्रह्मवाचितच्छब्दसामानाधिकरण्याच्च न स्वरूपपरत्वमित्यर्थसिद्धम्। न केवलमर्थान्तरसाधकनिर्देशाभावः स्वतःप्राप्तार्थसाधकनिर्देशोऽप्यस्तीत्याह—स ईक्षतेति। अधिकरणार्थमुपसंहरति एवमिति। योगाद्रूढेः प्राबल्यात् प्रसिद्धार्थपरत्वे सति श्रुतिविरोधाद्दुर्बलं लिङ्गादि-

श्रीभाष्यम्

मयत वहुस्यां प्रजायेय ' (तै.आन.६) इत्यादितत्तद्वाक्यविशेषा एव स्थिरीकुर्वन्ति । एवंवाक्यशेषावधारितानन्यसाधारणानेकापूर्वार्थविशिष्टं निखिलजगदेककारणं ' सदेव सोम्य ' (छां.६.२.१) इत्यादिवाक्यसिद्धं ब्रह्मैवाकाशशब्देन प्रसिद्धवत् ' सर्वाणि हवा इमानि भूतानि ' (छां.१,९.१) इत्यादिवाक्येन निर्दिश्यत इति सिद्धम् ॥

आकाशाधिकरणं समाप्तम्



श्रुतप्रकाशिका

तदनुरोधेन नेयमिति पूर्वपक्षयुक्तिः योग्यार्थश्रुतिमूललिङ्गादयोग्यार्थस्य पदस्य श्रुत्याभासत्वाद्योग्यार्थस्वीकारइति राद्धान्तयुक्तिः ॥

आकाशाधिकरणं समाप्तम्

अथ वेदान्तदीपः

## आकाशस्तल्लिंगात् १-१-२३

' अस्य लोकस्य कागतिरित्याकाश इति होवाच सर्वाणि हवा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशप्रत्यस्तं यन्ति ' (छा.१.९.१) इत्यत्र आकाशशब्दनिर्दिष्टं जगत्कारणं किं प्रसिद्धाकाशः, उत समस्तचिदचिद्वस्तुविलक्षणं ब्रह्मेति संशयः । प्रसिद्धाकाश इति पूर्वःपक्षः । कुतः ? आकाशशब्दस्य लोके तत्रैव व्युत्पत्तेः, ' यतो वा इमानि भूतानि ' (तै.भृ.१.अनु) इत्यादिसामान्यलक्षणस्य सदादिशब्दानामपि साधारणत्वेन ' आकाशादेव समुत्पद्यन्ते ' इति विशेषे पर्यवसानात्, ईक्षणादयोऽप्याकाश एव जगत्कारणमिति निश्चितेऽति गौणा वर्णनीया इति । राद्धान्तस्तु— ' सर्वाणि हवा इमानि भूतानि ' (छा.१.९.१) इति प्रसिद्धवन्निर्देशात्, प्रसिद्धेश्चेक्षापूर्वकत्वात्, चिदचिद्वस्तुविलक्षणं सर्वज्ञं ब्रह्माकाशशब्दनिर्दिष्टमिति । सूत्रार्थस्तु—आकाशशब्दनिर्दिष्टं परमेव ब्रह्म, प्रसिद्धवन्निर्दिश्यमानात् जगत्कारणत्वादिलिङ्गात् ॥

॥ इति वेदान्तदीपे आकाशाधिकरणं समाप्तम् ॥

अथ अधिकरणसारावळी

अत्राकाशस्त्वशेषप्रभवविलयभूस्साम्नि दृष्टस्स्वनाम्ना
निर्दिष्टस्तैत्तिरीयेऽप्यनितरजनितस्वात्मनस्सम्भवोक्त्या ।
मैवं सिद्धानुवादोह्ययमथ च परमाप्यतादिर्न तस्मि-
स्तत्कर्ताऽऽत्मा विपश्चिच्छ्रुत इति विहता स्वात्मनस्तत्प्रसूतिः ॥

समाप्तमाकाशाधिकरणम्

## अथ प्राणाधिकरणम्

### श्रीभाष्यम्

## सू.२४—अत एव प्राणः (१.१.९)

इदमाम्नायते छान्दोग्ये—'प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता' (छां.१.१०.९) इति प्रस्तुत्य 'कतमा सा देवतेति प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रास्तोष्यो मूर्धा ते व्यपतिष्यत्' (१.११.५) इति ॥

अत्र प्राणशब्दोऽप्याकाशशब्दवत्प्रसिद्धप्राणव्यतिरिक्ते परस्मिन्नेव ब्रह्मणि वर्तते, तदसाधारणनिखिलजगत्प्रवेशनिष्क्रमणादिलिङ्गात्प्रसिद्धवन्निर्दिष्टात् । अधिकाशङ्का तु—कृत्स्नस्य भूतजातस्य प्राणाधीनस्थितिप्रवृत्त्यादिदर्शनात् प्रसिद्ध एव प्राणो जगत्कारणतया निर्देशमर्हति—इति ॥

### अथ प्राणाधिकरणम्

### श्रुतप्रकाशिका

उक्ताधिकरणन्यायमनुवदति—

## सू.२४=अत एव प्राणः (१.१.९)

विषयमाह—इदमिति । मूर्धा ते व्यपतिष्यत् अप्रस्तोता न उन्मथेतेत्यर्थः । किं वेदान्तवेद्यः प्रसिद्धः प्राणः उत परमात्मा, तदर्थं 'प्राण इति होवाच' 'प्राणमेवाभिसंविशन्ति' इत्युक्तः प्राणः किं प्रसिद्धः उत परः । तदर्थं किं प्राणशब्दो रूढः उत यौगिकः तदर्थं भूतजातस्य प्रसिद्धप्राणायत्तस्थितिप्रवृत्तित्वमस्ति उत नेति विचारः । यदाऽस्ति तदा रूढत्वाद्विषयवाक्यस्थप्राणशब्दः प्रसिद्धप्राणपर इति सर्ववेदान्तवेद्यः प्रसिद्धप्राण इति पूर्वपक्षे फलितम् । राद्धान्ते तु यदा प्राणायत्तस्थितिप्रवृत्तित्वं नास्ति तदाऽवयवशक्त्या विषयवाक्यस्थप्राणशब्दः परमात्मपर इति सर्ववेदान्तवेद्यः परमात्मेति फलं फलितम् । अक्षरार्थमाह—अत्रेति । आकाशशब्दवदित्यत्र रूढिप्राबल्यतत्परिहारादिकं पूर्वोक्तं सर्वमनुसन्धेयम् ॥

नह्यप्रत्युदाहरणन्यायोऽतिदेष्टव्यः, अतिदेशस्य हि प्रयोजनमधिकाशङ्कापरिहारः अतः सूत्रकाराभिमतामधिकाशङ्कां दर्शयति कृत्स्नस्येति । अत्राविरोधशङ्कया प्रत्यवस्थानं विरोधस्फुटीकरणमनुसन्धेयम् । स्थितिप्रवृत्त्यादीत्यादि

### अथ प्राणाधिकरणम्

### गूढार्थसंग्रह

कृत्स्नस्य भूतजातस्येति । स्वापकाले प्राणवृत्तिलोपे इतरेन्द्रियवृत्तीनां लोपः, प्रबोधकाले च प्राणवृत्तिसत्त्वेऽलोप इति लोके प्रसिद्धिः । शतपथब्राह्मणेऽपि 'यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः स यदा प्रबुध्यते प्राणादेवाधिपुनर्जायन्ते'(श.ब्रा १०.३ ३ ६) इत्यत्र अयमर्थो व्यक्तः । अ। 'कतमा सा देवता प्राण इति हो

### श्रीभाष्यम्

परिहारस्तु—शिलाकाष्ठादिषु चेतनस्वरूपे च तदभावात् ' सर्वाणि हवा इमानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते ' [छां.१.११.५) इति नोपपद्यत इति । अतः प्राणयति सर्वाणि भूतानीति कृत्वा परं ब्रह्मैव प्राणशब्देनाभिधीयते । अतः प्रसिद्धाकाशप्राणादेरन्यदेव निखिलजगदेककारणमपहतपाप्मत्वसार्वज्ञसत्यसङ्कल्पत्वाद्यनन्तकल्याणगुणगणं परं ब्रह्मैवाकाशप्राणादिशब्दाभिधेयमिति सिद्धम् ॥

### प्राणाधिकरणं समाप्तम्

### श्रुतप्रकाशिका

शब्देन निवृत्तिरुच्यते प्रवृत्तिहेतुभूतज्ञानविकर्षे च ; स्थितिप्रवृत्तिहेतुत्वेनोत्पत्तिकारणत्वमर्थसिद्धमिति भावः ॥

यद्वा ' यदावै पुरुषस्स्वपिति प्राणं तर्हि वागप्येति प्राणंचक्षुः प्राणंश्रोत्रं प्राणंमनः यदाप्रबुध्यते प्राणादेवाधिपुनर्जायन्ते ' इति प्रसिद्धवन्निर्देशरहितया श्रुत्या प्राणस्याप्ययोद्गमनहेतुत्वावगमश्चादिशब्देन विवक्षितः, अस्मिन्प्रकरणे उद्गीथप्रतिहारयोर्देवतात्वेनान्नादित्याद्युक्तौ तयोश्चाब्रह्मत्वात् प्राणोऽपि ब्रह्मव्यतिरिक्तः प्रसिद्धएव ग्राह्यइतीद भाष्येऽनादृतम् प्रकरणोक्तानामन्नमयादीनामब्रह्मत्वेऽपि कारणस्य परब्रह्मत्वमानन्दवल्ल्या समर्थितमिति प्रकरणमात्रस्य पूर्वपक्षावलम्बनत्वेन बुद्धावनारोहात् । जगत्कारणतयेति । संसृष्टप्रति कारणत्व संभवतीति भाव. ॥

अधिकं परिहार दर्शयति परिहारस्त्विति । आदिशब्दोक्त आकाशादिः 'प्राणंतर्हि वागप्येति' इत्यादिश्रुतिरिन्द्रियव्यापारविषया, प्राणशब्दस्य परब्रह्मवाचित्वं कथमिति शङ्का परिहरन्नधिकरणार्थमुपसंहरति अतइति । वृत्ताधिकरणद्वयस्यावान्तरपेटिकात्व दर्शयति अतःप्रसिद्धेति ॥

### प्राणाधिकरणं समाप्तम्

### गूढार्थसंग्रहः

वाचे'ति प्रश्नप्रतिवचने (१.११.४.५) एतद्वाक्यानन्तर ' उद्गातर्या देवता ' ' प्रतिहर्तर्या देवता ' इत्युपक्रम्य 'आदित्य इतिहोवाच ' ' अन्नमितिहोवाच ' इत्यादिप्राणक्रमेणैव वाक्य श्रूयते तत्रोभयोर्ब्रह्मत्वाभावात् अत्रापि ब्रह्मत्वाभावः । एवं ' यदापुनः स्वप्न न कञ्चन पश्यति ' इत्यादिकौषीतकीवाक्ये ' अथास्मिन्प्राण एवैकधा भवति ' इत्यत्र पूर्वोक्तश्रुत्यर्थएव स्फुटः इत्यधिका शङ्का । स्वापप्रबोधयोः इन्द्रियमात्रस्य लयोद्गमनदर्शनेऽपि सर्वेषा भूतानामत्रोत्पत्तिलयश्रवणेन मुख्य प्राणस्योत्पादक वासंभवः ब्रह्मादिस्तम्बान्तस्य भूतशब्दार्थतया चेतनेषु प्राणाधीनत्व न सभवति । ' वाचिकैःपक्षिमृगता मानसैरन्त्यजातिताम् । शरीरजैः कर्मदोषैर्याति स्थावरता नरः' इति स्थावरशिलायाः प्राणाधीनस्थित्यदर्शनात् अत्र 'सर्वाणि भूतानि ' इति वाक्य न गौण नेतु शक्यम् । 'प्राणबन्धनंहि सोम्यमन.' इत्यादौ प्राणशब्दः ब्रह्मणि प्रसिद्धः । 'अथास्मिन्प्राण एवैकधा भवति ' इत्यादौ प्राणशब्द: ब्रह्मपर एव, ' कोह्येवान्यात्क.प्राण्यात् । यदेष आकाश आनन्दो न स्यात् ' इत्यादौ प्राणस्य परमात्माधीनत्वमपि श्रूयते, एव प्राणशब्दस्य परमात्मपरत्वे सभवति अन्नादित्यवाक्ययोरिव प्राणवाक्यस्य गौणार्थकल्पन नयुक्तम् । तत्र गत्यन्तरविरहात्तथाऽऽश्रयणम् अत्रतु नतथा, अतः सर्वभूतोत्पादकत्वादिलिङ्गस्य अनन्यथासिद्धस्य मुख्यप्राणपरिग्रहे बाधकस्य सत्त्वात् यौगिकएवाय प्राणशब्दः इत्यभिप्रेत्याह—प्राणयति इत्यादि ॥

### प्राणाधिकरणं समाप्तम्

अथ वेदान्तसारे आकाशाधिकरणं, प्राणाधिकरणं च,

## सू.२३—आकाशस्तल्लिंगात् (१.१.८]

## सू.२४–अत एव प्राणः (१.१.९)

'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति' (छा.१.९.१) 'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमेवाभ्युज्जिहते' (१.११.५) इत्यादौ 'सदेव सोम्येदमग्र आसीत्' इत्यादिना सामान्येन निर्दिष्टस्य जगत्कारणस्य भूताकाशप्राणसहचारिजीववाचिशब्दाभ्यां विशेषनिर्णयशङ्कायां 'सर्वाणि ह वा इमानि भूतानि' (छा.१.११.५) इति प्रसिद्धवन्निर्देश्यमानात् जगत्कारणत्वादिलिङ्गात् भूताकाशादिजीवाभ्यां अर्थान्तरभूतः परमपुरुष एवात्र आकाशप्राणशब्दनिर्दिष्ट इति निश्चीयते । तत्प्रसिद्धिस्तु—बहुभवनरूपेणानवधिकातिशयानन्दजीवानन्दहेतुत्वविज्ञानमयविलक्षणत्वनिखिलभुवनभयाभयहेतुत्वसर्वलोकसर्वकामेशत्वसर्वपाप्मोदयप्राकृतस्वासाधारणरूपविशिष्टस्य रविकरविकसितपुण्डरीकनयनस्य सर्वज्ञस्य सत्यसङ्कल्पस्य करणाधिपाधिपस्य परमपुरुषस्यैव निखिलजगदेककारणत्वादिति स एव आकाशप्राणशब्दाभ्यां जगत्कारणत्वेनाभिधीयत इति निर्णयो युक्त एव ॥

इति वेदान्तसारः

अथ वेदान्तदीपः

## अत एव प्राणः १-१-९

छान्दोग्ये—'प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता' इति प्रस्तुत्य 'कतमा सा देवतेति प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता' (छा.१.११.४,७) इत्यत्र निखिलजगत्कारणतया प्राणशब्दनिर्दिष्टः किं प्रसिद्धः प्राणः ? उतोक्तलक्षणं ब्रह्मेति संशयः । प्रसिद्धप्राण इति पूर्वपक्षः । कुतः ? सर्वस्य जगतः प्राणायत्तस्थितिदर्शनात् स एव निखिलजगदेककारणतया निर्देशमर्हतीति । राद्धान्तस्तु—शिलाकाष्ठादिष्वचेतनेषु चेतनस्वरूपेषु च प्राणायत्तस्थित्यभावात्, 'सर्वाणि ह वा इमानि भूतानि' (छा.१.११.४) इति प्रसिद्धवन्निर्देशादेव हेतोः प्राणशब्दनिर्दिष्टं परमेव ब्रह्म सूत्रमपि व्याख्यातम् ॥

॥ इति वेदान्तदीपे प्राणाधिकरणं समाप्तम् ॥

अथ अधिकरणसारावली

प्राणायत्तं हि देहादिकमिह विदितं तेन तत्कारणत्वं
श्रुत्युक्तं रूढिशक्त्या सुदृढमिति न तद्व्योमवद्बाधनीयम् ।
तत्र प्राणस्य काष्ठादिषु महिमहते. पूर्ववद्वानुवादात्
आकाशोक्तेरियोक्ते भगवति निखिलप्राणनस्यापि दृष्टेः ॥

नोक्तिं व्याहन्ति लिङ्गं किमपि भवति तु ख्याततत्त्वानुकूलं
शब्दश्चानन्यनिष्ठश्श्रुत इति न परो ज्योतिराद्युक्तिवेद्यः ।
विश्वोत्पत्त्युक्तिभावेऽप्यवगतमिह तल्लिङ्गमित्याक्षिपन्तं
रुन्धेऽथाधिक्रियाभ्यां तदुचितचिदचिद्वर्गवैशिष्ट्ययुक्त्या ॥

॥ प्रा णा धि क र णं स मा प्त म् ॥

अथ ज्योतिरधिकरणम्

श्रीभाष्यम्

अतः परं जगत्कारणत्वव्याप्तेन येनकेनापि निरतिशयोत्कृष्टगुणेन जुष्टं ज्योतिरिन्द्रादिशब्दैरर्थान्तरप्रसिद्धेरप्यधीयमानं परं ब्रह्मैवेत्यभिधीयते—'ज्योतिश्चरणाभिधानात्'—इत्यादिना–

## सू.२५—ज्योतिश्चरणाभिधानात् (१.१.१०)

इदमाम्नायते छान्दोग्ये–'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिः' (छां.३.१३.७) इति

अथ ज्योतिरधिकरणम्

श्रुतप्रकाशिका

वर्तिष्यमाणाधिकरणद्वयस्य पेटिकान्तरत्वमाह— अतः परमिति । वस्त्वन्तरासाधारणैश्शब्दैर्जगत्कारणनिर्दिश्यमानेऽपि कारणत्वाभिधायिनां वाक्यानां विशेषपर्यवसानमुक्तम् । अथ कारणत्वाक्षेपकलिङ्ग(विशेष)वाचिनां वाक्यानां अभिमतविशेषपर्यवसानमुच्यत इत्यवान्तरपेटिकाभेदस्य सङ्गतिश्चेत्यर्थः, ज्योतिश्शब्देनाकाशशब्दस्य सङ्गतिश्च दर्शिता प्राणो वायुविशेषः, आदित्यादिज्योतिस्तेजोविशेषः, अत आकाशप्राणज्योतिषां क्रमो युक्त इति । नन्वाकाशादिशब्दत्रयं परमात्मपरमिति सिद्धान्तितम् । सत्यं तथाऽपि प्रसिद्ध्यनुसारिण्या पूर्वपक्षदृष्ट्या क्रमयुक्तोक्तिः येनकेनापीति न लिङ्गत्वं विवक्षितम्, किंतूदाहृतविषयवाक्यप्रतिपन्नोऽयमेव गुणः कारणत्वाक्षेपक इति गुणविशेषानियम इति भावः । उभयपेटिकयोः अनुयायिनमाकारं दर्शयति अर्थान्तरप्रसिद्धेरपीति ॥

## सू.२५—ज्योतिश्चरणाभिधानात् [१.१.१०].

इदमित्यादि । पृष्ठेषु, उपरितनेषु 'त्रिपादूर्ध्वः' 'तमसोपरिष्टात्' इत्यादिश्रुतिभ्यः व्यष्टिसमष्टिविवक्षया विश्वतः सर्वत इत्युक्तम् । अनुत्तमेषु स्वस्मादन्य उत्तमो नास्तीत्यनुत्तमः । विश्वतः इति भूमिप्रदेशात् सर्वतः इत्यन्तरिक्ष

श्रीभाष्यम्

**स्ववाक्योपात्तपरमात्मव्याप्तलिङ्गविशेषादर्शनात्, परमपुरुषप्रत्यभिज्ञानासम्भवात्,**

श्रुतप्रकाशिका

त्यभिज्ञानात् पुरुषोत्तम इत्युक्तम्, 'अथ यदतःपरोदिवो ज्योतिर्दीप्यते' इत्यत्र ज्योतिश्शब्दः किं प्रसिद्धादित्यादिज्योतिर्विषयः? उत परमात्मपर इति। तदर्थं पूर्ववाक्ये द्युसम्बन्धितया निर्दिष्टस्य परमात्मनः किमत्र प्रत्यभिज्ञान नास्ति, उतास्ति तदर्थं कौक्षेयज्योतिरैक्योपदेशः उपदेशभेदश्च किं प्रत्यभिज्ञाविरोधिनौ, उताविरोधिनौ, पूर्वस्मिन्ब्राह्मणवाक्ये गायत्रीशब्दः किं प्रसिद्धगायत्रीपरः,? उत नेति विचारः, यदा विरोधिनौ, गायत्रीशब्दार्थश्च प्रसिद्धः तदा तास्मिन्वाक्ये परमात्मप्रत्यभिज्ञाभावात् द्युसम्बन्धिज्योतिः प्रसिद्धादित्यादिज्योतिरेवेति पूर्वपक्षे फलफलिभावः। यदा कौक्षेयज्योतिरैक्योपदेशो विभक्तिभेदश्च न परप्रत्यभिज्ञाविरोधिनौ; गायत्रीशब्दश्च ब्रह्मपरः, तदा पूर्ववाक्योक्तद्युसम्बन्धि परमात्मन इह प्रत्यभिज्ञानाद्दिवःपरत्वेनैवोक्तज्योतिः परमात्मैवेति फलफलिभावः॥

ननु कथं स्ववाक्ये परमात्मलिङ्गाभावः निरतिशयदीप्तियोगाक्षिप्त कारणत्वंहि परमात्मलिङ्गम्, नैवम् नहि जगत्कारणत्वमात्रं परमात्मलिङ्गं अपितु कारणत्वविशेष एव तल्लिङ्गं, कृत्स्नचेतनाचेतनप्रति सर्वविधकारणंहि परमात्मा पूर्वाधिकरणद्वयविषयवाक्येऽपि 'सर्वाणि ह्वा इमानि भूतानि' इति समस्तचेतनाचेतनप्रति कारणत्वरूप परमात्मलिङ्गं स्ववाक्यस्थम्। न तथाऽत्र परमात्मलिङ्गभूतकारणत्वविशेषः स्ववाक्ये दृश्यत इत्यभिप्रायेणोक्तं **परमात्मव्याप्तलिङ्गविशेषादर्शनादिति**। ततःकिमित्यत्राह—**परमपुरुषेति**। हेत्वन्तरमाह—**कौक्षेयेति**। प्राकृततेजस्तत्त्वकार्यतया आदित्यादेःकौक्षेयज्योतिषश्चैकजातीयतया सामानाधिकरण्यनिर्दे(शैनै)शऐ)क्योपदेशः कौक्षेयज्योतिषश्च भौतिकत्वं उष्णत्वघोषगुणकत्वामननात्सिद्धम्, 'तस्यैषा दृष्टिर्यत्रैतदस्मिन्शरीरे संस्पर्शेनोष्णिमानं विजानाति तस्यैषा श्रुतिर्यत्रैतत्कर्णावपिगृह्य निनदमिव नदथुमिवाग्नेरिव ज्वलतः उपशृणोति' इतिहि श्रूयते, **प्रसिद्धमेव ज्योतिरिति**। आदित्यादौ ज्योतिश्शब्दस्य प्रसिद्धत्वादिति भावः। एव स्ववाक्येत्यादिना कौक्षेयेत्यादिना च स्ववाक्ये विरोधिलिङ्गाभावात्पानुकूलसद्भावौ दर्शितौ भवतः 'दीप्यत' इति श्रूयमाणा दीप्तिश्च रूपवत्पदार्थनिष्ठा भवतीत्यभिप्रेतम् अस्यापि हेतो.परिहरिष्यमाणत्वात्—सर्वगतस्य ब्रह्मणो द्युमर्यादत्वासम्भवस्तु परैः पूर्वपक्षहेतुतयोक्तो भाष्येऽनादृतः भौतिकज्योतिषोऽपि द्युमर्यादत्वासम्भवात् सर्वत्र भौतिकानि ज्योतींषिहि विद्यन्ते उपासनार्थप्रदेशविशेषपरिग्रहस्तु ब्रह्मणोऽप्युपपद्यते। लोकेऽधिकाधिकरणबहुत्वप्रतीतिश्च सर्वत्र सतो ब्रह्मण उपपन्ना, तदेतद्दृष्टं च श्रुतं च इत्युपासीत चक्षुष्यश्श्रुतो भवति यएववेदेत्य-

गूढार्थसङ्ग्रहः

'नाराणामयनं यस्मात्तस्मान्नारायणस्स्मृतः' इति ब्रह्मवैवर्तात्।

नारायणाय नम इत्ययमेव सत्यः संसारघोरविषसंहरणाय मन्त्रः।
शृण्वन्तु भव्यमतयो यतयोऽस्तरागाउच्चैस्तरामुपदिशाम्यहमूर्ध्वबाहुः॥

इति नारसिंहपुराणे (१८.अध्याय.३०.श्लोक) 'नयतीति नरःप्रोक्तः परमात्मा सनातनः' इति व्यासवचनम्, इति च उक्तम्। अत्र 'नारायणाय नम इत्ययमेव मन्त्रः' इत्यत्र मन्त्रः 'अष्टाक्षरं प्रवक्ष्यामि मन्त्राणां मन्त्रमुत्तमम्। यं जपन्मुच्यते मर्त्यो जन्मसंसारबन्धनात्॥ ॐ नमो नारायणायेति मन्त्रस्सर्वार्थसाधकः।' इत्युपक्रमे तत्रैवोक्तम्। 'यत्प्रयत्न

## श्रीभाष्यम्

कौक्षेयज्योतिषैक्योपदेशाच्च प्रसिद्धमेव ज्योतिः कारणत्वव्याप्तनिरतिशयदीप्तियोगाज्जगत्कारणं ब्रह्मेति ॥

एवं प्राप्ते प्रचक्ष्महे–'ज्योतिश्चरणाभिधानात्' द्युसंबन्धितया निर्दिष्टं निरतिशयदीप्तियुक्तं ज्योतिः परमपुरुष एव। कुतः? 'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' (छां ३.१२.६) इत्यस्यैव द्युसम्बन्धिनश्चरणत्वेन सर्वभूतानामभिधानात् ॥

## श्रुतप्रकाशिका

स्वफलत्वश्रवणं तु ब्रह्मविदामपि विद्यानुकूलैकफलप्रदत्वात् परमात्मन उपपद्यते एवमेतेषां हेतूनामधिकरणान्तरपरिहार्यत्वादमी पूर्वपक्षेऽनादृताः ॥

एवंप्राप्तइति। चरणत्वेन सर्वभूताभिधानं कारणस्य जीववैलक्षण्यनिश्चायकं जीवमात्रस्य सर्वभूतपादवत्त्वानुपपत्तेः तत एव पुरुषसूक्तप्रत्यभिज्ञापकतया देवताविशेषनिश्चयः। तद्द्वारा दीप्तियोगस्य भौतिकज्योतिष्टु हेतुतापरिहारश्च भवति

## गूढार्थसङ्ग्रहः

भिसंविशन्ति' इति श्रुतेः नारायणनामनिर्वचनसाधनतयोपन्यासेन 'यतो वा' इतिश्रुतेः जगत्कारणीभूतनारायणपरत्वमेवेति शङ्कराचार्यैस्सूचितम्। 'नारायणपरा ज्योतिः' इत्यत्र विद्यारण्यभाष्यम् 'नारायण.पर–नारायणपरः' इति पुराणेषु नारायणशब्देन व्यवह्रियमाणः य.परमेश्वरः सएव परमुत्कृष्ट सत्यज्ञानानन्दादिवाक्यैः प्रतिपाद्यस्य ब्रह्मणस्तत्वं अतो नारायणःपर एवा मा नान्यपरो मूर्तिविशेषः तथा परो ज्योतिः यदेतदुत्कृष्ट ज्योतिः। छान्दोग्ये 'परंज्योतिरुपसंपद्यते' इत्याम्नानम् तदपि नारायण एव तस्मान्नारायणः परमात्मा इति। आरम्भभाष्ये 'अमितभा' इत्यनेन 'नतत्र सूर्यो भाति–तमेव भान्तमनुभाति सर्वम्' (कठ.श्वे.) इति श्रुतिर्विग्रहपरेति व्यञ्जितम्। 'दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता यदिभास्सदृशी स्यात्सा भासस्तस्य महात्मनः॥' इति गीतावचनमेतदुपबृंहणम्। 'भासस्तस्ये'ति गीतायां 'तस्य भासा' इति श्रुतिर्विवक्षिता इद च गीतावचनं विग्रहपरमिति सर्वसमतम्। अनेन गीतावचनेन 'तस्य भासा' इति श्रुतौ विग्रहभा एव विवक्षितेति गीतावचनेन निर्धारितं भवति 'भान्तं, तस्यभासा' इति निर्विशेषपरादे नसंभवतीति पूर्वमेवोपपादितम् ॥

यदिदमस्मिन्नन्तःपुरुषे इति वाक्याशयेनाह——कौक्षेयज्योतिषेत्यादि। प्रसिद्धमेव ज्योतिरिति। 'ज्योतिरसौ दिवाकरे' इत्यादिमेदिनीकोशेन आदित्ये प्रसिद्धो ज्योतिश्शब्दः। एवं प्राप्तइति। पूर्वोत्तरखण्डयोरेकार्थकत्वं न संभवतीति उत्तरत्र सूत्रद्वयेन सूच्यते। 'गायत्रीवा' इति पूर्वखण्डोपक्रमः। 'पादोऽस्य विश्वा भूतानि' इति श्रुतौ 'त्रिपादस्यामृतं दिवि' इत्यत्र दिवि वर्तमानत्वं प्रतिपादितम्। तत्रतु 'परोदिवः' इति निर्देशेन द्युसम्बन्धशून्यमेव प्रतीयत इति खण्डयोरेकार्थकत्वासम्भवः पूर्वपक्ष्यभिमतः विवक्षितः। अस्मिन्खण्डे जगत्कारणत्वमपि नप्रतिपादितम्। कारणत्वव्याप्तलिङ्गमपि नास्ति। खण्डेनास्मिन्परमात्मत्वसाधकलिङ्गाभावेऽपि (छा.१२.१३) खण्डयोर्द्वयोरेकार्थत्वेन पूर्वखण्डोक्तसर्वभूतचरणत्व प्रसिद्धादित्यादिव्यावर्तकमित्याह–ज्योतिश्चरणाभिधानादिति ॥

निरतिशयदीप्तियुक्तंज्योतिरिति। 'अथ यदतः परोदिवो ज्योतिर्दीप्यत'इत्यत्र निरतिशयज्योतिर्विवक्षितमिति भावः। 'अथ यदतः परोदिवो ज्योतिः' इत्यत्र दिवः पर इति निर्देशेन 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतदिवि' इत्यत्र द्युसम्बन्धित्वेन पूर्वखण्डोक्त एवार्थः अत्र विवक्षित इति श्रुतौ प्रतीयते। तत्र च 'पादोऽस्य सर्वा भूतानि' इत्यत्र

## श्रुतप्रकाशिका

पुरुषसूक्तं कस्मात्सूत्रकारेण न निरूपितम्। संशयहेत्वभावादिति ब्रूमः सन्दिग्धेहि न्यायः प्रवर्तते पुरुषसूक्ते च ज्योतिरशब्दवच्छन्दोऽभिधानादिकं प्रधानक्षेत्रज्ञसाधारणलिङ्गान्तरं वा क्वचिन्न दृश्यते सर्वभूतपादत्वादिधर्माश्च तयोरसम्भाविताः। तर्हि चिदचिद्विलक्षणकारणास्तित्वविषयस्य प्रथमपादस्यानारम्भस्स्यादिति चेन्न बहूनां वेदान्तवाक्यानां प्रकृतिपुरुषकारणमात्रत्वादित्वे तद्विरोधेनात्रापि संशयप्रसङ्गात् तेषां भूयसां बलीयस्तया विपरीतनिश्चयप्रसङ्गाच्च, तद्व्युदासायारम्भणीयत्वात् तेषु च प्रकृतिपुरुषविलक्षणविषयतया न्यायतो निश्चितेषु संशयविपर्ययाभावात् पुरुषसूक्तस्य चिदचिद्विलक्षणे परब्रह्मणि प्रामाण्यमप्रतिभटमवतिष्ठते। अतो न तत्र निरूपणीयं तस्य तत्परत्वं तत्रापि महापुरुषशब्दे देवताविशेषविषयत्वमप्यविगीतम् अनेकोपपत्तिसिद्धं च,

तथाहि इदं तावत् 'अग्निमीळे पुरोहितम्' 'अभित्वा शूरनोनुमः' 'स्तौमीन्द्रंनाथितो जोहवीमि स्तौम्यग्निंनाथितो जोहवीमि' इत्यादिवदन्यस्तववाक्यं न स्तुतिपरत्वमवगमयति 'अर्हन्बिभर्षि सायकानि धन्वेत्याह, स्तौम्येवैनमेतत्' 'ततो देवा ऊर्ध्वबाहवो रुद्रमस्तुवन्' इत्यादेरिव वाक्यान्तरेणास्य स्तुतिपरत्वं नावगम्यते नापि स्तुतिपरत्वे लिङ्गमुपलभ्यते नहि 'नमस्ते अस्तु मामाहिंसीः' 'देहिमे ददामिते' इतिवन्नमस्कारोऽनिष्टनिवृत्तीष्टलाभप्रार्थना वा दृश्यते 'विश्वस्मादिन्द्र उत्तर' 'तस्य वज्रमादाय शीर्षाण्यच्छिनत्, तं भूतान्यभ्यक्रोशन्ब्रह्महन्निति' 'अग्निस्सर्वादेवताः' 'अग्निं वै जातं पाप्मा जग्राह' इत्यादिभिरग्नीन्द्रादीनामिव प्रतिपन्नस्य प्रकर्षस्य बाधकश्च न दृश्यते नहि, परमपुरुषस्य कार्यत्वकर्मवश्यत्वादिकं क्वचिदनन्यपरवाक्येनावगम्यते 'आकाशोहवै नामरूपयोर्निर्वहिता' 'यतो वा इमानि' इत्यादिवाक्यानामिवानुवादरूपतया नास्य साकाङ्क्षत्वं प्रतीयते 'तदेषाभ्युक्ता'

## गूढार्थसंग्रहः

सर्वभूतानां पादत्वं द्युसम्बन्धिनः प्रतिपादितम्। सर्वभूतपादत्वमादित्यादिज्योतिषः न सम्भवति। श्रुतिघटकपादशब्दं विहाय चरणशब्दनिर्देशेन आदित्यादिव्यावृत्तिरिति सूत्रकारेण अयमर्थः सूचितः। 'चरगतिभक्षणयो' इति धातुः 'पदलृगतौ' इति पाद इत्यत्र धातुः। अत्र दिवि इति द्युसम्बन्धिनः गमनं भक्षणं चरणशब्दे विवक्षितम्। 'दिवि' इति निर्देशेन 'अस्माच्छरीरात्समुत्थाय परंज्योति' इत्यत्र परत्वेन वक्ष्यमाणं ज्योतिरेवात्र विवक्षितमिति प्रतीयते। चरणशब्दयोगेन सर्वभूतानां गमनसम्बन्धित्वं भक्षणसम्बन्धित्वं विवक्षितमिति ज्ञायते। तेन दिवि विद्यमानं मुक्तप्राप्यं ज्योतिः प्रकृतिमण्डलादूर्ध्वस्थानवर्त्येव विवक्षितम्। द्युशब्दस्य 'द्युतदीप्तौ' 'द्युअभिगमने' 'दिवुक्रीडाविजिगीषा' इतिधातुत्रयेण निष्पत्तिः (अ.सु) प्रदर्शिता। तत्र 'द्युअभिगमने' इतिधातुना मुक्तप्राप्यत्वं 'परंज्योतिरुपसम्पद्य' इत्यादिना वक्ष्यमाणं 'द्युतदीप्तौ' 'दिवुक्रीडा—द्युति' इति धातुद्वयेन दीप्तिमत्त्वं च बोधितम्। 'दिवि' इत्यत्र दीप्तेर्विवक्षितत्वे 'दीप्यते' इति धातुना 'अत परः' इत्यनेन च प्रसिद्धज्योतिःप्रवर्तकनिरतिशयदीप्तिर्बोधिता। द्युधातोः क्रीडार्थकत्वेन क्रीडया सर्वभूतचरणमित्यपि सूचितम्। सूत्रे चरधातुयोगेन 'तत्सृष्ट्वा, तदेवानुप्राविशत्' इत्यादिश्रुत्युक्तान्तर्यामितयाऽवस्थानं 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः' इति श्रुत्युक्तं भक्षणं संहाररूपं 'पादोऽस्य सर्वा भूतानि' इतिश्रुतौ सूचयति सूत्रकारः, सृष्टिकालिकान्तर्यामित्वप्रतिपादनेन सृष्टिस्सिद्ध्यति। तेन सर्वभूतानां सृष्टिसंहारविषयत्वं श्रुतौ विवक्षितमित्यपि सिद्ध्यति। श्रुतौ विभागेन दिवः सृष्टिसंहारविषयत्वं नास्तीति सूचितं भवति। एतेन सृष्टिसंहाराविषयत्वं 'दिवी'त्यत्र विवक्षितम्। तेनोक्तोभयाविषयविषयदेशद्वयं श्रुतौ विवक्षितमित्यपि बोध्यम्॥

### श्रीभाष्यम्

इत्यस्या ऋचोऽपि छन्दोविषयत्वान्नात्र परमपुरुषाभिधानमितिचेत्-तन्न। तथा (चेतोऽर्पण निगमात्) न गायत्रीशब्देन छन्दोमात्रमिहाभिधीयते, छन्दोमात्रस्य सर्वात्मकत्वानुपपत्तेः। अपितु ब्रह्मण एव गायत्रीचेतोर्पणमिह निगम्यते ब्रह्मणि गायत्रीसादृश्यानुसन्धानं फलायोपदिश्यत इत्यर्थः। सम्भवति च 'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि'

### श्रुतप्रकाशिका

तन्नेति। छन्दोऽभिधानं नेत्यर्थः। तथाचेतोऽर्पणनिगमात् इति स्वाभिमतनिर्वाहं वदता सूत्रकारेणाभिप्रेता छन्दोमात्र-परत्वानुपपत्तिमाह-गायत्रीति। कुत इत्यत्राह-छन्दोमात्रस्येति। पूर्वसूत्रे 'चरणाभिधानात्' इति स्वपक्षसाधकतया कण्ठोक्तस्य हेतोः पूर्वपक्षेऽनुपपत्तिरिति सूत्रकाराभिप्रेतेति भावः। ननु गायत्र्या ब्रह्मदृष्टिरिति दृष्टिविशेषणभूत ब्रह्मणश्च-रणाभिधानोपपत्तिरितिचेन्न 'मनोब्रह्म' इतिवद्दृष्टिविशेषणभूतब्रह्मवाचिपदसामानाधिकरण्याभावात। दृष्टिविधानाभ्यु-पगमेऽपि 'तावान्' इति मन्त्रस्य दृष्टिविशेषणब्रह्मपरत्वेनोत्तरवाक्ये ब्रह्मप्रत्यभिज्ञानोपपत्तस्तदभ्युपगमवैयर्थ्यात् अतो गायत्र्या ब्रह्मदृष्टिश्चोदयितुरनभिमता॥

यादवप्रकाशैस्तु-'गायत्रीवा' इत्यादिब्राह्मणोक्तसर्वभूतवाक्पृथिवीशरीरहृदयप्राणात्मकत्वाभिधानेन छन्दोमात्र-मिति व्याख्यातम् ततोपीदमुचितं अश्रुतं हेतु कल्पयित्वा तदनुपपत्त्या छन्दःपरत्वप्रतिक्षेपादपि पूर्वसूत्रश्रुतहेतावनुपपत्त्या तत्प्रतिक्षेपोपपत्तेः। स्ववाक्यस्थहेतुविवक्षा न्याय्येतिचेत् सत्यं सतु हेतुरनन्तरसूत्रे विवक्षितः, मन्त्रवर्णोक्तपादत्वं त्वत्र विवक्षितमितिचेन्न, स्वपक्षसाधनाय तत्पूर्वसूत्रे कण्ठोक्तत्वात्तच्छङ्कापरिहाराय तत्त्यत्त्र एवैवाभिप्रेतत्वाश्रयणोपपत्ते कचि-दुक्तस्य ह्यन्यत्रोपजीव्यत्वं न्याय्यम् अन्यत्रानुक्तस्य च क्वचिदुक्तिरपेक्षिता साचेत्सिद्धवत् तद्गुणो निर्वाहो न्याय्यः-एवं छन्दःपरत्वेऽनुपपन्नेसति तस्य वाक्यस्य कोऽर्थ इत्यत्राह-अपित्विति। चेतोऽर्पणशब्द निगमशब्द च विवृण्वन् कस्मिन्किमर्थमित्याकाङ्क्षा च पूरयति ब्रह्मणीति। अनुसन्धानोपदेशशब्दाभ्यां चेतोऽर्पणनिगमशब्दौ विवृतौ। केनाकारेण सादृश्यमित्यत्राह-सम्भवतिचेति। गायत्रीसादृश्यं चतुष्पात्त्वलक्षणम्। चतुष्पात्त्वमेवानुसन्धेयम् ननिह नानुसन्धेयं फलं च श्रूयते। न 'पूर्णामप्रवर्तिनीं श्रियं लभते यएवंवेद' इति श्रवणात् पूर्णयाम् अपरिच्छिन्नं, अचलं स्थिरं अन-न्तस्थिरा च श्रीः मुक्तैश्वर्यम्॥

### गूढार्थसंग्रह

नुपपत्तेरिति। 'तावानस्य' इत्यतःपूर्वमेव 'गायत्रीवाइदं' इत्युपक्रमवाक्यम्। अतः उपक्रमोक्तत्वेन सर्वात्मत्वानुसारेणैवार्थ निर्णय इति भावः, उपक्रमएव सर्वात्मकत्वमुक्तम्। अजहल्लक्षणया गायत्र्यवच्छिन्नब्रह्मपरत्वाङ्गीकारे सर्वात्मकत्वं नघटते उपलक्षितरूपेणैव सर्वात्मकत्वं वाच्यम्; उपलक्षितेऽपि जहल्लक्षणैव वाच्या नत्वजहल्लक्षणा। 'गायत्रीवा इदंसर्वम्' इत्यत्र सर्वात्मकत्वं गायत्रीशब्दादुपस्थित रूपेणैव वाच्यम् गायत्रीशब्दस्य मुख्यार्थकत्वं पूर्वपक्षहेतु 'छन्दोभिधानात्' इति सूत्रे छन्दश्शब्दनिर्देशः कुतइति विमर्शनीयम्। गायत्रीछन्दसः छन्दश्शब्दे प्रसिद्धस्य गायत्रीशब्देन ग्रहणमिति तस्य सर्वात्मकत्वमनुपपन्नमिति समाधानम्। एवं च चरणाभिधानं पूर्वसूत्रे चरणाभिधानं हेतुरुक्तः पूर्वसूत्रोक्तचरणविशिष्टत्वं श्रुत्युक्तस्य (पादोऽस्येति) ब्रह्मण्युपादानानुगुण एव हेतुर्वाच्य ब्रह्मण्युपपादनं च गायत्र्यासादृश्येनैव कार्यम्। गायत्रीसा-दृश्यं च 'छन्दोविचिति' सूत्रेषु 'अथ चतुष्पात्कृतुभिः' इति पिङ्गलनागेन सूत्रकृता गायत्र्याख्यछन्दसः चतुष्पात्त्व

## गूढार्थसंग्रह

स्योक्तया ' आर्चं छन्दोगायत्रंचतुष्पाद्भवति ऋतुभिरक्षरैः पादैः तद्यथा इन्द्रश्शचीपतिः' इत्यादिभाष्योक्तरीत्यैवोपपादनीयम् । अत्र शौनकादिस्मरणमपि वर्तते इति भास्करभाष्ये व्यक्तम् । 'तावानस्य महिमा ' इत्यस्य विष्णुधर्मोत्तरब्रह्मवैवर्तवचनानुसारेण अमिथ्याभूतरूपस्य भामतीपञ्चपादिकाऽदिशङ्कितस्य वृत्तिकारसमस्तस्यार्थस्य पूर्वमेवाभिधानेन मिथ्याभूतार्थविषयकत्व चरणाभिधानादिति हेतु वदतो सूत्रकृतो नसमतम् । अतः एतत्तात्पर्यं (श)भाष्ये 'अपरआह' इति यत्प्रदर्शितं तदेव युक्तम् । यथा ' अपरआह ' साक्षादेव गायत्रीशब्देन ब्रह्म प्रतिपाद्यते सख्यासामान्यात् यथा गायत्री चतुष्पदा षडक्षरैःपादैः तथा ब्रह्म चतुष्पात् तथाऽन्यत्रापि छन्दोऽभिधायी शब्दोऽर्थान्तरे सख्यासामान्यात् प्रयुज्यमानो दृश्यते तद्यथा ' तेवा एते पञ्चान्ये पञ्चान्ये दशसन्तस्तत्कृतम्' इत्युपक्रम्य ' सैषा विराडन्नादि ' (छा.४.३.८) इत्यस्मिन्पक्षे ब्रह्मैवाभिहितमिति न छन्दोऽभिधानम् इति । ' साक्षादेव ' इत्यत्र साक्षाच्छब्दस्य गायत्र्यवाच्छब्रह्मपरत्वे उपरक्षित ब्रह्मणि विशेषणांश विहाय ब्रह्मण्यन्वय इति गायत्रीशब्दार्थस्वारस्यम् । सहपरत्वे क्वापि विशेषणांशे अन्वयाभावादिशेष्यांशे अन्वयो युक्त इत्यर्थःसूचितः । अत्र पुरुषसूक्तैकार्थ्यं स्पष्टम् । पुरुषसूक्तस्य मोक्षधर्मे नारायणाख्याने ब्रह्मरुद्रसंवादे जीवभिन्नब्रह्मपरत्व स्पष्टं सूत्रकृतोक्तं नारायणाख्याने वासुदेवादिमूर्तिचतुष्टयं उपक्रमे निरूप्य गीतायाः सग्रहरूपत्व पञ्चरात्रस्य विस्तररूपमभिधाय ' चतुर्विभक्तः पुरुषः ' इत्युपसहारेण तन्मध्यगतपुरुषसूक्तवाक्येऽपि चतुर्विभक्तएव पुरुषो विवक्षित इति निर्मत्सराणां विदुषा स्फुटम् । एतद्विस्तर. हयशिरोरत्नभूषणदीधितादवसेयः । वेदस्य मिथ्याभूतार्थकत्वकल्पनमनुचितमित्यर्थवादाधिकरणतात्सिद्धिपेटिकयोर्निरूपणेन वेदे परसमताध्यासासम्भवः इति भट्टपादैर्व्यवस्थापनपूर्वक ' सिंहो देवदत्त' इत्यस्यापि सिंहसदृशार्थकत्व निरूपितमिति अत्र गायत्रीसदृशार्थक व समञ्जसमेव । 'वर ह गावोऽनुधावन्ति' इत्यत्र औत्पत्तिकगवि द्विपात्वमिति वाचस्पतिशङ्का नैतन्निर्णयविरोधिनी औत्पत्तिकगवि द्विपात्व तत्रेति शङ्का, अत्र गायत्र्याः चतुष्पात्त्वमनौपचारिकार्थकलितप्रमाणसिद्धत्वेः तात्त्विकमेवेति ब्रह्मविद्याऽऽभरणन्यायरक्षामण्युक्तदोषस्य नावसरः । 'सर्वंखल्विदं ब्रह्मतज्जलान्' इत्यत्र कार्यानुगतब्रह्म (श)भाष्योक्तरीत्या नैव विवक्षितम् । 'तज्जलान्' इति हेतुना उपादानोपादेयभावनिबन्धनमेव सामानाधिकरण्यं समानाधिकरणवाक्येषु सर्वत्र विवक्षितमित्येवपर 'सर्वंखलु' इतिवाक्यमिति पूर्वमेव निरूपितम्

उत्तराध्याय एव ' सैषा विराड् ' इति वाक्ये सादृश्यनिबन्धन सामानाधिकरण्यमिति स्फुटम् । ' गायत्री वा इदं सर्वम् ' इति तत्पूर्वाध्यायवाक्येऽपि ' पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ' इति चतुरसङ्ख्याप्रतिपादनेन सादृश्यनिबन्धनमेव श्रुतौ विवक्षितमिति निश्चीयते । अतः (श) भाष्ये 'अपर आह' इत्युक्तवृत्तिकारमतमेव युक्तम् । ' अपर आह ' इतिपक्षे (श) भाष्ये सवर्गविद्यावाक्य यदुक्त 'ते वा' इत्यादि तदेव दर्शयति । तेन ' अपरआह ' इति पक्षएव वृत्तिकारसम्मतस्समीचीन इति सूचयति ॥

एतत्पूर्वश्रुतिः 'सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाऽभ्यनूक्तम्' इति । तत्र चतुष्पदत्व गायत्र्याः वर्णपट्कक्रमेण स्पष्टमभिहितम् । ' तावानस्य महिमा अतो ज्यायाँश्च पूरुषः ' इत्यत्र अतः महिमत्वेन ज्यायस्त्वनिर्णयः पूर्ववाक्य गायत्र्या. चतुष्पदत्वोपपादनेन ' तावानस्य ' इ युत्तरवाक्येऽपि चतुष्पद व तात्त्विकमेव श्रुतिक्रमपर्यालोचनायां गायत्रीसादृश्यमेव स्फुट प्रतीयते । ' पादोऽस्य सर्वा भूतानि ' इति मन्त्रे ' गायत्री वा इदसर्वम् ' इत्युक्तसार्वात्म्य गायत्रीसदृशब्रह्मणः सम्यङ्निरूपित भवति । गायत्र्याश्च नेद सर्वात्मकत्व सम्भवति । सर्वभूतानामेकपादत्वस्य सार्वात्म्योपपादकत्वासम्भवात् । दिवि इत्यस्य अमृतत्वस्य त्रिपात्त्वस्य च सर्वथाऽसम्भवात् । ' अतो ज्यायाँश्च पुरुषः ' इत्यत्र सूत्रोक्तचरणवत्त्व पुरुषस्य प्रतिपादितम् सूत्रेतु ज्योतिः पदस्थित ' ज्योतिश्चरणाभिधानात् ' इति सूत्रतः ज्योतिःपद पुरुषशब्दयोरैकार्थ्यं विवक्षितमिति स्फुटम् ॥

## श्रुतप्रकाशिका

ननु गायत्रीज्योतिषोरभेदो नोपपद्यते, गायत्र्याः 'यद्वैतद्ब्रह्मेति इदं वाव तद्योऽयं बहिर्धा पुरुषादाकाशः यो वै स बहिर्धा पुरुषादाकाशोऽयं वाव सः योऽयमन्तःपुरुष आकाशो यो वै सोऽन्तःपुरुष आकाशोऽयं वाव सः योऽयमन्तर्हृदय आकाशस्तदेतत्पूर्णमप्रवर्ति' इति हि श्रुतौ । अतो न गायत्र्याः सहदयानुसन्धानप्रत्यभिज्ञेति—उच्यते ; सर्वोऽपरिच्छिन्नोऽपि ब्रह्मणः परिच्छिन्नैः पदार्थैरनुसन्धानोपदेशस्य उपासनार्थत्वात् न वैयर्थ्यात् । प्रकरणे तस्य पञ्चभूतविज्ञानाय, गायत्रीछन्दोरूपस्य चतुष्पात्त्वस्य तुल्यत्वेन प्रतीयते । तत्र भूतपृथिवीशरीरहृदयैश्चतुष्पात्त्वेऽभिहिते ब्रह्मणोऽपूर्णं यादिरूपं पञ्चकल्पनाभूतत्वयं पूर्णं गायत्र्या सगुणकल्पैश्चतुष्पाद्ब्रह्म उपासनं विधीयत इति 'त्रिपदा गायत्री' इति हि श्रुतिः तत्कथं चतुष्पात्त्वमित्यत आह—चतुष्पदा चेति । गायत्रीछन्दसः मुख्यार्थपरित्यागः कथमिति शङ्कायां 'तथा

## गूढार्थसङ्ग्रहः

एतेन 'अस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमःपुरुषः' इति श्रुतौ ज्योतिःशब्दपुरुषशब्दयोरप्यैकार्थ्यं बोधितं भवति । ज्योतिश्च उपसम्पत्तव्यम् उपसम्पत्तव्यज्योतिषः पूरुषत्वमुक्तया 'स उत्तमःपुरुषः' इत्यत्र पुरुषे जीवाभेदो नैव विवक्षित इत्यपि निर्णीयते । तेन जीवभिन्नज्योतिरेवोपसम्पत्तव्यं दिव्यादिपदैरत्र वाक्ये ऽपि विवक्षितम् । तेन अतो ज्यायाँश्च पूरुषः' इत्यत्र महिमवत्त्वेनैव पुरुषेऽप्यायस्त्वं विवक्षितम् । इदं च वाक्यं एकपादत्रिपादवत्त्वाभ्यामुत्तरवाक्ये वक्ष्यमाणाभ्यां महिमवत्त्वपरम् । त्रिपादस्यामृतं दिवि' इत्यत्र अमृतशब्देन पुरुषस्योपसम्पत्तव्यत्वमपि बोधितम् । अयमर्थः निर्मत्सराणां स्फुटः । एवं च 'अतः विकारजातात्पुरुषस्य परमार्थत्वेन ज्यायस्त्वम्' इति (शं.उ) भाष्योक्तं नैव युक्तमिति सिद्ध्यति । पुरुषशब्दार्थस्य तैरेवान्यत्र निरस्तत्वात्मत्वाभावात्, सर्वशरीरित्वं बहुप्रदत्वं, सर्वपापदाहकत्वं सर्वकारणत्वं चेत्येते पुरुषपदार्थाः प्रागेव निरूपिताः । अयमर्थस्तत्त्वविवेचनप्रज्ञावादादेव सङ्गच्छते । छान्दोग्यश्रुत्योरुभयोरैकार्थ्यस्य सूत्रसिद्धतया उपसम्पत्तव्यपुरुषस्यैव 'अतो ज्यायाँश्च पूरुषः' इत्यत्रोपसम्पत्तव्यत्वसिद्ध्या उभयोर्भिन्नार्थकत्व(सगुण निर्गुणरूप)वादिमते 'सर्वाणि भूतानि' अस्यैकदेशः यथा चतुष्पदादुक्तात् पदार्थात् एकपादपरिमितं वस्तु तस्मादल्पं भवति तद्वत् प्रपञ्चोऽप्यल्प इति द्योतनाय पादत्वकल्पनम् । अस्य परमात्मनो दिवि सत्यलोकोपरिभागे त्रिपात् ब्रह्मविष्णुशिवात्मनाऽभिव्यक्तस्वरूपं अमृतात्मकमस्तीति मन्त्रार्थः' इति (ब्र.वि.आ) उक्तिः अभिनिवेशमूलैव । 'अस्माच्छरीरात्समुत्थाय' इति श्रुतौ समुत्थाय, उपसम्पद्य, इत्यादेः परमतेऽस्वारस्यमवर्जनीयमेवेति पूर्वमेव निरूपितम् ॥

अत्र सगुणविद्या 'अस्माच्छरीरात्' इत्यत्र निर्गुणविद्या इति विभागोऽपि परमतः न घटते । 'अस्माच्छरीरात्समुत्थाय' इत्यत्रोत्क्रान्तेः स्फुटतयोत्क्रान्तस्य गतेरवर्जनीयतया गत्यनन्तरमेवोपसम्पत्तिरिति निर्णयस्याप्रकम्प्यतया अत्राप्युपसम्पत्तव्यपुरुषस्यैकस्यैव विवक्षितत्वेन सत्यलोकोपरि ब्रह्मविष्णुशिवरूपेण त्रिपात्त्वकल्पनं श्रुतिपीडनमेव । सत्यलोकादुपरि ब्रह्मणः स्थितेः क्वाप्यप्रसिद्धतया एवं विष्णुशिवयोरपि तत्र स्थितेः प्रमाणासिद्धतया सत्यलोकादुपरि ब्रह्मविष्णुशिवात्मना त्रिपात्त्वेन स्थितिः इति कल्पनाऽभिनिवेशमूलैव । उभयत्राप्येकस्यैव पुरुषस्य उपसम्पत्तव्यत्वात् । अथर्वशिखायां नादार्थस्य पुरुषस्य प्रणवघटकपूर्वाक्षरार्थविष्णुभेदस्योभयत्र विद्युमतीति प्रयोगेण सिद्ध्या पुरुषपदार्थवासुदेवस्यैवोपसम्पत्तव्यत्व ज्योतिःशब्दार्थत्वं च निष्कण्टकं सिद्ध्यतीति परसमतार्थोत्प्रेक्षाया असम्भवात् । पुरुषपदार्थो वासुदेव इति पूर्वमेव निरूपितम् इत्थं च सूत्रकारसिद्धान्तो निष्कण्टकः ॥

## श्रीभाष्यम्

[छां.३.१२.६)इति चतुष्पदो ब्रह्मणश्चतुष्पदया गायत्र्याच सादृश्यम्। चतुष्पदाच गायत्री क्वचिद्दृश्यते। तद्यथा 'इन्द्रश्शचीपति। बलेन पीडितः। दुश्च्यवनो वृषा। समित्सु सासहिः' इति। तथाह्यन्यत्रापि सादृश्याच्छन्दोऽभिधायी शब्दोऽर्थान्तरे प्रयुज्यमानो दृश्यते। यथा संवर्गविद्यायाम्–'ते वा एते पञ्चान्ये पञ्चान्ये दश सम्पद्यन्ते' (छां.४.३.८) इत्यारभ्य 'सैषा विराडन्नात्' (४.३.८) इत्युच्यते॥

इतश्च गायत्रीशब्देन ब्रह्मैवाभिधीयते—

## सू.२७—भूतादिपादव्यपदेशोपपत्तेश्चैवम् (१.१.१०)

### श्रुतप्रकाशिका

हिदर्शनम्' इति सूत्रखण्डं व्याचष्टे तथाह्यन्यत्रापीत्यादिना। वाय्वग्निसूर्यचन्द्रसलिलानि प्राणवाक्चक्षुश्श्रोत्रमनांसि च दशसङ्ख्यत्वाद्विराट् सदृशे सदृशान्तरवाचिशब्दप्रयोगश्श्रुतिसमाधिरित्यर्थः ग्रहात् अन्न च तदात्तिचेत्यन्नात्। ननु ज्योतिर्वाक्ये परमात्मलिङ्गाभावात् आद्यसूत्रं परमात्मपरत्वसमर्थनार्थमिति स्प्रयोजनम्। द्वितीयत्तु किमर्थं? छन्दोमात्रप्रसिद्धस्यापि गायत्रीशब्दस्य परमात्मासाधारणसर्वात्मकत्वलिङ्गबलात् परमात्मविषयत्वं ह्याकाशाधिकरणनयेन सिद्धम्? उच्यते– गायत्रीशब्दस्य स्वार्थप्रहाणेन ब्रह्मपरत्वे चतुष्पात्त्वमविवक्षितं स्यात् तच्चोपादिश्यते। गायत्र्यवच्छिन्नब्रह्मपरत्वे सर्वात्मकत्वमनुपपन्नम् गायत्र्यवच्छिन्नब्रह्मणस्सर्वात्मकत्वोक्तिः स्तुतिरितिचेत् ततोऽपि गायत्र्या एव स्तुतिस्सर्वात्मकत्वोक्तिरिति वरमित्यधिकाशङ्कापरिहारपरं सूत्रं। गायत्रीशब्दस्य तत्सदृशब्रह्मपरत्वाच्चतुष्पात्त्वसर्वात्मकत्वोपपत्तिरिति परिहारः॥

उपक्रमस्थगायत्रीशब्दानुरोधेन मन्त्रगतसर्वात्मकत्वमस्वारस्येन निर्वाह्यं न तु सर्वात्मकत्वानुरोधेनोपक्रमस्थगायत्रीपदास्वारस्यं न्याय्यमिति शङ्कायामुपक्रम एव गायत्रीपरत्वेऽस्वारस्यहानिरुच्यते—

### गूढार्थसंग्रहः

आदित्यादिज्योतिषः भूतादिपादव्यपदेशस्सम्भवतीति अयमादित्यादिव्यावर्तको न भवतीति चरणाभिधानमितिहेतुः प्रथममभिहितः। तत्रादित्यादिज्योतिषि एकपादएव न सम्भवतीति त्रिपादसम्भवस्य का कथा? इत्यादित्यादिज्योतिर्व्यावृत्तिः। पूर्ववाक्ये उक्तहेतुना आदित्यादिव्यावृत्तौ ततोऽपि प्रथमवाक्ये गायत्रीशब्दनिर्देशेन गायत्रीशब्दश्रुत्या प्रबलया गायत्रीछन्दस एव ग्रहणमिति शङ्कायां 'यजमानःप्रस्तरः, आदित्यो यूपः' इत्यादौ यथा सदृशार्थकत्वं तद्वत् अत्रैव गायत्रीसादृश्यस्य श्रुतिवाक्यैरेव बोधनेन संवर्गविद्यायां स्फुटोक्तया च गायत्रीशब्दोपक्रमः नविरुध्यतइति छन्दोऽभिधानात् इतिसूत्रे निर्धारितम्॥

अथ 'छन्दोऽभिधानात्' इतिसूत्रे पूर्वपक्षिणः 'तावानस्य' इत्यतःपूर्वं भूतपृथिवीशरीरहृदयान्यभिधाय 'सैषा चतुष्पदा षड्विधा गायत्री' इत्यत्रोक्तपादचतुष्टयवत्त्वमपि पूर्वोक्तप्रकारेण गायत्रीसादृश्येन ब्रह्मण्येवोपपद्यते न तु छन्दसि। भूतादिपादव्यपदेशस्य गायत्र्यासम्भवे काक्वा सर्वभूतादिपादचतुष्टयसम्भवव्यपदेशस्येत्यभिप्रायेणाह—भूतादिपादव्यपदेशोपपत्तेश्चैवमिति। प्रथमसूत्रे आदित्यादिज्योतिर्व्यावृत्तिर्न सम्भवतीति अयंहेतुर्नोपन्यस्तः गायत्रीछन्दो व्यावृत्तिरसम्भवतीत्यत्राय हेतुरुक्तः। एवमित्यस्य गायत्रीसादृश्येनैव भूतादिपादव्यपदेशः ब्रह्मण्येव न तु गायत्र्यामिति,

## श्रुतप्रकाशिका

'तदेतदृचाभ्यनूक्तम्' इतिवत् स्वोक्तार्थसाक्षित्वेन प्रमाणान्तरानुसन्धापनाय नैवेदमुदाह्रियते 'तदेतदृचाभ्यनूक्तं सावानस्य महिमा' इत्यादिभिः सन्निहितेनोदाहृत व च स्वयमन्यानपेक्षस्य प्रमाणान्तरोपजीव्यत्वं प्रतीयते ।—

इदंपुरुषसूक्तंहि सर्ववेदेषु पठ्यते । ऋतं सत्यं च विख्यातं ऋषिसिंहेन चिन्तितम् ॥

इति मोक्षधर्मे तत्त्वनिष्कर्षकतया व्यासेनोदाहृतम् । अत्र च सर्ववेदेषु पठिततया सन्निहितत्वात्तत्तच्छाखागतानां तत्त्वपरवाक्यानामाकाङ्क्षितयोग्यविशेषसमर्पकतयाऽनुषङ्ग इत्यभिप्रायो लक्ष्यते । एवं तत्त्वपरस्यास्य सूक्तस्य देवताविशेषपरत्वं दुरपह्नवम् 'पुरुषोह्वै नारायणोऽकामयत' इति बृहदारण्यके पुरुषशब्दस्य नारायणपरत्वदर्शनात् । किंच छन्दोग्ये 'एषा वैष्णवीनामसंमिता एतां प्रयुञ्जन् विष्णुं प्रीणाति' इत्युक्तम् ॥

आथर्वणे अष्टादशमहाशान्तिप्रकरणे तत्तद्दैवत्यशान्तिषु तत्तद्दैवत्यमन्त्रविनियोगावसरे 'वैष्णव्यां पुरुषसूक्तम्' इति वैष्णव्या शान्तौ पुरुषसूक्तं विनियुज्यते । तथा 'आवयाऽवाहयेद्देवमृचा तु पुरुषोत्तमम्' इत्यादिना शौनकेन भगवत्समाराधने 'जितन्ते' इत्यादिमन्त्रतुल्यं विनियुज्यते । महापुरुषशब्दश्च कल्पसूत्रकारैर्देवताविशेष एव प्रयुक्तः । 'महादेवं वा महापुरुषं वाऽर्चयेत्' इति । इहच 'वेदाहमेतं पुरुषंमहान्तम्' इत्युच्यते । अतश्च भगवदसाधारण्यं तथा पुरुषस्य हरेस्सूक्तं स्वर्ग्यं धन्यं यशस्करम् । इति च स्मर्यते–

योऽनूचानं द्विजं मर्त्यो हत्वानर्थलोभतः । सपठेत्पौरुषसूक्तं स्मरन् विष्णुं जले सकृत् ॥

इति यमस्मृतौ रहस्यप्रायश्चित्तेषूक्तम् । तथा योगवासिष्ठे–

आसीनः प्राङ्मुखश्शुद्धश्चिन्तयन्मनसा हरिम् । पौरुषेणैव सूक्तेन जुहुयाद्धव्यवाहनम् ॥

इत्युक्तम् । लक्ष्मीपतिप्रतिपादकोत्तरनारायणसमानप्रकरणत्वेन 'सहस्रशीर्षा पुरुषः, पुरुषएवेदग्ँसर्वम्' इति नारायणानुवाकैकार्थ्यं च प्रतीयते 'पुरुषएवेदग्ँसर्वम्' इत्युपबृंहितम् । तथा पाद्मे पुराणे–

ब्रह्महत्यादिपापानां सर्वेषामपनुत्तये । पठेत्तु पौरुषं सूक्तमेकान्ते संस्मरन्हरिम् ॥

इत्युच्यते । तथा स्कान्दे–

यथा भास्करशब्दोऽयमादित्ये प्रतितिष्ठति । यथा वाऽग्नौ बृहद्भानुः यथा वायौ सदागतिः ॥
यथा पुरुषशब्दोऽयं वासुदेवे प्रतिष्ठते । तथा शङ्करशब्दोऽयं महादेवे प्रतिष्ठते ॥

इति शङ्करशब्ददृष्टान्तत्वेन पुरुषशब्दस्य भगवदसाधारण्यकथनाच्च पुरुषसूक्तस्य तदसाधारण्यं प्रतीयते । पाद्मे पुराणे नामनिर्वचनाध्याये–

पूरसंज्ञेतु शरीरेऽस्मिन् शयनात्पुरुषो हरिः । शकारस्य षकारोऽयं व्यत्यासेन प्रयुज्यते ॥
यद्वा पुरे शरीरेऽस्मिन्नास्ते सपुरुषो हरिः । यदिवा पुरवासीति पुरुष प्रोच्यते हरिः ॥
यदिवा पूर्वमेवासमिहेति पुरुषविदुः । यदिवा बहुदानाद्वै विष्णुः पुरुष उच्यते ॥
पूर्णत्वात्पुरुषो विष्णुः पुराणत्वाच्च शार्ङ्गिणः । पुराणभजनाच्चापि विष्णुः पुरुष ईर्यते ॥
यद्वा पुरुषशब्दोऽयं रूढ्या वक्ति जनार्दनम् ।

इति च योगरूढत्वमवगम्यते । अतः पुरुषप्रतिपादकं सूक्तं भगवदसाधारणमिति 'चरणाभिधानात्' इति वदता सूत्रकारेण देवताविशेषनिष्कर्षः कृतः । स्पष्टंचैव विशदतममुक्तं भगवता भाष्यकारेण । अतो यथोक्तार्थ उपपन्नः—अत्र पादोऽस्य' इति मन्त्रे 'त्रिपादस्यामृतं दिवि' इति द्युशब्देन द्योतमानस्वविदात्मस्वरूपमुच्यते इति केचिदाहुः । तदानीमस्य

## श्रीभाष्यम्

**एतदुक्तं भवति–यद्यपि ' अथ यदतः परो दिवो ज्योतिः ' (छां.३.१३.७) इत्यस्मिन्वाक्ये परमपुरुषासाधारणलिङ्गं नोपलभ्यते ; तथाऽपि पूर्ववाक्ये द्युसम्बन्धितया परम-**

## श्रुतप्रकाशिका

दिवीति व्यतिरेकनिर्देशस्य क्लिष्टता स्पष्टा । किंच द्युसम्बन्धिप्रत्यभिज्ञापकतया तदेकार्थत्वेन सूत्रकारोदाहृते ' अथयदतः **परो दिवो ज्योतिर्दीप्यत** ' इति वाक्ये पञ्चम्यन्ततया श्रूयमाणेन द्युशब्देन विरोधश्च स्यात् । नहि द्योतमानमात्मस्वरूपं स्वस्वरूपात्पर भवति । 'दिविहृदयाकाशे स्थित'मिति भास्करः तदयुक्तम्; '**अथयदतः परोदिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषुसर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु** ' इति श्रुतिविरोधात् । नहि हृदयाकाशो दिव उपरितनेषु लोकेषु वर्तते । परमात्मन आदित्यमण्डलेऽप्यवस्थानात्तद्विषय तद्वाक्यमितिचेन्न रविमण्डलस्य भूमेर्योजनलक्षेऽवस्थितस्य विश्वप्रपञ्चाद्बहिर्भावाभावात् विश्वसर्वशब्दयोर्भूम्यन्तरिक्षमात्रपरत्वे स्वारस्यभङ्गाच्च ॥

किंच सप्तम्यन्तपञ्चम्यन्तयोः द्युशब्दयोः अविरोधेनार्थैकत्व चतुर्थसूत्रे समर्थितम् तच्च तयोर्हृदयाकाशरविमण्डलपरत्वेऽनुपपन्न विश्वसर्वशब्दस्वारस्यभङ्गप्रसङ्गादेव द्युशब्दस्य प्रसिद्धद्युपरत्व चायुक्तम् । जाग्रत्स्वप्नसुषुप्त्यवस्थासु जीवसञ्चारभूमितया त्रेधा विभक्ताः कार्याकाशप्रदेशविशेषास्त्रय.पादाः तदुपलक्षण कारणब्रह्मस्वरूप त्रिपादमृतमुच्यत इति चायुक्तम्; अस्य त्रिपादिति व्यतिरेकनिर्देशस्यामुख्यत्वात् । जीवस्य जाग्रदवस्थाया बाह्याकाशस्सञ्चारभूमिरिति चायुक्तम् तदानीमपि शरीरान्तर्वर्तित्वात् स्वप्ने शरीराकाशवर्तित्वमप्ययुक्तम् ईश्वरसृष्टशरीरैर्बहिरप्यवस्थानात् । तदनभ्युपगमेऽपि पूर्वसंस्कारसहकृतमनोव्यापारमात्रेण हृदयावस्थानेऽपि जीवस्य स्वाप्नभ्रमोपपत्तेः, स्वप्ने जीवस्य हृदयान्निष्क्रमणस्य निष्प्रमाणकत्वाच्च '**हृदि ह्ययमात्मा** ' इति जीवस्य स्वतो हृद्यवस्थान श्रूयमाण स्वप्नावस्थाया कथ वचनेन विनाऽपोद्यते । स्थावरजङ्गमात्मकानि सर्वभूतानि कार्यजगदन्तर्गतानि चेतनाचेतनानि उच्यन्ते । द्युशब्दस्तु समस्तव्यष्टिसमष्टितत्त्वबहिर्भूतस्थानविशेषपर. '**विश्वत.पृष्ठेषु सर्वत पृष्ठेषु** ' इति श्रवणात् । विश्वशब्दविवरण सर्वशब्दगतिगत्यभावलिङ्ग '**तथाऽक्षरात्संभवतीह विश्वम्** ' इति जगदन्तर्वर्तिव्यष्टिजाते विश्वशब्दप्रयोगात् विश्वशब्दो व्यष्टिपरः । सर्वशब्द.परिशेषात् समष्टितत्त्वपरः । अतएवहि गद्येऽपि गदित भाष्यकारैः **समस्तकार्यकारणजातमतीत्य वर्तमानः** इति, पुरुषसूक्ते '**तेह नाकं महिमानस्सचन्ते** ' इति मुक्तप्राप्यदेशस्य नाकशब्देनोक्तत्वात् । मुक्तस्य च दुःखमिश्रकार्यलोकाना हेयत्वात्तत्रासाकभवतीत्यवयवार्थपौष्कल्योपपत्तेः, तत्रैव '**तमस परस्तात्** ' इति विशेषितत्वात् '**क्षयं तमस्य रजस पराक** ' इति निवासशब्दात् '**तदक्षरे परमे व्योमन्** ' '**विश्वं पुराण तमसः परस्तात्** ' इति तमसः परस्य स्थानस्य स्थानिनो ब्रह्मणश्च व्यतिरेकनिर्देशात्, तस्य तमसःपरत्वविशेषणेन पुरुषसूक्तप्रत्यभिज्ञानाच्च, दिवीत्यप्राकृत स्थानमुच्यते त्रिपात्त्वचाप्राकृतैर्भोग्यभोगोपकरणभोगस्थानविशेषैर्वा भूषणास्त्रादिरूपेण जगदन्तर्गतवस्त्वभिमानिभिर्नित्यैः भगवदनुभवमात्रपरैश्च नित्यसिद्धैर्मुक्तैश्चात्मभिर्वा सभवति । एवं चास्य दिवीति व्यतिरेकनिर्देशोऽमृतत्वं च मुख्य भवतीति ॥

एव पूर्ववाक्ये द्युसम्बन्धश्रवणाभिधानेऽपि कथमस्य वाक्यस्य परमात्मपरत्वम् एकविषयत्वादितिचेत् कथमेकविषयत्वमित्यत्राह–एतदुक्तमिति । ज्योतिश्शब्दश्रुत्यपेक्षया स्ववाक्यस्य पूर्ववाक्यप्रत्यभिज्ञापक द्युसम्बन्धित्वलिङ्ग प्रकरणं च दुर्बलमितिचेन्न अनुवादलक्षणयच्छब्दसमभिव्याहारेणान्यत्रोपदिष्टाभिधायकेन ज्योतिश्शब्दस्य दुर्बलत्वावगमात्, प्रथमप्रतिपन्नयच्छब्दश्रुत्या सहकृतस्य द्युसम्बन्धित्वलिङ्गस्य प्रबलत्वाच्च । इद ज्योतिश्शब्दस्यादित्यादिसाधारण्याभ्युपगमेनोक्तं तच्च

## गूढार्थसंग्रहः

'अनुत्तमेषूत्तमेषु लोकेषु' इत्यादि एतदर्थोत्तम्भकम्। 'दिवुर्क्रीडा विजिगीषा' इत्यादौ सुधातोर्मोदार्थ प्रतिपादनेन निरतिशयानन्दवतः प्रकृतिमण्डले सृष्टिः क्रियेतिशङ्काऽपि दिवुधात्वर्थक्रीडया परिहृता भवति। धातुयोगेनान्तर्यामित्वप्रतिपादनेनान्तर्यामित्वस्य दयामूलकत्वेन 'शुअभिगमने' इति धातुना मुक्तप्राप्यत्वप्रतिपादनेन दयया सृष्टिकर्मभूताना जीवाना निरतिशयदीतियुक्तस्य प्रकृतिमण्डलादूर्ध्वदेशे विद्यमानस्य प्राप्यत्वविवक्षाऽपि सूचिता। अमृतमित्यनेन भोग्यत्वसूचनेनापि मुक्तप्राप्यत्व बोधितम्। अमृतमित्यस्य नित्यरूपार्थविवक्षाया 'नित्यंहि नास्ति जगति भूतं स्थावरजङ्गमम्। ऋतेतमेकं पुरुषं वासुदेवं सनातनम्॥' (मोक्षधर्म) इत्युपबृंहणानुरोधेन 'परंज्योतिरुपसंपद्य स्वेनरूपेणाभिनिष्पद्यते सउत्तमःपुरुषः' इति श्रुत्युक्तःपुरुषो वासुदेव एवात्र नित्यो विवक्षितः 'नित्यत्वं वासुदेवाङ्घ्यवपुषि जगौ मोक्षधर्मे मुनीन्द्रः।' इत्यत्राचार्यपादैः विग्रहो विवक्षित इत्युक्तम्। अत्र विष्णुधर्मोत्तरपञ्चकालविधिनिरूपणानन्तर वचनमपि मूलम्। तत्र च 'भगवान्वासुदेवस्तु देवसङ्कर्षणस्ततः। प्रद्युम्नश्चानिरुद्धश्च प्रभावोऽयमुदाहृतः॥' (वि.ध.६३.३४) 'चत्वार एते धर्मज्ञ वासुदेवाःप्रकीर्तिताः। भगवच्छब्दवाच्याश्च सर्वभूतभवोद्भवाः॥ तदेतत्पठ्यते सूक्ते पौरुषे द्विजसत्तम। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' (४०) इत्यत्र विष्णुधर्मोत्तरे शङ्करगीतायां—दिवि विद्यमानत्व वासुदेवस्य त्रिपात्त्व सङ्कर्षणप्रद्युम्नानिरुद्धरूपेणेति स्फुटमुक्तम्। अयमर्थः 'सचादिपुरुषो विष्णुरसर्वव्यापी सनातनः। शरीरात्स्वाज्जगत्त्रातु सङ्कर्षणमभावयत्॥ सच सङ्कर्षणो देवः प्रद्युम्न समभावयत्। सच प्रद्युम्नसंज्ञस्सन् अनिरुद्धमभावयत्। तस्माद्ब्रह्मासमुत्पन्नः जगत्स्रष्टु चराचरम्॥ एवचतुर्धा सव्यूह्य स्वात्मान पुरुषोत्तमः। अण्डेभ्यः परतो नित्य त्रिपादेन विराजते। जगत्सृष्ट्यादिकर्माणि कर्तुं कामस्स्वलीलया॥' इति वैकुण्ठसंहिताया व्यक्तः। ब्रह्मवैवर्ते ब्रह्मखण्डे 'मङ्गल्यं मङ्गलाभ च मङ्गल मङ्गलप्रदम्। प्रकृतेःपरमीशान निर्गुण नित्यविग्रहम्॥' (२.३४) इतिप्रकृतिखण्डे 'ततऊर्ध्वे च वैकुण्ठो ब्रह्माण्डाद्बहिरेवसः। सच सत्यस्वरूपश्च शश्वन्नारायणो यथा॥ ३.९ ब्रह्मादितृणपर्यन्त शेषं प्राकृतिकभवेत्। यद्यत्प्राकृतिक दृष्ट सर्वं नश्वरमेवच॥ ७-८ विद्धयेकं सृष्टिमूल तत्सत्य नित्य सनातनम्। स्वेच्छामय परंब्रह्म निर्लिप्त निर्गुण परम्॥ ७-८७ निरुपाधि निराकार भक्तानुग्रहविग्रहम्। अतीव कमनीयं च नवीनघनसन्निभम्॥' ७-८८ इतिचोक्तम् अत्र 'भक्तानुग्रहविग्रहम्' इत्यनेन 'सर्वभूताधिवासश्च यद्भूतेषु वसत्यपि। सर्वानुग्राहकत्वेन तदस्म्यह वासुदेवस्तदस्म्यहवासुदेवः' इति श्रुतितात्पर्यमाविष्कृतम्। कृष्णजन्मखण्डे भगवत्सन कुमारसवादे—'योयो विग्रह इत्युक्तस्सच प्राकृतिकस्स्मृतः। देहो नविद्यते विप्र नित्यस्त्रा प्रकृतिं विना॥ ८७-२४ सनत्कुमारः रक्तबिन्दूद्भवादेहास्ते च प्राकृतिकास्स्मृताः। कथ प्रकृतिनाथस्य बीजस्य प्राकृत वपुः॥ ८७-२५ श्रीकृष्णः—साम्प्रतं वासुदेवोऽहं रक्तवीर्याश्रित वपुः। कथ नप्राकृतो विप्र.. ..... ... ८७-२९ सनत्कुमारः—वासुस्सर्वनिवासश्च विश्वानि यस्य लोमसु। तस्य देहःपरब्रह्म वासुदेव इतीरितः॥ ८७—३० वासुदेवेति तन्नाम वेदेषु च चतुर्मुख। इत्यादि तत्रैव पूर्वं 'शरीर द्विविध शम्भो नित्य प्राकृतमेव च। नित्य विनाशरहित नश्वरप्राकृत सदा॥' इति, तृतीय खण्डेऽपि—'देहाःप्राकृतिकास्सर्वे नश्वराः पाञ्चभौतिकाः। अहर्निशसशरीरी च भानुविग्रहविग्रहः॥' इतिचोक्तम्॥

समन्वयाधिकरणे कार्यवाक्यार्थवादिवृत्तिकाराद्यपञ्चपादिकायामित्थमुपदर्शितः 'अथ यदतःपरो दिवो ज्योतिः' इति प्रपञ्चातिरिक्तब्रह्माभ्युपगमे देवताविग्रहवत्त्वन्यायसम्भवात्मोक्षकामस्य ब्रह्मोपासन विधीयते। तथा च श्रुतिः— 'विद्यया तदारोहन्ती' इति। नच साध्यत्वेऽप्यन्तवत्त्वम्। शब्दगम्यत्वादनावृत्तेः 'नच पुनरावर्तते' इति। नह्येष तर्कगम्यः येन तर्केणास्य तत्त्व व्यवस्थाप्येत शब्दगम्यस्तु शब्दादेव व्यवस्थेति मन्वानस्योत्तरमाह भाष्यकारः इति॥

भामत्यामपि—'अथ यदतःपरो दिवोज्योतिर्दीप्यते' इतिश्रुतेः ब्रह्मणो विकृताविकृतदेशभेदावगमात् अविकृतदेशब्रह्मप्राप्तिरुपासनादिविधिकार्यो भविष्यतीति प्राप्यकर्मता ब्रह्मण इत्यतआह—नचाप्याप्यत्वेनेति। अन्यदन्येन विकृत-

## श्रीभाष्यम्

पुरुषस्य निर्देशादिदमपि द्युसम्बन्धिज्योतिस्स एवेति प्रत्यभिज्ञायत इति। कौक्षेयज्योति षैक्योपदेशश्च फलाय तदात्मकत्वानुसन्धानार्थविधिरिति न कश्चिद्दोष । कौक्षेयज्योतिषश्च तदात्मकत्वं भगवता स्वयमेवोक्तम् 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रित ' (गी १५ १) इति ॥

## सू.२६—छन्दोऽभिधानान्नेतिचेन्न तथा चेतोर्पणनिगमात्तथाहि दर्शनम् (१.१.१०)

पूर्वस्मिन्वाक्ये 'गायत्री वा इदं सर्वम्' (छा ३ १२ १) इति गायत्र्याख्य छन्दोऽभि धाय 'तदेतदृचाभ्यनूक्तम्' (छा ३ १२ ५) इत्युदाहृताया 'तावानस्य महिमा' (३ १२ ६

## श्रुतप्रका ।

न, अवभासकत्वानिमित्तकत्वात् ज्योतिश्शब्दस्य 'नारायणपरोज्योति ' इत्यादप्रयोगाच, उत्त पूर्वपक्षहेतु परिहरति कौक्षेयेति । फलायेति । चक्षुष्यश्श्रुतोभवति इ युक्तफलायेत्यर्थ । तदात्मकत्वेति । 'तदेतद्दृष्टं च श्रुतं चेत्यु पासीत' इत्यत्र तदेत-छब्दो तदात्मकज्योतिर्विषयौ तदात्मकत्वेन प्रकृत इति भाव । 'अन्नादो वसुदान "चतु र्विधा भजन्ते माम्' 'सकलफलप्रदोहि विष्णु ' इत्यादिश्रुतिस्मृतिवशात् सकलफलप्रदश्च परमात्मनश्चक्षुष्यत्वादि विद्यानुगुणफलहेतुत्वमत्र युक्तमित्यभिप्रायेणाह-नकश्चिद्दोष इति । दात्मकत्व प्रमाण दर्शयति कौक्षेयज्योतिषश्चेति । वदस्य यथार्थविषयत्वे सम्भवत्यस्मिन्नाहृदिरू पताश्रवण परात्तमयुक्तमिति भाव ॥

द्युसम्बन्धिविषयस्य पूर्ववाक्यस्य परमात्मपरत्वमाक्षिप्य समाधत्ते—

## सू.२६=छन्दोभिधानान्नेतिचेन्न तथा चेतोऽर्पणनिगमात्तथाहि दर्शनम् (१.१.१०)

सूत्र शङ्काप्रयासपरमश व्याचष्टे पूर्वस्मिन्निति । परिहारखण्डस्य नेतिपद सपूरकमादत्ते—

## गूढार्थसंग्रह

देशपरिच्छ्याविकृतदेश प्राप्यत । तद्यथोपवल जलाधिरातिबहुलचपलतरङ्गमालापरम्परास्फालनसमहत्स पङ्कज्ञ्वाविकृत मध्यतु प्रशान्तसकलकल्लोलापगत स्वस्थास्थरतयाऽविकृत तस्य मध्यमविकृत नौक पात प्राप्नोति। जीवस्तु ब्रह्मैवाति किं केन प्राप्यता भेदाश्रय वा प्राप्तिरित्यर्थ ' इति । एत सर्व नारब्रह्मणारम्भ क्षण समन्वयाधिकरण (श) माष्याशय मभिप्रेत्य वृत्तिकारमतदूषणम् सच कार्यार्थे व्युत्पत्तिवादी। दहराधिकरण अपहतपाप्म ।ा परमात्मा ब्रह्मानन्दी यशाय च वादिप्राचीनवृत्तिकारमतोप यासन तत् वृत्तिकारस्य तात्त्विकजीवब्रह्मभेद ।दि व [illegible] मत [illegible] इददूषण नसम्भवति । श्रुतीचात्र शाखानां बहूनामुक्तया भामतीकारोक्तरीतिर्नात्र विवक्षिता । उदाहरणानुरोधेन 'त्रिपादस्यामृतं दिवि' इत्यस्याथ एव युक्ता ग्राह्य इति सिद्धान्त निगमयति—इदमपि द्युसम्बन्धिज्योतिस्तदेवेति ॥

'चरणाभिधानात्' इति पूर्वसूत्र याहृद्वत्त स गायत्र्यादि दश एत सम्भवतीति 'छन्दोऽभिधानात्' इति सूत्रपूर्वपक्षतात्पर्यमाह-पूर्वस्मिन्वाक्ये इत्यादिना । नति ।नवेषस्य तात्पर्य ।ह—छन्दोगानस्य सर्वात्मकत्वा

48566

श्रीभाष्यम्

भूतपृथिवीशरीरहृदयानि निर्दिश्य 'सैषा चतुष्पदा' [छां.३.१२.५) इति व्यपदेशो ब्रह्मण्येव गायत्रीशब्दाभिधेय उपपद्यते ॥

श्रुतप्रकाशिका

## सू.२७—भूतादिपादव्यपदेशोपपत्तेश्चैवम् (१.१.१०)

पूर्वसिन्वाक्ये 'पादोऽस्य' इति मन्त्रे चतुष्पात्त्वस्य ब्रह्मण्युपपत्तिरुक्ता । अथतु 'गायत्रीवा' इत्यादिब्राह्मणोक्तस्य भूतादिपादचतुष्टयस्य ब्रह्मण्युपपत्तिरुच्यते । भूत आत्मवर्गः पृथिवी अयंलोकः कर्मार्जनभोगस्थानम् । तदुपकरणं शरीरम् । हृदयं आत्मनः स्थित्यनुगुणः प्रदेशविशेषः एवमुपक्रमस्यैव परामर्श इति दर्शितम् । यादवप्रकाशैस्तु—इदसूत्रं 'पादोऽस्य' इति मन्त्रवर्णोक्तभूतादिपादानुपपत्त्या ब्रह्म न तत्पादवदत्यत्रैव व्याख्यातम् । 'गायत्री वा इदं सर्वम्' इत्यादिब्राह्मणं न चतुष्पात्त्वपरम् किंतु सर्वभूतवाक्पृथिवीशरीरहृदयप्राणरूपविधा षट्विधा इति 'सैषा चतुष्पदा षड्विधा' इति वाक्यञ्च षाड्विध्यानुवादेन चतुष्पात्त्वविधानपरम् । चतुष्पात्त्वं च 'पादोऽस्य' इति मन्त्रवर्णप्रतिपाद्यम् तत्र चेतनाचेतनरूपनिखिलविकारात्मा प्रथमःपादः, 'त्रिपादस्यामृतं दिवि' इति वाङ्मयप्राणमयमनोमयात्मानस्त्रयःपादा उच्यन्तइति प्रतिपादितम् । तदनुपपन्नं कथं उच्यते, तत्र मन्त्रवर्णे स्वचतुष्पात्त्वपरत्वादपि ब्राह्मणोक्तार्थविषयत्वोपपत्तिः पूर्वमेव दर्शिता ॥

किंच प्राथमिकगायत्रीवाक्यानुरोधेन पञ्च दृष्टः इतमन्त्रवर्णो नेयइति शङ्का तावदवतरति सा च मन्त्रवर्णोक्तार्थस्य हेतुतयोपन्यासेऽप्यनतिवृत्ते । उपक्रमस्थगायत्रीवाक्य एव परमात्मसाधकहेतुप्रदर्शनेतु निवर्तते । न तु हेतुसूत्रेणेत्यनेनाभिप्रेत इतिचेत्—न ; शङ्कायाःपरिहारस्य चोक्तसूत्र वाक्यादपि शङ्कामात्रस्य सूत्र(त्व)स्य शब्दादेव परिहारसिद्ध्यनुगुणनिर्वाहस्य न्याय्यत्वात् । 'गायत्री वा इदंसर्वम्' इत्यादिवाक्यस्य षाड्विध्यपरत्वमप्ययुक्तम् 'सैषा चतुष्पदा षड्विधा' इति निगमनवाक्यस्य स्वरसतश्चतुष्पात्त्वषाड्विध्यनिगमनपरत्वप्रतीतेः । ननु सर्वभूतवाक्पृथिवीशरीरहृदयप्राणाख्यपदार्थषट्कप्रतिपादनात् स्वारस्यभङ्गेनापि षाड्विध्यनिगमनपरत्वमाश्रेयमितिचेन्न वाक्प्राणयोर्गानत्राणादिवदन्यार्थत्वतया भूतपृथिव्यादिवत् प्राधान्यतः प्रतिपाद्यत्वाभावेन पदार्थषट्कासिद्धेः, ब्रह्मणो गानत्राणाभ्यां गायत्रीशब्दवाच्यत्वोपपादनाय प्रागप्रसक्तेः ॥

तथाहि गायत्री वा इदंसर्वंभूतमिति गायत्रीशब्दश्चतुष्पाद्ब्रह्मपरः सर्वशब्द आत्मपरः आत्मवर्गस्य तत्पादत्वं सामानाधिकरण्येनोक्तं तस्यैव ब्रह्मणो गानत्राणादिभिःषाड्विध्यं च विवक्षुः श्रुतिर्गानत्राणोपपादनाय वाग्रूपत्वमाह—वाग्वै गायत्रीति गायत्रीशब्दवाच्यं चतुष्पाद्ब्रह्म वाग्रूपविशिष्टमित्यर्थः । 'रसोऽहमप्सु कौन्तेय' इत्यारभ्योच्यते 'शब्दःखे पौरुषंनृषु' इति तथा भगवत्पराशरवचनं 'शब्दमूर्तिधरस्यैतद्रूपंविष्णोर्महात्मनः' इति । ततः किं विवक्षितषाड्विध्यस्येत्यत्राह—वाग्वा इदं सर्वभूतं गायति च त्रायते चेति वाग्विशिष्टं परब्रह्म सर्वभूतं गायति अभिधत्ते हिताहितविधिनिषेधमुखेन त्रायते चेत्यर्थः । एवमेकः पादो गानत्राणरूपविधानद्वयं चोक्तम् । तदनुवादपूर्वकं द्वितीयं पादं सामानाधिकरण्येनाह—या वै सा गायत्री इयंवाव सा येयंपृथिवीति उकाकारविशिष्टप्रकृतधर्मिपरौ यत्तच्छब्दौ यो सर्वभूतरूपैकपादगायत्री गायत्र्याख्यं ब्रह्म तदेव पृथिवीत्यर्थः कथं पृथिव्या ब्रह्मात्मकत्वमित्यत्राह अस्यांहीति ब्रह्मात्मकत्वादेवहि सर्वभूतप्रतिष्ठात्वं नहि केवलपृथिव्याः सर्वभूतधारणे शक्तिरित्यर्थः प्रतिष्ठात्वं च नियतमित्याह एतामेव नातिशीयतइति पृथिवीं भूतजातं नातिवर्तते कर्मवश्यात्मनां नियमेन प्रतिष्ठा यादृशस्यातिक्रमणेत्यर्थः पृथिवीमयब्रह्माण्डोदरे हि सर्वे तदुदराः प्र

## श्रुतप्रकाशिका

वर्तते । एव द्वितीयपादो भूतप्रतिष्ठात्वतदनतिवर्त्यत्वरूपं विधाद्वयंचोक्तम् ॥

अथ तृतीय पादमाह–'यावै सा पृथिवी इयं वाव सा यदिदमस्मिन्पुरुषे शरीरम्' इति पुरुषशब्दः शरीरवि-शिष्टजीवपरः पृथिवीरूपपादविशिष्टा या गायत्री गायत्र्याख्यं ब्रह्म सा शरीरं शरीराख्यपादविशिष्टेत्यर्थः । भू पृथिव्योः गायत्रीसामानाधिकरण्येन निर्दिष्टतया पृथिवीशब्दस्य ब्रह्मपर्यन्तत्वेन तदुपस्थापनक्षमत्वादप्रधानप्रायत्वेन शरीरस्य तत्सामानाधिकरण्येन निर्देष्टु युक्तत्वाच्च, शरीरब्रह्मात्मकत्व च प्राणप्रतिष्ठात्वतदनतिवर्त्यत्वाभ्यामुपपादयति अस्मिन्हीमे प्राणाःप्रतिष्ठिताः एतदेव नातिशीयन्त इति । चतुर्थं पादमाह–यद्वैतत्पुरुषे शरीरमिदंवाव तद्यदिदमन्त पुरुषे हृदयमिति शरीराख्यपादविशिष्ट यद्गायत्र्याख्य तदेव हृदयमित्यर्थः । पूर्ववद्ब्रह्मात्मकत्वमुपपादयति अस्मिन्हीमे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्त इति । प्राणाः प्राणापानादयः इन्द्रियाणि वा, तेषा हृदयसम्बन्धिनाडीद्वारा हृदयप्रति ष्ठितत्वम् । प्राणशब्दस्य जीवपरत्व केचिदाहुः, तदयुक्त भूतप्राणशब्दयोरर्थवैषम्याभावेन तदभिमतषाड्विध्यासिद्धेः । भूतशरीरहृदयवाक्प्राणैर्हि ते षाड्विध्य वदन्ति । एव तृतीयचतुर्थपादौ प्राणप्रतिष्ठात्वतदनतिवर्त्यत्वरूपं विधाद्वयंचोक्तम एवमुक्त चतुष्पात्त्व षाड्विध्य च निगमयति 'सैषा चतुष्पदा षड्विधा गायत्री' इति ॥

नन्वेवंतर्हि ब्रह्मणः परिच्छिन्नत्व स्यादिति शङ्कायामुक्तस्य महिम्नएतावत्त्वप्रतिक्षेपिकामृचमुदाहरति तदेतदिति । ब्रह्माभिप्रायेण नपुसकत्वं तदेतत् चतुष्पात् षड्विध च ब्रह्मेत्यर्थः 'सभूमिं विश्वतो वृत्वा' इत्युक्त्वा 'एतावानस्य महिमा अतो ज्यायाश्च पुरुषः' इतिहि पुरुषसूक्ते श्रूयते, इहच पृथिव्या भूतशरीरहृदयान्यान्तर्गतानि अतः'तावा तस्य महिमा' इत्यनेन पृथिवीतदन्तर्गतपदार्थैश्चतुष्पात्स्वरूपमहिमानुवादः । तावत्त्वं प्रतिषेधति अतो ज्यायांश्च–पादोऽस्येति इहोक्तं पादचतुष्टयमेकपादस्थानीय अतोऽतिरिक्ता त्रिपाद्विभूतिः, तस्मादतो ज्यायान्पुरुष इत्यर्थः । एव-मस्या ऋचः परिच्छिन्नशङ्काव्युदासार्थत्व युक्तम् अनन्तरमपि 'तदेतत्पूर्णमप्रवर्तिपूर्णामप्रवर्तिनीं श्रियं लभते यएवं वेद' इति पूर्णत्वादिगुणकतयोपासनविधानात् ॥

नन्वेवसति ब्राह्मणोक्तचतुष्पात्त्वविषयत्वाभावेन ब्राह्मणस्य ऋचश्चैकार्थ्यं नसिध्येत्–न; उभयोर्ब्रह्मविषयत्वात् यदी यमृगुक्तचतुष्पात्त्वविषया नभवति तर्हि किमर्थं तदुदाहरणम् । परिच्छिन्नत्वशङ्काव्युदासार्थमिति युक्तम् तथास्त्वेवार्थद्वयं नह्युक्तमात्रज्ञापने प्रयोजन नचेयमृक्पूर्वोक्तविवरणरूपा दृश्यते । किंच ऋचश्चतुष्पात्त्वान्तरपरत्व परेषामप्यदर्जनं, दं नाम दायस्थानयोपलक्षितं बाह्यशारीरहार्दरूपेण त्रेधाविभक्तकार्याकाशोपलक्षितं वा कारणस्वरूप त्रिपादुच्यत इति हि तत्पूर्वो जना । तत्र कथ सर्वभूतैर्नामदायस्थानत्रयत्रिविधाकाशोपलक्षितरूपेण चतुष्पात्त्व भूतपृथिवीशरीरहृदयैश्चतुष्पात्त्वंचैकरूपं भवति चतुष्पात्त्वंहि बहुविध श्रूयते 'चतुष्पद्ब्रह्मवाक्पादः प्राणःपादश्चक्षुष्पादश्श्रोत्रं पाद.' इति तथा 'अग्निः पादो वायु पाद आदित्य पादो दिशःपादः' इति च । एव ज्ञातमात्रज्ञापने प्रयोजनाभावात्, पुरुषसूक्तप्रक्रियानु गुण्या(त्त)दनन्तरवाक्यानुगुण्यात् ब्रह्मणो विविधचतुष्पात्त्वसम्भवाच्चतुष्पात्त्वभेदस्य परपक्षेऽप्यवर्जनीयत्वाच्च यथोक्तएवा स्यार्ऋचोऽर्थः ॥

अथ चतुर्थपादत्वेनोक्तहृदयस्याकाशस्य महत्त्वसम्बन्धात् बाह्याकाशस्य ब्रह्मतुल्यत्वं सामानाधिकरण्येन दर्शयति यद्वैतद्ब्रह्मेति इदंवावतद्योऽयं बहिर्धा पुरुषादाकाश इति आकाशः स्वकार्यव्याप्त्यामूर्तत्वाच्च वाय्वादिभिः ब्रह्मतुल्य इत्यर्थः; 'अयंवावसो योऽयमन्तः पुरुष आकाशः अयंवावसः योऽयमन्तर्हृदयआकाश' इति निर्देशो पर्यायैक्याभिप्रायः । एव हार्दाकाशमा हात्म्येन हृदय स्तुतं भवति । एव चतुष्पदः षड्विधस्य ब्रह्मणः प्रपञ्चान्तर्भावेन परिच्छिन्नत्वशङ्काव्युदासार्थं पूर्वं

## श्रुतप्रकाशिका

त्वामवार्तित्वगुणकतयोपासनं मोक्षफलकं विदधाति तदेतदिति ; तदेत् चतुष्पात षड्विधमित्यर्थः नात्र हृदयमात्रे ब्रह्मो-पासनविधिः सम्भ्मवणात् अथ ब्रह्मोपासनाङ्गत्वेन द्वारपोपासन विधीयते 'तस्य ह वा एतस्य हृदयस्ये'त्यादिना ; तत्र च प्राणवृत्तिविशेषाप्यायितचक्षुराद्यनुग्राहका आदित्यादय उपास्याः नच हृदयस्येत्युक्तत्वात् द्वारपोपासनं हृदयोपासनाङ्गमिति वाच्यम् ; किंतु प्रकृतचतुष्पाद्ब्रह्मोपासनाङ्गं, हृदयस्येति निर्देशस्तु चतुर्थपादत्वेन हृदयस्याव्यवहितप्रकृतत्वात्प्राणादिद्वारा चक्षुरादीनां तत्सम्बन्धित्वाच्च कृतः एवं गायत्रीविद्याप्रकरणस्य स्वफलप्रदस्य सुषम्नादिनः परस्य ज्योतिष आदिरूप्य-कीर्तिमत्त्वरूपफलविशेषार्थं कौक्षेयज्योतिरूपत्वेन उपासनाविधानाय अथ यदतःपरो दिवोज्योतिरित्याद्यारभ्यते । एवंवा-क्प्राणयोरन्यार्थमुदाहृतत्वान्निगमनवाक्यस्वारस्याच्च भूतपृथिवीरहृदयान्येव पादाः गानत्राणभूतप्रतिष्ठात्वतदनतिशयप्राण प्रतिष्ठात्वतदनतिशयाः षड्विधाः ॥

ननु 'सैषा' इत्यादिवाक्यस्य षाड्विध्यानुवादेन चतुष्पात्त्वविधानपरत्वेसति ऋचश्चतुष्पात्त्वोपदेशपरत्वं सिद्ध्यति ततश्च 'तदेतदृचाभ्यनूक्तम्' इति घटकवाक्यस्वारस्य भवेदितिचेत् तदयुक्तम् प्रथमश्रुतस्य ब्राह्मणवाक्यनिगमनस्य स्वारस्यभङ्गेन पाश्चात्यसंदंशकवाक्यानुरोधानुपपत्तेः अन्यार्थतया वस्तुभूतयोर्वाक्प्राणयोर्भूतपृथिव्यादितुल्यतापरिकल्पनस्यो-पक्रमस्वारस्यविरुद्धत्वाच्च । ऋगुपन्यासस्य प्रयोजन तत्रोपपत्तयश्च दर्शिताः नह्येकरूपमेव ब्रह्मणश्चतुष्पात्त्वमिति नियन्तुं शक्यम् चतुष्पात्त्वत्रैविध्यस्यान्यत्रापि श्रुतत्वात् किंच त्रिपाच्छन्दनिर्वाहश्च निरूपणीयः ॥

तथाहि मनोमयवाङ्मयप्राणमयास्त्रय ईश्वरव्यूहाः तैस्त्रिप्रकारमवस्थितं ब्रह्मत्रिपादमृतं विवक्षितमित्युच्यते । तत्र तावत्प्रसिद्धमनोवाक्प्राणानामाहंकारिकत्वान्नेश्वरव्यूहत्वममृतत्वं च सम्भवति । समाख्याब्राह्मणोक्तानां मनोवाक्प्राणानु-ग्राहकाणामग्न्यादित्यचन्द्राणां च कर्मवश्यत्वात् सृज्यत्वाच्च नेश्वरव्यूहत्वममृतत्वं च युज्यते 'चन्द्रमा मनसो जातः चक्षोस्सूर्यो अजायत, मुखादिन्द्रश्चाग्निश्च' 'भीषास्माद्वातःपवते, भीषोदेति सूर्यः, भीषास्मादग्निश्चेन्द्रश्च' 'असौ योऽपक्षीयति असौ य आपूर्यति' इति तेषां सृज्यत्वकर्मवश्यत्वेहि श्रूयेते । मनोवाक्प्राणशब्दवाच्यतयाऽभि मतानां सत्त्वतमोरजसां शक्तिरूपाणां प्रज्ञाशक्तिवाक्शक्तिक्रियाशक्तिशब्दवाच्यानां द्युपृथिव्यप्शब्दवाच्यतयाऽभिमतानां स्थूलानां सविकाराणां सत्त्वतमोरजसांचाधिष्ठातार ईश्वरांशास्त्रयईश्वरव्यूहा इतिचेत्—तैरपि त्रिपात्त्व दुर्वचम् व ङ्मयप्राण मययोर्मनोमयादुत्पत्त्यभ्युपगमेन त्रयाणां नित्यत्वायोगेन त्रिपादमृतमिति निर्देशानुपपत्तेः तेषां शक्तिरूपेणामृतत्वमितिचेत् शक्तिरूपेणामृतत्वं 'पादोऽस्य सर्वा भूतानि' इति पादत्वेनोक्तानां सर्वभूतानां सप्रकृतिकानामप्यस्तीति 'त्रिपाद-स्यामृतं दिवि' इति वचनवैयर्थ्यं स्यात् ॥

किंच 'ईश्वरःपरआत्माऽस्य तपोब्रह्म मनोमयः' इत्यारभ्य 'तस्य द्वौव्यूहावाकाशशरीरः प्राणशरीरश्च तयोरन्ये प्रत्येकमसङ्ख्याता प्रतिजीवमवस्थिताव्यूहाः' इत्युपनिषत्कल्पे भवद्भिरुच्यते, किमसङ्ख्येयानामीश्वरव्यूहानां जीवानामिव स्वतएव स्वरूपगतो भेदः उताधिष्ठेयगतभेदएवेश्वरव्यूहभेद इत्युपचारादुच्यते, प्रथमे जीवबहुत्वेश्वरैक-त्वश्रुतीनां वैयर्थ्यं समष्ट्यैक्यस्य व्यष्टिभेदस्य च जीवेश्वरयोस्तुल्यत्वात् । श्रूयतेहि 'त्वमेकोऽसि बहूननुप्रविष्टः' 'अन्तःप्रविष्टःशास्ताजनानाम् । एकस्सन्बहुधा विचारः' 'एको देवस्सर्वभूतेषु गूढः' 'एको वशी निष्क्रि-याणां बहूनां एकं बीजं बहुधा यःकरोति, एकोबहूनां योविदधाति कामान्' 'य पृथिवीमन्तरे सञ्चरन्' इत्या रभ्य बहुष्ववस्थानमुक्त्वा 'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण.' इत्यादि । द्वितीये च पक्षे किमीश्वरव्यूहाधिष्ठेया गुणाः उत गुणशक्तयः । प्रथमे सत्त्वतोरजसामुत्पत्तेः पूर्वं निर्गुणानां तेषामवस्थानवादोनघटते

श्रुतप्रकाशिका

उक्तं हि तत्रविचारगाथा भवद्भिः 'यस्मादेषां प्रलयकालेऽप्यवस्थानमाम्नायते तस्माद्गुणोत्पत्तेः प्रागप्येषामव-स्थानान्निर्गुणा एते' इति। द्वितीये च गुणप्रळयात्पश्चाद्गुणशक्तीनामीश्वराधिष्ठेयत्वं नोपपद्यते तासामधिष्ठानं हि कार्या-भिमुखीकरणलक्षणं प्रेरणं तत्तदानीमस्ति नेदासर्गकालाद्गुणानुत्पत्तिरनुपपन्ना कार्यानुत्पादनमपीश्वराधिष्ठानाधीनमिति चेत्-तर्हि परमात्मनस्स्वापे गुणशक्तीनां तदधिष्ठितत्वाभावात्कार्योत्पत्तिप्रसङ्गः। स्वापप्रबोधे हि ईश्वरस्य त्वदभ्युपगतौ अतःकार्या-नुत्पादनस्येश्वराधिष्ठानानपेक्षत्वेन गुणशक्तीनामधिष्ठातृत्वाभावेन व्यूहभेदाभावाद्गुणोत्पत्तेः प्राक् निर्गुणत्वेन त्रयाणां व्यूहानां कश्चित्कालमवस्थानमयुक्तम्। अधिष्ठेयभेदमनपेक्ष्य स्वत एव भेदश्चेत् त्रित्वस्यानादित्वान्मनोमयादित्रयोत्पत्ति-रनुपपन्ना ॥ ॥ ११ ॥

किंच त्रिस्वेश्वराधिष्ठेषु किंप्रमाणम् 'एतन्मयो वा अरेऽयमात्मा वाङ्मयो मनोमयः प्राणमयः' इति श्रुतिरिति चेत् न जीवस्य मनोवाक्प्राणकरणित्वप्रतिपादनपरत्वात्तस्याः तथाहि, 'यत्सप्तान्नानि मेधया तपसा जनयत्पिता' इति परमात्मनस्सङ्कल्पाद्देहिनामुपजीव्यत्वादन्नशब्दवाच्यानां सप्तानामुत्पत्तिमुक्त्वा तत्र प्रसिद्धान्न दर्शपूर्णमासौ पयश्चेत्यन्नचतुष्टयस्य मानुषदेवतिर्यक्षु विनियोगमुक्त्वा 'त्रीण्यात्मने कुरुत' इत्यवशिष्टान्नत्रयस्य सर्वविधप्रवृत्तिहेतुत्वात् सामान्येन सर्वभोक्तृवर्गमकरोदित्युक्त्वा 'अन्यत्र मना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषं कामस्सङ्कल्प विचिकित्साश्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मनएव' इति प्रसिद्धं मनएव प्रतिपादितम्। कामादीनां मनःकार्यत्वात्सामानाधिकरण्यं 'यः कश्च शब्दो वागेव' इति सामानाधिकरण्यमपि शब्दस्य वागिन्द्रियाधीनोच्चारण-त्वनिबन्धनम् अतश्शब्दोच्चारणकारणं प्रसिद्धवागिन्द्रियमेवेत्युक्तम् 'प्राणोऽपानो व्यानउदानस्समानइत्येतत्सर्वं प्राण एव' इति पञ्चवृत्तिप्राण एव स्पष्टमभिहितः। 'एतन्मन' इत्येतच्छब्दश्च प्रकृतमनोवाक्प्राणपरः 'अयमात्मा' इत्ययशब्दविशेषित आत्मा च प्रसिद्धो जीवः न तु परमप्रकृतः परमात्मा तस्य जीवस्य त्रिविधोपकरणवत्त्वमेव इति प्रतिपादितम्। पश्चात् 'त्रयो लोका एतएव' इत्यादिना तेषां प्रशंसा कृता 'यत्किंच विज्ञातं वाचस्तद्रूपं वाग्विज्ञाता वागेवैनं तद्भूत्वावतीति' यद्वाग्व्यवहाराद्विज्ञातं तत्सर्वं वाचो रूपमेव छेदकम् वागिन्द्रियं ज्ञाता विज्ञायमानं सर्वं वागधीनम् उपचारात्सामानाधिकरण्यम् वागेवैनं तद्भूत्वाऽवति यद्वाचा विज्ञातं वस्तु पुरुषस्योपकरोति तद्भूत्वा तत्स्व-रूपेण वागेवोपकरोतीत्यर्थः 'विजिज्ञास्यम्' इति चिन्तनीयं पूर्ववद्योजना यच्चिन्तितं देवतादिकमुपकरोति तद्भूत्वा मन एवोपकरोतीत्यर्थः 'अविज्ञातम्' इति पूर्ववद्योजना पूर्वसुकृतवशादचिन्तितं यदुपकरोति तद्भूत्वा प्राणउपकरोतीत्यर्थः

एवं प्रशस्य त्रयाणामधिष्ठानानि अधिष्ठातॄंश्च दर्शयति 'तस्यैवाच' इत्यादिना वाचः वागिन्द्रियस्य पृथिवी शरीरम् आयतनं जिह्वागोळकस्य पार्थिवांशमाश्रित्य वागिन्द्रियं तिष्ठतीत्यर्थः। ज्योतीरूपमयमग्निः ज्योतिर्मयमधि-ष्ठातृदेवतास्वरूपमग्निः' इत्यर्थः. 'यावतीवाक्तावती पृथिवी तावानयमग्निः' इति यत्र यत्र वागिन्द्रियं तत्रतत्र तदधिष्ठानतया पृथिव्यस्ति, अधिष्ठातृतयाऽग्निरप्यस्तीत्यर्थः 'अथैतस्य मनसो द्यौश्शरीरम्' इति इह द्युशब्द आका-शमात्रपरः न तु लोकविशेषपरः (कुतः) अनुपपत्तेः। नहि स्वर्गलोकएव मनसोऽधिष्ठानं मनुष्याणामनवकल्पनात्। द्युशब्दो हि लोकविशेषे नभोमात्रे च वर्तते 'सुरलोको द्योदिवौ द्वे स्त्रियाम्' 'द्योदिवौ द्वे स्त्रियामभ्रं व्योमपुष्करम-म्बरम्' इति हि नामानुशासनम्। अत आकाशमात्रविवक्षा तत्रापि सामर्थ्यात् हृदयाकाशे पर्यवस्यति हृदयच्छिद्ररूपा-काशआयतनमित्यर्थः। 'ज्योतीरूपम्' इत्यादेः पूर्ववत् तौ अग्न्यादित्यौ मिथुनं मैथुनं मिथुनीभावमनिरुद्धताम्। ततः प्राणोऽजायत अग्रमस्याभिप्रायः आदित्याधिष्ठेयमनः पूर्विका अग्न्यधिष्ठेयवाक्प्रवृत्तिः तदुभयपूर्विकापञ्चवृत्तिप्राणाधीना शरीरप्रवृत्तिरिति प्राणस्यास्पदत्वं च चक्षुरादिषु स्वसदृशप्रतिस्पर्धिविरहित्वं च 'अथैतस्य प्राणस्यापश्शरीरम्' इति 'प्राणा

श्रुतप्रकाशिका

वात् मनआदिशब्दो नेश्वरव्यूहपरः । यत एवं तस्मात् समाप्तसृष्टौ 'तौ मिथुनं समेतां ततः प्राणोऽजायत सइन्द्रः सएषोऽसपत्नः' इति वाङ्मयव्यूहपत्नीकान्मनोमयादीश्वरात् प्राणमयव्यूहोत्पत्तिरुच्यत इति चानुपपन्नम् ॥

ननु बृहदारण्यक एव षष्ठेऽध्याये 'इन्धोहवै नामैष योऽयं दक्षिणेऽक्षन् पुरुषस्तं वा एतमिद्धं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्षप्रियाइवहि देवाः प्रत्यक्षद्विष. अथैतद्वामेऽक्षणि पुरुषस्य रूपमेषायास्य पत्नीविराट्तयोरेषसंस्तावो यएषोऽन्तर्हृदय आकाशः' इत्यत्र दक्षिणाक्षिप्रतिष्ठितस्य पुरुषस्य वामाक्षिगत पुरुषरूपं पत्नीत्वेनोच्यते अतोऽत्र वाङ्मयपत्नीको मनोमयःप्रतिपादित इति न 'ततःप्राणोऽजायत सइन्द्रः' इति मिथुनोत्पन्नस्येन्द्रशब्दवाच्यत्वावगमात् । इह च पत्नीवतः पुरुषस्येन्द्रशब्दवाच्यत्वावगमाच्च, ततश्चेन्द्रशब्दवाच्यप्राणमयस्य वाङ्मयः पत्नीकत्वं न तु मनोमयस्य, मनोमयस्य वाङ्मयपत्नीकत्वं प्राणमयस्य तदुत्पन्नत्वमपिहि भवदभिमतम् । तस्मादत्रायमर्थः दक्षिणाक्षिस्थःपुरुषोत्तमः 'यएष एतदस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षिन्' इति दक्षिणाक्षिस्थस्यादित्यान्तरवस्थितत्वश्रवणात्तस्य च पुण्डरीकाक्षत्वात् 'इन्द्रं निचिक्युः परमे व्योमन् इन्द्रोमायाभिः पुरुरूपः' इत्यादिषु परमपुरुषस्येन्द्रशब्दवाच्यत्वं च सिद्धम् । वामाक्षिस्थात्पत्नी साक्षाल्लक्ष्मीरेव इन्द्रशब्दवाच्यस्य पत्नीत्वेन प्रतीतेः, तैत्तरीयके च 'राडसि बृहतीश्रीरसीन्द्रपत्नी धर्मपत्नी' इतीन्द्रपत्न्याः श्रीशब्दवाच्यत्वावगमात्, किंच हृदयगुहायामवस्थानमनयोरिह श्रूयते 'तयोरेष संस्तावो यएषोऽन्तर्हृदयआकाशः' इति, संस्तावः अधिकरणे घञ् संस्तावः, स्थानं संस्तवः परिचयः सहवासः 'पद्मकोशप्रतीकाशम्' इत्यारभ्य 'तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः' इति नारायणस्य हृदयस्थितिश्रवणादत्रापि श्रियःपतिर्नारायण एव प्रतिपादित इति वाङ्मयपत्नीकपुरुषप्रतिपादनमसङ्गतम् । तत्त्वकारिश्रुतावपीश्वरव्यूहत्रयप्रतिपादनाभावात् अघमर्षणसूक्तेऽपि नतत्प्रतिपादनमिति वाङ्मयपत्नीकपुरुषप्रतिपादनमसङ्गतम् अपितु तपश्शब्दःपरमात्मपरः 'यस्य ज्ञानमयं तपः' इति तपश्शब्दस्य ज्ञानवाचित्वात् परस्य ज्ञानगुणसारत्वेन ज्ञानशब्दस्येव धर्मिपर्यन्ताभिधानोपपत्तेः, तस्मादृतशब्दसत्यशब्दवाच्ययोर्यशादिकर्मतन्द्रोक्तृचेतनवर्गयोरुत्पत्तिः वाक्प्राणयोः वा 'तद्यदृतमिति वाक्सायस्सत्यमिति प्राणस्सः' इति श्रुतेः,

यद्वा ऋत यथार्थशब्दः सत्यं अबाध्योऽर्थः, नामरूपे उत्पन्ने इत्यर्थः अतो मिथःकार्यकारणभावेनावस्थित वाङ्मयादिव्यूहत्रय निष्प्रमाणक, किंच वाङ्मयपत्नीकान्मनोमयात् प्राणमयोत्पत्तिं किं प्रळयदशाया महदादिसर्गात् पूर्वभाविनी उत महदादिसर्गानन्तरभाविनी तत्र प्रथम शिरो निष्प्रमाणकत्वान्निरस्तम् । द्वितीयेतु भूमः 'वाङ्मयःपृथिवीशरीरो लयपरिणामशक्तिमधिष्ठति तम पृथिवीत्युच्यते लयपरिणामशक्तिर्वा गतिमोक्षस्थानमिति च' इत्युक्तमुपनिषत्कल्पे । तत्रैव 'प्राणमयोऽप्शरीरः क्रियाशक्तिमधितिष्ठति रजआइत्युच्यन्ते क्रियाशक्तिःप्राणः' इतिचोक्तम् यदि तमोरजश्शक्त्यधिष्ठातारौ वाङ्मयप्राणमयौ तदा वाङ्मयपत्नीकान्मनोमयात्प्राणमयोत्पत्तिं वदता चतुर्मुखोत्पत्तेःपूर्वमेव रुद्रोत्पत्तिरुक्ता स्यात् । तच्छ्रुतिविरुद्ध महोपनिषदि 'तत्र ब्रह्माचतुर्मुखोऽजायत' इति ब्रह्मसृष्टिमुक्त्वा 'अथ पुनरेव नारायण सोऽन्यं कामं मनसा ध्यायीत तस्य ध्यानान्तस्थस्य ललाटात्त्र्यक्षश्शूलपाणिः पुरुषोऽजायत' इति रुद्रसृष्टेः पश्चात्तनत्वश्रवणात्, सुबालोपनिषदि 'ललाटात्क्रोधरुद्रोऽजायत' इति रुद्रस्य चतुर्मुखललाटोत्पत्त्व श्रवणात् शैलालिब्राह्मणे रुद्रस्य चतुर्मुखस्य मयादिजीववदुत्पत्तिश्रवणात्, शतपथेचाष्टमूर्तिब्राह्मणे रुद्रसञ्ज्ञात्वबाल्येन प्रजापतिना रुद्रसृष्टिश्श्रुतत्वात् तद्रोदनपरिहाराय तेन तस्य नाममूर्त्यष्टकप्रदानप्रतिपादनाच्च ॥

ननु श्वताश्वतरे–'विश्वाधिको रुद्रो महर्षिः हिरण्यगर्भं जनयामास पूर्वम्' इति श्रूयत इतिचेत् तदपि

श्रुतप्रकाशिका

मात्मत्वे विरुद्धम् अनन्तरमेव 'वेदाहमेतं पुरुषंमहान्तं आदित्यवर्णं तमस.परस्तात्' 'महान्प्रभुर्वै पुरुषस्सत्त्वस्यैष प्रवर्तकः' 'अङ्गुष्ठमात्रःपुरुषोऽन्तरात्मा' 'सहस्रशीर्षापुरुष.' इत्यादिषु वाक्येषु 'एतं महान्तंपुरुषम्' 'एष महान्(महान्प्रभुर्वैपुरुषः)' इति प्रकृतशब्दपरामर्शिनैतच्छब्देन महापुरुषशब्दसामानाधिकरण्यात् 'यदेषआकाश आनन्दो नस्यात्' इत्यानन्दशब्दसमानाधिकरणाकाशशब्दस्य प्रसिद्धाकाशप्रहाणेन परमात्मपरत्ववद्रुद्रस्यापि प्रसिद्धार्थप्रहाणेन महापुरुषपरतायाः न्याय्यत्वात् सत्त्वप्रवर्तकविषयस्य वाक्यस्य तमोऽधिष्ठातृवाङ्मयपरत्वाभावात्, पुरुषसूक्तवाक्योपादानेन पुरुषोत्तमविषयत्वस्य स्फुटत्वाच्च, परमपुरुषादेवहि हिरण्यगर्भोत्पत्तेः स्फुटप्रतिपादनात् रुद्रस्य तत्कारणत्वप्रसङ्गाभावात् यथा 'मृत्युनैवेमावृतमासीत् अशनायया अशनयाहि मृत्युस्तन्मनोकुरुतात्मन्वीस्यामिति सोर्चन्नचरत् तस्यार्चत आपोऽजायन्त' इत्यारभ्य अशनायालक्षणात् मृत्योरप्पृथिव्यग्नीनां सृष्टिप्रतीतावपि नप्रसिद्धमृत्योः क्षुधोवा पृथिव्यादिप्रपञ्चकारणत्वमभ्युपगम्यते. 'भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः' 'मृत्युर्यस्योपसेचनम्' 'तच्छ्रेयो रूपमत्यसृजत क्षत्रं यान्येतानि देवक्षत्राणीन्द्रो वरुणः सोमोरुद्रःपर्जन्यो यमो मृत्युरीशानः' इति परमात्मसृज्यत्वसंहार्यत्व नियाम्यत्वश्रवणात्। एवं ब्रह्मसृष्टस्य रुद्रस्य न ब्रह्माणंप्रति स्रष्टृत्वमिति सोऽप्यभ्युपगन्तव्यम्। शैलालिब्राह्मणशतपथसुबालोपनिषदादौ नैवमर्थान्तरपरत्वं वक्तुं शक्यम् ॥

नन्वेवमपि कल्पभेदेन सृष्टिप्रकारइत्याश्रेयम्--नैवम्; त्वदभिमतसृष्टिप्रकारस्य स्फुटश्रवणाभावात् आकाशादीनामपि कल्पभेदेन परमकारणत्वकल्पनाप्रसङ्गात् श्रुतिविरोधेन कल्पनाऽनुपपत्तेश्च, अतो रुद्रस्य ब्रह्मत्वं न युक्तम् प्रत्युत हिरण्यगर्भोत्पत्तिः विरुद्धा किंच 'वाङ्मयलयपरिणामशक्तिमधितिष्ठति लयपरिणामशक्तिश्च वाक्' इतिकथ्यते, मोक्षस्थानमिति च मोक्षस्थानं परमाकाशः उक्त प्रकृतेस्तमश्शब्दवाच्याया आद्याऽवस्थेति च भवद्भिरभ्युपगतं तथा तत्वविचारणायामुक्तम् 'परमाकाशो नाम प्रकृतेराद्यत्वावस्था' इत्युपक्रम्य 'साच तमोऽवस्थापन्ना प्रकृतिः परस्तादात्मनो विभागरूपं विकारं प्रतिपद्यते सएव परमाकाश. सएव मुक्तानामीश्वरस्य च स्थानं शब्दपरिणामशक्तियुक्तत्वाद्वाक्' इतिचोच्यते अक्षरमितिचेति, यद्यप्यत्र तमसोऽभ्यपठितमक्षरं परमाकाशः सतावदव्यक्तो विभागः 'तम एकीभवति मृत्युर्वै परेदेव एकीभवति' 'तस्मात्तमस्सञ्जायते' इति तमस एव विभागश्रवणात्। विभक्तात्तमसोऽक्षरविभागः तमस्तस्मादक्षररूपेण जायत इति योजनीयत्वात् 'अक्षरं तमसि लीयते' इति लयश्रवणविरुद्धाच। तच्चाक्षरं समुक्तानामीश्वरस्य च स्थानं तस्योत्पत्त्यपेक्षया अक्षरत्वेऽपि तमसि लयश्रवणेन क्षरत्वात्। 'तदक्षरे परमे व्योमन्' इति परमव्योम्नः क्षरणाभावाच्च तत्राप्यापेक्षिकमक्षरत्वमितिचेन्न तत्र स्वारस्यभङ्गप्रसङ्गश्रवणाभावात् तमसो विभक्तमक्षरमेव तत्राक्षरशब्देन प्रत्यभिज्ञाप्यत इतिचेन्न। वर्णानुपूर्वीसादृश्येऽप्यन्यविशेषणतया प्रयुक्तेनाक्षरशब्देन विशेष्यसमर्पकाक्षरशब्दार्थस्य प्रत्यभिज्ञानाभावात् नह्यरुणः पटइतिवाक्यस्थोऽरुणशब्दो रुद्रवाक्यस्थेऽरुण प्रत्यभिज्ञायतइति

किंच स्वप्रकरणे 'विश्वं पुराणं तमसःपरस्तात्' इति समानप्रकरणेच 'आदित्यवर्णंतमस.परस्तात्' 'तेहनाकं महिमानस्सचन्ते' 'आदित्यवर्णं तमसस्तुपारे' इति मुक्तात्मेश्वरस्थानस्य तमसःपरत्वश्रवणात्तमसोऽर्वाचीनस्याक्षरस्य न तत्र प्रत्यभिज्ञा 'तमस परस्तात्' इतिपरस्वरूपस्य तमोवैलक्षण्यमुच्यत इतिचेत् न दिग्देशकालेष्वस्तातिप्रत्ययस्य विहितत्वेन वैलक्षण्यमात्रपरत्वस्य क्लिष्टत्वात् स्थानविशेषस्य सन्निहितत्वाच्च तमस.परत्वस्य देशविशेषवर्तिपरमात्मविशेषणत्वोपपत्तेः 'तमसस्तुपारे' इति पारशब्दश्चावधिवाचकः। अतस्तमसःपरस्य स्थानस्येह प्रत्यभिज्ञानाभावात् तमोविभागरूपमक्षरं न मुक्तात्मपरमात्मस्थानं तमोविभागरूपचाक्षरं न वाङ्मयाधिष्ठेयम् तस्याक्षरस्य ब्रह्मरुद्रसृष्टेः पूर्वभावित्वात्, 'यः .

श्रीभाष्यम्

## सू.२८–उपदेशभेदान्नेतिचेन्नोभयस्मिन्नप्यविरोधात् (१.१.१०)

श्रुतप्रकाशिका

पृथिवीमन्तरे सञ्चरन्' इत्यारभ्य 'योऽक्षरमन्तरे सञ्चरन्यस्याक्षरं शरीरम् यस्यमृत्युश्शरीरम्' इत्युक्त्वा 'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण' इति तस्याक्षरत कारणभू मृत्युशरीरस्य नारायणत्वप्रतिपादनाच्च, तस्यैवान्तरात्मत्वश्रवणाद्वाक्ययोऽन्तरात्मत्वानुपपन्नम् अत एव हिरण्यगर्भस्य प्राणस्यस्यान्तर्यामित्वं च निरस्तं नारायणस्यैवह्यन्तर्यामित्व श्रुतम्, हिरण्यगर्भस्य महत्तत्त्वाभिमानित्वतु ब्रह्माण्ड [illegible] क्वचिदुक्तमिति मन्तव्य परमकारणत्वाभावात् अग्नीन्द्रादीनां वाक्पाण्याद्यभिमानित्ववत् 'सर्वभूतान्तरात्मा' इत्यत्र सर्वभूतशब्देन ब्रह्मरुद्रयोरपि जीवान्तर्भाव 'तस्माद्विराडजायत विराजो अधिपूरुष' 'त्र्यक्षश्शूलपाणि पुरुषोजायत, इन्द्रोवरुणस्सोमो रुद्र' 'सब्रह्मा सशिवस्सेन्द्रस्सोक्षर' इती द्रव कार्यत्वादिश्रवणात्। एतमेवोपबृंहितं भगवता व्यासेन ब्रह्मरुद्रसंवादे—

ममान्तरात्मा तव च येचान्ये देहिसञ्ज्ञिता । सर्वेषां साक्षिभूतोऽसौ नग्राह्य केनचित्क्वचित् ॥
अह ब्रह्मा आद्य ईश प्रजाना तस्माज्जातस्त्व च मत्त प्रसूत ।
मत्तो जगत्स्थावरजङ्गम च सर्वेवेदास्सरहस्याश्च पुत्र ॥

इति। अतएव मानवे धर्मशास्त्रेऽपि 'योऽस्यात्मन कारयिता' इत्यादिवचनानि च नभवदभिमतवाङ्मयप्रमाणविषयाणि श्रुत्यनुसारित्वात् स्मृतिवचनानाम्। अतएव 'मनोमयप्राणशरीरो भारूप तस्य सङ्कल्पाकाशात्मा' 'प्राणोब्रह्म कन्ब्रह्म खब्रह्म' इत्यादिश्रुतयश्च नभवदभिमतवागीश्वरादिक स्ववाक्यस्वारस्याभावात् श्रुत्यन्तरविरोधादनुपपन्नत्वाच्च। यत ईश्वरस्य नप्रळयकाल व्यूहनय प्रामाणिक अतएव ब्रह्मरुद्रये व व्यवप्राण्य यूह व च दूरोत्सारितम्. स्मृतयश्च श्रुत्यनुरोधेन वर्णनीया अदक्ष्यवर्णनाश्चेदनादरणीया एव वाक्यवादि यूहकल्पनस्य निर्मूलत्वात् 'त्रिपादस्यामृतंदिवि' इति वाक्यस्य यादवप्रकाशैरभिहितार्थोऽनुपपन्न, अस्मत् 'भूतादिपादेत्यादिसूत्रस्य भाष्यकाराभिमत एवार्थं उपपन्न इति स्थितम् ॥

## सू.२८—उपदेशभेदान्नेतिचेन्नोभयस्मिन्नप्यविरोधात (१.१.१०]

गूढार्थसंग्रह

'सैषा चतुष्पदा' इति वाक्यस्य तात्पर्यनिर्णये 'तदेतदृचाऽभ्यनूक्तम् तावानस्य महिमा' इत्यनन्तरश्रुतावपि 'अथ यदत परोदिवो ज्योति' इत्यत्र ज्योतिश्शब्दार्थं न प्रसिद्धादित्यादित्यादिज्योतिरूप, किन्तु ब्रह्मगायत्रीशब्दतया निर्णीतब्रह्मैवेति भूतादिपादव्यपदेश यथा प्रसिद्धार्थपरत्वव्यावर्तक सादृश्यनिबन्धन इदमपि तु दिव्यब्रह्मविषयक एव, नतु मुख्यगायत्रीविषयक तद्वदेव ज्योतिश्शब्दार्थोऽपीति एवमित्यत्र विवक्षितम्।

'अथ यदत परोदिवो ज्योतिर्दीप्यत' इत्यत्र इत्युक्त्या उभयोरैकार्थ्यं न लभ्यते अपितु भिन्नार्थकत्वमेव एव चरणाभिधानहेतुत्वेऽपि रूपते ज्योतिर्वाक्ये चरणाभिधानाभावात्। इदं च ज्योतिर्वाक्यमादर्शादेर्गायत्र्यां आदित्यादिज्योतिः तद्वाक्यप्रतिपादितत्वे न काऽप्यनुपपत्ति इति पूर्वपक्षिणाऽऽशङ्क्य प्रकटयन् सिद्धान्तयति—उपदेशभेदान्नेतिचेत् इत्यादिना। 'अनुत्तमेषूत्तमेषु' इत्यत्र अनुत्तमशब्देन न विद्यते एभ्यो उत्तमा ते अनुत्तमा इति विग्रहेण

## श्रीभाष्यम्

पूर्ववाक्ये ' त्रिपादस्यामृतं दिवि ' (छां.३.१२.६) इति दिवोऽधिकरणत्वेन निर्देशादिहच 'दिवः पर' इत्यवधित्वेन निर्देशादुपदेशस्य भिन्नरूपत्वेन पूर्ववाक्योक्तं ब्रह्म परस्मिन्नप्रत्यभिज्ञायत इति चेत्–तन्न, उभयस्मिन्नपि उपदेशे अर्थस्वभावैक्येन प्रत्यभिज्ञायाअविरोधात्; यथा 'वृक्षाग्रे श्येनो वृक्षाग्रात्परतश्श्येनः' इति । तस्मात्परमपुरुष एव निरतिशय तेजस्को 'दिवःपरो ज्योतिर्दीप्यत' इतिप्रतिपाद्यते । ' एतावानस्य महिमा । अतो ज्यायाग्श्चपुरुषः । पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतंदिवि'(तै.यजुरण्य.प्र.१२.अनु)इति प्रतिपादितस्य चतुष्पदः परमपुरुषस्य ' वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमस्तु पारे ' (पुरुषसूक्तम्) इत्यभिहिताप्राकृतरूपस्य तेजोऽप्यप्राकृतमिति तद्वत्तया स एव ज्योतिश्शब्दाभिधेय इति निरवद्यम् ॥

### ज्योतिरधिकरणं समाप्तम्

## श्रुतप्रकाशिका

**यथा वृक्षाग्रे श्येनइति ।** सप्तमी अन्तर्बहिरधरोर्ध्वभागस्थितिसाधारणी पञ्चमीतूपरिस्थित्यसाधारणी अथ उभाभ्या स्थानविशेषादुपरिस्थितिरेव विवक्षितेति भावः । सूत्रार्थं परमसाध्येन घटयति **तस्मादिति** । न खल्व मस्वरूपे दीप्तिरस्ति तत्कथ ज्योतिर्दीप्यते इत्युक्तज्योतिश्शब्दाभिधेयत्वमितिशङ्का परिहरन्नधिकरणार्थं निगमयति **एतावानिति** । पुरुषसूक्तवाक्योपादान विग्रहविशेषज्ञापनार्थम् ॥

### ज्योतिरधिकरणं समाप्तम्

## गूढार्थसंग्रहः

उत्तमत्वं न आपेक्षिकम् किंतु निरवधिकमेवेति सिद्ध्यति । ' पादोऽस्य सर्वाभूतानि ' इत्यत्र सर्वभूताना पादत्वमभिधाय ' त्रिपादस्यामृतादिवि ' इत्युक्ता सर्वभूतसम्बन्धविरहः ' दिवि ' इत्यत्र विवक्षितदेशस्य प्रतीयते तेन प्राकृतदेशस्य सर्वस्य ' सर्वभूतसम्बधितया प्राकृतदेशभिन्न एव देश. ' दिवि ' इत्यत्र विवक्षितः । ' दिव.पर ' इत्यत्र इन्द्रियजन्य प्रत्यक्षविषयलोकादूर्ध्वज्योतिरेव विवक्षितम् । ' त्रिपादस्यामृत दिवि ' इत्यत्रामृतशब्देन अनश्वरत्व तत्स्थानवर्तिनःप्रतीयते । नाशश्च सृष्टिप्रळयसम्बन्धेनैव, तेन ' दिवि ' इत्यत्र तद्देशस्यापि सृष्टिप्रळयसम्बन्धाभावो विवक्षितइत्यपि प्रतीयते इत्थ च प्राकृतदेशासम्बन्ध्यप्राकृतदेशासम्बन्धिज्योतिषः उभयत्रापि प्रतीतिः । अतश्च वृक्षाग्रात्परतश्श्येन इत्यत्र वृक्षाग्र संबन्धविगमः प्रतीयते वृक्षाग्रे इत्यत्र तत्सम्ब ध. इत्युभयत्र किंचिद्वैषम्येऽपि वृक्षाग्रासम्बन्धेऽपि किञ्चिद्व्यवधानेऽपि वृक्षाग्रस्य अधिकरणत्व प्रतीयते तद्वदत्रापि इत्यप्राकृतदेशसम्बन्धस्योभयत्र प्रतीत्या व्यवहारस्य नाविरोधः इति दृष्टान्तापेक्षया अय विशेषः अत इत्यनेन सूच्यते इति सूत्रकाराशयो , निरूपयितु शक्यते, तथाऽप्युभयत्र द्युशब्दयोरेकार्थकत्वमभ्युपेत्य ' अनुत्तमेषूत्तमेषु लोकेषु ' इति लोकाना बहुत्वमभिप्रेत्य परोक्तरीतिमनुसृत्यैवाह— **वृक्षाग्रे श्येनइति** । अयमर्थः पुरुषसूक्ततोऽपि प्रतीयत इत्याह–**एतावानस्य महिमा** इत्यादिना । श्रुत्योरनयोर्विशेषाभावात् तत्र कथमप्राकृतस्थानसिद्धिरिति शङ्काऽपनोदनाय ' वेदाहमेतम् ' इत्युत्तरवाक्यमुपादत्ते । ' अतो ज्यायाग्ँश्च पूरुष.' 'वेदाहमेत पुरुषम् ' इतिश्रु

## गूढार्थसङ्ग्रहः

वयद्वयपर्यालोचनाया पूर्वोक्तज्यायानेव पुरुषः अत्रापि प्रतीयत इत्युभयोरैकार्थ्यम्। 'तमस.परस्तात्' इत्यन्यत्र तमःशब्दस्य 'अत पर' इत्यत्र अतश्शब्दस्यैकार्थ्येन 'अथ यदत पर' इत्यत्र प्रकृतिमण्डलादूर्ध्वे सर्वभूतासंबन्धिनः ज्योतिश्शब्दाभिधेयस्य पुरुषस्यैव विवक्षेति निर्णीयते। 'आदित्यवर्ण' शब्दप्रयोगात् दिव्यमङ्गलविग्रहस्यापि विवक्षा सिद्ध्यति एव च अप्राकृतदेशे अप्राकृतदिव्यमङ्गलविग्रहयुक्तः नारायणःपरंज्योतिः 'परंज्योतिरुपसम्पद्य' (छा.८.प्र) इत्यत्र ज्योतिश्शब्द समानार्थक. उत्तम.पुरुषः 'परंज्योतिरुपसम्पद्य' इत्यत्र विवक्षित इतिसिद्धम् ॥

ज्योतिरधिकरणं समाप्तम्

---

– अथ वेदान्तसारः –

## ज्योतिश्चरणाभिधानात् [१.१.१०]

'अथ यदतःपरो दिवो ज्योतिर्दीप्यते विश्वत.पृष्ठेषु सर्वत.पृष्ठेषु अनुत्तमेषूत्तमेषु लोकेषु इद वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः' (छा.३.१३.७) इत्यत्र सर्वस्मात्परत्वेन निर्दिश्यमानतया सकलकारणभूतज्योतिषः कौक्षेयज्योतिरैक्याभिधानात्, स्ववाक्ये विरोधिलिङ्गादर्शनाच्च, प्रसिद्धमेव ज्योतिर्जगत्कारणत्वेन प्रतिपाद्यत इति शङ्कायाम्, यद्यपि स्ववाक्ये विरोधिलिङ्ग न दृश्यते ; तथाऽपि पूर्वस्मिन्वाक्ये 'पादोऽस्य विश्वा भूतानि । त्रिपादस्यामृत दिवि' (छा३.१२.६) इति प्रतिपादितस्य सर्वभूतचरणस्य परमपुरुषस्यैव द्युसबन्धितयाऽत्रापि प्रत्यभिज्ञानात् स एव ज्योतिश्शब्देन सर्वस्मात् परत्वेन सकलकारणतयाऽभिधीयते । अस्य च कौक्षेयज्योतिरैक्याभिधान फलायोपदिश्यत इति न कश्चिद्विरोधः अखिलजगदेककारणभूतः परमपुरुषोऽप्राकृतस्वासाधारणदिव्यवर्णो दिव्यरूपस्तमसः परस्ताद्वर्तत इति तस्यैव निरतिशयदीप्तियोगात् ज्योतिश्शब्दाभिधेयत्वम् विश्वत.पृष्ठेषु सर्वतःपृष्ठेषु अनुत्तमेषूत्तमेषु लोकेषु (३.१३.७) वासश्च युज्यतएव॥

## सू.२६—छन्दोभिधानान्नेतिचेन्न तथा चेतोऽर्पणनिगमात्तथाहि दर्शनम् (१.१.१०)

पूर्वत्र 'गायत्री वा इद सर्वम्' (छां.३.१२.१) इति गायत्र्याख्यच्छन्द. प्रस्तुतमिति नात्र परमपुरुषाभिधानमिति चेत्—नैतत् परमपुरुषस्यैव गायत्रीसादृश्यस्य अनुसन्धानोपदेशाद्यात्, तस्य छन्दोमात्रस्य सर्वभूता मक वानुपपत्तेरेवेति निगम्यते । अन्यत्रापि ह्यन्यस्य छन्दस्सादृश्यात् छन्दोनिर्देशः दृश्यते 'ते वा एते पञ्चान्ये' (छां.४.३.८) इत्यारभ्य 'सैषाविराड्' इत्यादौ ॥

## सू.२७—भूतादिपादव्यपदेशोपपत्तेश्चैवम् (१.१.१०)

भूतपृथिवीशरीरहृदयैश्चतुष्पदेति व्यपदेशश्च परमपुरुषे गायत्रीशब्दनिर्दिष्ट उपपद्यत इति पूर्वोक्तप्रकार एव समञ्जस. ॥

## सू.२८–उपदेशभेदान्नेतिचेन्नोभयस्मिन्नप्यविरोधात् (१.१.१०)

पूर्वत्र 'त्रिपादस्यामृतं दिवि' (छां.३.१२.६) इति परमपुरुषो व्यपदिश्यते। अत्र 'अथ यदतःपरो दिवः' (छां ३.१३.७) इति पञ्चम्या निर्दिष्टः द्युसम्बन्धिज्योतिरिति न प्रत्यभिज्ञेति चेत्—नैतत् उभयस्मिन्नपि व्यपदेशे विरोधाभावात्; यथा 'वृक्षाग्रे श्येनः, वृक्षाग्रात्परतः श्येनः' इति व्यपदेशः। अत्र दिवःपरत्वमेव उभयत्र विवक्षितमित्यर्थः॥

इति वेदान्तसारः

अथ वेदान्तदीपः

## ज्योतिश्चरणाभिधानात्

छान्दोग्ये–'अथ यदतःपरो दिवो ज्योतिर्दीप्यते विश्वतःपृष्ठेषु सर्वतःपृष्ठेषु अनुत्तमेषूत्तमेषु लोकेषु इदं वावतद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः' (छां.३.१३.७) इत्यत्र जगत्कारणत्वव्याप्तनिरतिशयदीप्तियुक्ततया ज्योतिश्शब्दनिर्दिष्टं, किं प्रसिद्धादित्यादिज्योतिः, उत परमेव ब्रह्मेति संशयः, प्रसिद्धज्योतिरिति पूर्वःपक्षः। कुतः? 'इदं वाव तद्यदिमस्मिन्नन्तःपुरुषे ज्योतिः' (३.१३.७) इति कौक्षेयज्योतिषा प्रसिद्धेनैक्यावगमात्, स्ववाक्ये तदतिरिक्तपरब्रह्मासाधारणलिङ्गादर्शनाच्च। राद्धान्तस्तु–प्रसिद्धज्योतिषोऽन्यदेव परं ब्रह्म इह निरतिशयदीप्तियुक्तं ज्योतिश्शब्दनिर्दिष्टं। कुतः 'पादोऽस्य सर्वाभूतानि। त्रिपादस्यामृतं दिवि' (३.१२.६) इति पूर्ववाक्ये द्युसंबन्धितया निर्दिष्टस्यैव चतुष्पदो ब्रह्मणः 'अथयदतःपरो दिवोज्योतिः' (३.१३.७)इत्यत्र प्रत्यभिज्ञानात्। तच्च परमेव ब्रह्मेति विज्ञातम् सर्वेषां भूतानां तस्य पादत्वेन व्यपदेशात्। एवं परंब्रह्मत्वे निश्चिते कौक्षेयज्योतिषः तदात्मकत्वानुसन्धानं फलायोपदिश्यत इति ज्ञायते। सूत्रार्थस्तु—ज्योतिश्शब्दनिर्दिष्टं परब्रह्म; अस्य ज्योतिषः पूर्ववाक्ये सर्वभूतचरणत्वाभिधानात्। सर्वभूतपादत्वञ्च परस्यैव ब्रह्मण उपपद्यते॥

## सू.२९—छन्दोऽभिधानान्नेतिचेन्न तथा चेतोऽर्पणनिगमात्तथाहि दर्शनम् (१.१.१०)

'गायत्री वा इदं सर्वम्' (छां.३.१२.१) इति गायत्र्याख्यच्छन्दसः प्रकृतत्वात् सर्वभूतपादत्वेन गायत्र्या एवमभिधानान्नब्रह्मेतिचेत्–नैतत् तथा चेतोऽर्पणनिगमात् गायत्री यथा भवति, तथा चेतोर्पणोपदेशात्। गायत्रीसादृश्य चतुष्पात्त्वं ब्रह्मण्यनुसन्धेयमित्युपदिश्यते, गायत्र्यास्सर्वात्मकत्वानुपपत्तेरित्यर्थः। तथाहि दर्शनात् तथाह्यन्यत्रापि अच्छन्दस एव सादृश्याच्छन्दश्शब्देनाभिधानं दृश्यते 'ते वा एते पञ्चान्ये पञ्चान्ये दश सम्पद्यन्ते' (छा.४.३.८) इत्यारभ्य 'सैषा विराडन्नात्' (४.३.८) इति॥

## सू.३०—भूतादिपादव्यपदेशोपपत्तेश्चैवम् (१.१.१०)

भूतपृथिवीशरीरहृदयानि निर्दिश्य 'सैषा चतुष्पदा' (छां.३.१२.५) इति भूतादीनां पादत्वव्यपदेशश्च ब्रह्मण्येवोपपद्यत इति ब्रह्मैव गायत्रीशब्दनिर्दिष्टमिति गम्यते॥

## सू.२८—उपदेशभेदान्नेतिचेन्नोभयस्मिन्नप्यविरोधात् (१.१.१०]

'पादोऽस्य सर्वा भूतानि । त्रिपादस्यामृतंदिवि ' (छा.३.१२.६) इति पूर्ववाक्योदित परब्रह्मैवास्तु ; तथाऽपि 'अथ यदतःपरो दिवो ज्योतिः' (३.१३.७) इति द्युसम्बन्धमात्रेण नेह प्रत्यभिज्ञायते ; तत्र चात्र च उपदेशप्रकारभेदात् । तत्रहि 'दिवि' इति द्यौस्सप्तम्या निर्दिश्यते । इह च 'दिवःपरो ज्योतिः' इति पञ्चम्या । ततो न प्रतिसन्धानमितिचेन्न ; उभयस्मिन्नपि व्यपदेशे उपरिस्थितिरूपार्थैक्येन प्रतिसन्धानविरोधात् यथा 'वृक्षाग्रे श्येनः, वृक्षाग्रात्परत श्श्येनः' इति ॥

॥ इति वेदान्तदीपे ज्योतिरधिकरणं समाप्तम् ॥

अथ अधिकरणसारावळी

कौक्षेयज्योतिषैक्यं कथितमिह परज्योतिषस्तस्य विश्वो-
पादानत्वं च विद्यान्तरविदितमत. कारणंत्रह्मिरस्तु ।
मैवं पुंसूक्तवाक्योदितपरपुरुषप्रत्यभिज्ञाप्तयबाधात्
गायत्र्युक्तिस्तु साम्यादपि च निगदितास्तस्य भूतादिपादाः ॥
उत्थानं ज्योतिरादावधिकरणयुगे कारणव्याप्तलिङ्गा-
दित्याभाष्यान्यालिङ्गं स्ववचसि विहितं नेति भाष्यं कथं स्यात् ।
इत्थं विश्वादिलिङ्गं सदिह न तु पराभीष्टालिङ्गं समस्ती-
त्युत्पश्यन् पूर्वपक्षी व्यवहरति तथा व्याहतिस्तन्नशङ्कया ॥

॥ ज्यो तिं र धि क र णं स मा प्त म् ॥



## अथ इन्द्रप्राणाधिकरणम्

### श्रीभाष्यम्

निरतिशयदीप्तियुक्तं ज्योतिश्शब्दाभिधेयं प्रसिद्धवन्निर्दिष्टं परमपुरुष एवेत्युक्तम्। इदानीं कारणत्वव्याप्तामृतत्वप्राप्त्युपायतयोपास्यत्वेन श्रुत इन्द्रप्राणादिशब्दाभिधेयोऽपि परमपुरुष एवेत्याह—

## अथ इन्द्रप्राणाधिकरणम्

### श्रुतप्रकाशिका

अवान्तरसङ्गतिमाह—निरतिशयेति। ज्योतिश्शब्दाभिधेयमिति। आकाशप्राणतेजसां क्रमोपपत्तेः 'अतएव प्राणः' इत्यस्यानन्तरं 'ज्योतिश्चरणाभिधानात्' इत्यधिकरणं सङ्गतमिति भावः। प्रसिद्धवन्निर्दिष्टमिति। अनेनाधिकरणयोः पौर्वापर्यनियम उक्तः। 'सर्वाणि ह वा इमानि भूतानि' इति पूर्वस्मात्पूर्वाधिकरणद्वयविषयवाक्ययोः प्रसिद्धवन्निर्देशो दृश्यते। अत्रापि 'अथ यदतः परः' इति यच्छब्देन प्रसिद्धवन्निर्देशो दृश्यते, तस्मात् ज्योतिरधिकरणं पूर्वाधिकरणद्वयेन सङ्गतम्। एवंसत्युत्तराधिकरणस्य ज्योतिरधिकरणानन्तरभावि च प्राप्तमिति भावः। अवान्तरपेटिकाऽनुगतमर्थमाह—कारणत्वव्याप्तेति। पूर्वाधिकरणे परमपुरुषस्य ज्योतिश्शब्दाभिधेयत्वमुक्तम्, तदयुक्तम्, परमपुरुषादन्यस्येन्द्रादिशब्दवाच्यस्य वेदान्तप्रतिपाद्यत्वादिति शङ्कया सङ्गतिरित्यर्थः। तत्र कारणत्वाक्षेपकलिङ्गभूयस्त्वमनुसन्धेयम्॥

## अथ इन्द्रप्राणाधिकरणम्

### गूढार्थसंग्रहः

एतावता प्रकृति, प्राकृततद्विशेष, जीवतद्विशेषव्यतिरेकः निरूपितः। एतत्सर्वं समानाधिकरणवाक्यपर्यालोचनायां न घटते प्रतर्दनविद्यायामिन्द्रादिजीवविशेषाभेदसमानाधिकरणवाक्यैः तस्यैव परत्वमुपास्यत्वं च प्रतिपाद्यते तत्पर्यालोचनायामभेद एव वेदान्तसिद्धान्तइति भ्रमस्स्यात्। तदपनोदनाय जीवभिन्नपरमात्मन एव तत्रापि विवक्षा। तदुपासनमेव प्रतर्दनविद्यायां विवक्षितम्। उपासनं ज्ञानञ्चैकमेव न तु तयोर्भेदः ज्ञानं निर्विशेषविषयकम् उपासनं सविशेषविषयकमित्यपि नोपनिषत्सिद्धान्त इत्यभिप्रेत्य ब्रह्मलक्षणलक्ष्यत्वं जीवविलक्षणस्यैवेति पादान्त्याधिकरणे निरूपयति। विशेषसमर्पकशब्दघटित वाक्यविचाररूपत्वं आकाशाद्यधिकरणचतुष्टयस्य तत्राद्याधिकरणद्वयस्य कारणवाक्यविचाररूपता, अन्त्याधिकरणद्वयस्य कारणत्वाक्षेपकधर्मबोधकवाक्यविचाररूपतेति विभागः। कारणस्यानन्दरूपस्यैव प्राप्यत्वं जन्माद्यधिकरणविषयवाक्य एव स्फुटम्। प्रकृतिमण्डलाद्बहिः निरतिशयदीप्तियुक्तज्योतिश्शब्दाभिधेयपुरुषस्यैव कारणस्य प्राप्यता पूर्वाधिकरणे स्थापिता। पूर्वाधिकरणविषयवाक्यस्थपुरुषशब्दतात्पर्यविषयीभूतार्थः आनन्दरूपः चेतनाचेतनशरीरी जीवविशेषविलक्षण ज्ञानाभिन्नोपासनविषय इति स्थापनमुखेन 'तत्त्वौपनिषदं पुरुषम्', 'विज्ञानमानन्दं ब्रह्म' इति प्रथमसूत्रविवक्षितश्रुत्यर्थनिरूपणमुखेन निर्विशेषस्यानन्दरूपता नकथञ्चिदपि सम्भवति, किंतु सविशेषस्यैवेति च स्थापयति अस्मिन्नधिकरणे। अत्र कारणत्वव्याप्तलिङ्गममृतत्वप्राप्त्युपायत्वरूपमेव 'यो मामायुरमृतमित्युपास्ते सर्वमायुरस्मिल्लोके एति आप्नोत्यमृतत्वं' इत्यत्रामृतत्वहेतुत्वमुपासनस्य स्फुटम्। 'अमुष्मिंल्लोके अमृतत्वमाप्नोति' इति पूर्ववाक्येऽप्यभ्यस्तम्। तत्पूर्वं 'सयोमां विजानीयात् नास्य केनचित्कर्मणा लोको मीयते' इति सर्वकर्मक्षयोऽप्यभिहितः। तेनामुष्मिंल्लोके सर्वकर्मक्षयानन्तरममृतत्वप्राप्तिस्सिद्धा। उपक्रमे

श्रीभाष्यम्

## सू.२९= प्राणस्तथानुगमात् (१.१.११)

कौषीतकीब्राह्मणे प्रतर्दनविद्यायां–' प्रतर्दनो हवै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन चपौरुषेण च ' (कौषीतक्यां.३.१) इत्यारभ्य ' वरं वृणीष्व ' (३.१] इति वक्तारमिन्द्रंप्रति ' त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे ' (३.१) इति प्रतर्दनेनोक्ते ' सहोवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व ' (३.१) इतिश्रूयते। तत्र

श्रुतप्रकाशिका

## सू–२९ प्राणस्तथानुगमात् [१-१-११)

तत्रेति। ' इन्द्रस्य प्रियं धामोपजगाम ' इत्युपक्रमे इन्द्रशब्दानिर्दिष्टत्वात् ' प्राणोऽस्मि प्रज्ञात्मा ' ' स एष प्राण एव प्रज्ञात्माऽनन्दोऽजरो मृतः ' इति प्राणशब्देन निर्दिष्टत्वाच्चेन्द्रप्राणशब्दनिर्दिष्ट इत्युक्तम्। प्राणशब्दस्य परमात्मलिङ्गप्रतिपादकवाक्यस्थत्वेन सिद्धान्तहेतुद्योतकत्वात् सूत्रे प्राणशब्देन धर्मी निर्दिष्टः नत्विन्द्रशब्देन इन्द्रशब्दनिर्दिष्टस्य विचारविषयत्वमार्थमिति सूत्रकाराभिप्राय इति भावः। जीवमात्रलिङ्गसद्भावेऽपि विशेषाकाङ्क्षया जीवधर्मस्येन्द्रशब्दवाच्यप्रकृतजीवविशेषनिष्ठत्वप्रतीतेर्जीवोवेति शिरोन्तर परोक्तमयुक्तमिति भावः। प्राणलिङ्गस्यापि 'प्राणोऽस्मि ' इति सामानाधिकरण्येन प्राणस्य जीवविशेषणत्वप्रतीतेः प्राधान्येन प्रतिपाद्यत्वशङ्काया असम्भवात् प्राणोवेति चानुपन्यस्तम्। कारणवाक्यप्रतिपाद्य ब्रह्म किं प्रसिद्धजीवभावदन्द्रः ? उत परमात्मेति विचारः। तदर्थं हिततमोपासनकर्मतयेन्द्रप्राणशब्दनिर्दिष्टः किं प्रसिद्धइन्द्रः ? उत परमात्मेति। तदर्थमानन्दादिगुणाः किं गौणाः उत मुख्याः ? तदर्थं

गूढार्थसंग्रहः

' यं त्व मनुष्याय हिततम मन्यसे ' इत्यत्र हिततमशब्दः इष्टसाधनपरः। मुग्धबोधटीकाया दुर्गादासोक्तेः। अत्रोपासनस्यामृतत्वप्रतिसाधनत्वोक्तेश्च। ज्ञानाभिन्नोपासनस्य मुक्तिसाधनत्वस्य स्फुट प्रतीत्या उपासनमेवामृतत्वोपायभूतमत्र विवक्षितम्॥ एवं च प्रश्न अमृतत्वोपायविषयकएव सिद्ध्यतीति भावः। हिततमोपासनविषयकएव प्रश्न इत्येयावधारणार्थं विषयवाक्यमुपादत्ते—प्रतर्दनो हवै इत्यादि॥

वरंवृणीष्वेति। अत्र मुद्रितकोशेषु ' प्रतर्दनोहवै दैवोदासिरिन्द्रस्य प्रियधामोपजगाम। युद्धेन च पौरुषेण च तं हेन्द्र उवाच प्रतर्दन वरते ददामीति। सहोवाच प्रतर्दनः त्वमेव मे वरवृणीष्व यंत्वं मनुष्याय हिततम मन्यसे ' इत्यानुपूर्वी दृश्यते। अत्र पूर्वं ' वरवृणीष्वे 'ति वाक्याभावे ' वरददानी 'ति वाक्यमात्रसत्वे ' वरदेही 'त्येव ब्रूयात्प्रतर्दनः नतु ' त्वमेव वरवृणीष्वे 'ति। वर्ततेतु ' त्वमेव वरवृणीष्वे 'ति। अत पूर्वं 'वरंवृणीष्वे 'ति इन्द्रव क्यसत्त्व एव सङ्गतार्थकत्वं नान्यथा। अतः [illegible]तकोशेषु तदात्व उपलभ्यः ' वरवृणीष्वे ' ति पाठएव भाष्यादृतो युक्त इति प्रतिभाति। इन्द्रप्राणशब्दनिर्दिष्टइति। यद्यपि ' प्राणस्तथाऽनुगमात् ' इति सूत्रे इन्द्रशब्दो नास्ति। तथाऽपि ' वक्तुरात्मोपदेशात् ' इतिसूत्रे ' वक्तारं [illegible] द्यीत ' इति तद्विषयवाक्ये च पूर्वपक्षे वक्ता इन्द्र एव विवक्षितइति स्पष्टम्। 'प्राणोऽस्मि प्रज्ञात्मा तंमाम् ' इत्यत्र असच्छन्दप्रयुक्तः उच्चारयिताऽसच्छन्दार्थ इति सर्वसमतम्। उच्चारयिता चात्र वक्ता

## श्रीभाष्यम्

**संशय —किमयं हिततमोपासनकर्मतयेन्द्रप्राणशब्दनिर्दिष्टो जीव एव ; उत तदातिरिक्त प रमात्मा-इति । किं युक्तं जीव एवेति । कुत ? इन्द्रशब्दस्य जीवविशेष एव प्रसिद्धे , तत्स मानाधिकरणस्य प्राणशब्दस्यापि तत्रैव वृत्ते । अयमिन्द्राभिधानो जीव प्रतर्दनेन 'त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे ' (३ १) इत्युक्त ' मामुपास्व ' (३ १)इति स्वात्मोपासनं हिततममुदिदेश । हिततमञ्चामृतत्वप्राप्त्युपाय एव । जगत्कारणोपासनस्यै**

## श्रुतप्रकाशिका

किमुपक्रमावगत वाष्ट्रहननादिलिङ्गानुरोधेनानन्दादिवर्णनम् । उतान दादिलिङ्गानुगुण्याय वाष्ट्रहननादिवर्णनम् । तदर्थं 'मामुपास्व ' इति किं स्वोपासनमुच्यते ? उत स्वावस्थपरमात्मोपासनमिति विचार । यदा स्वोपासनोक्ति तथा त्वाष्ट्र वधाद्यनुगुणमानन्दादेर्वर्णनीयत्वेनान दादिगुणानाममुख्यत्वाद्धिततमोपासनकर्मतयोक्त इन्द्रइति जगत्कारण प्रसिद्धजीवभाव इन्द्रइति पूर्वपक्षे फलफलिभाव । यदा स्वावस्थपरमात्मोपासनोपदेश तदा आन दादिगुणानुगुण वाष्ट्रवधादेर्वर्णनीयत्वात् आनन्दादिगुणानां मुख्यत्वाद्धिततमोपासनकर्मीभूतेन्द्रप्राणशब्दानिर्दिष्ट परमात्मेति 'सर्ववेदान्तवेद्य जगत्कारणब्रह्म पर मात्मेति राद्धान्ते फलफलिभाव । जीवविशेष एव प्रसिद्धेरिति । अनेन जीवमात्रपक्षस्यानुदयात्सूचित । प्राणशब्दस्य कथं जीवपरत्वमित्यत्राह—तत्समानाधिकरणस्येति । अनेन प्राधान्येन प्राणपरत्वशङ्काऽनु त्थानमप्यर्थात्सूचितम् इन्द्रस्य जीवत्वे कथं कारणस्य जीवानतिरिक्तत्वमित्यत्राह—अयमिति । स्वात्मोपासनं हिततममुपदिष्टमस्तु तत किमिन्द्रस्य जग-त्कारणत्व इत्यत्राह–हिततमइति । तत किमित्यपेक्षाया मुमुक्षूपास्यत्वस्य कारणत्वव्याप्तिं दर्शयति जगदिति । अत इति पूर्वपक्षोपसंहार ॥

## गूढार्थसंग्रह

इन्द्रएव, अत 'प्राणोऽसि' इति वाक्येऽपि इन्द्रएव प्राणशब्दार्थं पर्यवसित । इदमतदधिकरणविषयवाक्यम् । प्राणशब्द स्याभ्यासोऽपि वर्तते तद्वदिन्द्रस्यापि उत्तरत्र वक्ष्यमाणोपासात्रैविध्यवाक्यमपीदमेव । एतच्चाप्यर्येण सूत्रे प्राणशब्दनिर्दे-शेऽपि प्राणशब्द नेन्द्रव्यावृत्त्यर्थं सूत्रे उपात्त उत्तरसूत्रविरोधात् । अत इन्द्रप्राणशब्दद्वयनिर्दिष्ट एवात्र विचारविषय इति भाव । (श) भाष्ये देवतात्मा जीव इति पृथङ्निर्देशो नघटत । श्रुतौ सूत्रेच देवताशब्दस्याभावात् 'नवक्तु रात्मोपदेशात् ' 'उपासात्रैविध्यात् ' इत्युत्तरसूत्रद्वयेऽपि जीवस्यैव वक्तुर्निर्देशात् । 'वक्तुरात्मे'त्यस्योत्तरसूत्रस्य 'सम आत्मेति विद्यात् ' (कौषीतकी) इत्यन्तिमश्रुतिस्थस्य अत्रानुषङ्गेण वक्त्रभिन्न पुरुष एव प्रथमसूत्रे प्राणशब्दवाच्य इत्यर्थं सिद्ध्यतीति इन्द्रो जीवएव परमात्मविलक्षण पूर्वपक्षे विवक्षितइति सूत्रकाराशयस्य निर्मत्सराणां विदुषां स्फुटत्वात् इत्यत्र जीवातिरिक्त देवतात्मा नात्र विवक्षितइति निगमयति,जीवएवेति 'जीवमुख्यप्राणे त्यत्र प्राणशब्दात् पूर्वं जीवशब्द निर्देशेन प्राणशब्दस्य जीवार्थकत्वेन च वक्ता इन्द्र जीव प्रथमसूत्रविवक्षित इत्येव निर्धारण सम्भवति । प्राणशब्दस्या-भ्यासबाहुल्यात् सूत्रे इन्द्रशब्द विहाय प्राणशब्द प्रयुक्त । 'नवक्तुरात्मा ' ' जीवमुख्यप्राण ' इति सूत्रद्वये जीवस्य पूर्वपक्षहेतुविषयत्व स्पष्टमिति प्रथमसूत्रे सपूर्वपक्षगमक किञ्चिदपि नास्ति प्राणशब्दस्य जीववाचकत्व 'पुंसि भूम्न्यसव प्राणाश्चैव जीवोऽसुधारणम् ' (ना अ क्ष,य ११९) इति कोशप्रसिद्धमेव ॥

'जीवमुख्यप्राणलिङ्गात्' इतिसूत्रे लिङ्गहेतुरनतु श्रुतिरेवेति प्रथमसूत्रे वायुविषयपूर्वपक्षो नयुक्त । प्राणशब्दस्या पीति । प्राणशब्दस्य कोशाज्जीवपरत्व पूर्वमेवोपपादितम् ॥ हिततमञ्चामृतत्वप्राप्त्युपायएवेति । अयमर्थ श्रुतौ विष

श्रीभाष्यम्

चामृतत्वप्राप्तिहेतुता 'तस्य तावदेव चिरं यावन्नविमोक्ष्ये अथ सम्पत्स्ये' (छां.६.१४.२) इत्यवगता। अतः प्रसिद्धजीवभाव इन्द्र एव कारणं ब्रह्म॥ इत्याशङ्कायामभिधीयते–

'प्राणस्तथाऽनुगमात्' इति; अयमिन्द्रप्राणशब्दनिर्दिष्टो न जीवमात्रम्; अपि तु जीवादर्थान्तरभूतं परंब्रह्म। 'स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृतः' (कौ.३.९) इतीन्द्रप्राणशब्दाभ्यां प्रस्तुतस्याऽनन्दाजरामृतशब्दसामानाधिकरण्येनानुगमो हि तथा सत्येवोपपद्यते॥

## सू–३० न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमाह्यस्मिन् [१-१-११]

श्रुतप्रकाशिका

राद्धान्तं प्रतिजानीते अयमिति। उपपादयति सएषइति। अनुगमः पूर्ववाक्यप्रकृतस्योत्तरवाक्यसम्बन्धः। स्ववाक्यानभिव्यक्तस्य सिद्धान्तहेतोरुत्तरवाक्याभिव्यक्ततया अनुगमादित्युक्तम्। आकाशाधिकरणे ज्योतिरधिकरणे च सिद्धान्तहेतोर्हि स्ववाक्यपूर्ववाक्याभिव्यक्ततया अनुगमादित्युक्तिः। सौत्र तथापद साधकाकारपरामर्शित्वेन व्याचष्ट आनन्दाजरेति। प्राणःपरमात्मा तथाऽनुगमात् परमात्मत्वानुगुण्येनानुगमादिति सूत्रयोजना तथाशब्दस्य साध्याकारपरामर्शित्वमप्यभिप्रयन्नाह–तथासत्येवेति। तथासति इन्द्रप्राणशब्दनिर्दिष्टे परस्मिन्ब्रह्मणि सत्येवेत्यर्थः। प्राण.परमात्मा तथाऽनुगमात् परमात्मतयाऽनुगमादिति योजना। अनुगमक्रियाविशेषण तथाशब्दः। बुद्धिस्थसाध्यसाधकधर्मवत्तयाऽनुगमो विवक्षित इत्यभिप्रायः। आद्यसूत्र 'सएषप्राणएव' इत्यादिवाक्यमात्रविषयक व्याख्यातम् नतु परैरिव वाक्यान्तरस्थहेतवो प्रत्यक्षविवक्षितत्वेनोक्ताः 'अध्यात्मसम्बन्धभूमा' इति द्वितीयसूत्र एव बहुवाक्यस्थहेतुबाहुल्यस्य विवक्षितत्वावगमात् आनन्दादिगुणप्रतिपादकवाक्यस्य प्राणशब्दाविहितत्वात् तद्गतहेतुपरत्वेनहि प्राणशब्दाविहितसूत्रव्याख्यान युक्तम्। प्राणशब्दविहितस्यापि 'प्राणोऽस्मि' इत्यादेरनुदाहरणमन्यविशेषणभूतपरमात्मलिङ्गत्वात् 'प्राणेऽर्पिता' इत्यस्यानुदाहरणंतु सूत्रान्तरकार्यत्वात्॥

## सू–३० न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमाह्यस्मिन् [१-१-११]

गूढार्थसंग्रहः

क्षित इति पूर्वमेव निरूपितम्। आनन्दोऽजरेत्यादि—अनुगमोहि तथासत्येवोपपद्यते इति 'इन्द्रप्राणशब्दनिर्दिष्टस्यैव आनन्दत्वाजरत्वामृतत्वादिश्रवणात्' इति 'तथेति प्रकारवचनः' इति च दीपे उक्तम्। अतः 'तथाऽनुगमात्' इत्यस्यानन्दत्वाजरत्वामृतत्वाद्यनुगमादित्येवार्थः। 'अध्यात्मसम्बन्धभूमाह्यस्मिन्' इत्यत्रोपक्रमप्रभृ त्युपसंहारपर्यन्तोक्तसर्वधर्मसम्बन्धभूमा वक्ष्यते। अत्र 'प्राणोऽस्मि प्रज्ञात्मा' 'मामुपास्व, मामेव' इत्यत्र समानाधिकरणशब्देन अस्मच्छब्देन च वक्तुरिन्द्रस्यैव विवक्षा प्रतीयते। तच्च 'एषआत्मा' इत्युपसंहारः आत्मशब्दमुख्यार्थः इन्द्रान्तर्यामेव विवक्षित इति निर्णयसम्भवति। एवच सामानाधिकरण्योपपादकस्योपसंहार एवत्वेन उपसंहारस्य धर्मानुगम. पूर्वपक्षव्यावर्तकः

## श्रीभाष्यम्

यदुक्तमिन्द्रप्राणशब्दनिर्दिष्टस्य ' आनन्दोऽजरोऽमृतः ' (कौ.३.९) इत्यनेनैवाऽर्थादयं परं ब्रह्मेति । तन्नोपपद्यते, ' मामेव विजानीहि ' ' प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व ' (कौ.३.१) इति वक्ताहीन्द्रः ' त्रिशीर्षाणं त्वाष्ट्रमहनम् ' (३.१) इत्येवमादिना त्वाष्ट्रहननादिभिः प्रज्ञातजीवभावस्य स्वात्मन एवोपास्यतां प्रतर्दनायोपदिशति । अत उपक्रमे जीवविशेष इत्यवगतेसति ' आनन्दोऽजरोऽमृतः ' (३.९) इत्यादिभिरुपसंहारस्तदनुगुण एव वर्णनीय इतिचेत्—

परिहरति (अध्यात्मसंबन्धभूमाह्यस्मिन्)आत्मनि यस्सम्बन्धस्सोऽध्यात्मसम्बन्धः । तस्य भूमा भूयस्त्वम्, बहुत्वमित्यर्थः । आत्मन्याधेयतया सम्बध्यमानानां बहुत्वेन सम्बन्धबहुत्वम् । तच्चास्मिन्वक्तरि परमात्मन्येव हि सम्भवति । ' तद्यथा रथस्यारेषु नेमिरर्पिता

## श्रुतप्रकाशिका

निषेध्याध्याहारेण नञर्थमाह—यदुक्तमिति । त्वाष्ट्रवधादीत्यत्रादिशब्देन सालावृकयतिप्रदानदैत्यादिसन्धानपौलोमनिरासेन्द्रशब्दा विवक्षिताः, ततःकिमित्यत्राह–अतइति । उपक्रमो बलीयानित्यर्थः ' विकारशब्दान्नेतिचेन्ने'तिवत् सूत्रे सिद्धान्तखण्डे निषेधवाचिशब्दाभावात् खण्डान्तरस्य सिद्धान्तपरत्वद्योतनाय परिहरतीत्युक्तम् । भूमशब्दो भूयस्त्वशब्देन व्याख्यातः । भूमशब्दप्रकृतिं दर्शयितुं बहुत्वमित्युक्तम् आपेक्षिकंहि बहुत्वं पूर्वपक्षयुक्तिबहुत्वादपि बहुतरमिति भावः । सबन्धबहुत्वनिबन्धनमाह–संबध्यमानानामिति । सबन्धः कीदृश इत्यत्राह–आधेयमिति । अस्मिन्निनितिपदं व्याचष्टे तच्चेति । आधेयतया सबन्धे श्रुतिमाह —तद्यथेति । नकेवलमुपसंहारवचनमात्रं किंतु पूर्वमप्यस्तीति बहुत्वाभिप्रायेण ' सएषप्राण एव ' इत्यादिकमुपात्तम् । पूर्वोपात्तश्रुत्यर्थमाह–भूतमात्रेति ॥

## गूढार्थसंग्रह॰

प्रबलइत्यभिप्रेत्य भाष्यादौ धर्मानुगम उक्तः । ' तथाऽनुगमः ' इत्यत्र तथाशब्दप्रयोगेण निर्विशेषस्य नात्र विवक्षेति सूत्रकाराशयस्स्फुटं प्रतीयते ॥

' उपासात्रैविध्यात् ' इत्यत्र श्रुतौ ज्ञानोपासनवाचिशब्दयोरेकार्थत्वस्फुटीकरणेण ज्ञानं परब्रह्मविषयकम् उपासनमपरब्रह्मविषयकमिति मतं श्रुत्यननुगुणमित्युत्तरत्र स्फुटीभविष्यति इत्येवमादिनेति । ' अरुन्मुखान्यतीन्सालावृकेभ्यः प्रायच्छम् ' इत्यत्र सालावृकप्रदानं ' बह्वीस्सन्धाऽतिक्रम्य दिवि प्राह्लादीनतृणहमन्तरिक्षे पौलोमान् पृथिव्यां कालकञ्जान् ' इत्यत्रोक्तं बहुसन्धातिक्रमपूर्वकं प्रह्लादपुत्रहननं अन्तरिक्षे पुलोमसुतहननं पृथिव्यां कालकञ्जहिंसनं चादिशब्देन विवक्षितम् । ' सम आत्मेति विद्यात् ' इत्यत्र इन्द्रान्तर्यामी विवक्षित इत्यभिप्रेत्य ह— आत्मनि यस्सम्बन्धइति । तथेति सूत्रस्थशब्दानुरोधेन आत्मनि विद्यमानप्रकारसम्बन्धएव अध्यात्मसम्बन्ध इत्यभिप्रेत्याह–आत्मन्याधेयतयेत्यादि अध्यात्मसम्बन्धभूमेत्यनेन प्रथमसूत्रस्य तथेतिशब्दार्थः सम्यग्विशदीकृतः । आत्मन्याधेयतया विद्यमानाः प्रकाराः ' तद्यथा रथस्ये'ति श्रुत्यैव प्रदर्शिता इत्यभिप्रेत्याह—तद्यथारथस्येत्यादि पूर्वसूत्रविवक्षितश्रुतिपूर्ववाक्यमात्रविवक्षितमिति विशिष्टवाक्योपादानम् । तेन ' सएषप्राणएव प्रज्ञात्मा आनन्दोऽजरोऽमरः ' इति निर्विशेषपरवाक्यम् ' तद्यथारथस्ये'त्यादितु कल्पितार्थविषयकं 'विषयेन्द्रियव्यवहारानभिभूत'मिति परेषां भाष्यम् (रत्नप्रभा) । 'प्रज्ञामात्रासुइति वागाद्यवच्छिन्नप्रज्ञात्मकजीवांशेषु' इति ब्रह्मविद्याऽभरणम् ॥

41

## श्रीभाष्यम्

**नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पितास्स एष प्राण एव प्रज्ञात्माऽनन्दोऽजरोऽमृतः ' (कौ.३.९) इति भूतमात्रशब्देनाचेतनवस्तुजातमभि-**

## श्रुतप्रकाशिका

ननु कथं प्रज्ञामात्राशब्देन चेतनवराभिधानम्। वाग्घ्राणचक्षुःश्रोत्रजिह्वा पाणिपादस्थशरीरमनांसि च प्रतिपाद्य **'तावा एतादशैव भूतमात्राअधिप्रज्ञं दशप्रज्ञामात्रा अधिभूतं यदुहवैदश भूतमात्रा नस्युः न प्रज्ञामात्रास्स्यु यदुहवै नप्रज्ञामात्रास्स्यु नभूतमात्रास्स्यु.'** इति भूतमात्राः प्रज्ञामात्राश्च प्रत्येक दशसङ्ख्याः परस्पर साकाङ्क्षा उक्ताः तत्र प्रज्ञामात्राशब्दो गन्धादिचतुष्टयवागादिव्यापारचतुष्टयशरीरसुखदुःखमन्तव्यविदश्रामिपरः। यद्वा भोग्या गन्धादयः शरीरानुप्रविष्टभूतांशाश्च भूतमात्राः। दशेन्द्रियाणि प्रज्ञामात्राः प्रत्येक दशसङ्ख्याश्रवणबलादनुक्ता पदार्थाश्च जहल्लक्षणया विवक्षिता इत्यभ्युपेत्य प्रज्ञामात्राशब्दस्य जीवपरत्वे दशसङ्ख्याविरोधात्। एव **'ताश्च ताश्च दशदशोक्ता. नह्यन्यतरतो रूपं किंचन सिध्येत् नोएवैतन्नाना '** इत्यासामुभयविधानामपि परस्पराविनाभावमुक्त्वा तत्र दृष्टान्तमाह–**'तद्यथारथस्य'** इति वाक्येन। नच वाच्य **'योवै प्राण. साप्रज्ञा याप्रज्ञा न प्राणस्सहह्येतावस्मिन् शरीरे वसत सहोत्क्रामतः'** इति प्रकृतजीवविषयोऽय प्रज्ञामात्राशब्द इति मात्रान्तेन प्रज्ञाशब्देन व्यवहितवाक्यस्थकेवलप्रज्ञाशब्द

## गूढार्थसङ्ग्रहः

तदेतत् **'अध्यात्मसम्बन्धभूमा'** इत्यत्रात्मन्येव सम्बन्धबहुत्वमात्मनि बहुधर्मकथनएवोपपद्यते। आत्मन्शब्दः 'सम आत्मेति विद्यात्' इति श्रुतिघटकात्मन्शब्दसमानार्थकः तत्रात्मशब्दस्य निर्विशेषपरत्व नसंभवति। सम्बन्धबहुत्वेन वक्तुरिन्द्रस्य व्यावृत्तेरत्रोक्तेः 'वक्तुरात्मे'त्यत्र वक्तृभिन्नात्मैव विवक्षितइति सर्वसमतम्। तन्त्येयमेव श्रुतिर्मूलम् श्रुतौ षष्ठ्यर्थसंबन्धः इन्द्रभिन्नपरमात्मा विवक्षितइति निर्णयस्सूत्रकारसंमतः। श्रुतौ पूर्वं बहुप्रकारसम्बन्धकथनेन 'समआत्मेतिविद्यात्' इत्यत्र षष्ठ्यर्थसम्बन्धः विवक्षित इति सूत्रकृदाशयो निर्मत्सराणा विदुषा स्फुटः। सम्बन्धशब्दस्य लिङ्गपरतया व्याख्यान न्यायरक्षामण्युक्तमभिनिवेशमूलकमेव। लिङ्गशब्दविहाय सम्बन्धशब्दनिर्देशे प्रयोजनाभावादित्यभिप्रेत्य आनन्दरूपसविशेषपरब्रह्मणि बहुप्रकारसम्बन्ध श्रुत्यर्थमाह–**भूतमात्रशब्देनेति**। शरीरे जीवसम्बन्धदशायां शरीरस्य पञ्चभूतविकारत्वेन पञ्चभूतजीवपरमात्मनां शरीरे सम्बन्धोऽस्तीत्यविप्रतिपन्नोऽर्थः। तत्र शरीरस्य नेमिस्थानापन्नत्वेन पञ्चभूतानां नेमिस्थानापन्नत्वम्। जीवसत्त्वएव शरीरस्य सत्त्वम्। नेमेः अरसम्बन्धमन्तरा चक्रे स्थितिः न संभवति, जीवस्य परमात्मसम्बन्धमन्तरा स्थितिर्न संभवतीति नाभिस्थानापन्ने परमात्मनि जीवानां स्थितिः। एवं च भूतानां जीवानां च परमात्माधीनत्वमुक्त भूतानां जीवद्वारा जीवस्य च साक्षात्परमात्मनि स्थितिः। इत्थ च सर्वसत्तानियामकत्व परमात्मनः अत्र प्रतिपादित भवतीति भूतमात्रशब्दः अचेतनपरः, प्रज्ञामात्रशब्दः जीवपरः, प्रज्ञाशब्दस्य ज्ञानवाचित्वात् सएष प्राणएव प्रज्ञात्मा इत्यत्र प्रज्ञाशब्दस्य ज्ञानपरत्वेन प्रज्ञात्मशब्दस्य परमात्मपरत्वम्। पूर्वं 'यत्रैतत्पुरुषस्सुप्तः स्वप्नं न कंचन पश्यति अथास्मिन्प्राण एवैकधा भवति' इत्यत्र प्राणशब्दःपरमात्मपरः। तदनन्तर 'यथाऽग्नेर्ज्वलतो विस्फुलिङ्गा विप्रतिष्ठेरन् एवमेतस्मादात्मनस्सर्वे प्राणा यथायतन विप्रतिष्ठन्ते' इत्याद्युक्तम्। तत्राग्निविस्फुलिङ्गदृष्टान्तेन अग्निविस्फुलिङ्गयोरेकजातीयत्ववत् जीवपरयोरेकजातीयत्व बोधितम्। इद च वाक्य द्विधाऽभ्यस्तम्। एतदुत्तर गार्ग्य(अजातशत्रुब्राह्मणे) 'यदा सुप्तस्स्वप्नं न कंचन पश्यति अथास्मिन्प्राण एवैकधा भवति सयदा प्रतिबुध्यते यथाऽग्नेर्ज्वलतो

## श्रुतप्रकाशिका

निर्दिष्टजीवप्रत्यभिज्ञानाभावात्, अनन्तरपूर्ववाक्यप्रकृतदशछन्दप्रज्ञामात्राणामेव स्वतः प्रत्यभिज्ञायमानत्वाच्चेति ; तद युक्तम् अर्थविरोधात् दृष्टान्तदार्ष्टान्तिकभावानुपपत्तेश्च, प्रत्यभिज्ञानस्य भग्नत्वात् । नहि वागादीन्द्रियाणि भूतमात्राणाम् अयः भूतछन्दानुरूपशरीरमेवहीन्द्रियाश्रयइत्यर्थविरोधस्फुट । तथा दशैव भूतमात्रा अधिप्रज्ञ दशप्रज्ञामात्रा अधिभूतम् इति परस्परसापेक्षत्व पूर्ववाक्योक्तं अरनाभिदृष्टान्तवाक्येतु न परस्परसापेक्ष व प्रदर्श्यते ' भूतमात्राः प्रज्ञामात्रास्व

## गूढार्थसंग्रहः

विस्फुलिङ्गा विप्रतिष्ठेरन्, एवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते— यथा क्षुरः क्षुरधाने निहितः स्याद्वि-श्वम्भरो वा विश्वम्भरकुलाये तदात्मेष प्राज्ञ आत्मा इद शरीरमनुप्रविष्ट आलोमभ्य आनखाग्रेभ्यः तमेतमात्मानमेतआ-त्मानोऽन्ववस्यन्ति यथा श्रेष्ठिन स्वाः तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथवा श्रेष्ठिन स्वाभुञ्जन्ते एवमेष प्राज्ञ आत्मा एतैरात्मभिर्भुङ्क्ते यथा श्रेष्ठी स्वैरेववैनमात्मान एतआत्मानोऽन्ववस्यन्ति यथा श्रेष्ठिन स्वाः सयावद्धवा इन्द्र एतमात्मान नविजज्ञौ ताव-देनमसुरा अभिबभूवुः । सयदा विजज्ञावथ हत्वाऽसुरान् विजित्य सर्वेषा भूताना श्रैष्ठ्य स्वाराज्यमाधिपत्य पर्येति तथो एव विद्वान्सर्वेषा भूताना श्रैष्ठ्य स्वाराज्यमाधिपत्य पर्येति यएववेद यएववेद ' इति बृहदाण्यके अजातशत्रुब्राह्मणान्ते— ' यत्रैष एत सुप्तोऽभूद्यएषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते ' (बृ.४.१. ) ' अथ यदा सुषुप्तो भवति एवमेवैष एतच्छेते —यथाऽग्ने क्षुद्राः विस्फुलिङ्गा व्युच्चरन्ति । एवमेतस्मादात्मनस्सर्वे प्राणाः—सर्वाणि भूतानि व्युच्चरन्ति(का.पा) सर्व एत आत्मनोव्युच्चरन्ति ' (बृ.१.ब्रा) ' सवा अयमात्मा सर्वेषा भूतानामधिपतिस्सर्वेषा राजा ' (६.ब्रा) ' तद्यथानाभौ च रथनमौ चारास्सर्वे समर्पिताः एवमेवैतस्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवाः सर्वेलोकास्सर्वे प्राणाः सर्वएत आत्मान-स्समर्पिताः (४.५)इति ' तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत असौ नामेदरूपमिति । सएष इहप्रविष्टआ नखाग्रेभ्यः यथा क्षुरः क्षुरधाने निहितस्स्यात् विश्वम्भरो वा विश्वम्भरकुलाये तन्नपश्यन्ति ' (बृ १.४) इतिचोक्तम् । अत्र बृहदारण्यककौषीतकीवाक्ययोरैकार्थ्यं स्फुट प्रतीयते ॥

' यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति ' इति बृहदाण्यकवाक्यविवरणे राजकुमारनयः द्रमिडाचार्यसंमत (श्रु.उ) भाष्ये प्रदर्शितः । अत्र व्युच्चरणकर्तृत्वेनोक्ताना सर्वेषां ' सवा अय सर्वेषां भूतानामधिपतिस्सर्वेषां राजा ' इत्यादौ राज्ञि भूतानि सर्वात्मना समर्पित च प्रतिपादितम् । अत्र राजपदसत्त्वेन राजकुमारनयः अत्रैव विवक्षित इति स्पष्ट प्रतीयते । ' एक इद्राजा जगतो बभूव ' इति हिरण्यगर्भसूक्ते ' इन्द्रो राजा ' इति स्वर्णघर्मानुवाक (तै.आ) च राजशब्द प्रयुक्तः अत्रारनाभिदृष्टान्त बृहदारण्यकोक्तः कौषीतकीब्राह्मणेऽपि प्रदर्शितः इत्थ च बृहदारण्यकैकार्थ्यस्य कौषीतकब्राह्मणे स्पष्ट तथा राजकुमारनयोऽत्रापि विवक्षितः । ' तमेतमात्मानमेतमात्मान अन्ववस्यन्ति ' इत्यत्र कुमारभूतजीवाना राजभूत पितुश्च विवक्षितत्वेन उभयोर्भोगो विवक्षितः सत्त्र ज्ञानानन्तरकालिक नतु सुषुप्तिकालिकः इन्द्रस्य ज्ञानानन्तरमेव सुरवि-जयोक्ते जीवानां ज्ञानानन्तरमेव सर्वपापप्रहाणोक्तेश्च । पराशरमुनिश्च 'त्व माता सर्वलोकानां देवदेवो हरि पिता इत्यादि श्रीस्तवे इन्द्रवाक्यमभिधायएतत्स्तुतिमूलज्ञानेन 'त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य मृधेऽसुरान्' इत्येतदुपनिषत्तात्पर्यं स्पष्टी चकार । एतदुपनिषद्द्वयपर्यालोचनाया परोक्तरीत्या नाद्वैतपर कुमारस्य पितुश्च सर्वथैवयासम्भवात् । किंतु जीवब्रह्मणोर्भे दपर मुक्तौ समानभोगपरत्वपरश्चेति उपनिषत्तात्पर्यमकामेनापि स्वीकर्तव्यमिति निर्मत्सराणां विदुषा स्फुटम् । जिज्ञासाऽ धिकरण (७६४.पु) श्रुतसम्मितायामस्य वाक्यस्य राजकुमारनयो विवक्षित इति सम्यक्सूचितम् । एवमुपनिषदर्थे श्रुति-तात्पर्यविषयभूतेसिद्धे अरनाभिदृष्टान्तमूलकभेदोक्तेः परैः काल्पनिकार्थकत्व यदुक्त तदभिनिवेशमूलकमिति सिद्धम् ॥

## श्रुतप्रकाशिका

र्पिता इत्युक्त्वा प्रज्ञामात्रा भूतमात्रास्वर्पिता इति नह्युक्तम् तथासतिहि परस्परसापेक्षत्वे(न) दृष्टान्तता विवक्षिता स्यात्। अपितु 'प्राणे अर्पिता' इत्येवोक्तम्। प्राणश्च परमात्मा अनन्तरमेव 'सएष प्राणएव प्रज्ञात्माऽनन्दोऽजरोऽमृतः' इत्युक्तेः अतो दृष्टान्तदार्ष्टान्तिकभावानुपपत्तिः अतःप्रत्यभिज्ञानभङ्गकहेतुरुद्भावात् 'तपसा चीयते ब्रह्म, तस्मादेतद्ब्रह्म इति वाक्यद्वयस्थब्रह्मशब्दयोरिव पूर्वापरवाक्ययोः प्रज्ञामात्रशब्दयोर्नैकार्थ्यम् ॥

किंच द्वयोर्वाक्ययोर्मिथस्सन्निकृष्टत्वेऽप्यन्यतरस्य समवन्मुख्यार्थस्तयोरैयार्थ्यश्रद्धया नत्याज्यः तयोरेव ब्रह्मशब्दयो स्तथा दर्शनात्; प्रज्ञाशब्दश्चेन्द्रियेष्वमुख्यः जीवेषुतु मुख्यः तेषां ज्ञानस्वरूपत्वात्। प्रज्ञाशब्दोऽपि तत्तदर्थविषयज्ञ न-परइतिचेत्तर्हि दृष्टान्तविरोधः शरीरगतानां भूतमात्राणां वैषयिकज्ञानैर्घार्यत्वाभावात् एवमर्थविरोधादिभिर्नार्थैक्यमिति(हि) मात्राशब्दः सघातैकदेशाभिप्रायः। विशिष्टस्य ब्रह्मण एकदेशभूतानिहि चिदचित्तत्त्वानि। किंच अस्मिन्प्रकरणे प्राणश ब्दस्येव प्रज्ञाशब्दस्यापि बाह्यर्थविषयप्रयोगदर्शनान्नैकार्थनियतत्वम्, अतश्च जीवविषयत्वं युक्तमाश्रयितु, विशेषतो जीवे प्रयुक्तत्वाच्च प्राणशब्दस्तावन्मुख्यप्राणे प्रयुक्तः 'यावदस्मिन्शरीरे प्राणो वसति तावदायुः' इति तथेन्द्रियेषु 'प्राणं प्राणंत सर्वेप्राणा अनुप्राणन्ति' इति; तथा परमात्मनि 'यत्रैतत्पुरुषस्स्वप्नं नकथञ्चन पश्यति अथास्मिन्प्राण एवैकधा भवति' इति। तथा जीवेषु 'एतस्मादात्मन प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः' इति नचात्र बहुवचनान्तः प्राणशब्दः पञ्चवृत्तिवायुपरः तस्य सुषुप्त्युपरत्यभावान्निष्क्रमाणानुपपत्तेः। नापीन्द्रियपरः देवशब्देन पृथगुक्तत्वात् ॥

नच देवशब्दः प्रकाशरूपज्ञानवाची लोकशब्देन तदुक्तेः अस्वारस्याच्च। नच लोकशब्दो कनीयविषयपरः देवेभ्योलोका इत्यत्र विषयाणां ज्ञानतो निष्क्रमणाभावात्। ज्ञानैर्ग्राह्या इत्यर्थइति चेन्न [illegible] प्रसङ्गाच्च अतोऽस्मिन्वाक्ये बहुवचनान्तः प्राणशब्दो जीवपरः [illegible] प्राण शरीरकत्वात् तथा प्रज्ञाशब्दश्च जीवे तावत्प्रयुक्तः 'प्राणोऽस्मि प्रज्ञात्मा' इति प्रज्ञा रूपआत्मा प्रज्ञात्मा तथा योवै प्राणस्साप्रज्ञाया प्रज्ञासप्राणः नह्येतावस्मिन्शरीरे वसतस्सहोत्क्रामतस्तस्यैषैव सिद्धिरेतद्विज्ञानं यत्रैतत्पुरुषस्स्वप्नं नकथञ्चन पश्यति अथास्मिन्प्राण एवैकधा भवति' इति। नचाय प्रज्ञ शब्दउपरितनप्रकरणगतप्रज्ञाशब्दवन्मनोविषय. 'सहोत्क्रामते' इति श्रवणात् 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इति श्रुत्यन्तरैकार्थ्याच्च, तथोत्तरत्र वागादीन्द्रियाणां जीवोपकरणत्वप्रपञ्चनेन पृथङ्निर्देशाच्चाय प्रज्ञाशब्दो जीवपरः 'अस्यै प्रज्ञायै सर्वाणि भूतान्येकं भवन्ति' इत्युपक्रम्य 'वागेवास्या एकमङ्गमदूदुहत् प्राण एवास्या एकमङ्गमदूहत्' इत्येवमादिपर्याय. पादपर्यन्तानां करणानां क्रमुक्त्वा 'प्रज्ञैवास्या एकमङ्गमदूहत्' इत्युक्तम्। अत्रास्या इति चतुर्थ्यन्त पद प्रज्ञाशब्दनिर्दिष्टजीवपरम् प्रथमान्तप्रज्ञाशब्दोहि मनोवाची '(नेत्यां,नीतिन,विजिज्ञासी तैतने तारनियात्' 'नमनो विजिज्ञासीत मंतारं विद्यात्' इति स्थानप्रमाणात् तस्माच्चतुर्थ्यन्तःप्रज्ञाशब्दः प्रथमान्तप्रज्ञाशब्दवाच्यमनःकरणकजीवविषयः अतस्सहोत्क्रमणापृथगुपदेशाभ्यां 'योवैप्राणस्सा प्रज्ञा' इति प्रज्ञाशब्दो जीवविषयः। उत्क्रमणश्रुतिप्रत्यभिज्ञापकत्वात् वागादीनामुपकरणत्वाच्च बुद्धिपरत्वमप्यनुपपन्नम् अतो जीवविषयत्व दृष्टम्। तथा मनसि प्रज्ञाशब्द प्रयुज्यते 'नहि प्रज्ञापेतावाङ् नामाकिंचन प्रज्ञापयेदन्यत्र मेमनोऽभूदिति नाहमेतन्नाम प्राज्ञासिषम्' इति तथेन्द्रियेषु च। 'दशप्रज्ञामात्राः' इति। अतःपूर्व प्रज्ञाशब्दनिर्दिष्टो जीवइह प्रज्ञामात्रशब्दोक्तः जात्यभिप्रायेणैकवचनानिर्दिष्टस्य तत्तदभिप्रायेण बहुवचन निर्देशउपपद्यते, यथा 'सता सोम्य तदा सम्पन्नो भवति, सार्वसम्पद्य नविदुस्सतिसम्पत्स्यामहे' इति च ॥

### श्रीभाष्यम्

**धाय प्रज्ञामात्राशब्देन तदाधारतया चेतनवर्गं चाभिधाय तस्याप्याधारतया प्रकृतमिन्द्रप्राण शब्दाभिधेयं निर्दिश्य तमेव ' आनन्दोऽजरोऽमृत. ' (३.१) इत्युपदिशति । तदेतच्चेतनाचेतनात्मककृत्स्नवस्त्वाधारत्वं जीवादर्थान्तरभूतेऽस्मिन् परमात्मन्येवोपपद्यत इत्यर्थः ॥**

**अथवा (अध्यात्मसम्बन्धभूमाह्यस्मिन्) परमात्मासाधारणधर्मसम्बन्धोऽध्यात्मसम्बन्धः । तस्य भूमा बहुतरं हि अस्मिन्प्रकरणे विद्यते । तथाहि प्रथमं 'त्वमेव मे वरं वृणीष्व**

### श्रुतप्रकाशिका

यद्वा माभूत् प्रज्ञामात्रशब्दस्यार्थवैरूप्यभयेन अस्माभिरुदाहृतवाक्ये प्रज्ञामात्राशब्दस्य भूतेन्द्रियाभिमानिदेवतारूपदशविधचेतनपरत्वं स्यात् । तदानीमपि तदाधारतया चेतनाधारत्व प्रत्यर्थं एवं प्रकरणदर्शनेन दृष्टम् उपपत्तिजातं सर्वं साध्य एव व्यक्तीभविष्यति । प्रज्ञामात्राशब्देन तदाधारतयेति । नहीन्द्रियाणां पृथिव्यादिभूताधारत्वं युक्तमितिभावः । चेतनवर्गमिति । प्राकरणिकप्रज्ञ शब्दैकवचन जात्यभिप्रायमिति भावः । तस्याप्याधारतया प्रकृतमिन्द्रप्राणशब्दाभिधेयं निर्दिश्येति । ' ताया एता. ' इत्यादिपूर्ववाक्योक्तं परस्परसापेक्षत्वे दृष्टान्तत्व न घटते, प्रज्ञामात्राणामाधारान्तरकथनादिति भावः । तस्य च परमात्मत्वं कथमित्यत्राह—तमेवानन्दोऽजरइति । एवमर्थविशेषदृष्टादार्ष्टान्तिकभाववैषम्यमुक्त्य वप्राकरणिकप्रयोगसाधारण्यैरनुगृहीतस्य श्रुतिवाक्यस्यार्थमुपन्यस्य सूत्रार्थमुपसंहरति तदेतदिति

एवं प्रथमयोजनाया तद्यथा रथस्यारेषु इत्यादिवाक्यमेकमेव विषयस्स्यात् ' सएषप्राणएव ' इत्येतद्वाक्योदाहरणं वाक्यान्तराण्यपि परब्रह्मपराणि सन्तीति प्रदर्शनार्थम् तेनोपक्रमस्वारस्यादपि स्कृदादस्वारस्य प्रबलमिति फलितम् । एवमन्वयविम्वारस्यप्राबल्यस्यार्थसिद्ध वादपि कण्ठेनैव वक्तुमिति मुखान्तरेण योजयति अथवेति । पूर्वयोजनाया अन्यथा ध्यात्मशब्दस्या मनीत्यर्थः । अस्या वा मान वर्तमानपरे ऽध्यात्मशब्दः उपसंहारवाक्यमुपक्रमबाधितमिति पूर्वपक्षिणोक्तं तत्रेदमुत्तरमुक्तं भवति उपक्रमोपसंहारौ वाक्यावयवौ तयोरवयवभूतयोः परस्परविरोधे उपक्रमप्राबल्य नत्वन्वयविविरोधे । अत्रत्वनेकावान्तरवाक्यैः पर्यालोचितैःप्रतिपन्नस्य महावाक्यार्थस्यावयविनो विरोध अवयवभूतोपक्रमो दुर्बलः । यथा गङ्गायाघोषः प्रतिवसतीत्यादिषु घोषःप्रतिवसतीति पदाभ्यां प्रतिपन्नः वाक्यार्थमुपक्रमस्थगङ्गापद नबाधते अपितु स्वय तदनुगुणार्थंभवति तद्वदिति तदेतदभिप्रयन् परमात्मासाधारणधर्मभूयस्त्व दर्शयति तथाहीति । ' हिततमं मन्यसे ' इति वाक्य त्वाष्ट्र-

### गूढार्थसङ्ग्रह

' मामेव विजानीहि' इति वक्ता यः इन्द्रः सकौषीतकी एतदुत्तरजातशत्रुब्राह्मणे स्वस्य परमात्माधीन व सम्यग्ज्ञानातीत्यर्थस्य स्फुटतया अत्र वक्तुर्विवक्षा नसम्भवतीति तात्पर्यम्—तदेतत्सर्वमभिप्रेत्याह—जीवादर्थान्तरभूतेऽस्मिन्परमात्मन्येवोपपद्यत इत्यर्थइति । योजनायाचास्या अजातशत्रुब्राह्मणैककण्ठ्येन सर्वेषामात्मनां परमात्माधीन वस्य उक्तया इन्द्रोऽपि तदन्तर्गत इत्यर्थसिद्धत्वनीति अध्यात्मसम्बन्धभूमेत्यत्र सर्वजीवानामात्मसम्बन्धः प्रतिपिपादयिषितः । सम्बन्धिनामचिज्जीवानां बहुत्वेन सम्बन्धबहुत्वमिति सूत्रतात्पर्यं प्रकटीकृतम् ॥

उपक्रमप्रभृत्युपसंहारपर्यन्त बहूनां धर्माणा सम्बन्धस्य प्रतिपादनेन उपक्रममात्रप्राबल्यपर्यालोचनया पूर्वपक्षो नोदेति उपक्रमोपसंहारप्राबल्यस्य ततोऽपि ज्यायस्त्वाच्चेत्यभिप्रेत्य अथवेत्यादिना योजनान्तरमाह—' मामेव विजानीहि ' इत्यादि पूर्ववाक्योक्तोपर्न. इन्द्रे नसम्भवतीत्यभिप्रेत्याह—प्रथममित्यादिना । हिततमशब्दस्य भगवदुक्तार्थ एव उक्तः ।

## श्रीभाष्यम्

**यं त्वं मनुष्याय हिततमं मन्यसे ' (३.९) इति, ' मामुपास्व ' (३.९) इति च परमात्मासाधारणमोक्षसाधनोपासनकर्मत्वं प्राणशब्दनिर्दिष्टस्येन्द्रस्य प्रतीयते । तथा ' एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति एष एवासाधुकर्म कारयति तं यमधोनिनीषति ' (कौ.३.९) इति सर्वस्य कर्मणः कारयितृत्वं च परमात्मधर्मः । तथा ' तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिताः एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिता , प्रज्ञामात्राः प्राणेऽर्पिता ' (३.९) इति सर्वाधारत्वं च तस्यैव धर्मः । तथा ' सएष प्राणएव प्रज्ञात्माऽनन्दोऽजरोऽमृतः ' (३.९) इत्येतेऽपि परमात्मन एव धर्माः । ' एष लोकाधिपतिरेष सर्वेशः ' (३.९) इति च परमात्मन्येव सम्भवति । तदेवमध्यात्मसम्बन्धभूम्नोऽत्र दृश्यमानत्वात्परमात्मैवात्रेन्द्रप्राणशब्दनिर्दिष्टः ॥**

## श्रुतप्रकाशिका

वधादेरप्युपक्रम(भू)तमुपक्रमस्यापि महावाक्यान्तर्भावात्तदुक्तिः नतु तावन्मात्रस्य साधकत्वाभिप्रायेण लोकाधिपतिः लोकस्वामी सर्वेश्वरः सर्वनियन्ता,

ननु ' पा रक्षणे ' इति धातोः पतिशब्दः तत्कथमत्र शेषिवाचित्वमुच्यते, नहि सर्वत्रावयवशक्तिरेव रूढिशक्तिरपिह्यस्ति । अन्यथा ' गमेर्डो ' इति व्युत्पत्त्या गोशब्दस्य सर्वजङ्गमवाचित्वप्रसङ्गात् स्थितायाः गोरवाचकत्वप्रसङ्गाच्च । अतश्शेषिणि पतिशब्दो रूढः अन्यथा–

वृद्धौ च मातापितरौ साध्वी भार्या सुतश्शिशुः । अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् ॥

इतिन्यायेन पितुस्संरक्षके पुत्रेऽपि पितरंप्रति पतिशब्दप्रयोगप्रसङ्गादिति । सूत्रार्थंनिगमयति—तदेवमिति । '**अध्यात्मसम्बन्धभूमाह्यस्मिन्**' इति सूत्रांशः परैरेवंव्याख्यातः अध्यात्मसम्बन्धः प्रत्यगात्मसम्बन्धः तस्य भूमा बाहुल्यमुपलभ्यते अस्मिन्नध्याये आयुष्प्रभुत्वमिन्द्रियाश्रयत्वं शरीरोत्थापकत्वं विषयेन्द्रियादिविज्ञानप्रतिक्षेपेण प्रत्यगात्मभेदनञ्चोपदिश्यत इति । अपरैश्च प्रज्ञादेहेन्द्रियमनःप्राणात्मना सम्बन्धोऽध्यात्मसम्बन्धः स भूयानिति तथ त्वात्म तदङ्गत्तम आद्युदधिपतित्वादीनां मनःप्राणसम्बन्धत्वादीनां च परमात्मसाधकत्वाभावात् । इन्द्रशब्ददेवताविशेषे तात्पर्यनिषेधपरं सूत्रमितिचेन्न—इन्द्रस्य शरीरेऽपि प्राणेन्द्रियमनःप्रभृतीनां विद्यमानतया तत्प्रतिक्षेपासामर्थ्यात् '**अस्मिन्शरीरे**' इति निर्देशोहीन्द्रशरीरेऽपिहि सम्भवति '**सदेव सोम्येदम्**' इतीदंशब्दवत् सर्वनामपदस्य साधारणत्वात् प्रत्यगर्थविषयत्वोपदेशस्य पराचीनदेवताविषयत्वमयुक्तमितिचेन्न इन्द्रस्यापि स्वात्मानं प्रत्यहमिति प्रत्यक्तयाऽवभासात् । '**प्राणोऽस्मि**' '**मामुपास्व**' इतिहि तद्वाक्यम् । इन्द्रमात्रस्य प्राधान्यतः प्रतिपाद्यत्वप्रतिक्षिप्यत इतिचेन्न प्राणेन्द्रियमनआदिसम्बन्धानां तत्प्रतिक्षेपासामर्थ्यात् । सौत्रवचनव्यत्ययानुगुणता च नस्यात् प्राणःपरमात्मेति प्रतिज्ञातमाद्ये सूत्रे द्वितीयसूत्रेण नञा परमात्मत्व-

## गूढार्थसंग्रहः

'उपासात्रैविध्यात्' इति सूत्रकृतोपासनस्य प्रतिपिपादयिषितायाः स्फुटमुक्तेः, तेनोपासिधातुः शाने लाक्षणिकइति परोक्तिरभिनिवेशमूलैवेति पूर्वमेवोक्तम् । इन्द्रद्वारा साधुकर्मकारयितृत्वमपि परमात्मनएवेत्याह–तथेत्यादिना । इन्द्रलोकस्य सर्वलोकान्तर्गततया सर्वलोकाधिपतेरैन्द्रलोकाधिपत्यं इन्द्रस्तु द्वारभूतएवेत्याशयेनाह–एषलोकाधिपतिरिति । चशब्देन 'समआत्मेति विद्यात्' इति वाक्यमपि इन्द्रान्तर्यामित्वेन परमात्मन्येव सम्भवतीत्यर्थो बोधितः । 'समआत्मेतिविद्यात्'

`

श्रीभाष्यम्

कथं तर्हि प्रज्ञातजीवभावस्येन्द्रस्य स्वात्मन उपास्यत्वोपदेशस्सङ्गच्छते ; तत्राह ।

## सू.३१—शास्त्रदृष्ट्यातूपदेशो वामदेववत् (१.१.११)

प्रज्ञातजीवभावेनेन्द्रेण 'मामेव विजानीहि' 'मामुपास्व' (कौ.३.१) इत्युपास्यस्य ब्रह्मण-स्स्वात्मत्वेनोपदेशोऽयं न प्रमाणान्तरप्राप्तस्वात्मावलोकनकृतः, अपितु शास्त्रेण स्वात्मदृष्टि कृतः। एतदुक्तं भवति—'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छां.६. ३.२] 'ऐतदात्म्यमिदं सर्वम्' [६.८.७] 'अन्त प्रविष्टश्शास्ताजनानाँसर्वात्मा' (यजुरा रण्यक] 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मान-

श्रुतप्रकाशिका

मेव निषेध्य न परमात्मेति पूर्वपक्षिते तत्प्रतिसमाधानपरेण परमात्मैव प्राण इति प्रतिज्ञय समर्थनीयम् नपरमात्मेन्द्र-दन्तप्रति नेन्द्रइत्युक्ते कःप्रतिक्षेपः नघटोऽस्तीत्युक्ते नपटइतिवत् तयोर्विरोधाभावात् परं । नवे प्रतिज्ञाते मन प्राणसद-म्बादयस्तु न परमात्वसाधन(ना)समर्थाः ॥ ननु नाय परमात्मा अविविन्य इति प्रतिज्ञातेसति नेन्द्र इति प्रतिविध न युक्तमितिचेन्न त्वदुक्तयुक्तेरिन्द्रप्रतिक्षेपकत्वाभावात् । अस्तुवा त प्रतिक्षेप. स्त.किं स्तु परमात्मत्वस्य परमात्मपरत्व दृष्टे-पयोगीतिचेन्न परमसाध्यस्याव्यवहितसाधकहेतूपस्थापक वे सभवति परम्परया साधकार्थपरत्वेन निर्वाहानुपपत्तेः ॥

उत्तरसूत्र शङ्कयाऽवतारयति कथंतर्हीति । प्रज्ञातजीवभावस्येति । इदिपरमैश्वर्य इत्यादिप्रकृतिप्रत्ययविभागेन परमात्मपरत्वमिन्द्रादिशब्दानामयुक्त त्वाष्ट्रवधादिलिङ्गनिर्वाहानुपपत्त । तत्कथमिन्द्रशब्देन परमात्मनिर्देश इतिभावः । पूर्वे परमात्मपरत्वसाधकहेतुरुक्त. पूर्वपक्षयुक्तेः क परिहारइत्यपेक्षायां सूत्रावतार इत्यर्थः ॥

## सू.३१=शास्त्रदृष्ट्यातूपदेशो वामदेववत् (१.१.११)

कीदृशउपदेशइत्यत्राह–प्रज्ञातेति । शास्त्रदृष्टिशब्दस्य व्यवच्छेद्यमाह–सप्रमाणान्तरेति । शास्त्रस्य दृष्टिः शास्त्र रूपा दृष्टिरिति वा प्रतीतिस्स्यादिति तद्व्यावृत्त्यर्थमाह–शास्त्रेणेति । कस्य दृष्टिरित्यपेक्षाया स्वात्मशब्दः स्वानुभवप्रत्यक्षेण त्मावलोकने जीवमात्रप्रकाशः शास्त्रेण तन्मूलयोगेनचा मानुभवे परमात्मपर्यन्ततया प्रकाश इतिभावः । नहि प्रमाणविशे-षेणान्यत् प्रमेयमन्यद्भवति तच्च शास्त्र किमित्यत्राह–एतदुक्तमिति । जीववाचिपदाना परमात्मसामानाधिकरण्योपपा-दिकाः श्रुतीरुदाजिहीर्षन्नामरूपव्याकरणश्रुतिमाह–अनेनेति । जीवेऽप्यनुप्रवेश दर्शयितुमाह–ऐतदात्म्यमिति । तदेव

गूढार्थसङ्ग्रहः

इति वाक्यतात्पर्यम् एतदितरोपनिषद्वाक्यैरेव सिद्ध्यतीत्यभिप्रेत्य 'मामेव विजानीहि' इति वाक्यतात्पर्यनिर्णयार्थ–शास्त्र दृष्ट्यातूपदेशो वामदेववत्' इति सूत्रम् । अत्रात्मशब्दघटितोपनिषद्वशात्मैव विवक्षितमिति ज्ञेयम् ॥

अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीत्यादि । पूर्वं जिज्ञासाऽधिकरणे (८८०,९०४–पु) एतच्छ्रुत्यर्थ. निरूपितः । अन्त.प्रविष्टश्शास्ताजनानामिति । इद वाक्य शङ्कराचार्यै. उपदेशसाहस्र्यां 'तत्त्वमसि' इत्यादिवाक्यसमशीलतयोपात्तम् । यआत्मनि तिष्ठन्निति । यमयतीत्यन्त ...

## श्रीभाष्यम्

मन्तरोयमयति ' [बृ.५.७.२२) ' एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' (सुबाल.७.ख] इत्येवमादिना शास्त्रेण जीवात्मशरीरकं परमात्मानमवगम्य जीवात्मवाचिनामहंत्वमादिशब्दानामपि परमात्मन्येव पर्यवसानं ज्ञात्वा ' मामेव विजानं हि, मामुपास्व ' (कौ.३.१) इति स्वात्मशरीरकं परमात्मानमेवोपास्यत्वेनोपदिदेश इति । वामदेववत् *यथा वामदेवः परस्य ब्रह्मणस्सर्वान्तरात्मत्वं सर्वस्य च तच्छरीरत्वं शरीरवाचिनां च शरीरिणि पर्यवसानं पश्यन्* 'अहम् ' इति स्वात्मशरीरकं परंब्रह्म निर्दिश्य तत्सामानाधिकरण्येन मनुसूर्यादीन् व्यपदिशति ' तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहंमनुरभवं सूर्यश्चाहं कक्षीवानृषिरस्मि विप्र ' (बृ.३.४.१०) इत्यादिना । यथा च प्रह्लादः ।

## श्रुतप्रकाशिका

स्पष्टयति अन्तःप्रविष्टइति । शरीरत्व लक्षण दर्शयति यआत्मनीति । पर्यवसान ज्ञात्वेति नामरूपव्याकरणश्रुतिलब्धार्थ उक्तः उपदिदेशेत्यन्तेन ' शास्त्रदृष्ट्यातूपदेश ' इत्यंशो व्याख्यातः ' वामदेववत् ' इत्यश व्याचष्टे–यथेति । शरीरिणि पर्यवसान पश्यन्नित्यन्तेन 'तद्धैतत्पश्यन्' इत्येतद्व्याख्यातम् । उक्तार्थविशदीकरणायाह–यथाच प्रह्लादइति ॥

## गूढार्थसंग्रह

' एषत आत्माऽन्तर्याम्यमृतः ' इति 'तत्त्वमसि' इत्यादिसमशीलमिति अहिकुण्डलाधिकरणे (श.भा) उक्तम् । काण्वमाध्यन्दिनपाठभेदेन द्वाविंशति(का)चतुर्विंशति(मा)वार षष्ठ्यभ्यासेन 'एषम आत्माऽन्तर्हृदय' (छा) इति शाण्डिल्यविद्यावाक्य इव भेदएव विवक्षितः । *सूत्रकारश्च ' शब्दविशेषात् ' इत्यत्र शाण्डिल्यविद्यावाक्यस्य भेदपरत्वमभिप्रैतीति परेषामपि* संमतम् । तद्वदेवात्रापीति ' उभयेऽपिहि भेदेनैनमधीयते ' इति वदतस्सूत्रकृतो विवक्षितम् । इत्येवमादिनेत्यत्रादिपदेन ' सतआत्मेति' माध्यन्दिनवाक्यं ' योविज्ञाने तिष्ठन्—एषतआत्मा ' इति काण्ववाक्यम् ' आत्मैवेदमग्र आसी पुरुषविधः, सएष इहप्रविष्टः, तदात्मानमेवावेदहब्रह्मास्मि ' इति ' एषम आत्माऽन्तर्हृदये ' (छा.शा) 'समआत्मेति ' (कौ) इत्यादिवाक्यानि विवक्षितानि ॥

स्वात्मशरीरक परमात्मानमेवेति ' तत्त्वमसि ' इत्यत्र ' ऐतदात्म्यम् ' इत्यस्य ' श्वेतकेतो ' इत्यस्य च नवकृत्वः *अभ्यासेन ' अनेन जीवेनात्मना ' इत्युपक्रमानुसारेण च श्वेतकेतुशरीरकपरमात्मैव विवक्षितः । ' तदात्मानमेवा*देहब्रह्मास्मि ' इत्यत्रापि कौषीतकीवाक्यैकार्थ्येन ' ब्रह्मवा इदमग्र आसीत् ' इत्यस्यात्मन्शब्दस्य च वैयर्थ्यप्रसङ्गेन च अन्तर्याम्यभेद एव विवक्षित इतिप्रागेव साधितम् । एवच ' समआत्मेतिविद्यात् ' इत्यत्रापि श्रुत्यन्तरैकार्थ्येनेन्द्रशरीरकपरमात्मैव विवक्षितइति निश्चीयत इतिभावः । श्रुतिदृष्ट्या इत्याद्यनभिधाय ' शास्त्रदृष्ट्या ' इत्युक्त्या विधिवाक्यघटित शास्त्रमेव विवक्षितम् । विधिप्रत्ययस्य शासनमर्थं इति रचनानुपपत्त्यधिकरणे 'स्वशासनावबोधिशास्त्रम् ' इति सूक्त्यनुरोधेन आचार्यपादैर्निर्णीतम् । एव च ' मामुपास्व ' ' आत्मेत्येवोपासीत ' ' आत्मानमेवोपासीत ' इत्यादौ विधिप्रत्ययस्य शासनमेवार्थः । एव च 'शास्त्रदृष्ट्या' ' उपासात्रैविध्यात् ' इति पदद्वयेन विधेयार्थतात्पर्यकश्रुतिरेव शास्त्रपदेन *विवक्षिता* ॥

तद्धैतत्पश्यन्नृषिर्वामदेवइत्यादि । बृहदारण्यके तृतीये चतुर्थब्राह्मणे 'आत्मैवेदमग्रआसीत्' इत्युपक्रम्य, तत्र पुरुषशब्दस्यार्थद्वयमभिहितम् । तुरीयेऽध्याये मधुसूदनब्राह्मणे ' सवा अय सर्वासु पूर्षुपुरिशय ' इति सर्वशरीरकपुरुष

## गूढार्थसंग्रहः

शब्दार्थः वक्ष्यते । ' सएष इह प्रविष्ट आनखाग्रेभ्यः ' इत्यनन्तरं ' सयोत एकैकमुपास्ते नसवेद अकृत्स्नो ह्येष अतएकेकेन भवति ' आत्मेत्येवोपासीत ' इति वाक्ये आत्मशब्दस्यापि व्यापकचेतनवाचिनः सर्वशरीरार्थत्वं इति सूचितम् । एतदुत्तरं ' अत्रह्येते सर्वे एकं भवन्ति ' इतिवाक्यं श्रूयते । तदुत्तरं अन्तरतरं यदयमात्मा सयोऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात् प्रियं रोत्स्यतीत्यात्मानमेव प्रियमुपासीत ' (८) इत्यत्र ' अन्तरतरं यदयमात्मा ' इत्यनेन ' सएष इह प्रविष्टः ' इत्यर्थस्स्मारितः । एतेन सर्वव्यापकचेतनस्य प्रियत्वं सर्वव्यापकचेतनस्यैकत्वेन ' अत्रह्येते सर्वएकं भवन्ति ' इत्येतेन ध्यातॄणां व्यापक एव एकीभावः कथितः । अनन्तरं ' ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किमु तद्ब्रह्मावेत् यस्मात्तत्सर्वमभवत् ' (९) इत्यत्र ब्रह्मणस्सर्वभावे मूलभूतज्ञानप्रश्नः एतदनन्तरं ' ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मि इति तस्मात्तत्सर्वमभवत् ' (१०) इतिवाक्यम् । अत्र ' ब्रह्म वा इदमग्र आसीत् ' इति वाक्यमात्रेऽपि अवशिष्टभागेन प्रतिवचने प्रष्टुः जिज्ञासानिवृत्तिर्भवति, इति । तद्वाक्यं किमर्थमिति विवेचनीयम् । इदञ्च वाक्यं ' तद्धेदं तर्ह्यव्याकृतमासीत् ' इति पूर्ववाक्यसमशीलम् । तत्र नामरूपव्याकरणं प्रवेशनिबन्धनमिति व्यक्तमुक्तम् । ' सएष इह प्रविष्ट ' इति आत्मशब्दार्थविवरणमेव, प्रवेशश्च प्रळयानन्तरसृष्टिसमकालिकः, एवञ्च प्रळयानन्तरसृष्टिसमकाले सर्वान्त प्रविष्टचेतन एव आत्मशब्दार्थः पर्यवसन्नः ॥

एवं च ' ब्रह्म वा इदमग्र आसीत् ' इत्यनेन प्रळयस्यात्मशब्देन तदनन्तरसृष्टिसमकालिकान्त प्रविष्टचेतनस्य बोधनपूर्वकं तस्यात्मन एव ' अहं ब्रह्मास्मि ' इति सर्वभावहेतुभूतज्ञानविषयत्वाभिधानेन ब्रह्मणः सर्वभावे सृष्टिसमकालिकान्तः प्रवेशएव मूलमिति युक्तं भवति । अन्यथा ' आत्मानमेवावेत् ' इत्यत्र आत्मशब्दस्य वैयर्थ्यमेव स्यात् । अनन्तरं ' तद्यो यो देवानां प्रत्यबुध्यत सएव तदभवत् ' इत्यत्र तच्छब्देन पूर्वोक्तसर्वभावहेतुभूतज्ञानविषयीभूतार्थस्य परामर्शेन सर्वभवो प्रागुक्तज्ञानमेव हेतुरिति भावः । एवमेव ' तथर्षीणां तथा मनुष्याणां तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च ' इति तदिदमप्येतर्हि यएवं वेदाहं ब्रह्मास्मीति सइदं सर्वं भवति तस्य ह न देवाश्च नाभूत्या ईशते आत्मा ह्येषां सभवति अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति नसवेद यथा पशुरेव सदेवानां यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युः एवमेकैकः पुरुषो देवान् भुनक्त्येकस्मिन्नेव पशौ आदीयमानेऽप्रियं भवति किमु बहुषु तस्मादेषां तन्नप्रियं यदेतन्मनुष्याः विद्युः ' इत्यत्र वामदेवादीनामभेदज्ञानेऽपि सर्वान्तर्याम्यात्मज्ञानमेव मूलम् । इत्थं च सर्वान्तर्याम्यभेद एव विवक्षितः । ' अथ योन्याम् ' इति निन्दावाक्येऽपि सर्वान्तर्याम्यन्यदेवतैव विवक्षिता । इत्ययमर्थः एतच्छ्रुतिविषये ' आत्मैवेदमग्र ' इत्युपक्रमप्रभृतिवाक्यपर्यालोचनेन प्रतीयते। इममर्थमभिप्रेत्यैव स्वात्मशरीरकपरमात्मानमेवोपादिदेशेति पूर्वभाष्यवाक्यम्। वामदेवस्य सगुणब्रह्मविद्यानिष्ठत्वेन 'आत्मेत्येवोपासीत' इति अत्रत्यवाक्यानुरोधेन च ' अहं मनुरभवम् ' इत्यादौ तत्तच्छरीरकपरमात्मैव विवक्षितइति निश्चीयते ॥

' वामदेववत् ' इत्यभिधाय ' उपासात्रैविध्यात् ' इति वदता सूत्रकृता ' आत्मेत्येवोपासीत ' इत्यनन्तरं ' तद्धैतत्पश्यन्नृषिर्वामदेवः ' इत्यत्रापि स्वात्मशरीरकपरमात्मोपासनमेवाभिमतम् । अतएव ' गर्भेऽनुसन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा ' (ऐ.४.४) इत्युपक्रम्य ' गर्भे एव एतच्छयानः वामदेव एवमुवाच । स एवं विद्वानस्माच्छरीरभेदादूर्ध्वमुत्क्रम्य अमुष्मिन् स्वर्गे लोके सर्वान्कामानाप्त्वा अमृतस्समभवत्समभवत् ' (ऐ ४.४) इत्युक्तार्थः उपनिषदन्ते ' सएतेन प्राज्ञेनात्मना—अमृतस्समभवत्समभवत् ' इत्यभ्यासेन दृढीकृतः । अत उत्क्रान्तिपूर्वकमुक्तिप्रतिपादनात् बृहदारण्यके उपासननिष्ठत्वस्य प्रतीत्या परसमततिनिर्विशेषविद्यानिष्ठत्वं वामदेवस्य नास्तीति निर्मत्सराणां स्फुटम् । गर्भे एव

श्रीभाष्यम्

**सर्वगत्वादनन्तस्य स एवाहमवस्थितः । मत्तस्सर्वमहं सर्वं मयि सर्वं सनातने ' इत्यादि वदिति । अस्मिन्प्रकरणे जीववाचिभिश्शब्दैरचिद्विशेषाभिधायिभिश्चोपास्यभूतस्य परस्य ब्रह्मणोऽभिधाने कारणं चोद्यपूर्वकमाह—**

## सू.३२–जीवमुख्यप्राणलिंगान्नेतिचेन्नोपासात्रैविध्यादाश्रितत्वादिहतद्योगात्(१.१.११)

श्रुतप्रकाशिका

उत्तरसूत्रमवतारयति अस्मिन्निति । जीववाचिभिरित्यादि । त्वाष्ट्रवधादिलिङ्गप्रतिपादनकारणमपि कथनीयमित्यभिप्रेतम् उपरितनग्रन्थानुगुण्यात् । कारणं प्रयोजनरूपम् । उपदेष्टुमितिहि वक्ष्यते, चोद्यपूर्वकमाह नतूक्तार्थप्रतिक्षेपार्थकं चोद्य विशेषणाशे तात्पर्यं प्रतीयत इति तस्य प्रयोजनमेव प्रष्टव्यं तच्चोद्यरूपेण पृष्टवानित्यर्थः ॥

## सू.३२–जीवमुख्यप्राणलिंगान्नेतिन्नोपासात्रैविध्यादाश्रितत्वादिहतद्योगात्((१.१.११)

गूढार्थसंग्रहः

वामदेवस्य देवानां जनेः ज्ञानस्य प्रतिपादनेनच वामदेवस्य कार्यकारणभावः अकल्पित इत्येवाभिप्रेतं नतु पररीत्या सांवृत तत्वमिति च निर्मत्सराणा स्फुटम् ॥

सर्वगत्वादनन्तस्येति । अनन्तशब्दः त्रिविधपरिच्छेदरहितपर इति परेषामपि संप्रतिपन्नम् । देशकालपरिच्छेदशून्यत्व देशकालव्यापकत्वरूप यथा तथैव वस्तुपरिच्छेदशून्यत्वमपि वस्तुव्यापकत्वरूपमेव । '*अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः*' इति श्रुत्यर्थः 'सर्वगत्वादनन्तस्येत्यत्र विवक्षितः । इत्थं च सर्वगतत्वादनन्तस्येत्यनेन 'सएवाहमवस्थित' इत्यभेदे हेतुकथनेन 'अन्तरतर यदयमात्मा' इति प्रागुदाहृतश्रुत्यर्थप्रकाशनेन वामदेवप्रह्लादयोरेकएवाभिप्रायो विवक्षितः । परमते अनन्तस्य सर्वगत्वादित्यभेदहेतूक्तिर्न घटते । 'अनन्तत्वात्सएवाहम्' इत्युक्तौ तन्मतसूचनं यथाकथंचित्स्यात् । 'मत्तस्सर्वमहसर्वम्' इत्यत्र कार्यकारणभावेनैवाभेद उपपादितः सोऽपि परमते कार्यकारणभावस्य सांवृतत्वेन नघटते इति भगवत आशयः 'मयिसर्वम्' इत्याधाराधेयभावोक्तिरपि परमतेऽनपेक्षिता ॥

एतावता इन्द्ररूपजीवस्य श्रुतिप्राबल्येनोपक्रमप्राबल्येन च प्रतर्दनविद्यावेद्य इति शङ्का उपक्रमोपसंहारयोरुभयोः *परमात्मनः विद्यावेद्य येन परिहृता । मनुष्यहिततमोपासनकर्मत्वस्येन्द्रेऽसंभवात् । इन्द्रस्योत्तराध्याये परमात्माधीनत्वा* नस्य स्पष्ट वक्ष्यमाणत्वेन 'मामुपास्व' इत्यत्र स्वा मशरीरकपरमात्मैव विवक्षित इति 'अध्यासमसम्बन्धभूमा' इति सूत्रखण्डेन व्यासेन निर्धारिततया 'मामुपास्व' '*मामेव विजानीहि*' इति ज्ञानोपासनवाचिधातुद्वयप्रयोगेण उपास्य ब्रह्माभिन्नज्ञेयब्रह्मतात्पर्यक वस्य परोक्तस्यायोगेन सगुणब्रह्मैवात्र विवक्षितमिति इन्द्रशब्दश्रुतिर्न घटत इति निरूपितप्रायम् ।

अथ यल्लिङ्ग पूर्वपक्षिणो विवक्षितं तदाशङ्क्य समाधत्ते–जीवमुख्यप्राणलिङ्गादित्यादिना । परमाप्ये(प)अथवा 'नोपासात्रैविध्यादाश्रितत्वादिहतद्योगात्' इत्यस्यायमन्योऽर्थः न ब्रह्मवाक्येऽपि जीवमुख्यप्राणलिङ्गं विरुध्यते, कथं 'उपासात्रैविध्यात्' त्रिविधमिह ब्रह्मोपासनं विवक्षितं प्राणधर्मेण, प्रज्ञाधर्मेण, स्वधर्मेण च, इति वृत्तिकारसम्मतो

### श्रीभाष्यम्

'न वाचं विजिज्ञासीत वक्तारं विद्यात्' (कौ.१.८) 'त्रिशीर्षाणं त्वाष्ट्रमहनम्। अरुन्मुखान्यतीन् सालावृकेभ्यःप्रायच्छम्' (कौ.३.१) इत्यादिजीवलिङ्गात्, 'यावद्ह्यस्मिञ्शरीरे प्राणो वसति तावदायुः' (३.१) 'अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति' (३.१) इति मुख्यप्राणलिङ्गाच्च नाध्यात्मसम्बन्धभूमेतिचेत्—न 'उपासात्रैविध्यात्' हेतोः उपासनात्रैविध्यमुपदेष्टुं तत्तच्छब्देनाभिधानं निखिलकारणभूतस्य ब्रह्मणस्स्वरूपेणानुसन्धानम् भोक्तृवर्गं शरीरकत्वानुसन्धानम् भोग्यभोगोपकरणशरीरकत्वानुसन्धानंचेति त्रिविधमनुसन्धानमुपदेष्टुमित्यर्थः। तदिदं त्रिविधं ब्रह्मानुसन्धानं प्रकरणान्तरेष्वप्याश्रितम् 'सत्यंज्ञानमनन्तं ब्रह्म' (तै.आन.१.अनु) 'आनन्दो ब्रह्म' [तै.भृ.६] इत्यादिषु स्वरूपानुसन्धानं 'तत्सृष्ट्वा। तदेवानुप्राविशत्। तदनुप्रविश्य। सच्चत्यच्चाभवत्। निरुक्तंचानिरुक्तं च। निलयनंचानिलयनंच। विज्ञानंचाविज्ञानं च। सत्यंचानृतंच सत्यमभवत्'

### श्रुतप्रकाशिका

'नवाचं विजिज्ञासीत वक्तारं विद्यात्' इति केवलं मद्वचनमेव विजानीहि, वक्तारं मां च विजानीहीत्यर्थः। मुख्यप्राणः पञ्चवृत्तिः, मुख्यशब्द इन्द्रियादिव्यावृत्यर्थः नञो निषेध्याकाङ्क्षायामनतिविप्रकृष्टं सौत्रं पदमध्याहृतम् अध्यात्मेति। हेतुत्वं विवृणोति उपासनेति। उपदेष्टुमित्यनेन प्रयोजनतया हेतुत्वं स्पष्टम् त्रैविध्यं विवृणोति निखिलेति। स्वरूपेणानुसन्धानं अद्वारकगुणविशिष्टानुसन्धानम्। त्रिविधानुसन्धानस्य प्रमाणमूलत्वे सिद्धेह्यस्य निर्वाह उपपन्नस्स्यादिति शङ्कायामाश्रितत्वादित्येतद्व्याचष्टे। तदिदमिति। कुत्रेत्यपेक्षायां प्रकरणान्तरेष्वपी युक्तम्। आश्रितं प्रतिपन्नमित्यर्थः। तत्सृष्ट्वेत्यादि। 'सत्यं ज्ञानमनन्तम्' इति देशकालवस्तुपरिच्छेदरहितस्य ब्रह्मणः 'ब्रह्मविदाप्नोति' इति वेद्यत्वविधानात् प्रकरणस्य वेद्यब्रह्मप्रतिपादनपरत्वात् 'सयएवंवित्' इति निगमनवाक्येऽपि पूर्वोक्तसमस्तप्रकारविशिष्टवेदनप्रतीतेश्च, चिदचिच्छरीरकत्वानुसन्धानमत्र विवक्षितमिति भाष्याभिप्रायः॥

### गूढार्थसङ्ग्रहः

योऽयमर्थो निरूपितः सएव युक्त इत्यभिप्रेत्य विवृणोति–उपासात्रैविध्यमुपदेष्टुमित्यादि। 'त मामायुरमृतमित्युपास्व' इति वाक्यमेव त्रिविधोपासनप्रतिपादकम्। आयुरिति प्राणधर्मेण अमृतमिति स्वधर्मेण मामिति प्रज्ञाधर्मेण ब्रह्मणः त्रिविधोपासनस्योक्तेः इति व्यासार्यैः श्रुतौ त्रिविधोपासनस्य या विवक्षा उक्ता सैव युक्ता। 'प्राणोवा आयुः प्राणो वा अमृतः' इत्युत्तरवाक्ये प्राणशरीरकस्वरूपोपासनस्य पूर्ववाक्यनिर्धारणेन प्राणशब्दार्थामृतशब्दार्थयोरेकत्वता पर्येण प्रवृत्तेरसम्भवात्। अतः अमृतमिति स्वरूपविवक्षाया न किंचिद्बाधकम् 'तस्मादेतदेवोक्थमुपासीत' इत्यनन्तरव वचमिति कर्तव्यताविधिपरम् वक्ष्यमाणतत्तद्गुणविशिष्टत्रिविधोपासनविधिः 'प्राणोऽसि' इत्यत्र, अतः वाक्यैकवाक्यताऽप्यसम्भवति। तेन न्यायरक्षामण्युक्तदोषस्य नावसरः॥

॥ इन्द्रप्राणाधिकरणं समाप्तम् ॥



श्रीभाष्यम्

इत्यादिषु भोक्तृशरीरतया भोग्यभोगोपकरणशरीरतया चानुसन्धानम्। इहापि प्रकरणे तत्रिविधमनुसन्धानं युज्यत एवेत्यर्थः॥

एतदुक्तं भवति—यत्र हिरण्यगर्भादिजीवविशेषाणां प्रकृत्याद्यचेतनविशेषाणां च परमात्मासाधारणधर्मयोगः तदभिधायिनां शब्दानां परमात्मवाचिशब्दैस्सामानाधिकरण्यं वा दृश्यते ; तत्र परमात्मनस्तत्तच्चिदचिद्विशेषान्तरात्मत्वानुसन्धानं प्रतिपिपादयिषितं इति। अतोऽत्रेन्द्रप्राणशब्दनिर्दिष्टो जीवादर्थान्तरभूत परमात्मैवेति सिद्धम्॥

भगवद्रामानुजमुनिनिरचिते शारीरकमीमांसाभाष्ये प्रथमाध्यायस्य प्रथमःपादः



श्रुतप्रकाशिका

ननु 'सयश्चायं पुरुषे यश्चासावादित्ये सएकः' इत्युक्तया अनन्तर 'सयएवंवित्' इति वाक्येन जीवान्तर्यामिण आदित्यान्तर्वर्तिनश्चोपासनमुच्यतइतिचेन्न स्थानभेदेन विद्याभेदप्रसङ्गात्। तथानुपपन्नः "एतमानन्दमयमात्मानमुपसङ्क्रामति" इत्यानन्दमयप्राप्तिफलश्रवणेन 'ब्रह्मविदाप्नोतिपरम्। तस्माद्वा एतस्मादात्मन' इत्यादिना प्रतिपादितानन्दमयविषयविद्यैक वाक्यगमात् प्रकरणस्य समवलेकवाक्य वे वाक्यभेदानुपपत्तेश्च, 'सयश्चायम्' इत्यादि वाक्ये किमुच्यत इतिचेत्, त्रिविधानुसन्धानरूपैकविद्याया मोक्षफलकत्वेन विवक्षितत्वेसति तत्र स्वरूपेणावस्थितस्य गुणवत्त्वे ज्ञानादिगुणवद्दिव्यविग्रहयोगस्याप्यनुसन्धेयत्वासिद्ध्यर्थं पुण्डरीकाक्षमप्राकृतवपुरादित्ये दिश्यते। तत्र 'सयश्चायं पुरुष' इति विज्ञानमयादन्तरस्यानन्दमयस्यानुवादः, 'यश्चासावादित्य' इति विग्रहातिदेशः॥

किंच आनन्दमयप्रतिपादनानन्तरम् 'ब्रह्मविदाप्नोति' इत्युपक्रमाभिहितप्राप्तिविशदीकरणार्थं 'अथातोऽनुप्रश्नाः' इति प्रश्ना उपक्षिप्ता पूर्वप्रतिपादनस्य बुभुत्साहेतुत्वमतशब्देनोच्यते 'उताविद्वान्' इति। उत विद्वान् इति पद 'निपातस्य' इति छान्दसो दीर्घः 'अथासपत्नान्' इतिवत् अविद्वान् इतिपदेसति ह्याद्युदात्तत्वस्यात् 'तत्पुरुषे तुल्यार्थे' इत्यादिस्मरणात् 'अविद्वान्प्रतिगृह्णाति' इतिवत् अन्तोदात्तश्चेदपद तस्माद्विद्वानितिपद कश्चनाविप्रकृष्ट तदादित्यानस्थमनवच्छिन्न च ब्रह्मोपासीनो विद्वान् किमत प्रेत्य अमुंलोकं 'परमेव्योमन्' इत्युक्त लोक ग च्छतीत्येक प्रश्न। उत गत्यनपेक्षमिहैव ब्रह्मप्राप्नोतीत्यर्थसिद्ध प्रश्न. 'आहोविद्वान्' इति। समश्नुता' इति भोक्तृत्व विवक्षितम् कश्चित् अहंग्रहेणोपासीनोऽपि विद्वानमुंलोकं गत्वा किं समश्नुते भोग्यभूत ब्रह्मभवतीत्येक प्रश्न। उत ब्रह्मस्वरूपेणैकीभवतीत्यर्थसिद्ध प्रश्न॥

एव शास्त्रवैविध्यमूला गतिविशेषस्वरूपभेदभावाभावविषयाः प्रश्ना बहुवचनविवक्षिता एव नुतादिवत् उपचारात्वौपाधिकगुणविशिष्टस्यैव विलक्षणस्य ब्रह्मणः प्राप्यत्वादिज्ञापनाय 'सोऽकामयत' इत्यादिना जगत्कारणत्वादिक निरतरयानन्दपर्यन्तं महिमानमुक्त्वा 'सयश्चायम्' इत्यादिवाक्य वदति सन्निकृष्टहृदयस्य वा विप्रकृष्टरविमण्डलादिस्थानस्य वा पूर्वोक्त सत्यत्वादिलक्षणमानन्दादिगुणक वा ब्रह्मोपासीनः सर्वोऽपि विद्वानस्माल्लोकात् प्रत्याक्रमयादिक्रमविशिष्टविभूतिक निरतिशयानन्द परमात्मान भोग्यभूत भोक्ताऽसन्ननुभवतीति प्रश्नस्योत्तरमुक्तम्। अतस्सर्वेषां विद्याविशेष,

## श्रुतप्रकाशिका

निधानामर्चिरादिगतिमत्त्व भोक्तृभोग्यभावेनावस्थानं च प्रतिपादयितुं सन्निकृष्टविप्रकृष्टस्थानविशेषोपलक्षणार्थं 'सयश्चायम' इत्युक्तं तस्मादादित्यान्तर्वर्तितयोपासनमानन्दवल्ल्या न विधित्सितम् । अत उक्तलक्षणत्रिविधोपासनमेवात्र विवक्षितम् ॥

एवं 'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' इत्यादीनि सदृशानि श्रुत्यन्तराणि च त्रिविधानि, त्रिविधोपासनस्य स्फुटतरत्वात् भोक्तृभोग्ययोरीश्वरविधावं कथमित्यपेक्षायां चिदचिदन्तर्यामितया तत्प्रकारित्वमिति त्रिविधोपासनं श्रुत्यन्तरार्थविशदीकरणहेतुत्वात् आनन्दवल्लीवाक्यार्थे हेत्वन्तरं अन्यदभिप्रेतं 'इहतद्योगात्' इत्येनव्याचष्टे इहापीति । आनन्दोऽजरोऽमृत इति स्वेन रूपेणानुसन्धानम् 'प्राणोऽस्मि' इत्यचिद्विशिष्टानुसन्धानम् 'मामुपास्व' इति चिद्विशिष्टानुसन्धानमिति त्रिविधानुसन्धानमिहोपपद्यत इत्यर्थः, त्रिविधानुसन्धाने कर्तव्येऽप्यत्र चिद्विशेषाचिद्विशेषविशिष्टत्वोक्तिः कथं सामान्येन चिदचिद्विशिष्टानुसन्धानादि प्रकरणान्तरोक्तमित्यपेक्षा प्रकृतयदस्य न्यायस्य प्रतर्दनविद्यामात्रविषयत्वं च निवारयन्विशिष्टोपासनपरत्वाचिह्नं च दर्शयति एतदुक्तमिति । यत्रेति । अयं न्यायो न प्रतर्दनविद्यामात्रविषयः अपित्वीदृशसर्वप्रकरणविषय इतिभावः । सामान्येन चिदचिद्विशिष्टानुसन्धानं विहितत्वात्स्वीक्रियते विधेरवैयर्थ्याय तथा चिदचिद्विशेषविशिष्टोपासनं विहितं चेत्तत्र चिदचिद्विशेषानुसन्धानमपि कर्तव्य मित्यभिप्रायेणाह—हिरण्यगर्भादीति । हिरण्यगर्भादिजीवविशेषाणामिति पदेन परमात्मशब्देन च 'परमात्माव्यवस्थितः सब्रह्मा सशिवः' इतिश्रुतिः स्मार्यते, अनन्यपरेण नारायणानुवाकेन सर्वविद्यासूपास्यो नारायणएवेति निर्णीतत्वादिन्द्राद्युपासनेऽपि तत्तदन्तर्यामी नारायणएवोपास्य इतिभावः । पाशुपताधिकरणे वक्ष्यमाणाह परमात्मपर्यन्तत्वविवक्षाज्ञापकं द्विविधं प्रदर्शयति परमात्मासाधारणेति । परमात्मासाधारणधर्मयोगात् तदादिशब्दानामधिकरणाच्च विशिष्टोपासनपरत्वमवगम्यत इत्यर्थः । अधिकरणार्थमुपसंहरति अतइति ॥

अत्र केचिदेवं वर्णितं प्राणव्यापारस्यापि परमात्मायत्तत्वात् तत्सङ्कीर्तनं जीवनकीर्तनं तु तस्योपाधिकभेदप्रतिक्षेपेण परब्रह्मरूपताज्ञापनार्थं अन्यथा त्रिविधमुपासनं प्रसज्येत ततश्च वाक्यभेदस्यादिति, तदयुक्तम् । 'नित्योपलब्ध्यनुपलब्धिप्रसङ्ग.' 'अपीतौ तद्वत्प्रसङ्गात्' इतिवत् प्रसङ्गशब्दस्याश्रुतत्वात् वाक्यभेदाभावाच्च । एकवाक्येनैवहि विधीयते 'तं मामायुरमृतमित्युपास्व' इत्यत्र मामिति जीवविशिष्टतोक्ता आयुरिति प्राणविशिष्टता 'आयुः प्राण' इत्यनन्तरवाक्यम् । अमृतमिति स्वेन रूपेणावस्थितिः अतएवंविधं परमात्मानमुपास्वेत्येकवाक्यत्वम् । उपासात्रैविध्यविधानस्य वृत्तिकाराभिमतत्वात्तदनतिक्रमाय परैरेव त्रिविधोपासनपरत्वेन योजनान्तरं कृतम् । तत्र ज्ञानक्रियाशक्तिद्वयाऽश्रयबुद्धिप्राणरूपोपाधिधर्मेण स्वधर्मेण च त्रिविधं ब्रह्मोपास्यमिति । तदयुक्तम् जीवेश्वरभेदस्यान्तःकरणरूपोपाध्यवच्छेदकल्पितत्वाभावात् 'यस्यात्मा शरीरम्' 'मनोमयःप्राणशरीरः' इति जीवप्राणयोः परमात्मानंप्रति शरीरतया प्रकारत्वस्य श्रुतत्वेन प्रकारान्तरेण त्रैविध्यकल्पनायोगाच्च, अन्येत्वेवमुपासात्रैविध्येन वाक्यैकत्वमाहुः प्रज्ञाशरीरो जीवशरीरः प्राणशरीरश्च परमात्मोपास्यः । तत्र प्रज्ञाशरीरो मनोमयः । जीवशरीरो वाङ्मयः वाक्शब्दः शब्दपरिणामशक्तियोगात् परमाकाशविषयः अतो वाङ्मय आकाशशरीरः, आकाशशरीरत्वं च जीवशरीरत्वपर्यन्त 'तस्यान्ते सुषिरꣳसूक्ष्मम्, तस्य मध्ये महानग्निः' इति हृदयाकाशमध्ये अग्निशब्देन जाठराग्निपरमात्मव्याल्या स्पष्ट जीवमभिधाय 'तस्याश्शिखायामध्ये परमात्मा व्यवस्थितः' इति आम्नानादिति । तदप्यनुपपन्नम्, मनोमयादिव्यूहानामप्रामाणिकत्वस्य पूर्वमेव दर्शितत्वात् ॥

श्रीभाष्यम्

इत्यादिषु भोक्तृशरीरतया भोग्यभोगोपकरणशरीरतया चानुसन्धानम् । इहापि प्रकरणे तत्रिविधमनुसन्धानं युज्यत एवेत्यर्थः ॥

एतदुक्तं भवति–यत्र हिरण्यगर्भादिजीवविशेषाणां प्रकृत्याद्यचेतनविशेषाणां च परमात्मासाधारणधर्मयोगः तदभिधायिनां शब्दानां परमात्मवाचिशब्दैस्सामानाधिकरण्यं वा दृश्यते ; तत्र परमात्मनस्तत्तच्चिदचिद्विशेषान्तरात्मतयानुसन्धानं प्रतिपिपादयिषितं इति । अतोऽत्रेन्द्रप्राणशब्दनिर्दिष्टो जीवादर्थान्तरभूत परमात्मैवेति सिद्धम् ॥

भगवद्रामानुजमुनिविरचिते शारीरकमीमांसाभाष्ये प्रथमाध्यायस्य प्रथमःपादः

श्रुतप्रकाशिका

ननु ' सयश्चायं पुरुषे यश्चासावादित्ये सएक. ' इत्युक्त्वा अनन्तर ' सयएवंवित् ' इति वाक्येन जीवान्तर्यामिण आदित्यान्तर्वर्तिनश्चोपासनमुच्यत इतिचेन्न स्थानभेदेन विद्याभेदप्रसङ्गात् । उपानुपपत्तेः ' एतमानन्दमयमात्मानमुपसङ्क्रामति ' इत्यानन्दमयप्राप्तिफलश्रवणेन ' ब्रह्मविदाप्नोतिपरम् । तस्माद्वा एतस्मादात्मन ' इत्यादिना प्रतिपादितानन्दमयविषयविद्यैकत्वावगमात् प्रकरणस्य सम्भवत्येकवाक्यत्वे वाक्यभेदानुपपत्तेश्च, ' सयश्चायम् ' इत्यादि वाक्ये किमुच्यत इतिचेत् त्रिविधानुसन्धानरूपैकविद्याया मोक्षफलकत्वेन विवक्षितत्वेसति तत्र स्वरूपेणावस्थितस्यानुसन्धाने ज्ञानादिगुणवद्दिव्यविग्रहयोगस्याप्यनुसन्धेयतासिद्ध्यर्थं पुण्डरीकाक्षमप्राकृतवपुरतिदिश्यते । तत्र ' सयश्चायं पुरुषे ' इति विज्ञानमयादन्तरस्यानन्दमयस्यानुवादः ' यश्चासावादित्ये ' इति विग्रहातिदेश ॥

किंच आनन्दमयप्रतिपादनानन्तरम् ' ब्रह्मविदाप्नोति ' इत्युपक्रमाभिहितप्राप्तिविशदीकरणार्थं ' अथातोऽनुप्रश्ना. ' इति प्रश्ना उपक्षिप्ता पूर्वप्रतिपादनस्य बुभुत्साहेतुत्वमतश्शब्देनोच्यते ' उताविद्वान् ' इति । उत विद्वान् इति पद 'निपातस्य ' इति छान्दसो दीर्घः ' अथासपत्नान् ' इतिवत् अविद्वान् इतिपदेसंहिताद्युदात्तत्वस्यात् 'तत्पुरुषे तुल्यार्थे ' इत्यादिस्मरणात् ' अविद्वान्प्रतिगृह्णाति ' इतिवत् अन्तोदात्तत्वेदपद तस्माद्विद्वानितिपद कश्चनाविप्रकृष्टहृदयादिस्थानस्थमनवच्छिन्न च ब्रह्मोपासीनो विद्वान् किमत· प्रेत्य अमुलोक ' परमेव्योमन् ' इत्युक्त लोक गच्छतीत्येक प्रश्न । उत गत्यनपेक्षमिहैव ब्रह्मप्राप्नोतीत्यर्थसिद्ध प्रश्न. ' आहोविद्वान् ' इति । समश्नुता ' इति मोक्तृत्व विवक्षितम् कश्चित् अहंग्रहेणोपासीनोऽपि विद्वानमुलोक गत्वा किं समश्नुते भोग्यभूत ब्रह्मभवतीत्येक प्रश्न । उत ब्रह्मस्वरूपेणैकीभवतीत्यर्थसिद्ध प्रश्न ॥

एव शास्त्रवैविध्यमूला गतिविशेषस्वरूपभेदभावाभावविषयाः प्रश्ना· बहुवचनविवक्षिता । पर नूतन द्वे उत्तरमत्वौपाधिकगुणाविशिष्टस्यैव विलक्षणस्य ब्रह्मण· प्राप्यत्वादिज्ञापनाय 'सोऽकामयत ' इत्यादिना जगत्कारणत्वादिक निरतिशयानन्दमयस्य महिमानमुक्त्वा ' सयश्चायम् ' इत्यादिवाक्य वदति सन्निकृष्टहृदयस्थ वा विप्रकृष्टरविमण्डलादिस्थानस्थ वा पूर्वोक्त सत्यत्वादिलक्षणमानन्दादिगुणक वा ब्रह्मोपासीन. सर्वोऽपि विद्वानस्माल्लोकात् प्रत्यानन्दमयादिरूपमिष्टविभूतिक निरतिशयानन्द परमात्मानं भोग्यभूत मोक्षावस्थमनुभवतीति प्रश्नस्योत्तरमुक्तम् । अतस्सर्वेषां विद्याविशेष,

## श्रुतप्रकाशिका

निष्ठानामर्चिरादिगतिमत्त्व भोक्तृभोग्यभावेनावस्थानं च प्रतिपादयितुं सन्निकृष्टविप्रकृष्टस्थानविशेषोपलक्षणार्थं 'सयश्चायम' इत्युक्तं तस्मादादित्यान्तर्वर्तितयोपासनमानन्दवल्ल्या न विधित्सितम् । अत उक्तलक्षणत्रिविधोपासनमेवात्र विवक्षितम् ॥

एवं 'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' इत्यादीनि सदृशानि श्रुत्यन्तराणि विशेषितानि, त्रिविधोपासनस्य स्फुटतरत्वात् भोक्तृभोग्ययोरीश्वरविध व कथचित्स्वदेक्षाया चिदचिदनुप्रवेशादिक स्य तत्प्रकारित्वमिति त्रिविधोपासन श्रुत्यन्तराविरुद्ध कारत्वादानन्दवल्लीवाक्यार्थो हि स इत अयमभिप्रेतं 'इहतद्योगात्' इत्येतद्व्याचष्टे इहापीति । आनन्दोऽजरोऽमृत इति स्वेन रूपेणानुसन्धानम् 'प्राणोऽस्मि' इत्यचिद्विशिष्टानुसन्धानम् 'मामुपास्व' इति चिद्विशिष्टानुसन्धानमिति त्रिविधानुसन्धानमिहोपपद्यत इत्यर्थः, त्रिविधानुसन्धाने कर्तव्येऽप्यत्र चिद्विशेषाचिद्विशेषविशिष्टत्वोक्तिः कथं सामान्येन चिदचिद्विशिष्टानुसन्धानाहि प्रकरणान्तरोक्तनिर्देशो इत्यस्य न्यायस्य प्रतर्दनविद्यामात्रविषयत्वं च निवारयन्विशिष्टोपासनपरत्वचिह्नं च दर्शयति एतदुक्तमिति । यत्रेति । अय न्यायो न प्रतर्दनविद्यामात्रविषयः अपितु सर्वप्रकरणविषय इतिभाव. । सामान्येन चिदचिद्विशिष्टानुसन्धानं हि विशेषार्थीक्रियते विधेरन्वयप्रयोगेऽपि तथा चिदचिद्विशेषविशिष्टोपासन विहितत्वेन तत्र चिदचिद्विशेषविशिष्टानुसन्धानम् इत्यभिप्रायेणाह—हिरण्यगर्भादीति । हिरण्यगर्भादिजीवविशेषाणामिति पदेन परमात्मशब्देन च 'परमात्माव्यवस्थितः सब्रह्मा सशिवः' इतिश्रुतिः स्मार्यते, अनन्यपरेण नारायणानुवाकेन सर्वविद्यासूपास्यो नारायणएवेति निर्णीतत्वादिन्द्राद्युपासनेऽपि तत्तदन्तर्यामी नारायणएवोपास्य इतिभावः । पाशुपताधिकरणे तथाऽनुवदिष्यमाणत्वात् परमात्मपर्यन्तत्वविवक्षाज्ञापकं द्विविधं प्रदर्शयति परमात्मासाधारणेति । परमात्मासाधारणधर्मयोगात् इन्द्रादिशब्दानामधिकरण्याच्च विशिष्टोपासनपरत्वमवगम्यत इत्यर्थः । अधिकरणार्थमुपसंहरति अतइति ॥

अत्र केचिदेव वर्णितप्राणव्यापारस्यापि परमात्मायत्तत्वात् तत्सङ्कीर्तनं जीवनकीर्तनं तु तस्यौपाधिकत्वप्रदर्शनेन परब्रह्मरूपताज्ञापनार्थं अन्यथा त्रिविधमुपासनं प्रसज्येत ततश्च वाक्यभेदस्स्यादिति, तदयुक्तम् । 'नित्योपलब्ध्यनुपलब्धिप्रसङ्गः' 'अपीतौ तद्वत्प्रसङ्गात्' इतिवत् प्रसङ्गशब्दस्याश्रुतत्वात् वाक्यभेदाभावाच्च । एकवाक्येनैवहि विधीयते 'तं मामायुरमृतमित्युपास्व' इत्यत्र मामिति जीवविशिष्टतोक्ता आयुरिति प्राणविशिष्टता 'आयुः प्राणः' इत्यनन्तरवाक्यम् । अमृतमिति स्वेन रूपेणावस्थितिः अतएवंविधं परमात्मानमुपास्वेत्येकवाक्यत्वम् । उपासात्रैविध्यविधानस्य श्रुतिकाराभिमतत्वात्तदनतिक्रमाय परैरेव त्रिविधोपासनपरत्वेन योजना तरकृतम् । तत्र ज्ञानक्रियाशक्तिद्वयाऽऽश्रयबुद्धिप्राणरूपोपाधिधर्मेण स्वधर्मेण च त्रिविधं ब्रह्मोपास्यमिति । तदयुक्तम् जीवेश्वरभेदस्यान्तःकरणरूपोपाध्यवच्छेदकल्पितत्वाभावात् 'यस्यात्मा शरीरम्' 'मनोमयः प्राणशरीरः' इति जीवप्राणयोः परमात्मानम्प्रति शरीरतया प्रकारत्वस्य श्रुतत्वेन प्रकारान्तरेण त्रैविध्यकल्पनायोगाच्च, अन्येत्वेवमुपासात्रैविध्येन वाक्यैकवमाहुः प्रज्ञाशरीरो जीवशरीरः प्राणशरीरश्च परमात्मोपास्यः । तत्र प्रज्ञाशरीरो मनोमयः । जीवशरीरो वाङ्मयः वाक्शब्दः शब्दपरिणामशक्तियोगात् परमाकाशविषयः अतो वाङ्मय आकाशशरीरः, आकाशशरीरत्वं च जीवशरीरत्वपर्यन्तं 'तस्यान्ते सुषिरं सूक्ष्मम्, तस्य मध्ये महानग्निः' इति हृदयाकाशमध्ये अग्निशब्देन जाठराग्निपरमात्मज्वालया लक्ष्य जीवमभिधाय 'तस्याश्शिखाया मध्ये परमात्मा व्यवस्थित.' इति आम्नानादिति । तदप्यनुपपन्नम्, मनोमयादिव्यूहानामप्रामाणिकत्वस्य पूर्वमेव दर्शितत्वात् ॥

## श्रुतप्रकाशिका

किंच अस्मिन्प्रकरणे प्रज्ञाशब्दस्य सहोत्क्रमणपृथग्व्यवहाराभ्यां स्थानप्रमाणेन च जीवप्रसिद्धमनोविषयत्वोपपादने-नेश्वरप्रज्ञाशक्तिवाचित्वाभावात् प्राणशब्दस्य घटशब्दस्योदकाहरणशक्तिवाचित्वाभावात् क्रियाशक्तिवाचित्वाभावाच्च अतः प्रज्ञाप्राणशब्दौ न मनोमयप्राणमयवाचकौ । यदि प्रसिद्धमनोवाक्प्राणा एतत्कार्यभूता विवक्षिताः तर्ह्यस्मिन्प्रकरणे चक्षुः श्रोत्रादीनामपि प्रकृतत्वात्तेषां च परमात्ममयत्वादुपासात्रैविध्यं विरुध्यते । आकाशशरीरं व जीवशरीरत्वपर्यन्तत्वमित्यप्य युक्तम् । ' तस्य मध्ये महानग्नि- ' इत्यग्निशब्दस्य जीववाचित्वाभावात् ' तत्र यस्संश्रितो नित्यं स्थाल्यामग्निरिवा-र्पितः । आत्मानं संविजानीयात्- ' इति स्मृतिवचनं तु न जीवस्य श्रुतावग्निशब्दवाच्यत्वे प्रमाणं, किंतु स्थानस्था-निनोर्वैलक्षण्ये दृष्टान्तमात्रसमर्पकम् । वाय्वयस्य जीवशरीरकत्वं भवत्प्रक्रियया विरुद्धं च प्राणमयस्यान्तर्यामित्वाभ्युपग-मात् अन्तर्यामिणो जीवशरीरकत्वश्रवणाच्च, ' यस्यात्मा शरीरम् ' ' स त आत्माऽन्तर्याम्यमृत ' इतिहि श्रूयते तमो-ऽधिष्ठातृतयाऽभ्युपगमस्य वाय्वयस्य जीवशरीरकत्वं च श्रुतिविरुद्धं च ' यः पृथिव्यामन्तरे सञ्चरन्यस्य पृथिवीशरीरम् ' इत्यारभ्य ' एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्योदेव एको नारायण ' इति समानप्रकरणे नारायणस्यैवान्तर्या-मित्वश्रवणात् धर्मैक्यात्सर्वमुपपन्नमितिचेन्न सर्वेषां व्यूहानां सर्वधर्मसम्भवेन व्यूहत्रय तद्व्यापारविभागव्यवस्थोपन्यासानुप-पत्तेः अतो यथोक्तमेवोपासात्रैविध्यमिति सिद्धम् ॥

इति इन्द्रप्राणाधिकरणम्

॥ श्रुतप्रकाशिकायां प्रथमाध्यायस्य प्रथमः पादस्समाप्तः ॥

---

अथ वेदान्तसारः

## सू.२९= प्राणस्तथानुगमात् (१.१.११)

आत्मानं हिततमरूपमोक्षसाधनोपासनकर्मतया प्रज्ञातजीवभावस्येन्द्रस्य ' प्राणोऽस्मि प्रज्ञात्मा तमामायुरमृतमित्यु-पास्व ' (कौ.३.१) इति विधानात् स एव जगत्कारणम् । कारणोपासनं हि मोक्षसाधनम् ' तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये ' (छा.६.१४.७) इति श्रुतेरिति नाशङ्कनीयम् ; प्राणशब्दसमानाधिकरणेन्द्रशब्दनिर्दिष्टो जीवा-दर्थान्तरभूतउक्तलक्षणः परमात्मैव । कुतः ? ' तथानुगमात् , परमात्मासाधारणानन्दाजरामृतादिध्वस्येन्द्रप्राणशब्दनिर्दि-ष्टस्यानुगमोहि दृश्यते—' स एष प्राण एव प्रज्ञात्माऽनन्दोऽजरोऽमृत ' (कौ.१.२) इति ॥

## सू-३० न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमाह्यस्मिन् [१-१-११]

उपक्रमेहि ' मामेव विजानीहि ' (कौ ३.१) इति त्वाष्ट्रवधादिना प्रज्ञातजीवभावस्य इन्द्रस्योपदेशात्, तदुपसंहार-स्तदनुगुणो वर्णनीय इतिचेत्—नैतत् 'अध्यात्मसम्बन्धभूमाह्यस्मिन्' अध्यात्मं परमात्मधर्मः । परमात्मसम्बन्धबहुत्वमस्मि-न्निन्द्रशब्दाभिधेये वाक्योपक्रमप्रभृत्युपसंहाराद्दृश्यते । ' यं त्वं मनुष्याय हिततमं मन्यसे ' (कौ.३.१) इति हिततमोपासन

प्रारब्धम् । तच्च परमात्मधर्मः । 'तमेव विद्वानमृत इह भवति । नान्यःपन्थाः ' (पुरुषसू) इत्यादिश्रुतेः तथा ' एष एव साधुकर्म कारयति ' (कौ.३.९) इत्यादिना सर्वत्र कारयितृत्वम् ' एवमेवैता भूतमात्राः ' (३.९) इत्यारभ्य 'प्रज्ञामात्राः प्राणेष्वर्पिताः '(३.९)इति सर्वाधारत्व तथा आनन्दादयश्च, 'एषलोकाधिपतिः' (३.९) इत्यादिना सर्वेश्वरत्वञ्च॥

## सू.३१=शास्त्रदृष्ट्यातूपदेशो वामदेववत् (१.१.११)

नामरूपव्याकरणादिशास्त्रात्सर्वशब्दैः परमात्मैवाभिधीयत इति दृष्ट्या [illegible] शास्त्रसाहि वामदेवादयः तथैव वदन्ति–'तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहमनुरभव सूर्यश्च' (बृ.३.४.१०)इति

## जीवमुख्यप्राणलिंगान्नेतिचेन्नोपासात्रैविध्यादाश्रितत्वादिहतद्योगात १-१-३२

' त्रिशीर्षाणं त्वाष्ट्रमहनम्, यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः ' (कौ.३.१) इत्यादिजीवलिङ्गं, मुख्यप्राणलिङ्ग चास्मिन् दृश्यत इति नैवमितिचेन्न ; उपासात्रैविध्यात् हेतोर्जीवशब्देन प्राणशब्देन च परमात्मनोऽभिधानम् । अन्यत्रापि परमात्मनः स्वरूपेणोपासन भोक्तृशरीरकत्वेन भोग्यभोगोपकरणशरीरकत्वेन इति त्रिविध परमात्मोपासनमाश्रितम् । 'सत्यं ज्ञानमनन्त ब्रह्म' (तै.आन.१) इति स्वरूपेण ' तदनुप्रविश्य सच्चत्यच्चाभवत् ' (६) इत्यादि ' सत्यं चानृत च सत्यमभवत् ' (६) इति भोक्तृशरीरकत्वेन भोग्यभोगोपकरणशरीरकत्वेन च ; इहापि त सभवादेवमुपदेशः । ' जन्माद्यस्य यतः ' (शारी.१.१.२) इत्यादिषु सद्ब्रह्मेति सामान्यशब्दैर्हि जगत्कारण प्रकृतिपुरुषाभ्यामर्थान्तरभूतमिति साधितम् । ' ज्योतिश्चरणाभिधानात् ' (शारी.१.१.२६) इत्यस्मिसूत्रे पुरुषसूक्तोदितो महापुरुषो जगत्कारणमिति शब्दविशेषतो निर्णीतम् । सएव प्रज्ञातजीववाचिभिरिन्द्रादिशब्दैरपि क्वचि क्वचिच्छास्त्रदृष्ट्या तत्तच्छरीरकतया चोपास्यत्वायोपदिश्यत इति ' शास्त्रदृष्ट्यातूपदेशो वामदेववत् ' (शारी.१.१.३१) इति उपासात्रैविध्यात् इति साधितम् ॥

इति वेदान्तसारः

अथ वेदान्तदीपः

## सू–२९ प्राणस्तथानुगमात् [१-१-)

कौषीतकीब्राह्मणे प्रतर्दनविद्यायां ' त्वमेवमे वरं वृणीष्व यत्व मनुष्याय हिततम मन्यसे · (का.३.१) इतिप्रतर्दनोक्त इन्द्रः ' प्राणोऽस्मि प्रज्ञात्मा तमामायुरमृतमित्युपास्व ' ३.१. इत्याह ।.अत्र हिततमोपासनकर्मतया निर्दिष्ट इन्द्रप्राणशब्दाभिधेयः, किं जीव ? उत परमात्मेति सशयः । जीवइति पूर्वःपक्षः । कुतः ? इन्द्रशब्दस्य जीवविशेषे प्रसिद्धेः प्राणशब्दस्यापि तत्समानाधिकरणस्य सएवार्थ इति ' तमामायुमृतमि युपास्व ' इति तस्यैवोपास्यत्वोपदेशात् इति । राद्धान्तस्तु—इन्द्रप्राणशब्दनिर्दिष्ट जीवादर्थान्तरभूतं पर ' सएष प्राणएव प्रज्ञात्माऽनन्दोऽजरोमृतः ' ३.१. इतीन्द्रप्राणशब्दनिर्दिष्टस्यैव जीवेष्वसम्भावितानन्दत्वाजरत्वादिश्रवणात् । सूत्रार्थस्तु उपास्यतयोपदिष्ट इन्द्रप्राणशब्दाभिधेय परं ब्रह्म ; तथेति प्रकारवचनः, परब्रह्मप्रकारभूतेष्वानन्दादिष्वस्यानुगमात् ॥

## सू-३० न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमाह्यस्मिन् [११-१,]

नायमुपास्यःपरमात्मा 'मामेव विजानीहि, तमामायुरमृतमित्युपास्व' .कौ.३.१. इति प्रशातजीवभावस्येन्द्रस्य वक्तुस्स्वात्मन उपास्यत्वोपदेशात् उपक्रमे जीवभावनिश्चयेसति उपसंहारस्य तदनुगुणतया नेयत्वादितिचेन्न ; आध्यात्मसंबन्धभूमाह्यस्मिन्—आत्मनि संबन्धः अध्यात्मसम्बन्धः तस्य, भूमा बहुत्वम् । जीवादर्थान्तरभूतात्मसाधारणधर्मसंबन्धबहुत्वमस्मिन्प्रकरणे उपक्रमप्रभृत्युपसंहारादुपलभ्यते । उपक्रमेतावत् 'यंत्वं मनुष्याय हिततमं मन्यसे' .३.१. इति हितेनोच्यमानमुपासनं परमात्मोपासनमेव, तस्यैव हिततमत्वात् । तथा 'एषएव साधुकर्म कारयति .३.९. इत्यादिसाध्वसाधुकर्मणोः कारयितृत्वं परमात्मन एव धर्मः । तथा 'तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः, प्रज्ञामात्राः प्राणेऽर्पिताः' .३.९. इति सर्वाधारत्वञ्च तस्यैव धर्मः । आनन्दादयश्च, 'एष लोकाधिपतिरेष सर्वेश्वरः' .३.९. इति च । हीतिहेतौ । अतःपरब्रह्मैवायमित्यर्थः ॥

परमात्मैवोपास्यश्चेत्—कथमिन्द्र. 'मामुपास्व' .३.१. इत्युपदिदेश इत्याह—

## सू.३१—शास्त्रदृष्ट्यातूपदेशो वामदेववत् (१.१.११)

इन्द्रस्य जीवस्यैव सतः स्वात्मत्वेनोपास्यभूतपरमात्मोपदेशोऽय शास्त्रदृष्ट्या । 'अन्तःप्रविष्टश्शास्ताजनानाँ सर्वात्मा' (आरण.३.प्रअनु.२१) 'तत्त्वमसि' .छा.६.८.७. 'यआत्मनि तिष्ठन्नात्मनोऽन्तरोऽयमात्मा नवेद यस्यात्मा शरीरं यआत्मनोऽन्तरो यमयति सतआत्माऽन्तर्याम्यमृतः' (बृ.५.७.२२) 'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' .सुबाल.ख.७. इत्यादीनिहि शास्त्राणि परमात्मानं जीवात्मनआत्मतयोपदिदिशुः ; अतो जीवात्मवाचिनश्शब्दाः जीवात्मशरीर परमात्मानमेव वदन्तीति शास्त्रदृष्टार्थस्य तस्य 'मामेव विजानीहि, माम्—उपास्व' .३.१. इति स्वात्मशब्देन परमात्मोपदेशो नविरुध्यते । यथा वामदेवश्शास्त्रदृष्ट्या स्वात्मशरीरकं परमात्मान पश्यन् अहमिति परमात्मानमवोचत् 'तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहमनुरभव सूर्यश्चाह कक्षीवानृषिरस्मि विप्र' .बृ.३.४.१०. इति ॥

## जीवमुख्यप्राणलिंगान्नेतिचेन्नोपासात्रैविध्यादाश्रितत्वादिहतद्योगात् [.१.१०]

'त्रिशीर्षाण त्वाष्ट्रमहनमरुन्मुखान्यतीन्सालावृकेभ्यः प्रायच्छम्' 'यावदस्मिन्शरीरे प्राणो वसति तावदायुः' .३.१. इति जीवमुख्यप्राणलिङ्गात् नाध्यात्मसम्बन्धभूम्ना परमात्मत्वनिश्चयइतिचेन्न ; परमात्मनएव स्वाकारेण जीवशरीरकत्वेन प्राणशरीरकत्वेन चोपासात्रैविद्ध्याद्धेतोः तत्तच्छब्देनाभिधानमिति निश्चीयते । अन्यत्रापि ब्रह्मोपासनात्रैविध्यस्याश्रितत्वात् 'सत्य ज्ञानमनन्त ब्रह्म' .तै.आन.१. 'आनन्दो ब्रह्म' .६. इति स्वाकारेणोपास्यत्वम् 'सच्चत्यच्चाभवत्' .६. इत्यादिना भोक्तृशरीरकत्वेन भोग्यशरीरकत्वेन च । इह प्रतर्दनविद्यायामपि तस्य त्रैविध्यस्य र

अतः इन्द्रप्राणशब्दनिर्दिष्टः परमात्मा ॥

॥ इति वेदान्तदीपे इन्द्रप्राणाधिकरणं समाप्तम् ॥

प्रथमपादश्च समाप्तः

## अथ अधिकरणसारावली

विद्या प्रातर्दनी सा यदति हिततमोपास्तिकर्मेन्द्रमेव
ख्यातप्राणेन्द्रचिह्नान्वितमपि तदसौ विश्वकर्मेतिचेन्न ।
ब्रह्मत्रेधा ह्युपास्यं बहुविधचिदचित्कञ्चुकं स्वात्मना च
प्राणेन्द्रप्रक्रमोऽपि प्रबलतरमहावाक्यवैघट्यभग्नः ॥ १ ॥

यल्लिङ्गं कारणैकस्थितमिति कथितं ज्योतिषीन्द्रे च तत्तु
प्रख्यातान्यैकनिष्ठं प्रथममितमतस्तन्मुखोऽस्थिल्पयोगः ।
अप्राप्ते तद्विमर्शे प्रकृतशिथिलता नेतिचेत्सत्यमेतत्
विष्णूत्पत्त्यादिनीतिभ्रमत इह पुरोवादमुत्प्रेक्ष्य शङ्का ॥ २ ॥

ज्योतिःप्राणेन्द्रशब्दाः परतरविषयाः कारणव्याप्तधर्मा-
श्चेतत्साध्वमीषां बहुविहतिमती ख्यातमात्रेतु वृत्तिः ।
तत्कौक्षेयानिलात्मा कथित इह तथा ध्यानतस्तत्फलाप्त्यै
मुख्यप्राणादिलिङ्गं तदुपहितपरोपासनान्मोक्षणाय ॥ ३ ॥

कार्यं यत्कर्मवश्यं यदपि दृढमितं तान्निरूढैस्तु शब्दैः
निर्दिष्टे ब्रह्मणि स्यात्क्वचिदगतहता रूढिरैन्द्रीनयेन ।
तल्लिङ्गानन्यथासिद्ध्यधिगमनबलात्तद्विशिष्टे विवक्षा
स्यादीशे ज्योतिरिन्द्राद्यभिलपनपदेऽहंत्वमादौरिते च ॥ ४ ॥

स्वेच्छातस्सर्वहेतुश्शुभगुणविभवानन्तनिस्सीमहर्षः
शुद्धाकर्मोत्थनित्याकृतिरनुपधिकाकाशनादिस्वभावः ।
सप्राणाप्राणभेदव्यतिभिदुरजगत्प्राणनो दिव्यदीप्तिः
प्राणेन्द्राद्यन्तरात्मा प्रभुरधिकरणगणैस्सप्तभिः प्रत्यपादि ॥ ५ ॥

इति इन्द्रप्राणाधिकरणम्

प्रथमःपादस्समाप्तः



श्रीलक्ष्मीहयवदनलक्ष्मीनारायणाभ्यां नमः

॥ श्रीमते रामानुजाय नमः ॥

## ॥ अथ प्रथमाध्याये द्वितीयपादे सर्वत्रप्रसिद्ध्यधिकरणम् ॥

### श्रीभाष्यम्

प्रथमपादे अधीतवेदः पुरुषः कर्ममीमांसाश्रवणाधिगतकर्मयाथात्म्यविज्ञानः केवलकर्मणामल्पास्थिरफलत्वमवगम्य वेदान्तवाक्येषु चापातप्रतीतानन्तस्थिरफलब्रह्मस्वरूपतदुपासनसमुपजातपरमपुरुषार्थलक्षणमोक्षापेक्षोऽवधारितपरिनिष्पन्नवस्तुबोधनशब्दशक्तिर्वेदान्तवाक्यानां परस्मिन् ब्रह्मणि निश्चितप्रमाणभावस्तदितिकर्तव्यतारूपशारीरकमीमांसाश्रवणमारभेतेत्युक्तं शास्त्रारम्भसिद्धये। अनन्तविचित्रस्थिरत्रसरूपभोक्तृभोग्यभोगोपकर-

### अथ सर्वत्रप्रसिद्ध्यधिकरणम्

### श्रुतप्रकाशिका

प्रथमे पादे इत्यादि। किमर्थमत्र प्रथमपादाधिकरणार्थानुक्रमणम्। उच्यते—पादानुयायिनोऽर्थस्य प्रत्यधिकरणमनुयायित्वस्फुटीकरणाय। किमर्थमनुयायित्वकथनम्। त्रिपादीसङ्गत्यर्थम् सङ्गतिः कुतः? सूत्रकाराभिप्रेतत्वात् पादभेदोह्यर्थभेदात्। तत्क्रमश्च सङ्गतिविशेषात् तत्र किं प्रमाणम्? सम्प्रदायक्रमः। किञ्च अत्राधिकरणार्थानुक्रमणेन त्रिपाद्या अनारम्भणीयत्वशङ्काचार्थात् परिहृता भवति। त्रिपाद्यामुदाहरिष्यमाणानां श्रुतीनां प्रथमपादाधिकरणोक्तन्यायाविषयत्वज्ञापनार्थत्वादनुक्रमस्य; अतएव प्रथमपादे वेदान्तवाक्यानां परमात्मपरत्वे दर्शितेऽपि त्रिपाद्या आरम्भणीयत्वं सिद्धम् ॥

प्रथमे पादेऽपीक्षत्यानन्दमयाधिकरणयोः कारणस्य चिदचिद्विलक्षण्ये सिद्धेऽपि पूर्वाधिकरणन्यायाविषयश्रुतिवाक्यार्थनिर्णयार्थोह्युत्तरोत्तराधिकरणारम्भः तद्वदत्रापीति। शास्त्रारम्भप्रयोजनायाश्चतुस्सूत्र्याः कथं प्रथमपादे सङ्गतिः। उच्यते—तस्याः शास्त्रारम्भार्थत्वेन शास्त्रोपोद्घातरूपत्वादर्थतः प्रथमपादान्तर्भावः नतु प्रथमपादस्य प्रथमाध्यायस्य वा असाधारणत्वात्सङ्गतिः। प्रथमे पादे इति। अधीतवेदः कृतसाङ्गसशिरस्काध्ययनः। तावत्पर्यवसानमाह—कर्मेति। तत्पर्यवसानहेतुमाह—केवलेति। तथाऽपि ब्रह्मविचारप्रवर्तनक्षमापातप्रतीतिरेव न जायते सिद्धवस्तुनि व्युत्पत्त्यभावादिति शङ्कायां प्रथमसूत्रस्य तात्पर्यमाह—अवधारितेति। तर्हि वेदान्तवाक्यैरेवालम् किमर्थो ब्रह्मविचार इत्यत्राह—तदितिकर्तव्येति ॥

ननु चतुस्सूत्री हि शास्त्रारम्भार्था तत् कथं प्रथमाधिकरणार्थानुक्रमे शास्त्रारम्भसिद्धय इत्युक्तम्। जन्मादिसूत्रत्रयस्यापि प्रथमाधिकरणाधीनारम्भत्वात्तदर्थोक्तिः। न(चे)तु)तथा सूत्राणां शास्त्रारम्भार्थत्वाभावात्, यद्वा जन्मादित्रिसूत्र्याः शास्त्रारम्भार्थत्वे सत्यपि प्रथमपादे सङ्गतिरप्यस्ति चिदचिद्विलक्षणकारणास्तित्वविषयत्वात्तस्याः। प्रथमपादो हि समस्तचिदचिद्विलक्षणकारणास्तित्वनिरूपणपरः; जन्मादिसूत्रे जन्मादिकारणत्वं लक्षणमुक्तम् कारणस्य प्रमाणान्तरासिद्धिः प्रयोजनरूपता चानन्तरसूत्रद्वयेनोक्ते अतः प्रथमाधिकरणार्थानुक्रमे शास्त्रारम्भसिद्धय इत्युक्तमिति। यद्वा शास्त्रारम्भसिद्धय इति पदमुत्तराधिकरणत्रये अनुषज्यत इति चतुस्सूत्र्याः शास्त्रारम्भसिद्ध्यर्थत्वमुक्तं भवति। जन्मादिसूत्रार्थमनुक्रामति अनन्तेति। सौत्रस्यास्येति पदस्य विवक्षितमर्थमाह—अनन्तविचित्रादिविशेषणैः। अनन्तविचित्रशब्दौ भोक्तृभोग्यसाधारणौ।

श्रीभाष्यम्

रणभोगस्थानत्वेन निखिलजगदुदयविभवलयमहानन्दैककारणं परं ब्रह्म 'यतो वा इमानि भूतानि(तै.भृगु.) इत्यादिवाक्यं बोधयतीति च प्रत्यपादि। जगदेककारणं परं ब्रह्म सकलेतरप्रमाणाविषयतया शास्त्रैकप्रमाणकमित्यभ्यधाम शास्त्रप्रमाणकत्वं च ब्रह्मणः प्रवृत्तिनिवृत्त्यन्वयविरहेऽपि स्वरूपेणैव परमपुरुषार्थभूते परस्मिन् ब्रह्मणि वेदान्तवाक्यानां समन्वयान्निरूढम् इत्यवूम। निखिलजगदेककारणतया वेदान्तवेद्यं ब्रह्मेक्षणाद्यन्वयादानुमानिकप्रधानादर्थान्तरभूतश्चानन्दमय एवेत्युपापीपदाम। सच स्वाभाविकानवधिकातिशयानन्दविपश्चित्त्वनिखिलचेतनभयाभयहेतुत्वसत्यसङ्कल्पत्वसमस्तचेतनाचेतनान्तरात्मत्वादिभिर्जीवमुक्तोभयासम्भाविधर्मवाग्भिरनन्यार्थाक्यायत्थान्तरभूत इति च समार्थयामहि ॥

सचाप्यप्राकृतासाधारणविग्रहरूप इत्युदैरिराम। 'आकाशप्राणाद्यचेतनविशेषाभिधायिभिर्जगत्कारणतया प्रसिद्धवन्निर्दिश्यमानस्सकलेतरचेतनाचेतनविलक्षणस्स एवेति समगरिष्महि। परतत्त्वासाधारणनिरतिशयदीप्तियुक्तज्योतिश्शब्दाभिधेयो द्युसम्बन्धितया प्रत्यभिज्ञानात्स एवेत्यातिष्ठामहि। परमकारणासाधारणामृतत्वप्राप्तिहेतुभूतः परमपुरुष एव शास्त्रदृष्ट्येन्द्रादिशब्दैरभिधीयत इत्यवूमहि। तदेवमतिपतितसकलेतरप्रमाणसम्भावनाभूमिस्सविशेषसत्यसङ्कल्पत्वाद्यपरिमितोदारगुणसागरतया स्वेतरसमस्तवस्तुविलक्षणः परं ब्रह्म पुरुषोत्तमो नारायण एव वेदान्तवेद्य इत्युक्तम् ॥

अतः परं द्वितीयतृतीयचतुर्थेषु पादेषु यद्यपि वेदान्तवेद्यं ब्रह्मैव, तथाऽपि कानिचि-

श्रुतप्रकाशिका

महानन्दैककारणत्वं 'तद्विजिज्ञासस्व' इति वाक्याभिप्रेतं तापत्रयातुरजिज्ञास्यत्वाहि लक्षणं निरूपितम् अतो महानन्दैककारणमिति युक्तम् ॥

यद्वा 'यत्प्रयन्ति' इत्यस्यात्यन्तिकलयपर्यन्तत्वाभिप्रायेणोक्तं महानन्देति 'येऽयं प्रेते' 'नप्रेत्य' इति चात्यन्तिकलयेऽपि प्रायण श्रुतः। अविरुद्धविशेषणभेदा न विशेष्यभेदावह इत्यभिप्रायेणैकशब्दप्रयोगः। निमित्तोपादानैक्याभिप्रायेण वा शास्त्रेति। समन्वयात् परमपुरुषार्थभूतस्यैव ब्रह्मणः प्रतिपादकतया शास्त्रस्य तेनान्वयात् सचेत्यादि। स्वाभाविकानवधिकातिशयशब्दौ प्रतिविशेषणसमन्वितौ। आकाशप्राणाधिकरणार्थयोः पृथगनुक्तिर्न्यायस्यानतिभिन्नत्वात्। परमेति। परमकारणस्यासाधारण—तस्य प्रदेयत्वेनासाधारणममृतत्वं तत्प्राप्तिहेतुरित्यर्थः। यद्वा परमकारणस्यासाधारणचिह्नभूतमित्यर्थः। उपासकस्यामृतत्वप्राप्तिहेतुत्वस्य परमकारणत्वमावेदयतीति। यद्वा परमकारणासाधारणं तद्धर्मभूतममृतत्वं तत्प्राप्तिः परमसाम्यापत्तिरित्यर्थः। पदार्थमाह—तदेवमिति। 'पुरुष वादसदादि'वादित्यादिकुतर्कपरिहारार्थमाह— अतिपतितेति। तेषां धर्मिग्राहकमानबाध इति भावः। ज्योतिरधिकरणार्थाभिप्रायः पुरुषोत्तमशब्दः। प्रतर्दनविद्याभिप्रायो नारायणशब्दः 'मामुपास्व' इत्यस्यापि नारायणानुवाकैक्येन सर्वविद्योपास्यतयोक्तनारायणोपासनपरत्वात्। किंदाचिद्विलक्षणकारणास्तित्वं पादानुगतार्थ इत्यर्थः। नारायणएवेत्यवधारणाक्षेपेण द्वितीयादिपादोत्थानमित्यभिप्रायेणाह— अतःपरमिति। द्वितीयतृतीयचतुर्थेष्विति। प्रथमपादस्य न केवलमनन्तरपादेन सङ्गतिः॥ अपितु त्रिपाद्यैवेति भावः। यथा चोदनालक्षणोऽर्थो धर्म इत्यत्र चोदनैव प्रमाणम् प्रमाणमेव चोदनेत्यवधारणद्वयं। तत्र प्रमाणमेव चोदनेत्यवधारणमौत्पत्तिकसूत्रे साधितं चोदनैव प्रमाणमित्यवधारणं प्रत्यक्षसूत्रे स्थापितम्। तथ

श्रीभाष्यम्

वेदान्तवाक्यानि प्रधानक्षेत्रज्ञान्तर्भूतवस्तुविशेषस्वरूपप्रतिपादनपराण्येवेत्याशङ्क्य तन्निरसनमुखेन तत्तद्वाक्योदितकल्याणगुणाकरत्वं ब्रह्मणः प्रतिपाद्यते । तत्रास्पष्टजीवादिलिङ्गकानि वाक्यानि द्वितीये पादे विचार्यन्ते ; स्पष्टलिङ्गकानि तृतीये ; तत्तत्प्रतिपादनच्छायानुसारीणि चतुर्थे ॥

## सू-१ सर्वत्र प्रसिद्धोपदेशात् [१-२-१)

इदमाम्नायते छान्दोग्ये-' अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः ' (छां.३.१४.१) इत्यादि

श्रुतप्रकाशिका

जन्मादिसूत्रेऽपि ब्रह्म कारणमेव ब्रह्मैव कारणमित्यवधारणद्वयमपि विवक्षितम् । जन्मादिकारणत्वस्य ब्रह्मलक्षणत्वात्, लक्षणस्याव्याप्त्यतिव्याप्त्यसंभवपरिहारावश्यंभावात् तत्र व्यक्त्यैक्यादव्याप्तिः असंभवपरिहाररूपायोगव्यवच्छेदः प्रथमपाद उक्तः । अतिव्याप्तिपरिहाररूपान्ययोगव्यवच्छेदस्त्रिपाद्या क्रियत इति विभागाभिप्रायेण कानिचिद्वेदान्तवाक्यानीत्युक्तम् । तत्तद्वाक्योदितकल्याणगुणाकरत्वं ब्रह्मणः प्रतिपाद्यत इति । चिदचिद्विलक्षणस्वरूपं साधितम् । अथ तस्य गुणविशेषप्रतिपादनं त्रिपाद्यां क्रियत इति च प्रथमपादत्रिपाद्योर्विभाग इति भावः ॥

पादत्रयस्यावान्तरभिदामाह-तत्रेति । अस्पष्टत्वादिवैषम्यं ब्रह्मलिङ्गगतमिति परैरुक्तम् अत्र तु जीवादिलिङ्गगतमिति भिदा । द्वितीयतृतीयपादाद्याधिकरणयोर्जीवस्य पूर्वपक्षितत्वात् जीवादीत्युक्तम् । तत्तत्प्रतिपादनच्छायानुसारीणि चतुर्थ इति । तत्तत्प्रतिपादनं जीवादिलिङ्गप्रतिपादनं, न तल्लिङ्गप्रतिपादनम् अस्पष्टस्पष्टस्पष्टतरपूर्वपक्षोत्थानहेतुभेदेन भिन्नास्त्रयः पादा इत्यर्थः । प्रथमपादचरमाधिकरणे अवयवभूतोपक्रमगतजीवलिङ्गमवयविभूतवाक्यार्थस्वारस्येन बाधितमित्युक्तम् । सर्वतादात्म्यमनःप्राणसम्बन्धधार्मकोक्षवाणीरव्यपदेशरूपलिङ्गानामवयविस्वेनाबाध्यत्वमिति प्रत्यवस्थानं परिह्रियते द्वितीयपादप्रथमाधिकरणे इत्यवान्तरसङ्गतिः ॥

## सू.१-सर्वत्र प्रसिद्धोपदेशात् (१.२.१)

' सर्वंखलु ' इत्यादेर्द्वितीययोजनायामुदाहरिष्यमाणत्वात् प्रथमयोजनापेक्षित ' अथ खलु ' इत्यादिकमुपात्तम् । द्वितीयसूत्रे ' भारूपः ' इत्यस्योपरितनवाक्यस्योपादास्यमानत्वात् अत्र 'भारूप' इत्यन्तमुपात्तम् आदिशब्देनान्यद्गृहीत अत्र रात्रिसत्रन्यायेन मनोमय उपास्यतया सम्बध्यते, आर्थवादिकस्यापि विध्यपेक्षितस्य स्वीकार्यत्वात् , ननु ' स क्रतुं कुर्वीत ' इत्यादिकमुपादीयतां किमर्थं ' यथाक्रतुरस्मिन् ' इत्यादिवाक्योपादानम् । उच्यते-' फलवत्सन्निधावफलं तदङ्गम् ' इति न्यायेन ' स क्रतुं कुर्वीत ' इति विधेः फलाश्रवणनिमित्तं पूर्वविहितोपासनाङ्गत्वं माभूदिति फलसम्बन्धप्रदर्शनार्थं तदुपादानम् ' शान्त उपासीत ' इति विहितोपासनाधिकृतस्यैवोपासनान्तरविधानमनुपपन्नमिति शङ्काव्यावृत्त्यर्थम् ' अथ खलु क्रतुमयः पुरुष ' इति वाक्यं घटकत्वेनोपात्तं । जीवस्य बहुविधोपासनप्रचुरवादनेकोपासनविधानकमिति भावः, अत्र व्याख्यात्रन्तरैः ' सर्वंखलु ' इति वाक्यस्य ब्रह्मपरत्वं स्पष्टमिति बुद्ध्वा ' सक्रतुम ' इत्यादि

### श्रीभाष्यम्

तत्र 'स क्रतुं कुर्वीत' (छां.३.१४.१) इति प्रतिपादितस्योपासनस्योपास्यः 'मनोमयः प्राणशरीरः' (३.१४.२) इति निर्दिश्यत इति प्रतीयते। तत्र संशयः किं मनोमयत्वादिगुणकः क्षेत्रज्ञः ; उत परमात्मा-इति। किं युक्तम्? क्षेत्रज्ञ इति। कुतः? मनःप्राणयोः क्षेत्रज्ञोपकरणत्वात्, 'अप्राणो ह्यमनाः' (मु.२.१.२) इति तत्प्रतिषेधाच्च। न च 'सर्वं खल्विदं ब्रह्म' (छां.३.१४.१) इति पूर्वनिर्दिष्टं ब्रह्मात्रोपास्यतया सम्बद्धुं शक्यते, 'शान्त उपासीत' इत्युपासनोपकरणशान्तिनिर्वृत्त्युपायभूतब्रह्मात्मकत्वोपदेशायोपात्तत्वात्। न च 'स क्रतुं कुर्वीत' (३.१४.१) इत्युपासनस्योपास्यसाकाङ्क्षत्वाद्वाक्यान्तरस्थमपि ब्रह्म सम्बध्यत इति

### श्रुतप्रकाशिका

वाक्ययोर्जीवविषयत्वेन पूर्वपक्षं कृत्वा ब्रह्मविषयत्वेन सिद्धान्त उक्तः इह तु विषयैक्ये स्थित एव पूर्वपक्षसिद्धान्तौ पश्चादभिधास्येते। प्रथमं व्याख्यानान्तरोक्तदिशा पूर्वपक्षसिद्धान्तावुपवर्ण्येते।

नन्वत्रोपासनान्तरं न विधित्सितम्, पूर्वविहितोपासनाङ्गभूतक्रतुविधिपरत्वादस्य वाक्यस्य। ततश्च मनोमयादिपदान्युपास्यान्तराभावात् प्रकृतब्रह्मपराणीति निश्चयात्तद्विचारविषय इति शङ्कां व्युदस्यति। अत्रेति। मनोमयादिपदानां प्रकृतोपास्यविषयत्वे प्रमाणाभावात् ब्रह्मपरत्वानिश्चयात् 'सक्रतुम्' इति निर्दिष्टोपासकविशेषणत्वाश्रयणे तस्यानाविर्भूतगुणाष्टकस्य सत्यसङ्कल्पत्वादेरघटमानत्वाच्च, पाश्चात्यविद्यान्तरोपास्यपरत्वनिश्चये सति तद्विशेषनिश्चयाभावाद्विचारस्यारम्भणीयत्वमित्यर्थः। उपासनस्येति पदेन 'तं यथा यथोपासते तथैव भवति' 'यथा क्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति' इत्यनयोर्वाक्ययोरैकार्थ्यात् 'क्रतुं कुर्वीत' इत्यत्र क्रतुशब्दश्चोपासनपर इति तदुपास्ये मनोमयत्वादिगुणके संशय इति भावः। तत्रेति। 'स क्रतुं कुर्वीत' इत्यत्रोपास्यतया निर्दिष्टो मनोमयत्वादिगुणकः किं जीवः? उत परमात्मेति विचारः तदर्थं कर्मकर्तृव्यपदेशशब्दविशेषोपसंहारगतब्रह्मशब्दादयः किं मुख्याः उतामुख्याः तदर्थं किं? मनोमयत्वादिकं जीवस्यैव सम्भवति उत परमात्मनोऽपि घटत इति। तदर्थं 'अप्राणो ह्यमनाः' इति किं मनआदिसम्बन्धमात्रनिषेधः उत सम्बन्धविशेषनिषेध इति। यदा सम्बन्धमात्रनिषेधः तदा मनोमयत्वादेर्जीवासाधारणतया कर्मकर्तृव्यपदेशादीनाममुख्यत्वेन 'स क्रतुं कुर्वीत' इति विहितोपासनस्योपास्योऽपि जीव इति पूर्वपक्षः स्यादिति यदा सम्बन्धविशेषनिषेधः तदा मनोमयत्वादेः परस्मिन् सम्भवन् कर्मकर्तृव्यपदेशादीनां मुख्यत्वात्तत्रोपास्यतया विहितः परमात्मेति सिद्धान्त इति फलफलिभावः। पूर्वपक्षमुपपादयति कुत इत्यादिना॥

ननु कथमस्य पादस्यास्पष्टजीवलिङ्गकवाक्यविषयत्वं, मनोमयत्वादिकं हि स्पष्टजीवलिङ्गमिति चेन्नास्पष्टस्य मनस्सम्बन्धमात्रस्य जीवलिङ्गत्वाभावात् जीवलिङ्गभूतस्योपकरणोपकरणित्वलक्षणसम्बन्धविशेषस्यास्पष्टत्वादित्यभिप्रायेण मनःप्राणयोः क्षेत्रज्ञोपकरणत्वादित्युक्तम्। ननु 'सर्वं खलु' इति वाक्ये प्रकृतं ब्रह्मैव 'सक्रतुं कुर्वीत' इत्यत्रोपास्यतया सम्बध्य मनोमयत्वादिगुणानां विशेष्यं स्यादितिशङ्कायां किं ब्रह्मशब्दस्य विधिपदाकाङ्क्षयात्रान्वयः, उत 'क्रतुं कुर्वीत' इति विधिपदस्योपास्यसाकाङ्क्षत्वात् सन्निहितानां मनोमयादिपदानां विशेष्यसाकाङ्क्षत्वाच्च, ब्रह्मशब्दस्योत्तरत्रान्वय इतिविकल्पमभिप्रेत्य प्रथमं शिरो दूषयति न च सर्वमिति। अन्यार्थतया निराकाङ्क्षत्वादित्यर्थः। द्वितीयं दूषयति न च सक्रतुमिति स्ववाक्योपात्तेनेति विच्छेदकाभावान्महावाक्यैकत्वं विवक्षितम्, ततश्च 'एष आत्मा' इति स्ववाक्यस्थेनात्मशब्देन समानलिङ्गेनात्मशब्देन विशेषाकाङ्क्षाशमनात् वाक्यान्तरस्थान्यार्थनिर्लिङ्गब्रह्मशब्दाकर्षो न युक्त इति भावः। प्रथमा

श्रीभाष्यम्

युक्तं वक्तुम् , स्वपाक्योपात्तेन मनोमयत्वादिगुणकेन निराकांक्षत्वात् ; ' मनोमयः प्राण शरीरः' (३।१४,१) इत्यनन्यार्थतया निर्दिष्टस्य विभक्तिविपरिणामसामर्थ्येनोभयाकांक्षानिवृत्ति सिद्धेः । एवं निश्चिते जीवत्वे ' एतद्ब्रह्म ' (३.१४.१) इत्युपसंहारस्थब्रह्मपदमपि जीव एव पूजार्थं प्रयुक्तमित्यध्यवसीयत इति ॥

एवं प्राप्ते ब्रूमः—' सर्वत्र प्रसिद्धोपदेशात् ' मनोमयत्वादिगुणकः परमात्मा । कुतः ? सर्वेषु वेदान्तेषु परस्मिन्नेव ब्रह्मणि प्रसिद्धस्य मनोमयत्वादेरुपदेशात् । प्रसिद्धं हि मनोमयत्वादि ब्रह्मणः । यथा–मनोमयः प्राणशरीरनेता ' (मु.२.२.७) ' स य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः ' (तै.शिक्षावल्ल्यां.६.१) ' हृदा मनीषा मनसाभिक्लृप्तो य एतं विदुरमृतास्ते भवन्ति ' (तै.नारायण.१) ' न चक्षुषा गृह्यते नापि वाचा ' (मु.३.१.८) ' मनसा तु विशुद्धेन (३.१.८) तथा ' प्राणस्य प्राणः ' (केनो प.१.२) ' अथ प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति (कौ ३.२) ' सर्वाणि ह वा इ-

श्रुतप्रकाशिका

स्थानां मनोमयादिपदानामुपासनवाचिपदेनान्वययोगात् ब्रह्मपदमन्वेतव्यमित्याह—मनोमयइति । ब्रह्मशब्देन द्वितीयान्तपदस्याप्यनन्वयात् षष्ठ्यन्ततया विभक्तिविपरिणामे कार्ये सन्निहितस्य साकांक्षस्यैव पदस्य विभक्तिविपरिणामो न्याय्यः । ननु वाक्यान्तरस्थस्य निराकांक्षस्येत्यर्थः उभयाकांक्षा मनोमयादिपदस्य ' क्रतु कुर्वीत ' इत्यस्यचाकाङ्क्षा । न वक्तु युक्तमिति पश्चाद्न्वयः । मनोमय यादि च सत्यसङ्कल्पत्वात् पूर्वमेव प्रतिपन्नम् अणीयस्त्व च ज्यायस्त्वात् पूर्वं श्रुत व्यतिरेकनिर्देशश्च मनोमयत्वादेः पश्चात्यः अतो मनोमयत्वादिस्वारस्यानुगुणमितरथेयाति [illegible] मनोमयत्वादिगुणकेनेति जीवपरत्वे ब्रह्मशब्दः कथमित्यत्राह—एवमिति ॥

एव प्राप्तइति । प्रतिज्ञावाक्यमध्याहरति मनोमयत्वादीति सत्यसङ्कल्पत्वादिविशेषिताप्रावरणिका [illegible] रोधेन परमात्मेत्युक्तम् । सर्वत्रेति व्याख्येय पदम् । तद्व्याचष्ट वेदान्तेष्विति । सामान्यशब्दस्य विशेषशब्दत्व सुचेति भावः । हेतुपद व्याचष्टे प्रसिद्धस्येति । ननु वेदान्तेषु परतरपरतया प्रसिद्धैर्ब्रह्मशब्दश्रवणादिति परैर्व्याख्यात स्मन्तन व्याख्यान सत्यपि तद्विहाय कथ युक्तयन्तरोक्तिः उच्यते–पूर्ववाक्यस्य ब्रह्मशब्दान्वयस्योपसंहारस्थब्रह्मशब्दवैरस्यच पूर्वपक्षिणास्त्वावृतत्वोत्तर वक्तु युक्तमिति भावः । मनस्सामान्येन सङ्कल्पसामान्यपर वाक्यमाह–मनोमयःप्राण शरीरनेतेति । अमृतो हिरण्मय इति परमात्मपरत्ववैशद्यायोपात्तम् । मनस्सामान्येन सङ्कल्पविशेषपर वाक्यमाह— हृदामनीषेति । हृदेति भक्तिरुच्यते मनीषेति धृतिः 'न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्च नैनम्' इति पूर्वाधमेकरूप पठित्वा ' भक्त्या च धृत्या च समाहितात्मा ज्ञानस्वरूपं परिपश्यतीह ' इति महाभारत उक्तत्वात् । अभिक्लृप्तः ग्राह्यः मनोविशेषेण सम्बन्धविशेषवाचिवाक्यमाह–न चक्षुषेति । प्राणशरीरत्वे श्रुतिमाह–तथेति । प्राणस्य प्राणः आधारः ' सर्वाणि ' इत्यादिवाक्य प्राणशब्दस्य यौगिकवृत्त्या परमात्मपरत्व प्रागुक्तम् । इदानीमपर्यवसानवृत्त्याऽपि परमात्मपरत्वेन तद्वाक्यमुपात्तम् । वैश्वानराधिकरणन्यायेनोभयथाऽपि परमात्मपरत्व युक्तमिति भावः ॥

अत्र वाक्यजाते प्रतिपन्न मनोमयत्वादिशब्दार्थमाह–मनोमयत्वमिति । ग्राह्यग्राहकलक्षणसम्बन्धविशेषाभिप्रायेण मनोमयइत्युक्तमित्यर्थः प्राणशरीरशब्दार्थमाह—प्राणेति । मनोविकारो मनोमयः सर्वविकाराणां ब्रह्माधिष्ठानत्वात् ब्रह्म

## श्रीभाष्यम्

मानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते ' (छां.१.११.५) इत्यादिषु । मनोमयत्वं विशुद्धेन मनसा ग्राह्यत्वं प्राणशरीरत्वं प्राणस्याप्याधारत्वं नियन्तृत्वं च ॥

एवं च सति ' एष म आत्मान्तर्हृदय एतद्ब्रह्म ' (छां.३.४.१४) इति ब्रह्मशब्दोऽपि मुख्य एव भवति । ' अप्राणो ह्यमनाः ' (मु.२.१.२)इति मन आयत्तं ज्ञानं प्राणायत्तां स्थितिं च ब्रह्मणो निषेधति ॥ अथवा ' सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत ' [छा.३.१४.१) इत्यनेनोपासनं विधीयते-सर्वात्मकं ब्रह्म शान्तस्सन्नुपासीतेति । ' स क्रतुं कुर्वीत' इति तस्यैव गुणोपादानार्थोऽनुवादः । उपादेयाश्च गुणा मनोमयत्वादयः यतस्सर्वात्मक

## श्रुतप्रकाशिका

सामानाधिकरण्यमिति कैश्चिदुक्तम् तदाहि मनोविकारस्सुखदुःखेच्छाद्वेषादयो ब्रह्मे युक्त स्यात् तदयुक्तम् [illegible] वा दिकरणगुणप्रकरणविरोधात् । हेयगुणविशेषाणामुक्त्यनुपपत्तेश्च । उक्तं हि ' यथा क्रतुरस्मिल्लोके पुरुषो भवति तथेतः प्रेत्य भवति ' इति अतो हेयगुणप्राप्तिरेव फलं स्यात् । प्राणप्रेयं शरीरमस्येत्यर्थश्चेत् प्राणशब्देन प्राण[illegible]भिधान क्लिष्टस्यात् प्राणश्च शरीरञ्चास्येति समासो नघटते । प्राणदशरीरे यस्येति [illegible] एवार्थइत्यभिप्रायः—उपसंहारस्वारस्यमाह-एवंचेति । मनःप्रभृतिनिषेधवाक्यार्थमुक्तार्थाविरुद्धमाह—अप्राण इति । ग्राह्यग्राहकभावनियन्तृनियाम्य वादिरूपसम्बन्धविशेषो विधेय, उपकरणोपकरणिवल्लक्षणसम्बन्धविशेषो निषेध्य इत्यभिप्राय ॥

अथ स्वाभिमतार्थयोजना कर्तुमारभते अथवेति । पूर्वस्या योजनाया सूत्रे प्रतिज्ञावाक्यस्याध्याहार्य वाटुपक्रमोप सहारगतब्रह्मशब्दैकविषयत्वप्रतीतिस्वारस्यं भिन्नविषयत्वप्रतीति पूर्ववपूर्वपक्षानुदयेनाधिकरणारम्भ [illegible] निष्पाद्यायाः शान्तिरुपासननिष्पादकत्वस्य ' एवंविच्छान्त. ' इति श्रुतिसिद्ध वादन्यत्रापि शान्त्युपायत्वेनोपासनविधानादर्शनात् शान्तशब्दस्य शान्तिकामपरत्वास्वारस्यात् सूत्रानुरोधाच्चयमेव योजना समुचितेति भाव: । अनेनोपासनविधिरुक्त इति । अत्र शान्त्युपायोपासन उत्तरत्र मोक्षोपायोपासनमिति नायमर्थः, अपितु[illegible] [illegible] । शान्तशब्दार्थं स्वरसतो वदन्वाक्यार्थमाह-सर्वात्मकत्वमिति । नत्वाशसाया ऋइह विहितोऽयमिति भाव ॥

तर्हि ' सक्रतुं कुर्वीत ' इति किमुच्यत इत्यत्राह-सक्रतुमिति । के पुनर्विधेया गुणा इत्यत्राह—उपादेयाश्चेति।

## अथ सर्वत्र प्रसिद्धयधिकरणम्

### गूढार्थसङ्ग्रह.

पूर्वाधिकरणे (पूर्वपादान्त्याधिकरणे) आपातत. जीवब्रह्माभेदप्रतीतिकरप्रतर्दनविद्यावाक्य विचार जीवब्रह्माभेदो नवि वक्षित । ' अध्यात्मसम्बन्धभूमाह्यस्मि'ति इत्यत्र तथा निर्णयात् ' विजानीहि ' 'उपास्व' इति धातुद्वयघटितश्रुतिसन्दर्भे ज्ञानाभिन्नमेवोपासन विवक्षितमिति स्फुट प्रतीत्या सविशेषजीवब्रह्मैव जीवाभिन्न श्रुतितात्पर्यविषय इति निर्धारितम् ॥

अथ समानाधिकरणोपक्रमवाक्यघटितशाण्डिल्यविद्याया जीवभिन्नब्रह्मैवोपास्य विवक्षितम्, ' अध्यात्मस[illegible] ' इत्यत्र ' सम आत्मेति विद्यात् ' इति वाक्ये तात्त्विकभेदघटितसम्बन्धी परमात्मैव विवक्षित इति निरूपितोऽर्थ, [illegible] स्यस्त एष ' म आत्मा ' इति वाक्य एव विवक्षित इति साधनेन स्थापयिष्यन् निर्विशेषसविशेषविद्याभेद' प्रतर्दनशाण्डिल्यविद्यादि त इति पक्षमपि व्युदस्यन् शाण्डिल्यविद्याप्रतिपाद्यार्थं निष्कृनोति-सर्वत्र प्रसिद्धोपदेशादित्यादिना। सर्वत्र

## गूढार्थसंग्रहः

**प्रसिद्धोपदेशात्** इत्यत्र सर्वत्रेति न वेदान्तपरं 'सर्वंखल्विति' विषयवाक्यविवरणरूपत्वादस्य सूत्रस्य श्रुतिघटकशब्दार्थस्य बुद्धिस्थस्य परित्यागानौचित्यात् । एतेन सर्वशब्दार्थभूतं ब्रह्मेति निष्पन्नम् । 'खल्विति प्रसिद्धार्थकम्' इति सूत्रकाराशयः। अव्ययानामनेकार्थत्वात्। सामानाधिकरण्येन निर्दिष्ट ब्रह्मैव 'प्रसिद्धोपदेशात्' तज्जलान् इति हेतुतः सर्वात्मकत्वोपदेशादित्यर्थः। प्रसिद्धंहि हेतुतया व्यपदिश्यते सर्वोपनिषत्सु ब्रह्मैव जगज्जन्मलयस्थितिहेतुतया प्रसिद्धम्। 'यतो वा' इति श्रुतेः इति सारे, दीपेऽप्येवमेव । विवरणद्वयस्यायमाशयः । 'तज्जलान्' इति हेतुना ब्रह्मणः सर्वात्मकत्वं श्रुतौ विवक्षितमिति स्पष्टम् । ब्रह्मणः जगज्जन्मादिकारणत्वेन सर्वात्मकत्वचेत्युभयं प्रसिद्धम्। तेन जीवव्यावृत्तिः 'यआत्मनि तिष्ठन्' 'यस्सर्वेषु भूतेषु तिष्ठन्' इत्यादिश्रुत्यनुसारेण सर्वत्रेति सप्तम्ययोक्तिः तत्रान्तर्यामितया विद्यमानस्यैव सर्वात्मकत्वमिति बोधनाय। तत्र 'एष त आत्माऽन्तर्यामी' 'सत आत्मा अन्तर्यामी' इत्यभ्यासवत् अत्रापि 'एषम आत्माऽन्तर्हृदय' इति त्रिवारमभ्यासेनापि अयमर्थः दृढीक्रियते ॥

पूर्वयोजनया मनोमयत्वादेः सर्वत्र प्रसिद्धिः या उक्ता सा न घटत इति 'अथवा' इति योजनान्तरम् । 'जन्माद्यस्य यतः' इति सूत्रयितुः जगत्कारणवाक्यानामेव प्राधान्य तदर्थस्यैव प्रसिद्धिरिति च समनमिति स्फुटम् । उपादानोपादेयभावनिबन्धनाभेदोपपादकत्व कारणवाक्यानामेवेति पूर्वमेवोपपादितम् । अत्र श्रुतिरेव 'तज्जलान्' इति हेतुतः तत्स्पष्टं ब्रवीतीति उपपादननिरपेक्षमेव । भाष्येऽप्ययमर्थो विवक्षितः अतः व्याख्यात्रयेऽप्ययमेवार्थः । एतेन उपासनाविधावपि बीजं प्रदर्शितं भवति शान्तिस्तु न प्रधानभूता उपासनाङ्गभूताहि सा । 'शान्तोदान्तः' इत्यादिश्रुत्यन्तरैकरस्याच्च । उपादानोपादेयभावनिबन्धनाभेदप्रतिपत्तौ सर्वत्र पारतन्त्र्यप्रतीतिरपि भवति । 'एषम आत्मा' इत्यभ्यासात् । एतेन राजकुमारनयोऽपि सूचितो भवति । शरीरे जीवपरयोः स्थितेरत्र विवक्षितत्वेन 'द्वासुपर्णा' इति श्रुत्यन्तरार्थस्याप्यत्राभिप्रेतत्वात् तस्याश्श्रुतेः उपनिषद्द्वयइव ऋक्संहितायां 'अस्य वामस्य' इतिसूक्तेऽपि पाठेन तत्र 'इनोविश्वस्य' 'पाकन' 'तन्नोन्नशयः पितरं न वेद' इत्यादौ स्पष्ट राजकुमारनयोऽभिहितः। अयमर्थः पूर्वमेव (जि.अ.७६४.पु) अभिहितः। इममर्थं 'अर्भकौकस्त्वात्' इति सूत्रे सूचयिष्यति सूत्रकारः। तत्र 'अल्पौकस्त्वा'दित्यनभिधाय 'अर्भकौकस्त्वात्'इत्यभिधानेन 'पाक न' इति श्रुतिस्थपाकशब्दार्थः सूत्रकाराभिप्रेतः । 'पोतःपाकोऽर्भकः' इति कोशानुसारात् पाकशब्दोऽर्भकवाची। अतः 'सर्वंखल्विदंब्रह्म' इत्यत्रोपादानोपादेयभावविवक्षायाः सूचनेन राजकुमारनयस्य स्पष्टतया सर्वस्य ब्रह्मात्मकत्वोपासनविधावेव श्रुतितात्पर्यम्। इदं 'सर्वत्र' इति सप्तम्यन्तनिर्देशेन 'अर्भकौकस्त्वात्' इत्यत्रार्भकशब्देन च सूचितम्। सर्वत्रान्तर्यामितया स्थितिरेव 'सर्वं खलु' इत्यत्र विवक्षिता। उपादानोपादेयभावस्यान्तर्यामित्वगर्भत्वात्। 'एषम आत्मा' इति त्रिवारमभ्यासेनान्तर्यामिब्राह्मणे (२२)वार(२४)वारमभ्यासेस (का.पा.मा.पा) 'सत आत्माऽन्तर्यामी, एषत आत्मा अन्तर्यामी'इति सर्वत्रान्तर्यामितया स्थितेर्दृढीकरणात्। अतः 'सर्वत्रे'ति पद न वेदान्तपरम् अपितु श्रुतिघटकसर्वपदार्थपरमेव। 'तेनच उपासीत' इत्यत्रैव विधिर्विवक्षित इति निश्चीयते। अतोपासनाविध्यङ्गीकारेऽपि एतद्विहितोपासनानुवादेन मनोमयत्वादीनां गुणानां बहूनां विधानेऽपि नानुपपत्तिः । 'स क्रतुं कुर्वीत' इत्यत्र विधिप्रत्ययान्तरश्रवणेन रेवत्यधिकरणाद्युदयेष्ट्यधिकरणन्यायाभ्यां (१.२.१२.६.६.१) भावनान्तरविधानाङ्गीकारेण दोष व त् । तथाहि यथा अग्निष्टोमाधिकरणे श्रुते 'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसामकृ त्वापशुकमोऽयेतनयजेत' इत्यस्मिन्वाक्ये प्राप्ताग्निष्टोमयागानुवादेन अग्निष्टोमसामतदुत्तरकालादीनामनेकविधानेऽपि भावनान्तरविधानाङ्गीकारायया न वाक्यभेदः, यथा वा दर्शपूर्णमासयोः 'यस्य हविर्निरुप्त पुरस्ताच्चन्द्रमा अभ्युदियात् स त्रेधा तण्डुलान् विभजेद्येमध्यमास्तानग्नये दात्रे पुरोडाशमष्टाकपाल

### श्रीभाष्यम्

ब्रह्म मनोमयत्वादिगुणकमुपासीतेति वाक्यार्थः। तत्र सन्देहः किमिह ब्रह्मशब्देन प्रत्यगात्मा निर्दिश्यते उत परमात्मा–इति किं युक्तम्? प्रत्यगात्मेति। कुतः? तस्यैव सर्वपदसामानाधिकरण्यनिर्देशोपपत्तेः। सर्वशब्दनिर्दिष्टं हि ब्रह्मादिस्तम्बपर्यन्तं कृत्स्नं जगत्। ब्रह्मादिभावश्च प्रत्यगात्मनोऽनाद्यविद्यामूलकर्मविशेषोपाधिको विद्यत एव; परस्य तु ब्रह्मणस्सर्वज्ञस्य सर्वशक्तेरपहतपाप्मनो निरस्तसमस्ताविद्यादिदोषगन्धस्य समस्तहेयाकरसर्वभावो नोपपद्यते। प्रत्यगात्मन्यपि क्वचित्क्वचिद्ब्रह्मशब्दः प्रयुज्यते। अत एव परमात्मा परं ब्रह्मेति परमेश्वरस्य क्वचित्सविशेषणो निर्देशः। प्रत्यगात्मनश्च निर्मुक्तोपाधेर्बृहत्त्वं च विद्यते 'सचानन्त्याय कल्पते' (श्वे.५.९) इति श्रुतेः। अविदुषस्तस्यैव कर्मनिमित्तत्वाज्जन्मस्थितिलयानां तज्जलानिति हेतुनिर्देशोऽप्युपपद्यते। तदयमर्थः–अयं जीवात्मा स्वतोऽपरिच्छिन्नस्वरूपत्वेन ब्रह्मभूतस्सन्ननाद्यविद्यया देवतिर्यङ्मनुष्यस्थावरात्मनाऽवतिष्ठते इति॥

### श्रुतप्रकाशिका

उपादेयाः विधेयाः। यथा 'अग्निहोत्रं जुहोति' इति होमे विहिते 'दध्ना जुहोति' इति दध्नो होमसाधनत्वमात्र विधेय जुहोतीत्यनुवादः तद्वदिति॥

ननूपासनविधेरुत्पत्तिशिष्टसर्वात्मकत्वगुणावरोधान्मनोमयत्वादिना नोपास्याकाङ्क्षा वमितिचेन्न सर्वात्मकत्वस्योपासनविधिवाक्यस्य नामानात्। तज्जलानिति तदन्तेस्सर्वमिदं ब्रह्मखल्विति प्रसिद्धवन्निर्देशउपासनविधेयकवाक्यत्वं निवारयति नह्युपासीत खल्विति प्रसिद्धवन्निर्देशवचनव्यक्तिर्घटते। वाक्यार्थमाह—अतइति। एवमेकविषयत्वमङ्गीकृत्यैव पूर्वपक्षसिद्धान्तौ दर्शयितुं संशयमाह—तत्रेति। तत्र एकविषयत्वे सिद्धे किमत्रोपास्यतया निर्दिष्टो जीवः उत परमात्मेति विशयः, तदर्थं किं ब्रह्मशब्दो जीवपरः? उत परमात्मपरः तदर्थं किं ब्रह्मशब्दकर्मकर्तृव्यपदेशादयो मुख्याः, उतनेति तदर्थमणीयस्त्वव्यपदेशः किं मुख्यत्वविरोधी उत न तदर्थमणीयस्त्वज्यायस्त्वयोः किं स्वाभाविकं किमौपाधिकमिति। यदाऽणीयस्त्वं स्वाभाविकं ज्यायस्त्वमन्यथासिद्धं तदाऽणीयस्त्वस्य ब्रह्मशब्दादिमुख्यार्थविरोधित्वेन ब्रह्मशब्दस्य जीवपरत्वादुपास्यतया निर्दिष्टो जीव इति पूर्वपक्षस्थितिः, यदाऽणीयस्त्वमौपाधिकं ज्यायस्त्वं स्वाभाविकं, तदाऽणीयस्त्वव्यपदेशस्य ब्रह्मशब्दादिमुख्यताविरोधित्वाभावेन ब्रह्मशब्दस्य परमात्मपरत्वात्तत्रोपास्यतया निर्दिष्टः परमात्मेति सिद्धान्ते फलफलिभावः। हेतुं विवृणोति सर्वशब्देति। ततः किमित्यपेक्षाया जीवस्य सामानाधिकरण्योपपत्तिमाह–ब्रह्मादीति। ब्रह्मादिभावः चतुर्मुखादिभावः। अनादीति। अहितकर्मोपादनहेतुरविद्या, तद्धेतु कर्मेति बीजाङ्कुरादिवदनादि। तस्यैवेत्यवधारणनूदिता परस्य सर्वभावानुपपत्तिं विवृणोति परस्येति। सर्वज्ञ वाद्यं जानाति सर्वशक्तित्वान्निवारयितुं शक्नोति, न च ज्ञानशक्त्योरसङ्कोचः अविद्यामूलकर्मविरहात् अतो न सर्वभावस्सम्भवतीति भावः। ब्रह्मशब्दः कथमित्यत्राह—प्रत्यगिति। तदुपपादयति अतएवेति। परमात्मेति दृष्टान्ततयोक्तं यथा आत्मशब्दो जीवेश्वसाधारणः तद्वत् ब्रह्मशब्द इति भावः। प्रतिपन्नाः परब्रह्माभ्युपगमेन वाक्यविशेषविचारप्रवादत्र पूर्वपक्षिणः परमेश्वराभ्युपगमोऽस्त्येव, आत्मशब्दस्य साधारण्यं युक्तम् प्रवृत्तिनिवृत्तिसाधारण्यात् आप्नोतीति हि व्युत्पत्तिः जगद्व्याप्नोतीति, एवमुभयसाधारणब्रह्मशब्दप्रवृत्तिनिमित्तं व्यक्तमित्यत्राह–प्रत्यगात्मनश्चेति। कथं जन्मादिकारणत्वं हेतुतयोच्यते हेतुनिर्देशोहि पूर्वप्रसिद्धमपेक्ष्य प्रसिद्धिश्च परमात्मविषया युक्तमित्यत्राह—अविदुषइति। जन्मादिहेतुत्वं बद्धस्य, ब्रह्मत्वं तु शुद्धस्य तस्य सर्वशब्दसामानाधिकरण्यं कथं घटत इत्यत्राह–तदयमर्थइति॥

श्रीभाष्यम्

अत्र प्रतिविधीयते–' सर्वत्र प्रसिद्धोपदेशात् '–सर्वत्र ' सर्वं खल्विदम् ' (छां.३.१४.१) इति निर्दिष्टे सर्वस्मिन् जगति ब्रह्मशब्देन तदात्मतया विधीयमानं परं ब्रह्मैव न प्रत्यगात्मा । कुतः ? प्रसिद्धोपदेशात् , ' तज्जलान् ' (३.१४.१) इति हेतुतः ' सर्वं खल्विदं ब्रह्म' (३.१४.१) इति प्रसिद्धवदुपदेशात् । ब्रह्मणो जातत्वाद्ब्रह्मणि लीनत्वाद्ब्रह्माधीनजीवनत्वाच्च हेतोर्ब्रह्मात्मकत्वं सर्वं खल्विदं जगदित्युक्ते यस्माज्जगज्जन्मस्थितिलया वेदान्तेषु प्रसिद्धास्तदेवात्र ब्रह्मेति प्रतीयते । तच्च परमं ब्रह्म ; तथा हि ' यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व । तद्ब्रह्म' (तै.भृ.१) इत्युपक्रम्य ' आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते ' (तै.भृ.६) इत्यादिना पूर्वानुवाकप्रतिपादितानवधिकातिशयानन्दयोगिनो विपश्चितः परस्माद्ब्रह्मण एव जगदुत्पत्तिस्थितिलया निर्दिश्यन्ते ; तथा ' स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' (श्वे.६.९) इति करणाधिपस्य जीवस्याधिपः परं ब्रह्मैव कारणं व्यपदिश्यते । एवं सर्वत्र परस्यैव ब्रह्मणः कारणत्वं प्रसिद्धम् । अतः परब्रह्मणो जातत्वात्तस्मिन् प्रलीनत्वात्तेन प्राणनात्तदात्मकतया तादात्म्यमुपपन्नम् । अतस्सर्वप्रकारं सर्वशरीरं सर्वात्मभूतं परं ब्रह्म शान्तो भूत्वोपासीतेति श्रुतिरेव परस्य ब्रह्मणस्सर्वात्मकत्वमुपपाद्य तस्योपासनमुपदिशति । परं ब्रह्म हि कारणावस्थं कार्यावस्थं सूक्ष्मस्थूलचिदचिद्वस्तुशरीरतया सर्वदा

श्रुतप्रकाशिका

सिद्धान्तमाह–अत्रेति । यथा ' अन्तस्तद्धर्मोपदेशात् ' इत्यन्तश्शब्दः प्रतिज्ञापरः, एवं सर्वत्रेति सूत्रपदं प्रतिज्ञापरमित्याह–सर्वत्रेति । तदेव पदं व्याचष्टे सर्वमिति । सर्वत्रेति पदं न वाचकवेदान्तपरम् अपितु वाच्यजगत्परमित्यर्थः नायन्द्रमिति वा नेतर इति वा अन्य इति वा पूर्वपादादनुवर्तते अतः पर्यवसानलब्धं प्रतिज्ञापदं परं ब्रह्मैवेति ' न शारीरः ' इत्यत्र वक्ष्यमाणमनुसन्धायाह—न प्रत्यगात्मेति । प्रसिद्धोपदेशात् इति पदं व्याचष्टे तज्जेति । जगज्जन्मस्थितिलयाना तत्कृततादात्म्यस्य च प्रसिद्धत्वेनोपदेशादित्यर्थः इतिशब्देन हेतुतयोक्तत्वाज्जन्मादीना प्रसिद्धत्वम् । प्रमाणसिद्धस्यैव हि हेतुना तत्कृततादात्म्यस्य प्रसिद्धत्वम् खलु नासिद्धम् । तत्स्पष्टयति ब्रह्मणइति । कारणत्वनिबन्धनतादात्म्यस्यचात्र प्रसिद्धत्वेनोपदेशः फलितः । प्रसिद्धत्वमस्तु ततःकिमित्यत्राह–तच्चेति । प्रसिद्धं दर्शयति तथाहीति । ' यतो वा इमानि ' इति वाक्यस्य जीवविषयत्वव्यावृत्त्यर्थमाह–आनन्दो ब्रह्मेति । आनन्दशब्दस्यानन्दमयपरत्वव्यक्तीकरणायाह–पूर्वानुवाकेति । वाक्यान्तरमाह–तथेति वाक्यान्तराणामप्युक्तार्थपरत्वात्तेष्वपि तत्प्रसिद्धिमाह–एवमिति । श्रुत्यन्तरेष्वपि जन्मादिहेतुत्वकृततादात्म्यमप्यर्थसिद्धमित्याह—अतइति । तदात्मकतया तादात्म्यमिति । तदात्मकतयेति श्रुत्यन्तरविषय तज्जत्व तदनत्व तल्लत्वैः श्रुत्यन्तरेषु तदात्मकत्वेनोपपादनादिह प्रतिपन्नमपि तादात्म्यमुपपन्नमित्यर्थः । चिदचिद्विलक्षणस्य कथं तादात्म्योपपत्तिरित्यत्राह–अतस्सर्वेति । सर्वात्मकशब्दवैशद्याय सर्वशरीरमित्युक्तम् आकृत्यधिकरणन्यायेन प्रकारिपर्यन्ताभिधानसिद्ध्यर्थमाह—सर्वप्रकारमिति । श्रुतिरेव ' सर्वं खलु ' इत्यादिश्रुतिरेव उपपाद्य ' तज्जलान् ' इत्यंशेन कार्यकारणभावेन शरीरात्मभावेनोपपाद्येत्यर्थः । तदन्तर्यामिरूपेण कृतस्य प्राणनस्य शरीरात्मभावापेक्षत्वेन च तथोपपादितं भवति । स्थितिदशायां हि शरीरात्मभावः, प्रलयावस्थायां ' एकमेवाद्वितीयम् ' इति सर्वभेदशून्यत्वात्तच्छरीरात्मभावसिद्धिरित्यत्राह— परंब्रह्मेति । स्थितौ शरीरात्मभावोपपादनादुभयलिङ्गत्वस्य ब्रह्मणः

### श्रीभाष्यम्

सर्वात्मभूतम्। एवंभूततादात्म्यस्य प्रतिपादने परस्य ब्रह्मणस्सकलहेयप्रत्यनीककल्याणगुणाकरत्वं न विरुध्यते, प्रकारभूतशरीरगतानां दोषाणां प्रकारिण्यात्मन्यप्रसङ्गात्। प्रत्युत निरतिशयैश्वर्यापादनेन गुणायैव भवतीति पूर्वमेवोक्तम् ॥

यदुक्तं जीवस्य सर्वतादात्म्यमुपपद्यत इति, तदसत्, जीवानां प्रतिशरीरं भिन्नानामन्योन्यतादात्म्यासम्भवात्। मुक्तस्याप्यनवच्छिन्नस्वरूपस्यापि जगत्तादात्म्यं जगज्जन्मस्थितिप्रलयकारणत्वनिमित्तं न सम्भवतीति ' जगद्व्यापारवर्ज्यम् ' (शारी.४.४.१७) इत्यत्र वक्ष्यते। जीवकर्मनिमित्तत्वाज्जगज्जन्मस्थितिलयानां स एव कारणमित्यपि न साधीयः, तत्कर्मनिमित्तत्वेऽपीश्वरस्यैव जगत्कारणत्वात्। अतः परमात्मैवात्र ब्रह्मशब्दाभिधेयः। इममेव सूत्रार्थमभियुक्ता बहुमन्वते। यथाऽऽह वृत्तिकारः 'सर्वं खल्विति सर्वात्मा ब्रह्मेशः' इति ॥

## सू–२ विवक्षितगुणोपपत्तेश्च [१-२-२]

### श्रुतप्रकाशिका

कारणावस्थायामपि विशिष्टत्वमर्थसिद्धं श्रुत्यन्तरैः कण्ठोक्तं चेत्यभिप्रायः, सर्वदा विशिष्टश्चेत् कार्यकारणावस्थयोः को भेद इति शङ्कापरिहाराय सूक्ष्मस्थूलचिदचिद्वस्तुशरीरतयेत्युक्तम्। ततः किमुभयलिङ्गकत्वस्येत्यत्राह— एवंभूतेति ॥

जीवस्यैव सर्वतादात्म्यं पूर्वपक्षिणोक्तमनूद्य दूषयति। यदुक्तमित्यादिना। मुक्तस्य तत्सम्भवतीत्यत्राह— मुक्तस्येति। जगज्जन्मस्थितिप्रळयकारणत्वनिमित्तमिति बहुव्रीहिः कारणत्वप्रयुक्तमित्यर्थः। जीवस्य कर्मद्वारा जगत्कारणत्वमनूद्य दूषयति जीवकर्मेति। तत्कर्मनिमित्तत्वेऽपीति। नहि कर्म जगतः कर्तृरूपनिमित्तमुपादानं च उभयमीश्वर एव। कर्म तु केवलं वैषम्यहेतुः यथा घटादिनिर्माणस्य भोक्तृकर्मनिमित्तत्वेऽपि भोक्तृकर्मणो न कर्तृत्वमुपादानत्वं वा कुलालमृत्पिण्डयोरेव हि तदुभयं। नच ' तज्जलान् ' इत्यत्र तच्छब्दस्य कर्मवाचित्वम् अतो न जीवस्य जगत्कारणत्वकृतं तादात्म्यमस्तीत्यभिप्रायः। सूत्रार्थमुपसंहरति अतइति। द्वितीययोजनोक्तार्थस्यैव साम्प्रदायिकत्वमाह— इममेवेति। 'सर्वंखल्वि' इत्यादिवाक्येन सर्वात्मतयोक्तं ब्रह्म ईशः परमात्मेत्यर्थः ॥

## सू– विवक्षितगुणोपपत्तेश्च [१-२.२]

### गूढार्थसंग्रहः

निर्वपेत् ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधनि ये ऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुम् ' इति श्रुते वाक्ये वाक्यभेदापादकगुणात् ' त्रीणि कर्माणि विधीयन्ते ' इति पूर्वपक्षीकृत्य द्रव्यदेवताविशिष्टभावनान्तरविधिपक्षस्वीकारेण वाक्यभेदपरिहारः तद्वत् अत्रापि ' सर्वंखलु ' इति वाक्यविहितोपासनानुवादेन मनोमयत्वादिगुणविधायकवाक्ये गुणविधानेऽपि भावनान्तरविधानाङ्गीकारेणैव वाक्यभेदपरिहारोपपत्तिः। ' विवक्षितगुणोपपत्तेश्च ' इति सूत्रे विवक्षितपदं तात्पर्यविषयीभूतार्थपरम्। तदुक्तं शाङ्करभाष्ये–' वक्तुमिष्टाः विवक्षिताः; यद्यप्यपौरुषेये वेदे वक्तुरभावान्नेच्छार्थः,

## श्रीभाष्यम्

वक्ष्यमाणाश्च गुणाः परमात्मन्येवोपपद्यन्ते 'मनोमयः प्राणशरीरो भारूपस्सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्तोऽवाक्यनादरः' (छां.३.१४.२) इति । मनोमयः–परिशुद्धेन मनसैकेन ग्राह्यः ; विवेकविमोकादिसाधनसप्तकानुगृहीतपरमात्मोपासननिर्मलीकृतेन हि मनसा गृह्यते । अनेन हेयप्रत्यनीककल्याणैकतानतया सकलेतरविलक्षणस्वरूपतोच्यते, मलिनमनोभिर्मलिनानामेव ग्राह्यत्वात् । प्राणशरीरः जगति सर्वेषां प्राणानां धारकः प्राणो यस्य शरीरम् आधेयं विधेयं शेषभूतं च सप्राणशरीरः । आधेयत्वविधेयत्वशेषत्वानि शरीरशब्दप्रवृत्तिनिमित्तानीत्युपपादयिष्यते । भारूपः भास्वरूपः ; अप्राकृतस्वासाधारणनिरतिशयकल्याणदिव्यरूपत्वेन निरतिशयदीप्तियुक्तइत्यर्थः । सत्यसङ्कल्पः अप्रतिहतसङ्कल्पः । आकाशात्मा आकाशवत्सूक्ष्मस्वच्छस्वरूपः;

## श्रुतप्रकाशिका

विवक्षितत्वं वक्तुमिच्छाविषयत्वं अपौरुषेयवाक्यप्रतिपाद्यगुणानां पुरुषेच्छापूर्वकत्वायोगात् कथं विवक्षितत्वमिति शङ्कायां विवक्षितपदं व्याचष्टे वक्ष्यमाणाइति । विवक्षितानामेव वक्ष्यमाणत्वाद्विवक्षितशब्देन वक्ष्यमाणत्वं लक्ष्यतइत्यर्थः । 'सर्वंखलु' इति प्रथमवाक्यापेक्षया वक्ष्यमाणं ह्यनन्तरवाक्यगतगुणजातम् । निषेधवाक्यविरोधपरिहाराय सामान्यं मनोमयशब्दं विशेषवाक्यानुगुणं व्याचष्टे 'मनोमयइति । परिशुद्धेन मनसैकेनेति । 'अब्भक्षो वायुभक्षः' इतिवदवधारणगर्भ इत्येकशब्दस्य भावः, तच्च 'न चक्षुषा गृह्यते नापि वाचा, मनसातु विशुद्धेन' इति श्रुत्यानुगुण्यात् विवृणोति विवेकेति । फलितार्थमाह—अनेनेति । कुतइत्यत्राह–मलिनेति । मलिनमनोग्राह्यत्वं हेयार्हं व्यापकं अतो व्यापकनिवृत्त्या व्याप्यनिवृत्तिरित्युभयलिङ्गकत्वसिद्धिरिति भावः । मुक्तस्यापि विशुद्धमनोग्राह्यत्वं नसंभवति मुक्तं स्वातन्त्र्येण गृह्णातिचेत् मनोऽशुद्धं ब्रह्मपर्यन्तत्वेन चेद्विशिष्टस्य ब्रह्मणः विशुद्धमनोग्राह्यत्वमिति । प्राणशरीरशब्दं व्याचष्टे जगतीति । प्राणशरीरशब्देन प्राणधारकत्वं कथमवगम्यत इत्यत्राह–प्राणो यस्येति । शरीरत्वेसति कथमाधेयत्वादिकमित्यत्राह–आधेयत्वेति । भारूपइति । ज्ञानस्वरूपइत्यर्थत्वतिक्लिष्टः रूपशब्दोहि धर्मवाची भाशब्दोहि दीप्तिपरः दीप्तिधर्मकत्वं विग्रहद्वारक 'आदित्यवर्णं तमसः परस्तात्' 'रुक्मवर्णम्' इत्यादिश्रुत्यैकार्थ्यात् इत्यभिप्रायेणाह–भास्वररूपइति । तद्विवृणोति अप्राकृतेति । सूक्ष्मस्वच्छस्वरूपइति । सूक्ष्मत्वं व्याप्यवर्हत्वं, स्वच्छत्वं निर्मलत्वं,

## गूढार्थसंग्रह

संभवति तथाप्युपादानेन फलेनोपचर्यते । लोकेहि यच्छब्दाभिहितमुपादेयं भवति तद्विवक्षितमिति कथ्यते । यदनुपादेयं तदविवक्षितमित्युच्यते तद्वद्वेदेऽपि उपादानत्वेनाभिहितं तद्विवक्षितं भवति, इतरदविवक्षितम् । उपादानानुपादानेतु वेदवाक्यतात्पर्यतातात्पर्याभ्यामवगम्यते इति ॥

*मनोमयत्वं जीवधर्मः ब्रह्मणः सर्वसंबन्धित्वात् ब्रह्मसंबन्धेऽपि भवतीत्यादि परयोजनाया मनसि निधायाह—* परिशुद्धेन मनसैकेन ग्राह्य इत्यादि । 'यद्यपि 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः । बन्धाय विषयासक्तं मुक्त्यै निर्विषयं मनः' (मै.उ) इत्यादिपर्यालोचने मनोग्राह्यत्वं ब्रह्मणः कथमिति शङ्का संभवति । तथाऽपि मैत्रायणीयोपनिषदि 'मनोहि द्विविधं प्रोक्तं शुद्धं चाशुद्धम्' 'समासक्तं यथाचित्तं जन्तोर्विषयगोचरे । यद्येवं ब्रह्मणि स्यात्तत्को नमुच्येत बन्धनात् ॥' इत्यन्तेन इत्युपक्रम्य 'समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत् । नशक्यते

## श्रीभाष्यम्

संकोचेतरकारणभूतस्याऽऽकाशस्याप्यात्मभूत इति वा आकाशात्मा ; स्वयं च प्रकाशते अ-न्यानपि प्रकाशयतीति वा आकाशात्मा । सर्वकर्मा-क्रियत इति कर्म ; सर्वं जगद्यस्य कर्म असौ सर्वकर्मा सर्वा वा क्रिया यस्यासौ सर्वकर्मा । सर्वकामः—काम्यन्त इति कामाः— भोग्यभोगोपकरणादयः ते परिशुद्धाः सर्वविधास्तस्य सन्तीत्यर्थः । सर्वगन्धः सर्वरसः— 'अशब्दमस्पर्शम्' (कठ.१.३.१५) इत्यादिना प्राकृतगन्धरसादिनिषेधादप्राकृताः स्वासाधा-रणा निरवद्या निरतिशयाः कल्याणाः स्वभोग्यभूतास्सर्वविधा गन्धरसास्तस्य सन्तीत्यर्थः । सर्वमिदमभ्यात्तः-उक्तं रसपर्यन्तं सर्वमिदं कल्याणगुणजातं स्वीकृतवान् । ' अभ्यात्तः ' इति ' भुक्ता ब्राह्मणाः ' इतिवत्कर्तरि क्तः प्रतिपत्तव्यः । अवाकी वाकः उक्तिः सोऽस्य ना-स्तीत्यवाकी । कुत इत्याह—अनादर इति अवाप्तसमस्तकामत्वेनादर्तव्याभावादादररहितः अत एव अवाकी अजल्पाकः

## श्रुतप्रकाशिका

संकोचेतरकारणभूतस्याकाशस्येत्यनेन ' आकाश एव तदोतं च प्रोतं च ' इति वाक्य सारितम् ' अक्षरमम्बरान्त धृतेः ' इत्यधिकरणन्यायादाकाशशब्दः प्रकृतिवाचीति भावः । अन्यानपि प्रकाशयति स्वस्मै प्रकाशयतीत्यर्थः सर्वा वा क्रियेति । लौकिकवैदिकसकलक्रियाणां उद्धारककर्ताऽसौ । यद्वा सर्ववैदिकक्रिया आराधन यस्य सर्वक्रियइत्यर्थः ।

इच्छाग्राहुल्यव्यावृत्त्यर्थं सर्वकामपदं व्याचष्टे काम्यन्तइति । भोग्यभोगोपकरणादीनां प्राकृतत्वव्यावृत्त्यर्थमाह— ते परिशुद्धाइति । अप्राकृता इत्यर्थः सत्यकामपदैकार्थ्यादित्यभिप्रायः । सर्वगन्धइत्यादि । रूपस्पर्शादिनिषेधपरवाक्या-न्तराणामपि तुल्यन्यायत्वद्योतनार्थं आदिशब्दः । गन्धरसादीनामत्यवधानेन स्वरूपान्वयित्वाभावात् उद्धारकत्वेसति प्रा-कृतानां पृथिव्यादिगतगन्धरसादीनां हेयत्वेन कल्याणगुणप्रकरणविरोधात् । 'भारूप ' इति दिव्यविग्रहस्य प्रकृतत्वा-च्चाप्राकृतदहद्वारकगन्धरसादिविधिरित्यर्थः ' तं ब्रह्मगन्धः प्रविशति ब्रह्मरसः प्रविशति ' इति मुक्तभोग सान्यादेश ब्रह्मगन्धरसप्रवेशव्यपदेशश्चास्यार्थस्योत्तम्भकः सर्वमिदमिति । जगतोऽपि सर्वकर्मादिगुणान्तर्भावात् गुणपरं तद्व्याख्यातम् ' अभ्यात्त ' इत्यत्र स्वीकरणरूपगुणविधिः ॥

ननु नायमादिकर्मणिक्तः गुणगणादानस्य नित्यत्वात् नचाम्याददाविर्गत्यर्थः स्वीकरणार्थत्वात् । नाप्यकर्मकः सर्वमिदमिति श्रवणात् । नच शिष्टादिष्वन्यतमः अपठितत्वात्, तत्कथं कर्तरिक्तः ' तयोरेव कृत्यक्तखलर्थाः ' इति भवाकर्मणोरेवहि तत्स्मरणमित्यत्राह-भुक्ता इति । प्रयुक्तानुशासनत्वात् व्याकरणशास्त्रस्य यथाप्रयोगमनुशासनं कार्यं नतु यथाऽनुशासनं प्रयोगान्यथाकरणमिति भावः येतु भुक्ता ब्राह्मणा इत्यत्र मत्वर्थीयाकारप्रश्लेषमिच्छन्ति तेषां भुक्त शब्दस्यार्शआदिगणान्तर्भावकल्पनं, आकारप्रश्लेषणमिति तत्र गौरवं पश्यतोक्तं कर्तरीति कर्मर्थतया प्रयोग एवहि भुक्ता दीनामाकृतिगणान्तर्भावकल्पनानिमित्तं तेनैव कर्त्रर्थत्वं क्तप्रत्ययस्य कल्प्यतां किमश्रूयमाणाकारप्रश्लेषेणेति भावः, यद्वा कर्तरि प्रतीतिः प्रतिपत्तिः सा यथा भुक्ता ब्राह्मणा इत्यत्र प्रतिपाद्यते निरूप्यते एवमत्रापि निर्वोढव्येत्यर्थः । सोऽस्य नास्ती त्यवाकीति । फलितार्थकथनमेतत् वाकः उक्तिः अवाकः, तदभावः अवाकोऽस्यास्तीत्यवाकशब्दान्मत्वर्थीयः । यद्वा वाकी न भवतीत्यवाकी कुतइत्याह कुतइत्यत्राहेत्यर्थः । अवाकत्वं वाक्सामर्थ्याभावादिति शङ्काव्यावृत्त्यर्थमनादर इति पदमितिभावः । तदुपपादयति अवाप्तेति । अवाकित्वस्य तत्फलतामाह-अतएवेति । निषेध्योऽवाको हेयरूप इति दर्श यति अजल्पाकइति । सापेक्षत्वनिबन्धनबहुप्रलापो निषेध्यः नतु वाक्सामर्थ्यविरूपइत्यर्थः । पदद्वयमप्रतिपाद्योऽयमेक

### श्रीभाष्यम्

परिपूर्णैश्वर्यत्वाद्ब्रह्मादिस्तम्बपर्यन्तं निखिलं जगत्तृणीकृत्य जोपमासीन इत्यर्थः । त एते विवक्षिता गुणा परमात्मन्येवोपपद्यन्ते ॥

## सू—अनुपपत्तेस्तु न शारीरः (१.२.३)

तमिमं गुणसागरं पर्यालोचयतां खद्योतकल्पस्य शरीरसम्बन्धनिबन्धनापरिमितदुःखसम्बन्धयोग्यस्य बद्धमुक्तावस्थस्य जीवस्य प्रस्तुतगुणलेशसम्बन्धगन्धोऽपि नोपपद्यत इति नास्मिन्प्रकरणे शरीरपरिग्रहशङ्का जायत इत्यर्थः ॥

### श्रुतप्रकाशिका

गुण इत्याह—परिपूर्णेति । सूत्रार्थमुपसंहरति त एत इति ।

एवमन्वय उक्तः कथं परमात्मन्येवेत्यवधारणसिद्धिः मुक्तेऽपि ह्येते गुणा आशङ्कनीया इत्यपेक्षायां पूर्वसूत्रोक्तान्वयभेदं व्यतिरेकमाह—

## सू.३-अनुपपत्तेस्तु न शारीरः (१.१.३)

शारीरशब्देन मुक्तावस्थापि क्रोडीकारोपपादको योग्यशब्दः । अनुपपत्तेस्तु नेतर इति वक्तव्येऽपि मुक्तावस्थजीवस्य प्रतिपाद्यत्वानुपपत्तिस्फोरणार्थं शारीरशब्दनिर्देश इति भावः । चन्द्रोपादान दृष्टान्ततया यथा निग्रहस्य निग्राहकस्वरूपे क्यानुपपत्तिः तथानुग्राह्यस्याप्यनुग्राहकस्वरूपैक्यानुपपत्तिरित्यभिप्रायः प्रस्तुतगुणानुपपत्तिः प्रतिगुणमनुसन्धेया पर्यालोचयता शङ्का न जायत इत्यन्वयः न मुक्तपरिग्रहशङ्काहेत्वन्यथासिद्धिः किंतु हेत्वसिद्धिरेवेति । तुशब्दाभिप्राय इत्याशयवतोक्तं शारीरपरिग्रहशङ्का न जायत इति ॥

‘अनुपपत्तेस्तु न शारीरः’ इत्यत्र यदुक्तं परैः जीवपरयोरैक्याज्जीवधर्मैः परस्य विशिष्टत्वानुसन्धानोपपत्तिश्चेत् तदनन्यत्वादेव परमात्मधर्मास्सत्यसङ्कल्पत्वादयोऽपि जीव उपपद्यन्त इति शङ्कानिरासार्थमिदं सूत्रम् । आरोप्यगतधर्मैरधिष्ठानं विशेष्यते यथा सर्पगतभीषणत्वादिना तदधिष्ठानं न त्वधिष्ठानधर्मैरारोप्यं विशेष्यते यथा रज्जुत्वेन सर्पः अतो जीवधर्मैर्मनोमयत्वादिभिः परमात्मनो विशेष्यत्वं युक्तम् न तु परमात्मधर्मैस्सत्यसङ्कल्पत्वादिभिर्जीवस्य विशेष्यत्वमिति सूत्रार्थ इति तदयुक्तं सर्पादिव्यावर्तकरज्ज्वादिप्रतीतौ सर्पादिधर्मभूतभीषणत्वादिभिरधिष्ठानस्य विशेषणायोगात् इह च जीवव्यावर्तकासत्यसङ्कल्पत्वादयः प्रतीयन्ते, अतोऽध्यस्तजीवधर्मैः परमात्मनो विशेष्यत्वमयुक्तम् । मनोमयत्वादिभिः सत्यसङ्कल्पत्वादिभिश्च पदैर्वस्तुमात्रं लक्ष्यत इति चेत्तर्हि ‘विवक्षितगुणोपपत्तेश्च’ इति पूर्वसूत्रं विरुध्यते । उभयविधगुणानामविवक्षितत्वं सूत्रकाराभिमतं चेत् ‘अनुपपत्तेस्तु न शारीरः’ इति वदनुपपत्तेस्तु नेश्वर इति च सूत्रं वक्तव्यम् वस्तुमात्रविवक्षायां जीवधर्माणामिवेश्वरधर्माणामप्यनुपपत्त्यविशेषात् , अथ ईश्वरधर्मेषु तात्पर्यमवगम्यते, अतस्तेषु प्रतीयमानेषु रज्जौ भीषणत्वादिनेव मनोमयत्वादिना परमात्मनो विशेष्यत्वमनुपपन्नम् । मनोमयत्वादिकं न जीवसाधारणमिति चेत् किं मनोमयादिपदैर्मनः प्राणाद्यधीनज्ञानप्रवृत्त्यादि विवक्षितम् उत विशुद्धमनोग्राह्यत्वप्राणशरीरकत्वादिकम् प्रथमे जीवासाधारण- ... दिभिः परमात्मनो विशेष्यत्वानुपपत्तिः, द्वितीये तु मनोमयत्वादीनामारोपितधर्मत्वाभावात् आरोप्यगतधर्मै

श्रीभाष्यम्

## सू—६ स्मृतेश्च (१.२.६)

'सर्वस्य चाहं हृदि सन्निविष्टो मत्तस्स्मृतिर्ज्ञानमपोहनं च' (गी १५ १५) 'यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्' (१५.१९) 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया । तमेव शरणं गच्छ' (गी १८ ६१) इति शारीरमुपासकं, परमात्मानं चोपास्यं स्मृतिर्दर्शयति ॥

श्रुतप्रकाशिका

याच 'आत्मन्पश्यन् सर्वभूतानि' इतिवत् हृतसप्तमीकोऽयं निर्देश इतिभावः । एवं स्वप्रकरणे षष्ठीप्रथमा मक समानप्रकरणे सप्तमीप्रथमा मकश्च शब्दविशेषो विवक्षितः ॥

हृदयस्थस्येश्वरत्वमुपबृंहणेन विशदयितुमाह—

## सू—६ स्मृतेश्च [१.२.६.

'एष म आत्माऽन्तर्हृदये' इति हृदयशब्दप्रत्यभिज्ञापनार्थमाह—सर्वस्येति । उपास्यत्वज्ञापनार्थं तदनन्तरवाक्यमाह योमामिति । हृदयस्थस्येश्वरत्वकण्ठोक्तिं दर्शयति ईश्वरइति । 'तमेव शरणं गच्छ' इत्युपादानं हृदयस्थस्य भजनप्रदर्शनार्थम् । सर्वस्येति सर्वशब्दो जीवविषयः, पराधीनस्मृत्याद्याश्रयभूतवस्तुविषयत्वात् पुरुषोत्तमशब्दान्यथा जीववैलक्षण्यं तत्रैवोक्तम् सर्वभूतशब्दोऽपि जीवविषयः भ्रान्त्याश्रयत्वाद्दहारत्वयशाब्दत्वाच्च अत्र चशब्दोऽवान्तरशङ्कापरिहारहेतुद्वयसमुच्चयार्थः । अन्वाचयो वा—

अत्र केचित्—कर्मकर्तृव्यपदेशादयः घटकरकादिकृतगगनभेदाश्रयणेन बालिशकृतात्ममहत्वादिव्यवहार इव काल्पनिकं भेदमाश्रित्य 'तत्त्वमसि' इत्यात्मैक्योपदेशग्रहणात् प्राक्प्रवर्तन्ते । ऐक्यापदेशग्रहणानन्तरं सर्वव्यवहारपरिसमाप्तिरित्याहुः । अत्र भ्रमः यस्य भ्रमः सएव भ्रान्तिसिद्धमर्थं व्यपदिशति, तस्यैवोपदेशग्रहणात्तन्निवृत्तिः । एवं सति जीवेश्वरभेदभ्रान्त्या तयोः कर्मकर्तृभावादिकं को व्यपदिशति । किं जीवः उतेश्वरः उत वेदएव ? नाद्यः शास्त्रस्य जीवस्य देहातिरिक्तं जीवमप्यजानतः सत्यसङ्कल्पत्वादिलक्षणेश्वरप्रतीत्यसंभवात्तद्भ्रान्तिमूलत्वं कर्मकर्तृव्यपदेशस्य संभवति नापि श्रुतशास्त्रस्य जीवस्य तस्य जीवेश्वरभेदभ्रान्तौ श्रुतिरेव परमनिश्चयसाधिभिर्वेदान्तानामनुपादेयत्वप्रसङ्गः । स्वनिमित्तामपि भ्रान्तिं श्रुतिस्स्वयमैक्योपदेशेन निवर्तयतीतिचेत् तथाऽपि 'प्रक्षालनाद्धि पङ्कस्य, दूरादस्पर्शनं वरम्'मिति न्यायादनुपादेयत्वमेव स्यात् कर्मकर्तृभावादिव्यपदेशस्येश्वरभ्रान्तिमूलत्वमपि नघटते, व्यपदेशवैयर्थ्यात् तथासतिहि 'एतमितः प्रेत्याभिसम्भवितास्मि' इति व्यपदेशो न स्यात् । अपितु इतः प्रेत्याभिसंभाव्योऽहमित्येव स्यात् । किंच भ्रमनिवृत्त्यर्थमीश्वरः प्रत्युपदेष्टव्यम् नह्ययस्य भ्रमस्तस्य प्रत्युपदेष्टव्यम्, तथा च 'तत्त्वमसि' इत्युपदेशो नघटते, किंतु त्वं जीवोऽसीत्येव वक्तव्यः अतः श्रुतिषु कर्मकर्तृव्यपदेशो नेश्वरभ्रममूलः । यदि वेदएव भ्रान्तौ व्यपदिशति, तर्हि वेदस्य तत्त्वोपदेष्टृत्वं न स्यात् भ्रान्तत्वात् । पश्चात्प्रतिबुद्ध उपदिशतीतिचेत्, तदयुक्तम् । स्वस्य भ्रमनिवृत्तेरन्यथा जीवेश्वरभ्रमाभावाद्व्यपदेशवैयर्थ्यात् । अन्येषां जीवेश्वरभेदभ्रान्त्यभावेऽपि जीवबहुत्वभ्रमनिवृत्त्यर्थमुपदेशः कार्य इतिचेत् न उपदेशवैय.

### श्रीभाष्यम्

## सू–७ अर्भकौकस्त्वात्तद्व्यपदेशाच्चनेतिचेन्न निचाय्यत्वादेवं व्योमवच्च १.२.७.

अल्पायतनत्वमर्भकौकस्त्वम्; तद्व्यपदेश –अल्पत्वव्यपदेशः। 'एष म आत्मऽन्तर्हृदये' (छां.३.१४.३) इत्यणीयसि हृदयायतने स्थितत्वात् 'अणीयान् व्रीहेर्वा यवाद्वा' (३.१४.३) इत्यादिनाऽणीयस्त्वस्य स्वरूपेण व्यपदेशाच्च नायं परमात्मा अपि तु जीव एव। 'सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' (मुण्डक.१.१.६) इत्यादिभिः परमात्मनोऽपरिच्छिन्नत्वावगमात् जीवस्य चाराग्रमात्रत्वव्यपदेशादितिचेत्–

नैतदेवम्, परमात्मैव ह्यणीयानित्येवं निचाय्यत्वेन व्यपदिश्यते; एवं निचाय्यत्वेन एवं द्रष्टव्यत्वेन एवमुपास्यत्वेनेति यावत्। नपुनरणीयस्त्वमेवास्य स्वरूपमिति। व्योमवच्चाय

### श्रुतप्रकाशिका

स्यादेव। नहि तदानीं 'तत्त्वमसि' इत्युपदेशो घटते किंतु सर्वजीवात्मत्वमित्युपदेष्टव्यम्। नचैवमुपदेशो वेदान्तेषु क्वचिदपि दृश्यते। नच 'अहं मनुरभवं सूर्यश्चाहं कक्षीवानृषिरस्मि विप्र' इत्याद्यनुसन्धानदर्शनात्तन्मूलभूतउपदेश-स्सजीवैक्यविषयोऽस्तीत्यभ्युपगन्तव्यम् एकस्य जीवस्य 'सिंहेन भूत्वा बहवो मयाऽत्ताः' 'व्याघ्रेण भूत्वाबहवो मयाऽत्ताः' इतिवत् कल्पभेदेनातीतस्वीयमनुसूर्यादिजन्मस्मरणपरत्वसम्भवात्तस्य वाक्यस्य। यतश्शास्त्रेण विना शरीरिणा जीवेश्वरविभागप्रतीतिर्न सम्भवति अतएव लोकसिद्धभेदो निषेधार्थं श्रुत्याऽनूद्यतइत्येतन्निरस्तम्॥

नचेश्वरस्यानुमेयत्वसम्भवाज्जीवेश्वरभेदप्रत्ययस्य लोकसिद्धत्वसम्भव इति वाच्यम्। तर्कवश्यपुरुषानुमानस्य दूषितत्वात् अनुमानसम्भवेऽपि भारूपत्वसत्यसङ्कल्पत्वमुक्तप्राप्यत्वादीनामनुमातुमशक्यत्वाच, कर्मकर्तृव्यपदेशोऽपि ह्युपास्यत्वादिनिबन्धनः। तत्तत्फलविशेषार्थिना कर्मकर्तृसापेक्षोपासनसिद्ध्यर्थं जीवेश्वरभेदं श्रुतिः कल्पयतीतिचेत् तथासति तत्त्वनिरूपणदशायां 'अत्ता चराचरग्रहणात्' 'अनुपपत्तेस्तु न शारीरः' इति जीवविलक्षणं वस्तु प्रतिज्ञाय कर्मकर्तृव्यपदेशस्य हेतुतयोपन्यासायोगात्। कथमुपासनार्थमपरमार्थभेदव्यपदेशं विजानन् सूत्रकारस्तत्त्वार्थहेतुतया तं ब्रूयात्। नह्यतात्त्विकभेदःप्रतिज्ञातः 'ब्रह्मजिज्ञासा' इत्युपक्रमविरोधात् 'सम्पत्तेरिति जैमिनिः' 'प्रियशिरस्त्वाद्यप्राप्तिः' 'आध्यानाय प्रयोजनाभावात्' इति जीवेश्वरभेदापारमार्थ्यविषयप्रतिज्ञान्तराभावाच्च गरुडनरेन्द्रयोरिव भेदस्य काल्पनिकत्वाश्रयणमयुक्तम् अतश्श्रुतिसूत्राणां काल्पनिकभेदविषयत्वमनुपपन्नम्॥

## सू–७ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेतिचेन्ननिचाय्यत्वादेवं व्योमवच्च १.२.७.

अल्पायतनत्वमित्यादि। अणीयस्त्वाक्षेपकार्थव्यपदेशात् साक्षादणीयस्त्वव्यपदेशाच्चेत्यर्थः। परमात्मनस्तु वैधर्म्यमाह—सर्वगतमिति। निचाय्यशब्दार्थमाह–द्रष्टव्यत्वेनेति। 'चाय्पूजानिशामनयोः' इतिहिधातुः। फलरूपदर्शनव्याप्त्यर्थमाह–उपास्यत्वेनेति। तद्व्यावर्त्यमाह–नपुनरिति। तदुपपादकं सूत्रखण्डं व्याचष्टे व्योमवदिति। व्योमवद्द्रष्टव्यमित्युक्ते प्रतिज्ञामात्ररूपत्वात् प्रमाणाकाङ्क्षा भवति व्यपदिश्यत इत्युक्ते प्रमाणमेव दर्शितं भवति अतोऽध्याहारस्य प्रत्यक्षेऽपि निराकाङ्क्षयोजनावरमित्यभिप्रायेण व्यपदिश्यत इतिपदं पूरकतयाऽध्याहृत्य व्याख्यातम्। व्योमवच्छब्दफ

## श्रीभाष्यम्

व्यपदिश्यते , स्वाभाविकं महत्त्वं चात्रैव व्यपदिश्यते ' ज्यायान् पृथिव्या ज्यायानन्तरिक्षा ज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः ' (छां.३.१४.१) इति । अत उपासनार्थमेवाल्पत्व-व्यपदेशः । तथा हि ' सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत ' (३.१४.१) इति सर्वोत्पत्तिप्रलयकारणत्वेन सर्वस्यात्मतयाऽनुप्रवेशकृतजीवयितृत्वेन सर्वात्मकं ब्रह्मोपासीतेत्युपासनं विधाय ' अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतःप्रेत्य भवति ' (३.१४.१) इति यथोपासनं प्राप्यसिद्धिमभिधाय ' स क्रतुं कुर्वीत '(३.१४.१) इति गुणविधानार्थमुपासनमनूद्य ' मनोमयः प्राणशरीरो भारूपस्सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्तोऽवाक्यनादरः '(३.१४.१) इति जगदैश्वर्यविशिष्टस्य स्वरूपगुणांश्चोपादेयान् प्रतिपाद्य ' एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा ' (३.१४.१) इत्युपासकस्य हृदयेऽणीयस्त्वेन तदात्मतयोपास्यस्य परमपुरुषस्योपासनार्थमल्पत्वानुकृत्तया 'एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यस्सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्तोऽवाक्यनादरः ' (३.१४.१)

## श्रुतप्रकाशिका

लिन स्वाभाविकमिति ज्यायानिति । वृद्धशब्दस्य ज्यादेश ज्यायश्शब्दनिष्पत्तिः. ' ज्य च वृद्धस्य च ' इति सूत्र नतु ' प्रशस्यश्च ' इति तन्निष्पत्तिः. । वृद्धिश्च परिमाणाधिक्यमिह विवक्षितम् नतु कालाधिक्यम् अत्राणीयस्त्वप्रतिसम्बन्ध्याकारपरत्वाज्ज्यायश्शब्दस्य । अत उपासनार्थमेवेति । अतः पृथिव्यादिभ्योऽपि ज्यायस्त्वश्रवणादित्यर्थः । महत्तयाऽवगतस्य वस्तुन उपाद्ध्युक्तिपूर्वकमुक्त परिणामौपाधिकं—असम्भावितोपाधिक परिमाण स्वाभाविकमिति न्याय इह शिक्षितो भवति । हृदयमल्पत्वोपाधिभूत श्रुत नतु ज्यायस्त्वोपाधि श्रुत. । पृथिव्यादयस्तदुपाधय इति नाशङ्कनीय ततोऽपि ज्यायस्त्वश्रवणात् नहि ततोऽधिकपरिमाण व तदुपाधिक भवितुमर्हति अणीयस्त्वस्योपासनार्थत्वमुपासनप्रकरणाविच्छेदेन स्वाभाविकमहत्त्वप्रपञ्चनेन चोपपादयति तथाहीति । सर्वात्मक ब्रह्मोपासीतेति । सर्वात्मकत्व नोपास्यगुणतयोक्तम् । तस्य वाक्यान्तरस्थत्वात् अतो लक्षणतो धर्मिनिर्देश. । तत्प्रयोजन च शान्तिरूपाधिकारिविशेषणसिद्धि', भगवदात्मकत्वहि शास्त्रतोऽवगते रागद्वेषाद्यभावरूपा शमादिनिष्पत्तिस्स्यात् यथोच्यते—

सर्वभूतात्मके तात जगन्नाथे जगन्मये । परमात्मनि गोविन्दे मित्रामित्रकथा कुत. ॥

इति, शास्त्रजन्यज्ञानपूर्वकशमादिनिष्पाद्यमवोपासन श्रुतम् ' तस्मादेव विच्छान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वा आत्मन्येवात्मान पश्येत् ' इति तस्माच्चोपासननिष्पाद्यश्शम किंतु शमनिष्पाद्यमुपासनम् ब्रह्मात्मकत्व सर्वस्य शास्त्रादवगम्य रागद्वेषादिरहितस्सन् वक्ष्यमाणगुणक ब्रह्मोपासीतेत्यर्थः , सर्वात्मक ब्रह्मेत्यनेनोपदेश्यमस्याणीयस्त्वविरोधित्व दर्शितम् । प्रकरणाविच्छेदद्योतनाय 'अथ खलु' इत्याद्युच्यते उपासनमनूद्येति । यथा 'अग्निहोत्रंजुहोति' इति विहि-

## गूढार्थसंग्रह

वर्णयितु गिरा तदा स्वय तदन्त.करणेन गृह्यते । (मै.उ) इत्युक्तेश्च पर्यालोचनेन बाह्यविषयशून्यत्वमेव तत्र विवक्षितम्, न त्वात्मविषयत्वव्यवच्छेदः । अतएव ' मनसैवानुद्रष्टव्यम् '(बृ) इति श्रुत्युपपत्ति ।

### श्रीभाष्यम्

**इत्यन्तर्हृदयेऽवस्थितस्योपास्यमानस्य प्राप्याकारं निर्दिश्य 'एष म आत्माऽन्तर्हृदय एतद्ब्रह्म' (छां.३.१४.१) इत्येवम्भूतं परं ब्रह्म परमकारुण्येनास्मदुज्जिजीवयिषयाऽस्मद्धृदये सन्निहितमितीदमनुसन्धानं विधाय 'एतमितःप्रेत्याभिसंभवितास्मि' (छां.३.१४.४) इति**

### श्रुतप्रकाशिका

तद्धोमः 'दध्ना जुहोति' इत्यत्र दध्नो होमसाधनत्वविधानार्थं जुहोतिपदेनानूद्यते तद्वदिति भाव । जगदैश्वर्यविशिष्टस्येत्यनेन 'तज्जलान्' इत्यस्यानुवादः । सर्वरूपगुणान् अद्वारकगुणान् नहि ते प्रकृतिपुरुषद्वारकाः। निवार्यत्वादिलक्ष्यार्थमाह—एवंभूतेति । सर्वकर्मत्वादिगुणानां द्विरुक्तिरुपास्यतया प्राप्यतया च हृदि स्थितेः । द्विरुक्तिर्हृदयस्थितिज्ञापनार्थं सौलभ्यानुसन्धानार्थं चेत्यर्थः। एवमत्र पूर्वत्रोत्तरत्र च विभुत्वाभिधानादर्भकौकस्त्वरूपोपाधिकथनाच्च मध्यगतमल्पत्वमौपाधिकमित्ययमर्थ उक्तो भवति ॥

### गूढार्थसङ्ग्रहः

उक्तञ्च शङ्कराचार्यैः 'मनसैवानुद्रष्टव्यम्' इत्यत्र भाष्ये 'तद्ब्रह्मदर्शनसाधनमुच्यते मनसैव परमात्मध्यानसंस्कृतेन आचार्योपदेशपूर्वकचानुद्रष्टव्य'मिति । अत्रानन्दगिरिः—'मनसो ब्रह्मदर्शनसाधनत्वे कथं ब्रह्मणः वाङ्मनसातीतत्वश्रुतिरित्याशङ्क्याह—परमार्थेति। केवल मनो ब्रह्मविषयीकुर्वदपि श्रवणादिसंस्कृतं तदाकारं जायते। तेन द्रष्टव्यं तदुच्यते, अतएव वृत्तिव्याप्यं ब्रह्मेत्युपगच्छन्तीति भावः । अनुशब्दार्थमाह—आचार्येति' इति । यद्यपि (अ.सि.३)'नच मनसैवानुद्रष्टव्यम्' इति तृतीयाश्रुत्यनुसारेण 'नमनुते' इत्यस्यैवापक्वमानोविषयतयाऽन्यथानयनसाम्यमिति वाच्यम् ; एवं साम्येऽपि मनसः करणत्वे ह्यधिककल्पना । शब्दस्य करणत्वेऽल्पकल्पनेति विशेषादिति' इति । 'ननु मनसैवानुद्रष्टव्यमित्यादावपि मनःकरणताप्रतिपादकस्य प्रकृतेरभावात् अनौपदेशिक शब्दस्य साक्षात्कारकरणत्वमितिचेन्न । 'तत्वौपनिषदं पुरुषं पृच्छामि' इत्यादौ 'तत्र साधुः'इति तदन्यासाधुत्वेसति तत्र साधुत्वरूपसाध्यर्थविहिततद्धितश्रुत्याएव मानत्वात्' इतिचोक्तम् ।(अ.सि) तथाऽपि इदं विवरणकारमताभिनिवेशमूलकमेव । 'तत्वौपनिषद' इत्येतद्विवरणे उपनिषद्भाष्ये औपनिषदशब्दस्योपनिषत्स्वेव विज्ञेय इति शङ्कराचार्यैः विवृतम् । अत्र 'तत्रविदित इति च' (५.१.४३) इति पाणिनिसूत्रेणाण् अयमेवार्थः वाचस्पतिनोक्त इति जिज्ञासाधिकरणे उक्तम् । 'तत्र साधुः' इति (४.४.९८) सूत्रं यत्प्रत्ययविधायकम् 'भक्ताणः' (४.४.१००) इत्यत्र णप्रत्ययोऽपि भक्तशब्दादेव नान्यस्मात्, तदुत्तर सूत्रषट्क अणविधानमेव नास्ति 'समानतीर्थे वासी' (१०७) इति सप्तमसूत्रे 'साधु'रिति निवृत्तमिति, काशिका तथैव .सि.कौमुद्यामपि अनन्तरं टक् टञ् ठञ् यः, ढः, इति प्रत्ययानां विधानेऽपि तेषां प्रत्ययानामसम्भव एव । अनन्तर साधुरिति शब्दस्य निवृत्तिः अतः 'अधिगतः' 'विदितः' सु.'विज्ञेयः' (उ) इति शङ्कराचार्यवाचस्पत्युक्तमेव साधु । अतः औपनिषदशब्दश्रुतिः शब्दस्य साक्षात्कारकरणत्वे न कथञ्चिदपि मानम् । एव च 'यन्मनसा' इति श्रुतिःपूर्वोदाहृतशुद्धमनः प्रतिपादकश्रुत्यनुरोधेनापक्वमनः परमेवेति सर्वैरप्यङ्गीकर्तव्यमिति दिक् । एवं च 'मनोमय' इति विशुद्धमनोग्राह्यत्वपरमिति सूक्तिः सर्वथा अप्रकम्प्येति सिद्धम् ॥

'अर्भकौकस्त्वात्' इतिसूत्रे 'विवक्षितगुणोपपत्तेश्च' इत्यत्र दयासौलभ्यादिगुणा अपि विवक्षिता इत्यभिप्रेत्याह—एषमआत्मा इत्यादि अस्मद्धृदये सन्निहितमित्यन्तम् । 'हार्दानुग्रहीतशताधिकया' इति सूत्रे हृदये स्थिति

## अथ अत्त्रधिकरणम्

### श्रीभाष्यम्

यदि परमात्मा न भोक्ता, एवं तर्हि सर्वत्र भोक्तृतया प्रतीयमानो जीव एव स्यादित्याशङ्क्याह—

## सू–९ अत्ता चराचरग्रहणात् (१.२.९)

कठवल्लीष्वाम्नायते–' यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥ ' (कठ.१.२.२५) इति । अत्रौदनोपसेचनसूचितोऽत्ता किं जीव एव, उत परमात्मेति सन्दिह्यते । किं युक्तम् ? जीव इति । कुत ? भोक्तृत्वस्य कर्मनिमित्तत्वाज्जीवस्यैव तत्सम्भवात् ॥

## अथ अत्त्रधिकरणम्

### श्रुतप्रकाशिका

अथोत्तराधिकरणसङ्गतिमाह–यदीति । —

## सू—९ अत्ता चराचरग्रहणात् (१.२.९)

कठेत्यादि । यत्र स इति, यत्प्रकारविशिष्टः तं प्रकारं को वेदेत्यर्थः । विषयवाक्ये अत्तृत्वश्रवणादस्यास्श्रुतेरेतत्सूत्राविषयत्वशङ्का परिहर्तुमाह—अत्रेति । यस्येति षष्ठीनिर्दिष्टसम्बन्धः ओदनोपसेचनसामर्थ्याददनीयात् भावलक्षणविशेषपर्यवसितः तस्मादत्ता सूचित इत्यर्थः.–' अग्निरन्नादः ' इति श्रुतिप्रसिद्धिमस्यामुपनिषद्यग्नेः प्रस्तुतत्वं चावलम्ब्याग्निर्जीवः परमात्मेति शिरस्त्रय कल्पितं परैः । नित्याग्नेः प्रस्तुतत्वेन साक्षादग्निप्रस्तावाभावादग्निप्रकरणस्य विच्छिन्नत्वादध्यात्मप्रकरणे विद्याङ्गकर्मोपयोगित्वमात्रविनाऽग्निवैभवप्रतिपादनायोगाच्च तत्परत्वाशङ्कायामन्दोत्थान वमभिप्रयता भगवता भाष्यकारेण शिरोद्वय विचारकोटौ निवेशितम् । अत्ता जीवः उत परमात्मेति विचारः तदर्थमिदमत्तृत्वं किं कर्मफलभोक्तृत्वरूपं उत जगदुपसंहर्तृत्वरूपं किमत्र पूर्वप्रस्तुतब्रह्मप्रकरणं विच्छिन्नं ? नेति ' ऋतं पिबन्तौ ' इति किं बुद्धिजीवौ निर्दिश्येते, उत परजीवपरौ पिबन्तौ इति निर्देशः किं छत्रिवल्लक्षणया शब्दशक्त्या वा प्रयोज्यप्रयोजकविषयतया नेयः उतन ? ' तद्दुर्दर्शं ' ' या प्राणेन ' इति परजीवयोर्दर्शनं किं लक्षणमापादयति उतनेति उपक्रमे ' येऽय प्रेत ' इति प्रश्नः किं जीवविषयः उत परविषय इति यदा जीवविषयः तदानीमुपक्रमविरोधेन ' तं दुर्दर्शम् ' इत्यादिना ऋतपाननिर्देशस्य प्रयोज्यप्रयोजकविषयतापादनायोगात् ' ऋतं पिबन्तौ ' इति वाक्यस्य बुद्धिजीवपरत्वेन ब्रह्मप्रकरणं विच्छिन्नमितीह प्रतिपन्नमत्तृत्वं कर्मफलभोक्तृत्वरूपमिति अत्ता जीव इति फलितम् । यदा ' येऽयम् ' इति प्रश्नः परविषयः तदानीमुपक्रमानुगुण्येन ' तं दुर्दर्शम् ' इत्यादिना ऋतपाननिर्देशस्य प्रयोज्यप्रयोजकविषयतापादनोपपत्तेः, ' ऋतं पिबन्तौ ' इति वाक्यस्य जीवपरमात्मपरत्वेन ब्रह्मप्रकरणविच्छेदाभावादिह प्रतिपन्नमत्तृत्वं जगदुपसंहर्तृत्वरूपमेवेत्यत्ता परमात्मेति फलितम् भोक्तृत्वस्येति । ओदनोपसेचनसामर्थ्यावगतस्येति भावः । ततः किमित्यत्राह—जीवस्यैवेति । ' सर्वभूतान्तरात्माऽपहत-

### श्रीभाष्यम्

अत्रोच्यते—(अत्ता चराचरग्रहणात्) अत्ता परमात्मैव । कुतः ? (चराचरग्रहणात्) चराचरस्य कृत्स्नस्यात्तृत्वं हि तस्यैव सम्भवति । नचेदं कर्मनिमित्तभोक्तृत्वम् ; अपि तु जगज्जन्मस्थितिलयहेतुभूतस्य परस्य ब्रह्मणो विष्णोस्संहर्तृत्वम् ; 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' (कठ.१.३.९) इत्यत्रैव तद्दर्शनात् । तथा च 'मृत्युर्यस्योपसेचनम्' (१.२.२५) इति वचनात्, 'ब्रह्म च क्षत्रं च' (१.२.२५) इति कृत्स्नं चराचरं जगदिहादनीयौदनत्वेन गृह्यते । उपसेचनं हि नाम स्वयमद्यमानं सदन्यस्यादनहेतुः । अत उपसेचनत्वेन मृत्योरप्यद्यमानत्वात्तदुपसिच्यमानस्य कृत्स्नस्य ब्रह्मक्षत्रपूर्वकस्य जगतश्चराचरस्यादनमत्र विवक्षितमिति गम्यते । ईदृशं चादनमुपसंहार एव । तस्मादीदृशं जगदुपसंहारित्वरूपं भोक्तृत्वं परमात्मन एव ॥

## सू–१० प्रकरणाच्च (१.२.१०)

### श्रुतप्रकाशिका

पाप्मा' 'न कर्मणा वर्धते नोकनीयान्' 'अनश्नन्नन्य' इति परस्य भोक्तृत्वं निषिद्धमिति भावः, तत्सम्भवात् कर्मफलभोक्तृत्वसम्भवात्, ब्रह्मक्षत्रशब्दवाच्यानां देहिनां स्त्रीपुंसात्मकत्वात्तद्रूपजीवानां परस्परभोक्तृभोग्यभावस्सम्भवति, जीवानां नित्यत्वादेव मृत्युवश्यत्वाभावात् मृत्युर्जीवस्य विधेय इत्यभिप्रायेण मृत्यूपसेचनवादोऽपि सम्भवतीति भावः ॥

राद्धान्तमारभते अत्रेति । चराचरग्रहणादित्येतद्व्याचष्टे चराचरस्येति । कृत्स्नचराचरविषयं वा कतिपयविषयं वाऽस्तु, ततः किं जीववैलक्षण्यस्य उक्तं हि कर्मफलभोक्तृत्वरूपमिदमत्तृत्वमित्यत्राह—नचेदमिति । कृत्स्नचराचरविषयमत्तृत्वं जीवस्यानुपपन्नमिति भावः । अत्तृत्वं विष्णुकर्तृकं चराचरसंहर्तृत्वमिति कथमवगतमित्यत्र हेतुद्वयमाह—सोऽध्वन इति । प्रकरणे परमात्मवाचिपदश्रवणं प्रथमो हेतुः, द्वितीयं हेतुमाह–तथा च मृत्युरिति । कथं चराचरस्यादनीयत्वसिद्धिः मृत्यूपसेचननिर्देशो हि मृत्युरश्यत्वाभावाभिप्रायस्सम्भवतीत्यत्राह–उपसेचनं हीति । यद्यप्युपसेचनशब्दो गौण एव निर्वाह्यः तथाऽपि साधारणाकारेणोपचारो न घटते, विशेषाकारसम्भवात् नह्यग्निर्माणवक इत्युक्ते अग्निशब्दो द्रव्यत्वाभिप्रायेण वर्णनीयः । मृत्युरुपसेचनं अबाधक इत्युक्ते विशेषाकारोपस्थापनं न स्यात् अबाधकत्वस्य लोष्टतृणादिसाधारणत्वात् स्वयमद्यमानत्वे सत्यन्यस्यादनहेतुत्वं तु विशेषाकार इति तेनैवौपचारिकप्रयोगो युक्त इति भावः । साधारणाकारं विहायावान्तराकारेण गौणार्थो वर्णनीय इति न्यायोऽत्र व्युत्पादितः । परस्य जगत्संहारे मृत्व्यपेक्षाऽपि नास्तीत्यसदुक्तं एवार्थ इति शङ्कां परिहरन् फलितमाह–अत इति । कृत्स्नजगत्संहारे मृत्व्यपेक्षाभावेऽप्यत्र मृत्योरद्यमानत्वं व्याप्तिसतास्य तद्द्वारकत्वं चाभिप्रेतम् । एवं मृत्यूपसेचनत्वसामर्थ्यात् ब्रह्मक्षत्रशब्दौ कृत्स्नचराचरप्रदर्शनार्थाविति भावः । ततोऽपि किमित्यत्राह—ईदृशमिति । सूत्रार्थमुपसंहरति तस्मादिति । 'सोऽध्वन' इत्यादिवाक्ये विष्णोः श्रूयमाणत्वन्मृत्यूपसेचनत्वसामर्थ्यसिद्धचराचरादनीयत्वाच्च कृत्स्नजगदुपसंहर्तृत्वरूपमेवेदं भोक्तृत्वमिति नेदं कर्मनिमित्तं, अतः परमात्मैवात्तेत्यर्थः ॥

## सू–१० प्रकरणाच्च (१.२.१०)

## श्रीभाष्यम्

व्यपदिश्यते , स्वाभाविकं महत्त्वं चार्थेव व्यपदिश्यते ' ज्यायान् पृथिव्या ज्यायानन्तरिक्षा ज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः ' (छां.३.१४.१) इति । अत उपासनार्थमेवाल्पत्व-व्यपदेशः । तथा हि ' सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत ' (३.१४.१) इति सर्वोत्पत्तिप्रलयकारणत्वेन सर्वस्यात्मतयाऽनुप्रवेशकृतजीवयितृत्वेन सर्वात्मकं ब्रह्मो-पासीतेत्युपासनं विधाय ' अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति त-थेतःप्रेत्य भवति ' (३.१४.१) इति यथोपासनं प्राप्यसिद्धिमभिधाय ' स क्रतुं कुर्वीत '(३. १४.१) इति गुणविधानार्थमुपासनमनूद्य ' मनोमयः प्राणशरीरो भारूपस्सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्तोऽवाक्यनादरः '(३. १४.१) इति जगदैश्वर्यविशिष्टस्य स्वरूपगुणांश्चोपादेयान् प्रतिपाद्य ' एष म आत्माऽन्तर्हृद-येऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा ' (३.१४.१) इत्युपा-सकस्य हृदयेऽणीयस्त्वेन तदात्मतयोपास्यस्य परमपुरुषस्योपासनार्थमल्पत्वमनुक्त्वा 'एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोके-भ्यस्सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्तोऽवाक्यनादरः ' (३.१४.१)

## श्रुतप्रकाशिका

लित स्वाभाविकमिति ज्यायानिति । वृद्धशब्दस्य ज्यादेशे ज्यायश्शब्दनिष्पत्तिः ' ज्य च वृद्धस्य च ' इति सूत्र नतु ' प्रशस्यश्च ' इति तन्निष्पत्तिः । वृद्धिश्च परिमाणाधिक्यमिह विवक्षितम् नतु कालाधिक्यम् अत्राणीयस्त्वप्रतिसम्बन्ध्या कारपरत्वाज्ज्यायश्शब्दस्य । अत उपासनार्थमेवेति । अतः पृथिव्यादिभ्योऽपि ज्यायस्त्वश्रवणादित्यर्थः । महत्तयाऽवग-तस्य वस्तुन उपाद्ययुक्तिपूर्वकमुक्त परिणामोपाधिक–अलभ्याविनोपाधिक परिमाणं स्वाभाविकमिति न्याय इह शिक्षितो भवति । हृदयमल्पत्वोपाधिभूत श्रुत नतु ज्यायस्त्वोपाधि श्रुतः । पृथिव्यादयस्तदुपाधय इति नाशङ्कनीयं ततोऽपि ज्या-यस्त्वश्रवणात् नहि ततोऽधिकपरिमाणत्व तदुपाधिक मर्हितुमर्हति अणीयस्त्वस्योपासनार्थत्वमुपासनप्रकरणाविच्छेदेन स्वाभाविकमहत्त्वप्रपञ्चनेन चोपपादयति तथाहीति । सर्वात्मकं ब्रह्मोपासीतेति । सर्वात्मकत्वं नोपास्यगुणतयोक्तम् । तस्य वाक्यान्तरसिद्धत्वात् अतो लक्षणतो धर्मिनिर्देशः । तत्प्रयोजन च शान्तिरूपाधिकारिविशेषणसिद्धिः, भगवदात्म कत्वहि शास्त्रतोऽवगते रागद्वेषाद्यभावरूपा शमादिनिष्पत्तिस्स्यात् यथोच्यते—

सर्वभूतात्मके तात जगन्नाथे जगन्मये । परमात्मनि गोविन्दे मित्रामित्रकथा कुतः ॥

इति, शास्त्रजन्यज्ञानपूर्वकशमादिनिष्पाद्यमेवोपासन श्रुतम् ' तस्मादेवं विच्छान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वा आत्मन्येवात्मानं पश्येत् ' इति तस्मान्नोपासननिष्पाद्यश्शमः किंतु शमनिष्पाद्यमुपासनम् ब्रह्मात्मकत्वं सर्वस्य शास्त्रादवगम्य रागद्वेषादिरहितस्सन् वक्ष्यमाणगुणक ब्रह्मोपासीतेत्यर्थः , सर्वात्मक ब्रह्मेत्यनेनोपक्रमस्याणीयस्त्वविरोधित्व दर्शितम् । प्रकरणाविच्छेदद्योतनाय 'अथ खलु' इत्याद्युच्यते उपासनमनूद्येति । यथा 'अग्निहोत्रंजुहोति' इति विहि-

## गूढार्थसंग्रहः

वर्णयितु गिरा तदा स्वय तदन्तःकरणेन गृह्यते । (मै.३) इत्युक्तेश्च पर्यालोचनेन बाह्यविषयशून्यत्वमेव तत्र विवक्षितम् , नत्वात्मविषयत्वव्यवच्छेदः । अतएव ' मनसैवानुद्रष्टव्यम् '(बृ) इति श्रुत्युपपत्तिः ।

## श्रीभाष्यम्

**इत्यन्तर्हृदयेऽवस्थितस्योपास्यमानस्य प्राप्याकारं निर्दिश्य 'एष म आत्माऽन्तर्हृदय एतद्ब्रह्म' (छां.३.१४.१) इत्येवम्भूतं परं ब्रह्म परमकारुण्येनास्मदुज्जिजीवयिषयाऽस्मद्धृदये सन्निहितमितीदमनुसन्धानं विधाय 'एतमितः प्रेत्याभिसंभवितास्मि' (छां.३.१४.४) इति**

## श्रुतप्रकाशिका

तद्धोमः 'दध्ना जुहोति' इत्यत्र दध्नो होमसाधनत्वविधानार्थं जुहोतिपदेनानूद्यते तद्वदिति भावः । जगदैश्वर्यविशिष्टस्येत्यनेन 'तज्जलान्' इत्यस्यानुवादः । सर्वरूपगुणान् अद्वारकगुणान् नहि ते प्रकृतिपुरुषद्वारकाः । निचाय्यत्वादिति स्यार्थमाह—**एवंभूतेति** । सर्वकर्मत्वादिगुणानां द्विरुक्तिरुपास्यतया प्राप्यतया च हृदि स्थितेः । द्विरुक्तिर्हृदयस्थितिज्ञापनार्थं सौलभ्यानुसन्धानार्थं चेत्यर्थः । एवमत्र पूर्वत्रोत्तरत्र च विभुत्वाभिधानादर्भकौकस्त्वस्याल्पत्वोपाधिकत्वकथनाच्च मध्यगतमल्पत्वमौपाधिकमित्ययमर्थ उक्तो भवति ॥

## गूढार्थसङ्ग्रहः

उक्तञ्च शङ्कराचार्यैः 'मनसैवानुद्रष्टव्यम्' इत्यत्र भाष्ये 'तद्ब्रह्मदर्शनसाधनमुच्यते मनसैव परमार्थध्यानसंस्कृतेन आचार्योपदेशपूर्वकञ्चानुद्रष्टव्य'मिति । अत्रानन्दगिरिः—'मनसो ब्रह्मदर्शनसाधनत्वे कथं ब्रह्मणः वाङ्मनसातीतत्वश्रुतिरित्याशङ्क्याह—परमार्थेति । केवलं मनो ब्रह्मविषयीकुर्वदपि श्रवणादिसंस्कृतं तदाकारं जायते । तेन द्रष्टव्यं तदुच्यते, अतएव वृत्तिव्याप्यं ब्रह्मेत्युपगच्छन्तीति भावः । अनुशब्दार्थमाह—आचार्येति' इति । यद्यपि (अ.सि.३)'नन्वं मनसैवानुद्रष्टव्यम्' इति तृतीयाश्रुत्यनुसारेण 'नमनुते' इत्यस्यैवापक्वमानोविषयतयाऽन्यथानयनसाम्यमिति वाच्यम् ; एवं साम्येऽपि मनसः करणत्वे लाघिककल्पना । शब्दस्य करणत्वेऽत्वल्पकल्पनेति विशेषादिति' इति । 'ननु मनसैवानुद्रष्टव्यमित्यादाविव मनः करणताप्रतिपादकस्य प्रकृतेरभावात् अनौपदेशिकं शब्दस्य साक्षात्कारकरणत्वमितिचेन्न । 'तत्त्वौपनिषदं पुरुषं पृच्छामि' इत्यादौ 'तत्र साधुः'इति तदन्यासाधुत्वेसति तत्र साधुत्वरूपसाध्वर्थविहिततद्धितश्रुत्याएव मानत्वात्' इतिचोक्तम् ।(अ.सि) तथाऽपि इदं विवरणकारमताभिनिवेशमूलकमेव । 'तत्त्वौपनिषदं' इत्येतद्विवरणे उपनिषद्भाष्ये औपनिषदशब्दस्योपनिषत्स्वेव विज्ञेय इति शङ्कराचार्यैः विवृतम् । अत्र 'तत्रविदित इति च' (५.१.४३) इति पाणिनिसूत्रेणाण् अयमेवार्थ. वाचस्पतिनोक्त इति जिज्ञासाधिकरणे उक्तम् । 'तत्र साधु' इति (४.४.९८) सूत्र यत्प्रत्ययविधायकम् 'भक्ताण्णः' (४.४.१००) इत्यत्र णप्रत्ययोऽपि भक्तशब्दादेव नान्यस्मात्, तदुत्तर सूत्रषट्क अण्विधानमेव नास्ति 'समानतीर्थे वासी' (१०७) इति सप्तमसूत्रे 'साधु'रिति निवृत्तमिति, काशिका तथैव .सि.कौमुद्यामपि अनन्तर टक् टञ् ढञ् य., ढः, इति प्रत्ययानां विधानेऽपि तेषां प्रत्यायानामत्रासम्भव एव । अनन्तर साधुरिति शब्दस्य निवृत्तिः अतः 'अधिगतः' 'विदित.' सू.'विज्ञेयः' (उ) इति शङ्कराचार्यवाचस्प युक्तमेव साधु । अतः औपनिषदशब्दश्रुतिः शब्दस्य साक्षात्कारकरणत्वेन कथञ्चिदपि मानम् । एवं च 'यन्मनसा' इति श्रुति पूर्वोदाहृतशुद्धमनः प्रतिपादकश्रुत्यनुरोधेनापक्वमनः परमेवेति सर्वैरप्यङ्गीकर्तव्यमिति दिक् । एवं च 'मनोमय' इति विशुद्धमनोग्राह्यपरमिति सूक्तिः सर्वथा अप्रकम्प्येति सिद्धम् ॥

'अर्भकौकस्त्वात्' इतिसूत्रे 'विवक्षितगुणोपपत्तेश्च' इत्यत्र दयासौलभ्यादिगुणा अपि विवक्षिता इत्यभिप्रेत्याह—एषमआत्मा इत्यादि अस्मद्धृदये सन्निहितमित्यन्तम् । 'हार्दानुगृहीतश्शताधिकया' इति सूत्रे हृदये स्थिति

श्रीभाष्यम्

यथोपासनं प्रातिनिध्ययानुसन्धानं च विधाय ' इति यस्य स्यादद्धा न विचिकित्साऽस्ति ' (३.१४.४) इत्येवंविधप्राप्यप्रातिनिध्योपेतस्योपासकस्य प्राप्तौ न संशयोऽस्तीत्युपसंहृतम्। अत उपासनार्थमर्भकौकस्त्वमणीयस्त्वं च ॥

## सू—८ सम्भोगप्राप्तिरितिचेन्न वैशेष्यात् १.२.८

जीवस्येव परस्यापि ब्रह्मणश्शरीरान्तर्वर्तित्वमभ्युपगतं चेत् तद्वदेव शरीरसम्बन्धप्रयुक्तसुखदुःखोपभोगप्राप्तिरिति चेत्-तन्न; हेतुवैशेष्यात्-नहि शरीरान्तर्वर्तित्वमेव सुखदुःखोपभोगहेतुः; अपि तु पुण्यपापरूपकर्मपरवशत्वम्; तत्त्वपहतपाप्मनः परमात्मनो न सम्भवति। तथा च श्रुतिः ' तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ' (मु. ३.१.१) इति ॥

सर्वत्रप्रसिद्ध्यधिकरणं समाप्तम्

श्रुतप्रकाशिका

## सू-८ सम्भोगप्राप्तिरितिचेन्न वैशेष्यात् १.२.८

शरीरान्तर्वर्तित्व हृदयवर्तित्व वैशेष्य विशेष. भोगप्रसञ्जने सुखग्रहण सांसारिकसुखस्यादिमध्यावसानेषु दुःखमिश्रत्वेनापुरुषार्थपक्षनिक्षेपनिबन्धनं तथा च श्रुति शरीरान्तर्वर्तित्वेऽपि फलसम्बन्धासम्भवावाहेत्यर्थं —अधिकरणार्थनिगमनमसिद्ध अस्मिन्सूत्रे परस्माद्न्यस्य जीवस्यानभ्युपगम परस्य कर्मफलभोक्तृत्वप्रसङ्ग इति परिचोद्य परिहृतं वाभिमानेन कैश्चिदेवमुक्तम् आत्माऽन्तराभावो यद्यनवगत: तदा तन्निबन्धनचोद्यानुदय' अवगत चेत् किं शास्त्रादवगम' उतासद्वाक्यात् प्रथमे शास्त्रसिद्धात्मान्तराभाववत् परस्य भोक्तृत्वाभावोऽपि शास्त्रसिद्धतया स्वीकार्य: नह्यर्धजरतीय न्याय्यम् द्वितीयेतु भ्रान्तिसिद्धगगनतलमलिनताविकल्पो गगनमिवापारमार्थिकभोक्तृत्व परमार्थम्द्वितीय परमात्मानं न स्पृशतीति। तत्र प्रथम शिरोऽनभ्युपगमनिरस्त शास्त्र जीवपरयोरनन्यत्व प्रतिपादयतीति प्रतिवादिवाक्यात् आत्माऽन्तराभावमवगम्यते तथासति परस्य जीववत् भोक्तृत्वप्रसङ्गादयाग्य जीवपरैक्य शास्त्र न प्रतिपादयितु क्षमतीतिहि चोदयितुरभिप्राय. अतो नार्धजरतीय अपरमार्थत्वान्न स्पृशतीति वचनव्यक्तिर्दूषणस्य दुष्परिहरतामवगमयति। जीववदुपभोक्तृत्वाहि चोदयित्रा आपादित जीवस्य च भोक्तृत्व त्वन्मते मिथ्या अतो गगन मालिन्यवत् परस्मिन्कल्पितं भोक्तृत्व न त स्पृशतीति वदता जीववत् भोक्तृत्वमभ्युपगत स्यात् नचांशभेदेन भोगव्यवस्था वस्तुनो निरंशत्वात्, सांशत्वेऽप्युपाधीनां गत्वरतया घटे चलति नभस्स्पन्दवत् सर्वप्रदेशैरौपाधिकदोषान्वयप्रसङ्गात् अत परपक्षे भोक्तृत्वप्रसङ्गपरिहारोऽनुपपन्न —सर्वत्रेति सूत्र स्ववाक्यस्थहेतुपर तदनन्तरवाक्यस्थहेतुपर द्वितीयम्। व्यतिरेकपर तृतीय उपसंहारस्थहेतुपर चतुर्थं तत्र शङ्काविशेषपरिहारपमनन्तरसूत्रद्वयम्। सूत्रद्वयोक्तहृदयावस्थानप्रयुक्तचोद्यपरिहारपर तदनन्तरसूत्रद्वयमिति सूत्रसङ्गति. ॥

सर्वत्रप्रसिद्ध्यधिकरणं समाप्तम्

## गूढार्थसंग्रहः

दयामूलेति सूत्रकार एव स्पष्टीकरिष्यति। अस्मिन्सूत्रे अर्भकपदेन राजकुमारनयसूचनेन पुत्रस्य पितृदायभागवत् सर्वेषां पुत्राणामुपासकानां तरतमभावानापन्नमुक्तिफलं सिद्धमेवेति निश्चयः पूर्ववाक्यतात्पर्यविषय इति 'एतमितःप्रेत्याभिसंभविताऽस्मि' इति श्रुतौ विवक्षितः। अत्र 'अभि' इत्यनेन पूर्वोक्तोपासनाविषयातिरिक्ताः सर्वे गुणा विभूत्यादयः 'समि'त्यनेन एतत्फलस्य कदाऽप्यविच्छेदः इत्युभयं विवक्षितम्। भूधातोः प्राप्त्यर्थकत्वं शङ्कराचार्यैः आनन्दतीर्थैश्चाङ्गीकृतम्। इति 'यस्य स्यादद्धा नविचिकित्साऽस्ति' इत्यनेन दृढाध्यवसायः अपेक्षित इति विवक्षितम् उक्तरीत्या दृढाध्यवसायशून्यतया उपासनस्य तरतमभावापन्नफलकत्ववादः परेषां नव्यानां च प्रवृत्तः। राजकुमारनयेन पुत्रस्यातारतम्येन दायधनलाभवत् उपासकानां मुक्तिलाभ इति श्रीभागवतेऽप्युक्तम्। 'तत्तेऽनुकम्पां प्रसमीक्षमाणः भुञ्जान एवात्मकृतं विपाकम्। हृद्वाग्वपुर्भिर्विदधन्नमस्ते जीवेत यो मुक्तिपदे स दायभाक्॥' (१०.१४.८) इति। अत्र शुकपक्षीयम्—'अत्र हृद्वाग्वपुर्भिस्ते नमः विदधत्' इत्यनेनाकल्प्यादिपञ्चपरिकरोक्तिः एव प्रकरणेन यो जीवेत इति दृष्टत्वोक्तिः मुक्तिपदे अर्चिरादिना दायभाग्भवतीति जीवतः पुत्रादेः पितृदायभाक्त्वमिवेति भावः' इति॥

एतेन 'उपासात्रैविध्यात्' इति पूर्वाधिकरणे ज्ञानाभिन्नमुपासनं यत्स्थापितं 'सम आत्मेतिविद्यात्' इत्यत्रात्मविषयकं अस्मिन्नधिकरणे तत्, जीवभिन्नात्मविषयकमेवेति त्रिवारमभ्यासेन जीवपरयोर्भेदस्थापनेन राजकुमारनयेनोपासनस्य तरतमभावानापन्नफलसाधनत्वव्यवस्थापनेन च निर्णीतम्। तेन उपासनमपरब्रह्मविषयं गतिद्वारा तरतमभावापन्नफलसाधकं ज्ञानं च निर्विशेषपरब्रह्मविषयकं गतिमन्तराऽत्रैव तरतमभावानापन्नैकरूपमुक्तिसाधनमिति परेषां मतं श्रुतितात्पर्यविषय इति सूत्रकृता सम्यङ्निर्णीतं भवति॥ मण्डनवाचस्पती ब्रह्मणः मानससाक्षात्कारविषयत्वमेवाभ्युपगच्छतः अतः विशुद्धमनोग्राह्यत्वमेव 'मनोमय' इत्यत्र विवक्षितमिति सुष्ठूक्तम्। सुषुप्तौ मनसः लयसद्भावेनाहमर्थस्य नाशेऽपि प्राणस्य सद्भावेन उच्छ्वासाद्युपपत्तिं परे वदन्ति तदभिसन्धाय श्रुतिरेव प्राणशरीर इत्याह। 'भारूप' इत्यादि भास्वररूपत्वं दिव्यमङ्गलविग्रहवत्त्वरूपम् तेन गुणानां तात्पर्यविषयत्वं वदन् सूत्रकारः गुणा नोपासनविषयाः निर्विशेषस्यैव श्रुत्यभिप्रेतत्वमिति परमतं श्रुत्यनभिप्रेतमिति स्थापयति। 'अर्भकौकस्त्वात्' इतिसूत्रे एकस्यैवोपासनार्थत्वस्य सूत्रकृता वर्णनेन इतरेषां तात्पर्यविषयत्वं स्पष्टीकृतं भवति। 'एषम आत्मा' इत्यत्र यदात्मत्वं त्रिवारमभ्यस्तं तदपि 'विवक्षितगुणोपपत्तेश्च' इत्यत्र तात्पर्यविषय एव॥

'अर्भकौकस्त्वात्' इतिसूत्रे एषम आत्माऽन्तर्हृदय इत्यादि परंब्रह्म हृदये सन्निहितमित्यन्तम्। अन्तर्यामित्वं दयामूलकमिति अर्भकौकस्त्वात् इत्यत्रार्भकशब्दः पुत्रपर इति 'द्वासुपर्णा' इति श्रुत्यनन्तरं ऋक्संहितायां—'पाकमत्राविवेश' 'तस्योत्तशयः पितरं न वेद' (म.१.सू.१६४,म.२१,२२) इति श्रुतिद्वये अन्तर्यामिणः पितृत्वं जीवस्य पुत्रत्वं च स्पष्टमभिहितमिति पूर्वमेव (जि.अ.७६४.पु) निरूपितम्॥

इति सर्वत्रप्रसिद्ध्यधिकरणम्



अथ वदान्तसारः

## .१–सर्वत्र प्रसिद्धोपदेशात् (१.२.१)

'सर्वं खल्विदम्' (छा.३.१४.१) इति निर्दिष्टेन सामानाधिकरण्येन निर्दिष्टं ब्रह्म परमात्मा ; कुतः ? प्रसिद्धोपदेशात् 'तज्जलान्' (३.१४.१) इति हेतुत्वेनोपदेशादित्यर्थः । प्रसिद्धं हि हेतुतया व्यपदिश्यते । सकलोपनिषत्सु ब्रह्मैव हि जगज्जन्मलयजीवनहेतया प्रसिद्ध 'यतो वा इमानि' (तै.भृ.१) इत्यादिषु ॥

## सू–२ विवक्षितगुणोपपत्तेश्च [१-२-२]

मनोमयत्वसत्यसङ्कल्पत्वादयो विवक्षितगुणाः ब्रह्मण्येवोपपद्यन्ते ॥

## सू—अनुपपत्तेस्तु न शारीरः (१.२.३)

दुःखमिश्रपरिमितसुखलवभागिनि शरीरेषु एषां गुणानाम् अनुपपत्तेर्न शारीरोऽयम् ॥

## सू—४ कर्मकर्तृव्यपदेशाच्च [१.२.४]

'एतमितः प्रेत्याभिसम्भवितास्मि' (छा.३.१४.४) इत्यभिसम्भाव्याभिसंभवितृत्वेन प्रस्तुतब्रह्मजीवयोर्व्यपदेशादभिसंभाव्यं ब्रह्म जीवादर्थान्तरम् ॥

## सू–५ शब्दविशेषात् (१.२.५)

'एष म आत्माऽन्तर्हृदये' (छा.३.१४.३) इति षष्ठ्या प्रथमया च जीवो ब्रह्म च व्यपदिश्यते। ततश्चार्थान्तरम्।

## —६ स्मृतेश्च १.२.६)

अत्रापि प्रथमया निर्दिष्टः पुरुषोत्तम इति निश्चीयते । 'सर्वस्य चाहं हृदि सन्निविष्टः' (गी.१५.१५) इति हि स्मृतिः

## अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेतिचेन्न निचाय्यत्वादेवं व्योमवच्च १.२७

'एष म आत्माऽन्तर्हृदये अणीयान् व्रीहेः' (छा. ३.१४.३) इत्यादिना अल्पायतनत्वात् स्वरूपाल्पत्वस्य व्यपदेशाच्च नायं पर इतिचेन्न, उपास्यत्वाद्धेतोस्तथा व्यपदेशः नतु स्वरूपाल्पत्वेनाव्योमवत्–स्वरूपमहत्त्वञ्चात्रैव व्यपदिश्यते 'ज्यायान् पृथिव्याः ज्यायानन्तरिक्षात्' (३.१४.३) इत्यादिना ॥

## सम्भोगप्राप्तिरितिचेन्न वैशेष्यात् १.२.८

परोऽप्यन्तश्शरीरे वसतिचेत्—जीववत् सुखदुःखोपभोगप्राप्तिरस्यादिति चेन्न, हेतुवैशेष्यात् ; परस्यहि छन्दतो जीव रक्षार्थे शरीरान्तर्वासः ॥

इति वेदान्तसार.

अथ वेदान्तदीपः

## -१ सर्वत्र प्रसिद्धोपदेशात् [१-२-१)

छान्दोग्ये श्रूयते—' सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत, अथ खलु क्रतुमयोऽय पुरुष. यथा क्रतुरस्मिँल्लोके पुरुषो भवति तथेतःप्रेत्य भवति, सक्रतु कुर्वीत मनोमयः प्राणशरीरः ' (छा.३.१४.१) इति । अत्र ' सर्वं खल्विद ब्रह्म ' (३.१४,१) इति सर्वात्मकत्वेन निर्दिष्ट ब्रह्म, किं प्रत्यगात्मा, उत परमा वेति संशयः । प्रत्यगात्मेति पूर्वःपक्ष, सर्वत्र तादात्म्योपदेशोहि तस्यैवोपपद्यते । परस्य तु ब्रह्मणः सकलहेयप्रत्यनीककल्याणैकतानस्य समस्तहेयाकारं सर्वतादात्म्य विरोधादेव न सम्भवति । प्रत्यगात्मनोहि कर्मनिमित्तो ब्रह्मादिस्तम्बपर्यन्तं सर्वभाव उपपद्यते । सांख्यादि हेतु ग्रह तत्तत्कर्मनिमित्तत्वेन स्यादेरुपपद्यते । ब्रह्मशब्दोऽपि बृहत्त्वगुणयोगेन ' एतस्मादेतद्ब्रह्म नामरूपमन्नं च जायते ' (मुण्डक.१.१.९) इतिवत्तत्रैव वर्तते । राद्धान्तस्तु—' तज्जलान् ' इति ' सर्वंखल्विद ब्रह्म ' (१.१४.१) इति तज्जन्मस्थितिलयहेतुक तदात्मकत्व प्रसिद्धवन्निर्दिश्यमान परस्यैव ब्रह्मण उपपद्यते । परस्माद्ब्रह्मण एव हि जगज्जन्मस्थितिलयाः प्रसिद्धाः 'सोऽकामयत बहुस्या प्रजायेयेति, इदँसर्वमसृजत ' (तै.आन.६) इत्यादिषु । तथा सर्वात्मकत्व च जन्मादिहेतुक परस्यैव ब्रह्मणः प्रसिद्धम्, ' सन्मूलास्सोम्येमास्सर्वा. प्रजास्सदायतनास्सत्प्रतिष्ठाः ' (छा.६.८.६) ' ऐतदात्म्यमिद सर्वम् ' (६.८.७) इति । हेयप्रत्यनीककल्याणैकतानात्मनश्च परस्य हेयाकारसर्वभूतात्म वमविरुद्धम् । ' य पृथिव्यातिष्ठन्—यस्य पृथिवी शरीरम्, (बृ.५.७.३) य आत्मनितिष्ठन्—यस्यात्मा शरीर—सत आत्माऽ तर्याम्यमृतः ' (५.७.२२,माध्यन्दिनपाठः) इत्यादिना शरीरात्मभावेन सर्वात्मत्वोपपादनात् ; शरीरात्मनोश्च स्वभावव्यवस्थानात् । सर्वं ब्रह्मेति सामानाधिकरण्यनिर्देशश्च सर्वशब्दस्य सर्वशरीरके ब्रह्मण्येव प्रवृत्तेरुपपद्यते । शरीरवाचीहि शब्दः शरीरिण्यात्मन्येव पर्यवस्यति ; देवमनुष्यादिशब्दवत् । सूत्रार्थस्तु—सर्वत्र ' सर्वंखल्विद ब्रह्म ' (छा३.१४.१) इति निर्दिष्टे वस्तुनि सर्वशब्दवाच्ये सामानाधिकरण्येन तदात्मतया निर्दिष्ट परब्रह्मैव । कुत. ? प्रसिद्धोपदेशात् ' तज्जलान् ' [३.१४.१) इति सर्वमिद ब्रह्मखलु ' इति प्रसिद्धवत्तस्योपदेशात् सर्वात्मकत्वस्योपदेशाच्च । तदेवहि जगज्जन्मस्थितिलयहेतुत्वेन वेदान्तेषु प्रसिद्धम् ॥

## सू= विवक्षितगुणोपपत्तेश्च [१-२.२]

मनोमयत्वादिकास्सत्यसङ्कल्पमिश्रा विवक्षिता गुणाः परस्मिन्नेवोपपद्यन्ते ॥

## सू.३-अनुपपत्तेस्तु न शारीरः (१.१.३)

एतेषां गुणानाम् अनन्तदुःखमिश्रपरिमितसुखलवभागिनि क्लेशकर्मपरवशे शारीरे प्रत्यगात्मन्यनुपपत्तेश्चाय न शारीरः, अपितु परमेव ब्रह्म ॥

## सू–४ कर्मकर्तृव्यपदेशाच्च (१.२.४)

' एतमितःप्रेत्याभिसंभवितास्मि ' इति प्राप्यतयोपास्यो निर्दिश्यते ; प्राप्तृतया च जीवः । अतश्च जीवादन्यदे-वेद परं ब्रह्म ॥

## सू–५ शब्दविशेषात् (१.२.५)

'एष म आत्माऽन्तर्हृदये' (छा.३.१४.३) इति शारीरष्षष्ठ्या निर्दिष्टः, उपास्यः प्रथमया । अतश्च जीवादन्यः

## सू–६ स्मृतेश्च [१.२.६.

' सर्वस्यचाहं हृदि संनिविष्टो मत्तःस्मृतिर्ज्ञानमपोहनं च ' (गी.१५.१५) इति स्मृतेश्च । अतश्च जीवादन्य उपा स्यःपरमात्मा ॥

## अर्भकौकस्त्वात्तद्व्यपदेशाच्चनेतिचेन्न निचाय्यत्वादेवं व्योमवच्च .१.२.७.

' एष म आत्माऽन्तर्हृदये ' (छा.३.१४.१) इति अल्पस्थानत्वात् ' अणीयान्व्रीहेर्वा यवाद्वा' (३.१४.१) इत्य ल्पत्वव्यपदेशाच्च न परं ब्रह्मेतिचेन्न, निचाय्यत्वादेव, एवमुपास्य त्वादेतोरल्पायतनत्वाल्पत्वव्यपदेशः न स्वरूपाल्पत्वेन 'ज्या यान्पृथिव्याः ' (३.१४.१) इत्यादिना सर्वस्माज्ज्यायस्त्वोपदेशात् । ज्यायसोऽप्यस्य हृदयायतनावच्छेदेनाल्पत्वानुसन्धा नमुपपद्यते । व्योमवत् यथा महतोऽपि व्योम्नस्सूचीपथादिष्वल्पत्वानुसन्धानम् । चशब्दोऽवधारणे । स्थूदेवेत्यर्थः । स्वाभाविकंचास्य महत्त्वमत्राभिधीयत इत्यर्थः । 'ज्यायान्पृथिव्याः ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्य.' (३.१४.२) इति ह्यनन्तरमेवोपदिश्यते ॥

## सम्भोगप्राप्तिरितिचेन्नवैशेष्यात् .१.२.८.

यद्युपासकशरीरे हृदयेऽयमपि वर्तते ; ततस्तद्वदेवास्यापि शरीरप्रयुक्तसुखदुःखसभोगप्राप्तिरिति चेन्न, हेतुवैशे-ष्यात् । नहि शरीरान्तर्वर्तित्वमात्रमेव सुखदुःखोपभोगहेतुः ; अपितु कर्मपरवशत्वम् ; तत्त्वपहतपाप्मनः परमात्मनो न सम्भवति ॥

॥ इति वेदान्तदीपे सर्वत्रप्रसिद्ध्यधिकरणं समाप्तम् ॥

## अथ अधिकरणसारावली

अन्नायेगान्ययोगव्यपनयननयैर्नैकपादत्रिपादी
भागारूढैर्मृदूपक्रमकठिनपरः प्राय आदे प्रसादधयम् ।
कृत्स्नाक्षेपोपशान्त्यै प्रथम इह ततः पाद उक्तत्रिपादी
काचित्कक्षेपपूर्वाखिलरलुदसमुन्मूलनाय प्रणीता ॥
अस्पष्टस्पष्टरूपस्फुटतरचिदचिल्लिङ्गवद्वाक्यचिन्ता
भाष्ये दीपावतारेऽप्यभणि नयगणैस्सम्प्रवृत्त्या त्रिपाद्याम् ।
अत्यन्तास्पष्टलिङ्गान्वितविषयमुशन्त्याद्यपादं तु केचित्
तत्रेदं तारतम्यं नियतनिजफलैः कर्मतार्तीयमानैः ॥
पूर्वत्रासिद्धरूपैस्स्वमतिविरचितैर्नीतिभिः पूर्वपक्ष-
स्सिद्धैस्साधारणैरप्युपाधिनियमितैः प्रत्यवस्था द्वितीये ।
स्पष्टासाधारणत्वैरुपरिपरमतानूक्तिकल्पैरथेति
न्यायैः त्रिंशदत्र प्रतिचरणविभक्त्यन्विता अन्वेषणीया ॥
विश्वं पादे द्वितीये वपुरिति कथयंश्चिन्त्यते वाक्यवर्गो
विश्वाधारस्स आत्मेत्यभिलपनपरस्तर्कणीयस्तृतीये ।
तुर्ये साङ्ख्यादिपक्षोदितपरपठनभ्रान्तिरुन्मूलनीये-
त्येव केचित्त्रिपादीं जगदुरयमपि श्रोतृबुद्धेस्समाधिः ॥
यस्य प्राणश्शरीरं स खलु हिततमोपास्तिकर्मप्रसक्त-
स्तस्मिञ्जीवत्वशङ्कां जगदुपजनके सौति शाण्डिल्यविद्या ।
पूर्वन्यायाद्य युक्त्यं दमनमिह महावाक्यतः प्रक्रमस्ये
त्युत्थाने प्रक्रमोक्ताऽनुगुणमिति महावाक्यमेकीकरोति ॥
अन्यारुद्यात्र भेदं प्रथममधिकृतिर्भाषिता किंनिमित्तं
विद्येक्त्वेऽनुवादः परं इह गुणविद्यर्थमेवेति युक्तम् ।
सत्यं ब्रह्मानुमत्य क्वचिदुपनिषदि क्वापि कल्प्ये विवादे
चिन्तैषोदाहृतिस्स्यात्परमतरचितेत्यर्थसिद्धिस्तु बोद्धया ॥
सर्वत्व कर्मभिस्त्वैर्जनिमति घटते ब्रह्मशब्दोऽत्र चैवे
त्यल्पस्थानोऽल्पमानस्सुखतदितरभुग्जीवएवेति चेन्न ।
तज्जत्वादेरनूक्तेर्विविधगुणभिदा दर्शनात्सर्वतादे
स्स्वारस्यादप्यणुत्व ह्युपधिकृतमिहोपास्यते ज्यायसि स्यात् ॥

॥ इति सर्वत्र प्रसिध्द्यधिकरणं समाप्तम् ॥

## अथ अत्त्रधिकरणम्

### श्रीभाष्यम्

यदि परमात्मा न भोक्ता, एवं तर्हि सर्वत्र भोक्तृतया प्रतीयमानो जीव एव स्यादित्याशङ्क्याह—

## सू-९ अत्ता चराचरग्रहणात् (१.२.९)

कठवल्लीष्वाम्नायते–' यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥ ' (कठ.१.२.२५) इति । अत्रौदनोपसेचनसूचितोऽत्ता किं जीव एव, उत परमात्मेति सन्दिह्यते । किं युक्तम् ? जीव इति । कुतः ? भोक्तृत्वस्य कर्मनिमित्तत्वाज्जीवस्यैव तत्सम्भवात् ॥

## अथ अत्त्रधिकरणम्

### श्रुतप्रकाशिका

अथोत्तराधिकरणसङ्गतिमाह–यदीति । —

## सू—९ अत्ता चराचरग्रहणात् (१.२.९)

कठेत्यादि । यत्र स इति, यत्प्रकारविशिष्टः त प्रकारं को वेदेत्यर्थः । विषयवाक्ये अत्तेत्यश्रवणादस्याःश्रुतेरेत त्सूत्राविषयत्वशङ्का परिहर्तुमाह–अत्रेति । यस्येति षष्ठीनिर्दिष्टसम्बन्धः ओदनोपसेचनसामर्थ्याददनीया तृभावलक्षणविशे षपर्यवसितः तस्मादत्ता सूचितइत्यर्थः–' अग्निरन्नादः ' इति श्रुतिप्रसिद्धिमस्यामुपनिषद्यग्नेः प्रस्तुतत्वचावलम्ब्याग्निर्जीवः परमात्मेति शिरस्त्रय कल्पितं परैः । चित्याग्नेः प्रस्तुतत्वेन साक्षादग्निप्रस्तावाभावादग्निप्रकरणस्य विच्छिन्नत्वादध्यात्मप्रकरणे विद्याङ्गकर्मोपयोगित्वमात्रविनाऽग्निवैभवप्रतिपादनायोगाच्च तत्परत्वाशङ्कायामन्दोत्थानत्वमभिप्रयता भगवता भाष्यकारेण शिरोद्वय विचारकोटौ निवेशितम् । अत्ता जीव. उत परमात्मेति विचारः तदर्थमिदमत्तृत्व किं कर्मफलभोक्तृत्वरूप उत जगदुपसंहर्तृत्वरूप किमत्र पूर्वप्रस्तुतब्रह्मप्रकरण विच्छिन्न ? नेति ' ऋतं पिबन्तौ ' इति किं बुद्धिजीवौ निर्दिश्येते, उत उतजीवपरौ पिबन्तौ इति निर्देशः किं छत्रिवल्लक्षणया शब्दशक्त्या वा प्रयोज्यप्रयोजकविषयतया नेयः उतन? 'तदुर्दर्शं' ' या प्राणेन ' इति परजीवयोर्दर्शनं किं लक्षणमापादयति उतनेति उपक्रमे ' येऽय प्रेत ' इति प्रश्नः किं जीवविषयः उत परविषय इति यदा जीवविषयः तदानीमुपक्रमविरोधेन ' तं दुर्दर्शम् ' इत्यादिना ऋतपाननिर्देशस्य प्रयोज्यप्रयोजकविषयतापादनायोगात् ' ऋतं पिबन्तौ ' इति वाक्यस्य बुद्धिजीवपरत्वेन ब्रह्मप्रकरणं विच्छिन्नमितीह प्रतिपन्नमत्तृत्वं कर्मफलभोक्तृत्वरूपमिति अत्ता जीव इति फलितम् । यदा ' येऽयम् ' इति प्रश्नः परविषयः तदानीमुपक्रमानुगुण्येन ' तं दुर्दर्शम् ' इत्यादिना ऋतपाननिर्देशस्य प्रयोज्यप्रयोजकविषयतापादनोपपत्तेः, ' ऋतं पिबन्तौ ' इति वाक्यस्य जीवपरमात्मपरत्वेन ब्रह्मप्रकरणविच्छेदाभावादिह प्रतिपन्नमत्तृत्वं जगदुपसंहर्तृत्वरूपमेवेत्यत्ता परमात्मेति फलितम् भोक्तृत्वस्येति । ओदनोपसेचनसामर्थ्यावगतस्येति भावः । ततः किमित्यत्राह—जीवस्यैवेति । ' सर्वभूतान्तरात्माऽपहत-

श्रीभाष्यम्

अत्रोच्यते—(अत्ता चराचरग्रहणात्) अत्ता परमात्मैव। कुतः? (चराचरग्रहणात्) चराचरस्य कृत्स्नस्यात्त्रृत्वं हि तस्यैव सम्भवति। नचेदं कर्मनिमित्तभोक्तृत्वम्; अपि तु जगज्जन्मस्थितिलयहेतुभूतस्य परस्य ब्रह्मणो विष्णोस्संहर्तृत्वम्; 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' (कठ.१.३.९) इत्यत्रैव तद्दर्शनात्। तथा च 'मृत्युर्यस्योपसेचनम्' (१.२.२५) इति वचनात्, 'ब्रह्म च क्षत्रं च' (१.२.२५) इति कृत्स्नं चराचरं जगदिहादनीयत्वेन गृह्यते। उपसेचनं हि नाम स्वयमद्यमानं सदन्यस्यादनहेतुः। अत उपसेचनत्वेन मृत्योरप्यद्यमानत्वात्तदुपसिच्यमानस्य कृत्स्नस्य ब्रह्मक्षत्रपूर्वकस्य जगतश्चराचरस्यादनमत्र विवक्षितमिति गम्यते। ईदृशंचादनमुपसंहार एव। तस्मादीदृशं जगदुपसंहारित्वरूपं भोक्तृत्वं परमात्मन एव॥

## सू-१० प्रकरणाच्च (१.२.१०)

श्रुतप्रकाशिका

पाप्मा' 'न कर्मणा वर्धते नोकनीयान्' 'अनश्नन्नन्यः' इति परस्य भोक्तृत्वं निषिद्धमितिभावः, तत्सम्भवात् कर्मफलभोक्तृत्वसम्भवात्, ब्रह्मक्षत्रशब्दवाच्यानां देहिनां स्त्रीपुंसात्मकत्वात्तद्रूपजीवानां परस्परभोक्तृभोग्यभावस्सम्भवति, जीवानां नित्यत्वादेव मृत्युवश्यत्वाभावात् मृत्युर्जीवस्य विधेयइत्यभिप्रायेण मृत्यूपसेचनवादोऽपि सम्भवतीति भावः॥

राद्धान्तमारभते अत्रेति। चराचरग्रहणादित्येतद्व्याचष्टे चराचरस्येति। कृत्स्नचराचरविषयं वा कतिपयविषयं वाऽस्तु, ततः किं जीववैलक्षण्यस्य उक्तं हि कर्मफलभोक्तृत्वरूपमिदमत्तृत्वमित्यत्राह—नचेदमिति। कृत्स्नचराचरविषयमत्तृत्वं जीवस्यानुपपन्नमिति भावः। अत्तृत्वं विष्णुकर्तृकं चराचरसंहर्तृत्वमिति कथमवगतमित्यत्र हेतुद्वयमाह—सोऽध्वनइति। प्रकरणं परमात्मवाचिपदश्रवणं प्रथमो हेतुः, द्वितीयं हेतुमाह-तथा च मृत्युरिति। कथं चराचरस्यादनीयत्वसिद्धिः मृत्यूपसेचननिर्देशोहि मृत्युवश्यत्वाभावाभिप्रायस्सम्भवतीत्यत्राह-उपसेचनंहीति। यद्यप्युपसेचनशब्दो गौणएव निर्वाह्यः तथाऽपि साधारणाकारेणोपचारो नघटते, विशेषाकारसम्भवात् नह्यग्निर्माणवक इत्युक्ते अग्निशब्दो द्रव्यत्वाभिप्रायेण वर्णनीयः। मृत्युरुपसेचनं अबाधकं इत्युक्ते विशेषाकारोपस्थापनं न स्यात् अबाधकत्वस्य लोष्टतृणादिसाधारणत्वात् स्वयमद्यमानत्वेसत्यन्यस्यादनहेतुत्वंतु विशेषाकार इति तेनैवौपचारिकप्रयोगो युक्त इति भावः। साधारणाकारं विहायाकारान्तराकारेण गौणार्थो वर्णनीय इति न्यायोऽत्र व्युत्पादितः। परस्य जगत्संहारे मृत्य्वपेक्षाऽपि नास्तीत्यसदुक्तप्रायं इति शङ्कां परिहरन् फलितमाह—अतइति। कृत्स्नजगत्संहारे मृत्य्वपेक्षाभावेऽप्यत्र मृत्योरद्यमानत्वं व्याप्तिसंतारस्य तद्द्वारकत्वाभिप्रेतम्। एवं मृत्यूपसेचनत्वसामर्थ्यात् ब्रह्मक्षत्रशब्दौ कृत्स्नचराचरप्रदर्शनार्थाविति भावः। ततोऽपि किमित्यत्राह—ईदृशमिति। सूत्रार्थमुपसंहरति तस्मादिति। 'सोऽध्वन' इत्यादिवाक्ये विष्णोश्श्रूयमाणत्वम्मृत्यूपसेचनत्वसामर्थ्यसिद्धचराचरादनीयत्वाच्च कृत्स्नजगदुपसंहर्तृत्वरूपमेवेदं भोक्तृत्वमिति नेदं कर्मनिमित्तं, अतः परमात्मैवात्तेत्यर्थः॥

## सू-१० प्रकरणाच्च (१.२.१०)

## श्रीभाष्यम्

प्रकरणं चेदं परस्यैव ब्रह्मणः 'महान्तं विभुमात्मानं मत्वा धीरो न शोचति' (कठ. १.२.२२) 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' (२३) इति हि प्रकृतम्। 'क इत्था वेद यत्र सः' (कठ.१.२.२५) इति हि तत्प्रसादादृते तस्य दुरवबोधत्वमेव पूर्वप्रस्तुतं प्रत्यभिज्ञायते ॥

*अथ स्यात् नायं ब्रह्मक्षत्रौदनसूचितः पुरुषोऽपहतपाप्मा परमात्मा; अनन्तरं 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः' (कठ.१.३.१)इति कर्मफलभोक्तुरेव सद्वितीयस्याभिधानात्। द्वितीयश्च प्राणो बुद्धिर्वा स्यात्। ऋतपानं हि कर्मफलभोग एव, स च परमात्मनो न सम्भवति*

## श्रुतप्रकाशिका

स्ववाक्यस्थहेतुः पूर्वमुक्तः प्राकरणिकहेतुरत्रोच्यते–अस्य सूत्रस्य 'न जायते म्रियते' इत्यादिवाक्यं विषयतया परैरुपात्तं, तदयुक्तम्। पित्रादिमरणस्येव परमात्मनो हन्यमानत्वस्य लोकप्रसिद्ध्यभावेन तन्निषेधायोगात्, एतत्सरूपेण 'न जायते म्रियते वा कदाचित्' इति भगवद्गीतावचनेनास्य वाक्यस्य जीवपरत्वावगमात्, 'उभौ तौ न विजानीतो नायं हन्ति न हन्यते।' इत्यनन्तरमन्त्रोक्तहन्तृहन्यताभ्रान्तेः परमात्माश्रयत्वायोगेन जीवपरत्वोपपत्तेश्च अतो 'नायमात्मा' 'महान्तं विभुम्' इत्यादिरेव विषयः–एकप्रकरणत्वं कथमित्यत्राह–क इत्थेति। तत्प्रसादादृते तस्य दुरवबोधत्वस्य पूर्वोक्तस्य प्रत्यभिज्ञानादित्यर्थः ॥

कैश्चिदेवमुक्तम्–'अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्' इति परमात्मनः शरीरेऽवस्थितिश्रवणात् 'यस्य ब्रह्म च क्षत्रं च' इत्यनेन श्लोकेन शरीरे हृदयप्रदेशे वा परस्य स्थितिरिति जिज्ञास्यते, अत एवाह 'क इत्था वेद यत्र सः' इति वचनं न पुनः कस्तं वेदेति तदनेन निरस्तं वेदितव्यं, प्रश्नानुगुणप्रतिवचनादर्शनात्। नन्वनन्तरमेव दृश्यते 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ' इतीति चेत्–सत्यं श्रूयते तत्र स्थानत्वेन किमुक्तम्। किं सुकृतस्य लोकः, उत गुहा, तत्र सुकृतस्य लोकः इति शरीरं वा अन्यद्वा उभयमपि शरीरसम्बन्धिदेशविशेषो न भवतीति तत्प्रोत्तरं भवितुमर्हति। न च स्थानमात्रमेव पृष्टं 'अशरीरं शरीरेषु' इत्यनेनैव तत्सिद्धेः; अथ गुहा स्थानत्वेन निर्दिष्टा साऽपि पूर्वमेव ज्ञातेति न प्रश्नसम्भवः 'गुहाहितं गह्वरेष्ठं पुराणम्' इतीह श्रुतं 'यत्र सः' इत्येकवचनेन पृष्टे 'पिबन्तौ' इति द्विवचनोत्तरं चानुचितम्, अतः 'क इत्था वेद' इति वाक्यस्य यथोक्त एवार्थः ॥

उत्तरसूत्रस्य शङ्कामाह—अथ स्यादिति। प्रकरणविच्छेदं दर्शयति। ऋतं पिबन्ताविति। लिङ्गाद्धि प्रकरणं दुर्बलम् ऋतपानलिङ्गबलात् प्रकरणविच्छेदोऽत्र प्रतिपाद्यते, 'यस्य ब्रह्म' इत्यादि वाक्यापेक्षया 'महान्तं विभुम्' इत्यादि परमात्मप्रकरणविच्छेदो माभूत् ऋतपानान्वयवाक्यतु विच्छिन्नं स्यादिति शङ्कापरिहारार्थमनन्तरमपि उक्तम् 'ब्रह्मान्नम्' इत्यादिवाक्यानां व्यवहितत्वाद्विच्छेदो युक्तः न तु 'यस्य ब्रह्म च' इत्यादिवाक्येनाव्यवहितस्य 'ऋतं पिबन्तौ' इति वाक्यस्येति भावः, द्वयोस्समप्राधान्यशङ्कापरिहारार्थं न द्वितीयस्ये युक्तम् अत्र भोक्तृजीवत्व कथम् द्वितीयस्य च बुद्धिप्राणयोरन्यतरत्वं कथं कथं न परमात्मत्वमित्यत्राह—ऋतपानं हीति। कर्मफलभोग एवेति। नहि सर्वं हृत्तुं वृच्यत इति ऋतपानस्य निर्वाहान्तरं सुवचमिति भावः। ततः किमित्यत्राह—स चेति। भवदभिमतस्य कथं तत्सम्भवद्-

श्रीभाष्यम्

बुद्धिप्राणयोस्तु भोक्तुर्जीवस्योपकरणभूतयोर्यथा कथञ्चित्पानेऽन्वयस्सम्भवतीति तयोरन्यतरेण सद्वितीयो जीव एव प्रतिपाद्यते, तदेकप्रकरणत्वात्पूर्वप्रस्तुतोऽत्राऽपि स एव भवितुमर्हति इति। तत्रोच्यते—

## सू—११ गुहां प्रविष्टावात्मानौहि तद्दर्शनात् [१.२.११]

न प्राणजीवौ बुद्धिजीवौ वा गुहां प्रविष्टावृतं पिबन्तावित्युच्येते ; अपि तु जीवपरमात्मानौ हि तथा व्यपदिश्येते। कुतः ? तद्दर्शनात्। अस्मिन्प्रकरणे जीवपरयोरेव गुहाप्रवेशव्यपदेशो दृश्यते। परमात्मनस्तावत् ' तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' (कठ.१.२.१२)इति। जीवस्यापि

श्रुतप्रकाशिका

त्वत्राह–बुद्धीति। यथाकथंचिदुपकरणत्वेनान्वय इत्यर्थः, करणे कर्तृत्वोपचारात् पिबन्तावित्युक्तमिति भावः। तयोरन्यतरेण सद्वितीयो जीवएवेति। अयमभिप्रायः यद्यपि प्रयोजककर्तरि परमात्मनि उपकरणभूतबुद्धिप्राणयोरन्यतरस्मिन्वा पिबन्ताविति निर्देशस्य क्लिष्टत्वं समानम्, तथाऽपि बुद्धिप्राणयोरन्यतरपरिग्रहो न्याय्यः प्रथममेव पिबन्ताविति निर्देशेन भोक्ता जीवः प्रतिपन्न इत्यविगीत,'द्वितीयविशेषेहि विप्रतिपत्तिः तत्र गुहावच्छिन्नत्व मुक्त्वा सामर्थ्ये कदाचित् क्व सर्वगतस्य परस्य स्वरसतो न सम्भवति। अप्रकाशप्रकाशरूपार्थपरच्छायातपशब्दाभ्यामाचिदन्तःकरणचेतोपस्थापन युक्तं तत्र प्रथमतएवानेकैः पदैः स्वरसतः प्रतिपन्नस्य भोक्तुः प्राधान्येन प्रतिपाद्यत्व यथा न विरुद्धयते तथा द्वितीयो वक्तव्यः द्वितीयस्य परमात्मत्वे भोक्तुः प्राधान्येन प्रतिपाद्यत्व विध्यत, उपकरणभूतान्तःकरणस्य द्वितीयत्वे भोक्तुः प्राधान्येन प्रतिपाद्यत्व न विरुध्यत इति। ततः किमत्तुर्जीवमात्रस्येत्यत्राह—तदेकेति ॥

## सू=११ गुहां प्रविष्टावात्मानौहि तद्दर्शनात् [१.२.११)

ऋतं पिबन्ताविति निर्देशद्वयेऽपि गुहां प्रविष्टाविति सूत्रयतोऽयभावः, द्वितीयस्य ऋतपाने पक्षद्वयेऽपि क्लिष्ट बुद्धिप्राणयोरन्यतरपक्षएव छायातपनिर्देशो लोकशब्दनिर्देशश्च घटना, गुहाप्रवेशस्तु न कथञ्चिदपि घटते ' आत्मा गुहायां निहित ' ' यो वेद निहितं गुहायाम् ' ' गुहाहितंगह्वरेष्ठम् ' ' विधूयकविरेतदनुतिष्ठेत् गुहाशयम् ' ' पूर्प्राणिनः सर्वगुहाशयस्य ' इति परमात्मनो गुहाप्रवेशव्यपदेशप्रसिद्धिप्राचुर्यात् बुद्धिप्राणयोरन्यतरस्य तादृश प्रसिद्ध्यभावाच्चेति, एतमिमाभिप्राय हृदि निधाय सूत्रे प्रतिज्ञाखण्ड व्याचष्टे नप्राणजीवाविति। जीवपरमात्मानौहीति सूत्रे हिशब्दः सौत्रार्थस्य परमसाध्योपपादकत्वसूचक इतिभावः। सूत्रे प्रतिज्ञोपपादक हेतुखण्ड व्याचष्टे अस्मिन्निति। परमात्मनस्तावदिति। गुहाप्रवेशव्यपदेशो दृश्यत इत्यन्वयः तं दुर्दर्शमिति। दुर्दर्श, द्रष्टुमशक्य कुत.! गूढम तिरोधायककर्मरूपाविद्यादिना तिरोहितत्वादित्यर्थः गुहाहितं हृदयवर्तिन गह्वरेष्ठ आत्माऽन्तर्यामिण, परमव्योमनिलय वा, अध्यात्मयोगाधिगमेनेति परोपासनस्य जीवोपासनमङ्गत्वेन विधीयते जीवपरयोरुभयोरपि प्रकरणप्रतिपाद्यमानत्वात् जीवस्यापीति। गुहाप्रवेशव्यपदेशो दृश्यत इत्यन्वयः, अदितिशब्दस्य देवमातरि भूमौ च वेदप्रसिद्धेस्तद्व्यावृत्त्यर्थमेव.

### श्रीभाष्यम्

'याप्राणेन सम्भवत्यदितिर्देवतामयी । गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत ॥' (कठ. २.४.७) इति कर्मफलान्यत्तीत्यदितिर्जीव उच्यते । प्राणेन सम्भवति प्राणेन सह वर्तते। देवतामयी-इन्द्रियाधीनभोगा । गुहां प्रविश्य तिष्ठन्ती-हृदयपुण्डरीकोदरवर्तिनी भूतेभिर्व्यजायत-पृथिव्यादिभिर्भूतैस्सहिता देवादिरूपेण विविधा जायते । एवं च सति 'ऋतंपिबन्तौ' (कठ१.३.१) इति व्यपदेशः 'छत्रिणो गच्छन्ति' इतिवत्प्रतिपत्तव्य । यद्वा प्रयोज्य प्रयोजकरूपेण पाने कर्तृत्वं जीवपरयोरुपपद्यते ॥

## सू—१२ विशेषणाच्च [१.२.१२]

### श्रुतप्रकाशिका

यवशत्तया जीववाचित्व दर्शयति कर्मफलानीति । रूढार्थस्य गुहाप्रवेशासम्भवाद्योगपरिग्रह इतिभावः, कर्मपदशब्देन ऋतशब्दार्थोऽपि दर्शितो भवति, छत्रिणो गच्छन्तीति न्यायेन निर्वाहे लाक्षणिकत्वं स्यादिति मुख्यकल्पानिर्वाहमाह—यद्वेति । मुख्यत्वेऽप्यस्वारस्यमात्रमस्ति लाक्षणिकत्वादपि तद्वरं बुद्धिप्राणयोरन्यतरपरत्वमतीवास्वरसं करणत्वेनहि तयोरन्वयः, परमात्मनस्तु 'तत्प्रयोजको हेतु' इत्युक्तप्रक्रियया प्रयोजककर्तृतायाः कर्तृत्वविशेष वास्त्वाद्वापि वे पिबन्ताविति निर्देशः स्वरस भावः । पिबन्ताविति निर्देशस्वारस्यमुभयोश्चेतनत्व एव घटते उभौ गुह प्रविष्टौ इति निर्देशोहि न दण्डसाद्वितीयपुरुषविषयः अपितु पुरुषद्वयविषयः, 'ब्रह्मविदो वदन्ति' इत्युक्तत्वाच्च जीवसाद्वितीयपरमात्मपरत्व युक्त एव निर्वाहद्वयेनापि प्रकरणविच्छेदकलिङ्गत्वेन पराभिमतस्य ऋापानान्वयस्य न्यथासिद्धिरुक्ता भवति, तत्पभावे यदमुख्यं तत्र द्वयोःप्रतिपन्नयोः प्रकरणानुगुणस्य ग्राह्यत्व सजातीययोरेव द्विवचननिर्देशार्ह वचेति न्यायद्वयमत्र शिक्षितम् ॥

## सू—१२ विशेषणाच्च [१-२.१२]

### गूढार्थसंग्रहः

#### अथ अत्त्रधिकरणम्

'अत्ता चराचरग्रहणात्' पूर्वाधिकरणे भोक्तृशब्दाभावेऽपि तद्ज्ञापकशब्दसद्भावेन जीवत्वाशङ्काया हेत्वन्तरेण जीवो व्यावर्तितः । अत्रतु स्फुट भोक्तृत्व प्रतिपाद्यते । 'यस्य ब्रह्म च क्षत्र च उभे भवत ओदनः' इति । अतो जीव एवात्र भोक्ता न परमात्मा इति शङ्कायामिदमधिकरण प्रवृत्तम् ॥

अत्र 'या प्राणेन सम्भवत्यदितिर्देवतामयी' इति वक्ष्यति । सर्वत्र प्रसिद्धोपदेशात्' इतिसूत्रे 'तज्जलान्' इत्यत्र सृष्टिलयौ प्रतिपादितौ । 'इद सर्वमसृजत' इति 'स यद्यदेवासृजत तत्तदत्तुमध्रियत' इति च सृष्टिलययोः उक्तिपूर्वक बृहदारण्यके 'सर्व वा अत्तीति तददितेरदितित्वम्' (बृ.३.२.५) इति निरुक्तया भक्षको जीव एव तत्रापि विवक्षितः । इत्यत्रादितिशब्दस्य योगार्थस्यास्फुटतया 'यस्य ब्रह्म च क्षत्र च' इति विषयवाक्ये ओदनोपसेचनशब्दाभ्यामत्तृत्व स्फुट प्रतीयते । योगार्थस्तु पूर्वपक्षे विवक्षित एव । तत्र योगार्थ एव विवक्षित इत्यत्र नियामकन्तु इदमेव 'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदन' इति पूर्वपक्षिण आशय. । तद्वाक्यस्य विषयवाक्यतयाऽनुपन्यासस्तु सिद्धान्ते अत्तुमाध्रियत इति धारणस्यैव प्राधान्य नतु अत्तृत्वस्य इति सूत्रे अत्तृत्वमेव प्राधान्येन निर्दि-

## गूढार्थसंग्रहः

एमिति तात्पर्येण ' यस्य ब्रह्म च ' इति वाक्यस्य विषयवाक्यतया भाष्ये उपादानम् ' या प्राणेन सम्भवति–या भूतेभिः व्यजायत ' इति मन्त्रे ' व्यजायत ' इत्यस्य स्वरसात् जीव एव विवक्षितः । बृहदारण्यके तु ' अत्तुमध्रियत, यद्यदे वासृजत ' इति सामान्यतउक्तया सर्वसंहारार्थधारणस्य विवक्षितत्वेन तस्य परमात्मनि संभवः जीवत्वसम्भवः । सूत्रे चरा चरशब्दश्रवणेन पदार्थद्वयघटितवाक्यस्यैव विषयत्व सूत्रकारसम्मतमिति स्पष्टमवगम्यते । ब्रह्मक्षत्रशब्दाभ्यां चराचरावुप लक्ष्येते । मृत्योस्संहर्तृत्वेन व्यवहारात् स नात्र विवक्षित इति तात्पर्येण ' मृत्युर्यस्योपसेचनम् ' इत्युक्तम् । भक्षणद शाया उपकारकस्योपसेचनत्वेन व्यपदेशः मृत्योरपि संहारोपकारकत्वेन ' मृत्युर्यस्योपसेचनम् ' इति व्यपदेशः । चराचर- शब्दयोः गमनयोग्यो जीवः तदितराचेतनश्चार्थः ' चरगतिभक्षणयोः ' इति धातोः गत्यर्थकत्वेनेदम् । भक्षणार्थत्वे भक्षणयोग्यत्वमचितः जीवस्य भक्षणयोग्यत्व नास्ति । अतएव 'न जायते म्रियतेवा' इत्युक्तरीत्याविरुध्यते । नित्यानां जीवानामत्तृत्व परस्य कथं संभवतीतिचेत् ' ब्रह्मजश देवमीड्यम् ' इति जीवेशशब्दप्रयोगेण ज्ञानहारकं भक्षणं नतु स्वरूपहारकम् । ज्ञानसङ्कोचेनैव जीवस्य संहारकर्मत्वेत्यर्थः प्रतीयते सिद्धान्तेऽविरुद्धः कृत्स्नस्य ब्रह्मक्षत्रपूर्वकस्य चरा- चरस्य जगतः इति भाष्यात् ॥

' प्रकरणाच्च ' प्रकरणविच्छेदशङ्कानिरासार्थमिदं सूत्रमित्युत्तरसूत्रावतरणे स्पष्टम् ' ऋतं पिबन्तौ ' इत्यत्र कर्मफल भोक्तृत्वोक्तया पूर्वत्रापि कर्मफलभोक्तैव विवक्षित इति पूर्वपक्षिण आशयः । एतत्पूर्वं ' नजायते ' इत्यनन्तरं ' अणोरणी- यान्' इतिमन्त्रे 'वीतशोकः धातुःप्रसादान्महिमानमात्मनः,' 'महान्तं विभुमात्मानं मत्वा धीरो नशोचति' इति परमात्मप्रकरण मेवेति ' यस्य ब्रह्म च क्षत्र ' इत्यत्र प्रकरणविच्छेदशङ्का नास्ति । ' ऋतं पिबन्तौ ' इत्यत्रापि प्रकरणविच्छेदो नास्तीत्यु- त्तरसूत्रे स्फुटीभविष्यति ॥

' गुहां प्रविष्टावात्मानौहि तद्दर्शनात् ' ' ऋतं पिबन्तौ सुकृतस्य लोके ' इत्युक्तया सुकृतफलभोक्तृत्वमेव प्रती यते । अन्यतरस्य भोक्तृत्व सिद्धान्तेऽपि यथाकथंचनविधया उपपादनीयम् । अतो बुद्धेः प्राणस्य वा विवक्षा स्यादिति शङ्का ' गुहां प्रविष्टौ—तद्दर्शनात् ' इति सूत्रे उक्तया बुद्धिप्राणयोः गुहाप्रवेशो नास्तीत्यर्थः । ' तं दुर्दर्शं—गुहा हितम् ' ' अणोरणीयान्–गुहायां निहितः ' इत्यत्र परस्य गुहाप्रवेश उक्तः । ' यइदं मध्वदं वेद आत्मानं जीवमन्ति- कात् ' इत्यत्र कर्मफलभोक्तारं जीवं निर्दिश्य ' यःपूर्वं तपसो जात–गुहां प्रविश्य तिष्ठन्तम् ' इत्यत्र ' या प्राणेन सम- भवत्यदितिर्देवता मयी । गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत ' इत्यत्र च जीवसामान्यस्य गुहाप्रवेशोऽभिहितः । ' व्यजायत ' इत्यत्र भूतैःप्राणिभिस्सह व्यजायत, प्राणिनश्च देहयोगेन नानाविधानुत्पादयामास, इति अदितिशब्दार्थः परमात्मा इत्यर्थः (रा.टी) श्रुतिपीडनमेव । ' य इदं मध्वदं वेद आत्मानं जीवम् ' इति पूर्वश्रुतिविरोधात् जीवपरयोः गुहाप्रवेशाभिधानेन परमात्मप्रकरणविच्छेदाभावात् परमात्मैव षट्वल्ल्यां प्राधान्येन विवक्षितइति नानुपपत्तिः अत्र ' द्वासुपर्णा ' इति श्रुतौ गुहात्वेन गुहाप्रवेशो न श्रुत इति भाष्ये तत्त्यागः । उपनिषद्भाष्ये ' इयदामननात् ' इति सूत्रे च परैः जीवपरमात्मविषयत्वेनैव एतच्छ्रुतिद्वय विवृतम् । एवमेतदधिकरणेऽपि ' ऋतं पिबन्तौ ' इति मन्त्रः व्या- ख्यातः प्रथमम् । अनन्तर ' अपरआह ' इत्यनेन ' द्वासुपर्णा ' इति मन्त्रस्यान्यथाव्याख्याकरणेऽपि मन्त्रस्थलत्रये जीव परमात्मपरतयैव एतत्सूत्रव्याख्यानेन सा श्रुतिः जीवपरमात्मपरैव । अतएव(श्री)भाष्यव्याख्यानेषु सर्वेषु 'अपर आह' इत्यु- क्तिः ' कृत्वा चिन्तया ' इत्येवोक्तम् । पूर्वाधिकरणे ' सर्वत्र प्रसिद्धोपदेशात् ' इति ' तज्जलान् ' इति विशेषेण श्रुतम् जनिलयोभयनिबन्धनएवाभेदव्यपदेशः सचोपादानोपादेयभावनिबन्धन इत्यर्थः ...

## श्रीभाष्यम्

अस्मिन् प्रकरणे जीवपरमात्मानावेवोपास्यत्वोपासकत्वप्राप्यत्वप्राप्तृत्वविशिष्टौ सर्वत्र प्रतिपाद्येते। तथा हि–' ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति ' (कठ. १.१.१७) इति। ब्रह्मजज्ञो जीवः, ब्रह्मणो जातत्वात् ज्ञत्वाच्च। तं देवमीड्यं विदित्वा जीवात्मानमुपासकं ब्रह्मात्मकत्वेनावगम्येत्यर्थः। तथा ' यस्सेतुरीजानानामक्षरं ब्रह्म यत्परम्। अभयं तितीर्षतां पारं नाचिकेतं शकेमहि ' (कठ.१.२.२) इत्युपास्यः परमात्मोच्यते। नचि-

## गूढार्थसङ्ग्रह.

' विशेषणाच्च ' इति सूत्रे एष एव न्यायः ' द्वासुपर्णा सयुजा सखाया ' (मु.३.१.१) इत्येवमादिष्वपीति परेरुक्तम्। इयं च श्रुतिः मुण्डकश्वेताश्वतरयोः श्रूयते। ' द्वासुपर्णा ' ' ऋतं पिबन्तौ ' इत्यनयोरेकार्थत्वं उभयोस्सहोपादानेन जिज्ञासाधिकरणे भगवता सूचितम्। अत्र चायं सूत्रकाराशयः भगवतोऽभिप्रेतः। ' अत्ता चराचरग्रहणात् ' इति सूत्रे ' सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत ' इत्यत्रोक्तसृष्टिस्थितिलयेषु लयकारणत्वं संहर्तृत्वरूपं प्रतिपादितम्। तत्र च ' प्रजापतिर्वा एकोऽग्रेऽतिष्ठत् ' (मै.उ.२.६) इति श्रुतिरपि विवक्षिता। तेन संहर्तुः लयकालेऽभिप्रायः श्रुतिप्रतिपादितः सूत्रकृतो विवक्षितः। यथोक्तं तत्रैवोपनिषदि ' स नारमतैकः—ता अस्मेवाप्रबुद्धाः अप्राणाः स्थाणुरिव तिष्ठमानाः अपश्यत् सनारमत सोऽमन्यतैतासां प्रतिबोधनायाभ्यन्तरं विविशामि ' (मै.उ.२.६) इत्येवमभिप्रायेण निष्पन्नमेवार्थं 'गुहां प्रविष्टौ' इतिसूत्रे सूचयति सूत्रकारः 'द्वासुपर्णा' इत्यादिऋक्सहिताश्रुतिप्रकरणे राजकुमारनयस्सूचितइति प्रागेव (७६४.पु) निरूपितम्। तेन कुमारे दयया ज्ञानसम्पादनार्थं शरीरे स्थितिरिति सिद्ध्यति ॥

' विवक्षितगुणोपपत्तेश्च ' इतिसूत्रे दयादीनामपि विवक्षा पूर्वमुक्ता। अत्र अत्तृत्वमुपक्रम्य गुहाप्रवेशाभिधानपूर्वकं ' विशेषणाच्च ' इतिसूत्रे प्राप्यप्रापकभावस्यापि भाष्ये स्फुटमभिधानेन ज्ञानसङ्कोचः प्रळयकाले ज्ञानविकासश्च सृष्टावित्यर्थस्य ' ब्रह्मजज्ञम् ' इति श्रुतौ सूचनेन ज्ञानविकासनिबन्धनदयागुणोपयोगविशदीकरणेन ' सोऽध्वनःपारमाप्नोति ' इत्यत्र प्राप्ते, ' शतचैका च ' इति मन्त्रे अर्चिरादेश्च प्रतिपादनेन गतिद्वारा प्राप्तेरेव विवक्षिततया तावत्पर्यन्तं दयाया उपयोगोऽपि सूचितः। एवमभिप्रेत्यैव सूत्रकृता ' हार्दानुगृहीतः ' इति वक्ष्यते। एतेन जीवपरयोर्भेदः श्रुतिसिद्धः अप्रकम्प्य इति ' गुहां प्रविष्टौ ' इति सूत्रे सूचयति। ' ऋतं पिबन्तौ ' इति श्रुतौ ' छायातपौ ' इत्यनेनाज्ञत्वसर्वज्ञत्वाभ्यां जीवपरयोः व्यपदेशः। छायाशब्दः धर्मभूतज्ञानस्यात्यन्तसङ्कोचतात्पर्यकः ' अस्मेवाप्रबुद्धा ' इति श्रुतौ ' प्र ' शब्देन धर्मभूतज्ञाननाशः नास्तीति सूच्यते। सङ्कोचे कर्मैव निमित्तमिति सूचितम्। ' पिबन्तौ ' इति निर्देशः प्रयोज्यप्रयोजकभावेनेति भगवतैवोक्तम्। 'विशेषणाच्च ' इति सूत्रे 'विज्ञानसारथिर्यस्तु' इति श्रुतौ प्राप्यत्वप्राप्तृत्वाभ्यां परमात्मजीवयोर्विशेषितत्वं सूत्रकृदभिप्रेतमिति भगवतैव स्पष्टीक्रियते। 'अङ्गुष्ठमात्रःपुरुषोऽन्तरात्मा ' 'पुरुषान्नपरं किञ्चित्' ' अव्यक्तात्तु परःपुरुषः ' इत्यादौ पुरुषशब्दे ' सयत्पूर्वोऽस्मात् सर्वस्मात्सर्वान्पाप्मन औषत् ' इत्यत्र लयकारणत्वकर्मक्षयहेतुत्वया. पुरुषशब्दार्थत्वं यदुक्तं ' तत्त्वौपनिषदं पुरुषं—विज्ञानमानन्दं ब्रह्म रातिर्दातुःपरायणम् ' इत्यत्र मुक्तिफलदातृत्वमपि पुरुषशब्दार्थत्वेन यच्चाभिप्रेतं तत्सर्वमत्रापि विवक्षितम्। ' स वा अयं सर्वासु पूर्षु ' इत्यादौ सर्वान्तर्यामित्वं पुरुषशब्दे विवक्षितमेव इति ' ऋतं पिबन्तौ ' इति मन्त्रे स्पष्टीकृतम्। अस्य सर्वस्य पर्यालोचनया प्रलयकाले दयामूलको योऽयमभिप्रायः ब्रह्मणः स. मुक्तिकाले पूर्णधीविकासदानेन सपूर्णः अभवत् इति श्रुतितात्पर्याभिज्ञानां निर्मत्सराणां स्फुटम् ॥

इति अत्त्रधिकरणम्

श्रीभाष्यम्

केतम्–नाचिकेतस्य कर्मणः प्राप्यमित्यर्थः। 'आत्मानं रथिनं विद्धि शरीरं रथमेव च।' (१.३.३) इत्यादिनोपासको जीव उच्यते। तथा 'विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' (कठ.१.३.९) इति प्राप्यप्राप्तारावभिधीयते जीवपरमात्मानौ। इहापि 'छायाऽऽतपौ' (१.३.१) इत्यज्ञत्वसर्वज्ञत्वाभ्यां तावेव विशिष्य व्यपदिश्येते॥

अथ स्यात् 'येऽयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके' (कठ.१.१.२०) इति जीवस्वरूपयाथात्म्यप्रश्नोपक्रमत्वात्सर्वमिदं प्रकरणं जीवपरमिति प्रतीयते इति। नैतदेवम्, नहि जीवस्य देहातिरिक्तस्यास्तित्वनास्तित्वशङ्कयाऽयं प्रश्नः, तथासति पूर्ववरद्वयवरणानुपपत्तेः। तथा हि पितुस्सर्ववेदसदक्षिणक्रतुसमाप्तिवेलायां दीयमानदक्षिणावैगुण्येन क्रतुवैगुण्यं मन्यमानेन कुमारेण नचिकेतसा आस्तिकाग्रेसरेण स्वात्मदानेनापि पितुः क्रतुसाद्गुण्यमिच्छता 'कस्मै मां दास्यसि' (कठ.१.१.४) इत्यसकृत्पितरं पृच्छता स्वनिर्बन्धरुष्टपितृवचनान्मृत्युसदनं प्रविष्टेन स्वसदनात्प्रोषुषि यमे तददर्शनात्तत्र तिस्रो रात्रीरुपोषुषा स्वोपवासभीततत्प्रतिविधानप्रवृत्तमृत्युप्रदत्ते वरत्रये आस्तिक्यातिरेकात्प्रथमेन वरेण स्वात्मानंप्रति पितुः प्रसादो वृतः; एतच्च सर्वं देहातिरिक्तमात्मानमजानतो नोपपद्यते। द्वितीयेन च वरेणोत्क्रान्तदेहात्माऽनुभाव्यफलसाधनभूताग्निविद्या वृता, तदपि देहात्मानभिज्ञस्य न संभवति। अतस्तृतीयेन वरेण यदिदं व्रियते 'येऽयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके। एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः' (कठ.१.१.२०) इति; अत्र परमपुरुषार्थरूपब्रह्मप्राप्तिलक्षणमोक्षयाथात्म्यविज्ञानाय तदुपायभूतपर-

श्रुतप्रकाशिका

तत्तद्वाक्योदितविशेषणान्तराणि च प्राप्यत्वप्राप्तृत्वोपास्यत्वोपासकत्वान्तर्भूतानीत्यभिप्रायेणोपास्यत्वोपासकत्वप्राप्यत्वप्राप्तृत्वविशिष्टानीत्युक्तम्। 'ब्रह्मज्ज्ञम्' इत्युपासकं वदति 'शकेमहि उपासितुं प्राप्तुम्' इति शेषः। आत्मानं रथिनमित्यादि। शरीराद्युपासनपरिकरसहितो जीव उच्यत इत्यर्थः। इहापि 'ऋतं पिबन्तौ' इति वाक्येऽपि अज्ञत्वसर्वज्ञत्वाभ्यामित्यनेन 'ज्ञाज्ञौ द्वौ' इति वाक्यं स्मारितम्। उदाहृतवाक्यैकार्थ्याच्छायातपशब्दयोरयमेवार्थः. 'विशेषणाच्च' इतिसूत्रे छायातपत्वरूपविशेषणमपि विवक्षितमिति भावः। उत्तरत्र 'त्रयाणामेव चैवम्' इत्यादिसूत्रेण वक्ष्यमाणेऽपि चोद्यस्य बुद्धिस्थत्वात् सुग्रहत्वाय तत्पूर्वकं परिहारमाह—अथ स्यादिति॥

अस्मिन्प्रकरणे जीवपरमात्मनोर्विशेष्यत्वमयुक्तम्, उपक्रमस्य जीवपरत्वादित्याह—येऽयमिति। परिहरति नैतदिति। वरद्वय किं? तद्वरणानुपपत्तिः कथमित्यत्राह–तथाहीति। पितृप्रसादवरणस्याग्निविद्यावरणस्य च प्रत्येकनिरपेक्षहेतुसूचनार्थं एतच्च सर्वम्। तदपीति द्विरुक्तम्। अत्रपरमेति। अत्र यदिदं व्रियते, यद्वरणं क्रियते तत्र वरणमित्यर्थः। मोक्षयाथात्म्यविज्ञानाय तदुपायभूतपरमात्मोपासनपरावरात्मतत्त्वजिज्ञासयेति। मोक्षज्ञानाय मोक्षानुबन्धिजिज्ञासयाऽयं प्रश्न इत्यर्थः 'येऽयम्' इत्यादिप्रश्नवाक्ये मोक्षस्वरूपप्रश्नः कण्ठोक्तः, प्रतिवचनप्रकारेणोपासनादिप्रश्नश्चार्थसिद्ध इत्यवगम्यते, एवं विभागज्ञानार्थं विज्ञाय जिज्ञासयेति पृथगुक्तिः. मोक्षप्राप्तिप्रश्ने प्राप्यप्रापकप्राप्तृप्रश्नोऽन्तर्गत इति भावो दर्शितो भवति निर्विघ्नपतापत्तिर्मोक्षश्चेद्वाक्यार्थज्ञानस्योपायता स्यात्, उभयलिङ्गकं प्राप्यं चेत्तथा वेनोपासनमुपाय

श्रीभाष्यम्

मात्मोपासनपरावरात्मतत्त्वजिज्ञासयाऽयं प्रश्नः क्रियते। एवं च 'येऽयं प्रेते' (१.१.२०)इति न शरीरवियोगमात्राभिप्रायम्; अपितु सर्वबन्धविनिर्मोक्षाभिप्रायम्। यथा 'न प्रेत्य संज्ञाऽस्ति' (बृ.४.४.१२) इति। अयमर्थः मोक्षाधिकृते मनुष्ये प्रेते सर्वबन्धविनिर्मुक्ते तत्स्वरूप विषया वादिविप्रतिपत्तिनिमित्ताऽस्तिनास्त्यात्मिका येऽयं विचिकित्सा तदपनोदनाय तत्स्वरूपयाथात्म्यं त्वयाऽनुशिष्टोऽहं विद्यां-जानीयाम्-इति। तथा हि बहुधा विप्रतिपद्यन्ते केचिद्वित्तिमात्रस्याऽऽत्मनस्स्वरूपोच्छित्तिलक्षणं मोक्षमाचक्षते। अन्ये वित्तिमात्रस्यैव सतोऽविद्यास्तमयम्। अपरे पाषाणकल्पस्याऽऽत्मनो ज्ञानाद्यशेषवैशेषिकगुणोच्छेदलक्षणं कैवल्य रूपम्। अपरे तु अपहतपाप्मानं परमात्मानमभ्युपगच्छन्तस्तस्यैवोपाधिसंसर्गनिमित्तजीव भावस्योपाध्यपगमेन तद्भावलक्षणं मोक्षमातिष्ठन्ते। त्रय्यन्तनिष्णातास्तु निखिलजगदेककारणस्याशेषहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपस्य स्वाभाविकानवधिकातिशयासङ्ख्येय कल्याणगुणाकरस्य सकलेतरविलक्षणस्य सर्वात्मभूतस्य परस्य ब्रह्मणश्शरीरतया प्रकार भूतस्यानुकूलापरिच्छिन्नज्ञानस्वरूपस्य परमात्मानुभवैकरसस्य जीवस्यानादिकर्मरूपाविद्यातिरोहितस्वरूपस्याविच्छेदपूर्वकस्वाभाविकपरमात्माऽनुभवमेव मोक्षमाचक्षते तत्र मोक्षस्वरूपं तत्साधनं च त्वत्प्रसादाद्विद्यामिति नचिकेतसा पृष्टो मृत्युस्तस्यार्थस्य दुरवबोधत्वप्रदर्शनेन विविधभोगवितरणप्रलोभनेन चैनं परीक्ष्य योग्यतामभिज्ञाय परावरात्मतत्त्वविज्ञानं परमात्मोपासनं तत्पदप्राप्तिलक्षणं मोक्षंच 'तंदुर्दर्शं गूढमनुप्रविष्टम्' (कठ.१.२.१२)इत्यारभ्य 'सोऽध्वनःपारमाप्नोति तद्विष्णोः परमं पदम्' (कठ.१.३.९) इत्यन्तेनोपदिश्य तदपेक्षितांश्च विशेषानुपपादिदेशेति सर्वं समञ्जसम्। अतः परमात्मैवात्तेति सिद्धम्॥

इति अत्त्रधिकरणं समाप्तम्

श्रुतप्रकाशिका

स्यात्, अतो मोक्षस्वरूपज्ञानं तदनुबन्धिज्ञानापेक्षम्। एवं प्रश्नस्य ज्ञातेतरविषयत्वात् प्रतिवचनानुरूप्याच्च यथोक्त-एवार्थः। प्रेतपदस्योक्तार्थपरत्वे श्रुत्यन्तरसंवादं दर्शयति यथेति। 'न प्रेत्य संज्ञाऽस्ति' इति श्रुतिः। कः पुनर्वाक्यार्थः, नहि मनुष्यमात्रस्य बन्धविनिर्मोक्षसम्भव इत्यत आह—*अयमर्थ इति। अस्तिनास्त्यात्मिका अस्ति नास्तीत्येवमादिरूपा,* विद्यामिति पदस्य द्वितीयान्तत्वात्कर्मपदत्वशङ्कां निवर्तयन्व्याचष्टे जानीयामिति। विप्रतिपत्तिं दर्शयति तथा हीति। कारणशोधकगुणप्रतिपादकवाक्यार्थविशिष्टमाह—निखिलजगदेककारणस्येत्यादि।
अनुकूलापरिच्छिन्नज्ञानस्वरूपस्येति। स्वरूपशब्दो धर्मधर्मिणोस्साधारणः तत्रेत्यादि। परावरात्मतत्त्वविज्ञानं, ज्ञात व्यपरावरात्मतत्त्वम् उपदिश्येत्यन्वयः तदपेक्षितांश्च विशेषान् प्रणवामिति वेत्यादीन्। अधिकरणार्थमुपसंहरति अत इति। 'अत्ता' इति सूत्रे स्ववाक्यस्य हेतुरुक्तः। प्राकरणिकपूर्ववाक्यस्य हेतुपरं द्वितीयम्। अनन्तरवाक्यशङ्कापरिहारपरं तृतीयम्, अतस्तत्र चशब्दाप्रयोगः। उपरितनवाक्यस्य हेतुभिस्तृतीयसूत्रार्थोपपादकं चतुर्थमिति सूत्रसङ्गतिः॥

'गुहां प्रविष्टौ' इत्यादिसूत्रद्वयमधिकरणान्तरं केचिदाहुः तदयुक्तम्। एकप्रकरणस्थवाक्यविशेषविषयाणामधिककरणान्तरपादान्तराणामपि संगतानामुपजीव्योपजीवकभावेन परस्परान्वितार्थप्रतिपादकानां सूत्राणां विषयवाक्यभेदे सत्यपि भि

## श्रुतप्रकाशिका

माधिकरणत्वाभावात् । ईक्षत्यानन्दमयाधिकरणादिषु ' तन्निष्ठस्य मोक्षोपदेशात् ' ' प्रतिज्ञाविरोधात् ' ' तद्धेतुव्यपदेशाच्च ' ' मान्त्रवर्णिकमेव च गीयते ' इत्यादीनां सूत्राणां पूर्वापरबहुवाक्यविषयत्वेऽप्यव्यवहितत्वात् परस्परोपजीव्योपजीवकभावेनाभिन्नार्थपरतयाऽपि ह्येकाधिकरण्यम् । ' अदृश्यत्वादिगुणकः ' ' द्युभ्वाद्यायतनम् ' इत्यधिकरणयोस्तु एकप्रकरणस्थानेकवाक्यविषयत्वेऽपि भेद उपपद्यते, स्पष्टास्पष्टलिङ्गकवाक्यविषयत्वेनैकस्मिन्नेकदेशेऽस्मिन् व्यवहितत्वे उपजीव्योपजीवकभावाच्च । नहि ' यस्मिन्द्यौः पृथिवी ' इत्यादिवाक्यस्य परमात्मपरत्वम् अदृश्यत्वादिगुणकस्याक्षरात् परतः परस्य च परमात्मपरत्वोपपादकम्, परप्रकरणत्वेऽपि तच्छब्देनापरमात्मप्रधानादिप्रतिपादनोपपत्तेः । अत उपजीव्योपजीवकभावाभावादधिकरणभेदः तत्र युक्तः, इह तु पूर्ववाक्यप्रतिपन्नम् तृतीयं कर्मफलभोक्तृत्वरूपमित्यनन्तरवाक्येन प्रतिपद्येतेति तस्यात्तुः परमात्मत्वानुपपत्तेः अनन्तरवाक्यस्य परमात्मपरत्वोपपादनमत्तुः परमात्मत्वोपयुक्तमेव ॥

एवं एकप्रकरणस्थवाक्यविषयत्वे सत्यधिकरणान्तरपादात्पराव्यवहितत्वे च सति परस्परोपयुक्तार्थप्रतिपादकानां सूत्राणामैकाधिकरण्यमेवोचितम् । अन्यथा ईक्षत्यधिकरणादिष्वप्येकैकाधिकरणस्थसूत्राणामधिकरणभेदकल्पना प्रसज्येत अतएकाधिकरण्ये स्थित एवावान्तरशङ्काविशेषपरिहारपरं सूत्रद्वयं व्याख्यातव्यम् व्याख्यातं च भगवता भाष्यकारेण । सूत्रभङ्गीचैकाधिकरण्य एवोपपद्यते एकस्मिन्सूत्रे हिशब्दपञ्चम्यन्तपदयोरश्रवणात् । गुहां प्रविष्टयोरात्मत्वसाधकं पञ्चम्यन्तपदम् अत्तुः परमात्मत्वोपपादकतां सूत्रार्थस्य दर्शयति हिशब्दः । सर्वगतस्य ब्रह्मणो गुहावच्छिन्नत्वायोगात् गुहागतौ बुद्धिजीवौ न परइति गुहांप्रविष्टाविति सूत्रखण्डः पूर्वपक्ष इति योजनाऽनुपपन्ना, ' विकारशब्दान्नेतिचेत् ' ' जीवमुख्यप्राणलिङ्गान्नेतिचेत् ' ' सम्भोगप्राप्तिरितिचेत् ' इतिवत् पूर्वपक्षानुवादद्योतकाभावात् ' अर्भकौकस्त्वात् ' इति पूर्वाधिकरणसूत्रेण गुहावच्छेदनिबन्धनशङ्कायाः परिहृतत्वाच्च । आत्मानाविति प्रसञ्जाया हिशब्दोपपादितायाः तद्दर्शनात् सूत्रखण्डस्य प्रतिज्ञान्तरमध्याहर्तव्यम् गुहावच्छेदोऽपि परस्योपपन्न इति अनध्याहारेण योजनासम्भवतिचेत् सैववरम् । तस्मात्पञ्चम्यन्तपदोपपादितसौत्रार्थस्य परमसाध्योपपादकद्योतको हिशब्दः । अतश्च औचित्यात् कृतकरत्वात् सूत्रशैल्याच्च युक्तमैकाधिकरण्यं सूत्रचतुष्टयस्य । ' द्वासुपर्णा ' विति वाक्ये अप्रत्यन्यायातिदेशश्चानुपपन्नः ' स्थित्यदनाभ्यां च ' इति सूत्रेण निरूपयिष्यमाणस्य तस्यैतन्न्यायसापेक्षत्वाभावात् । नचास्याधिकरणस्य तद्वाक्यसापेक्षत्वादिह तत्प्रस्तावः, अस्याधिकरणस्यात्यन्यायातिदेशसापेक्षवाक्यान्तरोपपाद्यत्वेऽन्योन्याश्रयप्रसङ्गात् । तस्य च वाक्यस्य बुद्धिजीवपरत्वं भवदभिमतं तदिह न वक्तव्यं प्रकृतानुपयोगात् ' ऋतंपिबन्तौ ' इति वाक्यस्य जीवसद्वितीयपरमात्मविषयत्वे वाक्यान्तरस्य बुद्धिजीवपरत्वं कथमुपपद्यते । तस्य च वाक्यस्य बुद्धिजीवविषयत्वं पूर्वं निरस्तं निरसिष्यते च । अतो भाष्यसन्दर्शिता सरणिरेव साधीयसी ॥

इति अत्त्रधिकरणं समाप्तम्

अथ वेदान्तसारः

## सू–९ अत्ता चराचरग्रहणात् (१.२.९)

' यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥ ' (कठ.१.२.२५) इत्यत्र ओदनोपसेचनसूचितोऽत्ता परमपुरुषः ब्रह्मक्षत्रोपलक्षितस्य चराचरस्य कृत्स्नस्य मृत्यूपसेचनत्वेन अदनीयतया ग्रहणात् ॥

## सू–१० प्रकरणाच्च (१.२.१०)

' महान्तं विभुमात्मानं मत्वा धीरो नशोचति ' ' नायमात्मा प्रवचनेन लभ्यः ' (कठ.१.२.२२) इत्यादिना परस्यैव प्रकृतत्वात् स एवायम् ॥

## सू–११ गुहां प्रविष्टावात्मानौहि तद्दर्शनात् [१.२.११)

अनन्तरम् ' ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये ' (कठ.१.३.१) इत्यादिना जीवपरमात्मानावेव प्रयोज्यप्रयोजकभावेन कर्मफलाशनेऽन्वयादुपदिष्टौ, तयोरेवास्मिन्प्रकरणे गुहाप्रवेशदर्शनात् ' तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितम् ' (कठ.१.२.१२) इति परस्य ' या प्राणेन सम्भवत्यदितिर्देवतामयी । गुहां प्रविश्य तिष्ठन्ती ' (२.४.७) इति जीवस्य । कर्मफलादनाददितिर्जीवः ॥

## सू–१२ विशेषणाच्च [१-२.१२]

जीवपरावेवहि सर्वत्रास्मिन् प्रकरणे विशेष्येत ' न जायते म्रियते वा विपश्चित् ' (कठ.१.२.१८) इत्यादौ जीवः ' अणोरणीयान्महतो महीयान् ' (१.२.२०) ' महान्तं विभुमात्मानम् ' (१.२.२२) ' नायमात्मा प्रवचनेन ' (१.२.२३) ' विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ' (१.३.९) इत्यादिषु परः ' त्रिपादस्यामृतं दिवि ' (पुरुषसू.) ' अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु अनुत्तमेषु उत्तमेषु लोकेषु ' (छां.३.१३.७) इति विश्वतः प्राकृतात् स्थानात् परं विष्णोः परस्थानमेवहि संसाराध्वनः पारभूतं मुमुक्षुभिः प्राप्यम् ' परमं पदं सदा पश्यन्ति सूरयः ' (पुरुषसू.) ' तदक्षरे परमे व्योमन् ' (साम.उत्तर.२.२) ' क्षयन्तमस्य रजसःपराके ' (तै.नारा.६.५) ' विश्वं पुराणं तमसः परस्तात् ' (नारा.६.२) ' तेह नाकं महिमानस्सचन्ते । यत्र पूर्वे साध्यास्सन्ति देवाः ' (पुरुषसू.) इत्यादिसकलोपनिषत्प्रसिद्धम् ॥

इति वेदान्तसारः

अथ वेदान्तदीपः

## सू—९ अत्ता चराचरग्रहणात् (१.२.९)

कठवल्लीष्वाम्नायते—' यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥ ' (कठ.१.२.२५) इति । अत्रौदनोपसेचनसूचितोऽत्ता किं जीवः ? उत परमात्मेति संशयः । जीव इति पूर्वःपक्षः कुतः? भोक्तृत्वस्य कर्मनिमित्तत्वात्, जीवस्यैव तत्सम्भवात् । राद्धान्तस्तु—सर्वोपसंहारे मृत्युर्यस्योपसेचनमदनीयम् चराचरात्मकं

ह्स्न जगदिति तस्यैनस्यात्ता परमात्मैव । नचेद कर्मनिमित्तं भोक्तृत्वम्, अपितु जगत्सृष्टिस्थितिलयलीलस्य परमात्मनो जगदुपसंहारित्वरूप भोक्तृत्वम् । सूत्रार्थ —ब्रह्मक्षत्रौदनस्यात्ता परमात्मा, ब्रह्मक्षत्रशब्देन चराचरस्य कृत्स्नस्य जगतो ग्रहणात् । मृत्यूपसेचनोपोदनो न ब्रह्मक्षत्रमात्रम्, अपितु तदुपलक्षित चराचरात्मक कृत्स्न जगदेव ॥

## सू–१० प्रकरणाच्च (१.२.१०)

'महान्त विभुमात्मान मत्वा धीरो न शोचति' (कठ.१.२.२२) 'नायमात्मा प्रवचनेन लभ्यो न मेधया' (२३) इति परस्येदं प्रकरणम्, अतश्चात्र परमात्मा ॥

## सू—११ गुहां प्रविष्टावात्मानौहि तद्दर्शनात् [१.२.११]

तदनन्तरम् 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे' (कठ.१.३.१) इति द्वयो कर्मफलादन-श्रवणात् परमात्मनश्च कर्मफलादनानन्वयात् अत करणाद्वितीयो जीव एव तत्रात्तेति प्रतीयते ; अतोऽत्रापि स एव जीवोऽत्ता भवितुमर्हतीत्याशङ्कयाह—गुहां प्रविष्टौ जीवात्मपरमात्मानौ, जीवाद्वितीय परमात्मैव तत्र प्रतीयत इत्यर्थ । स्वयमनश्नतोऽपि परमात्मन प्रयोजकतया पानऽन्वयो विद्यते । जीवद्वितीय. परमात्मेति कथमवगम्यते तद्दर्शनात् तयो-रेव ह्यस्मिन् प्रकरणे गुहाप्रवेशव्यपदेशो दृश्यते—'त दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधि गमेन देव मत्वा धीरो हर्षशोकौ जहाति' (कठ १.२.१२) इति परमात्मन ; 'या प्राणेन सम्भवत्यदितिर्देवतामयी। गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत' (२ ४ ७) इति जीवस्य । कर्मफला यत्तीत्यदिति जीव ॥

## —१२ विशेषणाच्च [१.२.१२]

अस्मिन् प्रकरणे ह्युपक्रमप्रभृत्योपसंहाराज्जीवपरमात्मानावेवोपास्य चोपासकत्व प्राप्यत्व प्राप्तृत्वादिभिर्विशेष्येते 'महान्त विभुमात्मान मत्वा धीरो न शोचति' (१.२.२२) 'विज्ञानसारथिर्यस्तु मन प्रग्रहवान्नर । सोऽध्वन. पारमाप्नोति तद्विष्णो परमं पदम्' (१.३ ९) इत्यादिषु, अतश्चात्ता परमात्मा ॥

इति अत्त्रधिकरणम्

अथ अधिकरणसारावली

अत्ता स्यत्त्रौदनादेर्भवभुगिति कठश्रुत्यधीतोऽप्यसौ स्या
न्न स्यान्मृत्यूपसिक्ताखिलचरनिखिलग्रासवत्संह्रयोक्ते ।
जीवाव्यावर्तनं च प्रकरणविदित भोक्तृतोक्तिर्द्वयोस्तु
प्रेर्यत्वप्रेरकत्वप्रतिनियतरसाच्छत्रिनीत्याऽथवा स्यात् ॥
सत्त्व स्याद्वत्त्यनश्नन् ज्ञ इति विभजनात्पैङ्ग्यधीतन्तुसत्त्व
बुद्धि प्राणोऽथवेति स्वत इह पिबतोर्जीव एकस्तयोश्चेत् ।
नैव जन्तौतु सत्त्वश्रुतिरियमुचिता कर्म भुङ्क्त्वाऽप्यनश्नन्
तत्प्रश्नप्रक्रमोऽन्याशय इदमपि चाभावि पूर्वापरार्थे ॥

## ॥ इ ति अ त्त्र धि क र णं स मा प्त म् ॥

## अथ अन्तराधिकरणम्

श्रीभाष्यम्

## सू—१३ अन्तर उपपत्तेः (१.२.१३)

## अथ अन्तराधिकरणम्

श्रुतप्रकाशिका

## सू—१३ अन्तर उपपत्तेः (१. .१३)

अत्र सङ्गतिः पूर्वोक्तया दिशा सिद्धेति न कण्ठोक्ता। 'गूढोऽत्मा न प्रकाशते' 'तं दुर्दर्शं गूढमनुप्रविष्टम्' 'क इत्था वेद' इति च परमात्मा दुर्दर्शश्चेत् सुदर्शतया प्रसिद्धत्वेन निर्दिष्टो न परमात्मा भवितुमर्हतीति'

## अथ अन्तराधिकरणम्

### गूढार्थसङ्ग्रहः

'अन्तर उपपत्तेः' अन्तराधिकरणस्यायोगव्यवच्छेदपादान्तःपातितया जीवभिन्नःपरमात्मैव नास्तीति पूर्वपक्षः। अन्तराधिकरणञ्च आनन्दमयाधिकरणशेषभूतम् अत्रतु प्राधान्येन अन्तरादित्यविद्यावाक्यमेव विषयः अन्तःशब्दस्य सूत्रे सत्वात् उत्तरत्र 'अन्तारिक्षिणि' इति वाक्यस्य सत्वात् तस्यापि भाष्ये उपादानात्। अत्रतु जीवभिन्नपरमात्मा पूर्वपक्षे वर्तत एव। *अथाप्यस्मिन्वाक्ये परमात्मभिन्नएव पूर्वपक्षे विषयः। अन्तरशब्दस्य चात्र प्रयोगेण चक्षुषि स्थितिः अन्त* रशब्दघटितान्तर्यामिविद्यावाक्य एव 'यश्चक्षुषि तिष्ठन् चक्षुषोऽन्तरः' इत्यत्र प्रतिपाद्यत इति तद्वाक्य प्रत्यभिज्ञापितम् कठोपनिषदि 'यस्तु विज्ञानवान्भवति—तस्येन्द्रियाणि वश्यानि। यस्त्वविज्ञानवान्—तस्येन्द्रियाण्यवश्यानि' इत्याद्यभिधाय योगोऽप्यभिहितः 'विद्यामेतां योगविधिं च कृत्स्नम्' इतित ज्ञानेन्द्रियेषु बाह्येषु वश्येषु चक्षुषएव प्राथम्येन यच्चक्षुरादि वश्यताऽनन्तरमेव योगसिद्धिः। *'यएषोऽक्षिणि पुरुषो दृश्यते' इत्यत्र दृशिधातोः समाधिर्विव क्षित. इति चक्षुषः शुद्धस्थतया* सिद्धान्ते चक्षुस्थपरमात्मध्यानमेव चक्षुषो वश्यत्वमिति सूचनमत्राभिप्रेतमिति अधिकरणद्वयेकरस्यम्। कठोपनिषदि— *'शतञ्चैकाच,—इत्यादौ 'तयोर्ध्वमायन्' इत्यत्र संक्षेपेण प्रतिपादितायाः गतेः विस्तरेणाभिधानेन विद्ययोर्द्वयोः सगुण* ब्रह्मविषयकत्वमेवेति निर्धारित भवति। आमन द्राविडदादीनां पूर्वमुक्तत्वेन आदित्यात्मात्मनयोरत्र विवक्षेति (आ.ती) उक्तनियमो नघटते॥

'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इत्युपक्रम्योक्त ब्रह्म गतिवाक्यात् 'यएषोऽक्षिणि पुरुषो दृश्यते' इति वाक्यएव निर्णीतमिति गतिमात्रपरत्व नास्य वाक्यस्य, अपितु ब्रह्मपरत्वमेव एतत्तात्पर्येणैव उपपत्तेः इत्युक्तम्। अत्रतु उपदेशभेदः। प्रथम अमय बहुधोपदिदिशुः तदुपदेशकाले 'आचार्यस्तु ते गतिं वक्ता' इत्येतावन्मात्रं वर्तते 'यएषोऽक्षिणि पुरुषो दृश्यते' इत्येतद्वाक्यप्रतिपाद्यस्य प्रागनुपदिष्टपरमात्मत्वनिर्णयोऽपि न संभवति। *गतिमात्रस्यैवोपदेशात्।* 'य एषोऽक्षिणि' इति प्रसिद्धवन्निर्देशेन प्रमाणान्तरप्रसिद्धार्थ एव ग्राह्य इति प्रतीयते, प्रमाणं च श्रुतिरेवेति न नियमः। अतः प्रतिबिम्बस्याप्यत्र पूर्वपक्षे अवसरः, प्रतिबिम्बदर्शन ष्फलद्रष्टाभिप्रायदत्र विवक्षितमित्याचार्यपादैरप्युक्तम्॥

## श्रीभाष्यम्

इदमामनन्तिच्छन्दोगाः–' य एषोऽक्षिणि पुरुषो दृश्यते । एष आत्मेति होवाच एतद्-मृतमभयमेतद्ब्रह्म ' (छां.४.१५.१) इति । तत्र सन्देहः–किमयमक्ष्याधारतया निर्दिश्यमानः पुरुषः प्रतिबिम्बात्मा, उत चक्षुरिन्द्रियाधिष्ठाता देवताविशेषः, उत जीवात्मा, अथ परमात्मा इति । किं युक्तम् ? प्रतिबिम्बात्मेति । कुतः? प्रसिद्धवन्निर्देशात् ; 'दृश्यते' इत्यपरोक्षाभिधानाच्च । जीवात्मा वा, तस्यापि हि चक्षुषि विशेषेण सन्निधानात्प्रसिद्धिरुपपद्यते ? उन्मीलितं हि चक्षुरुद्वीक्ष्य जीवात्मनश्शरीरे स्थितिगती निश्चिन्वन्ति । ' रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः ' (बृ.७.७.१) इति श्रुतिप्रसिद्धया चक्षुःप्रतिष्ठो देवताविशेषो वा ; एष्वेव प्रसिद्धवन्निर्देशोपपत्तेरेषामन्यतमः ॥

इति प्राप्ते प्रचक्ष्महे–'अन्तर उपपत्तेः'–अक्ष्यन्तरः परमात्मा । कुतः ? ' एष म आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति एतं संयद्वाम इत्याचक्षते । एतं सर्वाणि वामान्यभिसंयन्ति एषउ एव वामनिः । एष सर्वाणि वामानि नयति । एष उ एव भामनिः एष हि सर्वेषु लोकेषु भवति ' (छां.४.१५.३) इत्येषां गुणानां परमात्मन्येवोपपत्तेः ॥

## श्रुतप्रकाशिका

शङ्कया सङ्गतिः । विषयादिकं दर्शयति इदमित्यादि । किं अक्ष्याधारतया निर्दिश्यमानः प्रतिबिंबचक्षुरधिष्ठातृजीवानामन्यतमः, उत परमात्मेति तदर्थं किमप्यमृतत्वादयो यथाकथञ्चिन्नेयाः, उत मुख्याः ? ' कं ब्रह्म ' इति प्रकृतमेव ब्रह्मेह किमुपाधनस्थानगुणविधानार्थं निर्दिश्यते उत नेति, किं मध्यस्थाग्निविद्यया ब्रह्मप्रकरणं विच्छिन्नम् उतन, किमग्निविद्या ब्रह्मविद्या, उतन ? किमग्निविद्याफलं ब्रह्मविद्याङ्गत्वानुगुणम्, उत नेति विचारः । यदाऽननुगुणं तदाऽग्निविद्यायाः ब्रह्मविद्याङ्गत्वाभावेन ब्रह्मप्रकरणविच्छेदेन पूर्वप्रकृतब्रह्मण इह परामर्शाभावेनामृतत्वादीनाममुख्यतया प्रतिबिम्बादिष्वन्यतम इति फलितम् । सिद्धान्ते यदात्वनुगुणं तदा अङ्गत्वेनाग्निविद्यायाब्रह्मविद्याप्रकरणविच्छेदकत्वाभावेन प्रकृतब्रह्मण इह परामर्शसंभवेनामृतत्वादीनां च स्वतःप्राप्तमुख्यत्वसिद्धेः परमात्मेति फलितम् । अपरोक्षप्रसिद्धिर्यौगिकप्रसिद्धिः–श्रुतिप्रसिद्धिश्चेति यथाक्रमं प्रतिबिंबजीवादित्यानामनुसन्धेयाः । यएष इति पदाभ्यां प्रसिद्धवन्निर्देशः दृश्यत इत्यपरोक्षाभिधानम् । अनेन सङ्गतिरभिप्रेता, सन्निधानात् सन्निधानावगमात् जीवस्य देहसन्निधेश्चक्षुष्यवगमादित्यर्थः तदेव विवृणोति उन्मीलितंहीति । अस्मिन्कर्मण्यस्य सामर्थ्यं दृष्टमित्युक्ते यथा तत्कर्म तत्सामर्थ्यसूचकमित्युक्तं भवति, एवमक्षिणि दृश्यत इत्युक्ते देहे जीवावस्थानं चक्षुरधीननिश्चयमित्युक्तं भवतीत्यर्थः उपक्रमानुगुणमन्यन्नेयं, तस्मादमृतत्वसंयद्वामत्वाद्युक्तिस्तुतिरूपा ' एष आत्मेति' इतीतिकरणचार्थात्तात्पर्यद्योतकम् । देवताविशेषः आदित्यः एष्वेव ननु परमात्मनि

राद्धान्ते एषां गुणानामिति । निरुपाधिका अमृतत्वादयो न जीवादिषु सम्भवन्तीत्यर्थः एषामिति । उपक्रमस्थमेकं लिङ्गमुपरितनानेकगुणविरोधे दुर्बलम् अत एव च नामृतत्वाद्युक्तिस्तुतिरिति भावः । ' इतिहोवाच, इत्यब्रवीत्

## गूढार्थसंग्रहः

नचैतद्वाक्ये ' एष आत्मेति होवाच ' इत्युक्तधर्माः विरोधिनो भवन्ति । प्रजापतिविद्यायां प्रतिबिंबविषयेऽपि तद्वाक्यसद्भावात् । प्रतिबिंबपूर्वपक्षः न मुख्यः किंतु सम्भवाभिप्रायेण, वस्तुतस्तु जीवइति पूर्वपक्षः मुख्यः ' एष आत्मेतिहोवाच ' इत्यनेन प्रतिबिंबव्यावृत्तावपि जीवे तत्सम्भवः । ' यएषोऽक्षिणि ' इति जीवस्य स्थितिश्चक्षुषा निर्णीयते ।

श्रीभाष्यम्

## सू—१४ स्थानादिव्यपदेशाच्च [१.२.१४]

चक्षुषि स्थितिनियमनादयः परमात्मन एव 'यश्चक्षुषि तिष्ठन्' (बृ.५.७.१८) इत्येवमादौ व्यपदिश्यन्ते। अतश्च 'य एषोऽक्षिणि पुरुषः' (छां ४.१५.१) इति स एव प्रतीयते अतः प्रसिद्धवन्निर्देशश्च परमात्मन्युपपद्यते। तत एव 'दृश्यते' इति साक्षात्कारव्यपदेशोऽपि योगिभिर्दृश्यमानत्वादुपपद्यते॥

## सू—१५ सुखविशिष्टाभिधानादेव च १.२.१५

श्रुतप्रकाशिका

इत्यादिष्विति करत्वमर्थपरमेव दृष्टमितिचानुसन्धेयम् उपपत्तेरक्ष्यन्तरः परमात्मेत्यन्वयः—यद्यद्यस्मिन् सर्पिरोदकं वा सिञ्चति वर्त्मनीव गच्छति इत्यर्थवादोक्त सर्पिरुदकादिनिर्लेपत्व हेतुं कृत्वा निर्लेपस्य परस्य निर्लेपचक्षुषि स्थितिरुपपन्नेति वक्तुमयुक्तम्। काचादिभिस्सलेपे चक्षुषि निर्दोषस्य परस्य स्थित्यनुपपत्तेश्च वक्तु शक्यत्वात्॥

## सू–१४ स्थानादिव्यपदेशाच्च [१.२.१४]

अनवस्थितेरिति व्यतिरेकस्य वक्ष्यमाणत्वात् 'चक्षुषि तिष्ठन्' इति श्रुत्यनुरोधेन स्थानशब्दः स्थितिपरतया व्याख्यातः, नतु प्रदेशपरतया। सौत्रस्यादिशब्दस्यार्थमाह— नियमनेति। आदिशब्दस्य नामरूपाव्ययपरत्वेन व्याख्या नमयुक्त, जीवात्मनि सम्भवतस्तस्य परमात्मसाधकत्वाभावादिति भावः स्थितिनियमनादय इत्यादिशब्देन धारकत्वादिरभिप्रेतः। अस्य हेतोस्सिद्धान्तसाधकत्व दर्शयति अतश्चेति। अनेन सिद्धान्तसाधकहेतु वदता पूर्वपक्षहेतोरन्यथासिद्धिश्च फलिता तामाह–अतःप्रसिद्धवदिति। श्रुतिप्रसिद्धत्वात् प्रसिद्धवन्निर्देशः पूर्वपक्षिणोक्तोऽस्मत्पक्षेऽपि सम्भवतीति पूर्वपक्षहेत्वन्तरस्य चान्यथासिद्धिं सूत्राभिप्रेतां दर्शयति ततएवेति। ततएव श्रुतिप्रसिद्धेरेव शास्त्रप्रतिपन्नंहि तत्वं योगिभिरुपास्यं च 'यत्तदद्रेश्यम्' इत्युक्त्वा 'परिपश्यन्ति धीराः' इत्युक्तेः 'गूढोऽत्मा न प्रकाशते, दृश्यतेत्वग्रयया–बुद्धया सूक्ष्मया सूक्ष्मदर्शिभिः' इत्युक्तेश्च। अतोऽर्थतश्शब्दतश्च श्रुत्यन्तरप्रसिद्धेरिति भावः। यादसां समुद्रादिवत् स्थानिनः परमात्मनोऽक्षिस्थानात् परिच्छिन्नत्वशङ्काव्युदासपरत्वं सूत्रस्यायुक्तम् 'अर्भकौकस्त्वात्' इति सूत्रेण तस्याःपरिहृततयाऽत्र शङ्काऽनुदयात्। अतस्साधकान्तरप्रदर्शनपरमिदं सूत्रं प्रसिद्धवन्निर्देशापरोक्षाभिधानरूपपूर्वपक्षयुक्तिद्वय चार्थात्परिहृतम्॥

*गूढार्थसंग्रहः*

*तत्र 'अक्षिणि' इत्यत्र अक्षिनिमित्तकदर्शनविषयो जीवः विवक्षितः। निमित्तसप्तम्यपेक्षया अधिकरणसप्तम्याः मुख्यत्वेन* श्रुत्या तत्र स्थितेः परिग्रह एव युक्तः इति तात्पर्येण चक्षुरिन्द्रियाधिष्ठाता देवताविशेष इति तदाऽपि 'एष आत्मेतिहोवाच' इत्यादीनां संभव एव। एव प्राप्ते उच्यते—अन्तर उपपत्तेः॥

श्रीभाष्यम्

इतश्चायमक्ष्याधार पुरुषोत्तमः-'कं ब्रह्म खं ब्रह्म' (छां.४.१०.५) इति प्रकृतस्य सुख-विशिष्टस्य ब्रह्मणः उपासनस्थानविधानार्थं संयद्वामत्वादिगुणविधानार्थं च 'य एषोऽक्षिणि पुरुषः' (छां.४.११.१) इत्यभिधानात्। एवकारो नैरपेक्ष्यं हेतोर्द्योतयति ॥

नन्वग्निविद्याव्यवधानात् 'कं ब्रह्म' (छां.४.१०.५) इति प्रकृतं ब्रह्म नेह सन्निधत्ते। तथा हि-अग्नयः 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' (४.१०.५) इति ब्रह्मविद्यामुपदिश्य 'अथ हैनं गार्हपत्योऽनुशशास' (४.११.१) इत्यारभ्याग्नीनामुपासनमुपदिदिशुः। नचाग्निविद्या ब्रह्मविद्याऽङ्गमिति शक्यं वक्तुम्; ब्रह्मविद्याफलानन्तर्गततद्विरोधि सर्वायुः प्राप्तिसन्तत्य-

श्रुतप्रकाशिका

## सू—१५ सुखविशिष्टाभिधानादेव च १.२.१५

सुखविशिष्ट सुखत्वविशिष्ट 'द्व्येकयोः' इतिवत् 'तद्गुणसारत्वात्' इति न्यायेन धर्मभूतसुखविशिष्टमिति वा 'कं ब्रह्म खं ब्रह्म' इत्युक्तस्य ब्रह्मणः पुनरभिधान किमर्थमित्यत्राह–उपासनस्थानेति। 'एतदमृतमेतदभय-मेतद्ब्रह्म' इति ब्रह्मशब्देन 'कं ब्रह्म' इत्युक्तस्य ब्रह्मणः प्रत्यभिज्ञानादित्यर्थः। एवकारप्रयोजनमाह–एवेति। पूर्व सूत्रद्वयोक्त हेतुद्वय व्यतिरेकोक्तिसापेक्ष 'अनवस्थितेरसम्भवात्' इतिहि वक्ष्यते। अयतु हेतुर्व्यतिरेकोक्तिनिरपेक्षइति भावः। प्रकरणविच्छेद दर्शयश्चोदयति। नन्विति। कथमग्निविद्याव्यवधानमित्यत्राह—तथाहीति। तर्हि अङ्गाङ्गि-भावेनाविरोध इत्यत्राह–नचेति। 'फलवत्सन्निधावफल तदङ्गम्' इति न्यायादिति भावः। अङ्गानामप्याङ्गिफला-

गूढार्थसंग्रहः

अन्तरउपपत्तेः इतिसूत्रे अन्तरशब्दोपादान एतद्विषयवाक्यस्य अन्तरशब्दघटितवाक्यवैलक्षण्यसूचनाय। तत्र विषयवाक्ये अन्तरशब्दप्रयोगेण विषयवाक्यपर्यालोचनेनैव सूत्रकारः इत्थ प्राह्रक्ष। तेनचायमर्थस्सूच्यते अन्तरशब्दघटितवाक्ये चक्षुषि या स्थितिः प्रतिपाद्यते तस्याः दर्शनमेव यच्छब्दनिर्देशेन विषयवाक्ये विवक्षितमिति तथान्तर्यामिब्राह्मणवाक्य 'यश्च क्षुषि तिष्ठन् चक्षुषोऽन्तरः' इत्यादि। अतएव सिद्धान्ते एतत्तात्पर्यानुरोधेन स्थानादिव्यपदेशाच्च इत्युक्तार्थनिर्णयाय उत्तराधिकरणप्रवृत्तिरिति सङ्गच्छते ॥

'यएष आदित्ये पुरुषस्सोऽहमस्मि' इत्यस्यात्र सद्भावेन आदित्याग्न्योरैक्यात् अग्निरिति पूर्व पक्षः नवीनैरादृतः आदित्यस्येव विद्युदादीनामपि तद्वाक्ये सद्भावेन तत्रादित्यस्यैव विवक्षितत्वमिति निर्णयो नसम्भवति। अत्र सूत्रे अन्तर शब्दप्रयोगेण 'यएषोऽन्तरिक्षिणि' इत्यस्य विषयवाक्यता नसम्भवतीति प्रागेवोक्तम्। नचान्तरस्यत्व रमणचेरुभय विवक्षितमिति सूत्रे अन्तरशब्दप्रयोग इति शङ्क्यम्, एवमप्रसिद्धार्थस्य कल्पनासम्भवात्। तथासति 'अन्तः' 'रः' इत्येव कुतो न निर्देशः? अत्र उणादिप्रत्ययकल्पनया अन्तरशब्दव्युत्पत्तिप्रदर्शनमपि स्वसिद्धान्ताभिनिवेशमूलकमेव। अत. उभ्य भावेव पूर्वपक्षसिद्धान्तौ ॥

अत्र सूत्रे अक्षिशब्दाभावेऽपि अक्ष्यन्तरः इति भाष्यतु 'श्रुतोपनिषत्कगत्यभिधानाच्च' 'सुखविशिष्टाभि धानादेवच' इति सूत्रद्वयपर्यालोचनायाउपकोसलविद्याया पूर्वोत्तरवाक्यानि बुद्धिस्थानि भवन्तीति तात्पर्येण'स्थानादिव्यप

श्रीभाष्यम्

विच्छेदादिफलश्रवणात् । उच्यते 'प्राणो ब्रह्म' (छां.४.१०.५) 'एतदमृतमभयमेतद्ब्रह्म' (४.१५.२) इत्युभयत्र ब्रह्मसंशब्दनात् 'आचार्यस्तु ते गतिं वक्ता' (४.१४.१) इत्यग्निवचनाच्च गत्युपदेशात्पूर्वं ब्रह्मविद्याया असमाप्तेस्तन्मध्यगताग्निविद्या ब्रह्मविद्याङ्गमिति निश्चीयते । 'अथहैनं गार्हपत्योऽनुशशास' (४.११.१) इति ब्रह्मविद्याऽधिकृतस्यैवाग्निविद्योपदेशाच्च । किञ्च 'व्याधिभिः परिपूर्णोऽस्मि' (छां.४.१०.३) इति ब्रह्मप्राप्तिव्यतिरिक्तनानाविधकामोपहतिपूर्वकगर्भजन्मजरामरणादिभवभयोपतप्तायोपकोसलाय 'एषा सोम्य तेऽस्मद्विद्याऽऽत्मविद्या च (४.१४.१) इति समुच्चित्योपदेशान्मोक्षैकफलात्मविद्याङ्गत्वमग्निविद्यायाः प्रतीयते । एवं चाङ्गत्वेऽवगते सति फलानुकीर्तनमर्थवाद इति गम्यते । नचात्र मोक्षविरोधिफलं किञ्चिच्छ्रूयते, 'अपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्ते उप वयन्तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च' (छां.४.१३.२) इत्यमीषां फलानां मोक्षाधिकृतस्यानुगुणत्वात् । अपहते पापकृत्याम्–ब्रह्मप्राप्तिविरोधि पापं कर्मापहन्ति । लोकी भवति तद्विरोधिनि पापे निरस्ते ब्रह्मलोकं प्राप्नोति । सर्वमायुरेति ब्रह्मोपासनसमाप्तेर्यदायुरपेक्षितम् तत्सर्वमेति । ज्योग्जीवति व्याध्यादिभिरनुपहतो यावद्ब्रह्मप्राप्ति जीवति । नास्यावरपुरुषाः क्षीयन्ते–अस्य शिष्यप्रशिष्यादयः पुत्रपौत्रादयोऽपि ब्रह्मविद एव भवन्ति । 'नास्याब्रह्मवित्कुले भवति' (मु.३.२.९) इति च श्रुत्यन्तरे ब्रह्मविद्याफलत्वेन श्रूयते । उपवयन्तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च–वयम् अग्नयस्तमेनमुपभुञ्जाम–यावद्ब्रह्मप्राप्ति विघ्नेभ्यः परिपालयाम इति । अतोऽग्निविद्याया ब्रह्मविद्याऽङ्गत्वेन तत्सन्निधानविरोधात्सुखविशिष्टं प्रधानमेव ब्रह्मोपासनस्थानविधानार्थं गुणविधानार्थं

श्रुतप्रकाशिका

विरुद्धफलमुपपद्यत इति शङ्कापरिहारार्थं तद्विरोधीत्युक्तम् । प्रकरणाविच्छेदेन परिहरति उच्यत इति । उभयत्रोपक्रमोपसंहारयोर्ब्रह्मसंशब्दनं अग्निविद्यायाः प्राक् ब्रह्मविद्याया असमाप्तिः ब्रह्मविद्याऽधिकृतस्याग्निविद्योपदेशः तापत्रयातुरस्य तच्छान्त्यर्थमुभयोस्समुच्चित्योपदेशश्चेति हेतुचतुष्टयेनाङ्गाङ्गित्वमाह–प्राणो ब्रह्मेत्यादिना । 'अथहैनं गार्हपत्योऽनुशशास' इत्यत्र एनमित्यन्वादेशेन ब्रह्मविद्याधिकृतत्वे तात्पर्यं सिद्धम् । शब्दतः प्रकृतस्यैव पुनःपरामर्शोह्यन्वादेशः नतु यथाकथञ्चित् बुद्धिस्थमात्रपरामर्शः । अतएनमिति निर्देशादश्रुतब्रह्मविद्यस्यैवाग्निविद्याधिकारि ज्ञापकः । समुच्चित्योपदेशादिति । समुच्चयशब्दउपदेष्टव्यत्वाविशेषविवक्षया समसमुच्चयपरः । यद्वा सन्निधमात्रपरः सप अङ्गाङ्गिभावे पर्यवस्यति । फलविरोधमभ्युपगम्य परिहरति एवंचेति । 'द्रव्यगुणसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादस्स्यात्' इतिहि कर्ममीमांसासूत्रम् । अथ फलविरोध एव नास्तीत्याह—नचेत्यादिना । ज्योक् उज्वलः अनेन व्याध्याद्यनुपहतत्वं फलितम् तदाह–व्याध्यादिभिरिति । कुले ब्रह्मविदुत्पत्तेः ब्रह्मविद्याऽनुगुणफलत्वं दर्शयति नास्येति । भुञ्जामइति । 'भुज-पालनाभ्यवहारयोः' इति धातोः 'भुजोनवने' इति ह्यात्मनेपदम् अतः परस्मैपदित्वादय धातुरवनार्थ इत्यर्थः । परिपालयामइति । भुनात्युपशब्दार्थः परिणोपसर्गेण सूचितः विघ्ननिवारणपर्यन्तः किङ्करकारो ब्रह्मविद्या प्रत्यग्निविद्यायो अङ्गत्वनिर्वाहक इत्यभिप्रायः ॥

श्रीभाष्यम्

चोच्यते। ननु ‘ आचार्यस्तुते गतिं वक्ता ’ (छां.४.५.९) इति गतिमात्रपरिशेषणादाचार्येण गतिरेवोपदेश्येति गम्यते ; तत्कथं स्थानगुणविध्यर्थतोच्यते ? तदभिधीयते ‘ आचार्यस्तु ते गतिं वक्ता ’ [४.५.९.) इत्यस्यायमभिप्रायः—ब्रह्मविद्यामनुपदिश्य प्रोषुषि गुरौ तदला-भादनाश्वासमुपकोसलमुज्जीवयितुं स्वपरिचरणप्रीता गार्हपत्यादयो गुरोरग्नयस्तस्मै ब्रह्म-स्वरूपमात्रं तदङ्गभूतां चाग्निविद्यामुपदिश्य ‘ आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत् ’ (छां.४.९.३) इति श्रुत्यर्थमालोच्य साधुतमत्वप्राप्त्यर्थमाचार्य एवास्य संयद्वामत्वादिगुणकं ब्रह्म तदुपासनस्थानमर्चिरादिकां च गतिमुपदिशत्विति मत्वा ‘ आचार्यस्तु ते गतिं वक्ता ’ (४.१४.१) इत्यवोचन्। गतिग्रहणमुपदेश्यविद्याशेषप्रदर्शनार्थम्। अत एवाचार्योऽपि ‘अहं तु ते तद्वक्ष्यामि यथा पुष्करपलाश आपो नश्लिष्यन्ते एवमेवं विदि पापं कर्म न श्लिष्यते [छां.४.१४.३] इत्युपक्रम्य संयद्वामादिकल्याणगुणविशिष्टं ब्रह्माक्षिस्थानोपास्यमर्चिरादिकां च गतिमुपदिदेश। अत ‘ कं ब्रह्म खं ब्रह्म ’ [४.१०.५) इति सुखविशिष्टस्य प्रकृतस्यैव ब्रह्मणोऽत्राभिधानादयमक्ष्याधारः परमात्मा ॥

ननु च ‘ कं ब्रह्म खं ब्रह्म ’ (छां.४.१०.५) इति परं ब्रह्माभिहितमिति कथमवगम्यते, यस्येहाक्ष्याधारतयाऽभिधानं ब्रूषे ; यावता ‘ कं ब्रह्म खं ब्रह्म ’(४.१०.५) इति प्रसिद्धाकाश लौकिकसुखयोरेव ब्रह्मदृष्टिर्विधीयत इति प्रतिभाति ‘ नाम ब्रह्म ’ ७.१.५ ‘ मनो ब्रह्म ’ ७.३.२ इत्यादिवचनसारूप्यात्। तत्राह—

श्रुतप्रकाशिका

उक्तहेतुभिरेकप्रकरणे स्थितेऽपि ब्रह्मणः पुनरवक्तव्यत्वमुखेन चोदयति नन्विति। स्थानगुणयोर्विधेयत्वे सति हि तदर्थं पुनर्ब्रह्मणोऽभिधानं, तत्तु नास्ति पूर्वं तयोराचार्येण वक्ष्यमाणत्वाकथनात्, अतस्स्थानादिपरवाक्यं न परमात्मवि-षयमित्यन्यपरमिदं वाक्यमित्यर्थः। परिहरति तदभिधीयतइत्यादिना। परिपूर्णोपदेशोऽनुपदेशो वा स्यात, कथं विकलो-पदेश इत्याशङ्कां च परिहरन् स्थानगुणविध्यर्थतामुपपादयति आचार्यस्त्वित्यादिना। साधिष्ठशब्दः साधुतमत्वशब्देन व्याख्यातः। साधिष्ठमिति भावप्रधाननिर्देशइत्यर्थः गतिग्रहणमिति। उपदेश्यविद्याशेषमाचार्यो वक्तेति ‘ आचार्य-स्तु ते गतिं वक्ता ’ इति वदतामभिप्राय इत्यर्थः। तदेवोपपादयति अतएवेति। सूत्रार्थं निगमयति अतइति। अतः उपकोसलविषादपरिहारस्यापेक्षितत्वात् गुरुमुखात् श्रवणेन साधुतमत्वाय पुष्कलमुपदिष्टत्वाच्च गतिग्रहणस्य प्रदर्श-नार्थत्वादित्यर्थः ॥

उत्तरसूत्रशङ्कामाह—ननुचेति। यावता प्र युत वचनसारूप्यादिति। ‘ नाम ब्रह्म ’ ‘ मनो ब्रह्म ’ इत्यादि-वत् दृष्टिविशेषणस्य ब्रह्मणः पश्चादुपादानं विशेष्यस्य प्रथमोपादानं च सारूप्यमभिप्रेतम् ‘ प्राणं च हास्मै तमाकाशं चोचुः ’ इति प्राणाकाशशब्दाभ्यां निगमितम् नतु ब्रह्मशब्देन ततोऽपि दृष्टिविधिरिति भावः तस्याप्युत्तरत्र परिहरिष्य-माणत्वात् ॥

गूढार्थसङ्ग्रहः

देशाच्च ’ ‘ अनवस्थितेरसम्भवाच्च नेतरः ’ इति सूत्रद्वये अन्वयव्यतिरेकाभ्यां स्थितिरपि बुद्धिस्था। एवं च स्थित्यधि-करणसन्तर्घटितवाक्यमेव विषयइति सूत्रसन्दर्भेण सूच्यते। तेन ‘यएषोऽक्षिणि पुरुषो दृश्यत ’ इत्यस्य विषयवाक्यत्वं निष्पन्नम्। ततश्च अक्ष्यन्तरः परमात्मा इत्युक्तिः युक्ता ॥

## गूढार्थसंग्रहः

अन्तरशब्देन अन्तरशब्दघटितवाक्यजन्य श्रौतदर्शनमेव 'यएषोऽक्षिणि पुरुषो दृश्यते' इत्यत्र विवक्षितमिति सूचनमात्रम्। इदानीन्तु तद्विस्तरेण निरूप्यते 'स्थानादिव्यपदेशाच्च' इत्यादौ। एवच चक्षुरधिष्ठातु· जीवस्य स्थानादि व्यपदेश: सर्वथा नैव सम्भवतीति सूच्यते। परै: 'यः पृथिव्या तिष्ठन्' इत्यादिबहुस्थानव्यपदेश उक्त:। आदिशब्दार्थ नामरूपमिति च। स्थानशब्दे पृथिव्यादिबहुस्थानविवक्षाऽङ्गीकारे तत्सहभावेन पठितानामर्थाना आदिशब्देनग्रहण युक्तम् नतु नामरूपयोरित्यभिप्रेत्य भगवता चक्षुषि स्थितिनियमनादयः इत्यर्थः वर्णित:। 'अनवस्थितेरसम्भवाच्च' इति व्यतिरेकनिर्देशदशाया स्थितिशब्दस्यैव सूत्रे सत्त्वेन स्थानशब्दस्य भावे ल्युडन्तत्वेन स्थित्यर्थक वामित्यर्थवर्णन सूत्रकारास म्मतम्। स्थानार्थकत्वाङ्गीकारेऽपि सिद्धान्ते न काऽपि क्षतिः। स्थान आदिः येषा ते इतिविग्रहः बहुस्थानसम्बन्धकथनेनाभ्यासेन स्थितिरत्र विवक्षिता। एतेन 'यआदित्ये' 'यश्चन्द्रमसि' इत्यादीना सर्वेषामुपपत्ति.। अत्र स्थानशक्तिः आत्मशक्तिश्च विवक्षितेति नव्यार्थस्तु स्थानशब्दस्य शक्तिपरत्वासम्भवेन सूत्रे नैव विवक्षितः॥

'सुखविशिष्टाभिधानादेवच' इति। पूर्वसूत्रद्वयेन 'यएषोऽक्षिणि पुरुषो दृश्यत' इति वाक्यार्थोनिर्णीतः अनेन सूत्रेणाग्नीनामुपदेशवाक्ये योऽर्थः सएवाक्षिवाक्येऽपि प्रतिपाद्यइति बोधितम्। इत्यमभिधानेन प्रकरणविच्छेदो नास्तीति पूर्वपक्षिसम्मतप्रकरणविच्छेदशङ्कानिरासः अनेन सूत्रेण क्रियते, प्रकरणविच्छेदबीजतु गतिमात्रमेवाचार्येणोपदेक्ष्यमित्याशयेन उपक्रमोक्तार्थस्यैक्य च न श्रुतम्, अतः एतद्वाक्यं यथाकथञ्चिन्नेतु शक्यमित्याशय: अनन सूच्यते। 'प्राणोब्रह्म कं ब्रह्म खं ब्रह्म' इति सुखविशिष्ट यत्पूर्वं प्रतिपादित तस्यैवाक्षिवाक्येऽभिधानात् इति सूत्रार्थः॥

एतन पूर्वसूत्रोक्तहेतुद्वयमन्तराऽपि पूर्वपक्षिशङ्काऽनेनैव हेतुना निरस्ता भवतीत्येवकारार्थ.। 'सुख च तद्विशिष्ट चेति सुखविशिष्टमित्यत्र विग्रहः सुख यद्विशिष्ट तदभिधानादित्यर्थः। अयमाशय·। अत्र विशिष्टशब्दोपादान 'क ब्रह्म ख ब्रह्म इति वाक्यतात्पर्यनिर्णयार्थम्। एतेन 'प्राणो ब्रह्म' इतिवत् 'क ब्रह्म ख ब्रह्म' इत्यत्र कखशरीरत्व नविवक्षितम्, किंतु सुख विशिष्टमेव विवक्षितम्। अयमाशय. 'प्राणो ब्रह्म' इत्याद्युपदेशानन्तर 'विजानाम्यहं प्राणो ब्रह्मेति क च ख च नविजानामि' इत्यत्र 'प्राणो ब्रह्म' इति वाक्यसमशील 'क ब्रह्म ख ब्रह्म' इति वाक्यमिति शङ्कया सुखशरीरकत्वस्य परमात्मन्यसम्भवेन प्रश्न.। तत्र प्रतिवचने 'यद्वाव क तदेव ख यदेव ख तदेव कम्' इत्यभ्यासेन द्विरुक्तया सुखभेदएव खशब्दार्थे विवक्षित इति प्रतीयते। खशब्दस्य नव्याभिमतज्ञानार्थकत्व न प्रसिद्धम् किंतु आकाशार्थकत्वमेव। अन्ते 'प्राण चहास्मै तदाकाशचोचु·' इति प्राणशब्दसहचारेण आकाशशब्दस्य निर्देशात्। 'प्राणा ऊचु' इत्यनन्तरवाक्यपर्यालोचनायां उपकोसलप्रश्न बीजमपिसूचितम्। तद्वाक्ये प्राणशब्दाकाशशब्दयो. एकजातीयार्थकत्वस्यैव प्रसिद्धेः। अभ्यासेनोभयोरेक वप्रतीत्या खशब्दस्याकाशार्थकत्वेन प्रसिद्धाकाशाभेदो बाधित इति अपरिच्छिन्नार्थकेऽय खशब्दः रूपकस्थल सदृशाभेदएव प्रतीयत इति प्राचीनालङ्कारिकसिद्धान्त·। इ थ चाकाशसदृशाभेदेन अपरिच्छिन्नसुखमित्यर्थः। 'क ब्रह्म ख ब्रह्म' इति कशब्दस्य प्रथमपाठेन सूत्रेऽपि सुखशब्दस्य प्रथम प्रयाग.। सुख च तद्विशिष्ट च इत्यर्थेऽपि अपरिच्छिन्नसुखमिति तात्पर्येण 'यदेव ख तदेव कम्' इति वाक्यप्रयोग.॥

अग्न्युपदेशवाक्ये 'प्राणो ब्रह्म क ब्रह्म ख ब्रह्म' इत्यत्र प्राणशब्दस्य कखशब्दयोश्च विजातीयार्थकत्वमुक्तम्। सुखविशिष्टाभिधानादेवच इति सूत्रे 'यएषोऽक्षिणि पुरुषो दृश्यत' इति प्रागुक्तब्रह्मण एव स्थानविधान संयद्वामत्वादिगुणविधान च। दृश्यते इत्युक्तिस्तु ध्यानानन्तरकालिकसमाध्यभिप्रायेणेति भगवतोक्तम्॥

श्रीभाष्यम्

## सू—१६ अत एव च स ब्रह्म (१.२.१६)

यतस्तत्र ' यदेव कं तदेव खम् ' (छां.४.१०.५) इति सुखविशिष्टस्याकाशस्याभिधानम् अत एव खशब्दाभिधेयस्सः आकाशः परं ब्रह्म । एतदुक्तं भवति-अग्निभिः ' प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म ' [४:१०.५] इत्युक्ते उपकोसल उवाच ' विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च विजानामि ' (४.१०.५) इति ॥

श्रुतप्रकाशिका

## सू—१६ अत एव च स ब्रह्म [१-२.१६]

अतएवेत्येतद्व्याचष्टे यतस्तत्रेति । निगमनवाक्यस्थपुल्लिङ्गाकाशशब्दकटाक्षेण सूत्रे स इति निर्देशः । अतश्शब्दस्सुखविशिष्टाभिधानपरः । नन्वतश्शब्दः प्रकृतवाची ' प्राणो ब्रह्म कं ब्रह्म ' इति वाक्योदितस्य सुखविशिष्टस्य ब्रह्मणः स्थानगुणाद्यर्थमाभिधानाहि प्रकृत पूर्वसूत्रे तदेव सुखविशिष्टाभिधानमत्रात इति परामृश्यते, तत्कथ ' यदेव खं तदेव कम् ' इति सुखविशिष्टाकाशाभिधानमतश्शब्दार्थतयोच्यते । उच्यते सामान्येन सुखविशिष्टाभिधान हेतुतयाऽतश्शब्देन परामृश्यते तत्र सुखविशिष्टाभिधानव्यक्तिविशेषौ वाक्यद्वयस्थाविह सूत्रद्वयेऽप्यर्थवशाद्धेतुभूतौ । यथा ' नाम श्रुतेः ' 'ज्योऽतएव' इत्यत्र श्रुतिमात्रस्यातश्शब्दपरामृष्टत्वेऽप्यर्थसामर्थ्याच्छ्रुतिव्यक्तिविशेषासिद्धिः, तद्वदिहापीति । भाष्ये ' यदेव कं तदेव खम् इति नवाक्योपादान अपित्वर्थोपादान ' यद्वाव कं तदेव खम्' इति वाक्य ' यदेवकं तदेव खम् ' इत्यत्रान्योऽन्यदृष्टिविधिरेवास्तु नान्योऽन्यव्यवच्छेदकत्व व्यवच्छेदकत्वे वा कथ खशब्दाभिधेयस्याकाशस्य परब्रह्मत्वमिति शङ्काद्वय हृदि निधायाह—एतदुक्तमिति । अग्निभिरित्यादि । ' दृष्टिविधित्वे प्राणो ब्रह्म ' इत्यस्य

गूढार्थसंग्रहः

एवं ' यएषोऽक्षिणि पुरुषो दृश्यते ' इति वाक्यार्थनिर्णयो नघटते ' प्राणो ब्रह्म ' इत्यत्र ' मनो ब्रह्मे त्युपासीत' इतिवत् दृष्टिविधित्वं कुतो न सम्भवति ? ' क ब्रह्म ख ब्रह्म ' इत्यत्रापि तथैव स्यान्नाम एव च ' यएषोऽक्षिणि पुरुषो दृश्यते ' इति वाक्येऽपि आरोपितार्थविषयकध्यानमेव विवक्षितमिति नैव पूर्वोक्तो निर्णयः कर्तुं शक्यते । ध्यानसामान्यमप्यमा नतु शुद्धब्रह्मविषयकमित्यपि केषाञ्चित्सिद्धन्तादिति शङ्कानिरासार्थम्–'अतएव च सब्रह्म' इति ॥

' प्रतिज्ञाविरोधात् '(ब्र.सू.१.१.५) इतिवत् अतएव च सब्रह्म इति सूत्र सिद्धांतिमात्रसम्मतम् । भास्कराचार्यैः प्रणीते ब्रह्मसूत्रभाष्ये सुखविशिष्टाभिधानादेवच इति सूत्रव्याख्यानावसरे अतएव च सब्रह्म' इति सूत्रमन्ये पठन्ति तत्पुनर्गतार्थमित्यन्यैर्नाधीयते इत्युक्तम् । परमते नव्यमते च सिद्धान्त्यसम्मतानिमानि सूत्राणि, ' उभयव्यामोहात्तत्सिद्धेः ' (४.३.५) ' क्षणिकत्वाच्च ' (३.३.३१) ' दर्शनात् ' (२.३.३३) ' स्वपक्षदोषाच्च ' (२.१.३० ' दृश्यते च' (२.१..७) 'प्रतिज्ञानुपरोधाच्च '(२.४.३) 'सलिलवच्च तन्नियमः' एतानि सूत्राणि मध्वाचार्यमात्रसम्मतानि अतएव विशिष्टसुखरूपब्रह्मण एव ' क ब्रह्म ख ब्रह्म ' इत्यत्र पुनस्सन्देहेन ' विजानाम्यह प्राणो ब्रह्मेति क चतु ख च नविजानामि ' (४.१०.५) इति उपकोसलप्रश्नानन्तर ' यद्वाव क तदेव खम् ' इति प्रतिवचनेन निर्णयेन प्राणो ...

## श्रीभाष्यम्

अस्यायमभिप्रायः—न तावत्प्राणादिप्रतीकोपासनमग्निभिरभिहितम् जन्मजरामरणादि भवभयभीतस्य मुमुक्षोर्ब्रह्मोपदेशाय प्रवृत्तत्वात्। अतो ब्रह्मैवोपास्यमुपदिष्टम्। तत्र प्रसिद्धैःप्राणादिभिस्समानाधिकरणं ब्रह्म निर्दिष्टम्; तेषु च प्राणविशिष्टत्वं जगद्विधरणयोगेन वा प्राणशरीरतया प्राणस्य नियन्तृत्वेन वा ब्रह्मण उपपद्यत इति 'विजानाम्यहं यत्प्राणोब्रह्म (४.१०.५) इत्युक्तवान् तथा सुखाकाशयोरपि ब्रह्मणः शरीरतया तन्नियाम्यत्वेन विशेषणत्वम्; उतान्योन्यव्यवच्छेदकतया निरतिशयानन्दरूपब्रह्मस्वरूपसमर्पणपरत्वेन वा तत्र पृथग्भूतयोदशरीरतया विशेषणत्वे वैषयिकसुखभूताकाशयोर्नियामकत्वं ब्रह्मणस्यादिति स्वरूपावगतिर्न स्यात् अन्योन्यव्यवच्छेदकत्वेऽपरिच्छिन्नानन्दैकस्वरूपत्वं ब्रह्मणस्स्यादित्यन्यतरप्रकारनिर्दिधारयिषया 'कं च तु खं च नविजानामि' [४.१०.५] इत्युक्तवान्। उपकोसलस्येममाशयं जानन्तोऽग्नयः 'यद्वाव कं तदेव खं यदेव खं तदेव कम्' (४.१०-५) यूचिरे। ब्रह्मणस्सुखरूपत्वमेवापरिच्छिन्नमित्यर्थः। अतः प्राणशरीरतया प्राणविशिष्टं यद्ब्रह्म

## श्रुतप्रकाशिका

ज्ञातत्वं 'कं च खं च' इत्यस्याज्ञातत्व नोपपद्यते दृष्टिविधित्वेन सर्वस्य ज्ञातत्वादिति भावः। 'प्राणो ब्रह्म' इत्यस्य ज्ञातत्वे अन्यस्य ज्ञातत्वे च किं वैषम्यम् आकाशस्य सुखविशिष्टत्वं च कथमित्यपेक्षाया 'विजानाम्यहम्' इतिवाक्यस्याभिप्रायं विवृणोति अस्यायमिति। नतावदित्यादि। मुमुक्षोरुपदिष्टत्वात् प्रतीकोपासनव्युदासः मुमुक्षोःप्रतीकोपासनं नकर्तव्यमिति ज्ञानं पूर्वमेव संभवति, यथा मुमुक्षूपास्य ब्रह्मेति ज्ञान संभवति तद्वत्। शरीरवाचिशब्दस्य शरीरिपर्यन्ताभिधायित्वं च देवमनुष्यादिशब्देषु व्युत्पन्नमेव तथेत्यादि शरीरं च नियाम्यमिति लोकसिद्धत्वात् ज्ञातमेव 'यदेष आकाश आनन्दः' इत्यादिश्रुतिषु ब्रह्मशब्देन विनाऽप्याकाशशब्दस्यानन्दविशेषणत्वेन प्रयोगदर्शनात्तस्य च महत्त्वोपस्थानेनैवानन्दाविशेषणत्वोपपत्तेः ब्रह्मणोऽपरिच्छिन्नसुखरूपत्वप्रतीतिसंभवादेव विचार उपपद्यत इति भावः॥

उपकोसलेत्यादि। 'यद्वाव कं तदेव खं यदेव खं तदेव कम्' इत्यत्र न दृष्टिविधित्व शङ्कनीयम्, तथा सति 'कं चतु खं च नविजानामि' इत्यस्योत्तरत्वायोगात्। नह्यर्थान्तरदृष्टिविद्धयज्ञानस्य दृष्टिविध्यन्तरमुत्तर भवतीत्यभिप्रायः। एव 'कं चतु खं च न विजानामि' इत्यज्ञानवचनान्मुमुक्षोरुपदिष्टत्वादर्थान्तराज्ञान प्रति दृष्टिविध्यन्तरस्योत्तरत्वायोगाच्च। 'यद्वाव कम्' इत्यादिवाक्यस्य दृष्टिविधिपरत्वानुपपत्तेरन्योऽन्यव्यवच्छेदपरत्वं स्थितम्। 'अस्मद्विद्यात्मविद्या च' इति अग्नीना वचने पूर्वप्रकृतविद्यायाः आत्मविद्यात्वावगमाच्च ब्रह्मणो दृष्टिविशेषणत्वशङ्का निरस्ता। तथा सत्यस्य वाक्यार्थमाह—ब्रह्मण इति। निगमनवाक्यस्यार्थमाह—अतइति। उक्तहेतुभिर्दृष्टिविधित्वायोगात् 'यद्वाव कम्' इत्यादिवाक्ये कं खम् इति शब्दयोरन्योन्यव्यवच्छेदकत्वेनापरिच्छिन्नसुखरूपब्रह्मपरत्वादुपसंहारस्योक्तक्रमानुगुण्यस्य न्याय्यत्वात् 'प्राणं च' इत्युपसंहारवाक्यमुक्तार्थपरमित्यर्थः। 'प्राणं च' इति 'प्राणं ब्रह्म' इत्युक्तार्थस्य निगमनम् 'तदाकाशं च' इति 'यद्वाव कम्' इत्यादिवाक्यार्थनिगमनम्। 'तदाकाशम्' इत्यत्र प्रकृतपरामर्शिना तच्छब्देन सुखरूपत्वमभिप्रेतम्। कखयोरन्योऽन्यव्यवच्छेद्यव्यवच्छेदकत्वे विशेषणयोरन्यो यविशेषण विशेष्यभावस्याप्रामाणिकत्वात्तत्रानिष्टत्वम् अत्रतु प्रामाणिकत्वात् नानिष्टत्वमिति भावः, 'कं ब्रह्म खं ब्रह्म' इति वाक्यं प्रतिपाद्यं न सुखविशिष्ट ब्रह्मेति शङ्कापरिहारार्थंहि 'अत एव च सब्रह्म' इति सूत्रस्योत्थान तस्याश्शङ्काया अनेन

श्रीभाष्यम्

तदेवापरिच्छिन्नसुखरूपंचेति निगमितम् ' प्राणं हास्मै तमाकाशं चोचुः ' इति । अतः ' कं ब्रह्म खं ब्रह्म ' [४ १०·५] इत्यत्रापरिच्छिन्नसुखं ब्रह्म प्रतिपादितमिति परं ब्रह्मैव तत्र प्रकृतम् तदेव चाक्ष्याधारतयाऽभिधीयत इत्यक्ष्याधारः परमात्मा ॥

## सू=१७ श्रुतोपनिषत्कगत्यभिधानाच्च [१.२.१७)

श्रुतप्रकाशिका

परिहृतं दर्शयति अतःकंब्रह्मेति । ' यद्वाव कम् ' इत्यादिवाक्यस्यापरिच्छिन्नसुखरूपब्रह्मपरत्वान्निगमनवाक्यस्यापि तदनुगुणार्थत्वात् ' कं ब्रह्म खं ब्रह्म ' इति वाक्ये ब्रह्मैव प्रकृतमित्यर्थः । ततः किमक्षिपुरुषस्य परमात्मत्वइति शङ्काया सूत्रार्थस्याधिकरणार्थोपपादकत्वं दर्शयति तदेवचेति । अन्यथा वाक्यभेदश्च प्रसजेत् सम्भवत्येकवाक्यत्वे वाक्यभेदोऽनुपपन्नइति भावः इतीति । ' कं ब्रह्म ' इति प्रकृतस्यैवाक्ष्याधारत्वप्रतिपादनादक्षिपुरुषः परमात्मेत्यर्थः ॥

## सू–१७ श्रुतोपनिषत्कगत्यभिधानाच्च (१.२.१७)

गूढार्थसंग्रहः

इत्यत्र तादृशप्रश्नप्रतिवचनयोरभावेन विजानीयार्थ एव ग्राह्य इति ख्यापनार्थेवेत्यर्थः सः प्राण कं खं पुरुषशब्दाभिधेयः ब्रह्म परं ब्रह्म ' प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म ' ' स एनान् ब्रह्म गमयति ' इति सर्वत्रापि परं ब्रह्मैवेत्यर्थः । अपरिच्छिन्नसुखरूपब्रह्मणो यदा विवक्षा तदाऽपरिच्छिन्नसुखरूपं ब्रह्म शुद्धमेव परं ब्रह्म नापरमिति अपरिच्छिन्नसुखरूपस्य ब्रह्मणः अग्न्युपदेशवाक्ये विद्याशेषाचार्योपदिष्टगतिवाक्येऽपि विवक्षितत्वेन ज्ञानोपासनयोः तत्वातत्वविषयकत्वेन भेदकल्पनमेतेन सूत्रकृता श्रुत्याशयविरुद्धमिति दर्शितं भवति ॥

एतेन ' स एनान् ब्रह्मगमयति ' इत्यत्र ब्रह्मशब्दार्थश्चतुर्मुखः गत्या चतुर्मुखसमीपगमनम् । गत्युक्तिः क्रममुक्त्यर्थेति परेषां कल्पना सूत्रकृता निरस्ता भवति । ब्रह्मशब्दानां सर्वेषामेकार्थत्वस्यैव युक्तत्वात् । अन्नत्यानां ब्रह्मशब्दानां सर्वेषामर्थः ' सब्रह्म ' इत्यत्र विवक्षितः । तेन ' स एनान् ब्रह्मगमयति ' इत्यत्र ब्रह्मशब्दस्यापि पूर्वोक्तब्रह्मशब्दसमानार्थकत्वमेव । एतद्विद्यायाः अपरिच्छिन्नानन्दरूपब्रह्मविषयत्वेन सगुणनिर्गुणविभागस्यानुचिततया आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत् ' (४.९.३) इति श्रुत्यर्थस्य सर्वविद्यासु विवक्षिततया ब्रह्म अपरिच्छिन्नानन्दरूपमेवेति परेषां परापरब्रह्मविद्याविभागः सगुणनिर्गुणविभागपर्यवसितः श्रुतितात्पर्याविषय इत्येतेन निर्धारितं भवति ॥

' श्रुतोपनिषत्कगत्यभिधानाच ' ' अतएव च सब्रह्म ' इति सूत्रे ध्यानज्ञानयोः तत्वातत्वविषयकत्वासिद्धान्तस्य निरासेन ध्यानस्यापि दर्शनरूपतया विषयवाक्ये प्रतिपादनेन इन्द्रप्राधिकरणमारभ्य पूर्वाधिकरणेषु उपासनस्यैवाभिधानेन उपनिषत्सु सर्वासु ध्यानमेव विवक्षितमिति सिद्धया तदनुरोधेन फलद्वैविध्यकल्पनमसंमतमित्याशयेन औपनिषदविद्यानिष्ठानां सर्वेषामुत्क्रान्त्यनन्तरफलं एकरूपमेव विवक्षितमिति प्रदर्शनायेदं सूत्रम् । अस्यां विद्यायामुपनिषच्छब्दो नास्ति अथापि ' आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत् ' इति वाक्यं वर्तते । इदं च वाक्यं नैतद्विद्यामात्रविषयं इतरवि-

## श्रीभाष्यम्

श्रुतोपनिषत्कस्य अधिगतपरमपुरुषयाथात्म्यस्यानुसन्धेयतया श्रुत्यन्तरप्रतिपाद्यमाना आर्चिरादिका गतिर्या तामपुनरावृत्तिलक्षणपरमपुरुषप्राप्तिकरीमुपकोसलायाक्षिपुरुषं श्रुतवते 'तेऽर्चिषमभिसम्भवन्त्यर्चिषोहरह्न आपूर्यमाणपक्षम्' (छां.४.१५.५) इत्यारभ्य 'चन्द्रमसो विद्युतं तत्पुरुषोऽमानवस एनान्ब्रह्म गमयत्येष देवपथो ब्रह्म पथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' (४.१५.५) इत्यन्तेनोपदिशति। अतोऽप्ययमक्षिपुरुषःपरमात्मा॥

## श्रुतप्रकाशिका

श्रुतोपनिष्कस्येति व्याख्येय पदम्। समस्तमपि व्याख्यानार्थं ह्यस्य निर्दिष्टम्। उपनिषत्सु प्रतीकोपासनानामर्चिरादिगतिरहितानामपि विद्यमानत्वात्तद्व्यावृत्त्यर्थं व्याचष्टे अधिगतेति। परमपुरुषशब्देन 'तंत्वौपनिषदं पुरुषं विद्धि' इति श्रुतिस्स्मारिता। उपासनफलमर्चिरादिगतिः नतु श्रवणफलं तत्कथं श्रुतोपनिषत्कगत्युक्तमित्यत्राह–अनुसन्धेयतयेति। तर्हि श्रुतब्रह्मण इति वक्तव्ये किमिति साधारणाधिकाक्षरश्रुतोपनिषत्कपदोपादानमित्यत्राह—श्रुत्यन्तरप्रतिपाद्यमानेऽपीति छान्दोग्य एव प्रदेशान्तरे 'तद्य इत्थं विदुर्येचेमेऽरण्ये श्रद्धातपः' इत्युपासते तेऽर्चिषमभिसंभवन्तीत्यादिः वाजसनेयके–'यएवमेतद्विदुर्येचामी अरण्ये श्रद्धां सत्यम्' इत्युपासते तेऽर्चिषमभिसंभवन्तीत्यादिः। कौषितकीनां पर्यङ्कविद्यायां 'सोऽग्निलोकमागच्छति' तामभिप्रतिपाद्यमानेत्यर्थः। गतिचिन्तनस्य ब्रह्मविद्याङ्गत्वज्ञापकश्रुत्यन्तरज्ञापनार्थं श्रुतोपनिषत्कव्यपदेश इत्यभिप्रायः। अक्षिपुरुषस्याब्रह्मत्वे तत्क्रतुनयविरोध इत्यभिप्रायेणाह–अपुनरावृत्तीति। 'अर्चिषमेव' इत्यतःपूर्वं 'अथ यदुचास्मिन् शव्यं कुर्वन्ति यदुच न' इति वाक्यं तत्रास्मिन् इत्येकवचनं जात्यभिप्रायम् 'तेऽर्चिषम्' इति बहुवचनानुरोधात्। पञ्चाग्निविद्योक्ता गतिरिहानूदिता अपुनरावृत्तिविधानार्थम्

## गूढार्थसंग्रहः

द्याविषयेऽपि एतद्वाक्यस्य सर्वैरपि विनियोगात्। आचार्याद्विदिता इत्यर्थ एव श्रुतशब्देन बोधितः। इत्थं च श्रुतोपनिषत्कशब्दः ब्रह्मविद्यासामान्यविषयः॥

वेदान्तवाक्येषु परापरविद्यात्वेन परसम्मतासु सर्वास्वपि दर्शनं प्रतिपादितम्। 'यएषोऽक्षिणि पुरुषो दृश्यते' 'य एषोऽन्तरादित्ये पुरुषो दृश्यते' इत्यादिपरसंमतसगुणविद्यावाक्ये 'दृश्यतेत्वग्र्यया बुद्ध्या' 'आत्मा वा अरे द्रष्टव्यः' 'परात्परं पुरिशयं पुरुषमीक्षते' 'तद्विज्ञानेन परिपश्यन्ति धीराः' 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति परसम्मतनिर्गुणविद्यावाक्येषु 'पुरुषमीक्षते' इत्यत्र 'परं पुरुषमभिध्यायीत' इति ध्यानम्, 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यत्र 'निदिध्यासितव्यः' इति 'तद्विज्ञानेन' इत्यत्र 'ओमित्येवात्मानं ध्यायथ' इति ध्यानं प्रतिपादितमिति सर्वत्र ध्यानोक्त्या ध्यानानन्तरसमाधौ दर्शनमेव सर्वत्र विवक्षितम्। सगुणनिर्गुणविद्याभ्यासश्च सर्वथाऽप्रामाणिकः। 'शतंचैका च' इति श्रुतिः परसम्मतनिर्गुणविद्यायां सगुणविद्यायां च वर्तते। 'हार्दानुगृहीतः' इति सूत्रकारोऽपि वक्ष्यति। तत्र कठवल्ल्युक्तनिर्गुणविद्यानिष्ठस्य गतिर्नास्त्येवेति कल्पनमसम्मतमेव। सद्विद्यायामेव उत्क्रान्तेः कथनात् उत्क्रान्तिपादे तद्वाक्यस्यैव विषयत्वात् सूत्रकाराभिमतत्वस्य परसंमतत्वेऽपि सद्विद्यानिष्ठस्य नोत्क्रान्तिरिति कल्पनवत् इदं कल्पनमप्यप्रामाणिकम्।

श्रीभाष्यम्

## सू–१८ अनवस्थितेरसम्भवाच्च नेतरः (१.२.१८)

प्रतिबिम्बादीनामक्षिणि नियमेनानवस्थानादमृतत्वादीनां च निरुपाधिकानां तेष्वस-

श्रुतप्रकाशिका

## सू—१८ अनवस्थितेरसम्भवाच्च नेतरः [१.२.१८]

अनवस्थितेरिति पद व्याचष्टे प्रतिबिम्बादीनामिति । असम्भवादिति पद व्याचष्टे अमृतत्वादीनामिति । असम्भवादित्यनेन अन्तरउपपत्तेरिति सूत्रार्थस्य व्यतिरेक उक्तः । अनवस्थितेरित्यनेन स्थानादिव्यपदेशाच्च इति

### गूढार्थसङ्ग्रहः

उपनिषच्छब्दः ब्रह्मविद्यावाचक इति सर्वसमतम् । 'आचार्याद्धैव विदिता विद्या साधिष्ठं प्रापत्'(छां.४.९.३)इति ब्रह्मविद्याया. विशेषस्यानैवोक्ते.। विद्य प्रतिपादकग्रन्थेऽपि उपनिषच्छब्द.प्रयुज्यत ग्रन्थश्रवण ग्रन्थार्थश्रवणमेव। श्रुतोपनिषत्केति सामान्यनिर्देशेन ब्रह्मविद्यासामान्यनिष्ठो विवक्षित' 'तत्त्वौपनिषद पुरुषम्' 'विज्ञानमानन्द ब्रह्म' इति श्रुत्यैकार्थ्येन 'क ब्रह्म ख ब्रह्म' 'यएषोऽक्षिणि पुरुषो दृश्यत' 'एतद्ब्रह्म' इत्यत्रौपनिषदपुरुषश्रवणमेव विवक्षितमिति ब्रह्मविद्यासामान्य· निष्ठ श्रुतोपनिषत्कशब्दार्थः । एतेन ब्रह्मविद्यासामान्यनिष्ठस्य गत्यभिधानमत्र विवक्षितम् गतेरपुनरावृत्तिपर्यवसितत्वेन चशब्देनापुनरावृत्तिपर्यवसानमपि समुच्चीयते। अत्र पुरुषशब्दस्य बृहदारण्यकोक्त निर्वचनपर्यालोचनाया दयामूलका गतिरिति प्रतीयते, एतदर्थतात्पर्येण श्रुतोपनिषत्केत्यत्र 'अनुकम्पायाम्' (५.३.७६) इत्यनुकम्पायामेव कन् 'हार्दानुगृहीतश्शताधिकया' (४.२.१६) इति वक्ष्यमाणसूत्रपर्यालोचनाया अनुकम्पायामत्र कन् सूत्रकृतो विवक्षितइति निर्णयस्सम्भवति। अन्तर्यामिब्राह्मणोक्तमन्तर्यामित्व दयामूलकमिति पूर्वमेव बहुश निरूपितम्। अन्तरउपपत्ते. स्थानादिव्यपदेशाच्च इ युक्तया अन्तर्यामिब्राह्मणार्थोऽत्र विवक्षित इति स्फुट सूत्रकृदाशयः । अतएव कठोपनिषदि छान्दोग्ये दहरविद्याया 'शत चैका च' इति श्रुतेः पाठः सङ्गच्छते । 'क ब्रह्म ख ब्रह्म' इत्यग्न्युपदेशवक्यार्थः आचार्यादेवाग्निभि. श्रुतः सएव प्रथममुपदिष्ट. । अनन्तरमाचार्येण संयद्वाम वामनीभामनीत्यादिगुणानामुपास्यस्थानस्य गतिद्वारा ब्रह्मप्राप्तेश्च प्रतिपादनेन गतिद्वारा प्राप्य ब्रह्म पर ब्रह्मैव नत्वपर ब्रह्मेति निर्धारणेन 'आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्' इति सम्यक्प्रतिष्ठापितं भवति। ब्रह्मविद्यासामान्यनिष्ठस्य गतेरविवक्षितत्वे पदान्तर विहाय श्रुतोपनिषत्कइति निर्देशएव व्यर्थस्स्यात् अतो न्यायान्तर उक्तार्थोऽनुपादेयः ॥

अनवस्थितेरसम्भवाच्च नेतर.। 'अन्तर उपपत्ते'। 'स्थानादिव्यपदेशाच्च'। इत्यत्रोक्तार्थ एव व्यतिरेकेणात्र दृढीक्रियते । अत्र स्थितेरसम्भवाच्च इत्यनभिधाय अनवस्थितेरित्युक्तया स्थितिविशेषव्यतिरेकएव विवक्षितः । 'यश्च क्षुषि तिष्ठन्' इत्यादौ नियमनार्थस्थितेरेवाभिधानेन स्थानादीत्यत्रादिपदेन नियमनस्य विवक्षिततया च तादृशस्थितिरेव अत्रे युपसर्गेण सूत्रकृतो विवक्षिता । स्थानादीति पूर्वनिर्देशात् अत्रानवस्थाशब्दस्याप्रयोगेण अनवस्थितिशब्दस्यानवस्थापरत्व नव्यसम्मत सूत्रकृतो नविवक्षितमिति प्रतीयते ॥

इति अन्तराधिकरणम्

### श्रीभाष्यम्

म्भवाच्च परमात्मन इतरः छायादिःअक्षिपुरुषो भवितुमर्हति। प्रतिबिम्बस्य तावत्पुरुषान्तरसन्निधानायत्तत्वाच्च नियमेनावस्थानासम्भवः। जीवस्यापि सर्वेन्द्रियव्यापारानुगुणत्वाय सर्वेन्द्रियकन्दभूते स्थानविशेषे वृत्तिरिति चक्षुषि नावस्थानम्। देवतायाश्च 'रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः' (बृ.७.५.१०) इति रश्मिद्वारेणावस्थानवचनाद्देशान्तरावस्थितस्यापीन्द्रियाधिष्ठानोपपत्तेर्न चक्षुष्यवस्थानम्। सर्वेषामेवैषां निरुपाधिकामृतत्वादयो न सम्भवन्त्येव। तस्मादक्षिपुरुषः परमात्मा ॥

### इति अन्तराधिकरणं समाप्तम्

### श्रुतप्रकाशिका

सूत्रार्थस्य व्यतिरेको दर्शितः। इतरसूत्रोक्तहेतूनां व्यतिरेकोपपादनानपेक्षत्वाद्व्यतिरेकश्चार्थसिद्ध इति वा व्यतिरेको न प्रदर्शितः। अवस्थानासम्भवौ प्रतिबिम्बादिषु दर्शयति प्रतिबिम्बस्येत्यादिना। सर्वेन्द्रियकन्दभूते स्थानविशेषइति। हृदीत्यर्थः। 'शतचैका च हृदयस्य नाड्य' 'सन्ततं सिराभिः' इत्युक्तप्रकारेण हृदयसम्बन्धनाडीसम्बन्धानीत्यर्थः एवंविधे हृदि जीवस्यावस्थानम् 'हृदिह्ययमात्मा' इति श्रुतेरवगम्यते ॥

ननु नेत्रस्थं जाग्रतं विद्यात् कंठे स्वप्नं विनिर्दिशेत्। सुषुप्तं हृदयस्थं तु तुरीयं मूर्धनि स्थितम् ॥ इति श्रुत्या जीवस्य जागरावस्थाया नेत्रस्थितिरुच्यते नचेयं श्रुतिः परमात्मविषया तस्य जागरस्वप्नसुषुप्त्यसम्भवात्। उच्यते नेत्रशब्दः सर्वेन्द्रियप्रदर्शनार्थः जाग्रतमित्युक्तत्वात् तदानीं सर्वेन्द्रियव्यापारदर्शनात् अणुपरिमाणस्य जीवस्य नेत्रमात्रस्थितिवेसति शब्दादिज्ञानानुपपत्तेः तत्र च स्थितत्वं नाम अधिष्ठातृत्वमात्रमुपलक्ष्यम् अधिष्ठानस्यापि स्थाधारत्वन्तर्भूतत्वात्। अणोस्तस्य युगपदेव तत्तदिन्द्रियाधिष्ठानानुपपत्तौ पश्यतश्शृण्वतो वा गमनादानोचितपादपाण्याद्यधिष्ठानानुपपत्त्या सर्वेन्द्रियकन्दभूते हृदि स्थितस्य धर्मभूतज्ञानप्रसरणद्वारेणाधिष्ठातृत्वमिति 'नेत्रस्थं जाग्रतं विद्यात्' इति श्रुतेरर्थ इत्यभिप्रायेण सर्वेन्द्रियकन्दभूत इत्युक्तम्। कण्ठे स्वप्नमिति कण्ठशब्दश्च कण्ठसमीपवर्तिनाडीविशेषपरः 'आसु तदा नाडीषु सुप्तो भवति' इति नाडीनां स्वप्नस्थानत्वश्रुत्यविरोधात्। इयं च श्रुतिस्स्वप्नविषया 'यदा सुप्तस्स्वप्नं नकथञ्चन पश्यति अथास्मिन्प्राण एवैकधा भवति' इत्यनन्तरवाक्यस्य सुषुप्तिस्थानपरत्वात्। हृदयस्थमिति हृदयशब्दो हृद्गतपरमात्मपरः 'सता सोम्य तदा सम्पन्नो भवति' इति परमात्मनस्सुषुप्तिस्थानत्वावगमात् तत्र च सच्छब्दो हृदयस्थपरमात्मपरः 'आभि प्रत्यवसृप्य पुरीततिशेते' इति सुषुप्तौ हृदयागमश्रवणात्। तुरीयशब्द उत्क्रान्त्यवस्थजीवपरः 'तासां मूर्धानमभिनिस्सृतैका। तयोर्ध्वमायन्' इति चरमशरीरोत्क्रान्तावेव मूर्धसम्बन्धश्रवणादस्यान्तरे स्थानाभावाच्च। अतो जीवस्य चक्षुष्यनवस्थितिरुपपद्यते रश्मिद्वारेणेति। सद्वारादिद्वारकप्रासादशयनवद्रश्मिद्वारक चक्षुष्यवस्थानमित्यर्थः चक्षुष्यवस्थानं नाम चक्षुस्सम्बन्धित्वम्। यद्वा यथा विद्यानिष्ठद्युक्ते तद्वशीकार उक्तस्स्यात् तथा चक्षुष्यवस्थानमपि तद्वशीकरणं तन्नियमनं तच्च तद्द्वारक अतो नावस्थितिरित्यर्थः। असम्भवमाह–सर्वेषामिति। जीवानां परमात्मोपासनेनाभयत्वामृतत्वादयो भवन्तीति तद्व्यावृत्त्यर्थं निरुपाधिका इत्युक्तम्। अधिकरणार्थं निगमयति तस्मादिति।

'अन्तर' इति सूत्रे स्ववाक्यस्थहेतुरुक्तः श्रुत्यन्तरप्रदर्शनमुखेन स्ववाक्यस्थशङ्कापरिहारपरं द्वितीयसूत्रम्। स्ववाक्यस्थ

## श्रुतप्रकाशिका

छायां परिहृताया प्राकरणिकपूर्ववाक्येन परमात्मपरत्वोपपादकं तृतीयम् । पूर्ववाक्यस्य ब्रह्मपरत्वोपपादकं चतुर्थम् । ततः पाश्चात्यवाक्येन साध्योपपादकं पञ्चमम् । षष्ठं तु साध्यद्रढिम्ने पूर्वसूत्रद्वयोक्तहेतुव्यतिरेकप्रदर्शकमिति सूत्रसङ्गतिः ॥

यादवप्रकाशीयैस्तु—'अन्तरउपपत्तेः' इत्यादिसूत्रत्रयं छायापुरुषव्युदासपरं योजितम् । ततोऽपि प्रतिबिम्बस्य जीवस्य च व्युदासपरत्वं युक्तम् । अमृतत्वाभयत्वादीनां सर्वव्यावर्तनक्षमत्वात्तथाऽभ्युपगमाच्च । 'अतएव च सब्रह्म' इति सूत्रस्य च वैयर्थ्यं प्रसजेत् अतएव छायानिराकरणहेतुभिरेव जीवोऽपि न भवतीतिहि योजितम् । पूर्वोक्तहेतवो जीवव्यावर्तनसमर्थाः नवा नचेत्तैरक्षिपुरुषस्य परमात्मत्वसाधनमनुपपन्नम् । तद्व्युदाससमर्थाश्चेत् तद्धेतूपादानादेव जीवव्यावृत्तिः सिद्ध्यतीति तदनुवादेन परमात्मत्वसाधनाय सूत्रान्तरप्रणयनवैयर्थ्यमेव स्यात् 'प्राणो ब्रह्म' इत्यादिवाक्यस्य दृष्टिविधिपरत्वव्युदासेन सुखविशिष्टब्रह्मपरत्वसमर्थनं चापेक्षितम् । अपेक्षितविधेरनपेक्षितविधानं च दुर्बलम्, किञ्च यथेक्षत्यधिकरणादिषु 'नाशब्दम्' 'आनन्दमय.' 'अन्त' इति च परमात्मत्वं साध्यं प्रतिज्ञायते तथा तच्छेषभूतव्यतिरेकप्रतिज्ञानं क्वचिन्क्रियते यथा 'नानुमानम्' इति अवान्तरशङ्काविशेषपरिहारः क्वचित् प्रतिज्ञायते यथा—'विकारशब्दान्नेतिचेन्न' इति । अतोऽस्मिन्नधिकरणे 'अन्तरउपपत्तेः' इति सूत्रएव परमात्मत्वसाध्यप्रतिज्ञा यथा 'अन्तस्तद्धर्मोपदेशात्' 'आकाशस्तल्लिङ्गात्' 'प्राणस्तथाऽनुगमात्' इत्यादिष्वादित्यान्तर्वर्त्याकाशप्राणादीनुद्दिश्य परमात्मत्वं प्रतिज्ञातम् एवमन्तरशब्दमुद्दिश्य परमात्मत्वं प्रतिज्ञातमितिहि स्वरसतः प्रतीयते अतो ब्रह्मणः प्रतिप्रतिपाद्यत्वं न पुनः प्रतिज्ञातव्यम् । इह च परमात्मत्वसाध्योपपादकतयोदाहृतस्य पूर्ववाक्यस्य परमात्मत्वशैथिल्ये शङ्किते तत्परिहाराय पूर्ववाक्यप्रतिपाद्यस्य परत्वं प्रतिज्ञायते चेद्युज्यते प्रयोजनवत्त्वात् । तदभावात् पुनःप्रतिज्ञानं त्वन्मते विफलम् 'अन्तर' इत्यात्ममात्रं प्रतिज्ञातं न परमात्मेतिचेत् न सूत्रशैलीविरुद्धत्वादमृतत्वादिधर्माणां जीवव्यावर्तनक्षमत्वाच्चानुपपन्नं सुखविशिष्टस्येह प्रत्यभिज्ञानानुपपत्तिपरिहारपरम् अतएव च इति सूत्रमिति चेन्न 'सुखविशिष्टाभिधानादेव च' इति सूत्रेणैव पूर्वत्रचात्र च ब्रह्मसद्भावनादीनां तत्प्रत्यभिज्ञोपपत्तीनां विवक्षितत्वात् । नहि न्यायनिबन्धनात्मकं सूत्रं प्रतिज्ञामात्रपरम् । छायापुरुषनिराकरणहेतुतयोक्तानाममृतत्वाभयत्वादीनां अक्षिपुरुषे सुखविशिष्टब्रह्मप्रत्यभिज्ञापकत्वायोगात् प्रत्यभिज्ञानुपपत्तिपरिहारपरत्वमयुक्तम्, प्रत्यभिज्ञोपपादनप्रकारश्चानुपपन्नः । पूर्ववाक्ये 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इति प्राणस्य सुखविशिष्टाकाशस्य चोक्तत्वात् श्रुत्यन्तरे दक्षिणवामयोरक्ष्णोरिन्द्रशब्दवाच्यस्य प्राणस्य तत्पत्न्याश्च स्थित्यवगमात् वाक्छक्तिरूपपरमाकाशपत्नीकः प्राणोऽयमक्षिपुरुषः पूर्ववाक्योक्तः प्रत्यभिज्ञायत इति ह्युक्तम् । वाङ्मयाशतस्य प्राणस्य वाङ्मयपत्नीकत्वायोगादिति श्रुतिव्याकोपस्य ज्योतिरधिकरणे दर्शिततयाऽस्यार्थस्यानुपपन्नत्वं स्फुटम् ॥

किञ्च इयं तावत् सूत्रकारशैली यत्सर्वेष्वधिकरणेषु एकस्मिन्नेव सूत्रे परमसाध्योऽर्थः प्रतिज्ञायते 'स्थानादिव्यपदेशाच्च' इतीदमपि 'यएषोऽन्तरक्षिणि पुरुषो दृश्यत' इति श्रुतौ चक्षुष्यवस्थानपरिदृश्यमानत्वव्यपदेशात् परमात्मत्वसाधकमिति व्याख्यातं ततोऽप्यन्तर्यामिब्राह्मणविषयतया व्याख्यानं युक्तम् । उपजीवकवाक्यादप्युपजीव्यवाक्यप्राबल्यात् 'यएषोऽन्तरक्षिणि' इति वाक्यं ह्यन्तरादित्यविद्यातुल्ययोगक्षेमम् तत्र च देहविशेषयोगाधीनजीवत्वशङ्का निरस्ता । अतस्तत्रापि प्रसिद्धवन्निर्देशदृश्यत्वव्यपदेशाभ्यां जीवविषयत्वे शङ्किते अन्तर्यामिब्राह्मणादिकमेव शरणम् । अत एवह्यादित्यान्तर्वर्तिनो जीवादन्यत्वसिद्धये 'भेदव्यपदेशाच्चान्य.' इति सूत्रं तद्विषयं प्रणीतम् । तत्र च नियन्तृत्वादिभिः परमात्मत्वं स्फुटम् । अत उपजीव्यवाक्यविषयतया व्याख्यानं युक्तम् । अन्तराधिकरणं अन्तर्यामिणः परमात्मत्वस्य

### श्रुतप्रकाशिका

घनं चास्य सूत्रस्यान्तर्यामिब्राह्मणविषयतां द्योतयति प्रयुक्तेऽर्थे असिद्धिशङ्कापरिहारो हि यौक्तिकशैली । न च वाच्यं त्वदुदाहृतवाक्यमप्युपपाद्यत्वाद्दुर्बलमिति । तस्य वाक्यान्तरोपजीव्यत्वाभावात् तत्त्वत्वनुग्राहकन्यायमात्रापेक्षम् । अतो न्यायानुगृहीतवाक्यान्तरसापेक्षवाक्यविषयत्वाद्वाक्यान्तरनिरपेक्षवाक्यविषयत्व परम् । 'श्रुतोपनिषत्कगत्यभिधानाच्च' इत्यत्राक्षिपुरुषविद्याया गतिचिन्तनानुवादेन तदङ्गत्वमुच्यत इत्युक्तम् । तदप्ययुक्तम्, अक्षिपुरुषस्य परमात्मत्वनिर्णयात् परमात्मोपासनस्यानुष्ठेयान्तरं प्रत्यङ्गत्वायोगात् गतिचिन्तनस्य सर्वपराविद्याङ्गत्वाच्च । गत्यनुवादस्य प्रयोजनं त्वपुनरावृत्तिविधानमित्युक्तम् । नत्वङ्गान्तरविधानम् । अतो यथोक्तार्थपराण्येव सूत्राणि ॥

इति अन्तराधिकरणं समाप्तम्



अथ वेदान्तसारः

## सू—१३ अन्तर उपपत्तेः (१.२.१३)

'य एषोऽन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्म' (छा.४.१५.१) इत्यत्र अक्ष्याधारः परमपुरुषः निरुपाधिकामृतत्वाभयत्वसंयद्वामत्वादीनामस्मिन्नेवोपपत्तेः ॥

## सू—१४ स्थानादिव्यपदेशाच्च [१.२.१४]

'यश्चक्षुषि तिष्ठन्' (बृ.५.७.१८) इत्यादिना स्थितिनियमनादिव्यपदेशाच्चायं परः ॥

## सू—१५ सुखविशिष्टाभिधानादेव च १.२.१५

'कं ब्रह्म खं ब्रह्म' (छा.४.१०.५) इति पूर्वत्रास्यैव सुखविशिष्टतया अभिधानाच्चायं परः ॥

## सू—१६ अत एव च स ब्रह्म (१.२.१६)

यतस्तत्र भवभीताय उपकोसलाय ब्रह्मजिज्ञासवे 'कं ब्रह्म खं ब्रह्म' (छा.४.१०.५) इत्युपदिष्टः 'यद्वाव कं तदेव खम्' (४.१०.५) इति सुखरूपः अतस्सुखशब्दाभिधेय आकाशः परमेव ब्रह्म ॥

## सू—१७ श्रुतोपनिषत्कगत्यभिधानाच्च [१.२.१७)

श्रुतब्रह्मस्वरूपाणामधिगन्तव्यायाः अर्चिरादिगतेरक्षिपुरुषं श्रूयते 'तेऽर्चिषमेवाभिसंभवन्ति' (छा.४.१५.५) इत्यादिनाऽभिधानाच्चायं परमपुरुषः ॥

## अनवस्थितेरसम्भवाच्च नेतरः १.२.१८

परस्मादितरो जीवादिर्नाक्ष्याधारः चक्षुषि नियमेन अनवस्थितेः अमृतत्वाद्यसम्भवाच्च ॥

इति वेदान्तसारः

अथ वेदान्तदीपः

## सू—१३ अन्तर उपपत्तेः (१२..१३)

छान्दोग्ये–'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्म' (छा.४.१५.१) इत्यक्ष्याधारः पुरुषः किं प्रतिबिम्बात्मजीवदेवताविशेषान्यतमः ? उत परमात्मेति संशयः । एष्वन्यतम इति पूर्वः पक्षः । कुतः ? 'य एष दृश्यते' इति प्रसिद्धवत्साक्षात्कारनिर्देशात् । राद्धान्तस्तु—परमात्मैवमक्ष्याधारः पुरुषः अक्षिपुरुषसम्बन्धितया श्रूयमाणाद्धि निरुपाधिकात्मत्वामृतत्वाभयत्वब्रह्मत्वसंयद्वामत्वादयः परमात्मन्येवोपपद्यन्ते । प्रसिद्धवन्निर्देशश्च 'यश्चक्षुषि तिष्ठन्' (बृ.५.७.१८) इत्यादिश्रुत्यन्तरप्रसिद्धेरुपपद्यते । साक्षात्कारश्च तदुपासननिष्ठया योगिनाम् । सूत्रार्थस्तु अक्ष्यन्तरः परमात्मा संयद्वामत्वादीनां गुणानामत्रैवोपपत्तेः ॥

## सू—१४ स्थानादिव्यपदेशाच्च [१.२.१४]

स्थान–स्थितिः, परमात्मन एव 'यश्चक्षुषि तिष्ठन्' (बृ.५.७.१८) इत्यादौ चक्षुषि स्थितिनियमनादिना व्यपदेशाच्च परमात्मा ॥

## सू—१५ सुखविशिष्टाभिधानादेव च १.२.१५

'प्राणो ब्रह्म कब्रह्म खं ब्रह्म' (छा.४ १०.५) इति सुखविशिष्टतया प्रकृतस्य परस्यैव ब्रह्मणोऽक्ष्याधारतयोपास्यत्वाभिधानाच्चायं परमात्मा । एवकारोऽस्यैव हेतोर्निरपेक्ष्यावगमाय ॥ 'प्राणो ब्रह्म कब्रह्म ख ब्रह्म' इत्यत्र सुख विशिष्टं परमेव ब्रह्माभिहितमिति कथमिदमवगम्यते ? यावता नामादिवत्प्रतीकोपासनमेवेत्याशङ्क्याह—

## सू—१६ अत एव च स ब्रह्म [१-२.१६]

यतस्तत्र भवभीतायोपकोसलाय ब्रह्मस्वरूपजिज्ञासवे 'कं च तु खं च नविजानामि' (छा.४.१०.५) इति पृच्छते 'यद्वाव कं तदेव खं यदेव खं तदेव कम्' (छा.४.१०.५) इत्यन्योन्यव्यवच्छेदकतया अपरिच्छिन्नसुखस्वरूप मक्षरमभिधाय 'प्राणं च हास्मै तदाकाशं चाचु' (३.१०.५) इत्युक्तम् । अतएव खशब्दाभिधेयस्य आकाशोऽपरिच्छिन्नसुखविशिष्ट ब्रह्मैव ॥

## सू–१७ श्रुतोपनिषत्कगत्यभिधानाच्च (१.२.१७)

श्रुतोपनिषत्कैः अधिगतपरब्रह्मयाथात्म्यैः ब्रह्मप्राप्तये या गतिरर्चिरादिकाऽधिगन्तव्यतयाऽवगता श्रुत्यन्तरे तस्याश्च हाक्षिपुरुष श्रुतवतोऽधिगन्तव्यतया 'तेऽर्चिषमेवाभिसंभवन्ति' (छा.४.१५।५) इत्यादिनाऽभिधानादक्षिपुरुषःपरमात्मा

## अनवस्थितेरसम्भवाच्च नेतरः १.२.१८

परमात्मन इतरजीवादिकः, तस्याक्षिण नियमेनावस्थितेः, अमृतत्वसंयद्वामत्वादीनां चासंभवान्न सोऽक्ष्याधारः ॥

॥ इति वेदान्तदीपे अन्तराधिकरणं समाप्तम् ॥

अथ अधिकरणसारावळी

यद्वृत्तादेर्य एषोऽक्षिणि पुरुषइति श्रूयमाणोऽस्तु जीवो
यद्वाक्ष्णोर्देवताऽर्कः प्रतिकृतिरथवा तत्र दृश्येति चेन्न ।
एतद्ब्रह्मैतदेवामृतमभयमिदं कं खमित्याद्यधीते
स्संयद्वामत्वमुख्यैस्स्थितिनियतिबलादर्चिराद्युक्तितश्च ॥
स्वातन्त्र्योत्तंसितासु श्रुतिषु न फलदस्यैव वेद्यत्ववादः
कल्याणालोनादेरिव विधिबलतो वेदनस्यार्थवत्त्वात् ।
तस्मादक्ष्यन्तरस्थ: प्रतिकृतिपुरुषो युज्यते पूर्वपक्षे
सेयं पूर्वापरास्वप्यधिकृतिषु यथासम्भव नीतिरूह्या ॥
पूर्वन्यायेऽग्निविद्या पुरत उपनता मध्यतस्त्वत्र तस्मा-
त्तद्वत्र ब्रह्मविद्याऽनुगतिरिति भवेदाक्षिविद्या ततोऽन्या ।
मैवं विच्छित्तिरङ्गैर्न हि भवति मिता चाङ्गताऽनेकधाऽस्याः
प्रोक्तं च ब्रह्मविद्याऽनुगुणमिह फलं प्राक्तु न ब्रह्मदृष्टिः ॥

॥ इ ति अ न्त रा धि क र णं स मा प्त म् ॥



अथ अन्तर्याम्यधिकरणम्

श्रीभाष्यम्

'स्थानादिव्यपदेशाच्च' (शारी.१ २.१४) इत्यत्र 'यश्चक्षुषि तिष्ठन्' (बृ.५.७.१८) इत्यादिना प्रतिपाद्यमानं चक्षुषि स्थितिनियमनादिकं परमात्मन एवेति सिद्धवत्कृत्याऽक्षिपुरुषस्य परमात्मत्वं साधितम् ? इदानीं तदेव समर्थयते-

अथ अन्तर्याम्यधिकरणम्

श्रुतप्रकाशिका

उत्तराधिकरणसङ्गतिमाह—स्थानादीति ।

श्रीभाष्यम्

## सू-१९ अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् (१.२.१९)

श्रुतप्रकाशिका

## सू—१९ अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् [१.२.१९]

### अथ अन्तर्याम्यधिकरणम्

### गूढार्थसंग्रहः

एवमधिकरणत्रयेण जीवभिन्नपरमात्मन एव श्रुतितात्पर्यविषयत्व निर्धारितम् । बृहदारण्यके अन्तर्यामिब्राह्मणे 'एत आत्माऽन्तर्याम्यमृतः' मा.पा 'एषत आत्मा' (का.पा) इति चतुर्विंशतिवारं द्वाविंशतिवार चाभ्यस्तवाक्येषु जीवपरयोरभेद एव विवक्षितः नतु भेदः । तथासति 'नान्योऽतोऽस्ति द्रष्टा' इति निषेधानुपपत्तेः । अतोऽन्यदार्तमिति प्रपञ्चमिथ्यात्वाभिधानाच्चेत्याक्षेपनिरासेन सर्वत्रप्रसिद्धयाधिकरणे 'शब्दविशेषात्' इत्यत्र 'एषम आत्माऽन्तर्हृदय' इति त्रिरभ्यस्तवाक्यवत् अत्रापि भेदएव विवक्षितः 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिरपि नात्मान्तरनिषेधादिपरमिति साधयति अन्तर्याम्यधिकरणे तेनान्तराधिकरणार्थः दृढीकृतो भवति ॥

अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् । भास्करभाष्ये अधिलोकशब्दघटित एव पाठो वर्ततइति स एव पाठः आदृतः भगवता । 'उभयेऽपिहि भेदेनैनमधीयत' इत्यत्र काण्वमाध्यन्दिनपाठद्वय विवक्षितमिति सर्वसम्मतम् । 'अधिलोक, अधिवेद, अधियज्ञ' शब्दाः माध्यन्दिनपाठ एव वर्तन्ते । अधिदैवादिषु इत्युक्तौ काण्वपाठमात्रस्य सग्रहभ्रमस्स्यात् । अधिलोकशब्दघटितपाठतु पाठद्वयमपि विवक्षितमिति निश्चयो भवतीत्याशयः ॥

नवीनैः 'अधिदैवादिषु' इत्यस्य 'तद्धर्मव्यपदेशात्' इत्यत्रान्वयः आदृतः । 'अधिदैवादिप्रकरणेषु' इति लक्षणामङ्गीकृत्यार्थ उक्तः । 'अधिदैवादिषु' इत्यस्यान्तर्यामीत्यत्रान्वये लक्षणाविरहेऽपि वैयर्थ्यमेव दोषः तदपेक्षया लक्षणैव युक्ता । 'तद्धर्मव्यपदेशात्' इत्यत्रान्वयेन अभ्यासः सिद्ध्यतीति चन्द्रिकायां स्पष्टम् । अधिदैवादिष्वन्तर्यामी इत्युक्तावपि अभ्यासस्स्फुट प्रतीयत एव । अन्तर्यामित्वस्याभ्यासः सर्वत्र यमयितृत्वमेव परमात्मधर्मः तेनाभ्यासेन यमयितृत्वस्य परमात्मधर्मताकथने अभ्यासस्य कथं त्याग. । 'य इम च लोक च पर च लोक सर्वाणि भूतानि यमयति' इति खलु प्रश्नः ! एतेन वैयर्थ्याभावाल्लक्षणाङ्गीकारो विफलः । 'अदृष्टो द्रष्टा' इत्यदौ अन्तर्यामिणएव द्रष्टृत्वमुक्तम् । अदृष्टत्वं च 'य पृथिवी नवेद' इत्यादिना पूर्वमेवाभ्यस्तमिति सर्वैरदृष्टत्वमेव विवक्षितम् । तत्सहभावेन 'यइम च लोक' इत्यादिप्रश्नघटकपदानुषङ्गेन 'द्रष्टा' इत्यत्र सर्वद्रष्टैव विवक्षितः । एव च 'नान्योऽतोऽस्ति द्रष्टा' इत्यादावपि द्रष्टृशब्दैकरीत्यैव सर्वनियन्तुः सर्वद्रष्टुरन्यस्य सर्वद्रष्टुः निषेध एव विवक्षित इतीद सिद्धान्ते सङ्गच्छते । एतच्च 'उभयेऽपि हि भेदेनैनमधीयत' इत्यत्र निर्णेष्यते । पूर्वपक्षसिद्धान्तयुक्तयः भाष्य एव स्फुटाः । तद्विस्तरस्तु तत्त्वमार्ताण्डे द्रष्टव्यः ॥

'हयवरट्' इति सूत्रमहाभाष्ये 'रेफस्य परोपदेशे अनुनासिकद्विर्वचनपरसवर्णप्रतिषेधः' इति वार्तिके अनुनासिकपरसवर्णयोस्तावत्प्रतिषेधो नवक्तव्यः रेफोष्मणा सवर्णा नसन्ति' इति वार्तिकोक्तानुनासिकपरसवर्णप्रतिषेध निरस्य

## श्रीभाष्यम्

काण्वामाध्यन्दिनाश्च वाजसनेयिनस्समामनन्ति–'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः (बृ.५.७.३) इति। एवमप्स्वग्न्यन्तरिक्षवाय्वादित्यदिक्चन्द्रतारकाकाशतमस्तेजस्सु देवेषु च तिष्ठन्तं तदन्तरभूतं तत्तदवेद्यं तत्तच्छरीरकं तत्तद्यमयन्तं कञ्चिन्निर्दिश्य

## श्रुतप्रकाशिका

विषयं शोधयति काण्वा इत्यादिना। वेदयशशब्दौ तदभिमानिदेवताविशेषपरौ गुणक्रियादेरद्रव्यतया शरीरत्वायोगात्। अद्रव्यस्यापि शरीरत्वमनेनैव प्रयोगेण कल्प्यमितिचेन्न, अनन्यथासिद्धस्यैव प्रयोगस्य कल्पकत्वात् अभि

## गूढार्थसङ्ग्रहः

द्विर्वचनेऽपि प्रतिषेधो नवक्तव्य इत्यभिप्रेत्य 'द्विर्वचनेऽपि। नेमौ रहौ कार्यिणौ द्विर्वचनस्य। किं तर्हि निमित्तमिमौहरौ द्विर्वचनस्य' इति महाभाष्ये उक्तम्। अत्र प्रदीपः 'हकारवत् रेफोऽपि नकार्य इत्यर्थः' इति। शब्दकौस्तुभे 'तत्र हकारग्रहणं दृष्टान्तार्थम्। तस्य यर्बहिर्भूततया यथा नद्वित्वे कार्यिता तथा यरन्तर्भूतस्यापि रेफस्येति' इति स्पष्टम्। एवंच दृष्टान्ततया स्मार्तशब्दोपादाने अप्रसक्तप्रतिषेधरूपदोषः न सम्भवति। एवं 'नपृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि' इत्यत्राप्रसक्तप्रतिषेधः हिरण्योपहितत्वप्रतिपत्त्यर्थः यथा, तथा 'य पृथिवी न वेद' इति 'यमात्मा न वेद' इत्यस्य दृष्टान्त इत्युक्तौ दुर्ज्ञेयत्वप्रतिपत्तिः फलं वर्ततइत्यत्राप्यभाविप्रतिषेधो नदोषः। उभयत्र चशब्दोपादानेन दृष्टान्तवोक्तिरेव युक्ता अन्यथा 'नच' इत्यत्र चशब्दवैयर्थ्यात् 'शारीरश्च' इत्यत्र चशब्देन स्मार्तसमुच्चयसम्भवात् ॥

उभयेऽपिहि भेदेनैनमधीयते इति 'शब्दविशेषात्' इतिसूत्रे 'एषम आत्माऽन्तर्हृदये' इति षष्ठ्या भेदः पूर्वमेव निर्धारितः। परैरपि तत्सूत्रविवरणं तथैव कृतम्। उपनिषद्भाष्येऽपि(श)श्रुतेः भेदाभिप्रायकत्वमेव परैरुक्तम्। त्रिवारमभ्यस्तवाक्योक्तरीतिमेव द्वाविंशतिवार ('एषत आत्माऽन्तर्याम्यमृतः)' चतुर्विंशतिवारं ('सत आत्माऽन्तर्याम्यमृतः') च षष्ठ्यभ्यासेन जीवब्रह्मणोर्भेदः अन्तर्यामिब्राह्मणे विवक्षित इति निश्चिनोति। 'उभयेऽपिहि भेदेन' इत्यत्र भाष्ये 'शारीरश्च' इति सूत्रघटकपदमभिप्रेत्य एनं शारीरमित्यर्थो वर्णितः। शारदीपयोस्तु 'अन्तर्याम्यधिदैव' इति प्रथमसूत्रमभिप्रेत्य एनमन्तर्यामिणमिति विवृतम् अत्रैव भाष्यकृतोऽभिप्राय इति प्रतीयते। 'अधिदैवाधिलोकादिषु' इति काण्वमाध्यन्दिनपाठद्वयविवक्षायास्सूचनेन अत्र 'उभयेऽपिहि' इत्यत्र काण्वमाध्यन्दिनपाठद्वयविषयत्वादृढीकरणात्। किंच 'सत आत्माऽन्तर्यामी' 'एषत आत्माऽन्तर्यामी' इत्यादौ षष्ठ्या अन्तर्यामिणि जीवभेदस्यैव स्फुटं प्रतिपादनादपि यथोक्त एवार्थः। 'आत्मानमन्तरो यमयति' इत्यत्रापि एवमेवार्थः ॥ यद्यपि परैः सूत्राणामर्थं जीवब्रह्मभेदपरतयैवाभिधाय 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतिवचनं विरुध्येत। अत्राहि 'प्रकृतादन्तर्यामिणोऽन्यं द्रष्टारं श्रोतारं मन्तारं विज्ञातारं वा मानं प्रतिषेधति नियन्त्रन्तरप्रतिषेधार्थमत्तद्वचनमितिचेत्–न–नियन्त्रन्तराप्रकरणादविशेषश्रवणाच्च इत्युक्तम् ॥

तथाऽपि 'सकारणं करणाधिपाधिपो नचास्य कश्चिज्जनिता नचाधिपः' इत्येतत्राप्यप्रसक्तनिषेधः नघटते। 'नान्योऽतोऽस्ति द्रष्टा' इत्यत्र समानान्यनिषेधस्य पूर्वमीमांसान्यायेन प्राचीनैरेव साधनात्। अत्र प्रकरणपदानुरोधेन सर्वद्रष्टुरेव 'अदृष्टो द्रष्टा' इत्यत्रान्तर्यामिण एव सर्वद्रष्टृत्वाभिधानेन 'अतः' इत्येतच्छब्दस्य सर्वनियन्तृ सर्वद्रष्टृपरतया

## श्रीभाष्यम्

' एष त आत्माऽन्तर्याम्यमृतः ' (बृ.५.७) इत्युपदिश्यते । माध्यन्दिनपाठे तु ' यस्सर्वेषु लोकेषु तिष्ठन् ' ' यस्सर्वेषु वेदेषु ' ' यस्सर्वेषु यज्ञेषु ' (बृ.५.७) इति च पर्यायाः । ' यो विज्ञाने तिष्ठन् ' ५.७.इत्यस्य पर्यायस्य स्थाने ' य आत्मनि तिष्ठन् ' ५.७. इति पर्यायः । ' स त आत्माऽन्तर्याम्यमृतः ' (बृ.५.२३] इति च विशेषः । तत्र संशय्यते—किमयमन्तर्यामी प्रत्यगात्मा, उत परमात्मा ? इति । किं युक्तम् ? प्रत्यगात्मेति । कुतः ? वाक्यशेषे ' द्रष्टा श्रोता ' (५.७.२३) इति करणायत्तज्ञानताश्रुतेः । एवं द्रष्टुरेवान्तर्यामित्वोपदेशात , ' नान्योऽतोऽस्ति द्रष्टा ' (५.७.२३) इति द्रष्ट्रन्तरनिषेधाच्चेति ॥

एवं प्राप्तेऽभिधीयते–' अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् ' अधिदैवा-

## श्रुतप्रकाशिका

भानिदेवतापरत्वेनापि द्रव्यपरत्वमेवोचितमिति । संशयमाह–तत्रेति । प्रत्यगात्मशब्दः एश्वर्ययोगविरहनिमित्तप्रकर्षानुकृष्टजीवपरः । समस्तचेतनाचेतनान्तर्यामित्वेन श्रूयमाणस्यापि कथं जीवत्वशङ्कोत्थानम् ? उच्यते–'द्रष्टा श्रोता' इत्यादिशब्देन करणायत्तज्ञानवत्त्वप्रतीतिबलादमृतत्वादिलिङ्गानाम् । ' आत्मनि तिष्ठन् ' इत्यादिव्यतिरेकनिर्देशस्य नियमनस्य चामुख्यत्वशङ्कयाऽधिकरणोत्थानमिति । किमन्तर्यामी जीवः उत परमात्मेति प्रथमविचारः ? तदर्थम् ' आत्मनि तिष्ठन् ' इत्यादिकं किं मुख्यं उतामुख्यम् । तदर्थं द्रष्टृत्वं किं जीवस्यैव उतान्तर्यामिणोऽपि सम्भवति । तदर्थं ' द्रष्टा श्रोता ' इति करणायत्तज्ञानत्वमुच्यते, उत रूपादिसाक्षात्कारइति । तदर्थं रूपादिसाक्षात्कर्ताचेत् द्रष्ट्रन्तरनिषेधः किं नोपपद्यते उतोपपद्यत इति विचारः । नोपपद्यत इति पूर्वःपक्षः । उपपद्यत इति सिद्धान्तः । यदा निषेधोऽनुपपन्नः तदा द्रष्टृत्वादिकं करणायत्तज्ञानवत्त्वमिति तस्य जीवात्मन्येव सम्भवादात्मनि स्थित्यादिकममुख्यमित्यन्तर्यामी जीवस्स्यात, यदा निषेध उपपन्नः तदा रूपादिसाक्षात्काररूपद्रष्टृत्वादे परमात्मनि सम्भवेनात्मनि स्थित्यादीनां मुख्यतया नेयत्वादन्तर्यामी परमात्मेति फलितं स्यात् कुतइति । प्रत्यगात्मनोऽप्यन्तर्यामित्वेन श्रुतस्य कथं प्रत्यगात्मत्वमिति भावः ॥

तत्र जीवत्वे हेतुमाह–वाक्यशेष इत्यादिना । ज्ञानस्य करणाधीनत्वोक्त्या नियमनस्य च करणाधीनत्वमर्थसिद्धम् । परप्रेरणरूपस्य सङ्कल्पस्य मनःकरणकत्वदर्शनात् । करणायत्तज्ञानमस्तु, ततः किमन्तर्यामिणो जीवत्वमेत्यत आह एवंद्रष्टुरेवेति । तर्हि रूपादिसाक्षात्कार एव द्रष्टृशब्दप्रवृत्तिनिमित्तमस्तु, न करणायत्त ज्ञानमित्यत्राह–नान्योऽतोऽस्तीति । रूपादिसाक्षात्कारस्य जीवपरयोस्साधारणत्वात् नस निषेद्धुं शक्यते करणायत्तज्ञानवत्त्वतु जीवस्यैवेति तदन्यस्य निषेद्धुं शक्यमित्यर्थः । प्रतिपर्यायं यच्छब्दावृत्त्याचान्तर्यामिबहुत्वमवगम्यते ' आत्मनि तिष्ठन् ' इति व्यपदेशः स्वे महिम्नि स्थित इतिवत् भवति । तदन्तरत्व तन्नियन्तृत्व च ' आत्मेश्वरम् '] इतिवद्व्यापकनियामकवस्त्वन्तराभावाभिप्रायेणोच्यते ' यमात्मा न वेद ' इति ससृष्टेन निष्कृष्टस्वरूपाज्ञानमुच्यत इति नेयम् । यत्तु जीवविशेषात्प्रत्यन्तर्यामित्वं तत्तदवेद्यत्वादिकं, तदष्टमूर्त्यादेरिव तत्तद्गणाध्यक्षाणां जीवानां तन्नियन्तृत्वेन सम्भवति । यश्चाऽदित्यचन्द्रमसौ मण्डलपरौ सर्वेषु देवेष्वित्यादिशब्दाश्च शरीरमात्रपराः ' स आत्मा ' इति निर्देशः शिलापुत्रस्य शरीरमितिवत् स्यात , सइतिपद जात्यभिप्रायम् तज्जातीयत्वमित्यर्थः उपक्रमेच 'य इमं च लोकं परं च लोकम्' इत्यत्र यच्छब्दो जात्यभिप्रायइतिभावः

एवं प्राप्तइति । सूत्रे अधिदैवाधिलोकादिपदाचिह्नितेषु वाक्येष्वित्यनेन सर्वसूत्रेषु तत्तत्पदाचिह्नितवाक्यप्रतिपाद्यत्व विवक्षितमिति गम्यते । अधिदैवाधिलोकपदद्वयोपादानस्य प्रयोजनमाह—

## श्रीभाष्यम्

धिलोकादिपदचिह्नितेषु वाक्येषु श्रूयमाणोऽन्तर्याम्यपहतपाप्मा परमात्मा नारायणः। काण्वपाठसिद्धेभ्योऽधिदैवादिमद्भ्यो वाक्येभ्योऽधिकान्यधिलोकादिमन्ति वाक्यानि माध्यन्दिनपाठे सन्तीति ज्ञापनार्थमधिदैवाधिलोकादिष्वित्युभयोरुपादानम् । तदेवमुभयेष्वपि वाक्येष्वन्तर्यामी परमात्मेत्यर्थः । कुतः ? तद्धर्मव्यपदेशात्; परमात्मधर्मोह्ययं यदेक एव सन् सर्वलोकसर्वभूतसर्वदेवादीन्नियमयतीति । तथा उद्दालकप्रश्न –' य इमं च लोकं परंच लोकं सर्वाणि च भूतानि योऽन्तरो यमयति ' (बृ.५.७.१) इत्युपक्रम्य 'तमन्तर्यामिणं ब्रूहि' [५.७.१] इति। तस्यचोत्तरम् ' यःपृथिव्यां तिष्ठन् ' (५ ७.३) इत्यारभ्योक्तम् । तदेतत्सर्वान्लोकान् सर्वाणि च भूतानि सर्वान्देवान् सर्वान्वेदान् सर्वांश्च यज्ञानन्तःप्रविश्य सर्वप्रकारनियमनम् । *सर्वशरीरतया सर्वस्यात्मत्वं च सर्वज्ञात्सत्यसङ्कल्पात्पुरुषोत्तमादन्यस्य न* सम्भवति । तथा हि ' अन्तःप्रविष्टश्शास्ता जनानाꣳसर्वात्मा ' (तै.आरण्यक.११.अनु.२०) ' तत्सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य । सच्चत्यच्चाभवत् ' (तै.आनन्दवल्लि.६)इत्यादीन्यौपनिषदानि वाक्यानि परमात्मन एव सर्वस्य प्रशासितृत्वं सर्वस्यात्मत्वमित्यादीनि वदन्ति । तथा सुबालोपनिषदि–' नैवेह किञ्चनाग्र आसीदमूलमनाधारमिमाः प्रजाः प्रजायन्ते दिव्यो देव एको नारायणः । चक्षुश्च द्रष्टव्यं च नारायणः । श्रोत्रं च श्रोतव्यं च नारायणः ' (सुबाल.६.खण्ड) इत्यारभ्य ' अन्तश्शरीरे निहितो गुहायामज एको नित्यः यस्य पृथिवी शरीरं यःपृथिवीमन्तरे सञ्चरन् यं पृथिवी नवेद यस्यापश्शरीरम् ' (सुबाल.७.ख) यस्य मृत्युश्शरीरं यो मृत्युमन्तरे सञ्चरन् यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः ' [७.ख] इति परस्यैव ब्रह्मणस्सर्वात्मत्वं सर्वशरीरत्वं सर्वनियन्तृत्वं च प्रतिपाद्यते । स्वाभाविकं चामृतत्वं परमात्मन एव धर्मः । नच परस्यात्मनःकर-

## श्रुतप्रकाशिका

काण्वेति । ततःकिमित्यत्राह–तदेवमिति । माध्यन्दिनपाठे अधिलोकाद्यधिपर्यायश्रवणेन काण्वमाध्यन्दिनयोर्विषयभेदशङ्कायामुभयसाधारणबहुपर्यायप्रदर्शनार्थेनाधिदैवशब्देनोभयत्रैकविषयत्वप्रत्यभिज्ञानार्थं न्यूनपर्यायेऽपि पाठे अनुक्तमन्यतो ग्राह्यमिति न्यायेनाधिकपर्यायपाठार्थविवक्षाज्ञापनार्थंचोभयपदोपादानमित्यर्थः । एकस्यैव सतस्सर्वनियमनं कथमवगतमित्यत्राह–तथाहीति । यःपृथिव्यामित्यादिकं तस्य प्रश्नस्योत्तरमस्तु, ततःकिमित्यत्राह–तदेतदिति । नियाम्यापरिज्ञानेऽमोघसङ्कल्पत्वे च सर्वनियमनायोगात् सर्वज्ञात्सत्यसङ्कल्पादित्युक्तम् । सुबालोपनिषदि समानप्रकरणे 'पुरुष एवेदꣳ सर्वम्' इत्युक्तत्वादाह—पुरुषोत्तमादिति । पुरुषोत्तमस्यैव सर्वनियमनादिसंभवे श्रुत्यन्तराणि दर्शयति तथाहीति । परमात्मनएवेति । अत्र सर्वनियन्तृत्वादितरेषां नियाम्यकोटिनिवेशादस्यैवेत्यवधारणं फलितमिति भावः । एतद्द्योतनाय समानप्रकरणोक्तिं दर्शयति तथा सुबालोपनिषदीति । सूत्रविवक्षितं हेत्वन्तरमाह–स्वाभाविकं चेति । पूर्वपक्षयुक्तिं परिजिहीर्षन् दर्शनश्रवणादिशब्दानां करणायत्तज्ञानवाचित्वं किमार्थं सत शाब्दमिति विकल्पमभिप्रेत्य प्रथमं शिरःप्रतिवदति नच परस्येति । ' अदृष्टो द्रष्टा अश्रुतश्श्रोता अमतोमन्ता अविज्ञातो विज्ञाता ' इति वाक्ये आत्मसाक्षात्कारवदुपायभूतश्रवणमनननिदिध्यासनकर्तृत्वमिह प्रतीयते न तु रूपादिसाक्षात्कार इति शङ्कां परिहर्तुं परस्यात्मन इत्युक्तम् ॥

अत्रायमभिप्रायः श्रुत्यन्तरेषु ' नदृष्टेर्द्रष्टारं पश्येः न श्रुतेः श्रोतारं शृणुयाः न मतेर्मन्तारं मन्वीथाः नविज्ञातेर्विज्ञातारं विजानीयाः ' इति ' आत्मा वा अरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्य. ' इत्यादेव ।

## श्रीभाष्यम्

णायत्तं द्रष्टृत्वादिकम्; अपि तु स्वभावत एव सर्वज्ञत्वात्सत्यसङ्कल्पत्वाच्च स्वत एव। तथा च श्रुतिः 'पश्यत्यचक्षुस्स शृणोत्यकर्णः अपाणिपादो जवनो ग्रहीता' (श्वे.३.१९) इति। न च दर्शनश्रवणादिशब्दाश्चक्षुरादिकरणजन्मनो ज्ञानस्य वाचकाः; अपि तु रूपादिसा-

## श्रुतप्रकाशिका

र्थश्रवणमननादिकर्तृत्वं परस्य प्रतिषिद्धं, तत्कर्मत्वं श्रुतं तस्मादिह द्रष्टा श्रोता मन्ता विज्ञातेति प्रतीयमानं परस्यात्मन श्श्रवणादिकर्तृत्वं तत्प्रतिषेधकश्रुतिविरुद्धम्, रूपादिसाक्षात्कर्तृत्वं तु 'पश्यत्यचक्षुस्स शृणोत्यकर्णः' इत्यादिश्रुत्यन्तरावगतम्। अतः श्रवणादिकर्तृत्वप्रतिषेधकश्रुतिविरोधाद्रूपादिसाक्षात्कारविधायकश्रुत्यन्तरानुरोधाच्चेह श्रूयमाणद्रष्ट्रादिशब्दाश्च रूपादिसाक्षात्कारवाचकाः नतु श्रवणमननध्यानतत्साध्यदर्शनपरा इति द्रष्टृत्वादिकं नकरणायत्तमिति रूपादिभिरपरोक्षव्यवहारानुगुणसम्बन्धो न चक्षुराद्यपेक्ष इत्यर्थः। आदिशब्देन श्रोतृत्वादिकं कर्मेन्द्रियकार्यगन्तृत्वग्रहीतृत्वादिकं च विवक्षितम्। करणशब्दश्च ज्ञानकर्मेन्द्रियसाधारणः। किंतर्हीत्याकाङ्क्षायामाह—अपितिवति। स्वभावतएवेति। द्रष्टृत्वादिकमित्यन्वयः। स्वभावशब्दो धर्मपरः स्वरूपस्वभावशब्दयोस्समभिव्याहारदर्शनात्। एवकारश्चक्षुरादिकरणापेक्षां योगिप्रत्यक्षहेतुभूतप्रकृष्टादृष्टापेक्षां च व्यावर्तयति। अदृष्टेन्द्रियनिरपेक्षधर्मभूतज्ञानेनैव भवतीत्यर्थः। परमात्मेच्छासापेक्षमुक्तनित्यसिद्धज्ञानव्यावृत्तिं दर्शयन्हेतुमाह—सर्वज्ञत्वादिति। स्वतएव सर्वज्ञत्वादित्यन्वयः स्वतएवेति। स्वशब्दस्स्वरूपपरः सत्ताप्रयुक्तत्वादित्यर्थः। एवकारस्स्वव्यतिरिक्तचेतनान्तरसङ्कल्पादृष्टचक्षुरादिव्युदासपरः॥

यद्वा न करणायत्तं द्रष्टृत्वादिकमपितु स्वभावत एवेति रूपादिसाक्षात्काराश्रयत्वं न करणापेक्षं, अपितु सत्ताप्रयुक्तमित्यर्थः। कुत इत्यत्राह—स्वत एव सर्वज्ञत्वादिति करणानपेक्षसत्ताप्रयुक्तसार्वज्ञ्यादित्यर्थः। सामान्येनेश्वरज्ञानमात्रस्य हेतुमात्रनिरपेक्षत्वात् रूपादिविषयज्ञानविशेषोऽप्यदृष्टेन्द्रियरूपहेतुविशेषनिरपेक्ष इति यावत् सर्वस्य ब्रह्मात्मकत्वात् त्वं च तदात्मक इति तद्विवक्षितविशेषसिद्धये सामान्याकारयोगस्य हेतुतयोपन्यासः ग्रहीतृत्वगन्तृत्वादिषु कर्मेन्द्रियनैरपेक्ष्यसिद्ध्यर्थमाह—सत्यसङ्कल्पत्वाच्च स्वतएवेति। तत्र प्रमाणं दर्शयति तथाचेति द्रष्टा श्रोता इत्यत्रोपाध्यनुक्तिपूर्वकदर्शनादिश्रवणात् स्वतस्त्वं सिद्धम् निरुपाधिकत्वकण्ठोक्तिश्चास्तीति चार्थः॥

यद्वा न केवलं 'यस्सर्वज्ञः, सत्यसङ्कल्पः' इति सामान्यश्रुत्या तत्सिद्धिः विशेषविषयश्रुतिश्चास्तीति चार्थः। यद्वा 'स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुत्या करणनिषेधोऽर्थसिद्धः तस्य स्वाभाविकत्वोक्तिबलात्तद्विशेषभूतदर्शनश्रवणादेः करणनैरपेक्ष्यमपि सामान्यतः सिद्धं तदुभयं कण्ठोक्तं चेत्यर्थः जवनः झटिति दूरस्थप्रदेशगमनक्षम, अतो न भुवाविरोधः। एवं दर्शनश्रवणादेरर्थवशात् करणाधीनत्वकल्पनं श्रुतिविरुद्धमित्युक्तम्। अथ चक्षुः पश्यतीति व्याहृतं दर्शनश्रवणादिशब्दानां करणायत्तज्ञानवाचित्वादिति शङ्कायां दर्शनश्रवणादिशब्दानां करणायत्तज्ञानवाचित्वं निषेधति नचदर्शनेति। सर्वप्रयोगानुगतं प्रवृत्तिनिमित्तमाह—आपतिवति। एवं सति द्रष्टा श्रोता इति रूपशब्दयोस्साक्षात्कर्तेत्यर्थः, मन्ता ये मानसमननाख्यविचारविषयास्तेषां साक्षात्कर्ता विज्ञाता बुद्ध्यध्यवसेया ये तेषां साक्षात्कर्तेत्यर्थः तत्तदिन्द्रियविषयसाक्षात्कारपरत्वात् प्रकरणस्य चक्षुरादिबाह्यकरणमनोबुद्धिरूपान्तःकरणकृत्यविशेषाः साधारणाकारग्रहणविचाराध्यवसायरूपाः तदाश्रयो जीव इति च मोक्षधर्मेऽभिहितम् यथा—

चक्षुरालोकनायैव संशयं कुरुते मनः। बुद्धिरध्यवसायाय साक्षी क्षेत्रज्ञ उच्यते॥

इति। संसारिचेतनज्ञानानां प्रतिनियतकरणसापेक्षत्वं, प्रमाणाप्रमाणरूपत्वं परोक्षापरोक्षरूपत्वं च भवति, परमात्मनस्तु

## श्रीभाष्यम्

क्षात्कारस्य। सच रूपादिसाक्षात्कारः कर्मतिरोहितस्वाभाविकज्ञानस्य जीवस्य चक्षुरादिकरणजन्मा ; परस्य तु स्वत एव। 'नान्योऽतोऽस्ति द्रष्टा' (बृ.५.७.२२) इत्येदपि पूर्ववाक्योदितान्नियन्तुर्द्रष्टुरन्यो द्रष्टा नास्तीति वदति। 'यं पृथिवी न वेद' 'यमात्मा न वेद' (सुबाल.७.ख) इत्येवमादिभिर्वाक्यैः पृथिव्यात्मादिनियाम्यैरनुपलभ्यमान एव नियमयतीति यत्पूर्वमुक्तम्, तदेव 'अदृष्टो द्रष्टा अश्रुतश्श्रोता' (बृ.५ ७.२३) इति निगमय्य 'नान्योऽतोऽस्ति द्रष्टा' (५.७ २३) इत्यादिना तस्य नियन्तुर्नियन्त्रन्तरं निषिध्यते। 'एष त आत्मा' (५.७) 'स त आत्मा' (माध्यन्दिनपाठः) इति च त इति व्यतिरेकविभक्तिनिर्दिष्टस्य जीवस्यात्मतयोपदिश्यमानोऽन्तर्यामी न प्रत्यगात्मा भवितुमर्हति ॥

## श्रुतप्रकाशिका

स्तत्करणादिनिरपेक्षाणि तत्तत्करणतत्तद्विषयादिसर्वपदार्थगोचराणि सम्यङ्निश्चयरूपाण्यपरोक्षात्मकानि ज्ञानानि भवन्तीति वैषम्यम्। *करणाधीनत्वं शाब्दं माभूत् तथाऽपि व्याप्तिबलात् परमात्मनोऽपि दर्शनश्रवणादयः करणैर्विना नोपपद्यन्त इति* सिंहावलोकितकेनाशङ्क्य दर्शनादीनां करणापेक्षायाः कर्मवश्यत्वेन सोपाधिकत्वान्नव्याप्तिरित्यभिप्रयन्नाह—तसचेति। कर्मवश्यस्यैव करणापेक्षा नत्वकर्मवश्यस्येत्यर्थः। उपाधेस्सपक्षानुगतत्वं दर्शितं कर्मतिरोहितेति परस्यत्विति। तुशब्दोऽकर्मवश्यत्वरूपवैलक्षण्यपरः। तेनापक्षवृत्तित्वं दर्शितं भवति। तर्हि द्रष्ट्रन्तरनिषेधः कथमुपपद्यत इत्यत्राह—नान्योऽतइति। तदेव विवृणोति यंपृथिवीत्यादिना। निगमय्येति। 'अदृष्टो द्रष्टा पृथिव्यादिनियाम्यादृष्टस्तन्नियन्तृरूपद्रष्टा' इत्युक्तार्थनिगमनमित्यर्थः। 'य पृथिव्याम्' इत्यादिपर्यायेषु द्रष्टृत्वमार्थं निगमनवाक्ये नियन्तृत्वमार्थं गर्भितं विशिष्टस्य प्रकृतत्वेसति सामान्यनिर्देशावगतोऽपि इतरनिषेधः प्रकृताकारविशिष्टेतरविषयो दृष्टः. यथाऽस्मिन्ग्रामे देवदत्त एव पुरुषो नान्य इत्युक्ते न पुरुषमात्रं निषिध्यते, किंतु नैव विधोऽन्यः पुरुषोऽस्तीति बुद्धिस्सत्वान्यादिविशिष्टपुरुषान्तरं निषिध्यते अन्यथा प्रमाणविरोधात्। अतः 'नान्योऽतोऽस्ति द्रष्टा' इत्यत्रातश्शब्दस्वारस्यवशात् *प्रकृतयथोक्तलक्षणं द्रष्ट्रन्तरं निषिध्यते, तदश्च परमात्मनाऽप्यवेद्यस्तदन्तरस्तन्नियामकः कोऽपि द्रष्टा नास्तीत्यर्थं* स्यात्, अपवादाभावात् व्यतिरेकनिर्देशस्वारस्यसिद्धिमाह—एषतइति। एतत्पादाद्याधिकरणे 'इन्द्वविशेषात्' इति व्यतिरेकनिर्देशो हेतुतयोक्तः तस्य प्रदर्शनार्थत्वात्तदुपजीवनेन व्यतिरेकनिर्देशो हेतुरुक्तः 'एषत' सर्वपर्यायानुवृत्तषष्ठीनिर्देशोऽत्र विवक्षितः, पर्यायविशेषस्थ सप्तमीनिर्देशस्तु उभयेऽपीति सूत्रविवक्षित इति विशेषः ॥

## गूढार्थसंग्रहः

'नान्योऽतोऽस्ति द्रष्टा' इत्यत्रापि द्रष्टृशब्दस्य सर्वद्रष्टृ सर्वनियन्तृपरतया परमात्मनोऽन्यस्य सर्वनियन्तुः सर्वद्रष्टुरेव निषेधेन परमात्माऽन्यजीवसामान्यनिषेधस्यात्रासम्भवात्। अतएव एतदुत्तरं 'एषत आत्माऽन्तर्याम्यमृतः' इति वाक्य पाठद्वयेऽपि सङ्गच्छते। परमते 'एषत आत्माऽन्तर्यामी' इति पाठवैयर्थ्यमेव। 'तमन्तर्यामिणं ब्रूहि' इत्युपक्रमे प्रश्न. उपसंहारेऽपि प्रतिवचनस्यान्तर्यामिपर्यवसानं एव सामञ्जस्यम्। परमतेतु प्रश्नप्रतिवचनयोः उपक्रमोपसंहारयोश्च वैरूप्यमवर्जनीयम् *'अन्तर्यामी' 'उभयेऽपिहि भेदेन' इति सूत्रयोः द्वाविंशतिवारं चतुर्विंशतिवारं* माध्यन्दिनकाण्वयोरिव 'नान्योऽतोऽस्ति द्रष्टा' इत्यनन्तरम् 'एषत आत्माऽन्तर्याम्यमृतः' इति पाठद्वयस्यावश्यकत्वात्. विवक्षितत्वेन अन्तर्यामिण्वे अन्तर्यामिब्राह्मणतात्पर्यपर्यवसानं सम्यगभिन्नम् ॥

श्रीभाष्यम्

## सू—२० नच स्मार्तमतद्धर्माभिलापाच्छारीरश्च [१.२.२०)

स्मार्तं प्रधानम्। शारीरः जीवः। स्मार्तं च शारीरश्च नान्तर्यामी, अतद्धर्माभिलापात्-तयोरसम्भावितधर्माभिलापात्। स्वभावत एव सर्वस्य द्रष्टृत्वम्, सर्वस्य नियन्तृत्वं सर्वस्यात्मत्वम् स्वत एवामृतत्वं च तयोर्नसम्भावनागन्धमर्हति। एतदुक्तं भवति-यथा स्मार्तमचेतनं सर्वज्ञत्वनियन्तृत्वसर्वात्मत्वादिकं नार्हति, तथा जीवोऽपि अतद्धर्मत्वात् इति अमीषां गुणानां परमात्मन्यन्वयः, प्रत्यगात्मनि व्यतिरेकश्च सूत्रद्वयेन दर्शितः॥

निरपेक्षं च हेत्वन्तरमाह—

## सू—२१ उभयेऽपि हि भेदेनैनमधीयते (१.२.२१)

श्रुतप्रकाशिका

## सू—२० नच स्मार्तमतद्धर्माभिलापाच्छारीरश्च (१.२.२०)

अक्षरार्थमाह-स्मार्तमित्यादिना। के पुनस्तदसम्भाविता धर्मा इत्यत्राह-स्वभावत एवेति। प्रधानस्यान्तर्यामित्वप्रसङ्गाभावे किमर्थं सूत्रेण तन्निरसनमित्यत्राह—एतदुक्तमिति। पूर्वसूत्रे तद्धर्मा उक्ताः अस्मिन्सूत्रे प्रकृतिपुरुषयोरसम्भाविता धर्मा उक्ता इति सूत्रस्य पौनरुक्त्यमाशङ्क्य परिहरति अमीषामिति। निरपेक्षंचेति। पूर्वं व्यतिरेकनिर्देशसापेक्षहेतुरुक्तः अयत्तु वक्ष्यमाणो निरपेक्ष इत्यर्थः॥

## सू-उभयेऽपि हि भेदेनैनमधीयते [१.२.२१]

गूढार्थसङ्ग्रहः

'नच स्मार्तमतद्धर्माभिलापाच्छारीरश्च' इत्यस्मिन्नधिकरणे सूत्रम् 'नानुमानमतच्छब्दात्प्राणभृच्च' इति द्युभ्वाद्यधिकरणे। अत्र सूत्रद्वयमप्यधिकरणद्वयेऽपि एकरूप सिद्धान्ते, परैर्न्यैश्च अतद्धर्माभिलापात् इत्यन्तमेकसूत्रम् 'शारीरश्च' इत्यादि 'उभयेऽपि भेदेन' इत्यन्तं पृथक्सूत्रमिति वर्णितम्। नानुमानमतच्छब्दात्, प्राणभृच्च इति पृथक्सूत्रे द्युभ्वाद्यधिकरणे इतिचोक्तम्। द्युभ्वाद्यधिकरणवदत्रापि शारीरश्चेति पृथक्सूत्रकरणं तन्मतरीत्या सम्भावितम्। एतत्परित्यज्य उत्तरसूत्रे शारीरश्चेत्यस्य योजनं मतद्वये नमनोहरम्॥

'उभयेऽपिहि भेदेनैनमधीयते।' अत्र भेदेनेति 'इत्थंभूतलक्षणे' (२.३.२१) उपलक्षणवाचिपदात्तृतीया इति भेदस्योपलक्षणत्वं तेन न सार्वदिकत्वं भेदस्य मुक्तिदशायामविद्यमानत्वादिति न्यायरक्षामणिकार अवादीत्। नैवनिर्णयस्सम्भवति। कदाचिदविद्यमानताया एतत्सूत्रविहिततृतीया अप्रतीते, लक्षणशब्दस्योपलक्षणार्थकत्वासम्भवात। महाभाष्यादिप्रामाणिकग्रन्थेऽप्यनुक्तेश्च। इत्थंभूतशब्देन लक्षणशब्देन च उपलक्षणस्यैव ग्रहणमिति निर्णयो नसम्भवति। 'लक्षणेत्थंभूताख्यान–' (१.४.९०) इत्यादिसूत्रे इत्थंभूतशब्देन विशेषणग्रहणस्य सर्वैरपि वैयाकरणैरङ्गीकारात्। अत्रापि

### श्रीभाष्यम्

उभये–माध्यन्दिनाः काण्वाश्च, अन्तर्यामिणो नियाम्यत्वेन वागादिभिरचेतनैस्समम् एनं शारीरमपि विभज्याधीयते ' य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः ' (बृ.५.७.२२) इति माध्यन्दिनाः, ' यो विज्ञाने तिष्ठन् ' (५.७.२२) इत्यादि च काण्वाः परमात्मनियाम्यतया तस्माद्विलक्षणत्वेनैनमधीयत इत्यर्थः । अतोऽन्तर्यामी प्रत्यगात्मनो विलक्षणोऽपहतपाप्मा परमात्मा नारायण इति सिद्धम् ॥

### इति अन्तर्याम्यधिकरणं समाप्तम्

### श्रुतप्रकाशिका

अत्रैकैकवस्तुषु परिपूर्णत्वेन नियन्तृतया स्थितिज्ञापनार्थं यच्छब्दावृत्तिः ' सम ' इति व्यतिरेकनिर्देशो देवादिशब्दानां शरीरमात्रपरत्वंचास्वरसम् तच्चापवादाभावेऽनुपपन्नम् । आत्मशब्दस्य स्ववाचित्वे ' तिष्ठन् ' इत्यादयोऽप्यस्वरसाः ' यो विज्ञाने तिष्ठन् ' इति काण्वपाठेकार्थ्यादात्मशब्दस्य स्ववाचित्वमयुक्तम् । प्रश्नवाक्यस्यचास्वारस्यमिति भिदा यच्छब्दावृत्तिरेकत्वेऽपि संभवतीति भावोऽनुसन्धेयः । हिहेतौ, सहि भेदशब्दोऽत्र श्रूयत इत्यत्राह–परमात्मनियाम्यतयेति । भेदकधर्मश्रवणात् भेदेन व्यपदेशसिद्ध इत्यर्थः । नकेवलं व्यतिरेकनिर्देशादीनामपवादाभावः, किंतु तदस्वारस्यापवादश्चास्तीति भावः । सुबालोपनिषदुक्तविशेषणैस्तदेकविषयतां स्मारयन्नधिकरणार्थमुपसंहरति अतइति ॥

### गूढार्थसङ्ग्रहः

सूत्रघटक इत्थंभूतशब्देन विशेषणस्यापि ग्रहणसम्भवात् । भैरवमिश्रेण 'परेतु' इत्यादिमते बहूनां शब्दानां प्रकृत्यादिगणे पाठस्यानुचिततया वैशिष्ट्यमात्रं तृतीयार्थ इति विशेषणवाचिपदात् तृतीया उपपाद्यत इति पक्षस्योक्तेः, व्युत्पत्तिवादे गदाधरेण विशेषणवाचिपदात्तृतीया । अतएव ज्ञायमानत्वेन लिङ्गं करणम् इत्युक्तेश्च, उपलक्षणवाचिपदात्तृतीया क्वचित्स्यान्नाम । तावता विशेषणवाचिपदात् तृतीया नेति सिद्धान्तस्य स्थापनासम्भवाच्च ॥

शब्दशक्तिप्रकाशिकायां जगदीशेन ' घटेन शून्यो विधुरो रहित ' इत्यादौ घटत्वाद्यवच्छिन्नप्रतियोगिकमेव शून्यत्वाद्यन्वयि तृतीयाऽर्थः' इति 'इत्थंभूतलक्षणे' इति सूत्रोदाहरणं प्रदर्श्य अनन्तरं 'प्रकृत्यादिभ्यश्च' इति सूत्रस्याप्युदाहरणानि प्रदर्शितानि । एवं भाट्टरहस्येऽपि ' इत्थंभूतलक्षणे ' इत्यनुशासनात् 'जटाभिस्तापसः' इत्यादौ तृतीया । अत्र लक्षणत्वापरपर्याय ज्ञाप्यत्व तृतीयाऽर्थः ।जटाज्ञाप्यतापसत्ववानित्यर्थः । लक्षणत्वं च विशेषणोपलक्षणसाधारणम् । तेन 'शमेन तापस, इत्यपि साधु ' इति खण्डदेवेनोक्तम् ॥ 'भिन्नमेनमधीयते' इत्युक्तौ रङ्गं रजतं जानाति रङ्गंरजतम्रूपे इति वाक्यसमशीलताभ्रमस्स्यात् तथा भ्रमनिरासाय 'भेदेनैनम् ' इत्युक्तिः । 'इत्थंभूतलक्षणे' इतिसूत्रे उपलक्षणवाचिपदादेवतृतीया नतु विशेषणवाचिपदादिति वैयाकरणसिद्धान्तसत्त्वे दीक्षितोक्तप्रकारःसङ्गतो भवेत् । नचैव अतः ' भेदेनैनम् ' इत्यत्र भेदस्य विशेषणत्वेऽपि विशेषणवाचिपदात्तृतीया उपपद्यतइति दीक्षितोक्तिरनादरणीया ॥ भिन्नमेनमित्यनुक्त्वा ' भेदेन ' इत्युक्त्या भेदस्योपलक्षणत्वं बोध्यत इति परे स्वस्वमनीषानुरोधेन वर्णयन्ति । नायमर्थस्सूत्रकृता विवक्षितः । ' नान्योऽतोऽस्ति द्रष्टा ' इत्यादेः परसंमतार्थकत्वं न श्रुतितात्पर्यानुगुणम् । तथासति ' नान्योऽत ' इत्येतावतैवोपपत्तिसम्भवे शेषावैयर्थ्यात् द्रष्ट्रादिशब्दानां प्रश्नानुगुण्येन प्रश्नवाक्यघटकपदानुषङ्गेनार्थस्य सुवचता सूचितत्वेन ' नान्योऽतोऽस्ति द्रष्टा '

## श्रुतप्रकाशिका

अस्मिन्नधिकरणे कैश्चिच्चतुर्धाविचारो दर्शितः, पृथिव्याद्यभिमानिदेवताविशेषो वा योगसिद्धो वा परमात्मा वा अर्थान्तरवेति । तत्रार्थान्तरमिति पक्षस्त्वसम्भवनिरस्तः ऐश्वर्यविशेषयोगस्य प्रकृष्टादृष्टजन्यत्वाविशेषात् देवतास्वेव योगसंभवाच्च, ततोऽन्तरभेदकल्पनं विफलम् । कार्यकरणवत्त्वं जीवत्वे हेतुतयोक्तं तदयुक्तम् , पृथिव्यादित्वेनैकस्य शरीरत्वाव गमाच्चक्षुरादीनां प्रत्येकं शरीरत्वावगमाच । तत्कृतजीवत्वशङ्काया आनन्दमयाधिकरणेऽप्युदस्तत्वाच्च तेन जीवत्वशङ्काऽनुदयात् । भूतेन्द्रियादीनां सङ्घातरूपेण शरीरेणोपकरणोपकरणित्वलक्षणसम्बन्धोहि जीवत्वसाधकः । अदृष्टत्वश्रवणेन प्रधानत्वशङ्काम्युदासपरं द्वितीयं सूत्रं व्याख्यातम् । तथायुक्तम् 'अदृष्टो द्रष्टा अश्रुतश्श्रोता' इत्यादिवाक्ये अदृष्टाश्रुतादि पदानां द्रष्टृश्रोत्रादिपदन्तारितानामेव श्रूयमाणतया प्रधानपरत्वशङ्काऽनुदयात् । नह्येकपदश्रवणेन वाक्यार्थनिर्धारणं पूर्वपक्षेऽपि घटते । प्रधानस्य सर्वविकारकारणत्वेऽपि नियन्तृत्वमुपचारतोऽपि नशक्यशङ्कम् । नहि घटादीन्प्रति मृत्तिकाया नियन्तृत्वम् ॥

अतः स्मार्तोन्यासो दृष्टान्ततयैव घटते । अतएव 'नच स्मार्तमतद्धर्माभिलापाच्छारीरश्च' इत्येवमन्तमेकंसूत्रम् अन्यथाऽर्थवैघट्यात् वैघट्ये च प्रधानशङ्काऽनुदय एव । पृथिव्यानियन्तृणां जीवानामिवेश्वरस्यापि सर्वनियन्तृनियन्त्रन्तरापेक्षया अनवस्थायां प्रसक्तायां नियन्तृनियाम्ययोरभेदेन तत्परिहारइत्यपि दुरुक्तम् । अनवस्थाप्रसङ्गाभावात् । युक्तया कल्पनायां ह्यनवस्थानं नश्रुत्याऽभ्युपगमे । श्रुतिश्च 'नतस्समश्चाभ्यधिकश्च दृश्यते' इत्यादिर्नियन्त्रन्तरं प्रतिषेधति । नचानवस्थाया भेदप्रयुक्तत्वादभेदेन तत्परिहार इतिवाच्यम्; श्रुतभेदनिबन्धनचोद्यस्य श्रुतविरुद्धाभेदकल्पनया परिहारानुपपत्तेः कयोरभेदः जलत्वत् पृथिव्यादेः परमात्मनश्च जडाजडयोरैक्याभावात् । नापि जीवेन, पृथिव्यादिवन्नियाम्यतयाऽवगतस्य तेनैव न्यायेन परमात्मनैक्यासंभवात् पक्षपातस्याहेतुकत्वाच्च । परमात्मसमानाधिकरण्यभेदनिषेधौह्युभयत्र समानौ । किंच पृथिव्यादेस्स्वव्यतिरिक्तज्ञानप्रकाश्यत्वे ज्ञानस्यापि स्वव्यतिरिक्तज्ञानप्रकाश्यत्वेनानवस्थाप्रसङ्गात् तत्परिहारार्थं जडाजडयोरैक्यं किं नस्यात् । ज्ञानस्य स्वप्रकाशत्वेनानवस्थाऽनुदयात् मिथ्यासत्यजडाजडयोस्तयोस्स्वभावविरोधाच्चेतिचेत्, तर्हि सर्वनि

## गूढार्थसंग्रहः

इत्यत्रापि सर्वलोकद्रष्टुरन्तर्यामिणएव पूर्वमुपस्थितस्य द्रष्टृशब्दविवक्षाया अवर्जनीयतया तद्व्यतिरिक्तजीवस्य निषेधएव नसंभवति । 'अत' इत्यत्र एतच्छब्दस्य अन्तर्यामिपरत्वात् । 'अतोऽन्यदार्तम्' इति वाक्ये मिथ्यात्वविवक्षाऽपि नसंभवति इति प्रागेव जिज्ञासाऽधिकरणे (२४६.पु) निर्णीतम् । अतः परसंमतार्थो नात्र विवक्षितः । किंतु शाण्डिल्य विद्यायां 'एषम आत्मा' इति त्रिवारमभ्यस्तवाक्ये षष्ठ्या भेदस्य 'शब्दविशेषात्' इति सूत्रोक्तस्य उपनिषद्भाष्ये परैरभिधानेन 'यमात्मानमन्तरो यमयति' इत्यत्रान्तर्यामियितुरेव 'सत आत्माऽन्तर्यामी' इति वाक्ये उपस्थितिरवर्जनीया यमयितृ वस्य पूर्वममावेन तात्पर्यविषयतया तत्त्यागे कारणाभावेन 'सत आत्मा' 'एषत आत्मा' इति चतुर्विंशतिवारं त्रयोविंशतिवारमभ्यस्तवाक्येन आमासेन षष्ठ्या अभ्यासेन भेदस्यैव विवक्षायाः प्रत्याख्यानासम्भवेन तादृशभेदस्यैव 'उभयेऽपिहि भेदेनैनम्' इत्यत्राभिप्रेतत्वं निर्णीयते । एवं तात्पर्यं तु 'नान्योऽतोऽस्ति' इति वाक्यानन्तर , 'एषत आत्माऽन्तर्यामी' इति काण्वमाध्यन्दिनपाठद्वये सद्भावेन युक्तमित्यपि निर्णीयते । अतश्च सगुणनिर्गुणविद्याविभागः शाण्डिल्य अन्तर्यामिविद्याद्वये कल्पयितुं न शक्यते ॥

### इति अन्तर्याम्यधिकरणम्

### श्रुतप्रकाशिका

यन्तुरीश्वरस्याप्यात्मेश्वरतया नियन्त्रन्तराभावेनानवस्थित्यभावाद्धेयार्हतदनर्हयोस्स्वभावविरोधाच्च न जीवेश्वरयोरेकत्वं युक्तम् धारणादावप्ययमनवस्थापरिहारोऽनुसन्धेयः ॥

किंच भेदोहि प्रतीयते, कथमभेदेनानवस्थापरिहारः । इत्थं–प्रतीयमानोऽपि भेदो मिथ्या, नच जडाजडयोरैक्यप्रसङ्गः, नियाम्यपृथिव्यादिमिथ्यात्वाद्धि पृथिव्यादेः परस्य च भेदमिथ्यात्वं जीवपरयोस्तु स्वरूपैक्यात् भेदमिथ्यात्वं, अत एव च नानवस्थेतिचेत् स्यादेवानवस्था जीवपरैक्येऽपि पृथिव्यादिकंप्रति जीवस्येव तदैकीभूतस्यापि ब्रह्मणो नियन्त्रराकाङ्क्षाया निवारकाभावात् । यथा पृथिव्यादेर्जीवस्य च नियन्तृनियाम्यभावमिथ्यात्वेऽपि तस्येश्वरंप्रति नियाम्यत्वमपारमार्थिकं संभवति, तथा जीवंप्रति नियन्तुः परमात्मनोऽप्यपरमार्थनियन्तृत्वादेवान्यं प्रत्यपरमार्थभूतनियाम्यत्वशङ्कां कोवारयेत् । नियन्त्रन्तरनिषेधकं प्रमाणं निवारकमितिचेत्–यदि प्रमाणबलादनवस्थापरिहारः, तर्हि नियन्तृनियाम्यभावपारमार्थ्यमाश्रित्यैव सा परिह्रियता प्रमाणान्तराबाधेन निर्वाहे संभवति बाधाश्रयणायोगात् । अतएव 'नान्योऽतोऽस्ति द्रष्टा' इत्यपि परमात्मैवाविद्याकल्पितभेदेन नियन्ता नियाम्यश्च भवतीति न पारमार्थिद्रष्ट्रन्तरनिषेधपरं किंतु नियन्तृरूपद्रष्ट्रन्तरनिवारणपरं विशिष्टे प्रकृतेसतीतरनिषेधस्य तत्तुल्येतरविषयत्वदर्शनात् । कथं प्रमाणान्तराप्राप्तं नियन्तृनियाम्यभावादिकं विधाय शास्त्रं तदेव प्रतिषेद्धुमलम् । कथमेकस्मिञ्शरीरे प्रत्यगात्मद्वित्वमितिचेत् काऽत्रानुपपत्तिः । बहुत्वे प्रत्यक्षत्व हीयेतेतिचेत् किं प्रत्यगात्मद्वित्वमात्रेऽनुपपत्तिः, उतैकस्मिन् शरीरे, नप्रथमः सर्वेषामात्मनामहमिति प्रत्यक्षत्वेव स्वात्मानुभवदर्शनात् नद्वितीयः, एकस्मिन् शरीरे चक्षुराद्यभिमानिना देवानां प्राणसंवादे 'अहं श्रेयसे विवदाना' इत्यनेकेष प्रत्यक्त्वेन स्वात्माऽनुभवदर्शनात् । तत्र प्रत्यक्त्वमेव सत्यं, भेदो मिथ्येतिचेत् ; भेदस्सत्यः, प्रत्यक्त्वं मिथ्या किं नस्यात् उभयोरपि छ्याबाधस्तुल्यः 'नेह नानाऽस्ति' इत्यादिकं भेदबाधकमितिचेत् तर्हि 'तत्त्वमसि' 'अयमात्मा' इत्यादिकं प्रत्यक्त्वबाधकं किं नस्यात् परागर्थैहिदंबुद्धिगोचरः । अयमिति निर्देशः प्रत्यक्त्वाविरोधी, प्रत्यक्त्वस्य प्रमाणसिद्धत्वादितिचेत् 'नेह नाना' इत्यादिकमपि ततएव प्रमाणवशात् आत्मबहुत्वाविरोधि । अतो बहुत्वस्य परात्तवस्याप्यत्वाभावान्न्यातिशून्यस्तर्काभासोऽयम् । अतोऽन्तर्यामिविद्याया यथोक्त एवार्थः ॥

इति अन्तर्याम्यधिकरणम्

अथ वेदान्तसारः

## सू–१९ अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् (१.२.१९)

'यःपृथिव्या तिष्ठन्' इत्यादिषु आधिदेवाधिलोकादिपदचिह्नितेषु वाक्येषु श्रूयमाणोऽन्तर्यामी परमपुरुषस्सर्वान्तरात्मत्वसर्वाविदितत्वसर्वशरीरकत्वसर्वनियन्तृत्वादिपरमात्मधर्मव्यपदेशात् ॥

## सू– नच स्मार्तमतद्धर्माभिलापाच्छारीरश्च १.२.२०

नायं प्रधानं जीवश्च, तयोरसंभावितसर्वाविदितत्वादिधर्माभिलापात् अस्वभावतया यथा न स्मार्तम्, तथा त्मावोऽपीत्यर्थः ॥

## गूढार्थसंग्रहः

(अधोनिर्दिष्टग्रन्थः ३९८.पृष्ठे योजयितव्योऽनुसन्धेयः)

काशिकायां च 'इत्थंभूतलक्षणे' इति सूत्रे 'कञ्चित्प्रकारं प्राप्तः इत्थंभूतः, तस्य लक्षणमित्थंभूतलक्षणं तत्र तृतीया विभक्तिः भवति अपि भवान् कमण्डलुना छात्रमद्राक्षीत्' इत्युक्तम्। अत्र पदमञ्जरी 'कमण्डलुना छात्रमद्राक्षीत्' इति छात्रोपाध्याययोर्गच्छतोश्छात्रस्य हस्ते कमण्डलुर्भवति कमण्डलुना छात्रोऽयं ज्ञातव्यः इत्यर्थः एतत्पर्यालोचनाया कार्ष्णोस्य काले विद्यमानत्वेन विशेषणवाचकपदात्तृतीया भवतीति स्फुटं विदुषाम्। 'नान्योऽतोऽस्ति द्रष्टा' इत्यत्र नियन्तुर्नियन्तरं निषिध्यत इति वृत्तिकारसम्मतार्थः श्रुत्याद्यानुगुण्येन युक्त इति पूर्वं जिज्ञासाधिकरणे (२४६.पृ) विस्तरेण निरूपितम्। तेन (श्रु) भाष्ये 'द्वौ द्रष्टारौ कथमुपपद्येते, नान्योऽतोऽस्ति द्रष्टा' इति द्रष्ट्रन्तरनिषेधकश्रुतिविरोधात् इत्याद्युक्तमविद्याकल्पितभेदवशात् सर्वमुपपद्यते। 'यत्रहि द्वैतमिव भवति' इत्यादिश्रुत्यैव तथा निर्णयात् इत्युक्तम्। एतच्छ्रुत्यर्थस्तु पूर्वमेव जिज्ञासाधिकरणे (४५५-८८६-८८७-८८८.पृ) विस्तरेण निरूपितः। एवं ग्रन्थान्तरसारामृतेऽपि॥

एतेन 'आत्मेत्येवोपासीत' इति सूत्रितब्रह्मविद्याविवरणरूपायां चतुरध्याय्यां 'अनेन ह्येतत्सर्वं वेद', इति एकविज्ञानेन सर्वविज्ञानप्रतिज्ञापूर्वकं 'ब्रह्म वा इदमग्र आसीत्' 'तदात्मानमेवावेदहं ब्रह्मास्मि इति तस्मात्तत्सर्वमभवत्', इत्यभेदेनोपक्रम्य षष्ठाध्यायान्ते मैत्रेयीब्राह्मणे निगमनरूपे 'यत्रत्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्' इत्यादिना, अभेदेनैवोपसंहारात् अध्यायचतुष्टयस्याभेदपरत्वे स्थिते तदन्तर्गतस्य ब्रह्मलोकान्तरसूत्रप्रतिपादनपरस्य महाप्रकरणानुरोधेन तद्विरुद्धभेदपरत्वाभावात्' इति अद्वैतसिद्धौ षड्विधतात्पर्यलिङ्गभङ्गे मधुसूदनसरस्वत्युक्तिर्निरवकाशा॥

'यत्रत्वस्य सर्वमात्मैवाभूत्' इत्यस्य ईशावास्यानुरोधेन परमतप्रतिकूलताया पूर्वमेव ग्रन्थद्वयेऽपि (गूढार्थसंग्रह त्र.अ) साधनात् 'आत्मेत्येवोपासीत' इति वाक्यघटितब्राह्मणोपक्रमस्थपुरुषशब्दस्य 'सवा अयं सर्वासु पूर्षु पुरिशयः' इत्युत्तरत्र क्रियमाणनिर्वचनानुसारेण सर्वशरीरार्थकतया 'आत्मेत्येवोपासीत' इत्यतः पूर्वं 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत असौ नामायमिदं रूपइति सएष इह प्रविष्ट आनखाग्रेभ्यः' इत्यत्र पुरुषशब्दार्थस्य तदनुगुणात्मशब्दार्थत्वं यतिः स्पष्टमुपपादनेन 'सयोत एकैकमुपास्ते न सवेद' इति व्यापकव्याप्यवस्तुद्वये एकैकोपासननिन्दानन्तरं 'आत्मेत्येवोपासीत' इति वाक्यम् एतदनुसारेण 'अनेन ह्येतत्सर्ववेद' इत्यत्र सर्वस्य आत्मशब्दार्थान्तःपातितया आत्मशब्दार्थवेदनम् सर्ववेदनमेव विवक्षितम्। एकविज्ञानेन सर्वविज्ञानकथैव नास्ति 'तदात्मानमेवावेदहं ब्रह्मास्मि' इत्यत्र परमते आत्मशब्दस्य वैयर्थ्यमेव। अतः 'अहं ब्रह्मास्मि' इत्यत्र जीवान्तर्यामिब्रह्माभेद एव विवक्षितः। स च जीवब्रह्मभेदस्य श्रुतितात्पर्यविषय एव सम्भवति। एवमङ्गीकार एव 'सएष इह प्रविष्ट आनखाग्रेभ्यः' इति वाक्यघटितकौषीतकब्राह्मणैकरस्यम् इत्यादिकं बहुत्रोपपादितम्। अतः उपक्रमस्याभेदपरत्वमेव सिद्धम्। मैत्रेयीब्राह्मणमपि नपरमतानुकूलमिति पूर्वमेव बहुत्र निरूपितम्। अतः बृहदारण्यकचतुरध्यायीमिदपरैवेति सिद्धम्। एतेन 'अहं ब्रह्मास्मि' इत्याद्यनेकश्रुतिस्मृत्यर्थकथनप्रकरण 'अनेन ह्येत सर्वंवेद' इति उपक्रमात् जीवब्रह्माभेदएव वाक्यप्रमेयइति मधुसूदनसरस्वत्युक्तिरपि पर्यालोचिता। विवरणादौ सर्वत्र षड्विधतात्पर्यलिङ्गानि न परेषामनुकूलानीति उपनिषत्सारे निरूपितम्। अतः द्वाविंशतिवारं चतुर्विंशतिवारश्चाम्नातवाक्यानुरोधी भेदएव सूत्रकारतात्पर्यविषय इति दिक्॥

इति अन्तर्याम्यधिकरणशेषः

## सू—२१ उभयेऽपि हि भेदेनैनमधीयते १.२.२१

उभये काण्वा माध्यन्दिनाश्च 'यो विज्ञाने तिष्ठन्' (बृ.५.७.२२) 'य आत्मनितिष्ठन्नात्मनोऽन्तरो यमात्मा नवेद यस्यात्मा य आत्मानमन्तरो यमयति' (५.७.२२) इति प्रत्यगात्मनो भेदेन, एनमन्तर्यामिणमधीयते; अतःपरएवायम्

इति वेदान्तसारः

अथ वेदान्तदीपः

## सू—१९ अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् [१.२.१९]

बृहदारण्यके—'पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यःपृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः' (बृ.५.७.३) इत्यादिषु सर्वेषु पर्यायेषु श्रूयमाणोऽन्तर्यामी किं प्रत्यगात्मा ? उत परमात्मेति संशयः। प्रत्यगात्मेति पूर्वःपक्षः, वाक्यशेषे 'द्रष्टा...श्रोता...मन्ता' इति द्रष्टृत्वादिश्रुतेः 'नान्योऽतोऽस्ति द्रष्टा' इति द्रष्ट्रन्तरनिषेधाच्च। राद्धान्तस्तु—पृथिव्याद्यात्मपर्यन्तसर्वतत्त्वानां सर्वैः तैरदृष्टेनैव नियमनं निरुपाधिकामृतत्वादिकं च परमात्मन एव धर्म इत्यन्तर्यामी परमात्मा। द्रष्टृत्वादिश्च रूपादिसाक्षात्कारः। सच 'पश्यत्यचक्षुः' (श्वे.३.१९) इत्यादिना परमात्मनोऽप्यस्ति। 'नान्योऽतोऽस्ति द्रष्टा' (बृ.५.७.२३) इति च जीवेनादृष्टान्तर्यामिद्रष्टृवत्, अन्तर्यामिणोऽप्यदृष्टद्रष्ट्रन्तरनिषेधपरः। सूत्रार्थः—अधिदैवाधिलोकादिपदचिह्नितेषु वाक्येषु श्रूयमाणोऽन्तर्यामी परमात्मा, सर्वान्तरत्व सर्वाविदितत्वसर्वशरीरकत्वसर्वनियमनसर्वात्मकत्वामृतत्वादिपरमात्मधर्माणां व्यपदेशात्॥

## सू—२० नच स्मार्तमतद्धर्माभिलापाच्छारीरश्च (१.२.२०)

स्मार्तं प्रधानम्, शारीरः प्रत्यगात्मा। स्मार्तं च शारीरश्च नान्तर्यामी, तयोरसम्भावितोक्तधर्माभिलापात्। यथा स्मार्तस्याचेतनस्यासम्भावनया नान्तर्यामित्वप्रसक्तिः, तथा प्रत्यगात्मनोऽपीत्यर्थः॥

## सू—उभयेऽपि हि भेदेनैनमधीयते [१.२.२१]

उभये काण्वा माध्यन्दिना अपि 'यो विज्ञाने तिष्ठन्, यआत्मनितिष्ठन्' (बृ.५.७.२२) इति यतः प्रत्यगात्मनो भेदेन—एनम् अन्तर्यामिणमधीयते; अतोऽय तदतिरिक्तः परमात्मा॥

॥ इति वेदान्तदीपे अन्तर्याम्यधिकरणं समाप्तम्॥

अथ अधिकरणसारावली

अन्तर्यामी स जीवो यदुदितिघटनायत्तधीवृत्त्यनूक्तेः
नान्यो द्रष्टेतिचोक्तेरिति यदि न नियन्त्रन्तरस्य व्युदासात् ।
द्रष्टृत्वाद्यं च तत्तद्विषयघटितधीरूपमीशेऽपि मुख्यं
तद्धर्मा: काण्वमाध्यन्दिनपठितिगतात्तस्य चात्मा शरीरम् ॥
स्थानैक्यादत्र शाखाद्वयपरिपठितावात्मविज्ञानशब्दा
वेकार्थावित्यकम्प्यन्तदपि कथयतो बुद्धिमेवेत्यपार्थः ।
लोकाम्नायप्रसिद्धयोरनुगमत इमौ चेतने ह्येकतानौ
बाधः केनापि नास्मिन्मरति च सत इत्यादिभिस्सामरस्यम् ॥

॥ इति अन्तर्याम्यधिकरणं समाप्तम् ॥



अथ अदृश्यत्वादिगुणकाधिकरणम्

गूढार्थसंग्रह.

(अन्तर्यामिब्राह्मणे—'यः पृथिव्यां तिष्ठन्' 'य आत्मनि तिष्ठन्' 'अदृष्टो द्रष्टा' 'नान्योऽतोऽस्ति द्रष्टा' इत्येतत्प्रघटके आत्मान्यनिषेधो न विवक्षितः सर्वान्तर्यामिण एव प्रश्ने तस्यान्तर्याम्यन्तरनिषेध एव तात्पर्यमिति 'उभयेऽपि हि भेदेनैनमधीयते' इत्यत्र निर्धारितम् । आथर्वणेऽपि 'यत्तदद्रेश्यम्' इत्यत्र अदृश्यत्वादिधर्माणामभिधानेन उपक्रमे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञया 'पुरुष एवेदꣳसर्वम्' 'ब्रह्म वेद ब्रह्मैव भवति' इति मध्ये उपसंहारे च निर्गुणैकात्म्यमेव विवक्षितमिति आक्षेपं परिहर्तुं तत्रापि सगुणमेव जीवभिन्नं ब्रह्म विवक्षितमिति निर्धारयति अदृश्यत्वादिगुणको धर्मोक्तेरित्यादिना । अत्र सूत्रे अदृश्यत्वादिमान् धर्मोक्तेरिति वा 'अदृश्यत्वादिक' इति वाऽनभिधाय 'गुणक' इति निर्देष्टुः सूत्रकृतोऽयमाशयः यत्सगुणमेवात्र विवक्षितमिति । अदृश्य धर्मोक्तेरित्यनभिधाय आदिपदोपादानेन अभावरूपधर्मवत् भावरूपधर्माणामप्यत्राभिधानेन निर्गुणस्य नात्र विवक्षेति स्फुटं कृतम् । अत्र 'अद्रेश्यमग्राह्यम्' इत्यत्र नञः धर्मिवाचकपदसमभिव्याहृततया भेदवाचकत्वम् । एवमथर्वोपनिषद्भाष्ये शङ्कराचार्यैरुक्तया अत्र 'विभु सर्वगतम्' इत्यत्र विभ्वनुच भवतीति विभु सर्वगतं व्यापकमाकाशादिवत् इति (श.उ) भाष्ये उक्तम् । 'अनेन सर्वगतत्वमायामशब्दादिभ्यः' इति सूत्र (श) भाष्ये 'आयामशब्दो व्याप्तिवचनः' इति चोक्तम् । इत्थं च 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति गीताद्यनुसारेण 'पुरुष एवेदꣳसर्वम्' इत्यादावभेदव्यपदेशः तत्र पुरुषशब्दार्थपर्यालोचनायामपि अभेदव्यपदेश उपपद्यते रीतिस्तु पूर्वमेवोक्ता । 'यया तदक्षरमधिगम्यते' इत्यत्र अधिपूर्वकगमिधातोः प्राप्त्यर्थकत्वमेव (शं.उ) भाष्येऽप्युक्तम् 'परात्परं पुरुषमुपैति दिव्यम्' इत्युपसंहारस्यानुगुण्यं 'मुक्तोपसृप्यव्यपदेशाच्च' इति सूत्रकार एव निश्चिनोति । 'ब्रह्म वेद ब्रह्मैव भवति' इति न परसमतायै निश्चेतुमलमिति पूर्वमेव निरूपितम् । 'कस्मिन्नु भगवो विज्ञाते सर्वमिदम्' इत्यत्र सर्वाभेद एव बोध्यते । छान्दोग्ये सर्वाभेदस्सम्यगुपपादितः स च सिद्धान्त [illegible] त इति पूर्वमेव निरूपितम् ॥

## अथ अदृश्यत्वादिगुणकाधिकरणम्

### श्रीभाष्यम्

### सू—२२ अदृश्यत्वादिगुणको धर्मोक्तेः (१.२.२२)

आथर्वणिका अधीयते—' अथ परा यया तदक्षरमधिगम्यते । यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ' (मुण्डक.१.१.५) इति, तथोत्तरत्र ' अक्षरात्परतःपरः ' [६] इति तत्र

## अथ अदृश्यत्वादिगुणकाधिकरणम्

### श्रुतप्रकाशिका

### सू—२२ अदृश्यत्वादिगुणको धर्मोक्तेः (१.२.२२)

(अदृश्यत्वादिगुणकशब्देनाक्षरं पुल्लिङ्गनिर्देशेनाक्षरात्परत. परश्च द्वयमपि विषयीक्रियत इत्यभिप्रायेण वाक्यद्वयं विषयतयोपाददानस्संशयञ्च दर्शयति अथेत्यादिना । अद्रेश्यमग्राह्यं, इन्द्रियादृश्यमनुमानाद्यवेद्यं चक्षुरदृश्यमिन्द्रियान्तरादृश्यं वा । यद्वा अद्रेश्यं ज्ञानेन्द्रियाविषयं, अग्राह्यं पाण्यादिकार्यहानोपादानाद्यविषयं । किमिहेति । अदृश्यत्वादिगुणकाक्षरस्य प्रकृतित्वमक्षरात् परत परस्य जीवत्वं च शङ्क्यते ननूभयोरुभयात्मकत्वम् उभयत्र वाक्यद्वयेऽपि किमदृश्यत्वादिगुणकमक्षरात्परतः परश्च प्रधानपुरुषौ उत परमात्मेति विचारः । तदर्थं पृथिव्यादिसर्वोपादानत्वादृष्टदृश्यत्वादिकं निर्दिश्यमानं किं पृथिव्यादिसजातीयमचेतनमेवाश्रयमुपस्थापयति उत नेति । किमूर्णनाभिदृष्टान्तोपादानमचेतनाश्रयोप

### गूढार्थसङ्ग्रह

(२०) ' उपासात्रैविध्यात् ' इति पूर्वपादान्ते योऽयमर्थ उक्त. स एव पूर्वाधिकरणेषु दयाऽदिगुणे पुत्रस्य दायभागवत् सृष्ट्यनन्तरं शरीरं पुत्रपरिपालनार्थं पितु. स्थिते. जीवाभिन्न परइति साधनमुखेन अन्तर्यामित्वस्थापनं तरतमभावाख्य फलशङ्कया. असम्भवप्रदर्शनम् अन्तराधिकरणे अशरीरित्वरूपपरब्रह्मज्ञानस्यैव शास्त्रितत्वं प्रज्ञाप्राप्तिरूपफलं ब्रह्मविद्यासाधारणमिति निर्णयेन जीवभिन्न परेशानमुपासनामकमित्यर्थस्य दृढीकरणेन श्रुतिषु सगुणनिर्गुणविद्याविभागकल्पनाया नावकाश इति अधिकरणत्रयेण साधितम् ॥

अथ परविद्या ज्ञानरूपा तद्विषयीभूतं निर्गुणं तद्ज्ञानस्यैव परमोक्ष फलम् । अपराविद्या सगुणविद्या तस्याः परमभावरूपफलानन्त्यादिविभागेन श्रुतिषु निर्गुणा मनो विवक्षितं दर्शयति वचनं तदा प्रागुक्तार्थो नघटत इति तत्पर्यालोचनमप्यभिप्रेत्य पूर्वाधिकरणे द्रष्टृत्वादिधर्माणामुक्तवत् अत्र पि द्धर्माणानुक्तया प्रकृतो स्वविकारगतधर्मानिक्षेत उपादानत्वोक्ति. स्वविकारसामान्यात्रादानं यानिम्बपनेव । अतएवोपक्रमे एकविज्ञानेन सर्वविज्ञानोक्तिरपि घटते । तदक्षरं मुण्डकश्रुतौ विशदतम् । प्रकृतिः उपादानं तदधिष्ठाता चेतना या उपादानं भवतीति सांख्या वर्णयन्तीति तदाशङ्का अत एव ' दिव्यो ह्यमूर्तः पुरुषः ' इत्यत्र निराकृत इति शङ्कानिरासमुखेन सिद्धान्तमाह—अदृश्यत्वादिगुणको धर्मोक्तेरिति ॥

## श्रीभाष्यम्

सन्दिह्यते–किमिहादृश्यत्वादिगुणकमक्षरमक्षरात्परतः परश्च प्रकृतिपुरुषौ, उतोभयत्र परमात्मैव इति। किं प्राप्तम्? प्रकृतिपुरुषाविति। कुतः? अस्याक्षरस्य 'अदृष्टो द्रष्टा' (बृ.४ ७.२३) इत्यादाविव न द्रष्टृत्वादिश्चेतनधर्म इह श्रूयते, 'अक्षरात्परतःपरः' [मुण्डक.२.१. २) इति च सर्वस्माद्विकारात्परभूतादक्षरादस्मात्परः क्षेत्रज्ञसमष्टिपुरुषः प्रतिपाद्यते। एतदुक्तंभवति—रूपादिमत्स्थूलरूपाचेतनपृथिव्यादिभूताश्रयं दृश्यत्वादिकं प्रतिषिध्यमानं पृथिव्यादिसजातीयसूक्ष्मरूपाचेतनमेवोपस्थापयति, तच्च प्रधानमेव। तस्मात्परत्वं च समष्टिपुरुषस्यैव प्रसिद्धम्। तदधिष्ठितं च प्रधानं महदादिविशेषपर्यन्तं विकारजातं प्रसूत इति

## श्रुतप्रकाशिका

स्वारस्यमुरवृयति, उत नेति। 'किमक्षरात्सम्भवतीह विश्वम्' इति विशब्दश्चिदचिदात्मकप्रपञ्चमुपस्थापयति उताचेतनमिति। अचेतनोपस्थापकत्वे स यूर्णनाभिदृष्टान्तस्य चाचिदाश्रयोपस्थापकस्योपबृंहकतया निषिध्यमानं दृश्यत्वादिकम चिदुपस्थापकमित्यदृश्यत्वादिगुणकं प्रधानम्, परश्च जीवइति स्यात्। यदा विश्वशब्दश्चिदचिदात्मकजगदुपस्थापकः तदोर्णनाभिदृष्टान्तस्य चाचेतनोपस्थापकत्वदुपबृंहकत्वान्निषिध्यमानं दृश्यत्वादिगुणकमपि नाचेतनोपस्थापकमित्यदृश्यत्वादिगुणकः परमात्मा, परमात्मनश्च परान्तरासम्भवात् अक्षरात्परतः परश्च परमात्मेति फलितम्। कुतइति। अदृश्यत्वाद्यर्थीयतृजन्तपदविशेषणतया 'धातुसम्बन्धे प्रत्ययाः' इति स्मृतिवशेनार्हार्थे विश्रान्तिरवगम्यते 'अद्रेश्यम्' इत्यपि च पदं कृत्यप्रत्ययान्तं वादर्हार्थे तथाचादृश्यत्वादिकं पूर्वाधिकरणे परमात्मधर्मतयाऽवगतमिति नाक्षरं प्रकृतिः अतएव अक्षरात्परतः परश्च नसमष्टिपुरुषः नहि परमात्मनोऽन्यः परः विद्यत इति शङ्कायामदृश्यत्वादिगुणकस्य प्रकृतित्वमुपपादयति अस्याक्षरस्येति। अन्तर्यामिविद्यायामपि नकेवलं दृश्यत्वं परमात्मसाधकं किंतु द्रष्टृत्वादिकमपि, इह तु तत्साधकस्याभावाददृश्यत्वं नाचिद्व्यावर्तकमित्यर्थः। 'अदृष्टो द्रष्टा' इत्यादिना सङ्गतिश्चाभिप्रेता। तथाऽप्यक्षरात्परतः परो न जीवः, नह्यक्षरात्पर इत्युक्तम्, किंतु 'परतः परः' इति शङ्कायां तस्य समष्टिपुरुषत्वमुपपादयति सर्वस्मादिति। सर्वस्माद्विकारात् परभूतादक्षरादिति। समानविभक्तिनिर्देशस्वारस्यात् परतोऽक्षरादिति सामानाधिकरण्यादिति भावः। चेतनधर्मावश्रवणेऽप्यदृश्यत्वं साधारणतया नानिर्णायकम्, अतोऽनुकूलयुक्तिवक्तव्या इत्याशङ्कायां रणवानुगुणं इत्याह–एतदुक्तमिति। तदन्यार्थकमनुपपत्त्या ब्राह्मणादयइत्यादि ब्राह्मणादिशब्दस्य चार्थे क्षत्रियादौ वर्तन्ते, न तु श्वपचादौ पश्वादौ वा। अबालवृद्धशब्दादय प्रत्यासन्नावस्थान्तराश्रये संनिकृष्टे एव, न तु पर्यन्तरे सन्निकृष्टबाधनस्य न्याय्यत्वात्। एवमदृश्यत्वादिगुणानां धर्मिविशेषाकाङ्क्षायां निषिध्यमानदृश्यत्वादिनाश्रयत्वेनाचेतने प्रतिपन्ने तस्यैव सूक्ष्मावस्थस्यादृश्यत्वादौ च संभवति विजातीयधर्म्यन्तरकल्पने गौरवप्रसङ्गात् तत्परत्वाश्रयणमयुक्तमिति भावः॥

दृश्यत्वादिनिषेधाद्रूपादिवदचेतनत्वमपि निवर्तत इत्यत्राह—तच्चेति। न दृश्यत्वादिव्याप्यमचेतनत्वं मनआदौ व्यभिचारादिति भावः। अदृश्यत्वादिगुणकस्य प्रधानत्वसमर्थनमुपजीव्याक्षरात्परतः परस्य जीवत्वमाह—तस्मादिति। 'यथोर्णनाभिः' इति चेतनदृष्टान्तः कथमित्यत्राह—तदधिष्ठितंचेति। अनधिष्ठितत्वेऽपि दृष्टान्तोऽस्ति 'यथा पृथिव्याम्' इति चेतनसंनिधिमात्रापेक्षत्वे दृष्टान्तः 'यथासतः' इति पूर्वपक्षमुपसंहरति अतइति॥

श्रीभाष्यम्

## सू–२३ विशेषणभेदव्यपदेशाभ्यां च नेतरौ (१.२.२३)

श्रुतप्रकाशिका

## सू—२३ विशेषणभेदव्यपदेशाभ्यां च नेतरौ [१-२.२३]

### गूढार्थसङ्ग्रह

त्तरवाक्यप्रतिपाद्यमानधर्मा विवक्षिता । अत उपक्र तापादानत्वस्य सर्वज्ञत्वादिगुणकएव प्रतिपादनात् सर्वज्ञत्वादि-गुणक भूतयोन्यक्षर ब्रह्मैव न प्रकृतिर्न जीव निरुपाधिकसर्वज्ञत्वस्य जीवेऽसम्भवात् । तस्य परोधीनमेव सर्वज्ञत्व कदाचन सार्वदिकम्, 'यदा पश्य –दिव्यम्' इत्यत्र बन्धविगमनानन्तरमेव विद्वच्छब्दार्थज्ञानसाम्यस्याभिधानात् । अत्र 'अदृश्यत्वादिगुणक' इत्युक्त्या सूत्रकृता पराविद्यासु सर्वासु सगुणमेवोपास्यमित्यर्थं निरणायि ॥

इन्द्रप्राणाधिकरण 'जानीहि, उपास्व' इति शब्दाभ्या उपासन ज्ञानरूपमिति निर्णयवत् 'तमेवैक जानथ' 'ओमित्यात्मान ध्यायथ' 'आनन्दरूप परिपश्यन्ति धीरा' 'तस्मिन् दृष्टे परावर' इत्यादिना ध्यानानन्तरकालिकसमाधौ दर्शनरूपताप्रतिपादनेन 'यद्भूतयोनिं परिपश्यन्ति धीरा' इत्युपक्रमोक्तार्थस्य निष्कर्षणेन पराविद्याया ध्यानानन्तरकालिकसमाधि ध्यान ज्ञानरूपमेवेति चार्थद्वयस्य अत्रापि निष्कर्षोऽवसेय । विशेषणभेदव्यपदेशाभ्या च नेतरौ ॥ अत्र परे 'दिव्यो ह्यमूर्त' इति दिव्यत्वादिविशेषणेन जीवभेद तत्रैव 'अक्षरात्परत पर' इत्यत्र प्रकृतिभेदो विवक्षित इत्यर्थ इत्युक्तम् । अत्र 'परभूतादव्याकृताक्षरात्पर' इति सामानाधिकरण्येन पदानामर्थं मङ्गीकृत्य मूलप्रकृतिभेद इत्युक्तम् । अक्षरात्परत पर इत्यत्र पञ्चम्यन्तपदोत्तरपरशब्दस्य पूर्वपञ्चमीप्रकृत्यर्थप्रतियोगिकभेदवद्वाचकत्वमेव व्युत्पत्तिसिद्धम् । तदर्थस्यैव शीघ्रमुपास्यतरिति 'अक्षरात्परत पर' इति श्रुत्यर्थसिद्धौ प्रकृतिविलक्षणत्वाव वैलक्षण्यमेव तत्र विवक्षितमिति जीवभेदबोधकत्वमेव युक्तम् । एतदर्थस्य 'परात्पर–दिव्यम्' इत्युत्तरश्रुतावपि परात्परमिति शब्दप्रयोगेण प्रतीत्या तस्य जीवप्राप्यत्वकथनेन 'नामरूपाद्विमुक्त परात्परम्' इति श्रुत्यानुपूर्व्येण नामरूपाद्विमुक्तत्वात् परस्यैव प्राप्यत्व तत्र विवक्षितमिति सिद्धयाऽत्रापि जीवावधिकाकर्ष एव विवक्षित । सामानाधिकरण्य वक्तव्यमित्याग्रहेतु चेदानुसारीत्या अक्षरशब्दो जीवपर एव । अक्षरभूतमक्षर प्रकृति तद्बद्धजीवश्च परभूतमक्षर नामरूपविनिर्मुक्त परिशुद्धात्मस्वरूपम् । कारणात्मना सत्त्वमात्रेण स्वरूपपरिणामो नैव गच्छति प्रकृते प्रळयकाले सदृशपरिणामाङ्गीकारात् स्वरूपपरिणामशून्यत्वेन जीवस्ततोऽपि पर । बद्धस्य धर्मभूतज्ञानसङ्कोचविकासत्वेन क्षरत्वात्तेव निवेश । धर्मभूतज्ञानसङ्कोचशून्य मुक्तस्तु अक्षरशब्दार्थ इति युक्तम् । अयमर्थ 'क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते' इत्यत्र विवक्षित अतश्च मुक्तजीवपरत्वमत्राप विवक्षितम् ॥

एतेन 'दिव्योह्यमूर्त' इत्यादिक जीवस्य मुक्तिकालिक सम्भवत्येवेति जीवपूर्वपक्षस्यापि निरास । एतेन दिव्यत्वामूर्तत्वादे जीवेऽसम्भव । अत विशेषणादिरूपेनैव जीवभेदसाधन सम्भवतीति सिद्धम् । अत्र प्रथमयोजनायां प्रकृतिभिन्नजीवभेदस्य परमात्मनि सिद्धया प्रकृतिभेदोऽपि सिद्धयतीत्यभिप्रेत्य भेदव्यपदेशस्योभयभेदसाधकत्व माष्य उक्तम् । एव विशेषणेनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञया प्रकृत व्यावृत्ति इत्यर्थाधिकरणादयोक्ता प्रकृत्यधिकरणेऽपि मदयने ॥

श्रीभाष्यम्

विशिनष्टि हि प्रकरणं प्रधानाच्च पुरुषाच्च भूतयोन्यक्षरं व्यावर्तयतीत्यर्थः ; एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनादिभिः । तथा ताभ्यामक्षरस्य भेदश्च व्यपदिश्यते 'अक्षरात्परतः परः' (मुण्डक.२.१.२) इत्यादिना । तथा हि—'स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह' (मु.१.१.१) इति सर्वविद्याप्रतिष्ठाभूता ब्रह्मविद्या प्रक्रान्ता ; परविद्यैव च सर्वविद्याप्रतिष्ठा ; तामिमां सर्वविद्याप्रतिष्ठां विद्यां चतुर्मुखाथर्वादिगुरुपरम्परयाऽङ्गिरसा प्राप्तां जिज्ञासुः 'शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' (मु.१.१.३) इति । ब्रह्मविद्यायास्सर्वविद्याऽश्रयत्वाद्ब्रह्मविज्ञानेन सर्वं विज्ञातं भवतीति कृत्वा ब्रह्मस्वरूपमनेन पृष्टम् ; 'तस्मै स होवाच द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च' (मु.१.१.४) इति । ब्रह्मप्रेप्सुना द्वे विद्ये वेदितव्ये-ब्रह्मविषये परोक्षापरोक्षरूपे द्वे विज्ञाने उपादेये इत्यर्थः तत्र परोक्षं शास्त्रजन्यं ज्ञानम्, अपरोक्षं योगजन्यम् ; तयोर्ब्रह्मप्राप्त्युपायभूतमपरोक्षं ज्ञानम् तच्च भक्तिरूपापन्नम् 'यमेवैष वृणुते तेन लभ्यः' (मु.३.२.३) इत्यत्रैव विशेष्यमाणत्वात्; तदुपायश्चागमजन्यं निवेकादिसाधनसप्तकानुगृहीतं ज्ञानम्, तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' (बृ.६.४.२२) इति श्रुतेः । आह च भगवान् पराशरः—तत्प्राप्तिहेतुर्ज्ञानं च कर्मचोक्तं महामुने । आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यते' (वि.पु.६.५.६०) इति । 'तत्रापरा ऋग्वेदो यजुर्वेदः' इत्यादिना 'धर्मशास्त्राणि'

श्रुतप्रकाशिका

विशेषणशब्दं व्याचष्टे विशिनष्टिहीति । कस्मात्किमित्यत्राह—प्रधानादिति । केधर्मैरित्यत्राह— एकेति । भेदव्यपदेशशब्दं व्याचष्टे तथेति । हेतुद्वयं विवरीतुमाह—तथाहीति । न केवलं विशेष्यवाचिना ब्रह्मविद्याशब्देन विशेषणवाचिना सर्वविद्याप्रतिष्ठामितिशब्देनापि ब्रह्मविषयत्वं सिद्धमित्याह—परविद्यैवचेति। परब्रह्मविषया विद्या परविद्या, सर्वविद्याप्रतिष्ठा च सर्वविद्याऽश्रयत्वं ज्ञातव्ये ब्रह्मणि कृत्स्नशास्त्रान्तर्भावात् ब्रह्मज्ञाने कृत्स्नविषयज्ञानान्तर्भूतानीत्यर्थः । तमाजिज्ञासमानेन ब्रह्म हि प्रष्टव्यं 'कस्मिन्नु भगवः' इति प्रश्नस्य कथं ब्रह्मविषयत्वमित्यत्राह— ब्रह्मविद्यायाइति ॥

द्वे विद्ये इति विद्याद्वयं भिन्नविषयत्वेनतरैर्व्याख्यातम् । तत्र कैश्चित् परविद्या परमात्मविषया कर्मोत्तरविषयापरविद्येति, कैश्चित् कर्मज्ञानमपरविद्या ब्रह्मज्ञानं परविद्येत्युक्तम् । कैश्चिदपरमात्मज्ञानमपरविद्या परमात्मज्ञानं परविद्येत्युक्तं तद्व्युदासार्थं व्याचष्टे ब्रह्मप्रेप्सुनेति । ब्रह्मैव विषयश्चेत् द्वयोरपि कोऽभेद इत्यत्राह—परोक्षापरोक्षरूपेइति । तस्तेत्यादिः 'सतपोऽतप्यत, ओदनपाकं पचति' इतिवत् 'द्वे विद्येतव्ये' इत्युक्तिः तत्र फलितमर्थमाह—उपादेयइत्यर्थइति। किं परोक्षं किमपरोक्षमित्यत्राह—तत्रेति । ब्रह्मैव विषयश्चेत् प्रथममेवालमित्यत्राह—तयोरिति । उपायभूत, अव्यवहितोपायभूत तस्यापि निष्फलत्वमश्रवाक्यनावगम्यत इत्यत्राह—तच्च भक्तिरूपेति । तर्हि किं प्रथमेनेत्यत्राह—तदुपायश्चेति । साधनसप्तकं शास्त्रजन्यज्ञानं चोभयमप्युपासनात्मकज्ञानस्य हेतुरिति यावत् । एतद्वैद्वायाह—आहचेति । अनेन विद्याद्वयस्य भिन्नविषयत्वोक्तिरुपबृंहणविरुद्धेति दर्शितं भवति, विवेकाच्च उदितमित्यर्थः । यथोक्तलक्षणे ज्ञानद्वयेऽपि किं वाक्यं किं विषयमित्यपेक्षायामागमोत्थं ज्ञानं तत्रेत्यादिवाक्येनोच्यत इत्याह—तत्रेति । वेदपर्यन्तं महाज्ञानहेतुः धर्मशास्त्रादिकीर्तनं किमर्थं नत्वागमोत्थत्वं ज्ञानस्य शाब्दं प्रतीयत इत्यत्राह—

श्रीभाष्यम्

तत्र दृष्टान्ता उपपद्यन्ते ' यथोर्णनाभिस्सृजते गृह्णते च यथा पृथिव्यामोषधयस्सम्भवन्ति। यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्सम्भवतीह विश्वम् ' (मुण्डक १.१.७) इति। अतोऽस्मिन्प्रकरणे प्रधानपुरुषावेव प्रतिपाद्यते इति ॥

एवं प्राप्ते ब्रूमः—अदृश्यत्वादिगुणको धर्मोक्तेः अदृश्यत्वादिगुणकोऽक्षरात्परतः परश्च परमपुरुष एव ; कुतः ? तद्धर्मोक्तेः ' यस्सर्वज्ञस्सर्ववित् ' [मुण्ड.१.१.९) इत्यादिना सर्वज्ञत्वादिकास्तस्यैव धर्मा उच्यन्ते ; तथा हि ' यथा तदक्षरमधिगम्यते ' [१.१.५] इत्यादिना अदृश्यत्वादिगुणकमक्षरमभिधाय ' अक्षरात्सम्भवतीह विश्वम् ' (१.१.७) इति तस्माद्विश्वसम्भवं चाभिधाय ' यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते ' (१.१.९) इति भूतयोनेरक्षरस्य सर्वज्ञत्वादिः प्रतिपाद्यते । तस्मात् ' अक्षरात्परतः परः ' (२.१.२) इति च प्रकृतमदृश्यत्वादिगुणकं भूतयोन्यक्षरं सर्वज्ञमेव परत्वेन व्यपदि-

श्रुतप्रकाशिका

राद्धान्ते अदृश्यत्वेति । ' परात्परं पुरुषम् ' इति वाक्यं स्मारयति परमपुरुषइति । कस्य धर्मोक्तेरित्यपेक्षाया पूरयति तद्धर्मोक्तेरिति । नन्वक्षरं प्रकृतिः, सर्वज्ञस्तु स्वसन्निधानात् प्रकृत्युपकारकः प्रकृष्टपुण्यो जीवस्तदक्षरोपलक्षितो मुक्तेनेति शङ्कायामाह—तथाहीति । तस्मादिति । अक्षरशब्दः प्रकृताक्षरपर इतिभावः । भूतयोनेरक्षरस्येति । सार्वज्ञ्यादेः धर्मिविशेषापेक्षाया प्रकृत एव धर्मी स्वीकार्यः, उपक्रमप्रतिपन्नपरित्यागेन अप्रतिपन्नकल्पनायोगात् ' भूतयोनिम् तस्मादेतत् ' इतिकारणत्वप्रत्यभिज्ञानाच्च । अतः ' यस्सर्वज्ञ. ' ' तस्मादेतत् ' यत्तच्छब्दौ प्रकृताक्षरविषयौ ततश्चाक्षरस्य कारणत्वमनूद्य सृष्टिस्थित्युपयोगित्वेन सार्वज्ञ्यादिविधीयत इत्यर्थः ॥

ननु भूतयोनित्वलिङ्गप्रत्यभिज्ञानादपि ' अक्षरात्परतः ' इति श्रुतिप्रत्यभिज्ञानं प्रबलं पञ्चम्यन्ताक्षरपदवाच्यंहि प्रधानम् । अतस्तदेव ' यथा तदक्षरम् ' इत्यत्रापि प्रतिपाद्यं अतस्तदनुवादेन सार्वज्ञ्यादिविधानमयुक्तमिति चेन्न, केवल श्रुतिप्रत्यभिज्ञानादपि ' येनाक्षरं पुरुषं वेद सत्यम् ' इति पूर्वोक्त भूतयोनित्वलिङ्गानुगृहीतस्याक्षरश्रुतिप्रत्यभिज्ञानस्य प्रबलत्वात् । ननु ' भूतयोनिम् ' ' अक्षरात्सम्भवति ' इत्युपादानमुच्यते ' यस्सर्वज्ञस्सर्ववित् ' इति निमित्तत्वम् । अतो लिङ्गानुगृहीतत्वमसिद्धम् । नचैतावता ' अक्षरात्परतः ' ' अक्षरं पुरुषम् ' इति इति श्रुतिप्रत्यभिज्ञानयोस्तुल्यत्वम् ' अक्षरात्परतः ' इति प्रत्यभिज्ञानस्य ऊर्णनाभिदृष्टान्तानुगृहीतत्वेन प्राबल्यादिति नैवम् । ऊर्णनाभिदृष्टान्तस्याचिद्विशिष्टब्रह्मकारणत्वेऽप्युपपत्तेः, नचैतावता प्रत्यभिज्ञानयोस्तुल्यत्वं ' अक्षरं पुरुषम् ' इति प्रत्यभिज्ञानस्य प्रथमभाविनः प्रबलतया पञ्चम्यन्ताक्षरशब्दस्य तदविरोधेन वर्णनीयत्वात् अतो भूतयोन्यक्षरमेव ' अक्षरं पुरुषम् ' इत्युच्यते पुरुषत्वात्कारणत्वेन प्रत्यभिज्ञानाच्चाक्षरशब्दवाच्यस्य एव सर्वज्ञत्वादिगुणकः तथात्वसति 'अक्षरात्सम्भवति' ' तस्मादेतद्ब्रह्म ' इति पञ्चम्योर्वैरूप्यं न स्यात् । निमित्तोपादानाभेदे सत्येव ह्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमुपपद्यते ॥

अक्षरं न परमात्मा अक्षरादपि परस्य प्रतिपन्नत्वादित्यत्राह—पञ्चम्यादिति । परत्वेन व्यपदिश्यते प्रथमान्तेन परशब्देन व्यपदिश्यत इत्यर्थः । प्रकृतमदृश्यत्वादिगुणकमिति । अदृश्यत्वादिगुणकत्वेन प्रकृतत्वादित्यर्थः । अपाणि ... सर्वगतत्वेन पुरुषशब्दवाच्यत्वेन च प्रकृतहि भूतयोन्यक्षरं ' अपाणिपादम् ' ' नित्यं विभुं सर्वगतम्

## श्रीभाष्यम्

दृश्यते । यतः अक्षरात्परतः परः ' (२.१.२) इत्यक्षरशब्दः पञ्चम्यन्तः प्रकृतमदृश्यत्वादिगुणकमक्षरं नाभिधत्ते, तस्य सर्वज्ञस्य विश्वयोनेस्सर्वस्मात्परत्वेन तस्मादन्यस्य परत्वासम्भवात् । अतोऽत्राक्षरशब्दो भूतसूक्ष्ममचेतनं ब्रूते ॥

इतश्च न प्रधानपुरुषौ—

## श्रुतप्रकाशिका

' तेनेदं पूर्णं पुरुषेण सर्वम् ' ' येनाक्षरं पुरुषं वेद ' इति च अक्षरात्परतः परस्य ' दिव्यो ह्यमूर्तः पुरुषः ' इति पुरुषशब्दसामानाधिकरण्यदर्शनादमूर्तशब्देनापाणिपादत्वप्रत्यभिज्ञानात्, ' स बाह्याभ्यन्तरः ' इत्यनेन सर्वगतत्वप्रत्यभिज्ञानाच्च भूतयोन्यक्षरमेवाक्षरात्परात् पर इत्यर्थः । सर्वज्ञस्य भूतयोन्यक्षरात्परत्वशङ्काव्युदासाय भूतयोन्यक्षरस्यैव सार्वज्ञ्यादिगुणकत्वोपपादनं स्मारयति सर्वज्ञमेवेति । ननु अक्षरशब्दार्थवैरूप्यपरिहाराय भूतयोन्यक्षरात् सर्वज्ञत्वादिगुणकः परः अभ्युपगन्तव्य इत्यत्राह— अतोऽक्षरादिति । प्रकृतमदृश्यत्वादिगुणकमिति । अदृश्यत्वादिगुणकस्यैव 'येनाक्षरं पुरुषम् ' इति पूर्वस्मिन्सन्निकृष्टे वाक्ये प्रकृत, तदेव 'प्रोवाच ' इति वक्तव्यतया प्रतिपादितमिति तस्यैव प्राधान्येन प्रतिपाद्यत्वमवगम्यते । अतोऽक्षरपुरुष एवाक्षरात्परतः परत्वेनोच्यत इत्यभ्युपेत्य, अन्यस्य प्रतिपाद्यत्वे सन्निधानार्थोऽन्यत्र हेतु विवृणोति तस्येति । सर्वज्ञस्य विश्वयोनेरिति । ' अक्षरात्सम्भवतीह विश्वम् ' ' तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते ' इत्युभय कारणत्वप्रत्यभिज्ञानात् भूतयोन्यक्षरमेव सर्वज्ञमिति न सर्वज्ञस्तदपेक्षया परः इत्यभिप्रायः । सर्वस्मात्परत्वेन तस्मादन्यस्य परत्वासम्भवादिति । भूतयोन्यक्षरमभिधायानन्तरमेव ' यस्मात्परं नापरमस्ति किञ्चित् ' इति समाभ्यधिकनिषेधस्योपश्रमावगतत्वादित्यर्थः । भूतयोन्यक्षरादनन्यत्वेन सर्वज्ञस्य तत्परत्वासम्भवः एवं क्रमविरोधेनाक्षरादर्थान्तरस्य परत्वासम्भवश्चेत्युक्तं भवति 'अक्षरादिति विमुच्यत इत्यत्राह— अतोऽत्रेति । अतः यस्य परमात्मधर्मोक्तिस्सहि परमात्मा प्रथमान्ताक्षरशब्दनिर्दिष्टस्य तद्धर्मश्रवणात् पञ्चम्यन्ताक्षरशब्दनिर्दिष्टस्य तदभावाच्च, अक्षरशब्दयोर्भिन्नविषयत्वमुपपन्नम् आसन्नेत्र प्रकरणे 'तपसा चीयते ब्रह्म ' ' इतिहस्मयत् ब्रह्मविदो वदन्ति ' ' तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते ' इत्य ब्रह्मशब्दयोर्भिन्नविषयत्वदर्शनात् । यत्तु समानविभक्तिनिर्देशस्वारस्यात्सामानाधिकरण्यमिति तन्न परशब्दस्य पञ्चम्यन्तपदसापेक्षत्वात्स्वारस्यार्थं न सामानाधिकरण्यम् । किंच परतोऽक्षरादिति न निर्दिष्ट ' अक्षरात्परतःपरः ' इतिहि क्रमः तत्स्वारस्याच्च न सामानाधिकरण्यम् ॥

## गूढार्थसंग्रहः

अत्रादिपदेनादृश्यत्व यद्वाक्ये उपक्रान्त तद्वाक्ये विवक्षितास्सर्वे गुणा विवक्षिता इत्यभावरूपगुणमात्रविवक्षाव्यावृत्त्यर्थमादिपदमुक्तम् । तेन नित्यत्वविभुत्वभूतयोनित्वगुणास्सगृहीताः । अत्र विकारगतदृश्यत्वादिनिषेधेन दृश्यत्वादेः प्रसक्तौ निषेधो वाच्य इति उपादानोपादेययोरभेदेनोपादाने दृश्यत्वप्रसक्तौ तत्र तन्निषेधो युक्त इति प्रकृतिरेव विवक्षितेति पूर्वपक्षिण आशयः । ' अवर्ण'मित्युक्तया प्रकृतिकार्यगतरूपादिशून्यत्वप्रतिपादनेन ' अब्राह्मणमानय ' इत्यादाविव कार्यसजातीयस्यैव प्रतीतिरिति च एतत्तात्पर्यं च ' रूपादिमत् स्थूलरूप च ' इत्यादि भाष्य एव सूचितम् । अतश्च तद्वाक्ये प्रकृतौ आदिपदवाच्यधर्माणां मुख्यानां प्रकृतावसम्भवेन विवक्षा पूर्वपक्षिणो नैव सम्मता । धर्मोक्तेः इत्यत्र एतद्वाक्यो-

श्रीभाष्यम्

विशिनष्टि हि प्रकरणं प्रधानाच्च पुरुषाच्च भूतयोन्यक्षरं व्यावर्तयतीत्यर्थः । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनादिभिः । तथा ताभ्यामक्षरस्य भेदश्च व्यपदिश्यते 'अक्षरात्परतः परः' (मुण्डक.१.२.१) इत्यादिना । तथा हि—'स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह' (मु.१.१.१) इति सर्वविद्याप्रतिष्ठाभूता ब्रह्मविद्या प्रक्रान्ता ; परविद्येव च सर्वविद्याप्रतिष्ठा ; तामिमां सर्वविद्याप्रतिष्ठां विद्यां चतुर्मुखाथर्वादिगुरुपरम्परयाऽङ्गिरसा प्राप्तां जिज्ञासुः 'शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' (मु.१.१.३) इति । ब्रह्मविद्यायास्सर्वविद्याऽश्रयत्वाद्ब्रह्मविज्ञानेन सर्वं विज्ञातं भवतीति कृत्वा ब्रह्मस्वरूपमनेन पृष्टम् । 'तस्मै स होवाच द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च' (मु.१.१.४) इति । ब्रह्मप्रेप्सुना द्वे विद्ये वेदितव्ये-ब्रह्मविषये परोक्षापरोक्षरूपे द्वे विज्ञाने उपादेये इत्यर्थः तत्र परोक्षं शास्त्रजन्यं ज्ञानम्, अपरोक्षं योगजन्यम् ; तयोर्ब्रह्मप्राप्त्युपायभूतमपरोक्षं ज्ञानम् तच्च भक्तिरूपापन्नम् 'यमेवैष वृणुते तेन लभ्यः' (मु.३.२.३) इत्यत्रैव विशेष्यमाणत्वात्; तदुपायश्चागमजन्यं विवेकादिसाधनसप्तकानुगृहीतं ज्ञानम्, 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' (बृ ६.४.२२) इति श्रुतेः । आह च भगवान् पराशरः—तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने । आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यते' (वि.पु.६.५.६०) इति । 'तत्रापरा ऋग्वेदो यजुर्वेदः' इत्यादिना 'धर्मशास्त्राणि'

श्रुतप्रकाशिका

विशेषणशब्दं व्याचष्टे विशिनष्टिहीति । कस्मात्किमित्यत्राह—प्रधानादिति । केन धर्मेणेत्यत्राह— एकेति । भेदव्यपदेशशब्दं व्याचष्टे तथेति । हेतुद्वयं विवरीतुमाह—तथाहीति । न केवलं विशेष्यवाचिना ब्रह्मविद्याशब्देन विशेषणवाचिना सर्वविद्याप्रतिष्ठामितिशब्देनापि ब्रह्मविषयत्वं सिद्धमित्याह—परविद्यैव चेति । परब्रह्मविषया विद्या परविद्या, सर्वविद्याप्रतिष्ठात्वं सर्वविद्याऽश्रयत्वं ज्ञातव्ये ब्रह्मणि कृत्स्नज्ञातव्यान्तर्भावात् ब्रह्मज्ञाने कृत्स्नविषयज्ञानान्तर्भूतानीत्यर्थः । ब्रह्मजिज्ञासमानेन ब्रह्म हि प्रष्टव्यं 'कस्मिन्नु भगवः' इति प्रश्नस्य कथं ब्रह्मविषयत्वमित्यत्राह— ब्रह्मविद्याया इति ॥

द्वे विद्ये इति विद्याद्वयं भिन्नविषयत्वेनेतरैर्व्याख्यातम् । तत्र कैश्चित् परविद्या परमात्मविषया अर्थान्तरविषयापरविद्येति, कैश्च कर्मज्ञानमपरविद्या ब्रह्मज्ञानं परविद्येत्युक्तम् । कैश्चिदपरमार्थज्ञानमपरविद्या परमार्थज्ञानं परविद्येत्युक्तं तद्व्यावृत्त्यर्थं व्याचष्टे ब्रह्मप्रेप्सुनेति । ब्रह्मैव विषयश्चेत् द्वयोरपि को भेद इत्यत्राह—परोक्षापरोक्षरूपे इति । तस्येत्यादिः 'स तपोऽतप्यत, ओदनपाकं पचति' इतिवत् 'द्वे विद्ये वेदितव्ये' इत्युक्तिः तत्र फलितमर्थमाह—उपादेये इत्यर्थ इति । किं परोक्षं किमपरोक्षमित्यत्राह—तत्रेति । ब्रह्मैव विषयश्चेत् प्रथमेनैवालमित्यत्राह—तयोरिति । उपायभूतं, अन्यथाहीनोपायभूतं तस्यापि निष्फलत्वमन्यत्र वाक्यनावगम्यत इत्यत्राह—तच्च भक्तिरूपेति । तर्हि किं प्रथमेनेत्यत्राह—तदुपायश्चेति । साधनसप्तकं शास्त्रजन्यज्ञानं चोभयमप्युपासनात्मकज्ञानस्य हेतुरिति यावत् । एतद्वैशद्यायाह—आह चेति । अनेन विद्याद्वयस्य भिन्नविषयत्वोक्तिरुपबृंहणविरुद्धेति दर्शितं भवति, विवेकाच्च उत्थितमित्यर्थः । यथोक्तलक्षणे ज्ञानद्वयेऽपि किं वाक्यं किं विषयमित्यपेक्षायामागमोत्थं ज्ञानं तत्रेत्यादिवाक्येनोक्तमित्याह—तत्रेति । वेद एव हि ब्रह्मज्ञानहेतुः धर्मशास्त्रादिकीर्तनं किमर्थं न चात्रागमोत्थत्वं ज्ञानस्य शाब्दं प्रतीयत इत्यत्राह—

## श्रीभाष्यम्

(मुण्ड.१.१.५) इत्यन्तेन आगमोत्थं ब्रह्मसाक्षात्कारहेतुभूतं परोक्षज्ञानमुक्तम् । साङ्गस्य सेतिहासपुराणस्य सधर्मशास्त्रस्य समीमांसस्य वेदस्य ब्रह्मज्ञानोत्पत्तिहेतुत्वात् । 'अथपरा यया तदक्षरमधिगम्यते' (१.१.५) इत्युपासनारूपं ब्रह्मसाक्षात्कारलक्षणं भक्तिरूपापन्नंज्ञानं 'यत्तदद्रेश्यमग्राह्यम्' इत्यादिना परोक्षापरोक्षरूपज्ञानद्वयविषयस्य परस्य ब्रह्मणस्स्वरूप-मुच्यते 'अथोर्णनाभिस्सृजते गृह्णते च' (मु.१.१.७) इत्यादिना । यथोक्तस्वरूपात्परस्माद्ब्र-ह्मणोऽक्षरात्कृत्स्नस्य चेतनाचेतनात्मकप्रपञ्चस्योत्पत्तिरुक्ता ; विश्वमिति वचनाच्चाचेतन मात्रस्य 'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते । अन्नात्प्राणो मनस्सत्यं लोकाः कर्मसु चामृतम् ॥' (१.१.८) इति ब्रह्मणो विश्वोत्पत्तिप्रकार उच्यते ; तपसा ज्ञानेन 'यस्य ज्ञान मयं तपः' (१.१.९) इति वक्ष्यमाणत्वात् ; चीयते-उपचीयते ; 'बहुस्याम्' (छां.६.२.३, तै.आन.६) इति सङ्कल्परूपेण ज्ञानेन ब्रह्म सृष्ट्युन्मुखं भवतीत्यर्थः । ततोऽन्नमभिजायते-अद्यत इत्यन्नम्, विश्वस्य भोक्तृवर्गस्य भोग्यभूतं भूतसूक्ष्ममव्याकृतं परस्माद्ब्रह्मणो जायत इत्यर्थः ; प्राणमनःप्रभृति च स्वर्गापवर्गफलरूपसाधनभूतकर्मपर्यन्तं सर्वं विकारजातं तस्मा देव जायते । 'यस्सर्वज्ञस्सर्ववित्' (मु.१.१.९) इत्यादिना सृष्ट्युपकरणभूतं सार्वज्ञ्यसत्य-सङ्कल्पत्वादिकमुक्तम् । सर्वज्ञात्सत्यसङ्कल्पात्परस्माद्ब्रह्मणोऽक्षरादेतत् कार्याकारं ब्रह्म नामरूपविभक्तं भोक्तृभोग्यरूपं च जायते । तदेतत्सत्यम्' (मु १.२.१)इति परस्य ब्रह्मणो निरुपाधिकसत्यत्वमुच्यते । 'मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा स-तानि । तान्याचरत नियतं सत्यकामाः' (१.२.१) इति सार्वज्ञ्यसत्यसङ्कल्पत्वादिकल्याण गुणाकरमक्षरं पुरुषं स्वतस्सत्यं कामयमानास्तत्प्राप्तये फलान्तरेभ्यो विरक्ता ऋग्यजुस्सामा

## श्रुतप्रकाशिका

साङ्गस्येति । सपरिकरस्यागमस्य तज्ज्ञानहेतुत्वादपराविद्येत्युक्तमित्यर्थः । 'तत्रापरा ऋग्वेद' इत्यादिवाक्यस्याभिप्रेत ज्ञानविषयत्व पूर्वोक्तोपबृंहणवचनेन 'द्विधा ज्ञान तथोच्यते' इत्यनेन स्पष्टीकृतम् । 'अथ' इत्यादिवाक्यस्य विवे कजज्ञानविषयत्वमाह–अथेति । उक्तमित्यन्वयः 'यत्तत्' इत्यादिवाक्यस्य विषयमाह–यत्तदिति । यथोर्णनाभि रिति । भूतयोनित्वविवरणमित्यर्थः । 'तपसा चीयते' इत्यादिकं व्याचष्टे ब्रह्मण इत्यादिना । विश्वस्य भोक्तृव-र्गस्य इत्यनेनैतद्वाक्यस्थसत्यशब्दो व्याख्यातो भवति, सत्यशब्दवाच्यस्य भोक्तृवर्गस्येत्यर्थः. फलसाधनभूतकर्मपर्यन्त-मिति । 'लोकाः स्वर्गादयः' 'कर्मसुचामृतं कर्मस्वायत्तममृतम् अमृतत्वसाधनभूतं कर्म' इत्यर्थ इतिभावः । पुनस्सर्वाभिधानपौनरुक्त्यमाशङ्क्याह–यस्सर्वज्ञइति । यथा 'दध्ना जुहोति' इति वाक्ये जुहोतिपदेन 'अग्निहोत्रं जुहोति' इति विहितं होममनूद्य दध्नस्तत्साधनत्वं विधीयते तथा कारणानुवादेन सर्वज्ञत्वादिगुणविधानमित्यर्थः । भोक्तृभोग्यरूपं च जायते इत्यनेनान्नशब्दो व्याख्यातो भवति । 'अद्यतेत्ति च भूतानि' इति अन्नशब्दनिर्वचनम् द्वितीयखण्डार्थमाह–तदेतत्सत्यमित्यादिना । परस्येति । कारणत्वशङ्कितदोषव्यावृत्त्यर्थमुक्तमिति भावः । मन्त्रेष्वि-त्यादि । केचित्सत्यकामपद चतुर्मुखलोककामपर व्याचक्षत इति तद्व्युदासार्थमाह–सार्वज्ञ्येति । कर्मणाम् [illegible] णाकरत्वमुक्तम् । अक्षरपुरुष स्वतस्सत्यं कामयमाना इति । 'तदेतत्सत्यम्' 'येनाक्षरं पुरुषं वेद सत्यम्' पुनश्च 'तदेतत्सत्यम्' इति पूर्वापरयोर्ब्रह्मवाचित्वेन प्रयुक्तसत्यशब्दैकार्थ्यादितिभावः । बहुधेति अधिकारा [illegible]

श्रीभाष्यम्

यैस्तु कविभिर्दृष्टानि वर्णाश्रमोचितानि त्रेताग्निषु बहुधा सन्ततानि कर्माण्याचरतेति 'एष वः पन्थाः' (१.२.१) इत्यारभ्य 'एष वः पुण्यस्सुकृतो ब्रह्मलोकः' (मु.१.२.६) इत्यन्तेन कर्मानुष्ठानप्रकारं, श्रुतिस्मृतिचोदितेषु कर्मस्वेकतरकर्मवैधुर्येऽपीतरेषामनुष्ठितानामपि निष्फलत्वम् अयथाऽनुष्ठितस्य चाननुष्ठितसमत्वम् अभिधाय 'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति' (१.२.७) इत्यादिना फलाभिसन्धिपूर्वकत्वेन ज्ञानविधुरतयाचावरं कर्माचरतां पुनरावृत्तिमुक्त्वा 'तपश्श्रद्धे ये ह्युपवसन्ति' (मुण्डक.१.२.११)इत्यादिना फलाभिसन्धिरहितं ज्ञानिनाऽनुष्ठितंकर्म ब्रह्मप्राप्तये भवतीति प्रशस्य 'परीक्ष्य लोकान्' (१.२.१२) इत्यादिना केवलकर्मफलेषु विरक्तस्य यथोदितकर्मानुगृहीतं ब्रह्मप्राप्त्युपायभूतं ज्ञानं जिज्ञासमानस्य च आचार्योपसदनं विधाय 'तदेतत्सत्यं यथा सुदीप्तात्' (२.१.१) इत्यादिना 'सोऽविद्या ग्रन्थिं विकिरतीह सोम्य' (२.१.१०) इत्यन्तेन पूर्वोक्तस्याक्षरस्य भूतयोनेः परस्य ब्रह्मणः परमपुरुषत्वानु-

श्रुतप्रकाशिका

मेदेन त्रेता अग्निश्च 'अग्नित्रयमिदं त्रेता' इति नैघण्टुकाः आचरतेति । उच्यत इति पूर्ववाक्यादनुषङ्गः एष इत्यादि । एकतरकर्मवैधुर्येऽपीतरेषां निष्फलत्वमित्यनेन 'यस्याग्निहोत्रमदर्शपूर्णमासमनाग्रयणमतिथिवर्जितं च अहुतमवैश्वदेवम्' इत्यस्यार्थोऽभिप्रेतः अयथाऽनुष्ठितस्याननुष्ठितसमत्वं चेत्यनेन 'अश्रद्धया अविधिना हुतमासप्तमांस्तस्य लोकान् हिनस्ति' इत्यस्यार्थ उक्तः । इदं च निष्फलसाधनकर्मविषयमुक्तम् 'प्लवा ह्येते अदृढा' इति तत्प्रकरणत्वात् 'नेहाभिक्रमनाशोऽस्ति' इति मोक्षसाधनकर्मणा यथोक्तविपरीतत्वप्रतिपादनाच्च प्लवा ह्येत इत्यादि । अष्टादशोक्तम्' अष्टादशस्मृत्युक्त श्रुतेरपि प्रदर्शनार्थमिदं श्रुतिस्मृतिचोदितं कर्मेत्यर्थः । यद्वा षोडशर्त्विक्पत्नीयजमानरूपाष्टादशपुरुषेषु विहितम् । यद्वा 'नवग्राम्यान्पशूनालभते नवारण्यान् उभयान्पशूनालभते' इति श्रुत्युक्ताष्टादशपशुहविष्क कर्मेति । यज्ञशब्दः कर्मसामान्यवाची येषु पुरुषेषु स्मृतिविहितमवरं कर्म फलाभिसन्धिकृत एतच्छ्रेयो येऽभिनन्दन्ति ते पुरुषा जरामृत्यू अपियान्तीत्यन्वयः । ब्रह्मप्राप्तये भवतीत्यनेन 'सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतस्स पुरुषोऽव्ययात्मा' इत्यस्यार्थ उक्तः । 'परीक्ष्य लोकान्' इत्यादिवाक्यं गुरूपसत्तिविषयनियमविधिः अन्यन्यायसिद्धार्थानुवादरूपम् ॥

तृतीयखण्डार्थमाह–तदेतत्सत्यंयथेत्यादिना । भूतयोन्यक्षरस्याक्षरात्परतः परस्य चानन्यत्वसिद्धये प्रथमतृतीयखण्डयोरैक्यप्रत्यभिज्ञापकविशेषणानि दर्शयति पूर्वोक्तस्येत्यादिपदैः पूर्वोक्तस्यैवेह प्रतिपाद्यत्वोत्पादकानि पदानि तानि 'तदक्षरमधिगम्यते' 'भूतयोनिं परिपश्यन्ति' 'तथाक्षराद्विविधास्सोम्यभावाः प्रजायन्ते तत्र चैवापियन्ति' इति वाक्ययोरेकविषयत्वं दर्शितं अक्षरस्य भूतयोनेरिति 'तपसा चीयते ब्रह्म' 'तपो ब्रह्म परामृतम्' इत्यनयोरैकण्ठ्यं दर्शितं परस्य ब्रह्मण इति 'तस्मादेतद्ब्रह्म' इत्यवगतकार्यब्रह्मव्युदासार्थः परशब्दः 'तेनेदंपूर्णं पुरुषेण' 'पुरुष एवेदꣳसर्वम्' इत्यनयोरैकार्थ्याभिप्रायेण परमपुरुषस्येत्युक्तम् । तत्र 'यस्मात्परं नापरमस्ति' इत्युक्तसमाभ्यधिकराहित्यसूचनार्थः परमशब्दः । अक्षरपुरुषशब्दाभ्यां 'येनाक्षरं पुरुषम्' इति द्वितीयखण्डैकार्थ्यं च दर्शितं भवति अत्रहि 'अक्षराद्विविधास्सोम्यभावाः प्रजायन्ते तत्र चैवापियन्ति' इत्युक्त्वा 'दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरः' इति, प्रकृतकारणाक्षरपरामर्शितच्छब्देनाक्षरात्परतः परस्य सामानाधिकरण्यात् भूतयोन्यक्षरमेवाक्षरात्परतः

## श्रीभाष्यम्

एतैस्स्वरूपगुणैस्सह सर्वभूतान्तरात्मनो विश्वशरीरत्वेन विश्वरूपत्वम् तस्माद्विश्वसृष्टिं च विस्पष्टमभिधाय 'आविस्सन्निहितम्' (मु.२.२.१) इत्यादिना तस्यैवाक्षरस्याव्याकृतात्परतोऽपि पुरुषात्परभूतस्य परस्य परव्योम्नि प्रतिष्ठितस्यानवधिकातिशयानन्दस्वरूपस्य हृदयगुहायामुपासनप्रकारम् उपासनस्य च परभक्तिरूपत्वमुपासीनस्याविद्याविमोकपूर्वकं ब्रह्मसमं ब्रह्मानुभवफलं चोपदिश्योपसंहृतम् ।

## श्रुतप्रकाशिका

पर इत्यवगम्यते नहि तस्मादक्षरात्पर इत्युक्तम् । अपितु अक्षरात्पर इति पश्चादपि 'न तस्माज्जायते प्राण' 'एष सर्वभूतान्तरात्मा' 'तस्मादग्निस्समिधश्च सूर्य.' इति इत्यारभ्य 'अतस्सर्वा ओषधय' इत्यन्तेषु वाक्येषु तमेव तदेतच्छब्दैः परामृश्य 'एतेषु भूतेषु तिष्ठते ह्यन्तरात्मा' इत्युक्त्वा 'पुरुष एवेदगुँसर्वम्' इत्यभिधानात् भूतयोन्यक्षरब्रह्मशब्दवाच्यः पुरुष एवाक्षरात्परत इति प्रतीयते अनुक्तैरस्वरूपगुणैरित्यनेन 'दिव्योह्यमूर्त पुरुष' इत्याद्युक्ताः द्रव्यत्वामूर्तत्वविभुत्वादयो गुणा विवक्षिताः । विश्वरूपत्व विश्वकारत्वम् । तदेव विश्वशरीरशब्देन विशेषितम्, तदुपपादक सर्वभूतान्तरात्मतयेति पदम् । अन्तःप्रविश्य नियन्तृत्वादस्य विश्व शरीरतया प्रकारइत्यर्थः अनेन 'पद्भ्यां पृथिवीह्येष' 'अतश्च सर्वा ओषधयो रसाश्च' 'एतेषु भूतेषु तिष्ठते ह्यन्तरात्मा' 'पुरुष एवेदगुँसर्वम्' इति श्रुत्यर्थोऽनुसंहितः । तस्माद्विश्वसृष्टिंचेइत्यनेन 'तस्मादग्निस्समिधश्च सूर्यः सोमःपर्जन्य ओषधय' इत्याद्यर्थ उक्तः । विस्पष्टमित्यनेन.प्रथमतृतीयखण्डयोः पौनरुक्त्यपरिहार, पूर्वोक्तसृष्टिप्रपञ्चनपरत्वान्नपुनरुक्तिरित्यभिप्राय' ॥

चतुर्थखण्डार्थमाह–आविरिति । आविस्सन्निहितम् योगिनामपरोक्ष सन्निहितम् । तस्यैव प्रथमतृतीयखण्डप्रतिपादितस्य अव्याकृतादिति । 'अक्षरात्परत परस्य' इति तृतीयखण्डप्रतिपादितस्येत्यर्थः 'तदेतदक्षरं ब्रह्म' इति वाक्यमभिप्रयन्नाह—परस्य ब्रह्मण इति । 'यस्सर्वज्ञस्सर्वविद्यस्यैष महिमा भुवि । दिव्ये ब्रह्मपुरेह्येष व्योमन्यात्मा प्रतिष्ठितः ॥' इत्यस्यार्थमाह–परमव्योम्नि प्रतिष्ठितस्येति । 'यस्यैष महिमा भुवि' इति लीलाविभूत्यन्वय उक्तः । दिव्ये व्योम्नीति त्रिपाद्विभूतिरुक्ता । ब्रह्मपुरे इति शब्दः 'एतत्सत्यं ब्रह्मपुरम्' इतिवत्कर्मधारय ब्रह्मपुरे आत्मा प्रतिष्ठित इति व्यतिरेकनिर्देशात् 'तद्विज्ञानेन परिपश्यन्ति धीरा. आनन्दरूपममृतं यद्विभाति' इतिवाक्य हृदि निधायाह—अनवधिकातिशयेति । हृदयगुहायामुपासनप्रकारमिति । 'एतद्योवेद निहित गुहायाम्' इति पूर्वखण्डावसाने हृदयगुहायामुपासन विहितम् 'तदेतत्सत्य तदमृत तद्वेद्धव्य सोम्य विद्धि' इत्यारभ्य 'प्रणवो धनुश्शरो ह्यात्मा' 'आत्मानमरणिं कृत्वा' इत्यादिभिरुपासनस्य प्रकार उक्त इत्यर्थः । हृदयगुहायामुपासनस्यैव प्रकारोपदेशोऽय नतूपासनान्तरस्येति इदमनुगतम् । 'गुहाचरन्नाम महत्पदम्' 'प्रतिष्ठितोन्तर्हृदये सन्निधाय' 'पद्मकोशप्रतीकाशं सुषिर चाप्यधोमुखम् । हृदय तद्विजानीयाद्विश्वस्यायतनं महत्' इति [illegible] एव तस्योपासनस्य हृदयगुहासम्बन्धित्वावगमात् । पाठक्रमादर्थक्रमस्य प्रबलत्वात् ॥

षष्ठखण्डे प्रतिपन्नमर्थमाह–उपासनस्यचेति । 'यमेवैष वृणुते तेन लभ्य.' इतिहि तत्रोक्तम् । अर्थक्रमेण तदा विद्वान् पुण्यपापे विधूय निरञ्जन परमं साम्यमुपैति' इति पञ्चमखण्डस्थवाक्य हृदि निधायाह–ब्रह्मसममिति । भोगमात्रेण साम्यमित्याह–ब्रह्मानुभवफलमिति । अविद्याविमोकपूर्वकमित्यनेन 'पुण्यपापे विधूय' इत्य

## श्रीभाष्यम्

अत एवं विशेषणाद्भेदव्यपदेशाच्च नास्मिन्प्रकरणे प्रधानपुरुषौ प्रतिपाद्येते ॥

भेदव्यपदेशोऽपि हि ताभ्यां परस्य ब्रह्मणोऽत्र विद्यते 'दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः। अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः' (२.१.२) इत्यादिभिः अक्षरादव्याकृतात्परो यस्समष्टिपुरुषः तस्मादपि परभूतोऽदृश्यत्वादिगुणकोऽक्षरशब्दाभिहितः परमात्मेत्यर्थः। अश्नुत इति वा, न क्षरतीति वाऽक्षरम्। तदव्याकृतेऽपि स्वविकारव्याप्तया वा महदादिवद्यामान्तराभिलापयोग्यक्षरणाभावाद्वाऽक्षरत्वं कथञ्चिदुपपद्यते ॥

## श्रुतप्रकाशिका

ननु पञ्चमखण्डे साम्यापत्तिरूपस्सगुणमोक्ष उक्तः 'वेदान्तविज्ञाने' इति मन्त्रेण तस्य क्रमभावित्वमुक्तम् 'परेऽव्यये सर्व एकीभवन्ति' इति परममोक्षस्यैक्यापत्तिरूपत्वमुक्तम् 'यथा नद्य' इति विशेषप्रहाणमुक्तम्। 'ब्रह्मैव भवति' इत्यैक्यापत्तिनिगमनमिति। नैवम्। तथाहि 'सर्वमेवाविशन्ति' इति न निर्गुणप्राप्तिः सर्वशब्दस्य निर्गुणवाचित्वाभावात् किंतु ब्रह्मविभूतिभूतत्वाद्व्याप्यसमस्तजगदनुभवोक्तिः 'ते सर्वगं सर्वतः प्राप्य धीरा' इति सर्वगस्य ब्रह्मणः प्राप्तत्वकत्वात् सर्वगशब्देन सर्वशब्दवाच्यस्य ब्रह्मव्याप्यविभूतित्वावगमाच्च। 'वेदान्तविज्ञाने' इतितु वाक्यं चरमशरीरावसाने ब्रह्मप्राप्तिप्रपादकमिति वक्ष्यते 'गताः कलाः पञ्चदशप्रतिष्ठाः' इति मन्त्रश्च मुक्तपरित्यक्तदेहेन्द्रियतदभिमानिदेवतादीनामितरचेतनाचेतनवत्प्रलये परमात्मगतिल्यपरः न तु मोक्षपरः, मुक्तौ कलाशब्दोक्तभूतेन्द्रियाणां परमात्मनैक्यापत्त्यभावात्। पृथिव्यादिषु लय एव परमात्मनि लय इतिचेत् अमुक्तदेहस्यापि पृथिव्यादिषु लयादस्य वाक्यस्य मुक्तविषयत्वं न स्यात्। एकस्मिन्मुक्ते सत्यग्न्यादिदेवताश्च न परमात्मनि लीयन्ते अतश्चेदं वाक्यं न मुक्तस्य परमात्मैक्यापत्तिपरम्'यथा नद्य' इतितु वाक्यं मुक्तस्य ब्रह्मप्राप्तिः कर्मकृतनामरूपप्रहाणपूर्वकत्वपरम्। 'ब्रह्मैव भवति' इति पूर्वोक्तसाम्यापत्तिनिगमनपरम्। ब्रह्मपर्यन्तस्वात्माविर्भावपरं वा अतो यथोक्त एवार्थः ॥

एवं सौत्रहेतुद्वये विशेषणं प्रपञ्चितम्। उपपादितं हेतुं हेत्वन्तरेण सहानुवदन् साध्यार्थेन घटयति अतएवमिति। भेदव्यपदेशस्योपादानं तस्य प्रपञ्चनाकाङ्क्षाजननार्थम्। भेदव्यपदेशं प्रपञ्चयति भेदव्यपदेशोऽपिहीति। अक्षरशब्दस्याव्याकृतवाचित्वं कथमित्यपेक्षायां 'प्रोक्षणीष्वर्थसंयोगात्' इति न्यायमभिप्रेत्यावयवशक्तिं दर्शयति अश्नुतइति। अश्नुत इत्यवयवार्थं किमव्याकृते सम्भवतीत्यत्राह–अव्याकृतेऽपीति। स्वविकारव्याप्त्येति। कार्याकारेण विकृतमंशं विकृतादन्यः कारणांशः सूक्ष्मतया व्याप्नोतीत्यर्थः। अतएवेदमप्यसदर्थद्वयं नाशङ्कनीयं यदुच्यते, इहाय संशब्दः कस्मिंश्चिद्वस्तुविशेषे रूढः न तु यौगिकः, अन्यथा सर्वत्रिशब्दप्रवृत्तिप्रसङ्गात् तस्मात् ब्रह्मण उत्पत्तिश्श्रूयते 'तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते' इति, इह ब्रह्मशब्दवाच्यश्च परमपुरुषः 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' इति। 'पुरुष एवेदग्ं सर्वं तपो ब्रह्म परामृतम्' इति ब्रह्मपुरुषशब्दयोरेकविषयत्वावगमादिति, तत्र पुरुषाक्षरशब्दयोस्सामानाधिकरण्यादक्षरस्य भूतयोनित्वश्रवणात् पुरुष उपादानं अक्षरात्परतः परश्च सर्वज्ञत्वादियोगान्निमित्तं, एवं च 'अक्षरात्सम्भवति' 'अक्षरात्परतः' इति अक्षरशब्दयोर्विरूपार्थता च न स्यादिति। तत्र तावन्निमित्तोपादानभेदोऽनुपपन्नः तथासति निमित्तान्तरस्य स्थितत्वेन ब्रह्मविज्ञानेन सर्वविज्ञानानुपपत्तेः। न च कार्यत्वेन सर्वशब्दसङ्कोचान्निमित्तान्तरस्य युपपत्तिः, उपादानभूतस्यैव ब्रह्मणो निमित्तत्वं वदतां निमित्तान्तरं च निषेधतां वाक्यानां भूयस्त्वात्। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानचोदकत्वाविरतत्वाभावात्। अक्षरपुरुषस्य 'तस्मात्परं नापरम्' इति

## श्रुतप्रकाशिका

समाभ्यधिकनिषेधश्च उपक्रमावगतः तेन तत्प्रेरकं निमित्तान्तरमनुपपन्नम् । अस्यामेवोपनिषदि ' रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ' इति रुक्मवर्णपुरुषस्यैव कर्तृत्वयोनित्वश्रवणाच्च ननिमित्तोपादानभेदः । अस्मादिप्रश्नोत्तरवाक्यस्य भिन्नार्थत्वाच न सर्वज्ञाक्षरपुरुषयोर्भेदः ' यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते ' इति सर्वज्ञस्य तथा च श्रूयते ' तपसा चीयते ब्रह्म ततोऽन्नमभिजायते ' इति ब्रह्मणश्च तथात्व श्रूयते ' तपसा चीयते ब्रह्म ' ' यस्य ज्ञानमयं तपः ' इति तपश्शब्दवाच्यज्ञानवत्त्व सर्वज्ञस्य ब्रह्मणश्चावगम्यते । ब्रह्मपुरुषशब्दयोश्चैक विषयत्व दर्शितम् । एवं सर्वज्ञशब्दवाच्यस्य ब्रह्मशब्दनिर्दिष्टपुरुषस्य चाज्ञादिकारण वतदुपयोगिसार्वज्ञ्यादिगुणयोगे नान-न्यत्वान्निमित्तोपादानभेदो विध्वस्तः । तदभेदे च सति ' तथाऽक्षरात्संभवति ' ' तस्मादेतद्ब्रह्म ' इति पञ्चम्योर्वैरूप्य च नस्यात् ' ब्रह्मवनं ब्रह्मस वृक्ष आसीत् ' इति श्रुत्यन्तराविरोधश्च स्यात् ' तपसा चीयते ' ' यस्सर्वज्ञः ' इति मन्त्रयोः प्रतिपन्नस्य सर्वज्ञस्य ब्रह्मणश्च कारणतयाऽनन्यत्वात् मिथः कार्यकारणभावशङ्का निरस्ता ॥

किंच अस्यामुपनिषदि अक्षरब्रह्मशब्दौ कारणे कार्ये च प्रयुक्तौ, ' अक्षरात्सम्भवति ' ' अक्षरात्परतः परः ' ' तपसा चीयते ब्रह्म ' ' तस्मादेतद्ब्रह्म ' इति । तत्र पुरुषशब्दसमानाधिकरणावक्षरब्रह्मशब्दौ किं कारणविषयौ उत कार्यविषयौ इति विशये ' नास्त्यकृतः कृतेन ' इत्युक्त्वा ' येनाक्षरं पुरुष वेद सत्य प्रोवाचतां तत्त्वतो ब्रह्मविद्यां ' इत्युक्तत्वात् कारणविषयाविति निश्चीयते ततश्च कारणपुरुषादन्यस्य परत्वासम्भवात् भूतयोन्यक्षरमेवाक्षरात्परतः परः । किंच ' येनाक्षरं पुरुषं वेद सत्यं प्रोवाच ' इत्यक्षरपुरुषस्य वक्तव्यतया प्रतीतेः तस्यैव प्राधान्यात् , स एवाक्षरात्परतः परश्च भवितुमर्हति अन्यस्य प्रतिपाद्यत्वे प्रतिज्ञातार्थान्तरप्रतिपादनस्य प्रघातात् भूतयोन्यक्षरधर्माणां अक्षरात्परतः परे दर्शनात् , तस्य च सहति प्रकृताक्षरपुरुषपरामर्शि तच्छब्दसामानाधिकरण्याच्चाक्षरात्परतः पर एवाक्षरपुरुषः । किंच यथा भूतयोन्यक्षरस्य पुरुषत्वं ' अक्षरं पुरुषम् ' इति पुरुषशब्दसामानाधिकरण्यादवगम्यते, तथा अक्षरात्परतः परस्य च पुरुषत्वम् ' दिव्यो ह्यमूर्तः पुरुषः ' इति पुरुषशब्दसामानाधिकरण्यादवसीयत इति तयोरनन्यत्वसिद्धिः । ब्रह्मशब्द-वाच्याक्षरपुरुषादन्यः सर्वज्ञ इह प्रतिपाद्यश्चेत् ' सब्रह्मविद्यां सर्वविद्याप्रतिष्ठाम् ' इत्युपक्रमविरोधश्च स्यात् , अक्षर-पुरुषादपरस्सर्वज्ञश्चेत् ' अथ परा यया तदक्षरमधिगम्यते ' इत्यक्षरविद्यायाः परविद्यात्वकथन विरुध्येत । अक्षरपुरुषः परमकारण नचेत् ' उपासते पुरुषं ये ह्यकामाः ' ' परात्पर पुरुषमुपैति दिव्यम् ' इति परमपुरुषस्योपास्यत्वप्राप्य-त्वश्रवणविरोधः, परमकारणस्यैव ह्युपास्यत्वप्राप्यत्वे वेदान्तप्रसिद्धे, परमकारणञ्चेदक्षरपुरुषस्तस्मादन्यस्य परत्वमनुपपन्नम् ' सकारणं करणाधिपाधिपो नचास्य कश्चिज्जनिता नचाधिपः ' इति कारणान्तराधिपत्यन्तरनिषेधात् । एवं च सति सर्वज्ञशब्दरूढ्यनुगुण नपुरुषशब्दो नेयः, अपितु पुरुषशब्दरूढ्यनुगुण सर्वज्ञशब्दो नेयः, ततश्च तस्य पशुपतिपरत्वमयुक्तम् ' दिव्योह्यमूर्त पुरुष ' ' रुक्मवर्णं कर्तारमीशं पुरुषम ' ' परात्पर पुरुषम् ' इत्यादिवाक्यानां 'आदित्यवर्णंतमसः परस्तात् ' ' आदित्यवर्णं तमसस्तुपारे' ' त्रिपादस्यामृत दिवि, पुरुष एवेदगुँसर्वम ' इति पुरुषनारायणोत्तरनारायणैकार्थ्यप्रतीतेः ' नित्य विभु सर्वगत सुसूक्ष्मम ' इत्यनेन ' अणोरणीयान्महतो महीयान् ' इति कठवल्ल्यैकार्थ्यावगमात्तत्र च ' सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ' इति श्रवणाच्च ' पद्मकोशप्रतीकाशम ' ' पुरुष एवेदगुँसर्वम् ' इति नारायणानुवाकसुबालोपनिषदैकार्थ्यावगमाच्च परमपुरुषपरत्वसिद्धिः । ब्रह्मरुद्रयोः नारायणसृज्यत्ववादिश्रुतिविरोधश्चान्यथा स्यात् , अतस्सर्वज्ञशब्देन सर्वेषां धर्मिणां ज्ञातृत्वमुक्तम् सर्वविच्छब्दस्तु तत्तद्वस्तुगतसर्वप्रकारवेदित्वपरः, धर्मिमात्रज्ञानादपि तद्गतप्रकारवारऽयैज्ञानं हि ज्ञातुः [illegible]

श्रीभाष्यम्

## सू—२४ रूपोपन्यासाच्च [१.२.२४]

श्रुतप्रकाशिका

सर्वेषां संभवति, सह चक्षुस्संप्रयोग एव तद्गतशालापत्रपल्लवाद्यादिज्ञानं दृश्यादृश्यादिशब्देव र भवति यद्वा सर्वं विन्दतीति सर्ववित् सर्वस्वामीत्यर्थः, लब्धधनोहि धनस्वामी भवति । अतस्सर्वज्ञ वादिगुणको निमित्तोपादानभूतः सर्वात्मा परमपुरुष एव ॥

## सू—२४ रूपोपन्यासाच्च [१.२.२४]

### गूढार्थसङ्ग्रहः

'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति एतदुपनिषदुपक्रमः । अनन्तरम् 'अथ परा यया तदक्षरमधिगम्यते' इति । अत्रोपक्रमोक्तप्राप्तेरेव 'नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति' इत्यत्र विशदीकरणेन जीवभिन्नपरस्यैव विवक्षायाः सिद्धया एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायां सर्वशब्दे जीवोऽपि विवक्षित इत्यङ्गीकरणीयम् । अतश्च श्रुत्यन्तरोक्तदिशैवात्रापि उपक्रमप्रभृति सर्वविशेषणपरिशीलनेन भेदव्यपदेशेन च प्रकृतिजीवव्यावृत्ति विवक्षा सिद्ध्यतीत्युभाभ्यां उभयव्यावृत्तिः सङ्गतेति ॥

'रूपोपन्यासाच्च' इति । 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशश्श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवीह्येष सर्वभूतान्तरात्मा' (मु.२.१.४) इत्यत्र सर्वभूतशरीरिणः औपनिषदपुरुषस्यैव रूपं प्रतिपाद्यते त्रैलोक्यशरीरकत्वेन त्रिषु लोकेषु विद्यमानानां पदार्थानां मूर्धत्वादिना रूपणं कृतम् । एतावन्मात्रेण रूपकमिदम् परमार्थविषयिणी नेयं श्रुतिरिति न भ्रमितव्यम् । भट्टपादैः 'सिंहो देवदत्तः' इत्यत्र आरोपनिराकरणपूर्वकं सादृश्यस्यैव व्यवस्थापनया गुणवादे जैमिनिसूत्रपर्यालोचनयात्र वेदे न कुत्राप्यारोपः अङ्गीकरणीयः । तथासति वेदाप्रामाण्यप्रसङ्गात् अतश्च सादृश्यनिबन्धन एव 'अग्निर्मूर्धा' इत्यादिव्यपदेशः । प्राचीनैरालङ्कारिकैः रूपकस्थले सदृशाभेद एव प्रतीयत इत्यङ्गीकारात् अनन्तरं ताद्रूप्यप्रतीत्यङ्गीकारेण विच्छित्तिविशेषेणालङ्कारत्वोपपादनेऽपि रूपणे तदपेक्षाभावेन नानुपपत्तिः । नवीनैः दीक्षितादिभिः रूपकस्थले आहार्याभेदशाब्दबोधसिद्धान्तस्थापनमद्वैतिसंमतस्य वेदे अध्यासे सामानाधिकरण्यस्य साधनाभिनिवेशमावेदयति । अख्यातिवादे तु अनुपपत्तिरेव नास्ति । लोकत्रयव्यापकस्य परमात्मनः विग्रहपरिमाणानुरोधेन देशविशेषावच्छेदेन शरीरावयवानां प्रतिपत्तिसौकर्याय तत्तद्देशस्थभूतानां मूर्धत्वादिरूपणं कृतमिति । अयमर्थः सर्वार्थसिद्धिभावप्रकाशे तृतीयसंपुटे निरूपितः ॥

'अदृश्यत्वादिगुणको धर्मोक्तेः' इत्युपक्रमसूत्रम् । 'रूपोपन्यासाच्च' इत्यन्तिमसूत्रम् । अत्रायमाशयः निर्गुणत्वश्रुतिवत् अशरीरत्वश्रुतिरपि वर्तते । निर्गुणश्रुतौ 'यत्तदद्रेश्यमग्राह्यमवर्णम्' इत्युक्तया येषां गुणानामङ्गीकारे धर्मिणोऽनित्यत्वप्रसक्तिः न तद्गुणा अङ्गीकरणीयाः तद्गुणनिषेधपरा निर्गुणश्रुतिः 'नित्यं विभुं सर्वगतं सुसूक्ष्मम्' इत्युक्तगुणानामङ्गीकारे न विरोधः । एवं हेयगुणनिषेधसहपठित 'अचक्षुश्श्रोत्रं' 'अपाणिपादं' शब्दप्रतिपन्नचक्षुश्श्रोत्रपाणिपादनिषेधोऽपि कर्ममूलकतन्निषेधपरः । 'अग्निर्मूर्धा चक्षुषी' इत्युक्तचक्षुरादिकं तु न कर्ममूलकमिति न विरोधः । अयमर्थः अधिकरणोपक्रमोपसंहारसूत्राभ्यां सूत्रकृता पर्यालोचित एव ॥

अदृश्यत्वादिगुणकाधिकरणं समाप्तम्

### श्रीभाष्यम्

'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशश्श्रोत्रे वाग्विवृताश्च वेदाः। वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा' (मु.२ १.४) इतीदृशं रूपं सर्वभूतान्तरात्मनः परमात्मन एव सम्भवति ; अतश्च परमात्मा ॥

### अदृश्यत्वादिगुणकाधिकरणं समाप्तम्

### श्रुतप्रकाशिका

सर्वभूतान्तरात्मन इति । सर्वभूतान्तरात्मसम्बन्धितयाऽऽम्नायमानमीदृशं रूपं परमात्मन एव सम्भवतीत्यर्थः ॥

निर्विशेषवादे तावदिदं सूत्रत्रयमनुपपन्नम् । अभावरूपाणामप्यदृश्यत्वादीनां गुणत्वव्यवहारात् सर्वज्ञत्वादिधर्मव्यवहाराच्च प्रथमसूत्रं विरुद्धम् । व्यावर्तकधर्मापारमार्थ्ये व्यावृत्त्यपारमार्थ्यात् भूतयोन्यक्षरस्य प्रधानव्यावृत्त्यसिद्धेश्च । भेदमिथ्यात्वे भेदव्यपदेशेन परमात्मत्वसाधनमप्ययुक्तम् । शारीराद्विशिनष्टि प्रधानाद्भेदं व्यपदिशतीति द्वितीयसूत्रार्थवर्णनमप्यनुचितम् विशेषणभेदव्यपदेशयोरेकैकस्यैव शारीरप्रधानव्यावर्तनक्षमत्वात् । दिव्यत्वामूर्तत्वपुरुषत्वादयोहि कार्त्स्न्येन प्रधानस्यापि न सम्भवन्ति 'अक्षरात्परतः परः' इति जीवव्यावृत्तिरपि हि प्रतीयते 'सकारणं करणाधिपाधिपः' इतिवत् अक्षरात्परोहि जीवः, विशेषणशब्दस्य 'दिव्योह्यमूर्तः' इति श्लोकोक्तार्थमात्रविषयत्वे चायुक्तः सङ्कोचकाभावात् एकविज्ञानेन सर्वविज्ञानाभिधानादीनां भूतयोन्यक्षरस्य चिदचिद्व्यावृत्तिफलकत्वाद्विशेषणशब्देन वक्तुं युक्तम्, ननु धर्मशब्देन नह्येकविज्ञानेन सर्वविज्ञानाभिधानं नाम परमात्मगतो धर्मः । अतस्तादृशं विशेषणजातं द्वितीयसूत्रेण विवक्षितं भवितुमर्हति, न प्रथमेन 'रूपोपन्यासाच्च' इति सूत्रस्य 'पुरुष एवेदम्' इति वाक्यप्रतिपन्नसर्वात्मकत्वप्रतिपादनपरत्ववर्णनमनुपपन्नम्, पूर्वसूत्रयोरन्यतरविवक्षितैकविज्ञाननिबन्धनसर्वविज्ञानान्तर्गतत्वात् सर्वात्मभावस्य । नच त्रैलोक्यशरीरहिरण्यगर्भोत्पत्तिः 'अग्निर्मूर्धा' इत्यादिवाक्यप्रतिपाद्या अजायतेत्यध्याहारप्रसङ्गात् 'एतस्माज्जायते प्राणः' 'तस्मादग्निस्समिधश्च' इति प्रकरणवशादध्याहार इति चेन्न, अवान्तरप्रकरणस्य भूतयोन्यक्षरविषयमहाप्रकरणविरोधे दुर्बलत्वात् सर्वरूपान्तरात्मत्वलिङ्गबाधितत्वाच्च । तद्धि परमकारणस्य लिङ्गं नतु कार्यस्य नच कारणस्य विग्रहवत्त्वानुपपत्त्या हिरण्यगर्भपरत्वाश्रयणम् अनन्तरं वैश्वानराधिकरणे एव त्रैलोक्यशरीरकस्य परमात्मताया उपपादयिष्यमाणत्वात् । यस्याग्निरास्यं द्यौर्मूर्धा' इत्यादिस्मृतिप्रसिद्धं च भगवतः त्रैलोक्यशरीरत्वम् यदि क्वचिद्धिरण्यगर्भस्य त्रैलोक्यशरीरत्वमवगम्यते तदानीमपि परमात्मात्मकत्वेनैव तस्य तथात्वं वर्णनीयं 'सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते' 'तवान्तरात्मा मम च येचान्ये देहिसञ्ज्ञिताः' इति चतुर्मुखस्य भगवदनुप्रवेशतदन्तरात्मत्वावगमात् । अतः परमात्मन एव त्रैलोक्यशरीरत्वम् 'अग्निर्मूर्धा' इत्यादिना अभिधीयते । अतस्सूत्राणां यथोक्त एवार्थः ॥

### अदृश्यत्वादिगुणकाधिकरणं समाप्तम्

अथ वेदान्तसारः

### सू—२२ अदृश्यत्वादिगुणको धर्मोक्तेः (१.२.२२)

'अथ परा यया तदक्षरमधिगम्यते यत्तद्द्रेश्यम्' इत्यारभ्य (मु.२.१.२.) 'यद्भूतयोनिं परिपश्यन्ति धीरा.' (मु.२.१.४) 'अक्षरात्परत.पर.' इत्यादौ प्रधानात् प्रत्यगात्मनश्च अर्थान्तरभूतः परमात्मा प्रतिपाद्यते, 'यस्सर्वज्ञस्सर्ववित्' (मु.१.१.९) इत्यादिधर्मोक्तेः ॥

### सू—२३ विशेषणभेदव्यपदेशाभ्यां च नेतरौ (१.२.२३)

एकविज्ञानेन सर्वविज्ञानरूपविशेषणव्यपदेशान्नप्रधानम् 'अक्षरात्परत.पर' (मु.२.१.२.) इति प्रधानात्परत. प्रत्यगात्मनोऽपि पर इति भेदव्यपदेशात् न प्रत्यगात्मा च। अथवा सामानाधिकरण्येन परतोऽक्षरात् पञ्चविंशकात्पर इति भेदव्यपदेश ॥

### सू—२४ रूपोपन्यासाच्च (१.२.२४)

'अग्निर्मूर्धा' (मु.२.१.४) इत्यादिना त्रैलोक्यशरीरोपन्यासाच्च ॥

इति वेदान्तसारः

अथ वेदान्तदीपः

### सू—२२ अदृश्यत्वादिगुणको धर्मोक्तेः (१.२.२२)

आथर्वणे—'अथ परा यया तदक्षरमधिगम्यते यत्तद्द्रेश्यम्' (मु.१.१.५) इत्यारभ्य 'यद्भूतयोनिं परिपश्यन्ति धीरा' (१.१.६) 'अक्षरात्परत पर' (मु.१.२.१) इत्यादौ किं प्रधानपुरुषौ प्रतिपाद्येते? उत परमात्मैवेति सशयः। प्रधानपुरुषाविति पूर्वपक्ष.। पृथिव्याद्यचेतनगतदृश्यत्वादीना प्रतिषेधात्तज्जातीयाचेतनं प्रधानमेव भूतयोन्यक्षरमिति प्रतीयते। तथा 'अक्षरात्परत परः' (मु.२.१.२) इति च तस्याधिष्ठाता पुरुष एवेति। राद्धान्तस्तु—उत्तरत्र 'यस्सर्वज्ञस्सर्ववित्' (मु.१.१.९) इति प्रधानपुरुषयोरसम्भावित सार्वज्ञ्यमभिधाय 'तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते' (मु.१.१.९) इति सर्वज्ञात्सत्यसङ्कल्पाज्जगदुत्पत्तिश्रवणात्पूर्वोक्तमदृश्यत्वादिगुणकमूतयोन्यक्षरम् 'अक्षरात्परत परः' (मु.२.१.२) इति च निर्दिष्टं तदक्षरं परं ब्रह्मैवेति विज्ञायते। सूत्रार्थस्तु–अदृश्यत्वादिगुणक. परमात्मा, सर्वज्ञत्वादि तद्धर्मोक्ते ॥

सू—२३ विशेषणभेदव्यपदेशाभ्यां च नेतरौ (१-२.२३)

विशिनष्टिहि प्रकरण प्रधानाद्भूतयोन्यक्षरं एकविज्ञानेन सर्वविज्ञानादिना ? तथा 'अक्षरात्परतः पर' (मु.२.१.२) इति; अक्षरात् अव्याकृतात् परतोऽवस्थितात्पुरुपात् पर इति पुरुषाच्चास्य भूतयोन्यक्षरस्य भेदो व्यपदिश्यते अतश्च न प्रधानपुरुषौ; अपितु परमात्मैवात्र निर्दिष्टः ॥

सू—२४ रूपोपन्यासाच्च (१ २.२४)

'अग्निर्मूर्धा' इत्यादिना समस्तस्य चिदचिदात्मकस्य प्रपञ्चस्य भूतयोन्यक्षररूपत्वेनोपन्यासाच्चा यमदृश्यत्वादिगुणकः परमात्मा ॥

॥ इति वेदान्तदीपे अदृश्यत्वादिगुणकाधिकरणं समाप्तम् ॥

अथ अधिकरणसारावळी

दृश्यत्वादेर्निषेधो विकृतिमतिभवत्यक्षरे सन्निकर्षात्
पश्चात्युक्ताक्षरं तत्तदवधिकपरः पञ्चविंशोऽस्तु मा भूत् ।
सर्वज्ञत्वादिदृष्टेः प्रथमसमुदितं त्वक्षरं ब्रह्म शुद्धम्
पश्चादुक्तं तु जीवादिकमवधितया भेदतस्तत्परोक्तेः ॥

॥ इति अदृश्यत्वादिगुणकाधिकरणं समाप्तम् ॥

---

अथ वैश्वानराधिकरणम्

गूढार्थसंग्रहः

पूर्वाधिकरणान्तिमसूत्रे विषयवाक्ये त्रैलोक्यशरीरकत्वं परमात्मनो रूपमित्युक्तम् । त्रैलोक्यशरीरकत्वस्यैव प्रादेशिकत्वमपि प्रतिपाद्यते । त्रैलोक्यशरीरकत्वं प्रादेशिकत्व च परस्परविरुद्धम् । अत नेदं परमात्मनो रूपम्, अपितु कल्पितमेव । 'वैश्वानरस्य को न आत्मा किं ब्रह्मेति आत्मानमेव नोब्रूहि इत्युपक्रमे प्रश्ने बह्वर्थसाधारण-वैश्वानरशब्दप्रयोगेण प्रतिवचनेऽपि तस्यैव निर्देशेन इदं परमात्मनो रूपमिति निर्णयो नसम्भवतीति श्रुतिवाक्येनैव सूच्यते इति शङ्कायां वैश्वानराधिकरणं प्रवृत्तम् । अस्मिन्नधिकरणे द्युमूर्धत्वादिपरमात्मनो रूपमिति निर्णये

'रूपोपन्यासाच्च' इति सूत्रोक्त रूप परमात्मन एवेति सिद्ध्यति। तेनादृश्यत्वादिगुणकाधिकरणे अदृश्यत्वादि गुणकपरमात्मविषया या विद्या सा निर्गुणविद्या, वैश्वानरविद्यातु सगुणविद्येति परसमतार्थोऽपि न श्रुतौ विवक्षित इति सूत्रकृता निर्धारितं भवति ॥

'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इत्यादौ वैश्वानरविद्याघटक 'तद्यथेषीकातूलम्' इति श्रुत्यर्थस्य परविद्यासामान्यविषयत्व व्यवस्थाप्य तदनन्तराधिकरणेष्ययमेवार्थ प्रतिष्ठापित·। इत्थ च परविद्यासामान्यं प्रायश्चित्तरूपमेव कर्मक्षयफलकं च। तत्र सगुणनिर्गुणविद्याविभाग न सूत्रकृत्सम्मत। अत्र सूत्रेषु प्रथमसूत्रे साधारणशब्दो निर्दिष्ट **अतएव न देवताभूतश्च** इति सूत्रे देवताभूतयो पूर्वपक्षे प्राप्तिस्सूचिता। '**शब्दादिभ्योऽन्त.प्रतिष्ठानाच्च नेतिचेत्**' इत्यत्रान्त प्रतिष्ठानवत जाठराग्नेरपि पूर्वपक्षे प्राप्तिस्सूच्यते। अत देवताभूत तृतीयपरमात्मसाधारणत्वाद्वैश्वानरशब्दस्य अर्थनिर्णयो न सभवति। साधारणशब्दप्रयोगानुरोधेनैव 'शक्यनिर्णयत्वा शक्यनिर्णयत्व' कोटिकसशय भाष्ये प्रतिपादित ॥

## अथ वैश्वानराधिकरणम्

### सू—२१ वैश्वानरस्साधारणशब्दविशेषात् (१.२.२५)

**इदमामनन्ति छन्दोगाः—'आत्मानमेवेम वैश्वानर सम्प्रत्यध्येषि तमेव नो ब्रूहि' (मुण्डक. २.१.४) इति प्रक्रम्य 'यस्त्वेतमेव प्रादेशमात्रमभिविमानमात्मान वैश्वानरमुपास्ते (छां ५ १८.१) इति। तत्र सन्देहः–किमय वैश्वानर आत्मा, परमात्मेति शक्यनिर्णयः, उत**

## अथ वैश्वानराधिकरणम्

### श्रुतप्रकाशिका

### सू—२५ वैश्वानरस्साधारणशब्दविशेषात् (१.२.२५)

विषयमाह—**इदमिति।** अध्येषि '**इक्स्मरणे**' स्मरसि उपास्स इत्यर्थ। यद्वा '**इण्गतौ**' **गत्यर्थाबुध्यर्थाः** अवगच्छसीत्यर्थ। यद्यपि 'कोन आत्मा कि ब्रह्म' इत्यात्मब्रह्मशब्दाभ्यामुपक्रमादुपसहारस्य च तदानुगुण्येन नेयत्वान्न सन्देहोदय तथाऽपि समानप्रकरणे वाजसनेये अग्निवैश्वानरशब्दाभ्यामुपक्रमात् सशय-

### गूढार्थसंग्रहः

**वैश्वानरः परमात्मा साधारणशब्दस्य विशेषात्।** विशेषशब्दार्थ इतरव्यावृत्ति व्यावर्तकहेतव अस्यामेवोपनिषदि वर्तन्त इति तात्पर्येण तदुक्त। कैकयेन यज्ञे ऋत्विग्वरणार्थ प्रार्थने कृतेऽपि धनाशाविरहसूचनमुखेन ब्रह्मज्ञान प्रश्नस्यैव करणेन मुमुक्षुत्व प्रष्टणा सिद्धम्। तेन मुमुक्षुपृच्छ्यमानत्व 'को न आत्मा कि ब्रह्म'

## श्रीभाष्यम्

न इति। किंप्राप्तम्? अशक्यनिर्णय इति। कुतः? वैश्वानरशब्दस्य चतुर्ष्वर्थेषु प्रयोगदर्शनात् जाठराग्नौ तावत् 'अयमग्निर्वैश्वानरो येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यावदेतत्कर्णावपिधाय शृणोति सयदोत्क्रमिष्यन्भवति नैनं घोषं शृणोति' (बृ. ७.९.१.) इति महाभूततृतीये च 'निश्वसा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्' (ऋ.मं १० ८८.१२) इति; देवतायांच 'वैश्वानरस्य सुमतौ स्याम राजा हिकं भुवनानामभिश्रीः' (यजु का.१.५.११) इति। परमात्मनि च 'तदात्मन्येव हृदयेऽग्नौ वैश्वानरे प्रास्यत्' (अष्टक. ३. प्रश्न ११.अनु.८) इति, 'स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते' (प्रश्न.१ ७) इति च। वाक्योपक्रमादिषूपलभ्यमानान्यपि लिङ्गानि सर्वानुगुणतया नेतुं शक्यानीति॥

## श्रुतप्रकाशिका

साधारणशब्दस्य सूत्रस्थत्वनिबन्धनं। ननु, प्रयोगसाधारण्यहि वैश्वानरशब्दस्य साधारणत्व अक्षरशब्दोऽपिहि प्रकृतिपुरुषेश्वरसाधारण· प्रयुज्यते 'अक्षरात्परतःपरः' 'क्षर प्रधानममृताक्षर हरः' 'यया तदक्षरमधिगम्यते' इत्यादि। ततश्च 'अक्षरमम्बरान्तधृतेः' इत्यत्रापि शक्यनिर्णयत्वाशक्यनिर्णयत्वे सदेहविषयतया वक्तव्ये तथा च न कृत, किंतु प्रधानं वा जीवो वा परमात्मा वेति विचार कृत इहापि तथैव सशयो वक्तव्य इति, चम् तत्रहि प्रयोगसाधारण्यातिरिक्त प्रकृतिपुरुषयोरन्यतरविषयत्वनिर्धारक पूर्वपक्षहेतुर्विद्यते। अतस्तथा सदेहो उपपद्यते, इहतु प्रयोगसाधारण्यस्यैव पूर्वपक्षहेतुत्वात्तस्य च जाठरभूततृतीयदेवतास्वन्यतम निर्धारकत्वाभावात्तस्य परमात्मलिङ्गादर्शने तद्विषयत्वनिर्णयप्रतिबन्धकत्वात् त्रेताकल्पनादीनामनिर्धारकत्वस्य वक्ष्यमाणत्वाच्च, शक्यनिर्णयत्वाशक्यनिर्णयत्वे सशयविषयतयोक्ते॥

## गूढार्थसंग्रहः

इति प्रश्ने आत्मब्रह्मणोरैक्यं भेदो वा इत्यर्थनिर्णयोऽपि प्रष्टृणा नास्तीति सूच्यते। 'यस्त्वेतं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्त' इति केकयप्रतिवचने ब्रह्मशब्दस्थाने वैश्वानरशब्दप्रयोगेण ब्रह्मशब्दसामानाधिकरण्येन निर्देशेनच वैश्वानरशब्दार्थ ब्रह्म। सएवात्मा इत्यर्थ सिद्ध। तेन ब्रह्मशब्दोऽपि एको हेतु, आत्मशब्दार्थसर्वान्तर्यामित्वस्यैव 'अग्निर्मूर्धा' इतिश्रुतौ 'एष सर्वभूतान्तरात्मा' इति मुण्डके स्पष्टमुक्तस्य आत्मशब्दे विवक्षिततया द्युमूर्धत्वाद्युक्तसर्वभूतान्तर्यामित्व विशदीकरणार्थत्वस्य अत्रात्मशब्दे विवक्षितत्वेन सर्वान्तर्यामित्वमेको हेतु। एतज्ज्ञानस्य 'तद्यथेषीकातूलम्' इत्यादिना सर्वपापदाहकत्वमुत्तरत्र वक्ष्यत इति एते हेतव। एतैर्हेतुभिः वैश्वानरशब्दस्य साधारण्यापि परमात्मेतरबोधकत्वव्यावृत्त्या वैश्वानर परमात्मा इति सूत्रार्थ

## श्रीभाष्यम्

एवं प्राप्तेऽभिधीयते—वैश्वानरस्साधारणशब्दविशेषात्—वैश्वानरः परमात्मा, कुतः साधारणशब्दविशेषात्। विशेष्यत इति विशेषः

साधारणस्य वैश्वानरशब्दस्य परमात्मासाधारणैर्धर्मैर्विशेष्यमाणत्वादित्यर्थः। तथा हि 'औपमन्यवादयः पञ्चेमे महर्षयस्समेत्य को न आत्मा किं ब्रह्म' (छां.५ ११ १) इतिविचार्य 'उद्दालको वै भगवन्तोऽयमारुणिस्सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छाम (५ ११. २) इत्युद्दालकस्य वैश्वानरात्मविज्ञानमवगम्य तमभ्याजग्मुः। स चोद्दालक एतान्वैश्वानरात्मजिज्ञासूनभिलक्ष्यात्मनश्च तत्राकृत्स्नवेदित्वं मत्वा 'तान् होवाचाश्वपतिर्वै भगवन्तोऽयं कैकेयस्सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छाम' (छां ५.११ ४) इति। तैश्चोद्दालकपष्ठास्तमश्वपतिमभ्याजग्मुः। स च तान्महर्षीन् यथार्हं पृथगभ्यर्च्य 'न मे स्तेनः' (छां ५.११.५) इत्यादिना 'यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि' (५ ११,५) इत्यन्तेनात्मनो व्रतस्थतया प्रतिग्रहयोग्यतां ज्ञापयन्नेव तत्त्वविद्भिरपि प्रतिषिद्धपरिहरणीयतां विहितकर्मकर्तव्यतां च प्रज्ञाप्य 'यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसन्तु भवन्तः' (छा. ५ ११ ५) इत्यवोचत्। ते च मुमुक्षवो वैश्वानरमात्मान

## श्रुतप्रकाशिका

न्वेवमपि संशयलक्षणाप्रामाण्यं पूर्वपक्षितं स्यात्, तच्चायुक्तं, प्रथमे काण्डे वेदप्रामाण्यस्य समर्थितत्वमुप जीव्यारम्भाच्छारीरकस्य। अतोऽर्थविशेषपरत्वं पूर्वपक्षीकर्तव्यम् नत्वशक्यनिर्णयत्वम्। नैवम्। चतुर्ष्वर्थेष्वन्यत मानिर्धारणेऽपि सर्वथा कस्मिंश्चिदर्थे प्रमाणमेवेदमिति सामान्यतः प्रामाण्यनिश्चयस्यानपोद्यत्वात्। तद्धि नित्यनिर्दोषा वाक्यतया स्थापितम्—'विधिशब्दस्य मन्त्रत्वे स्वभावस्स्यात्' इति न्यायेन प्रामाण्यसिद्धिः। किमयं वैश्वानरात्मा परमात्मेति शक्यनिर्णयः? उत, तदर्थमात्मब्रह्मशब्दोपक्रमो वैश्वानरस्य ब्रह्मभावमवगमयति नेति? तदर्थमग्निशब्द सामानाधिकरण्यं, त्रेताग्निकल्पनं प्राणाहुत्याधारकत्वानि, किं वैश्वानरस्य ब्रह्मभावविरोधानि उत नेति? किं 'एषोऽग्निर्वैश्वानरः' इत्यग्निशब्दोऽग्निमात्रपरः, उताग्न्यवस्थपरमात्मपरः? इति। अग्निशब्दस्याग्निमात्रपरत्वे अग्नि शब्दसामानाधिकरण्यादीनां ब्रह्मभावविरोधितया आत्मब्रह्मशब्दोपक्रमस्यापि ब्रह्मभावावगमकत्वाभावेनाशक्यनिर्णय इति पूर्वपक्षः। अग्निशब्दस्य परमात्मपरत्वे अग्निशब्दसामानाधिकरण्यादीनां ब्रह्मभावाविरोधितया आत्मब्रह्मशब्दोपक्रमस्य ब्रह्मभावावगमकत्वोपपत्तेर्वैश्वानरः परमात्मेति शक्यनिर्णय इति राद्धान्तः। वैश्वानरशब्दस्य चतुर्ष्वर्थेष्विति। जीवपर- साधारणात्मशब्दसद्भावेऽप्यात्मशब्दस्य वैश्वानरमात्मानमिति वैश्वानरशब्दविशेषितत्वाद्वैश्वानरशब्दस्य च जीवमात्रे

## श्रीभाष्यम्

न इति। किंप्राप्तम्? अशक्यनिर्णय इति। कुतः? वैश्वानरशब्दस्य चतुर्ष्वर्थेषु प्रयोगदर्शनात् जाठराग्नौ तावत् 'अयमग्निर्वैश्वानरो येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषोभवति यावदेतत्कर्णावपिधाय शृणोति सयदोत्क्रमिष्यन्भवति नैनं घोषं शृणोति' (बृ. ७.९.१.) इति महाभूततृतीये च 'विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमन्हामकृण्वन्' (ऋ.सं १० ८८.१२) इति; देवतायांच 'वैश्वानरस्य सुमतौ स्याम राजा हिकं भुवनानामभिश्रीः' (यजु का.१.५.११) इति। परमात्मनि च 'तदात्मन्येव हृदय्येऽग्नौ वैश्वानरे प्रास्यत्' (अष्टक ३. प्रश्न ११.अनु.८) इति, 'स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते' (प्रश्न.१ ७) इति च। वाक्योपक्रमादिषूपलभ्यमानान्यपि लिङ्गानि सर्वानुगुणतया नेतुं शक्यानीति ॥

## श्रुतप्रकाशिका

साधारणशब्दस्य सूत्रस्थत्वनिबन्धनं। ननु, प्रयोगसाधारण्यहि वैश्वानरशब्दस्य साधारणत्व अक्षरशब्दोऽपिहि प्रकृतिपुरुषेश्वरसाधारण प्रयुज्यते 'अक्षरात्परतःपरः' 'क्षर प्रधानममृताक्षर हरः' 'यया तदक्षरमधिगम्यते' इत्यादि। तनश्च 'अक्षरमम्बरान्तधृतेः' इत्यत्रापि शक्यनिर्णयत्वाशक्यनिर्णयत्वे सदेहविषयतया वक्तव्ये तथा च न कृत, किंतु प्रधान वा जीवो वा परमात्मा वति विचार कृत इहापि तथैव सशयो वक्तव्य इति, चम् तत्रहि प्रयोगसाधारण्यातिरिक्त प्रकृतिपुरुषयोरन्यतरविषयत्वनिर्धारक पूर्वपक्षहेतुर्विद्यते। अतस्तथा सदेहो उपपद्यते, इहतु प्रयोगसाधारण्यस्यैव पूर्वपक्षहेतुत्वात्तस्य च जाठरभूततृतीयदेवतास्वन्यतम निर्धारकत्वाभावाचस्य परमात्मलिङ्गादर्शने तद्विषयत्वनिर्णयप्रतिबन्धकत्वात् त्रेताग्निकल्पनादीनामनिर्धारकत्वस्य वक्ष्यमाणत्वाच्च, शक्यनिर्णयत्वाशक्यनिर्णयत्वे सशयविषयतयोक्ते ॥

## गूढार्थसंग्रहः

इति प्रश्ने आत्मब्रह्मणोरैक्य भेदो वा इत्यर्थनिर्णयोऽपि प्रष्टृणा नास्तीति सूच्यते। 'यस्त्वेतं प्रादेशमात्रमभिविमानमात्मान वैश्वानरमुपास्त' इति केकयप्रतिवचने ब्रह्मशब्दस्थाने वैश्वानरशब्दप्रयोगेण ब्रह्मशब्दसामानाधिकरण्येन निर्देशाच वैश्वानरशब्दार्थ ब्रह्म। सएवात्मा इत्यत्र सिद्ध। तेन ब्रह्मशब्दोऽपि एको हेतु, आत्मशब्दार्थसर्वान्तर्यामित्वस्यैव 'अग्निर्मूर्धा' इतिश्रुतौ 'एष सर्वभूतान्तरात्मा' इति मुण्डके स्पष्टमुक्तत्व्य आत्मशब्दे विवक्षिततया द्युमूर्धत्वाद्युक्तसर्वभूतान्तर्यामित्व विशदीकरणार्थत्वस्य अत्रात्मशब्दे विवक्षितत्वेन सर्वान्तर्यामित्वमेको हेतु। एतज्ज्ञानस्य 'तद्यथेषीकातूलम्' इत्यादिना सर्वपापदाहकत्वमुत्तरत्र वक्ष्यत इति एते हेतव। एवैर्हेतुभि वैश्वानरशब्दस्य साधारण्यापि परमात्मेतरबोधकत्वव्यावृत्त्या वैश्वानर परमात्मा इति सूत्रार्थ ॥

## श्रीभाष्यम्

एवं प्राप्तेऽभिधीयते—वैश्वानरस्साधारणशब्दविशेषात्—वैश्वानरः परमात्मा, कुतः साधारणशब्दविशेषात्। विशेष्यत इति विशेषः

साधारणस्य वैश्वानरशब्दस्य परमात्मासाधारणैर्धर्मैर्विशेष्यमाणत्वादित्यर्थः। तथा हि 'औपमन्यवादयः पञ्चेमे महर्षयस्समेत्य को न आत्मा किं ब्रह्म' (छां.५.११.१) इतिविचार्य 'उद्दालको वै भगवन्तोऽयमारुणिस्सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छाम' (५.११.२) इत्युद्दालकस्य वैश्वानरात्मविज्ञानमवगम्य तमभ्याजग्मुः। स चोद्दालकः एतान्वैश्वानरात्मविज्ञानभिलक्ष्यात्मनश्च तत्राकृत्स्नवेदित्वं मत्वा 'तान् होवाचाश्वपतिर्वै भगवन्तोऽयं कैकेयस्सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छाम' (छां ५.११.४) इति। तेचोद्दालकपुरस्तास्तमश्वपतिमभ्याजग्मुः। स च तान्महर्षीन् यथार्हं पृथगभ्यर्च्य 'न मे स्तेनः' (छां ५.११.५) इत्यादिना 'यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि' (५.११.५) इत्यन्तेनात्मनो व्रतस्थतया प्रतिग्रहयोग्यतां ज्ञापयन्नेव ब्रह्मविद्भिरपि प्रतिषिद्धपरिहरणीयतां विहितकर्मकर्तव्यतां च प्रज्ञाप्य 'यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसन्तु भवन्तः' (छा. ५.११.५) इत्यवोचत्। ते च मुमुक्षवो वैश्वानरमात्मानं

## श्रुतप्रकाशिका

नन्वेवमपि संशयलक्षणाप्रामाण्यं पूर्वपक्षितं स्यात्, तच्चायुक्तं, प्रथमे काण्डे वेदप्रामाण्यस्य समर्थितत्वमुप जीव्यारब्धत्वाच्छारीरकस्य। अतोऽर्थविशेषपरत्वं पूर्वपक्षीकर्तव्यम्, नत्वशक्यनिर्णयत्वम्। नैवम्। चतुर्ष्वर्थेष्वन्यत मानिर्धारणेऽपि सर्वथा कस्मिंश्चिदर्थे प्रमाणमेवेदमिति सामान्यतः प्रामाण्यनिश्चयस्यानपोद्यत्वात्। तद्धि नित्यनिर्दोषा पास्यतया स्थापितम्—'विधिशब्दस्य मन्त्रत्वे स्वभावस्स्यात्' इति न्यायेन प्रामाण्यसिद्धिः। किमयं वैश्वानरात्मा परमात्मेति शक्यनिर्णयः? उत, तदर्थमात्मब्रह्मशब्दोपक्रमो वैश्वानरस्य ब्रह्मभावमवगमयति नेति? तदर्थमग्निशब्द सामानाधिकरण्यं, त्रेताकल्पनं प्राणाहुत्याधारत्वानि, किं वैश्वानरस्य ब्रह्मभावविरोधीनि उत नेति? किं 'एषोऽग्निर्वैश्वानरः' इत्यग्निशब्दोऽग्निमात्रपरः, उताग्न्यवस्थपरमात्मपरः? इति। अग्निशब्दस्याग्निमात्रपरत्वे अग्नि शब्दसामानाधिकरण्यादीनां ब्रह्मभावविरोधितया आत्मब्रह्मशब्दोपक्रमस्यापि ब्रह्मभावावगमकत्वाभावेनाशक्यनिर्णय इति पूर्वपक्षः। अग्निशब्दस्य परमात्मपरत्वे अग्निशब्दसामानाधिकरण्यादीनां ब्रह्मभावाविरोधितया आत्मब्रह्मशब्दोपक्रमस्य ब्रह्मभावावगमकत्वोपपत्तेर्वैश्वानरः परमात्मेति शक्यनिर्णय इति राद्धान्तः। **वैश्वानरशब्दस्य चतुर्ष्वर्थेष्विति**। जीवपर- साधारणात्मशब्दसद्भावेऽप्यात्मशब्दस्य वैश्वानरमात्मानमिति वैश्वानरशब्दविशेषितत्वाद्वैश्वानरशब्दस्य च जीवमात्रे

## श्रीभाष्यम्

जिज्ञासमानास्त्वमेवात्मानमस्माकं ब्रूहीत्यवोचन् तदेवेदं 'को न आत्मा किं ब्रह्म' (५.११.२) इति जीवात्मनामात्मभूतं ब्रह्म जिज्ञासमानैस्तज्ज्ञमन्विच्छद्भिर्वैश्वानरात्मज्ञसकाशमागम्य पृच्छयमानो वैश्वानरात्मा परमात्मेति विज्ञायते, आत्मब्रह्मशब्दाभ्यामुपक्रम्य पश्चात्सर्वत्रात्मवैश्वानरशब्दाभ्यां व्यवहाराच्च ब्रह्मशब्दस्थाने निर्दिश्यमानो वैश्वानरशब्दो ब्रह्मैवाभिधत्त इति विज्ञायते। किञ्च 'स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' (५.१८.१) 'तद्यथेषीका तूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते' (५.२४.३) इति वक्ष्यमाणं वैश्वानरात्मविज्ञानफलं वैश्वानरात्मानं परं ब्रह्मेति ज्ञापयति ॥

इतश्च वैश्वानरः परमात्मा—

सू २६—स्मर्यमाणमनुमानं स्यादिति (१-२-२६)

द्युप्रभृति पृथिव्यन्तमवयवविभागेन वैश्वानरस्य रूपमिहोपदिश्यते। तच्च श्रुतिस्मृतिषु परमपुरुषरूपतया प्रसिद्धम्। तदिह तदेवेति स्मर्यमाणं प्रत्यभिज्ञायमानं वैश्वानरस्य परमपुरुषत्वे अनुमानं लिङ्गमित्यर्थः; इतिशब्दः प्रकारवचनः; इत्थं भूतं रूपं प्रत्यभिज्ञायमानं वैश्वानरस्य परमात्मत्वेऽनुमानं स्यात्। श्रुतिस्मृतिषु हि परमपुरुषस्येत्थं रूपंप्रसिद्धम्। यथा आथर्वणे अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशश्श्रोत्रे वाग्विवृताश्च वेदाः। वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवीह्येष सर्वभूतान्तरात्मा' (मु.२.१.४) इति। अग्निरिह द्युलोकः, 'असौ वै लोकोऽग्निः' (बृ.८.२.९) इति श्रुतेः। स्मरन्ति च मुनयः 'द्यां मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे। दिशश्श्रोत्रे विद्धि पादौ क्षितिं च सोऽचिन्त्यात्मा सर्वभूतप्रणेता' इति, 'यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः। सूर्यश्चक्षुर्दिशश्श्रोत्रं तस्मै लोकात्मने नमः' (भारते शान्तिपर्व राजधर्म) इति च। इह च द्यु प्रभृतयो वैश्वानरस्य मूर्धाद्यवयवत्वेनोच्यन्ते। तथा हि तैरौपमन्यवप्रभृतिभिर्महर्षिभिः 'आत्मानमेवेमं वैश्वानरं

## श्रुतप्रकाशिका

प्रयोगाभावादिह गोविषयस्संशयो नसंभवति, नहि गोशब्दविशेषितस्य चतुष्पाच्छब्दस्याश्वादिपरत्वमाशङ्क्यत इत्य- [illegible] विभागेन [illegible]। विश्वस्मा अग्निमिति विश्वस्मै भुवनाय विश्वभुवनोपकारार्थं वैश्वानरं [illegible]। तत्र [illegible]— तत्र सन्देह इति। शक्यनिर्णयाशक्यनिर्णयत्वे सन्देहनिरसनमिति। [illegible]। अन्यत्र [illegible] इत्यर्थः। वैश्वानरस्येति। सुमतिः शोभनमतिः सुमतौ स्याम [illegible]। [illegible] 'श्रियमिन्द्र[illegible]नात्' इत्युक्तत्वात्। [illegible]। [illegible]— [illegible] न प्रतीयमानेषु कथं शक्यनिर्णयत्वात[illegible]—

## श्रीभाष्यम्

सम्नत्यश्नेषि तमेवनो ब्रूहि' (छां.५.११.६) इतिपृष्टः केकयस्तेभ्यो वैश्वानरात्मानमुपदिदिक्षुर्विशेषप्रश्नान्यथाऽनुपपत्त्या वैश्वानरात्मन्येतैः किञ्चित् 'ज्ञातं किञ्चिदज्ञातमिति विज्ञाय ज्ञाताज्ञातांशबुभुत्सया तानेकैकं पप्रच्छ। तत्र 'औपमन्यवकं त्वमात्मानमुपास्स' (५.१८.१) इति पृष्टे 'दिवमेव भगवो राजन् (५.१२.१) इति तेन चोक्ते दिवि तस्य पूर्णवैश्वानरात्मबुद्धिं निवर्तयन्वैश्वानरस्य द्यौर्मूर्धेति चोपदिशंस्तस्या वैश्वानरांशभूताया दिवः सुतेजा इति गुणनामधेयं प्राचिख्यपत्। एवं सत्ययज्ञादिभिरादित्यवाय्वाकाशाप्पृथिवीनामेकैकेनैकैकमुपास्यमानतया कथितानां विश्वरूपः पृथग्वर्त्मा बहुलो रयिः इत्येकैकगुणनामधेयानि वैश्वानरात्मनश्चक्षुः प्राण-सन्देहबस्तिपादावयवत्वं चोपदिष्टम्। सन्देहो मध्यकाय उच्यते। अत एवंभूतद्युमूर्धत्वादि-विशिष्टं परमपुरुषस्यैव रूपमिति वैश्वानरः परमपुरुष एव।

पुनरप्यनिर्णयमेवाशङ्क्य परिहरति—

सू—२७ शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्नतथादृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयते (१.२.२७)

## श्रुतप्रकाशिका

वाक्योपक्रमेति। कालनिके त्रेतारूपत्वं सर्वत्र सम्भवति। ब्रह्माग्निशब्दौ मिथः प्रतिबन्धकत्वादनिर्धारकौ। अन्नादनरूपं फल च सर्वत्रोपपन्नमित्यभिप्राय॥

एवं प्राप्तेइति। 'साधारणशब्दविशेषात्' इत्येतद्व्याचष्टे विशेष्यतइति विशेषइति। नेदं विशेषशब्दस्य प्रत्ययार्थव्याख्यानम् अपितु 'साधारणशब्दविशेषात्' इति समासान्तर्गतषष्ठीव्याख्यानम्। कर्मणि षष्ठी नतु कर्तरीत्यर्थ। विशेष इति कृदन्तं पदं कर्मार्थषष्ठीनिमित्तमित्यभिप्रायेण विशेषपदोपादानम्। यद्वा विशेष्यत इति विशेष इति घञ कर्मार्थतामाह—साधारण शब्द एव विशेष इति कर्मधारयः। कि केन विशेष्यत इत्यत्राह—

## गूढार्थसङ्ग्रहः

'स्मर्यमाणमनुमानंस्यादिति' अत्र स्मर्यमाणमिति नपुंसकनिर्देशेन 'रूपोपन्यासाच्च' इति सूत्रोक्तं रूप मेव विवक्षितं इति सूच्यते। अत्र पूर्वाधिकरणे मुण्डकश्रुतिविवक्षा नवीनानामपि सम्मता। अत्र छान्दोग्यस्थवैश्वानरविद्याविवक्षितेति च। एवं स्थिते पूर्वाधिकरणे रूप रुक्मवर्णं विवक्षितम्। अत्रतु 'अहं वैश्वानरो भूत्वा' इत्युक्तवैश्वानरत्वमित्युक्ति नलगति। 'स्मृतेश्च' इति लघुसाधारणेनैव तदर्थप्राप्तिसम्भवात्।

## श्रीभाष्यम्

यदुक्तं वैश्वानरः परमात्मेति निश्चीयत इति, तन्न 'शब्दादिभ्योऽन्तःप्रतिष्ठानाच' जाठरस्याप्यग्नेरिह प्रतीयमानत्वात् । शब्दस्तावद्वाजिनां वैश्वानरविद्याप्रकरणे 'स एषोऽग्निर्वैश्वा-

## श्रुतप्रकाशिका

### सू—२६ स्मर्यमाणमनुमानं स्यादिति (१.२.२६)

**साधारणस्येति ।** धर्मशब्दो लिङ्गपरः विशेष्यमाणत्वादिति फलितार्थ उक्तः, नाभिधानिकः के पुनरसाधारणा धर्मा इत्यत्राह—**तथाहीति ।** '**को न आत्मा किं ब्रह्म**' इति किंशब्दद्वयमात्मत्वब्रह्मत्वयोर्द्वयोरपि ज्ञातव्यत्वाभिप्रायम् । आत्मब्रह्मशब्दवाच्यधर्म्यैकत्वानेकत्वजिज्ञासया वा किं शब्दद्वयप्रयोगः । विषयवाक्ये '**न मे स्तेनः**' इत्यादेः प्रयोजनमाह—**आत्मनइति ।** फलितानि साधकलिङ्गानि दर्शयति **तदेवमिति** मुमुक्षुभिः पृच्छ्यमानत्वमात्मत्वं ब्रह्मत्वं ब्रह्मशब्दस्थाने वैश्वानरशब्दप्रयोगः फलविशेषनिर्देशश्च वैश्वानरस्य परमात्मत्वसाधकलिङ्गानीत्यर्थः । द्युमूर्धत्वादिविशिष्टतारूपधर्मस्यास्मिन्सूत्रेऽनुक्तिस्तस्यानन्तरसूत्रोक्तत्वात् ॥

स्मर्यमाणशब्दस्य विशेष्यं दर्शयन् सूत्रं व्याचष्टे **द्युप्रभृतीति ।** **लिङ्गमित्यर्थइति ।** अनुमानशब्दः करणार्थ ल्युडन्तः 'श्रुतिलिङ्गवाक्येत्यादिसूत्रपठितलिङ्गपरश्चेति भावः । अनुमानशब्देन हेतुत्वसिद्धेरितिशब्दवैयर्थ्यमित्यत्राह—**इतिशब्दइति ।** इतिशब्दार्थेनान्वितं वाक्यार्थमाह—**इत्थमिति ।** परमपुरुषरूपत्वेन प्रसिद्धिं दर्शयति **श्रुतीति ।** परमात्मपरत्वेन साधितत्वात् '**अग्निर्मूर्धा**' इत्यादिवाक्यमुदाहृतम् । इह द्यौर्मूर्धत्वेन श्रूयते उदाहृतवाक्ये '**अग्निर्मूर्धा**' इति । तत्कथमैकार्थ्यमित्यत्राह—**अग्निरिहेति ।** परमात्मनस्तथाविधरूपवत्त्वे स्मृतिमुदाहरति **स्मरन्तिचेति ।** '**यस्याग्निरास्यम्**' इत्यत्राग्निशब्दः प्रसिद्धाग्निपरः, द्यौर्मूर्धा इति पृथगुक्तेः श्रुतिस्मृतिष्वभिज्ञातस्य रूपस्य प्रत्यभिज्ञायमानत्वं दर्शयति **इहचेति ।** नन्वत्र '**अग्निर्मूर्धा**' इत्यादाविव **द्युप्रभृतिपृथिव्यन्तानां** मूर्धादिपादान्तावयवत्वेन संभूयोपदेशो न दृश्यत इति शङ्कायां विप्रकीर्णप्रतिपादनहेतुमाह—**तथाहीति ।** **विशेषप्रश्नान्यथाऽनुपपत्त्येति ।** नह्यात्मब्रह्मादिशब्दैः प्रश्नःकृतः वैश्वानरशब्देनहि प्रश्नः । अनेन द्युप्रभृतीनामपूर्वनामनिर्देशहेतुश्चोक्तो भवति अज्ञातांशः सर्वोह्युपदेष्टव्यः । **गुणनामधेयानीति ।** द्यौर्नक्षत्रादितेजस्विनीति सुतेजाः प्रकाशकस्यादित्य विश्वं रूपं प्रकाश्यं, तस्मात् आदित्यो विश्वरूपः, वायुर्विविधगतिस्वभावत्वात् **पृथग्वर्त्मा** आकाशो भूतान्तरेभ्यो महत्त्वात् बहुलः आपो वेगवत्त्वाद्रयिः रयोहि वेगः इकारान्तत्वं छान्दसं रैरूपधनप्राप्तिहेतुत्वाद्रयिः । पृथिवीप्राण्याधारत्वात् प्रतिष्ठेति भावः । श्रुतिस्थं सन्देहशब्दं व्याचष्टे **सन्देहो मध्यकायइति ।** मध्यंहि पूर्वापरांशसाधारण्यात् कुत्रानुप्रविष्टमिति सन्दिह्यते, एतज्ज्ञापयितुं मध्यकाय इति व्याख्यातं न तु नाभिरिति, **गुणनामधेयानी**त्यनेनान्यदपि प्रयोजनं फलितं, नकेवलं नामधेयानि, अपितु गुणनामधेयानि । तद्गुणकत्वं मूर्धादित्वेनोपदिष्टानां द्युप्रभृतीनामनुसन्धेयमित्यर्थः ॥

## श्रीभाष्यम्

**नरः ' [प्रश्न १.७] इति वैश्वानरसमानाधिकरणतयाऽग्निरिति श्रूयते ; अस्मिन्प्रकरणे च ' हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः ' (छां. ५.१८.२) इति वैश्वानरस्य हृदयादिष्वग्नित्रयकल्पनं क्रियते । ' तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यांप्रथमामाहुतिं जुहुयात्तां**

## श्रुतप्रकाशिका

अत्रायमभिप्रायः वाजसनेयके मूर्धभूतायादिवोऽधिष्ठानत्वमुक्तं नतु सुतेजस्त्वम् । चक्षुर्भूतस्यादित्यस्य सुतेजस्त्वमुक्तं नतु विश्वरूपत्वं । न चैतावता विद्याभेदः तत्तन्नामधेयोपस्थापितगुणेष्वेव तात्पर्यसंभवात् । अतीत्य

## गूढार्थसंग्रहः

अतः '**स्मर्यमाणम्**' इत्यत्र मुण्डकश्रुतौ प्रागुक्तं रूपमस्या विद्याया द्युमूर्धत्वादेरुक्त्या स्मृतिपथमारोहति । पूर्वज्ञातार्थस्यैवैतच्छ्रुतौ बोधनेन **स्मर्यमाण**मित्युक्तिः पूर्वं द्युमूर्धत्वादेः ज्ञातत्वात् ज्ञातार्थबोधिकेयं श्रुतिरिति तात्पर्येण **स्मर्यमाण**मित्युक्तम् । अत्र **प्रत्यभिज्ञायमानम्** इति भाष्ये उक्तम्, अत्रापि तद्बोधकशब्दप्रमाणसद्भावात् संस्कारमात्रजन्यं ज्ञानं स्मृतिः । अस्यामुपनिषदि द्युमूर्धत्वाद्यभावेऽपि ययाकयाचनविधया प्रागुक्तश्रुत्यर्थस्मृतौ सा स्मृतिमात्रमेव स्यात् नतथाऽत्र वर्तते अपितु मूर्धत्वादिबोधकशब्द एव वर्तते ' तदेवेदम् ' इति ' प्रत्यभिज्ञायमानम् ' इति भाष्यम् तत्र तच्छब्दे पूर्वसूत्रोक्तार्थस्मृतिः **इदम्** इत्यनेन दिवः मूर्धत्वं तच्छ्रुतिप्रतिपाद्यं विवक्षितम् । अतः संस्कारशब्द उभयजन्यज्ञानस्यापि संस्कारजन्यत्वानपायात् नानुपपत्तिः ॥

सिद्धान्ते प्रत्यभिज्ञा एकं ज्ञानं विभिन्नं वेत्यन्यदेतत् । अतश्च पूर्वश्रुत्युक्तमत्र प्रत्यभिज्ञायत इत्यर्थः । सूत्रद्वयेन सिद्धान्तयुक्तिः प्रदर्शिता । पूर्वपक्षोक्तानुपपत्तीना स्फुट परिहार प्रदर्शितः । तदुक्तयोऽपि निन्दिताः । इदानीं पूर्वपक्षिसम्मतश्रुतीना समाधानमाह—' **शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेतिचेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषमपिचैनमधीयते** इति । शब्दशब्दः साधारणशब्द पर एव । आदिशब्दार्थः अग्नेस्त्रेधापरिकल्पनप्राणाहुत्याधारत्वादिः । अन्तः प्रतिष्ठानान्तहेतुत्रयं जाठराग्निपरिग्रहे विशेषहेतुरूप भवतीति तात्पर्येण साधारणशब्दः जाठराग्निसाधारणशब्द एव भाष्यादावुपात्तः । **तथा दृष्ट्युपदेशात्** इति पूर्वपक्षे जाठराग्निरेवात्र विवक्षितः नतु परमात्मा इत्यर्थस्यैव विवक्षितत्वेन तथा दृष्ट्युपदेशेन प्रागुक्तहेतव उपपद्यन्त इति ' तथा ' इत्यस्य जाठराग्निप्रकारेणेत्यर्थः । सर्वभूतान्तरात्मत्वविशदीकरणार्थतया दिवं प्रस्तुत्य दिवो मूर्धत्याद्युक्तेः सर्वभूतान्तरात्मत्वे जाठराग्न्यन्तर्यामित्वमपि वर्तत इत्यग्निशब्दस्य अग्न्यन्तर्यामिपरतया

## श्रीभाष्यम्

जुहुयात्प्राणायस्वाहा' (छां. ५.१९.१) इत्यादिना प्राणाहुत्याधारत्वं च वैश्वानरस्यावगम्यते। तथा वैश्वानरस्यास्मिन्पुरुषेऽन्तःप्रतिष्ठानं वाजसनेयिनस्समामनन्ति 'स योऽतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद' (५.१९.१) इति। अतोऽग्नि-

## श्रुतप्रकाशिका

स्थलत्वं हि दिवोऽधिष्ठानत्वं तच्च सर्वोत्कृष्टत्वं तच्च नक्षत्रादितेजश्शालित्वरूपमित्येकगुणत्वेन फलितमित्यविरोधः। आदित्यस्य च सुतेजस्त्वफलरूपं विश्वरूपत्वं तद्धि विश्वनिरूपकत्वं विश्वप्रकाशकत्वम्। अतोऽनर्थान्तरतया फलितं अतो न विद्याभेद इति, एतदभिप्रायेण गुणनामधेयानीत्युक्तम्। परमात्मनस्त्रैलोक्यशरीरत्वविषयं **'द्यां मूर्धानम्'** इत्यादिस्मृतिवचनं स्वमूलत्वेन वैश्वानरविद्यायाः परमात्मविषयत्वं कल्पयतीति व्याख्यानमनुपपन्नम्, स्मृतिवचनंहि स्वमूलत्वेन श्रुतिं कल्पयति नतु वैश्वानरविद्यामेव कल्पयितुं प्रभवति। श्रुत्यन्तरसम्भवेन कल्पकस्यान्यथासिद्धत्वात् अस्तिहि **'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ'** इत्यादिश्रुतिस्तन्मूलतया सभाव्यमाना तस्मादाभ्यां श्रुतिस्मृतिभ्यामैकार्थ्य प्रत्यभिज्ञानमेवास्मिन् सूत्रे हेतुतया विवक्षितम्। **स्मर्यमाण**शब्दश्च प्रत्यभिज्ञायमानोपस्थापकः तर्कपादे 'अनुस्मृतेश्च' इत्यत्रानुस्मृतिशब्दस्य प्रत्यभिज्ञापरत्वेन सूत्रकारैः प्रयुक्तत्वात्।

उत्तरसूत्रमवतारयति **पुनरपीति**। अर्थचतुष्टये प्रयोगसाधारण्यादनिर्णयः पूर्वमुक्तः। इदानींतु विशेषधर्माणा ब्रह्मशब्दादीना तत्तदनुरूपविशेषकाच्छब्दादेः प्रतिरोधादनिर्णयो विवक्षितः।

### सू—२७ शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयते (१.२.२७)

नेतिपदं व्याचष्टे **यदुक्तमित्यादिना**। श्रुत्यन्तरस्थहेत्वोरुभयोर्दूरस्थत्वाचौ कण्ठोक्तौ एतत्प्रकरणस्थमग्नित्रयकल्पनं प्राणाहुत्याधारत्वं चादिशब्दोपात्तं सन्निकृष्टत्वात्। एतदभिप्रायेण वाजिनां वैश्वानरविद्याप्रकरणे वाजसनेयिनस्समामनन्तीति चोक्तं, अस्मिन्प्रकरणे चेति। चशब्देन वाजिनामप्यस्तीति सूचितम् **अग्नित्रयकल्पनं क्रियतइति**। अग्नित्रयकल्पनेन होमाधारत्वमात्रं फलितं होमाधारत्वविशेषमाह—**तद्वदुक्तमिति**। अग्निशब्दनिर्देशमहिम्नान्तः प्रतिष्ठानं विवक्षितम्; अन्तःप्रतिष्ठत्वमात्रंहि परस्यापि संभवति **'सयोहवै तमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितंवेद'** इतिहि श्रूयते, उक्तहेत्वनुक्रमेण पूर्वपक्षत्वेन शङ्कितमर्थमुपसंहरति अतइति। **'शब्दादिभ्यः'** इत्यादिसूत्रखण्डं जाठरशङ्कामात्रपरम्।

### श्रीभाष्यम्

'यस्त्वेतमेवं प्रादेशमात्रमभिविमानम्' (छां ५.१८.१) इत्यपरिच्छिन्नस्य परस्य ब्रह्मणो द्युप्रभृतिपृथिव्यन्तप्रदेशसम्बन्धिन्या मात्रया परिच्छिन्नत्वं कथमुपपद्यते तत्राह–

## सू–३० अभिव्यक्तेरित्याश्मरथ्यः (१.२.३०)

उपासकाभिव्यक्त्यर्थं प्रादेशमात्रत्वं परमात्मन इत्याश्मरथ्य आचार्यो मन्यते । 'द्यौ-र्मूर्धा आदित्यश्चक्षुः, वायुःप्राणः, आकाशो मध्यदेह', आपो बस्तिः पृथिवी पादौ' इति द्युप्रभृतिप्रदेशसम्बन्धिन्या मात्रया परिच्छिन्नत्वं कृत्स्नमभिव्याप्तवतो विगतमानस्य ह्यभिव्यक्तेरेव हेतोर्भवति ॥

मूर्धप्रभृत्यवयवविशेषैः पुरुषविधत्वं परस्य ब्रह्मणः किमर्थमिति चेत्–तत्राह–

### श्रुतप्रकाशिका

साधारणलिङ्गानि[illegible]षु वाक्येषु तच्छरीरक [illegible] [illegible] [illegible] [illegible]
अत्र च जाठरलिङ्गान्युपपद्यन्ते [illegible] सूत्र[illegible] तथा त्पृष्टयुपदेशात् इति स्वमा[illegible]वान् यथा न द्वितीयायति [illegible]
[illegible]तादीना व्रीहिविशेष [illegible] तद्ब्राठरलिङ्ग भावन [illegible]विशि[illegible]ऽपि परमात्मपरत्व सिद्धयतीत्य[illegible] इति
जैमिनिमतम् । अतो नविद्याभेदः —उत्तरसूत्रशङ्कामाह–यस्त्वेतामिति ।

## सू–३० अभिव्यक्तेरित्याश्मरथ्यः (१.२.३०)

परिच्छिन्न व महाभूततृतीयदेवतयोरेव सम्भवतीति शङ्कापरिहारार्थमिदं सूत्रम् । अभिव्यक्त्यर्थं बुद्धिसौकर्यायेत्यर्थं परिच्छिन्नत्वेहि बुद्धिसौकर्यं स्यात्, उक्तमर्थं विवृणोति द्यौर्मूर्धेत्यादिना । द्युप्रभृतिप्रदेशेत्यादिना प्रादेशमात्रशब्दो [illegible] अभिविमानम् इत्यत्राभिशब्द व्याचष्टे कृत्स्नमभिव्याप्तवतइति । विमानशब्दं व्याचष्टे विगतमानस्येति।

उत्तरसूत्रस्य शङ्कामाह—मूर्धप्रभृतीति । प्राकृतमूर्धादिद्रव्यावयव वमप्राकृतरूपस्य परमात्मनो न सम्भवति अपि तु [illegible]था एव सम्भवतीत्यभिप्रायः ।

### गूढार्थसङ्ग्रह.

शब्दाना परमात्मपरत्वमत्र सूत्रे उच्यते । वैश्वानरशब्दनिर्देश. विश्वेषा नराणा नेतृत्वेन अतो वैश्वानरविद्याद। वैश्वानर शब्दप्रयोग निदानमपि सूचितम् । द्युमूर्धत्वादिभि सर्वभूतान्तर्यामित्वविशदीकरणेन [illegible]दनुगुणसर्वभूत फलदातृ [illegible] प्रतिपाद्यत इति सर्वभूतफलदातृत्वबोधनायैव शब्दान्तर विहाय वैश्वानरशब्दप्रयोग. । अत्र जैमिनिशब्दप्रयोगेण देवता-[illegible]र्यामिन एव सर्वत्र फलदातृत्वमित्येव जैमिनेरभिमतमिति बोध्यते ॥

'अभिव्यक्तेरित्याश्मरथ्य.' एतावता साधारणशब्दस्य परमात्मनि मुख्यता रूढियोगाभ्या प्रतिपादिता । परमात्मपरत्वे द्युमूर्धत्वाद्युक्तप्रादेशिकत्व विरुध्यत इति पूर्वमुक्ते समाधान नोक्तम् अनन्तरसूत्रे तत्समाधानमुच्यते ॥

श्रीभाष्यम्

## सू–३१ अनुस्मृतेर्बादरिः (१.२.३१)

तथोपासनार्थमिति बादरिराचार्यो मन्यते। ‘यस्त्वेवमेतमेवमिमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति’ (छां.५.१८.१) इति ब्रह्मप्राप्त्यै ह्युपासनमुपदिश्यते। एतमेवमिति—उक्तप्रकारेण पुरुषाकारमित्यर्थः। सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु वर्तमानं यदन्नं भोग्यं तदत्ति सर्वत्र वर्तमानं स्वत एवानवधिकातिशयानन्दं ब्रह्मानुभवति। यत्तु सर्वैः कर्मवश्यैरात्मभिः प्रत्येकमनन्यसाधारणमन्नं भुज्यते, तन्मुमुक्षुभिस्त्याज्यत्वादिह न गृह्यते॥

यदि परमात्मा वैश्वानरः, कथं तर्हि उरःप्रभृतीनां वेद्यादित्वोपदेशः यावता जाठराग्निपरिग्रह एवैतदुपपद्यत इत्यत्राह—

## सू—३२ सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति [१.२.३२]

श्रुतप्रकाशिका

## सू—३१ अनुस्मृतेर्बादरिः (१.२.३१)

प्राकृतमूर्धाद्यवयवत्वासम्भवपरिहारार्थं वाभिप्रायेण सूत्रं व्याचष्टे तथेत्यादिना। अनुस्मृतिः उपासनम्, उपासनार्थं पुरुषविधत्वमित्यर्थः। कथमुपासनार्थत्वं बुद्ध्यारोहार्थत्वं किं न स्यादित्यत्राह— यस्त्वेतमिति। उदाहृतवाक्ये पुरुषविधत्वमुपास्याकारतया न प्रतीयत इत्यत्राह—एतमेवमिति। अत्र मुक्तिफलप्रतिपादकशब्दः क इत्यत्राह-सर्वेष्विति। अन्नशब्दस्य प्रसिद्धान्नपरत्वानुपपत्तिमाह—यत्त्विति।

एवं परमात्मनो द्युप्रभृतिप्रदेशसम्बन्धया मात्रया परिच्छिन्नत्वे पुरुषविधत्वे च प्रयोजनमुखेन भूततृतीयदेवताद्युदासः कृतः। अथोत्तरमानस्य जाठरशङ्काव्युदसने च दर्शयन् तदवतारयति यदीति। यावता प्रत्युतेत्यर्थः —

गूढार्थसङ्ग्रहः

‘अभिव्यक्तेरित्याश्मरथ्यः’ ‘अनुस्मृतेर्बादरिः’ इति सूत्रद्वयेऽपि एकार्थनिर्णयः। ‘अभिव्यक्ति’ अनुस्मृतिश्च’ शब्देन सर्वव्यापकस्य ज्ञानमेव न सम्भवति, परिच्छिन्नत्वे तु [illegible] मात्रेण सर्वव्यापकत्वं नास्तीति न भ्रमितव्यम्। अभिव्यक्त्यर्थं परिमितत्वेन चिन्तनमित्यभिप्रायः। एवं च प्राधान्येन स्वीकृत [illegible] भवति। ‘अनुस्मृतेर्बादरिः’ इति, अनुस्मृतेः [illegible] स्मृतिरित्यर्थः। अत्र ध्यानकाले [illegible] मुक्तिसमकालीभूतध्यानमित्यर्थकमिति तात्पर्येणोक्तम्। [illegible] सूत्रमिममभिप्रेत्य ‘उपासनं स्यात् ध्रुवानुस्मृतिः’ (१—१) इति, भाष्ये उपासनवाक्ये ‘अनु’ शब्दप्रयोगः।

‘शब्दादिभ्यः’ इति सूत्रे ‘साधारण’शब्देन परिच्छिन्नत्वव्यपदेशात् न परमात्मा इत्येषा शङ्का प्राप्ता [illegible] निवारिता। अत्र अग्निमूर्धत्वपरिकल्पनं [illegible] आदरणीये इतः परं तदुक्तनिमित्तं नोक्तमिति तात्पर्येण तत्र [illegible] ‘‘सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति’’ इति सूत्रम्। पूर्वं

### श्रीभाष्यम्

अस्य परमात्मन एव वैश्वानरस्य द्युप्रभृतिपृथिव्यन्तशरीरस्य समाराधनभूतायाः उपासकैरहरहः क्रियमाणायाः प्राणाहुतेरग्निहोत्रत्वरूपसंपादनायायमुरःप्रभृतीनां वेदित्वाद्युपदेश इति जैमिनिराचार्यो मन्यते। तथा हि परमात्मोपासनोचितमेव फलं प्राणाहुत्या अग्निहोत्रसम्पत्तिं च दर्शयतीयं श्रुतिः। ' स य इदमविद्वानग्निहोत्रं जुहोति यथाऽङ्गारानपोह्य भस्मनि जुहुयात्तादृक्तत्स्यात् अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते ' (छां.५.२४.१) इति ॥

## सू—३३ आमनन्ति चैनमस्मिन् [१.२.३३]

### श्रुतप्रकाशिका

## सू—३२ सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति [१-२.३२]

कस्य संपत्तिः सा च कीदृशीत्यपेक्षायामाह— अस्येति। संपत्तिः संपादनं, अस्मिन् पक्षेऽपि ' तथा हि दर्शयति ' इति सूत्रखण्डं व्याचष्ट तथेति। परमात्मोपासनोचितमेव फलमिति ' अग्निहोत्रसंपत्तेः परमात्मसमाराधनात्वेन, ' तस्य सर्वेषु लोकेषु ' इत्याद्युक्तं फलातिशयं एव ज्ञापयतीति भावः। स य इदमित्यादि। इदमविद्वान् इदमुरःप्रभृतीनामग्निहोत्रप्रकरणतामजानन् य अग्निहोत्रं प्राणाहुतिं जुहोति अनुतिष्ठतीत्यर्थः ' एतदेवं विद्वान् ' इत्यप्येवमर्थः ' सर्वेष्वात्मसु हुतं भवति ' इति सर्वात्मकभगवदाराधनेन सर्वमाराधितं भवतीति हुतप्रकर्षोक्तिः। अस्याग्निहोत्रस्य परमात्माराधनत्वज्ञापनार्थं तदङ्गकपरोपासनफलं दर्शयति तद्यथेषीकेति ॥

परस्यात्मनो द्युप्रभृतिशरीरकत्वं युक्तम् उपासकस्य मूर्धाद्यवयवानामेव द्युप्रभृतित्वेनोपासनविधानादिति शङ्कायामाह—

### गूढार्थसंग्रह

' साक्षादप्यविरोधं जैमिनिः ' इत्यत्र अग्निशब्दस्य योगेन परमात्मपरत्वमुक्तम्। तत्र अग्निशब्देन रूढ्या परममपरं च जैमिनेरभिमतमिति दर्शितम्। सोऽर्थः पूर्वोक्तबीजप्रदर्शनेन विशदीक्रियते। ' संपत्तेः–प्राणाहुतेरग्निहोत्रत्वसम्पत्त्यर्थं ' उर एव वेदिः ' इत्याद्युपदेशः। तेनाग्नेः त्रेधा परिकल्पनमुपपन्नम्। एतेन प्राणाग्निहोत्रे परमात्मन एवाराध्यत्वम्। अतः स्थितिः जाठराग्नौ वर्तते तच्छरीरकपरमात्मनोऽपि वर्तते। ' य एतमेवं विद्वानग्निमत्ति ' इति। अत्र व्यक्तीनां भेदेऽपि तत्तदन्तर्यामिण एकत्वात् पूर्वभूतान्तरात्मनस्य द्युमूर्धत्वादिभिः प्रकाशनेन प्राणाग्निहोत्रसंपादनस्य यत्फलं तदपि बोधितं भवति। अत एव चण्डालेभ्य उच्छेषदानेऽपि आत्मनि हुतं भवतीति श्रुतिः सङ्गच्छते। जाठराग्निपरिकल्पने यत्फलं तदेव द्युमूर्धत्वादिकल्पनेऽपि बोधितं भवतीत्युत्तरसूत्रे स्थाप्यते—' आमनन्ति चैनमस्मिन् ' इति। ' एनम् ' इत्यन्वादेशेन पूर्वोक्तार्थस्यैव विवक्षितत्वेन द्युमूर्धत्वादिविशिष्टपरमात्मानमत्र अस्मिन्नुपासकशरीरे आमनन्तीति सूत्रार्थः। ' तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः ' इति श्रुतौ ' तस्य ह वा ' इत्यत्रोपासको विवक्षितः। अस्य मूर्धैव आत्मनो

### श्रीभाष्यम्

एनं परमपुरुषं द्युमूर्धत्वादिविशिष्टं वैश्वानरमस्मिन्नुपासकशरीरे प्रणाहुत्याधारत्वाय आमनन्ति च ‘ तस्यह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः ’ (५.१८.२) इत्यादिना। अयमर्थः ‘ यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते ’ (छां.५.१८.१) इति त्रैलोक्यशरीरस्य परमात्मनो वैश्वानरस्योपासनं विधाय ‘ सर्वेषु लोकेषु ’ (५.१८.१) इत्यादिना ब्रह्मप्राप्तिं च फलमुपदिश्य अस्यैवोपासनस्याङ्गभूतं प्राणाग्निहोत्रं ‘ तस्य ह वा एतस्य’ (छां.५.१८.२)इत्यादिनोपदिशति ; यः पूर्वमुपास्यतयोपदिष्टो वैश्वानरस्तस्यावयवभूतान्द्युआदित्यादीन् सुतेजो विश्वरूपादिनामधेयानुपासकशरीरे मूर्धादिपादान्तेषु संपादयति। मूर्धैव सुतेजाः उपासकस्य मूर्धैव परमात्ममूर्धभूता द्यौरित्यर्थः। चक्षुर्विश्वरूपः आदित्य इत्यर्थः। प्राण पृथग्वर्त्मा वायुरित्यर्थः। सन्देहो बहुल. उपासकस्य मध्यकाय एव परमात्ममध्यकायभूत आकाश इत्यर्थः। पृथिव्येव पादौ अस्य पादावेव तत्पादभूता पृथिवीत्यर्थः। एवमुपासकः स्वशरीरे परमात्मानं त्रैलोक्यशरीरं वैश्वानरं सन्निहितमनुस

### श्रुतप्रकाशिका

## सू—३३ आमनन्ति चैनमस्मिन् (१.२.३३)

एवमितिपदं व्याचष्टे द्युमूर्धत्वादीति। अन्वादेशविषयो ह्येतदादेशः, अन्वादेशः अन्वाख्यानम्। एनमितिपदमुक्तधर्मोपेतमुक्तधर्मिणं परामृशतीतिभावः। उपासकशरीरे द्युमूर्धत्वाद्यनुसन्धानं परमात्मनो द्युमूर्धत्वादेर्नविरोधि उभयस्यापि विहितत्वात्। अत्र उपासकशरीर एव द्युमूर्धत्वाद्यवयवत्वमित्यवधारणकल्पनमयुक्तमित्यर्थः। एतमभिप्रायगर्भितमर्थं विवृण्वन्नुभयस्य विहितत्वमुपपादयति अयमर्थ इत्यादिना। ब्रह्मप्राप्तिं च फलमुपदिश्येति। फलवत्सन्निधावफलं तदङ्गमिति न्यायात् ब्रह्मप्राप्तिफलकत्वेनोक्तस्य वैश्वानरोपासनस्य प्राणाग्निहोत्रमङ्गमित्यभिप्रायः। कथं प्राणाग्निहोत्रस्याफलत्व ? ‘ अथ य एतदेवं विद्वान् ’ ‘ तद्यथेषीकतूलम् ’ इत्यादिना तस्य हि फलं श्रूयत इतिचेन्न, प्राणाहुतिमात्रस्य सर्वपापनिवृत्तिपूर्वकापरिच्छिन्नफलहेतुत्वायोगात् अङ्गभूतस्यापि प्राणाग्निहोत्रस्याङ्गिद्वारा मुक्तिरेव फलमिति शापयितुं ‘ यस्त्वेतमेवम् ’ इत्यादिनोक्तवैश्वानरोपासनफलान्तर्गतानिष्टनिवृत्त्यंशस्यात्र तयाऽङ्गिफलविशेषफलश्रवणेन ‘तस्य ह वा ’ इत्यादिवाक्यप्रतिपन्नस्याङ्गभावस्यानपोदितत्वात्। ‘ तस्य ह वा ’ इत्यादिवाक्यस्यार्थमाह—यः पूर्वमिति। अथान्तरवाक्यानि प्रत्येकं व्याचष्टे मूर्धेत्यादिना। अधिकरणार्थप्रतिपत्तसौकर्यार्थं पूर्वसूत्रविषयवाक्यार्थं क्रमप्राप्तमेत् सूत्रेण सङ्गतमुपन्यस्यति एवमित्यादिना। अधिकरणार्थमुपसंहरति अतइति॥

### गूढार्थसंग्रह

वैश्वानरस्य मूर्धा इति श्रुत्यर्थेन उपासकशरीरेऽपि मूर्धादिपादान्तानुसन्धानं प्रदर्शितं भवति। परेण ‘ नित्यापत्वादेवं व्योमवच्च’ इतिसूत्रे अत्यन्ताणुत्वोक्तिः विभोः स्थानाधारत्वं तदुक्तं तत्र स्थानमात्रार्थम् अपितु उपासनार्थं प्राप्तिरिति ततोऽप्यधिकपरिमाणमूर्तिकथनमिति निष्कर्षम्॥

इति वैश्वानराधिकरणं समाप्तम्

श्रीभाष्यम्

न्याय स्वकीयान्युरोलोमहृदयमन आस्यानि प्राणाहुत्याद्याधारस्य परमात्मनो वैश्वानरस्य वेदिबर्हिर्गार्हपत्यान्वाहार्यपचनाहवनीयानग्निहोत्रोपकरणभूतान्परिकल्प्य प्राणाहुतेश्चाग्निहोत्रत्वं परिकल्प्यैवंविधेन प्राणाग्निहोत्रेण परमात्मानं वैश्वानरमाराधयेदिति' 'उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यः' (छां.५.१८.२) इत्यादिनोपदिश्यते। अतः परमात्मा पुरुषोत्तम एव वैश्वानर इति सिद्धम् ॥

इति वैश्वानराधिकरणम्

श्रुतप्रकाशिका

अभिव्यक्तेरनुसरणीयत्वं द्युप्रभृतिषु मूर्धत्वादिसंपादनं मस्तकचुबुकान्तराळे परस्य स्थितिं जाबालश्रुत्या प्रतिपादनमिति अभिव्यक्तेरित्यादिसूत्रचतुष्टयार्थं इतरेत्वत्तः। तन्मते सूत्राणां परिहरणीयशङ्काया अभावाद्वैयर्थ्यमेव स्यात्। अतो यथोक्त एवार्थः ॥

इति वैश्वानराधिकरणम्



अथ वेदान्तसारः

## सू—२५ वैश्वानरस्साधारणशब्दविशेषात् [१.२.२५]

'आत्मानमेवेमं वैश्वानरम्' (छा.५.११.६) इत्यादौ वैश्वानरः परमात्मा, जाठराग्न्यादिषु साधारणस्यापि वैश्वानरशब्दस्य अस्मिन्प्रकरणे परमात्मासाधारणैः सर्वात्मकत्वब्रह्मशब्दादिभिर्विशेष्यमाणत्वात् ॥

## सू–२६ स्मर्यमाणमनुमानं स्यादिति [१.२.२६]

द्युलोकप्रभृतिपृथिव्यन्तं रूपम् 'अग्निर्मूर्धा' (मुण्डक.१.२.४) इत्यादिपूक्तम्, अत्र प्रामथमिकादि[illegible] मात्मत्वे अनुमानम्–लिङ्गमित्यर्थः ॥

## सू=२७ शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्नतथा दृष्ट्युपदे[illegible]म्भवात्पुरुषमपि चैनमधीयते [१.२.२७)

'स एषोऽग्निर्वैश्वानरः' (पुरुषसूक्तम्) इति अग्निशब्दसामानाधिकरण्यात् प्राणाहुत्या[illegible] प्रतिष्ठितम्' इत्यादेश्च नायं परमात्मेतिचेत्—नैतत् जाठराग्निशरीरकत्वेनोपास्यत्वोपदेशात् वे[illegible]

त्वायसम्भवाच्च । ' स एषोऽग्निर्वैश्वानरो यत्पुरुषः ' इत्येनं वैश्वानरं पुरुषमप्यधीयते वाजिनः । निरुपाधिकपुरुषशब्दश्च परमात्मनि नारायण एव, ' सहस्रशीर्षम् ' इत्यारभ्य ' विश्वमेवेदं पुरुषम् ' (पुरुषसू) इत्यादिषु प्रसिद्धः ॥

## सू—२८ अत एव न देवताभूतं च (१.२.२८)

यतोऽयं वैश्वानरः त्रैलोक्यशरीरः पुरुषशब्दनिर्दिष्टश्च, ततोऽयं नाग्न्याख्यदेवता तृतीयमहाभूतञ्च ॥

## सू—२९ साक्षादप्यविरोधं जैमिनिः (१.२.२९)

नावश्यमाग्निशरीरकत्वेन उपास्यत्वायेदमग्निशब्दसामानाधिकरण्यम्, अग्रनयनादियोगेन परमात्मन्येवाग्निशब्दस्य साक्षाद्वृत्तेस्सामानाधिकरण्याविरोधं जैमिनिराचार्यो मन्यते ॥

## सू—३० अभिव्यक्तेरित्याश्मरथ्यः (१.२.३०)

' यस्त्वेतमेवं प्रादेशमात्रम् ' (छा.५.१८.१) इत्यनवच्छिन्नस्य द्युप्रभृतिपरिच्छिन्नत्वम् उपासकाभिव्यक्त्यर्थमिति आश्मरथ्यः ॥

## सू—३१ अनुस्मृतेर्बादरिः (१.२.३१)

द्युप्रभृतिपृथिव्यन्तानां मूर्धादिपादान्तावयवत्वकल्पनं तथाऽनुस्मृत्यर्थं ब्रह्म प्रतिपत्तय इति बादरिः ॥

## सू—३२ सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति [१.२.३२]

' उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यः ' (छा.५.१८.२) इत्यादिना उपासकहृदयादीनां वेद्यादित्वकल्पनं विद्याङ्गभूतायाः प्राणाहुतेः अग्निहोत्रत्वसम्पादनार्थमिति जैमिनिः । दर्शयति च श्रुतिः—' य एतदेवं विद्वानग्निहोत्रं जुहोति ' (५.२४.२) इति । एते पक्षास्स्वीकृताः । पूजार्थमाचार्यग्रहणम् ॥

## सू—३३ आमनन्ति चैनमस्मिन् [१.२.३३]

एनं—परमात्मानम्, अस्मिन्—उपासितृशरीरे प्राणाहुतिवेलायामनुसन्धानार्थं ' तस्य ह वा एतस्य...मूर्धैव सुतेजाः ' (छा.५.१८.२) इत्यादि आमनन्ति च ; उपासकस्य मूर्धादिरेवास्य परमात्मनो मूर्धादिरित्यर्थः ॥

इति वेदान्तसारः

अथ वेदान्तदीप

## सू—२५ वैश्वानरस्साधारणशब्दविशेषात् [१.२.२५]

छान्दोग्य—'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि' (छा ५ ११ ६) इत्यारभ्य 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' (५ १८ १) इत्यत्र किमयं वैश्वानरः परमात्मेति इत्यनिर्णय उत नेति संशय । अनिर्णय इति पूर्वपक्ष, वैश्वानरशब्दस्य जाठराग्नौ महाभूततृतीये देवताविशेषे परमात्मनि च वैदिकप्रयोगदर्शनात्, अस्मिन्प्रकरणे सर्वेषां लिङ्गानां दर्शनाच्च । राद्धान्त—'को न आत्मा किं ब्रह्म' (५ ११ १) इति सर्वेषां जीवानामात्मभूतं ब्रह्म किमिति प्रक्रम्य, उत्तरत्र च 'आत्मानं वैश्वानरम्' (५ ११ २) इति ब्रह्मशब्दस्थाने सर्वत्र वैश्वानरशब्दप्रयोगाच्च वैश्वानरो नाम सर्वेषां जीवानामात्मभूतं परं ब्रह्मेति निश्चीयते । सूत्रार्थ—वैश्वानरशब्दनिर्दिष्टः परमात्मा वैश्वानरशब्दस्यानेकार्थसाधारणत्वेऽप्यस्मिन् प्रकरणे परमात्मासाधारणैर्द्युमूर्धत्वादिभिर्विशिष्यमाणत्वात् । विशेष्यत इति विशेष ॥

## सू—२६ स्मर्यमाणमनुमानं स्यादिति (१.२.२६)

स्मर्यमाणम्—प्रत्यभिज्ञायमानम्, अनुमीयतेऽनेनेत्यनुमानम् इतिशब्दः प्रकारवचन, इत्थंरूपं स्मर्यमाणं वैश्वानरस्य परमात्मत्वेऽनुमानं स्यात्, द्युप्रभृतिपृथिव्यन्तमवयवविभागेन वैश्वानरस्य रूपमिहोपादिष्टम् 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ' (मुण्डक २ १ ४) 'द्यां मूर्धानं यस्य विप्रा वदन्ति' (छा ५ १७ २) इति श्रुतिस्मृतिप्रसिद्धं परमपुरुषरूपमिह प्रत्यभिज्ञायमानं वैश्वानरस्य परमात्मत्वे लिङ्गं स्यादित्यर्थ ॥

## सू—२७ शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेतिचेन्न तथा दृष्ट्युपदेशाद-सम्भवात्पुरुषमपि चैनमधीयते (१.२.२७)

अनिर्णयमाशङ्क्य परिहरति—शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च इति । शब्दस्तावत् वाजिनां वैश्वानरविद्याप्रकरणे 'स एषोऽग्निर्वैश्वानरः' (छा ५ १८ २) इति वैश्वानरसमानाधिकरणोऽग्निशब्द । अस्मिन् प्रकरणे च 'हृदयं गार्हपत्य' (५ १८ २) इत्यारभ्य वैश्वानरस्य हृदयादिस्थानस्याग्नित्रयपरिकल्पनं प्राणाहुत्याधारत्वकथनादि प्रतीयते वाजिनामपि 'स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद' इति वैश्वानरस्य शरीरान्तःप्रतिष्ठितत्वं प्रतीयते अत एतैर्लिङ्गैर्वैश्वानरस्य जाठराग्निप्रतीतेर्नायं परमात्मेति इत्यनिर्णय इति चेत्—तन्न, तथा दृष्ट्युपदेशात् दृष्टिः उपासनं तथोपासनोपदेशादित्यर्थ, जाठराग्निशरीरतया वैश्वानरस्य परमात्मन उपासनं ह्यत्रोपदिश्यते 'अयमग्निर्वैश्वानरः पुरुषेऽन्तःप्रतिष्ठितः' इत्यादौ । कथमवगम्यत इति चेत् असम्भवात् केवलजाठराग्नेस्त्रैलोक्यशरीरत्वासम्भवात् । पुरुषमपि चैनमधीयते वाजिनस्तत्रैव 'स एषोऽग्निर्वैश्वानरो यत् पुरुष' (पुरुषस् २) इति एनं वैश्वानरं पुरुषमपि ह्यधीयते । पुरुषश्च परमात्मैव 'पुरुष एवेदं सर्वम्' 'पुरुषान्न परं किञ्चित्' (कठ ३ ११) इत्यादिषु प्रसिद्धे ॥

## सू–२८ अत एव न देवताभूतं च (१.२.२८)

यतस्त्रैलोक्यशरीरोऽसौ वैश्वानरः यतश्च निरुपाधिकपुरुषशब्दनिर्दिष्टः ; अतएव नाग्न्याख्या देवता, न भूत-तृतीयश्च वैश्वानरश्शङ्कनीयः ॥

## सू–२९ साक्षादप्यविरोधं जैमिनिः (१.२.२९)

अग्निशरीरतया वैश्वानरस्योपासनार्थमग्निशब्दसामानाधिकरण्यनिर्देश इत्युक्तम् । विश्वेषां नराणां नेतृत्वादिना संबन्धेन यथा वैश्वानरशब्दः परमात्मनि वर्तते, तथैवाग्निशब्दस्यापि अग्रनयनादिना योगेन साक्षात्परमात्मनि वृत्तौ न कश्चिद्विरोध इति जैमिनिराचार्यो मन्यते ॥

## सू–३० अभिव्यक्तेरित्याश्मरथ्यः (१.२.३०)

' यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरम् ' (छां.५.१८.१) इति द्युप्रभृतिपृथिव्यन्तप्रदेशावधिन्या मात्रया परिच्छिन्नत्वमनवच्छिन्नस्य परमात्मनो वैश्वानरस्य कथमुपपद्यत इत्यत्राह–अनवच्छिन्नस्यैव परमात्मनः उपासनाभिव्यक्त्यर्थं द्युप्रभृतिपृथिव्यन्तपरिच्छिन्नत्वमिति आश्मरथ्य आचार्यो मन्यते ॥

## सू–३१ अनुस्मृतेर्बादरिः (१.२.३१)

द्युप्रभृतिप्रदेशावच्छेदेनाभिव्यक्तस्य परमात्मनो द्युभ्वादित्यादीनां मूर्धाद्यवयवकल्पनं किमर्थमिति चेत् तत्राह–अनुस्मृतिः उपासनात् ब्रह्मप्राप्तये तथोपासनार्थं मूर्धप्रभृतिपादान्तदेहपरिकल्पनमिति बादरिराचार्यो मन्यते ॥

अथ वैश्वानरः परमात्मा त्रैलोक्यशरीर उपास्य उपदिश्यते चेत् ' उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यः ' (५.१८.२) इत्यादिना उपासकशरीरावयवानां गार्हपत्यादिपरिकल्पनं किमर्थमित्यत्राह—

## सू—३२ सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति [१-२.३२]

वैश्वानरविद्याङ्गभूतायाः उपासकैरहरहः क्रियमाणायाः प्राणाहुतेरग्निहोत्रत्वसंपादनाय गार्हपत्यादिपरिकल्पनमिति, जैमिनिराचार्यो मन्यते । तथाह्यग्निहोत्रसंपत्तिमेव दर्शयतीयं श्रुतिः प्राणाहुतिं विधाय ' अथ य एवं विद्वानग्निहोत्रं जुहोति ' (छां.५.२४.२) इति । उक्तानामर्थानां पूजितत्वख्यापनायाचार्यग्रहणम् ॥

## सू—३३ आमनन्ति चैनमस्मिन् (१.२.३३)

एनं परमपुरुषं वैश्वानरं द्युभ्वादिदेहम् अस्मिन्नुपासकदेहे प्राणाग्निहोत्राधारत्वाय आमनन्ति हि ' तस्य ह वा एतस्य वैश्वानरस्य मूर्धैव सुतेजाः ' (छां.५.१८.२) इत्यादिना । उपासकमूर्धादिपादान्ता एव द्युप्रभृतयः परमपुरुषस्य मूर्धादय इति प्राणाग्निहोत्रवेलायामनुसंधेया इत्यर्थः ॥

॥ इति वेदान्तदीपे वैश्वानराधिकरणं समाप्तम् ॥

## अथ अधिकरणसारावळी

स्वर्लोकादित्यवाय्वम्बरसलिलमहीरूपमूर्धादिक्लृप्त्या
  ध्येयो वैश्वानरात्मा स्थिरबहुविशदशब्दलिङ्गादिसाम्यात् ।
मैवं ब्रह्मेत्यधीतेर्भुवनतनुतया योगतस्त्वग्निशब्दो
  वैशिष्ट्याद्वा क्रियाङ्ग स्ववपुषि परधीर्गार्हपत्यादिधीश्च ॥
अन्यस्मिन्नन्यदृष्ट्या न भवति विदुषां क्वापि निःश्रेयसाप्ति-
  स्तस्माद्वैश्वानरोऽसौ न पर इति फलं त्वग्निसिद्ध्यादि मैवम् ।
ब्रह्मैव ह्यन्यदृष्ट्यन्वितघटितमिह ब्रह्मशब्दाद्यभावात्
  सर्वाघध्वंस उक्त फलमपि परमं ब्रह्म च व्याप्तमन्नम् ॥
त्रिष्वन्नोपासितृणां मितहृदयगुहाऽक्ष्यन्तरश्चिन्त्य उक्तो
  विश्वान्तर्यामितादेर्विपुलपरिमितश्चिन्तनीयस्त्वयेऽथ ।
पद्सु ब्रह्मात्मशब्दौ पुरुषपदमपि क्षेत्रतज्ज्ञप्रपञ्च-
  व्यावृत्ते र्विश्वहेतौ प्रकरणनियमाद्यामवृत्त्या नमन्ति ॥
तत्त्वत्वादेर्हि सर्वं जगदभिगदित ब्रह्मभावेन पूर्वम्
  सर्वान्तर्यामिता च प्रभवितुरुदिता सर्वतद्देहता च ।
तस्माद्विद्वैक्यवादप्रभृतिबहुविधापार्थसम्भ्राम्यमाण-
  क्षुद्रक्षीणोक्तिजाल निखिलमिह नयैस्सूत्रकारो निरास ॥
स्वाधीनाशेषसत्तास्थितियतनतया सर्वभावेन तिष्ठन्
  ग्रस्तादेशोऽक्षिनित्यस्थितिरखिलतनु कल्पिताब्ध्यादिगात्र. ।
स्वर्लोकाद्यङ्गवैश्वानरपदविषयो लक्षणस्यादिमस्य
  प्रोक्त पादे द्वितीये श्रुतिनिकरशिरश्शेखर श्रीनिवास ॥

॥ इ ति वै श्वा न रा धि क र णं स मा प्त म् ॥



श्रीमते रामानुजाय नमः

## अथ श्रीशारीरकमीमांसाभाष्ये प्रथमाध्यायस्य तृतीयः पादः

### अथ द्युभ्वाद्यधिकरणम्

श्रीभाष्यम्

सू=१ द्युभ्वाद्यायतनं स्वशब्दात् (१-३-१)

### अथ द्युभ्वाद्यधिकरणम्

श्रुतप्रकाशिका

सू=१ द्युभ्वाद्यायतनं स्वशब्दात् (१-३-१)

गूढार्थसंग्रहः

### अथ द्युभ्वाद्यधिकरणम्

'द्युभ्वाद्यायतनं स्वशब्दात्' इति। पूर्वं अदृश्यत्वादिगुणकाधिकरणे परविद्यायाः सगुणविषयत्ववत् विग्रहविशिष्टविषयत्वमपि प्रसाध्य वैश्वानरविद्याया अवयवावयविनोरुभयोरुपास्यत्वोक्तया तत्र कल्पना प्रतीत्या रूपस्य कल्पितत्वे पूर्वं परविद्याया अपि कल्पितविषयत्वमिति भ्रान्तिस्स्यात् इत्युभयत्रापि रूपमकल्पितमेवेति निर्धारणाय छान्दोग्यस्थवैश्वानरविद्याविचारःकृतः, इत्थ च(परविद्याविषयस्यानुवृत्त्यभावे अदृश्यत्वाधिकरणसिद्धान्त एव समीचीनो न भवेदित्यभिप्रेत्य तृतीयपादोपक्रम एव मुण्डकश्रुतिवाक्यविचारपूर्तिः क्रियते॥)

तत्र प्रकृतिः जीवश्चेति उभयोरपि पूर्वपक्षकोटौ निवेशः। 'विशेषणभेदव्यपदेशाभ्यां च नेतरौ' इतिसूत्रे उभयोस्समप्राधान्येन निर्देशात् 'अदृश्यत्वादिगुणक' इत्यनेन उत्तरभागवाक्यविचाररूपत्व तदधिकरणस्य स्पष्टम्। तत्रतु 'अथ परा यया तदक्षरमधिगम्यते' इत्यक्षरशब्दश्श्रुतः। तेन 'अक्षरात्परतःपरः' इति वाक्यविचारोऽपि अवश्यकर्तव्य आपतितः। अतस्तद्वाक्यार्थनिर्णयाय प्रकृतिर्जीवयं द्वयोः पूर्वपक्षे निवेशः तात्पर्यस्य तत्र विवक्षितः, उपक्रमस्य परमात्मपरत्वेऽपि मध्यवाक्याना जीवपरत्व सम्भवत्येव। ('द्युभ्वाद्यायतनम्' इत्यनेन 'यस्मिन्द्यौः' इति श्रुतिसन्निहितवाक्ये नाडीसंबन्धबहुधाजायमानत्वयोः प्रतिपादनेन तयोः जीवलिङ्गतायाः स्फुटत्वात्। अयमर्थः परेषां नवीनानाञ्च सम्मतः। वायोः नात्र विवक्षा सम्भवति। वायोः नाडीसंबन्धबहुधाजायमान त्वयोः प्रसिद्धिविरहात्। नवीनमते 'प्राणानां ग्रन्थिरसि' इत्यत्र पञ्चवृत्तिप्राणविवक्षासम्भवेऽपि सर्वधारकत्वस्य कथनेन रुद्रपूर्वपक्षोऽपि नावतरतीति प्रकृतेस्तु द्युभ्वाद्यायतनमिति सूत्रघटकपदेन पूर्वपक्षे विन्यासस्यावकाशो नास्ति॥)

'मुक्तोपसृप्य व्यपदेशाच्च' इत्यनन्तरं 'नानुमानमतच्छब्दात्प्राणभृच्च' इति सूत्रनिर्देशेन मुक्तोपसृप्यत्वस्य तत्र अश्रवणादेव प्रकृतेः पूर्वपक्षे प्रतिसूत्रनं न सम्भवति। मुक्तोपसृप्यत्वस्यायोगात्। अन्यथा

## गूढार्थसङ्ग्रहः

'न च स्मार्तम्' इत्यादिवदेव प्रथममेव 'नानुमानम्' इत्याद्यपि स्यात्। अन्तर्यामिविद्यायां 'यं पृथिवी न वेद' इत्युक्तेः यथा पृथिव्यादेः आत्मनो वेदनासम्भवे दृष्टान्तता तद्वत् 'नानुमानम्' इत्यत्र प्रकृतेरपि दृष्टान्तत्वमेव विवक्षितम्। तत्र वेदनासम्भवे दृष्टान्तः, अत्र तु मुक्तप्राप्यत्वविरहे दृष्टान्तः विषयवाक्ये 'ओतम्' इति निर्देशेन 'वायुना गौतमसन्दृब्धानि' इति वायुना सन्दृब्धत्वप्रतीत्या अत्रापि तद्व्याप्तत्वार्थप्रतीत्या वायोः पूर्वपक्षे निवेशः इति शङ्का समाधेयेत्। तत्रैव नाडीसम्बन्धबहुधाजायमानत्वयोः प्रतिपादनेन तयोः वायावसम्भवः स्फुटः। ओतशब्दनिर्देशेन आत्मशब्दार्थ अन्तर्बहिर्व्याप्तिरुक्तसम्भवेन 'यस्मिन्नास्ति देवदत्तस्तमानय' इत्यादौ यथा आनयनकर्मत्वं देवदत्ते नास्ति तथा ज्ञानकर्मत्वं नात्र विवक्षितमिति परोक्तिर्निरवकाशेति व्यञ्जितम्॥

गीताचार्यश्च 'भूमिरापोऽनलो वायुः' इत्यादिना चतुर्विंशतितत्त्वानि पञ्चविंशं जीवञ्चाभिधाय 'मत्तः परं नान्यत्किंचिदस्ति' इत्यत्र परमात्मापेक्षया परतत्त्वस्य निषेधेन परतत्त्वस्वरूपावेदनपूर्वकं 'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव' इत्युक्त्या तद्दृष्टान्तस्य श्रुतौ विवक्षायाः सिद्ध्या यस्मिन्सूत्रे मणिगणा ओतास्तदानयेत्यादौ मणिगणान् विहाय सूत्रानयनं न प्रामाणिकसम्मतमिति तद्देवात्रार्थो विवक्षित इति प्रतिभाति॥

तत्राप्यात्मशब्दप्रयोगेण अन्तर्बहिश्च व्याप्तत्वस्य परमात्मनि बोधनेन परमात्माधेयभूतानां पदार्थानां त्याग एव न सम्भवति। किंच परोदाहृतदृष्टान्ते 'आङ्पूर्वो नीञ्' धातुः। तत्र विशिष्टनयनासम्भवः प्रत्यक्षसिद्धः। यस्मिन्नास्ति देवदत्तः तं पश्येति प्रयोगे देवदत्तविशिष्टस्य दर्शनं यथा प्रतीयते तद्वदत्रापि। गीतोपबृंहणेन 'यस्मिन्द्यौः पृथिवी' इति श्रुतौ चशब्देन जीवस्य विवक्षया सजीवप्राकृतसर्वाधार एव विवक्षितम्। अत एव 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इति छान्दोग्यश्रुत्यानुगुण्यादपि। 'स्वशब्दात्' इत्यस्य स्वबोधकशब्दादित्यर्थः। स्वबोधकः आत्मशब्द एकः, 'अमृतस्यैष सेतुः' इति वाक्यप्रतिपाद्यलिङ्गस्य परब्रह्मासाधारणतया तद्वाक्यस्यापि परमात्मबोधकत्वम्। सेतुशब्दश्च धारकार्थकः अमृतशब्दस्य परमात्मपरत्वे स्वधारकत्वासम्भवात् मुक्तपरत्वेऽपि धारकत्वं नस्वरसम्। जीवपरत्वेऽपि 'यस्मिन्द्यौः' इति वाक्य एव सत्यन्या गीताऽनुरोधेन जीवधारकत्वस्यापि प्रतीत्या अत्र धारकबोधने वैफल्यात्। अतः सेतुसादृश्यात् एकस्मिन्देशे स्थितस्य देशान्तरप्राप्तिहेतुत्वरूपधर्ममादाय देशान्तरस्वप्राप्तिहेतुत्वरूपधर्ममादाय देशान्तरस्वप्राप्तिहेतुत्वेन 'अमृतस्यैष सेतुः' इत्यनेन मुक्तिहेतुत्वमेव प्रतिपाद्यत इति निर्णयस्सम्भवति। ज्ञान इतरवाग्विमोकयोः एतच्छब्देन विवक्षा नसमीचीना। 'यदेतज्जानथ सदसद्वरेण्यं परं विज्ञानात् यद्वरिष्ठं प्रजानाम्' (मु.२.२) 'तदेतदक्षरं ब्रह्म' 'तदेतत्सत्यम्' 'तदमृतम्' इति पूर्वं 'स एषोऽन्तश्चरते, दिव्ये ब्रह्मपुरे ह्येषः' इति उत्तरत्र विद्यमानानां बहूनां परमात्मपरतायाः परेषामपि सम्मतत्वात्। 'अमृतस्यैष हेतुः' इत्यनभिधाय 'सेतु'रित्युक्तेरिदमेव बीजम्। सेतुः नदीकूलान्तरगतस्य पुंसः यथा कूलान्तरप्रापकः तद्वत् परमात्मा प्रकृतिमण्डलस्थजीवस्य प्रकृतिमण्डलादूर्ध्वस्वस्वप्रापक इति सूचनायैव सेतुशब्दप्रयोगः अमृतशब्दश्च परमात्मपरः। एतदनन्तरश्रुतौ 'ओमित्येवात्मानं ध्यायथ' 'स्वस्ति वः पाराय तमसः परस्तात्' इति उपसंहारे च 'तरति शोकं---अमृतो भवति' इति श्रूयते॥

श्वेताश्वतरोपनिषदि प्रथमे 'तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः' इति द्वितीये योगनिरूपणावसरे 'ब्रह्मोडुपेन प्रतरेत विद्वान् स्रोतांसि सर्वाणि भयावहानि' इति 'अमृतस्य परं सेतुं दग्धेन्धनमिवानलम्' इति षष्ठे च श्रूयते। अस्यामुपनिषदि 'स्रोतांसि सर्वाणि' इत्युक्त्या प्रागुदाहृतानां सर्वेषामपि स्रोतस्त्व प्रतिपादितम्। तत्र उडुपसादृश्यं ब्रह्मणि षष्ठे सेतुसादृश्यं च स्पष्टम्। द्वितीयोक्तदिशा षष्ठेऽपि प्रकृतिस्रोतस्तरणमेव सेतुना विवक्षितमिति श्रुतितात्पर्यं व्यक्तम्॥

## श्रुतप्रकाशिका

एवं स्पष्टजीवलिङ्गकानि वाक्यानि परमात्मपरत्वेन निर्णीतानि । अथ स्पष्टजीवलिङ्गकानि विचार्यन्त इति पादसङ्गतिः । (पूर्वस्मिन्नधिकरणे द्युपृथिव्यादिसंबन्धिनः परमात्मत्वमुक्तम् । द्युपृथिव्यादिसंबन्धित्वं परमात्मव्यतिरिक्तस्यापि दृश्यत इति शङ्कायामनन्तराधिकरणारम्भ इत्यनन्तरसङ्गतिः) यद्वा 'अदृश्यत्वादि गुणक' इत्यधिकरणे त्रैलोक्यशरीरत्वेन परमात्मत्वे साधिते तच्छरीरकत्वमपरमात्मनोऽपि दृश्यत इति शङ्कायां वैश्वानराधिकरणे प्राप्तम् । अथास्यामेवोपनिषदि कतिपयवाक्यानां परमात्मव्यतिरिक्तपरत्वशङ्कायामदृश्यत्वादिगुणकचिन्तनस्यासमाप्तबुद्ध्या तृतीयपादाद्याधिकरणारम्भ इत्यनन्तरसङ्गतिः । अत्र निरसनीयजीवलिङ्गानां स्पष्टत्वादिदमधिकरणमदृश्यत्वादिगुणकनिरूपणात्पृथक्कृत्य तृतीयपादे निवेशितम् पादभेदस्य स्पष्टास्पष्टजीवलिङ्गतानिबन्धनत्वात् ॥

## गूढार्थसङ्ग्रहः

एतत्तात्पर्येणैव गीतायम्—'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इत्युक्तम् । विश्वमायानिवृत्तिरपि प्रकृतिसर्वभागातिक्रमेण पूर्वदेशनिवृत्तिरेव । अन्ते प्रकृतिमण्डलावसाने इत्यर्थः । तदनुसारेण मुण्डकश्रुतावपि 'तरति शोकं तरति पाप्मानम्' इत्यत्र 'स्वस्ति वः पाराय तमसः परस्तात्' इति पूर्वश्रुत्यनुसारेण शोकपाप्मशब्दयोः शोजनकपापबन्धकद्रव्येऽपि प्रयोगेण च शोकपापहेतुसामान्यतरणमेव विवक्षितमित्यपि प्रतीयते । 'अमृतस्यैष सेतुरि'ति श्रुत्यनन्तरश्रुतौ 'स्वस्ति वः पाराय तमसः परस्तात्' इत्युक्तया इत्थमेव श्रुतितात्पर्यं निर्णीयते ॥

एवमर्थविवक्षा 'मुक्तोपसृप्य व्यपदेशात्' इत्यत्र उपसृप्यपदेन दृढीक्रियते । समीपप्राप्तिरेव 'उपसृप्य' इत्यत्र विवक्षिता । तत्र च 'नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इति श्रुतिरेवाभिप्रेता । 'उपैति' इत्यत्र उपपूर्वक 'इण्गतौ' इति धातुः । अत्रतु उपपूर्वक 'सृपिगतौ' इति धातुः एवमर्थविवक्षा 'द्युभ्वाद्यायतनम्' इत्यत्रायतनशब्देन उत्तम्भिता भवति । 'सन्मूलास्सोम्येमाः—सदायतनाः' इति सद्विद्यायां 'सदायतना' इत्यत्र उक्तार्थ एव अत्र विवक्षित इति सूचनायात्र आयतनशब्दप्रयोगः । तेन च 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्यते' इत्युक्तं यत्फलं तदेव 'भोगेन त्वितरे क्षपयित्वा अथ संपद्यते' इत्यत्राभिप्रेतम् ॥

अथ शब्दार्थव्यवधानरहितानन्तर्यस्य सद्विद्योक्त उत्क्रान्ति श्रुत्यन्तरोक्तगत्योः पादद्वयेन कथनपूर्वक 'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य' इति छान्दोग्यान्तिमाध्यायगतवाक्यार्थनिर्धारणकरणेन 'सम्' इति रूपसम्पत्तिरेव 'अथ संपत्स्ये' इत्यत्र विवक्षितेति सूत्रकृता निर्धारितं भवति । अतश्च तादृश्येव उपसंपत्तिरत्र विवक्षितेति सूत्रकाराशयः॥

'अस्माच्छरीरात्समुत्थय' इति श्रुतिः 'यावन्न विमोक्ष्ये' इत्यत्र शरीरमोक्षमपि सूचयति 'सम्' इति संपत्तिप्रति बन्धकसामान्यविनिर्मोकस्याभिप्रेति इति श्रुत्योर्द्वयोरानुरूप्य स्फुटं प्रतीयते । 'यावन्न विमोक्ष्ये' इत्यत्र मुक्तेरुक्तया मुक्तस्यैव संपत्तिर्विवक्षितेति प्रतीयते । सा च संपत्तिः दहरविद्याया गतिवाक्यानन्तरं 'अस्माच्छरीरात्समुत्थाय' इति वाक्येन समानानुपूर्वीकप्रजापतिविद्यागतश्रुतौ 'शरीरात्समुत्थाय' इत्यस्य उत्क्रान्तेः 'सम्' इत्यनेन पुनः स्थूलशरीरप्राप्त्यभावसूचकसूक्ष्मशरीरविगमपर्यवसानस्य च विवक्षितत्वेन 'उपसपद्य' इत्यत्र उपेति शब्दविन्यासेन च प्रागुक्तसम्पत्तिरेव विवक्षितेति निश्चयः । एवं च 'सदायतनाः' इतिवत् 'द्युभ्वाद्यायतनम्' इति शब्दप्रयोगेण 'मुक्तोपसृप्य' इति सूत्रविन्यासेन सद्विद्यायामपि मुक्तोपसृप्यत्व विवक्षितमिति सूचितम् । परैः 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । –समश्नुते' इति श्रुतिमुपादाय तत्रोक्तप्राप्तिर्विवक्षितेति वर्णितम् । अत्र 'उप' इत्युपसर्गबलेन अयमर्थो न विवक्षित इति स्फुटं निर्मत्सराणाम् ॥

## श्रीभाष्यम्

आथर्वणिका अधीयते 'यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनस्सह प्राणैश्च सर्वैः । तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः' (मुण्डक.२.२.५) इति । तत्र संशयः किमयं द्युपृथिव्यादीनामायतनत्वेन श्रूयमाणो जीवः उत परमात्मा—इति । किं युक्तम् ? जीव इति । कुतः ' अरा इव रथनाभौ संहता यत्र नाड्यस्स एषोऽन्तश्चरते बहुधा जायमानः ' (२.२.६) इति परस्मिन् श्लोके पूर्ववाक्यप्रस्तुतं द्युपृथिव्याद्यायतनं यत्र इति पुनरपि सप्तम्यन्तेन परामृश्य तस्य नाड्याधारत्वमुक्त्वा पुनरपि ' स एषोऽन्तश्चरते बहुधा जायमानः ' (२.२.५) इति तस्य बहुधा जायमानत्वं चोच्यते ; नाडीसम्बन्धो देवादिरूपेण बहुधा जायमानत्वं च जीवस्यैव धर्मः । अस्मिन्नपि श्लोके ' ओतं मनस्सह प्राणैश्च सर्वैः' (२.२.६) इति प्राणपञ्चकस्य मनसश्चायतनत्वमुच्यमानं जीवधर्म एव । एवं जीवत्वे निश्चिते सति द्युपृथिव्याद्यायतनत्वादिकं यथाकथञ्चित्सङ्गमयितव्यम् इति ॥

## श्रुतप्रकाशिका

(द्युभ्वाद्यायतनमित्येनावता वक्तव्येऽपि द्युभ्वादीत्युक्तेरयमाव. ऊर्ध्वा अवराश्चेति कोटिद्वयान्तर्गता लोकाः । ... नाथौ द्युभूशब्दाविति । विषयमाह आथर्वणिका इति । तत्रेति । किं द्युपृथिव्याद्यायतनं जीवः उत परमात्मेतिविचारः तदर्थं 'यस्मिन्द्यौः ' इत्यादिवाक्यजातं किमदृश्यत्वादिगुणकप्रकरणाच्छिन्नं उताभिन्नम् । तदर्थं मनःप्राणादिसम्बन्धः किमुपकरणोपकरणित्वलक्षणः उताधाराधेयभावलक्षणः तदर्थं द्युपृथिव्याद्यायतनत्वामृतसेतुत्वादिधर्माः, किं कर्मफलात् जीवस्य सम्भवन्ति ? उत अनश्नत इति । यदा कर्मफलात्तु जीवस्य सम्भवन्ति तदा मनआदिसम्बन्धस्य करणत्वप्रकारत्वया तस्य प्रकरणविच्छेदकत्वेन द्युभ्वाद्यायतनं जीवस्स्यात् । यदाऽमृतसेतुत्वादयोऽनश्नतो धर्माः तदा मनआदिसम्बन्धस्य आधाराधेयभावरूपत्वेन परप्रकरणाविच्छेदाद्द्युपृथिव्याद्यायतनं परमात्मेति फलितं स्यात् ' अरा इव ' इत्यादेरनन्तरश्लोकस्य द्युभ्वाद्यायतनविषयत्वं दर्शयन् जीवलिङ्गमाह—पूर्ववाक्येति । लिङ्गान्तरमाह—पुनरपि स एषइति । तत् किमित्यत्राह—नाडीसंबन्धइति । नाडीनामिन्द्रियसम्बन्धित्वेन जीवस्य ज्ञानप्रसरहेतुत्वात् ' ताभिः प्रत्यवसृप्य पुरीतति शेते' 'तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ' इत्यादिश्रुतिभिर्जीवस्य नाडीसंयोगप्रसिद्धेश्च तत्सम्बन्धो जीवलिङ्गमितिभावः ॥

देवादिरूपेणेति बहुधा शब्दविवरणं अन्तर्यादित्यविद्यायामकर्मकृतस्वेच्छागृहीतदिव्यविग्रहयोगस्समर्थितः. ननु देवादिसजातीयरूपैर्बहुधा जायमानत्वं बहुधा शब्दार्थं इति सूत्रकारेण निरूपितम् । अतस्तस्य जीवत्वशङ्का युक्तेतिभावः ' यस्मिन्द्यौः ' इति पूर्वश्लोकं जीवपरं दर्शयति अस्मिन्नपीति । ननु कथं मनः प्राणसम्बन्धस्य जीवत्वसाधकतयोपन्यासः सहि परस्य सम्भवतीति ' सर्वत्र प्रसिद्धोपदेशात् ' इत्युक्तम् सत्यं तथाऽपि मनःप्राणैरुपकरणोपकरणित्वलक्षणसम्बन्धस्य स्वरसतःप्रतीतेस्तस्य चापवादाभावेसति कार्यकरत्वेन प्रागुक्तनिर्वाहायोगाच्च युक्तं इह । अतो नाडीसम्बन्धबहुधाजायमानत्वमनःप्राणाधारत्वजीवलिङ्गैः पूर्वपक्षोत्थानं युक्तम् । तत्रैव श्लोके द्युपृथिव्याद्यायतनत्वरूपपरमात्मलिङ्गं च दृश्यत इत्यत्राह—एवं जीवत्वे निश्चितइति । द्वयोरपि जीवपरयोर्लिङ्गप्रतिभासेन विरोधात् यत्रलिङ्गभूयस्त्वं तद्भाविनि पाठिकस्योत्तरश्लोकप्रतिपन्नलिङ्गद्वयानुगुण्यं तल्लिङ्गानुसारिण्यर्थनिर्णये कर्तव्यमितीत्यर्थः । यथाकथञ्चित्सङ्गमयितव्यमिति । जीवस्य द्युपृथिव्याद्याधारत्वं स्वरूपेण वा कर्मद्वारा वा मुक्तावस्थाया विकसितेन ज्ञानेन वा संभवतीतिभावः ।

### श्रीभाष्यम्

एवं प्राप्ते प्रचक्ष्महे—' द्युभ्वाद्यायतनं स्वशब्दात् ' द्युपृथिव्यादीनामायतनं परं ब्रह्म। कुतः ? स्वशब्दात्–परब्रह्मासाधारणशब्दात्। ' अमृतस्यैष सेतुः ' (मु.२.२५) इति परस्य ब्रह्मणोऽसाधारणश्शब्दः। ' तमेवं विद्वानमृत इह भवति। नान्यः पन्था अयनाय विद्यते ' (पुरुषसू.) इति सर्वोपनिषत्सु स एवामृतत्वप्राप्तिहेतुश्श्रूयते। सिनोतेश्च बन्धनार्थत्वात् सेतुः अमृतस्य प्रापक इत्यर्थः। सेतुरिव वा सेतुः नद्यादिषु सेतुर्हि कूलस्य प्रतिलम्भकः–संसारार्णवपारभूतस्यामृतस्यैषप्रतिलम्भक इत्यर्थः। आत्मशब्दश्च निरुपाधिकः परस्मिन् ब्रह्मणि मुख्यवृत्तः, आप्नोतीति ह्यात्मा ; स्वेतरसमस्तस्य नियन्तृत्वेन व्याप्तिस्तस्यैव सम्भवति। अतस्सोऽपि तस्यैव शब्दः। ' यस्सर्वज्ञस्सर्ववित् (मु.२.२.७) इत्यादयश्चोपरितनाः परस्यैव ब्रह्मणश्शब्दाः। नाड्याधारत्वं तस्यापि सम्भवति 'सन्ततं शिराभिस्तु लंबत्याकोश सन्निभम् ' इत्यारभ्य ' तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः ' (तै.नारा०१३.अनु) इति श्रवणात्। ' बहुधा जायमानः ' (मु.२.२.६) इत्यपि परस्मिन् ब्रह्मणि सङ्गच्छते ' अजायमानो बहुधा विजायते। तस्य धीराः परिजानन्ति योनिम् ' (पुरुषसू.] इति देवादीनां समाश्रयणीयत्वाय तत्तज्जातीयरूपसंस्थानगुणकर्मसमन्वितः स्वकीयं स्वभावमजहदेव स्वेच्छया बहुधा विजायते परः पुरुष इत्यभिधानात्। एवं स्मृतिरपि ' अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्। प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥ ' (गी.४.६) इति। मनःप्रभृतिजीवोपकरणाधारत्वं च सर्वाधारस्य परस्यैवोपपद्यते ॥

इतश्च परमपुरुषः–

## सू—२ मुक्तोपसृप्य व्यपदेशाच्च [१.३.२]

### श्रुतप्रकाशिका

द्युपृथिव्यादीनामित्यादि। सेतुशब्दस्य सलिलनिरोधके प्रसिद्धत्वेनामृतस्य निरोधकत्वप्रसङ्गेन रूढार्थानुपपत्तेरत्याम स्वारस्यसाम्यात्तमुभयथा व्याचष्टे सिनोतेरिति, सेतुरिवेति च। प्रथमनिर्वाहे रूढिपरित्यागादस्वारस्यं द्वितीये त्ववगत्य रूढ्यर्थगतगुणयोगपरत्वादस्वारस्यम्। गुणयोगफलितमर्थमाह—संसारेति। श्येनसादृश्याद्यागे श्येनशब्दवत् सेतुसादृश्यात्परमात्मनि सेतुशब्दः। विहङ्गयागयोर्हि निदर्शनम्। ' अन्तःप्रविष्टश्शास्ता जनानाँ सर्वात्मा ' इति श्रुत्यनुसारेणात्मशब्दं व्याचष्टे आत्मशब्दश्चेति। आत्मशब्दो न व्याप्तृमात्रवाची, किंतु व्याप्तृविशेषवाची योगरूढत्वात् नहि गगनादिष्वात्मशब्दप्रयोगः अतो नियन्तृरूपव्याप्तृविशेषवाचीत्यर्थः। ' अमृतस्यैष सेतुः ' ' आत्मानम् ' ' यस्सर्वज्ञस्सर्ववित् ' इत्यादयः स्वशब्दा इत्यर्थः। परोक्तहेतुनिर्वाहमाह—नाड्याधारत्वमित्यादिना। नाड्याधारत्व हृदयद्वारा परमात्मनस्सम्भवतीत्यर्थः। अजायमानइति। जन्मनो हेतुविशेषः फलविशेषश्चेतिभावः) तद्विशदयायाह–स्मृतिरपीति।

## सू—२ मुक्तोपसृप्य व्यपदेशाच्च (१.३.२)

नामरूपप्रहाणमात्रं प्रळयदशायामप्यस्तीति तद्व्यावृत्त्यर्थं विधूतपुण्यपापत्वपूर्वकत्वं नामप्रहाणस्य दर्शयितुं श्रुतिवाक्यद्वयोपादानम्। उपात्तश्रुतिवाक्ये बन्धान्मुक्त इति शब्दस्याश्रुतत्वान्मुक्तिप्रतिपादनं दर्शयति—

श्रीभाष्यम्

अयं द्युपृथिव्याद्यायतनभूतः पुरुषः संसारबन्धान्मुक्तैरपि प्राप्यतया व्यपदिश्यते 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' (मु.३.१.३) 'यथा नद्यस्स्यन्दमानास्समुद्रे ऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' (मु.३.२.८) इति। संसारबन्धनाद्विमुक्ता एव हि विधूतपुण्यपापा निरञ्जना नामरूपाभ्यां विनिर्मुक्ताश्च पुण्यपापनिबन्धनाचित्संसर्गप्रयुक्तनामरूपभाक्त्वमेव हि संसारः। अतो विधूतपुण्यपापैः निरञ्जनैः प्रकृतिसंसर्गरहितैः परेण ब्रह्मणा परमं साम्यमापन्नैः प्राप्यतया निर्दिष्टो द्युपृथिव्याद्यायतनभूतः पुरुषः परं ब्रह्मैव ॥

परब्रह्मासाधारणशब्दादिभिः परमेव ब्रह्मेति प्रसाध्य, प्रत्यगात्मासाधारणशब्दाभावाच्चायं पर एवेत्याह—

## सू-३ नानुमानमतच्छब्दात्प्राणभृच्च (१,३.३)

श्रुतप्रकाशिका

संसारबन्धनादिति। वाक्यद्वयोक्तविशेषणान्याह–विधूतेति। मुक्तत्वमुपपादयति पुण्यपापेति। वाक्यद्वयोक्तविशेषणानि विशदीकुर्वन् सूत्रार्थपरमसाम्येन घटयति अतइति। निरञ्जनशब्दव्याख्यानं प्रकृतिसंबन्धरहितैरितिपदम्॥ परमं साम्यमिति। येन गुणेन साम्यं तस्यापरिच्छिन्नत्वं परमसाम्यं न तु सर्वथा साम्यम्॥

उत्तरसूत्रमवतारयति परब्रह्मेति। पूर्वमन्वय उक्तः, अथ तद्दार्ढ्याय व्यतिरेक उच्यत इत्यर्थः—

## सू-३ नानुमानमतच्छब्दात्प्राणभृच्च (१.३.३)

सूत्रखण्डतेर्बुद्धिस्थत्वाय प्रथमं सङ्गच्छमानं सूत्रस्य वाक्यार्थमाह–यथेति। मुक्तोपसृप्यत्वेऽभिहिते प्रधानशङ्कानुदयेन तस्य व्युदसनीयत्वाभावात्तदुपन्यासो दृष्टान्तत्वेनेतिभावः। किमत्र प्रधानोपस्थापकं पदमित्याकाङ्क्षायां व्याख्येयं पदं व्याचष्टे अनुमीयतइति। 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणात् कर्मणि ल्युडितिभावः। अनुमानेति। 'शेष' इत्यण्प्रत्यये आदिवृद्धौ न सत्यामानुमानमितिरूपं भवति तद्व्यतिरिक्तवाचिशब्दादिति प्रतीतिशङ्कानिवृत्त्यर्थं 'अतच्छब्दात्' इति पदं व्याचष्टे तद्वाचीति। अर्थाभावे यदव्ययमिति न सूत्रोपादानं अपि त्वर्थोपादानं, सूत्रस्य दार्ढ्यस्यात्। अयमभिप्रायः। 'अतच्छब्दात्' इति बहुव्रीहिस्तावदनुपपन्नः। तदा तच्छब्दरहितादिति स्यात्; ततश्च विशेषान्तरहेतुतयाऽन्वेष्टव्यम् तच्चानुपलम्भहतम्। तत्पुरुषत्वे नञस्तत्पदेन शब्दपदेन वा समानस्स्यात्। तत्र प्रथमे अतः इत्यपेक्षया प्रकृतात्परमात्मनोऽन्यत्प्रधानं जीवो वा यदतच्छब्दार्थः तथा प्रधानपुरुषवाचिशब्दादित्युक्तं स्यात् ततश्चासिद्धिः प्रतिज्ञातार्थविरोधश्च स्यात्। अतःप्रधानादिव्यतिरिक्तः परमात्मा चेत् तद्वाचिशब्दादित्युक्ते 'स्वशब्दात्' इत्यनधिकार्थत्वं स्यात्। तथा च सति नानुमानमत एव प्राणभृच्च इत्यार्जवेन शक्ये सूत्रप्रणयने कुटिलोक्तिर्विफला स्यात्। नञस्तच्छब्दपदेन समासपक्षेऽपि तद्वाचिशब्दव्यतिरिक्तशब्दादित्युक्तं स्यात्। तदा तच्छब्दः प्रधानजीवपरश्चे-

## गूढार्थसङ्ग्रहः

इयं च श्रुतिः कठोपनिषद्यपि वर्तते । एवं बृहदारण्यकेऽपि कठे ' शतचैका च ' इति श्रुतिः या वर्तते सैव दहर विद्यायामपि उपलभ्यते । मुक्तिरूपफलस्य उपसपत्तिवाक्यविवक्षितस्य सूत्रकारेण निर्धारणेन ' हार्दानुगृहीतश्शताधिकया ' इत्युक्तश्रुत्यर्थस्यैव च प्रतिपादनेन उपसंपत्तिः तादृशश्रुत्युक्तगमनानन्तरकालिकीयेवेति निर्णयः सभवति । एवं च तादृश्यु पसपत्तिरेव ' परात्परं पुरुषमुपैति ' इत्यत्र विवक्षितेत्यभिप्रेत्य 'मुक्तोपसृप्य व्यपदेशाच्च' इति सूत्रम् । तदनेन सूत्रद्वयेन मुक्तिहेतुत्वं मुक्तप्राप्यत्वं जीवेऽसभावितमिति प्रतिपादित भवति । ' तत्वौपनिषद पुरुष, विज्ञानमानन्द ब्रह्म रातिर्दातु' परायण तिष्ठमानस्य तद्विदः ' इत्यत्रैकेनैव परायणशब्देन कर्मविद्याफलहेतुत्वस्य प्रतिपादनेन कर्मफलहेतुत्व यथा प्रीति द्वारक तद्वत् विद्याफलहेतुत्वमपीत्यर्थः व्यक्तः ॥

तत्र ' परायणम् ' इत्यनेन ब्रह्मप्राप्तिहेतुत्वस्य परमात्मनि प्रतिपादनेन विद्याया अपि प्रीतिद्वारा तद्धेतु त्वमभिप्रेतम् कर्मक्षयोत्तर ब्रह्मप्राप्तिः सद्विद्यायामेतदधिकरणविवक्षितविद्याया च स्फुटा । उपनिषदि पुरुषशब्दः कर्मदाहकपरः । ब्रह्मशब्दः बृहयतीति व्युत्पत्त्या ब्रह्मप्राप्तिहेतुपरः, एतदुभयहेतुत्व परमात्मनः विद्याजन्यप्रीतिद्वारकमेव । इत्यमर्थविवक्षाया औपनिषदत्वमपि पुरुषस्य सङ्गत भवति । ' उपनिषद भो ब्रूहि उक्तातउपनिषत् ब्राह्मीं वावत उपनिषदमब्रूम ' इति तलवकारोपनिषदि श्रूयते । अत्र ' षद्लृ विशरण ' इति धात्वर्थविद्याविशरणहेतु व ब्रह्मविद्याया विवक्षितमिति वाचस्पतिना भामत्यामुक्तम् । प्रागुदाहृतश्रुतिषु कर्मक्षयस्य प्रतिपादनेन कर्मविशरणहेतुत्व पुरुषशब्दार्थहेतुभूत विवक्षितामित्येव युक्तम् । एव तत्रैवोपनिषदि ' उपनिषद भो ब्रूहि ' इत्याद्युत्तर ' यो वा एतामेव वेदापहत्य पाप्मानम् ' इत्यत्र पापक्षयस्याभिधानेन उपनिषच्छब्दे पापक्षयहेतुत्व प्रतिपादितम् । एव 'आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम् 'इति पूर्वश्रुतौ विद्याया ब्रह्मप्राप्तिहेतु वप्रतिपादनेन ' ब्राह्मीं वावत उपनिषद अब्रूम ' इत्यत्र ब्रह्मविषयिणी ब्रह्मप्रापिका च उपनिषदमित्येवार्थो विवक्षित इति । ' षदलृ विशरणगत्यवसादनेषु ' इति धातोः गत्यर्थकत्वेन उपनिषच्छब्दे ब्रह्मप्राप्तिहेतुभूतत्वमपि विवक्षितमित्यर्थद्वयस्यापि विवक्षणेन ' औपनिषद पुरुषम् ' ' विज्ञानमानन्द ब्रह्म ' इत्यादौ ब्रह्मप्राप्तिहेतु वस्य विद्याया अभ्युक्ततया कर्मक्षयब्रह्मप्राप्त्येतदुभयहेतुब्रह्मविद्याविषयत्वौपनिषद पुरुष । सएव परविद्यासामान्यविषय इत्यर्थः सूत्रद्वयेन सूत्रकृता व्यञ्जितो भवति ॥

एतत्सूत्रद्वयानन्तरं 'नानुमानम्' इति सूत्रनिर्देशेन सूत्रद्वयोक्तहेतुद्वयस्यासम्भवः प्रतिपादित । तत्र प्रथमसूत्रे ' स्वशब्दात् ' इत्युक्तया तद्व्यतिरेकः 'अतच्छब्दात् ' इत्यनेनाभिहितः । अन्तर्याम्यधिकरणेतु ' तद्धर्मव्यपदेशात् ' इति पूर्वसूत्रे सत्वेन व्यतिरेकः ' अतद्धर्माभिलापात् ' इत्यनेनोक्तः । तावताऽपि पूर्वसूत्रोक्तमुक्तोपसृप्यत्वाभावोऽप्यत्र विवक्षितः । तद्धर्मप्रतिपादकशब्दाभावस्याप्यतच्छब्दात् इति सामान्यतो निर्देशेन शब्दशब्दस्य वाक्यपरत्वस्यापि सभ वेन वाक्यप्रतिपाद्यधर्मविवक्षा सभवतीति पूर्वसूत्रोक्त हेतुव्यतिरेकोऽपि प्रतिपादितः ॥

' नानुमानम् ' इति पूर्वसूत्रेण लिङ्गेन जीवो नात्र विवक्षित इत्युक्तम् । ' भेदव्यपदेशात् ' इत्यत्रतु जीवभिन्नस्यैव ' यस्मिन्द्यौः ' इति श्रुतिखण्डानन्तरखण्डे हेतुत्वमुक्तम् इति तेन जीवस्य नात्र विवक्षेत्युच्यते । अत्र ' भेदव्यपदेशात् ' इत्युक्तया भेदत्वेन भेदबोधकशब्दस्य सत्वे सएव सूत्रकृत्तात्पर्यविषय इति ज्ञातृज्ञेयभावेन ' तमेवैक जानथ ' इत्यत्र भेदव्यपदेशः विवक्षित इति परोक्तार्थो न युक्त । सर्वत्रप्रसिद्धधिकरणे ' कर्मकर्तृव्यपदेशात् ' इत्यनन्तर'भेदव्यपदेशात् ' इति विन्यासेन कर्मकर्तृव्यपदेशाभिन्नभेदव्यपदेशस्य प्रतिपादनेन तत्र शाण्डिल्यविद्यायां भेदत्वेन भेदबोधक शब्दाभावेन षष्ठ्या भेद उपपादितः । यत्रतु विद्यायां सर्वथा भेदव्यपदेशः इत्थ नैव दृश्यते, तत्र

## गूढार्थसङ्ग्रहः

कर्मकर्तृभावनिबन्धनभेदव्यपदेशः विवक्षित इति स्यान्नाम । नचात्र तथा वर्तते । एतेन शाण्डिल्यविद्या सगुणविद्या इव निर्गुणविद्येति कल्पनाऽपि सूत्रकाराणामता । अत्र 'जुष्टं यदा पश्यति' इति श्रुत्यनुसारेण 'तमेवैकं जानथ' इत्यत्र सामान्यतः ज्ञानमात्रोक्तावप्येतदुत्तरम् 'ओमित्येवा मानं ध्यायथ' इति तद्विशेनेन परिपश्यन्ति धीराः 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति श्रुतिक्रमपर्यालोचनाया ज्ञान ध्यानरूप तत्परिणामसमाधिरपि अपरोक्षज्ञानरूपा तस्य कर्मक्षयफलम् इत्युक्तावपि 'भिद्यते हृदयग्रन्थिः' इति वाक्यमात्र मनसि निधाय अविद्यानिवृत्तिरेव फलमिति मण्डनसुरेश्वरादयो वदन्ति । तच्च दृष्टद्वारक इति च । तन्मते अविद्यानिवृत्तः चरमवृत्तिरूपत्वेन साध्यसाधनभावस्यानङ्गीकारात् श्रुतिस्वारस्य दुर्लभम् ॥

कर्मक्षयसहभाविन 'तस्मिन्दृष्टे' इत्युक्तया दर्शनस्य कर्मक्षय एव फलमिति स्फुटम् । तेन विद्यायाः प्रायश्चित्तरूपत्वं दर्शितं भवति । 'भेदव्यपदेशात्' इति सूत्रे 'जुष्टं यदा पश्यत्यन्यमीशम्' इति श्रुतेर्विवक्षितत्वेन अविद्याग्रहेतुकेशत्वविशिष्टस्य अनवधिकमहिमवतः ज्ञानस्य प्रीतिद्वारकशोकनिवृत्तिः प्रतिपाद्यते । एतेन अदृष्टद्वारकं फल प्रदर्शितम् कर्मक्षयः पूर्वम् तन्निमित्तशोकक्षयः अत्र इत्थमेव श्रुतितात्पर्यस्य 'तरति शोकं तरति पाप्मानम्' इति मुण्डकोपसंहारे प्रतिपादनेन 'गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति' इत्यत्र 'भिद्यते हृदयग्रन्थिः' इति श्रुतौ सर्वसाधारणत्वेनैव ग्रन्थिर्विवक्षितेति वर्णनेन 'ब्रह्मैव भवति' इत्यत्र 'एव'शब्दः इवार्थकः । 'परमसाम्यमुपैति' इत्युक्तसाम्यविवक्षितमिति सूचनेन च निर्णीतं भवति । भावप्रकाशे तृतीयसम्पुटे (११२) पुटादावयमर्थो विस्तृतः ॥

'प्रकरणात्' प्रथमसूत्रद्वये उपक्रमोपसंहारयोः 'अथ परा यया तदक्षरमधिगम्यते' परात्परं पुरुषमुपैति दिव्यम् ... पश्यत्यन्यमीश—वीतशोकः' इति श्रुत्युक्तार्थस्य च 'तरति शोकं तरति पाप्मानम्' इत्युपसं... उपक्रमप्रभृति उपसंहारपर्यन्त परमात्मप्रकरणमिति निर्धारितम् । मध्ये नाडीसम्बन्धबहु ... अवान्तरप्रकरणेन तत्र जीवविवक्षा शङ्का । तत्रैव खण्डे परमात्मासाधारणधर्मशब्दयोस्सत्वेन तदनन्तरखण्डे जीवभिन्नेशज्ञानस्य मुक्तिहेतुत्वप्रतिपादनेन 'तमेवैकं जानथ' इत्यत्र पूर्वपक्षसमतजीवज्ञानं जीवभिन्नेशज्ञानमेव विवक्षितमिति निर्णयेन अवान्तरप्रकरण नास्तीति निर्धारितम् ॥

'स्थित्यदनाभ्यां च' । स्थित्यदनाभ्यां च इति सूत्रस्यान्ते विन्यासेन 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इति जीवपरमात्मानावेव विवक्षिताविति निर्णीतम् । अत्र 'अदृश्यत्वादिगुणको धर्मोक्तेः' इति मुण्डकोपनिषदर्थनिरूपणमुपक्रम्य 'विशेषणभेदव्यपदेशाभ्यां च नेतरौ' इत्यत्र भेदव्यपदेशो यदुक्तः तस्यैव भेदव्यपदेशस्य 'भेदव्यपदेशात्' इति सूत्रे अभिधानेन मुण्डकोपनिषदि जीवभिन्नपरमात्मैव महाप्रकरणे विवक्षितः अवान्तरप्रकरणं नास्त्येवेति निर्णयं कृत्वा 'स्थित्यदनाभ्यां च' इतिसूत्रे कर्मवश्यत्वतदभावयोरुभयोः प्रतिपादनेन जीवभेदः परमात्मनिसाधितः एव मुक्तिपर्यन्तमाविद्यको भेदइति भ्रमनिरासाय 'मुक्तोपसृप्य व्यपदेशाच्च' इति सूत्रेण परमते मुक्तप्राप्यत्वायोगेन प्राप्यत्वप्राप्तृत्वरूपमुक्तिकालिकधर्मद्वयेन मुक्तौ जीवपरभेदः तात्त्विकइति समर्थनेन पराविद्यासामान्य जीवभिन्नसगुणपरब्रह्मविषयकमिति सूत्रकृदाशयः स्फुटं निर्मत्सराणाम् ॥

इति द्युभ्वाद्यधिकरणं समाप्तम्

श्रीभाष्यम्

यथाऽस्मिन्प्रकरणे प्रतिपादकशब्दाभावात्प्रधानं न प्रतिपाद्यम् ; एवं प्राणभृदपीत्यर्थः अनुमीयत इत्यनुमानं परोक्तं प्रधानमुच्यते, अनुमानप्रमितत्वादानुमानमिति वा ; अतच्छब्दात् तद्वाचिशब्दाभावादित्यर्थः । 'अर्थाभावे यदव्ययम्' इत्यव्ययीभावः ॥

इतश्चायं न प्रत्यगात्मा—

## सू—४ भेदव्यपदेशात् (१.३.४)

'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' [श्वे.४.७,मु.३.१.२] इत्यादिभिर्जीवाद्भिन्नलक्षणत्वेनायं व्यपदिश्यते । अनीशया भोग्यभूतया प्रकृत्या मुह्यमानश्शोचति जीवः ; अयं यदा स्वस्मादन्यं सर्वस्येशं प्रीयमाणम् अस्य ईश्वरस्य महिमानं च निखिलजगन्नियमनरूपं पश्यति तदा वीतशोको भवति ॥

श्रुतप्रकाशिका

तद्वाचिशब्दादित्युक्तं भवति तत् 'स्वशब्दात्' इत्यनधिकार्थं तच्छब्दः परमात्मपरश्चेत् तद्वाचिशब्दव्यतिरिक्तादिर्हेतुः प्रतिज्ञातार्थविरुद्धस्स्यात् । अतः पारिशेष्यादर्थाभावेऽव्ययीभाव इति ॥

'इतश्चायं नप्रत्यगात्मेति । प्राणभृत्प्रतिषेधकसूत्रानन्तर्यात्तदनन्तरसूत्रस्यापि प्राणभृत्प्रतिषेधपरत्वाच्च इत्यर्थः अयंशब्दो द्युभ्वाद्यायतनात्मविषयः मुक्तोपसृप्यसूत्रविषयवाक्ये 'पश्यते रुक्मवर्णम्' इत्युक्तं 'जुष्टं यदापश्यति इति तत्तुल्यार्थतया बुद्धिस्थवाक्यान्तरप्रतिपन्न हेतुमाह—

## सू—४ भेदव्यपदेशात् (१.३.४)

'समाने वृक्षे' इति मन्त्रे अस्य शब्दार्थो भेदव्यपदेशशब्देन । अथास्य शब्दस्य द्युभ्वाद्यायतनविषयत्वं कथमिति शङ्कायां मन्त्रं व्याचष्टे अनीशयेति । स्त्रीलिङ्गसामर्थ्यात् प्रकृतेर्विशेष्यत्वमुक्तम् । अन्य शब्दसामर्थ्यलब्ध प्रतियोगिनं निर्दिशति स्वस्मादिति । ईशशब्दसामर्थ्यप्राप्तमीशितव्य मानान्तरानुरोधेनाह— सर्वस्येति । जुष्टं शब्दं व्याचष्टे प्रियमाणइति । आदिकर्मणिक्त इतिभावः । समुच्चेतव्यसामर्थ्यप्राप्तचशब्द इत्यभिप्रायेणाह—महिमानं चेति । इतिशब्दार्थमाह—निखिलजगन्नियमनरूपमिति । इतिशब्दो बुद्धिस्थप्रकारपरः ईशशब्दश्रवणान्नियमनरूपप्रकारो बुद्धिस्थ इति भावः । यत्तदोर्नित्यसंबन्धादाह—तदेति । इतिशब्दः कालसम्बन्धरूपप्रकारवाची अतस्तदर्थस्तदाशब्दनिर्देशो वा स्यात् । द्रष्टृत्वसमानाधिकरण मुह्यमानत्वादिक दृश्यत्वसमानाधिकरणं जुष्टत्वादिकं च न व्यपदिशन्तीय श्रुतिः 'तमेवैकं जानथ' इति ज्ञेयतया निर्दिष्ट द्युभ्वाद्यायतनमात्मानमन्यशब्दवाच्यत्वेन प्रत्यभिज्ञापयन्ती तस्य जीवाद्भेदं धारयतीति वाक्यार्थः ॥

द्वितीयचतुर्थसूत्रविषयाभ्यां 'यदा पश्य पश्यते' 'जुष्टं यदा पश्यति' इति वाक्याभ्यामदृश्यत्वादिगुणक विषयस्य 'यद्भूतयोनिं परिपश्यन्ति' इति वाक्यस्य समानार्थत्वाद्बुद्धिप्रकरणमेव हेतु स्थितयद्वाभ्यां पूर्वमाह—

श्रीभाष्यम्

## सू—५ प्रकरणात् (१.३.५)

प्रकरणं चेदं परस्य ब्रह्मण इति 'अदृश्यत्वादिगुणको धर्मोक्तेः' इत्यत्रैव प्रदर्शितम्। नाडीसम्बन्धबहुधाजायमानत्वमनः प्राणाधारत्वैश्च प्रकरणविच्छेदाशङ्कामात्रमत्र पर्यहार्षम्

## सू—६ स्थित्यदनाभ्यां च (१.३.६)

'द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्य पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' (श्वे.४.६,मु.३.१.१) इत्येकस्य कर्मफलादनम्, अन्यस्यच कर्मफलमनश्नत एव दीप्यमानतया शरीरान्तस्थितिमात्रं प्रतिपाद्यते। तत्र कर्मफलमनश्नन्दीप्यमान एव सर्वज्ञोऽमृतसेतुस्सर्वात्मा द्युभ्वाद्यायतनं भवितुमर्हति, न पुनः कर्मफलमदन् प्रत्यगात्मा। अतो द्युभ्वाद्यायतनं परात्मेति सिद्धम् ॥

द्युभ्वाद्यधिकरणं समाप्तम्

श्रुतप्रकाशिका

## सू—५ प्रकरणात् (१.३.५)

भाष्ये अस्य सूत्रस्य साध्यनिर्देशाभावः प्रकरणाख्यस्य हेतोः प्राणभृत्प्रतिक्षेपे परमात्मसाधने च सामर्थ्यात् पूर्वत्रोत्तरत्रान्वयो भविष्यतीत्यभिप्रायनिबन्धनः उत्तरसूत्रव्याख्याने ह्युभयमपि साध्यत्वेन निर्दिश्यते अदृश्यत्वादि इत्यस्मिन्नधिकरणे 'विशेषणभेदव्यपदेशाभ्यां च नेतरौ' इति सूत्रव्याख्यानावसरे तथाहीत्यादिनोपक्षिप्तमित्यन्तेन भाष्येण प्रकरणस्य परब्रह्मपरत्वं प्रतिपादितमित्यर्थः. पूर्वमेवास्य प्रकरणस्य परमात्मपरत्वं साधितंचेत् किमेतदधिकरणारम्भेणेत्यत्राह नाडीसंबन्धेति। प्रकरणस्य लिङ्गेन बाधः परिहृत इत्यर्थः, नाड्याधारत्व तस्यापि संभवतीत्यादिना भाष्येणास्याधिकरणस्य लिङ्गबाधपरिहारपरत्वमिह दर्शितम् ॥ अनुक्तं प्रधानभूतं हेतुमाह—

## सू—६ स्थित्यदनाभ्यां च (१.३.६)

'अल्पाच्तरम' इति स्थितिशब्दस्य पूर्वनिपातः 'अभ्यर्हितं पूर्वं प्रयोक्तव्यम्' इति वा, अभ्यर्हितत्वं परमात्मप्रत्यभिज्ञानेन प्रकरणाविच्छेदहेतुत्वात् स्थितेः भाष्ये श्रुतिक्रमेण व्याख्यातम्, नपुनस्सूत्रक्रमेण अस्मिन्मन्त्रे जीवस्यापि प्रस्तुतत्वात् 'यस्मिन्द्यौः' इति मन्त्रोऽपि तत्प्रतिपादकस्स्यात्, अत्रादनशब्दवाच्यभोगोपकरणमनःप्राणसम्बन्धदर्शनादित्यत्राह—तत्र कर्मफलमिति। सर्वज्ञोऽमृतसेतुरित्यादिविशेषणानि प्राकरणिकतयोक्तानि। उभयोःप्रस्तुतत्वेऽपि सार्वज्ञ्यादिसमानाश्रयत्वात् स्वयोग्यत्वान्मनःप्राणसम्बन्धादेः परमात्मन्यमुख्यत्वाभावाच्च द्युभ्वाद्यायतनत्वं परमात्मधर्म इत्यर्थः। जीवान्वययोग्यत्वमाह—नपुनरिति। कर्मफलमनश्नन्निति, कर्मफलमदन्निति चशाब्देऽनुवादः। (शोचन्

## गूढार्थसङ्ग्रहः

इयं च श्रुतिः कठोपनिषद्यपि वर्तते। एवं बृहदारण्यकेऽपि कठ 'शतंचैका च' इति श्रुतिः या वर्तते सैव दहर विद्यायामपि उपलभ्यते। मुक्तिरूपफलस्य उपसंपत्तिवाक्यविवक्षितस्य सूत्रकारेण निर्धारणेन 'हार्दानुगृहीतश्शताधिकया' इत्युक्तश्रुत्यर्थस्यैव च प्रतिपादनेन उपसंपत्तिः तादृशश्रुत्युक्तगमनानन्तरकालिक्येवेति निर्णयः सम्भवति। एवं च तादृश्यु पसंपत्तिरेव 'परात्परं पुरुषमुपैति' इत्यत्र विवक्षितेत्यभिप्रेत्य 'मुक्तोपसृप्य व्यपदेशाच्च' इति सूत्रम्। तदनेन सूत्रद्वयेन मुक्तिहेतुत्वं मुक्तप्राप्यत्वं जीवेऽसम्भावितमिति प्रतिपादितं भवति। 'तत्वौपनिदं पुरुषं, विज्ञानमानन्द ब्रह्म रातिर्दातुः परायण तिष्ठमानस्य तद्विदः' इत्यत्रैकेनैव परायणशब्देन कर्मविद्याफलहेतुत्वस्य प्रतिपादनेन कर्मफलहेतुत्व यथा प्रीति द्वारकं तद्वत् विद्याफलहेतुत्वमपीत्यर्थः व्यक्तः॥

तत्र 'परायणम्' इत्यनेन ब्रह्मप्राप्तिहेतुत्वस्य परमात्मनि प्रतिपादनेन विद्याया अपि प्रीतिद्वारा तद्धेतु त्वमभिप्रेतम् कर्मक्षयोत्तरं ब्रह्मप्राप्तिः सद्विद्यायामेतदधिकरणविवक्षितविद्यायां च स्फुटा। उपनिषदि पुरुषशब्दः कर्मदाहकपरः। ब्रह्मशब्दः बृहयतीति व्युत्पत्त्या ब्रह्मप्राप्तिहेतुपरः, एतदुभयहेतुत्वं परमात्मनः विद्याजन्यप्रीतिद्वारकमेव। इत्थमर्थविवक्षाया औपनिषदत्वमपि पुरुषस्य सङ्गत भवति। 'उपनिषदं भो ब्रूहि उक्तातउपनिषत् ब्राह्मीं वावत उपनिषदमब्रूम' इति तलवकारोपनिषदि श्रूयते। अत्र 'षद्लृ विशरण' इति धात्वर्थविद्याविशरणहेतुत्वं ब्रह्मविद्याया विवक्षितमिति वाचस्पतिना भामत्यामुक्तम्। प्रागुदाहृतश्रुतिषु कर्मक्षयस्य प्रतिपादनेन कर्मविशरणहेतुत्व पुरुषशब्दार्थहेतुभूत विवक्षितमित्येव युक्तम्। एवं तत्रैवोपनिषदि 'उपनिषद भो ब्रूहि' इत्याद्युत्तरं 'योवा एतामेव वेदापहत्य पाप्मानम्' इत्यत्र पापक्षयस्याभिधानेन उपनिषच्छब्दे पापक्षयहेतुत्व प्रतिपादितम्। एवं 'आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम्' इति पूर्वश्रुतौ विद्याया ब्रह्मप्राप्तिहेतुत्वप्रतिपादनेन 'ब्राह्मीं ववात्र उपनिषद अब्रूम' इत्यत्र ब्रह्मविषयिणी ब्रह्मप्रापिका च उपनिषदमित्येवार्थो विवक्षित इति। 'षदलृ विशरणगत्यवसादनेषु' इति धातोः गत्यर्थकत्वेन उपनिषच्छब्दे ब्रह्मप्राप्तिहेतुभूतत्वमपि विवक्षितमित्यर्थद्वयस्यापि विवक्षणेन 'औपनिषद पुरुषम्' 'विज्ञानमानन्द ब्रह्म' इत्यादौ ब्रह्मप्राप्तिहेतु त्वस्य विद्याया अप्युक्ततया कर्मक्षयब्रह्मप्राप्त्येतदुभयहेतुब्रह्मविद्याविषय एवौपनिषदःपुरुषः। स एव परविद्यासामान्यविषयइत्यर्थः सूत्रद्वयेन सूत्रकृता व्यञ्जितो भवति॥

एतत्सूत्रद्वयानन्तरं 'नानुमानम्' इति सूत्रनिर्देशेन सूत्रद्वयोक्तहेतुद्वयस्याशासम्भवः प्रतिपादितः। तत्र प्रथमसूत्रे 'स्वशब्दात्' इत्युक्त्या तद्व्यतिरेकः 'अतच्छब्दात्' इत्यनेनाभिहितः। अन्तर्याम्यधिकरणेतु 'तद्धर्मव्यपदेशात्' इति पूर्वसूत्रे सत्वेन व्यतिरेकः 'अतद्धर्माभिलापात्' इत्यनेनोक्तः। तावताऽपि पूर्वसूत्रोक्तमुक्तोपसृप्यत्वाभावोऽप्यत्र विवक्षितः। तद्धर्मप्रतिपादकशब्दाभावस्याप्यतच्छब्दात् इति सामान्यतो निर्देशेन शब्दशब्दस्य वाक्यपरत्वस्यापि सम्भवेन वाक्यप्रतिपाद्यधर्मविवक्षा संभवतीति पूर्वसूत्रोक्तहेतुव्यतिरेकोऽपि प्रतिपादितः॥

'नानुमानम्' इति पूर्वसूत्रेण लिङ्गेन जीवो नात्र विवक्षित इत्युक्तम्। 'भेदव्यपदेशात्' इत्यनतु जीवभिन्न स्यैव 'यस्मिन्द्यौः' इति श्रुतिखण्डानन्तरखण्डे हेतुत्वमुक्तम् इति तेन जीवस्य नात्र विवक्षेत्युच्यते। अत्र 'भेदव्यप देशात्' इत्युक्त्या भेदत्वेन भेदबोधकशब्दस्य सत्वे स एव सूत्रकृत्तात्पर्यविषय इति ज्ञातृज्ञेयभावेन 'तमेवैकं जानथ' इत्यत्र भेदव्यपदेशः विवक्षित इति परोक्तार्थो न युक्तः। सर्वत्रप्रसिद्ध्यधिकरणे 'कर्मकर्तृव्यपदेशात्' इत्यनन्तरं 'भेद व्यपदेशात्' इति विन्यासेन कर्मकर्तृव्यपदेशाभिन्नभेदव्यपदेशस्य प्रतिपादनेन तत्र शाण्डिल्यविद्यायां भेदत्वेन भेदबोधक ,शब्दाभावेन षष्ठ्या भेद उपपादितः। यत्रतु विद्यायां सर्वथा भेदव्यपदेशः इत्थ नैव दृश्यते, तत्र

## गूढार्थसङ्ग्रहः

कर्मकर्तृभावनिबन्धनभेदव्यपदेशः विवक्षित इति स्यात्नाम । नत्वत्र तथा वर्तते । एतेन शाण्डिल्यविद्या सगुणविद्या इयं निर्गुणविद्येति कल्पनाऽपि सूत्रकाराणामता । अत्र 'जुष्टं यदा पश्यति' इति श्रुत्यनुसारेण 'तमेवैकं जानथ' इत्यत्र सामान्यतः ज्ञानमात्रोक्तावप्येतदुत्तरम् 'ओमित्येवात्मानं ध्यायथ' इति तद्विशनेन परिपश्यन्ति धीराः 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति श्रुतिक्रमपर्यालोचनाया ज्ञानं ध्यानरूपं तत्परिणामसमाधिरपि अपरोक्षज्ञानरूपा तस्य कर्मक्षयःफलम् इत्युक्तावपि 'भिद्यते हृदयग्रन्थिः' इति वाक्यमात्रं मनसि निधाय अविद्यानिवृत्तिरेव फलमिति मण्डनसुरेश्वरादयो वदन्ति । तच्च दृष्टद्वारकं इति च । तन्मते अविद्यानिवृत्तेः चरमवृत्तिरूपत्वेन साध्यसाधनभावस्यानङ्गीकारात् श्रुतिस्वारस्यं दुर्लभम् ॥

कर्मक्षयसहभावेन 'तस्मिन्दृष्टे' इत्युक्त्या दर्शनस्य कर्मक्षय एव फलमिति स्फुटम् । तेन विद्यायाः प्रायश्चित्तत्वं दर्शितं भवति । 'भेदव्यपदेशात्' इति सूत्रे 'जुष्टंयदा पश्यत्यन्यमीशम्' इति श्रुतेर्विवक्षितत्वेन अविद्याद्यहेतुक्लेशाविशिष्टस्य अनवधिकमहिमवतः ज्ञानस्य प्रीतिद्वारकशोकनिवृत्तिं प्रतिपाद्यते । एतेन अदृष्टद्वारकं फलं प्रदर्शितम् कर्मक्षयः पूर्वम् तन्निमित्तशोकक्षय. अत्र इत्थमेव श्रुतितात्पर्यस्य 'तरति शोकं तरति पाप्मानम्' इति मुण्डकोपसंहारे प्रतिपादनेन 'गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति' इत्यत्र 'भिद्यते हृदयग्रन्थि.' इति श्रुतौ सर्वसाधारणरूपेणैव ग्रन्थिर्विवक्षितेति वर्णनेन 'ब्रह्मैव भवति' इत्यत्र 'एव'शब्दः इवार्थकः । 'परमसाम्यमुपैति' इत्युक्तसाम्येन विवक्षितमिति सूचनेन च निर्णीतं भवति । भावप्रकाशे तृतीयसम्पुटे (११३) पुटादावयमर्थो विस्तृतः ॥

'प्रकरणात्' प्रथमसूत्रद्वये उपक्रमोपसंहारयोः 'अथ परा यया तदक्षरमधिगम्यते' परात्परं पुरुषमुपैतिदिव्यम् इत्यर्थस्य 'जुष्टं यदा पश्यत्यन्यमीश—वीतशोकः' इति श्रुत्युक्तार्थस्य च 'तरति शोकं तरति पाप्मानम्' इत्युपसंहारेऽपि प्रतिपादनेनोपक्रमप्रभृति उपसंहारपर्यन्तं परमात्मप्रकरणमिति निर्धारितम् । मध्ये नाडीसम्बन्धबहुधाजायमानत्वयोरभिधानेन अवान्तरप्रकरणेन तत्र जीवविवक्षा शङ्का । तत्रैव खण्डे परमात्मासाधारणधर्मशब्दयोरसत्वेन तदनन्तरखण्डे जीवभिन्नेशज्ञानस्य मुक्तिहेतुत्वप्रतिपादनेन 'तमेवैकं जानथ' इत्यत्र पूर्वपक्षसमतजीवज्ञानं जीवभिन्नेशज्ञानमेव विवक्षितमिति निर्णयेन अवान्तरप्रकरणं नास्तीति निर्धारितम् ॥

'स्थित्यदनाभ्यां च'। स्थित्यदनाभ्यां च इति सूत्रस्यान्ते विन्यासेन 'गुहां प्रविष्टावात्मानौहि तद्दर्शनात्' इति जीवपरमात्मानावेव विवक्षिताविति निर्णीतम् । अत्र 'अदृश्यत्वादिगुणको धर्मोक्तेः' इति मुण्डकोपनिषदर्थनिरूपणमुपक्रम्य 'विशेषणभेदव्यपदेशाभ्यां च नेतरौ' इत्यत्र भेदव्यपदेशो यदुक्तः तस्यैव भेदव्यपदेशस्य 'भेदव्यपदेशात्' इति सूत्रे अभिधानेन मुण्डकोपनिषदि जीवभिन्नपरमात्मैव महाप्रकरणे विवक्षित. अवान्तरप्रकरणं नास्त्येवेति निर्णयं कृत्वा 'स्थित्यदनाभ्यां च' इतिसूत्रे कर्मवश्यत्वतदभावयोरुभयोः प्रतिपादनेन जीवभेदः परमात्मनिसाधितः, एव मुक्तिपर्यन्तमाविद्यको भेदइति भ्रमनिरासाय 'मुक्तोपसृप्य व्यपदेशाच्च' इति सूत्रेण परमते मुक्तप्राप्यत्वायोगेन प्राप्यत्वप्राप्तृत्वरूपमुक्तिकालिकधर्मद्वयेन मुक्तौ जीवपरभेदः तात्विकइति समर्थनेन पराविद्यासामान्यं जीवभिन्नसगुणपरब्रह्मविषयकमिति सूत्रहृदाशयः स्फुटं निर्मत्सराणाम् ॥

इति द्युभ्वाद्यधिकरणं समाप्तम्

श्रुतप्रकाशिका

इत्यनेन 'भेदव्यपदेशात्' इति सौत्रहेतोरिदान्वयोऽभिप्रेतः 'शोचति मुह्यमानम्' इतिहि तद्विषयवाक्यम्। तदपि प्रत्यगात्मपरत्वप्रतिषेधद्वारा परमात्मपरत्वसाधकम्। व्यतिरेकस्यान्वयशेषत्वादिति भावः। अस्मिन्सूत्रे परमात्मपरत्वं श्रुत्या साध्यं प्रत्यगात्मपरत्वप्रतिषेधपरत्वाच्च इति नवाक्यभेदः 'अभिचाकशीति' इति परस्य दीप्यमानत्वेहि मन्त्रस्य तात्पर्यमवगम्यते जीवस्यानुत्व तदुपयोगितया प्रतीयते ॥

ननु कथं 'द्वासुपर्णा' इति मन्त्रस्य जीवपरमात्मभेदपरत्वं, अन्तःकरणजीवपरोह्ययं मन्त्रः पैङ्गिरहस्यब्राह्मणेनास्य मन्त्रस्य तथा व्याख्यातत्वात्। तथाहि 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इतिसत्त्वं 'अनश्नन्नन्यो अभिचाकशीति' इति अनश्नन्नन्यो अभिपश्यतिज्ञः तावेतौ सत्त्वक्षेत्रज्ञौ इत्यत्र 'स्वाद्वत्ति' इत्येतदन्तस्य वाक्यस्य सत्त्वपरत्वं 'अनश्नन्' इत्यादेः क्षेत्रज्ञपरत्वं च प्रतीयते। नच सत्त्वक्षेत्रज्ञशब्दौ जीवपरमात्मपराविति वाच्यम्; तयोश्शब्दयोरन्तःकरणजीवपरतया प्रसिद्धत्वात् 'तदेतत्सत्त्वं येन स्वप्नं पश्यति अथ योऽयं शारीर उपद्रष्टा सक्षेत्रज्ञः तावेतौ सत्त्वक्षेत्रज्ञौ' इति सत्त्वक्षेत्रज्ञशब्दयोरन्तःकरणजीवशब्दाभ्यां पैङ्गिश्रुत्यैव व्याख्यातत्वाच्च, येन पश्यतीति करणत्वप्रतीतेस्सत्त्वमन्तःकरणं स्वप्नद्रष्टृत्वाच्च क्षेत्रज्ञोहि जीवः अतोऽयं मन्त्रोऽन्तःकरणजीवपर इति। उच्यते—नतावज्जीवपरमात्मपरत्वमस्य मन्त्रस्यापनेतुं शक्यते, अनेनतु मन्त्रेण तुल्यार्थतया प्रत्यभिज्ञायमाने 'समाने वृक्षे पुरुषो निमग्नः' इत्यनन्तरे मन्त्रे जीवपरयोः प्रतिपन्नत्वादस्य मन्त्रस्य तदैकार्थ्याच्च 'समानं वृक्षं परिषस्वजाते' 'समानेवृक्षे पुरुषो निमग्नः' इति तयोरैकार्थ्यंहि प्रतीयते। 'समानेवृक्षे' इति मन्त्रे च पुरुषो जीवः अन्तःकरणस्य पुरुषशब्दवाच्यत्वाभावात् 'शोचति मुह्यमानः' 'पश्यति वीतशोकः' इति पदानामस्वारस्यप्रसङ्गाच्च, अन्यश्च परमात्मा ईशशब्दोक्तत्वात्, स्वविषयज्ञानेन वीतशोकत्वहेतुत्वाच्च ॥

नकेवलमनन्तरमन्त्रैकार्थ्यात् 'द्वासुपर्णा' इति मन्त्रस्य जीवपरमात्मपरत्वं किंतु 'स्वाद्वत्ति अनश्नन्नन्य' इति भोक्तृत्वाभोक्तृत्वश्रवणाच्च तदवसीयते, चक्षुश्श्रोत्रादीनां द्रष्टृत्वश्रोतृत्वादिवदन्तःकरणस्यापि करणत्वादेव भोक्तृत्वं हि नसंभवति, जीवस्य च वृक्षशब्दोक्तदेहपरिष्वङ्गदशायामेवानश्नत्वमपि नोपपद्यते। तर्हि पैङ्गिश्रुतेः कोऽर्थः, उच्यते—सत्त्वं बद्धजीवः 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्रीतु जन्तुषु' इति नामानुशासनाज्जन्तुपरत्वावगतेः जन्तुश्च चेतनः 'प्राणीतु चेतनो जन्मी जन्तुजन्यशरीरिणः' इति नामपाठात् 'वन्यान्विनेष्यन्निव दुष्टसत्त्वान्' इति प्रयोगात्

नतदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः। सत्त्वं प्रकृतिजैर्मुक्तं यदेभिस्स्यात्त्रिभिर्गुणैः ॥

इति दर्शनाच्च। क्षेत्रज्ञशब्दश्चात्र परमात्मपरः अर्थान्तरप्रसिद्धाकाशप्राणादिशब्दवदर्थानुपपत्त्या परमात्मपरत्वोपपत्तेः। 'विष्णोर्नामसहस्रं मे' इत्युपक्रम्य 'क्षेत्रज्ञोऽक्षरएव च' इति प्रयोगात् क्षेत्रं जानातीत्यवयवार्थस्य तस्मिन्नेव पुष्कलत्वाच्च। मोक्षधर्मे—

ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा। प्रविशन्ति द्विजश्रेष्ठ क्षेत्रज्ञं निर्गुणात्मकम् ॥
सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वतः। इति। तत्रैव विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः
एकश्चरति क्षेत्रेषु स्वैरचारी यथासुखम्। क्षेत्राणिच शरीराणि ज्ञानानि च शुभाशुभे ॥
तानि वेत्ति सयोगात्मा ततः क्षेत्रज्ञ उच्यते। इति प्रयोगात्, तत्रैव कपिलासुरिसंवादे 'ज्ञानानामासुरे क्षेत्रे क्षेत्रज्ञो द्रष्टा शुचिरुपेक्षकः ज्ञातृको बुध्यमाना प्रतिबुद्धयोः परममृतं विदित्वा निरवयवमनामयमसाद्दुःखाद्विमुच्यत एव' इति बुध्यमाना प्रतिबुद्धशब्दाभिहित[illegible]यो: परस्य क्षेत्रज्ञशब्देनाभिधानात्, तत्रैव

## श्रुतप्रकाशिका

पञ्चविंशतितत्त्वानि वर्गशब्देनोक्त्वा 'एतस्माद्वर्गादपवृत्तोऽपवर्गदः क्षेत्रज्ञश्शुचिरपेक्षको बुद्ध्यमानाप्रतिबुद्धयोः परस्तात्' इति तत्रैव 'अन्यदुदकमन्यत्पुष्करपर्णं तथाऽन्यत् क्षेत्रमन्यः पुरुषः पञ्चविंशकः अन्यश्चास्मात् क्षेत्रज्ञः' इति, पुनश्च तत्रैव 'एवमासुरे अन्यद्द्रव्यमन्यः पुरुषः पञ्चविंशतितत्त्वमन्योऽस्मात्क्षेत्रज्ञः' इति, पञ्चविंशाधरस्मिन् क्षेत्रज्ञशब्दप्रयोगात्। सनत्कुमारनारदसंवादे च—

पश्य पश्यति पश्यन्तमपश्यन्तं च पश्यति। पश्यन्तं पश्यपश्यत्वात् पश्यापश्ये न पश्यति ॥

इति श्लोकमुक्त्वा 'प्रकृतिं क्षेत्रं क्षेत्रज्ञंचापरः क्षेत्रज्ञष्षड्विंशकोऽपपश्यति नतु पञ्चविंशकं क्षेत्रज्ञश्च प्रकृतिर्वा परक्षेत्रज्ञं पश्यति' इति प्रयोगाच्च, अन्यथा महाशब्दवत् क्षेत्रज्ञस्य जीवपरसाधारणस्य पञ्चविंशतितत्त्वशब्दविशेषितस्य जीवपरमात्मविषयत्वदर्शनाच्च,

योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते। यः करोतितु कर्माणि स भूतात्मेति चोच्यते ॥

इति मानवप्रयोगाच्च 'येन स्वप्नं पश्यति' इत्यत्र येनेतीत्थंभावे तृतीया, येन विशिष्टः परमात्मा स्वप्नं पश्यतीत्युच्यते, ततश्च 'काठिन्यवान्यो बिभर्ति' इति पृथिवीद्वारा काठिन्यवत् स्वप्नद्रष्टृत्वं जीवद्वारा परमात्मविशेषणं भवतीति न विरोधः। शारीरशब्दश्च 'तस्यैष एव शारीर आत्मा' इतिवदेव स्वव्यतिरिक्तसमस्तचिदचिच्छरीरके परमात्मन्युपपद्यते। 'उपद्रष्टा' इति निरुपाधिकद्रष्टृत्वं च तस्यैवोपपद्यते, एवं शारीर उपद्रष्टेति पदद्वयेन परस्य देहशब्दवाच्यत्वमुपपादितं भवति। अतो 'द्वासुपर्णेति' मन्त्रो जीवपरमात्मपरः अधिकरणार्थमुपसंहरति अतइति ॥

इह केचिदेवं पूर्वपक्षितम्। द्युभ्वाद्यायतनस्य सेतुत्वश्रवणात् सेतोश्च पारवत्त्वेन परस्य च 'अनन्तमपारम्' इत्यपारत्वश्रवणात् द्युभ्वाद्यायतनं प्रधानं वायुर्वा जीवो वा स्यात् एषां धारकत्वयोगादिति। तदयुक्तम्। पारवदर्थोपस्थापकस्य सेतुत्वव्यपदेशस्य पूर्वपक्षहेतोरस्मिन्नधिकरणे परिहृतत्वे सत्युत्तरत्र 'परमतस्सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः' इत्यधिकरणे सेतुत्वव्यपदेशस्य पूर्वपक्षहेतुत्वेनोपन्यासायोगात्। नहि परिहृतस्य हेतोः पुनःपरिहारो न्याय्यः कृतकरत्वापत्तेः। अत्र सेतोः परिच्छिन्नत्वं पूर्वपक्षशङ्काबीजम्, तत्रतु कूलान्तरप्रापकत्वमिति मुखभेदोऽस्तीतिचेन्न। कूलान्तरप्रापकत्वस्यापि कूलावधिकत्वनिबन्धनमिति परिच्छिन्नत्वे परिहृते तस्यापि परिहृतत्वात्। परिहारहेतुसाम्यं च, विधरणार्थत्वमेव ह्युभयत्र परिहारः। अत उत्तरत्र पूर्वपक्षबीजतयोपन्यासान्यथाऽनुपपत्त्या अस्मिन्नधिकरणे सेतुत्वव्यपदेशस्सूत्रकारेण न पूर्वपक्षबीजतया विवक्षितः प्रधानवाय्वादिशङ्का चानुपपन्ना। 'तमेवैकं जानथात्मानम्' इत्यात्मशब्दश्रवणात् 'गौणश्चेन्नात्मशब्दात्' इत्यत्र आत्मशब्दस्य अचिद्व्यावर्तकतोपपादनाच्च अचेतनशङ्कोत्थानासम्भवात्। स्वशब्दस्य 'सदायतनाः सत्प्रतिष्ठाः' इति सद्विद्यावाक्यविषयत्वं चायुक्तम्, अपक्षधर्मत्वात् सद्विद्यावाक्यंहि नात्र श्रूयते। इह तदैकार्थ्यं हेतुतया विवक्षितमितिचेत् तर्हि विगीतस्य हेतुतयोपन्यासो नघटते। द्युपृथिव्याद्यायतनप्रतिपादकवाक्यस्य परमात्मप्रतिपादकवाक्यान्तरैकार्थ्यंहि पूर्वपक्षिणो विमतिपदम्। द्वितीयसूत्रस्य च 'अन्या वाचो विमुञ्चथ' इति श्रवणाद्वाग्विमुक्तेर्ज्ञेयत्वव्यपदेशपरत्वमयुक्तम् 'नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति' इति वाक्यस्थविमुक्तिशब्दार्थस्य उपैतिशब्दार्थस्य च स्वरसतः प्रत्यभिज्ञापकत्वान्मुक्तोपसृप्यव्यपदेशस्य। 'विमुञ्चथ' इति श्रुतस्य वाक्कर्मकस्य मुचिधातोः प्रत्ययपरिणामेन अवाक्कर्मकमुक्तप्रत्यभिज्ञानं ह्यस्वरसम्, उपसृप्यशब्दस्य ज्ञेयवाचित्वञ्च स्वारसिकम्। स्वारसिकार्थानुपपत्त्यभावे अस्वरसार्थौचित्यातिशयाभावेनाऽस्वरसार्थस्वीकारोऽनुपपन्नः, 'प्राणभृच्च' इति सूत्रपृथक्त्वकल्पनं च युक्तम् हेत्वन्तराभावात् उभयव्यावर्तकहेतूपादानवत्त्वेकेन सूत्रेणैवोभयव्युदासदर्शनाच्च। यथा 'विशेषणभेदव्यपदेशाभ्यां च नेतरौ'

## श्रुतप्रकाशिका

' अतएव नदेयताभूतं च ' इति च उपरितनसूत्रोक्तहेतूनां ' नानुमानम् ' इति प्रतिज्ञायामनन्वयात् पृथग्योगकरणमितिचेन्न। नानुमानमित्युपादानस्य दृष्टान्तार्थत्वात् दृष्टान्तार्थत्वाभावेऽपि जीवव्यावर्तकानामुत्तरसूत्रहेतूनां किंपुनर्न्यायेन प्रधानव्यावर्तकत्वाच्च । ' भेदव्यपदेशात् ' इति सूत्रस्य च ' तमेवैकं जानथ ' इति वाक्यविषयत्वादपि ' जुष्टं यदा पश्यत्यन्यमीशम् ' इति वाक्यविषयत्वमुचित व्यपदेशशब्दस्वारस्यात् । कर्मकर्तृभावो हि भेदगमकः, अन्यशब्दश्च भेदाभिधायकः ॥

' द्वासुपर्णा ' इति वाक्यस्य च बुद्धिजीवपरत्वपक्षोऽनुपपन्नः, ' प्राणभृच्च ' इति जीवव्यावृत्तिं प्रतिज्ञाय बुद्धिव्यावृत्त्युपपादनस्यासङ्गतत्वात् । जीवएवोपाधिव्यवच्छेदविरहितः परमात्मा भवतीति नासङ्गतिरितिचेन्न, वृक्षशब्दविवक्षितदेहोपाधिपरिष्वङ्गफलादानकर्तोऽन्यस्य स्थितेर्हेतुतयोपन्यासायोगात् ' अनश्नन् ' इत्यनेन प्रतीयमानस्याप्युपाधिपरिष्वङ्गस्यापारमार्थ्यं विवक्षितमितिचेत् तर्ह्यनेन वाक्येन अपरमार्थोपाध्यन्वयो न प्रतिषिद्धस्स्यात् किंत्वनुमतस्स्यात् । द्युभ्वाद्यायतनं न प्राणभृत् स्थित्यदनाभ्यामित्युक्ते परमार्थतोऽनश्नत्तया स्थितेरपरमार्थतोऽश्नत्वाच्चेत्युक्त भवति, अपरमार्थोपाध्यवच्छिन्नात्मत्वमेवहि स्वन्मते जीवत्व ततश्च जीवव्यावृत्तिं प्रतिज्ञाय जीवत्वाविरुद्धतदुपपादकहेतून्यासो नघटते। उपाधिमिथ्यात्वमेवाधिकरणप्रतिपाद्यमितिचेत् तर्हि स्वशब्दमुक्तोपसृप्यत्वभेदव्यपदेशादिहेतवो नघटन्ते, तेषां मिथ्यात्व साधकत्वाभावात्, भवत्पक्षे विश्वमिथ्यात्वस्य प्रथमाधिकरणसिद्धत्वेन इहोपाधिमिथ्यात्ववर्णनवैयर्थ्याच्च । ' द्वासुपर्णा ' इति मन्त्रार्थस्य च हेतुत्वोक्तिरयुक्ता, अत्रोपाधिमिथ्यात्वाप्रतीतेः । नह्येकवृक्षाधिरूढयोः पक्षिणोर्मिथो विरुद्धाकारयोर्भेदेऽभिहिते वृक्षमिथ्यात्वमुक्त भवति ॥

यदपि कैश्चिदुत्प्रेक्षितम् ' द्युभ्वाद्यायतनम् ' इत्यादिसूत्रद्वयमात्मविषयत्वप्रतिपादक ' नानुमानमतच्छब्दात्' इति प्रधानव्युदासपरम् ' प्राणभृच्च ' इति सूत्र जीवव्यावृत्तिपरम्, अन्यत्सूत्रत्रय मुक्तव्युदासकमिति, तदयुक्तम् । तथाहि आद्यस्य सूत्रद्वयस्य निरसनीयशङ्काऽभावात्तत्प्रणयनवैयर्थ्यस्यात् । नच तृतीयसूत्र प्रधानव्यावृत्तिपरम् मुक्तोपसृप्यतया व्यपदिष्टस्यातएव जीवादपि व्यावृत्तस्य प्रधानत्वशङ्काऽनुदयात् । अत आनुमानोपादान दृष्टान्तार्थं । अतएव पृथग्योगकरणच चानुपपन्नमित्युक्तम् अतस्तृतीयसूत्र व्यतिरेकेण जीवव्यावृत्त्युपपादनपरम् 'तद्विज्ञानेन परिपश्यन्ति धीराः, आनन्दरूपममृतं यद्विभाति ' ' तद्यदात्मविदो विदुः ' इति भेदव्यपदेशेन मुक्तव्यावृत्तिपर चतुर्थसूत्रमित्यप्ययुक्तम्, मुमुक्षुभिः ज्ञातव्यत्व मुक्तव्यावर्तक, नवा । प्रथमे ' तमेवैकं जानथ ' इति वाक्यादेव मुक्तव्यावृत्तिसिद्धेः । ' भेदव्यपदेशात् ' इति वाक्यान्तरविषयसूत्रप्रणयनवैयर्थ्यम्, द्वितीये पुनः वैयर्थ्यं ' तमेवैकं जानथ ' इति वाक्योदितज्ञातृज्ञेयभावस्य ' परिपश्यन्ति ' इत्यादिवाक्योदितद्रष्टृदृश्यभावस्यापि मुक्तव्यावर्तनासामर्थ्यात् अतो यथोक्तएव सूत्राणामर्थः ॥

इति द्युभ्वाद्यधिकरणम्



अथ वेदान्तसारः

## सू=१ द्युभ्वाद्यायतनं स्वशब्दात् (१-३-१)

'यस्मिन्द्यौःपृथिवीचान्तरिक्षम्' (मु.२.२.५) इत्यादौ द्युपृथिव्यादीनायतनम् आधारःपरमपुरुषः। 'तमेवैकं जानथ आत्मानम्' (श्वे.४.७) इत्यात्मशब्दात्। निरुपाधिकात्मत्वंहि परमपुरुषस्यैव। 'अमृतस्यैष सेतुः' (मु.२.२.५) इति तदेव द्रढयति 'बहुधा जायमानः' (२.२.६) इति परत्वं ननिवारयति; 'अजायमानो बहुधा विजायते' (पुरु-षसूक्ते.२१) इति कर्मभिरजायमानस्यैव आश्रितवात्सल्यात् छन्दतो जननं तस्यहि श्रूयते ॥

## सू—२ मुक्तोपसृप्य व्यपदेशाच्च [१.३.२]

'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' (मु.३.१.३) 'तथा विद्वान्नामरूपाद्विमुक्तःपरात्परं पुरुषमुपैति दिव्यम्' (३.२.८) इति च पुण्यपापविनिर्मुक्तानां प्राप्यतया व्यपदेशाद्यायं परः ॥

## सू–३ नानुमानमतच्छब्दात्प्राणभृच्च (१.३.३)

यथा न प्रधानमतच्छब्दात् तथा न प्राणभृदपीत्यर्थः ॥

## सू—४ भेदव्यपदेशात् (१.३.४)

'अनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशम्' (मु.३.१.२) इत्यादिना प्रत्यगात्मनो भेदेन व्यपदेशाच्चायं परः ॥

## सू—५ प्रकरणात् (१.३.५)

'अथ परा यया तदक्षरमधिगम्यते' (मु १.१ ५) इत्यादिपरस्यहीदं प्रकरणम् ॥

## सू—६ स्थित्यदनाभ्यां च (१.३.६)

'तयोरन्यःपिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति' (मु.३.१.१,श्वे.४.६) इति जीवस्य कर्मफलादनमभिधाय अनश्नतो दीप्यमानस्य स्थित्यभिधानाच्चायं परमात्मा ॥

इति वेदान्तसारः

अथ वेदान्तदीपः

सू=१ द्युभ्वाद्यायतनं स्वशब्दात् (१-३-१)

आथर्वणे 'यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः। तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः' (मु.२.२.५) इत्यत्र द्युपृथिव्यादीनामायतनं किं जीवः? उत परमात्मेति संशयः। जीव इति पूर्वः पक्षः, मनःप्रभृतीन्द्रियाधारत्वश्रुतेः, उत्तरत्र नाडीसम्बन्धात् जायमानत्वश्रुतेश्च। राद्धान्तस्तु निरुपाधिकात्मशब्दामृतसेतुत्वयोः परमात्मधर्मयोः श्रवणात् परमात्मैवायम्। सर्वं निरन्तृतया आप्नोतीति ह्यात्मा? अमृतस्य प्रापकतया सेतुश्च स एव नाडीसम्बन्धः बहुधा जायमानत्वञ्च। 'सन्ततं शिराभिस्तु लम्बत्या कोशसन्निभम्' (तै.नारायणोपनिषत्.६.११) 'अजायमानो बहुधा विजायते' (पुरुषसूक्त.२१) इत्यादिषु सर्वसमाश्रयणीयत्वायाजहत्स्वभावस्यैव परमात्मनोऽपि दृश्यत इति। सूत्रार्थस्तु—द्युपृथिव्यादीनामायतनं परमात्मा स्वशब्दात् ॥

## सू—२ मुक्तोपसृप्य व्यपदेशाच्च (१.३.२)

'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' (मु.३.१.३) 'तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' (३.२.८) इति च बन्धान्मुक्तस्य प्राप्यतया व्यपदेशाच्चायं परमात्मा ॥

## सू–३ नानुमानमतच्छब्दात्प्राणभृच्च (१,३.३)

नानुमानम् अनुमानगम्यं प्रधानम् यथा तद्वाचिशब्दाभावात्तदिह न गृह्यते तथा प्राणभृदपीत्यर्थः। अतश्चायं परमात्मा ॥

## सू—४ भेदव्यपदेशात् (१.३.४)

'अनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशम्' (मु.३.१.२,श्वे.४.७) इत्यादिना जीवाद्भेदेन व्यपदेशाच्चायं परमात्मा ॥

## सू–५ प्रकरणात् (१.३.५)

'अथ परा यया तदक्षरमधिगम्यते' (मु.१.१५) इत्यादिना परमात्मन एव प्रकृतत्वात् ॥

## सू—६ स्थित्यदनाभ्यां च (१.३.६)

'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' (मु.३.१.१,श्वे.६.४) इति कर्मफलमनश्नतः परमात्मनो दीप्यमानतया स्थितेः, जीवस्य कर्मपरवशतया तत्फलादनाच्च, परमात्मनो जीवाद्भेदावगमात्। अमृतसेतुः द्युभ्वाद्यायतनं न जीवः। 'अदृश्यत्वादिगुणकः' (शारी.१.२.२२) इत्यनेन परमात्मत्वे स्थापितेऽपि नाडीसम्बन्धबहुधाजायमानत्वलिङ्गात्, याऽवान्तरप्रकरणविच्छेदशङ्का सा निराकृता 'द्युभ्वाद्यायतनम्' इति वैश्वानरस्य त्रैलोक्यशरीरत्वादिना परमात्मत्वनिर्णय इति मध्ये वैश्वानरविद्या निरूपिता ॥

॥ इति वेदान्तदीपे द्युभ्वाद्यधिकरणं समाप्तम् ॥

अथ अधिकरणसारावळी

स्पष्टैर्जीवादिलिङ्गैर्युतमिह हि वचस्साध्यते ब्रह्मनिष्ठं
मध्येऽत्राधिक्रियोक्तिस्त्रिषु किमिति न तत्तत्प्रसङ्गात्तदुक्तेः ।
किञ्चास्यामर्धलोकायतिकनिरसनं प्रस्तुतार्थोपयुक्तं
ब्रह्मोत्कर्षश्च सिद्ध्येद्गलतिदिविपदां कारणैक्यभ्रमश्च ॥

न्यायास्सत्येव साक्षात् परविषयतया सङ्घटन्तेऽत्र पादे
सर्वाधारस्स आत्मा स्वमहिमनिलयस्तत्र तात्पर्यभूमिः ।
तत्सिद्ध्यै शासनाद्यं कथितमिह मिथस्स्यूतमालोचनीयं
सर्वेशत्वं च षष्ठप्रमितनयमितं पश्चिमन्यायरक्ष्यम् ॥

सिद्धं प्रागेव मुण्डोपनिषदि परमं ब्रह्म तद्धर्मभेदै-
र्भेदोक्तं श्चेत्यकाण्डे किमिति पुनरिमां पिष्टपेषं पिनष्टि ।
सत्यं क्षेत्रज्ञधर्मैः षड्भिरुपनता प्रक्रियाभेदशङ्का
प्रत्याप्य प्रत्यभिज्ञामपुनरुदयमुन्मूल्यते शब्दपूर्वैः ॥

यस्मिन्नोतं मनोऽन्यैस्सह करणगणैर्जायते यश्च नाना
नाड्याधारश्च योऽन्तश्चरति सकरणी कर्मभोक्तेति चेन्न ।
विश्वाधारात्मभावादमृतवितरणान्मुक्तसृप्यत्ववादात्
प्रागुक्तप्रक्रियैक्यादनशनसहितात् काशनाद्यान्यसिद्धेः ॥

व्याप्ते तत्राक्षमोतं यदि किमिह ततो जन्मचास्येच्छयोक्तं
ग्राडीचक्रस्य नाभिर्भवति च स परो हार्दरूपेण तिष्ठन् ।
निष्कम्पव्यापिनोऽन्तश्चरणमपि शुभैर्विग्रहैरस्ति लोके
सौवालाम्नातवद्वा चरणमिदमपि स्यादधिष्ठानमात्रम् ॥

॥ इति द्युभ्वाद्यधिकरणं समाप्तम् ॥



## अथ भूमाधिकरणम्

श्रीभाष्यम्

## सू–७ भूमासम्प्रसादादध्युपदेशात् [१.३.७]

इदमामनन्ति छान्दोगा —' यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा। अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम् ' (छां.७.२४.१] इति । अत्रायं भूमशब्दो भावप्रत्ययान्तो व्युत्पाद्यते। तथा हि पृथ्वादिषु बहुशब्दः पठ्यते ततः ' पृथ्वादिभ्य इमनिज्वा ' (अष्टाध्याय्यां.५.१.१२२) इति इमनिच्प्रत्यये कृते ' बहोर्लोपो भूच बहोः ' [६.४.१५८] इति प्रकृतिप्रत्ययोर्विकारे भूमेति भवति। भूमा बहुत्वमित्यर्थः । अत्र चायं बहुशब्दो वैपुल्यवाची न सङ्ख्यावाची ; ' यत्रान्यत्पश्यति तदल्पम् ' (शारी.१.२.२२] इत्यल्पप्रतियोगित्वश्रवणात् । अल्पशब्दनिर्दिष्टधर्मिप्रतियोगिप्रतिपादनपरत्वादेव

## अथ भूमाधिकरणम्

श्रुतप्रकाशिका

## सू—७ भूमासम्प्रसादादध्युपदेशात् (१.३.७]

परमात्मप्रकरणाविच्छेदेन परमात्मपरत्वं साधितम्, तर्हि जीवप्रकरणाविच्छेदेन जीवपरत्वमिति शङ्कोत्थानात् सङ्गतिः । इयं प्रमाणद्वारिकापूर्वं ' ओतं मनस्सहप्राणैश्च सर्वैः ' इति प्राणसंबन्धिनः परमात्मत्वमुक्तम्, अत्र प्राणसम्बन्धिन एव हितायोग्यत्वश्रवणाज्जीवत्वं प्रतीयत इत्यर्थद्वारादसङ्गतिः। विषयमाह—इदमिति। भूमशब्दस्य रूढितोऽवयवशक्त्या वा जीवपरमात्मनोरव्यापकत्वसम्भवेहि प्रत्यगात्मा वा परमात्मा वा भूमशब्दवाच्य इति संशयोदयः, अन्यथा भूमशब्दस्य कोऽर्थं इतिहि वक्तव्यम् अतो विशेषविषयसंशयसंभवप्रदर्शनाय भूमशब्दव्युत्पत्तिप्रकारमनुसरन्विचारविषयसंशयसिद्धिं दर्शयति अत्रायंभूमशब्दइति। भावप्रत्ययान्तत्वमुपपादयति तथाहीति । आकृतिगणत्वव्यावृत्त्यर्थं पठ्यत इत्युक्तम्। बहोरित्यादि । बहुशब्दात् परस्य प्रत्यस्यादेरचो लोपः ' आदेः परस्य ' इति सूत्रवशात् बहुशब्दस्य भूशब्दादेशश्चेत्येव प्रकृतिप्रत्यययोर्विकारः। ' बहव पुरुषा राजश्रुताहो एक एवनु ' ' द्व्येकयोर्द्विवचनैकवचने ' बहुषु बहुवचनम् ' इति सङ्ख्यायामपि प्रयोगो दृश्यते ' अल्पं वा बहु वा यस्य श्रुतस्योपकरोतियत् ' इति वैपुल्येऽपि प्रयोगोऽस्ति, तस्मात्सङ्ख्याव्यावृत्त्यर्थमाह—अत्रचायमिति। कथं वैपुल्यपरत्वमित्यत्राह—यत्रान्यदिति ॥

ननु सङ्ख्यावाचिशब्दप्रतियोगित्वादल्पशब्दोऽपि सङ्ख्यापरस्स्यात्। नैवम्। बहुशब्दस्य सङ्ख्याविपुलत्वयोः प्रयोगदर्शनादल्पशब्दस्य सङ्ख्याया प्रयोगादर्शनाच्चानन्यथासिद्धाल्पशब्दानुगुणार्थो बहुशब्द इति। धर्मिपरत्वमुपपादयति—अल्पेति । धर्मवाचिभूमशब्दप्रतियोगित्वादल्पशब्दोऽपि धर्मपरस्स्यादिति चेन्न, तत्रापि धर्मिवाचिप्रत्ययान्तशब्दान्तराभावात् ' यत्र नान्यत्पश्यति ' इति श्रुतेश्च । नहि धर्ममात्रे ज्ञाते धर्मिस्वरूपं ज्ञातं भवतीति । एवं सिद्धमर्थमाह—

## श्रीभाष्यम्

धर्मिपरश्च निर्धीयते ; न धर्ममात्रपरः । तदेवं भूमेति विपुल इत्यर्थः ; वैपुल्यविशेष्यश्चेहात्मेत्यवगतः ' तरति शोकमात्मवित्' [छां.७.१.३) इति प्रक्रम्य भूमविज्ञानमुपदिश्य 'आत्मैवेदं सर्वम् ' (७.२५.२) इति तस्यैवोपसंहारात् ॥

अत्र संशय्यते किमयं भूमगुणविशिष्टः प्रत्यगात्मा, उत परमात्मा इति । किं युक्तम् ? प्रत्यगात्मेति । कुतः ? ' श्रुतं ह्येवमेव भगवद्दृशेभ्यः तरति शोकमात्मवित् ' (छां.७.१.३) इत्यात्मजिज्ञासयोपसेदुषे नारदाय नामादिप्राणपर्यन्तेषूपास्यतयोपदिष्टेषु ' अस्ति भगवो नाम्नो भूयः ' (७.१.५) ' अस्ति भगवो वाचो भूयः ' (७.२.२] इत्यादयः प्रश्नाः, ' वाग्वाव नाम्नो भूयसी ' ' मनो वाव वाचो भूयः ' [छां.७.२.१,७.३.१) इत्यादीनिच प्रतिवचनानि, प्राणात्स्वर्चानेषु दृश्यन्ते ; प्राणेतु नयदृश्यामः अतः प्राणपर्यन्त एवायमात्मोपदेश इति प्रतीयते । तेनेह प्राणशब्दनिर्दिष्टः प्राणसंहचारी प्रत्यगात्मैव ; न वायुविशेषमात्रम् । ' प्राणो ह पिता प्राणो ह माता ' (छां.७.१५.१) इत्यादयश्च प्राणस्य चेतनतामवगमयन्ति ; ' पितृहा मातृहा ' [७.१५.२] इत्यादिना सप्राणेषु

## श्रुतप्रकाशिका

तदेवमिति । वैपुल्यविशेष्यः क इत्याकाङ्क्षायामाह—वैपुल्येति । कथमात्मनो विशेष्यत्वमित्यत्राह—तरतीति । उपक्रमोपसंहारयोरात्मशब्ददर्शनादित्यर्थः । अत्रेति । किं भूमा प्रत्यगात्मा ? उत परमात्मा । तदर्थं किं प्राणशब्दनिर्दिष्टे प्रत्यगात्मनि प्रश्नप्रतिवचनसमाप्तया भूमशब्दस्तत्र पर्यवसितः उतातिरिक्तविषयः किं । ' एषतुवा अतिवदति यस्सत्येनातिवदति ' इति प्राणातिवादिनोऽङ्गतया सत्यवचनं विधत्ते, उत सत्यशब्दवाच्यपरोपासकस्यातिवादित्वं वदति ? किमस्मिन्वाक्ये प्राणातिवादिनः प्रत्यभिज्ञाऽस्ति नेनेति । तुशब्दः किं प्रत्यभिज्ञाविरोधी, नेति, यदा तुशब्दः प्रत्यभिज्ञाविरोधी न भवति तदा प्राणातिवादिनः प्रत्यभिज्ञासंभवात् ' एषतुवा ' इति वाक्यं तदङ्गभूतसत्यवचनविधिपरमिति प्राणातिरिक्तवस्त्वभावात् भूमशब्दः प्राणे पर्यवसित इति भूमा प्रत्यगात्मेति पूर्वपक्षः । यदा तुशब्दः प्रत्यभिज्ञाविरोधी भवति तदा प्राणातिवादिनः प्रत्यभिज्ञानाभावेन ' सत्येनातिवदति ' इति वाक्यस्य सत्योपासकातिवदनपरत्वेन प्राणातिरिक्तवस्तुसद्भावेन प्रश्नप्रतिवचनसमाप्तावपि भूमशब्दस्य प्राणपर्यवसितत्वाभावात् भूमा परमात्मेति राद्धान्तः तेनेति । तेन आत्मजिज्ञासया प्रक्रान्ते प्रकरणे प्राणपर्यन्तोपास्योपदेशेन हेतुनेत्यर्थः । प्राणशब्दः कथमात्मनि वर्तत इत्यत्राह—प्राणसहचारीति ॥

इतरव्याख्यातृषु कैश्चित्पञ्चवृत्तिः प्राणः प्राणशब्दवाच्य इत्युक्त्वा तत्प्रकरणाविच्छेदेन भूमा प्राण इति पूर्वपक्षं कृत्वा प्रकरणविच्छेदेन भूमा परमात्मेत्युक्तम् । कैश्चिच्च पञ्चवृत्तिप्राणस्य प्राणशब्दवाच्द्वाच्यत्वमभ्युपगम्य पूर्वपक्षे सिद्धान्ते च तत्प्रकरणविच्छेदं वदद्भिः भूमा प्रत्यगात्मेति पूर्वपक्षं कृत्वा परमात्मेति सिद्धान्तितम् । तदुभयमाशङ्क्याह—न वायुविशेषमात्रमिति । उपक्रान्तस्यात्मोपदेशस्य प्राणपर्यन्तत्वसिद्धेः प्राणस्यचात्मत्वयोगादिति भावः । हेत्वन्तरमाह प्राणोहेति । नहि केवल देहस्य वायुविशेषस्य वा पितृत्वादिकं वेदान्तेषु कश्चिदभ्युपगच्छति । हेत्वन्तरमाह—पितृहेति अत्र प्रकरणे सप्राणेषु हिंसके हिंसानिमित्तोपक्रोशवचनं दृश्यते । अप्राणेषु हिंसके हिंसानिमित्तोपक्रोशाभावश्च दृश्यते, च लोके सजीवनिर्जीवशरीरयोरुपमर्दकारिण्युपक्रोशतदभावौ दृश्येते, नहि निष्कृष्टात्मनः केवलस्य शरीरस्य वा हिंस्यत्वं—अपि त्वचिद्विशिष्टस्यैव चेतनस्य—तस्मात्सप्राणनिष्प्राणविषयोपमर्दतदभावयोः सजीवनिर्जीवशरीरोपमर्दनिमित्तहिंसातदभावश्च-

## श्रीभाष्यम्

पितृप्रभृतिपूपमर्दकारिणि हिंसात्मकरत्वनिमित्तोपक्रोशवचनात्तेष्वेव विगतप्राणेष्वत्यन्तोपमर्दकारिण्यप्युपक्रोशाभाववचनाच्च हिंसायोग्यश्चेतनएव प्राणशब्दनिर्दिष्टः। अप्राणेषु स्थावरेष्वपि चेतनेषूपमर्दभावाभावयोर्हिंसातभावदर्शनादयं हिंसायोग्यतया निर्दिष्टः प्राणः प्रत्यगात्मैवेति निश्चीयते। अत एव च अरनाभिदृष्टान्ताद्युपन्यासेन प्राणशब्दनिर्दिष्टःपर इति न भ्रमितव्यम्, परस्य हिंसाप्रसङ्गाभावात्, जीवादितरस्य तद्भोग्यभोगोपकरणभूतस्य कृत्स्नस्याचिद्वस्तुनो जीवायत्तस्थितितत्वेन प्रत्यगात्मन्येवारनाभिदृष्टान्तोपपत्तेश्च। अयमेव च प्राणशब्दनिर्दिष्टो भूमा ; ' अस्ति भगवः प्राणाद्भूयः ' इति प्रश्नस्य 'अदो वाच प्राणाद्भूयः इति प्रतिवचनस्य चाभावाद्भूमसंशब्दनात्प्राक्प्राणप्रकरणस्याविच्छेदात्। किञ्च प्राणवेदिनोऽतिवादित्वमुक्त्वा तमेव ' एष तु वा अतिवदति ' (छां.७.१६) इति प्रत्यभिज्ञाप्य ' यस्सत्येनातिवदति ' (७.१६) इति तस्य सत्यवदनं प्राणोपासाङ्गतयोपदिश्य उपादेयस्य सत्यवदनस्य शेषितया पूर्वनिर्दिष्टप्राणयाथात्म्यविज्ञानं ' यदा वै विजानात्यथ सत्यं वदति ' (७.१७) इत्युपदिश्य तत्सिद्ध्यर्थं च मननश्रद्धानिष्ठाप्रयत्नानुपदिश्य तदारम्भाय च प्राप्यभूतप्राणशब्दनिर्दिष्टप्रत्यगात्मस्वरूपस्य सुखरूपताज्ञानमुपदिश्य तस्य च सुखस्य विपुलता, ' भूमात्वेव विजिज्ञासितव्यः ' (छां.७.२३.१) इत्युपदिश्यते। तदेवं प्रत्यगात्मन एवाविद्यावियुक्तं रूपं विपुलसुखमित्युपदिष्टमिति ' तरति शोकमात्मवित् ' (७.१.३) इत्युपक्रमाविरोधश्च। अतो भूमगुणविशिष्टः प्रत्यगात्मा,

## श्रुतप्रकाशिका

णाद्धिंसाकर्मत्वं प्राणशब्दवाच्यस्य जीवत्वसाधकमित्यर्थः। उपक्रोशतदभावौ पञ्चवृत्तिप्राणवत्त्वतद्रहितत्वनिबन्धनौ स्याताम् नतु सजीवत्वानिर्जीवत्वकृताविल्याह—अप्राणेष्विति। स्थावरेष्वपिचेतनेष्विति। ' ओषधिवनस्पतयो यच्चकिञ्चित् प्राणभृत् सआत्मानमाविस्तरां वेद ' ' शरीरजैः कर्मदोषैः याति स्थावरतां नरः ' इत्यादिश्रुतिस्मृतिभिः स्थावराणां ज्ञातृत्वकर्मफलभोक्तृत्वावगमात्तेषां चेतनत्वं वेदान्तान् स्मृतिवचनानि च प्रमाणयद्भिरभ्युपेत्यमिति भावः। प्रक्रान्तस्यात्मोपदेशस्य प्राणपर्यन्तत्वं मातृत्वपितृत्वादिकं हिंसायोग्यत्वं चेति तृतीयं जीवत्वसाधकं पूर्वपक्षे। सिद्धान्ते तु पितृत्वादिकं हिंसाकर्मत्वं च द्वयमेव जीवत्वसाधकमिति भिदा। अरनाभिदृष्टान्तपूर्वकसर्वाधारत्वोपन्यासेन प्राणशब्दनिर्दिष्टःपरमात्मेति प्रतीयत इत्यत्राह—अतएवेति। दृष्टान्तादीत्यादिशब्देन धारकत्वम्। प्राणशब्दनिर्दिष्टस्य मुख्यप्राणत्वशङ्कानिरासहेतुरेव परमात्मत्वशङ्कायाअपि निरासहेतुरिति सूचयत्येवकारः। कुतइत्यत्राह—परस्येति। हिंसायाऽभावो मुक्तस्याप्यस्तीति तद्व्यावृत्त्यर्थं हिंसाप्रसङ्गाभावादित्युक्तम्। तर्ह्यरनाभिदृष्टान्तः कथमित्यत्राह—जीवादितरस्येति। एवं हिंसायोग्यत्वं पञ्चवृत्तिप्राणात् परमात्मनश्च व्यावर्तकमित्युक्तं भवति। एवं जीवः प्राणशब्दवाच्योऽस्तु, ततः किं भूमविशिष्टस्य जीवत्व इत्यत्राह—अयमेवचेति। प्रकरणाविच्छेदं हेतुमाह—अस्तिभगवइति। प्रश्नप्रतिवचनाभावः प्रकरणविच्छेदहेतुः, तदविच्छेदो भूमविशिष्टस्य जीवत्वेहेतुरित्यर्थः। तुशब्दस्य प्रकरणविच्छेदकत्वमाशङ्क्याह—किंचेति। एष तुवा अग्निहोत्री यस्सत्यं वदति ' इत्यत्र अग्निहोत्रिवत् प्राणातिवादिनः प्रत्यभिज्ञानात्तस्यैव तदङ्गतया तस्य कथनमुक्तमित्यर्थः। कथं जीवस्वरूपस्य विपुलसुखत्वं तद्धि शोकप्रचुरमित्यत्राह—अविद्यायुक्तं रूपमिति। उपक्रमे 'तरति शोकमात्मवित् ' इति शोकाविष्टत्वं जीवस्य प्रतिपन्नम् तत्कथं विपुलसुखमित्यत्राह—उपक्रमाविरोधश्चेति। बन्धोहि

## श्रीभाष्यम्

यत एवं भूमगुणविशिष्टः प्रत्यगात्मा अत एवाहमर्थे प्रत्यगात्मनि 'अहमेवाधस्तादहमुपरिष्टात्' (छां.७.२५.१) इत्यारभ्य 'अहमेवेदं सर्वम्' (७.२५.१) इति प्रत्यगात्मनो वैभवमुपदिशति। एवं प्रत्यगात्मत्वे निश्चिते सति तदनुगुणतया वाक्यशेषो नेतव्य इति ॥

एवं प्राप्तेऽभिधीयते-(भूमा संप्रसादादध्युपदेशात्) भूमगुणविशिष्टो न प्रत्यगात्मा अपितु परमात्मा, कुतः? संप्रसादादध्युपदेशात्; संप्रसादः प्रत्यगात्मा, 'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' (छां.८.१२.२)इत्युपनिषत्प्रसिद्धेः। संप्रसादात् प्रत्यगात्मनोऽधिकतया भूमविशिष्टस्य सत्यशब्दाभिधेयस्योपदेशादित्यर्थः। सत्यशब्दाभिधेयं च परं ब्रह्म। एतदुक्तं भवति—यथा नामादिषु प्राणपर्यन्तेषु पूर्वपूर्वाधिक्ययोत्तरोत्तराभिधानात्पूर्वेभ्य उत्तरेषामर्थान्तरत्वम्, एवं प्राणशब्दनिर्दिष्टात्प्रत्यगात्मनोऽधिकतया निर्दिष्टस्सत्यशब्दाभिधेयस्तस्मादर्थान्तरभूत एव; सत्यशब्दनिर्दिष्ट एव भूमेति सत्याख्यं परं ब्रह्मैव भूमेत्युपदिश्यते इति। तदाह वृत्तिकारः— 'भूमा त्वेवेति भूमा ब्रह्म, नामादिपरम्परया आत्मन ऊर्ध्वमस्योपदेशात्' [वृत्तिः] इति।

## श्रुतप्रकाशिका

शोकः, मुक्तस्वरूप विपुलसुखमित्यर्थः अहंशब्दनिर्देशे च हेतुमाह—यत एवमिति। कथमहंशब्दनिर्देशः प्रत्यगात्मत्वसाधक इत्यत्राह—अहमर्थे प्रत्यगात्मनीति। अहमर्थस्य प्रत्यगात्मत्वादित्यर्थः तदनुगुणतयेति। स्वमहिमप्रतिष्ठितत्वादिपराणि वाक्यान्यस्वरस योजनीयानीत्यर्थः ॥

सूत्रं व्याचष्टे भूमेति। शुद्धस्वरूपाभिप्रायेण सूत्रे सम्प्रसादनिर्देशः कृतः। सम्प्रसादशब्दस्य प्रत्यगात्मपरत्वं कथमित्यत्राह—एष इति। हेतुवाचिपदेषु सम्प्रसादशब्दो व्याख्यातः। पदान्तरद्वयं व्याचष्टे सम्प्रसादादिति। नहि प्राणकथनानन्तरं भूमविशिष्टस्याधिकत्वं श्रूयत इत्यत्राह—सत्यशब्दाभिधेयस्येति। सत्यशब्दात् पश्चात्प्रकरणविच्छेदाभावेन सत्यशब्दवाच्य एव भूमविशिष्ट इति भावः। भूमविशिष्टस्सत्यशब्दाभिधेयोऽस्तु ततः किं तस्य भूम्नः परमात्मत्वसिद्धेरित्यत्राह—सत्यशब्दाभिधेयं चेति। सत्यशब्दाभिधेयस्य तु शब्दोपेतातिवादिशब्देनाधिकतयोपदेशोऽस्तु, आधिक्यस्य च प्राणशब्दवाच्यजीवप्रतियोगित्वं कथम् नहि 'मनो वाव वाचो भूयः' इत्यादिवत् पञ्चम्यन्तः प्राणशब्दश्श्रुतः अतो न सत्यस्य प्राणशब्दवाच्याज्जीवादर्थान्तरत्वं, अपितु पूर्वनिर्दिष्टाया आशाया अधिकतयोपदिष्टः प्राण एव सत्यशब्दवाच्यः परिशुद्धप्रत्यगात्मस्वरूपस्यापि 'सत्यं चानृतं च सत्यमभवत्' इत्यादाविव सत्यशब्दवाच्यत्वं सम्भवेदित्यत्राह—एतदुक्तं भवतीति। पूर्वनिर्दिष्टादूर्ध्वमभिधानं हि पूर्वनिर्दिष्टप्रतियोगितयोत्तरोत्तरेषामधिकतयार्थान्तरत्वे हेतुः, तस्य हेतोः सपक्षे व्याप्तिं दर्शयति यथेति। एवशब्देन हेतुरभिप्रेतः। उत्तरोत्तरनिर्दिष्टानां पूर्वपूर्वनिर्दिष्टादधिकतयाऽर्थान्तरप्रतिपादनप्रकरणत्वात् प्राणशब्दनिर्दिष्टादूर्ध्वं निर्दिष्टस्सत्यशब्दवाच्यस्तस्मात् प्राणादधिकतयाऽर्थान्तरभूत एवेत्यर्थः। ततः किं भूमशब्दवाच्यस्य परमात्मत्व इत्यत्राह—सत्यशब्देति। अनेन पूर्वं सूत्राक्षरयोजनायामुक्तस्य सत्यशब्दाभिधेयस्येति पदस्याभिप्रायो विवृतो भवति तदाहेति। पूर्वनिर्दिष्टादधिकतयोत्तरोत्तरनिर्देशप्रकरणत्वात् प्राणशब्दवाच्याज्जीवादूर्ध्वमुक्तः सत्यशब्दवाच्य उपास्यो भूमा ततोऽधिकः परं ब्रह्मेति वृत्तिकारग्रन्थस्यार्थः 'आत्मन ऊर्ध्वम्' इत्यनेन प्राणशब्दनिर्दिष्टस्य जीवात्मत्वं वृत्तिकाराभिमतम् न तु पञ्चवृत्तिप्राणपरत्वमित्यवगत अतः प्राणशब्दवाच्यस्य जीवत्वमाश्रित्यैव पूर्वपक्षसि-

## श्रीभाष्यम्

प्राणशब्दनिर्दिष्टादधिकतया सत्यस्योपदेशः कथमवगम्यत इतिचेत्—'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति' (छां.७.१५.४) इति प्राणविदोऽतिवादित्व मुक्त्वा 'एष तु वा अतिवदति यस्सत्येनातिवदति' (७.१६.१) इति सत्यवेदित्वेनातिवादिनं तुशब्देन पूर्वस्मादतिवादिनो व्यावर्तयति। अत एव 'एष तु वा अतिवदति' (७.१६ १) इत्यत्र प्राणातिवादिनो न प्रत्यभिज्ञा। अतोऽस्यातिवादिनिमित्तं सत्यं पूर्वातिवादित्वनिमित्तात्प्राणादधिकमिति विज्ञायते ॥

ननु च प्राणवेदिन एव सत्यवदनमङ्गत्वेनोपदिष्टम्, अतः प्राणप्रकरणाविच्छेदइत्युक्तम्। नैतद्युक्तम्—तुशब्देन ह्यतिवाद्येवान्यः प्रतीयते, न तु तस्यैवातिवादिनस्सत्यवदनाङ्गविशिष्टतामात्रम्। 'एष तु वा अग्निहोत्री यस्सत्यं वदति' इत्यादिष्वग्निहोत्रयन्तराप्रतीतेः, प्रतीतस्यैवाग्निहोत्रिणस्सत्यवदनाङ्गविधानमिति क्लिष्टा गतिराश्रीयते ; अत्रत्वतिवा-

## श्रुतप्रकाशिका

द्यान्तवर्णनं वृत्तिकाराभिमतमिति ज्ञापनं वृत्तिकारग्रन्थोपादानफलम्। एवमधिकतयोपदेशसिद्धवत्कारेण सत्यस्य प्राणादधिकतयाऽर्थान्तरत्वमुक्तम् ॥

अथ प्राणप्रतियोगिकत्वार्थान्तरत्वहेतुत्वेनोक्तोऽधिकतयोपदेश एव कथ? सत्यवचनंहि प्राणोपासनाङ्गत्वेनोपदिष्टमित्युक्तमिति पराभिप्रायं शङ्कते—प्राणशब्देति। तुशब्देन प्रकरणविच्छेदाद्नाङ्गविधिरिति प्रतिवदति सवा एषइति । व्यावर्तयति अधिकतया व्यावर्तयतीत्यर्थः। पूर्वनिर्दिष्टादुत्तरनिर्दिष्टस्याधिकत्वोपदेशपरप्रकरणत्वादिति भावः। उपासकाधिक्यात्तन्निमित्तोपास्याधिक्यं वक्तु तुशब्दस्वारस्येनोपासकवैलक्षण्यमुक्तम्, तुशब्दोह्यसङ्कुचितवृत्तिः धर्मधर्मिणोरविशेषेण भेदकः ॥

ननु कथं तुशब्दस्वारस्यादतिवाद्यन्तरप्रतिपत्तिः एतच्छब्दसामर्थ्येन पूर्वातिवादीहि प्रत्यभिज्ञायत इत्यत्राह—अत एवेति। प्रकृतप्रकंस्यमाणसाधारण एतच्छब्दः नायमेकान्ततः प्रकृतमभिनिविशते, पाश्चात्ययद्वृत्तप्रतिनिर्देशरूप वाच्यतायें प्रकृतपरः तुशब्दस्वारस्य च प्रकरणविच्छेदकम्, अतः पूर्वातिवादिनः प्रत्यभिज्ञा नास्तीत्यतिवाद्यन्तर प्रतिपत्तिमित्यर्थः अतिवाद्यन्तरप्रतिपत्तिरस्तु, ततः किं सत्यस्य प्राणशब्दवाच्यादधिकत्वइत्यत्राह—अतोऽस्येति। तुशब्दः पूर्वातिवादिनोऽतिशयितोपास्यान्तरविशिष्टमेवातिवाद्यन्तर भिनत्ति स्वोपास्य वस्त्वाधिक्यं ह्यतिवदननिमित्तं अतः प्राणातिवादिनोऽतिवदननिमित्तात्तदुपास्यात् प्राणादपि तदुत्तरवाक्यनिर्दिष्टस्य सत्यातिवादिनोऽतिवदननिमित्त तदुपास्य सत्यमधिकमित्यर्थः ॥

अग्निहोत्रिवाक्यदृष्टान्ते तुशब्दस्य व्यभिचार हृदि निधायातिवाद्यन्तराप्रतिपत्तिमुखेन चोदयति ननुचेति। परिहरति नैतद्युक्तमिति। अग्निहोत्रवैषम्य वक्तुस्तुशब्दस्वारस्यादतिवाद्यन्तरप्रतिपत्तिमाह—तुशब्देनेति। अग्निहोत्रिवाक्यदृष्टान्तादार्ष्टान्तिकस्य सत्यातिवादिवाक्यस्य वैषम्य वक्तु दृष्टान्ते स्वारस्यहानिमाह—एषत्विति। अग्निहोत्र्यन्तराप्रतीतेरिति। अतिवादिस्थानीयोऽग्निहोत्री उपासनस्थानीयमग्निहोत्र द्रव्यदेवतास्थानीयमुपास्यम्। अत्र अग्निहोत्र्यन्तराप्रतीतिरग्निहोत्रान्तराप्रतीतः साच द्रव्यदेवताविशेषाप्रतीतिः, साच सत्यवचनशब्दस्य दध्यादिद्रव्यदेवताविशेषोपस्थापनासामर्थ्यात् एवमग्निहोत्र्यन्तरसमर्पकशब्दाभावात्तत्र तुशब्दस्वारस्य भग्नमित्यर्थः। इहापि तर्ह्यतिवाद्यन्तराप्रतीतेरग्निहोत्रिन्यायो भवतीत्यत्राह—अत्रत्विति। अत्रत्वतिवाद्यन्यत्वनिमित्तमुपासनान्तर तद्धेतुभूतमुपास्यान्तरं च प्रतीयते, इह

## श्रीभाष्यम्

**न्तरत्वनिमित्तं सत्यशब्दाभिधेयं परं ब्रह्म प्रतीयते । सत्यशब्दश्च 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.आन.१.अनु) इत्यादिषु परस्मिन् ब्रह्मणि प्रयुक्तः ; अतस्तन्निष्ठस्यातिवादिनः पूर्वस्मादधिकत्वं सम्भवतीति वाक्यस्वरससिद्धमन्यत्वं न बाधितव्यम् । अतिवादित्वं हि वस्त्वन्तरात् पुरुषार्थतयाऽतिक्रान्तस्योपास्यवस्तुवादित्वम् ; नामाद्याशापर्यन्तोपास्यवस्त्वतिक्रान्तस्योपास्यप्राणशब्दनिर्दिष्टप्रत्यगात्मवादित्वात्प्राणविदोऽतिवादित्वम् ; तस्यापि साऽतिशयपुरुषार्थत्वान्निरतिशयपुरुषार्थतयोपास्यपरब्रह्मवादिन एव साक्षादतिवादित्वमिति 'एषतु वा अतिवदति यस्सत्येनातिवदति' (छां.७.१६.१) इत्युक्तम् । सत्येनेतीत्थंभूतलक्षणे तृतीया ; सत्येन परेण ब्रह्मणोपास्येनोपलक्षितो योऽतिवदति स्वर्थः । अत एवैवं शिष्यःप्रार्थ्यते 'सोऽहं भगवस्सत्येनातिवदानि' (७.१६.१) इति ।**

## श्रुतप्रकाशिका।

तत्समर्पणसमर्थस्य सत्यशब्दस्य सद्भावात्तुशब्दस्वारस्यं नभङ्क्तनीयम् । अतः अतिवाद्यन्तर सिद्धमित्यर्थः किंच नपरं द्रव्यदेवतोपस्थापकशब्दाभावादग्निहोत्रान्तराप्रतीतिः, किंतु कर्मस्वरूपोपस्थापकशब्दाभावाच्च नहि जुहोत्यादिपदान्तरं श्रूयते । नच श्रूयमाणो वदतिशब्दो जुहोत्यर्थः । अतश्चाग्निहोत्रान्तराप्रतीतेरग्निहोत्रशब्दस्सजातीयव्यक्तिमलभमानः प्रकृतमेवाग्निहोत्रमवलम्बते इहतु न परमुपास्यान्तरसमर्पणक्षमस्सत्यशब्द एव 'सत्यंत्वेव विजिज्ञासितव्यम्' इत्युपासनान्तरोपस्थापकशब्दश्च श्रूयते, अत उपासनान्तरप्रतीतेरुपासकान्तरप्रतीति सद्भावादतिवादिशब्दस्तद्विषयो भवितुमर्हतीति तुशब्दस्वारस्यं न भङ्क्तनीयम् अतः प्रकरणविच्छेद इति चाभिप्रायः । तुशब्दस्य धर्मिभेदकत्वेसिद्धे सत्यशब्दस्योपास्यान्तरसमर्पकत्व सत्यशब्दस्योपास्यान्तरसमर्पकत्वे तुशब्दस्य धर्मिभेदकत्वमित्यन्योऽन्याश्रयमाशङ्क्य सत्यशब्दस्योपास्यान्तरपरत्वप्रसिद्धि दर्शयति सत्यशब्दश्चेति । ततः किमित्यपेक्षाया तुशब्दस्वारस्यफलितमर्थमाह— अतइति । नहि तुशब्दस्य धर्मिभेदकत्वस्वारस्य सत्यशब्दोक्ष सत्यशब्दस्योपास्यान्तरसमर्पणक्षमत्व श्रुतिसिद्ध नतु शब्दापेक्षम् । सत्यशब्दस्य न जीवपरसाधारण्य परस्यैव निरुपाधिकसत्यत्वात् । साधारण्येऽपि विलक्षणोपास्यवाचकत्वमपि सम्भवति, तथासति न तुशब्दस्वारस्यभङ्गः अतोऽन्योऽन्यसापेक्ष वाभावान्नान्योऽन्याश्रय इत्यभिप्रायेण पूर्वस्मादधिकत्व सम्भवतीति वाक्यस्वरससिद्धमन्यत्व न बाधितव्यमित्युक्तम् । प्राणोपासकस्यासाधारणमतिवादित्व नातिवाद्यन्तर सहते, अतोऽतिवादिशब्दस्वारस्यार्थं तुशब्दस्वारस्यमङ्ग इत्यत्राह—अतिवादित्वहीति । नहि प्राणातिवादिन्येवातिवादिशब्दो रूढः—

> यत्नप्राऽवयवशक्त्यैव लभ्ये स्वार्थावबोधने । नष्टाऽवयवनामत्वं प्रत्याचष्टेहि सूत्रकृत् ॥

इति दर्शितात् । 'प्रोक्षणीष्वर्थसंयोगात्' इति सूत्रितात् प्रोक्षणीन्यायादवयवशक्त्या स्वार्थावबोधे सम्भवति रूढिकल्पनायोगात् । अतो न प्राणातिवादिन्येवातिवादिशब्दस्वारस्यमित्यर्थः । अतिक्रान्तस्योपास्य वस्तुवादित्वमतिवादिशब्दप्रवृत्तिनिमित्तमितीममर्थं प्राणातिवादिनि दर्शयति नामादीति । अस्य प्रवृत्तिनिमित्तस्य परमात्मोपासकएव पुष्कलत्वात्तस्मिन्नेव अतिवादिशब्दो मुख्य इति 'यस्सत्येनातिवदति' इति वदत आचार्यस्याभिप्रायइत्याह—तस्यापीति । तुशब्दस्यातिवादिशब्दस्योभयस्याप्यस्मत्पक्ष एव स्वारस्यमितिभावः । सत्यमुपास्यचेत् 'सवा एष एवं पश्यन्' इतिवत् सत्यं पश्यन्नतिवदतीति वक्तव्यम् ननु सत्येनेतीति शङ्काया तृतीयाया अर्थमाह—सत्येनेति । सत्यवचनपक्षएव तृतीयाऽनुपपत्तिः उपसर्गवैयर्थ्यंचेति भावः । उपास्यान्तरत्वमुपपादयति अतएवैवमिति । अतएव सत्यशब्दस्योपास्यान्तरप्र

## श्रीभाष्यम्

आचार्यश्च ' सत्यं त्वेव विजिज्ञासितव्यम् ' (७.१६.१) इत्याह । ' आत्मतः प्राणः ' (७.२६.१) इति च प्राणशब्दनिर्दिष्टस्यात्मन उत्पत्तिरुच्यते। अतः 'तरति शोकमात्मवित् ' (७.१.३) इति प्रक्रान्त आत्मा प्राणशब्दनिर्दिष्टादन्य इति गम्यते ॥

यदुक्तम्—' अस्ति भगवः प्राणाद्भूयः ' इति प्रश्नस्य ' अस्ति वाव प्राणाद्भूयः ' इति प्रतिवचनस्यचादर्शनात्प्रक्रान्त आत्मोपदेशः प्राणोपदेशपर्यवसानो गम्यत इति ; तदनुक्तम् ; नहि प्रश्नप्रतिवचनाभ्यामेवार्थान्तरत्वं गम्यते ; प्रमाणान्तरेणापि तत्संभवात् । उक्तञ्च प्रमाणान्तरम् । ' अस्ति भगवः प्राणाद्भूयः ' इत्यपृच्छतोऽयमभिप्रायः—नामादिष्वाशापर्यन्तेष्वचेतनेषु पुरुषार्थभूयस्तया पूर्वपूर्वमतिक्रान्तेष्वचेतनेष्वप्युत्तरोत्तरेषूपदिष्टेषु तत्तद्वेदिन आचार्येणातिवादित्वं नोक्तम् ; प्राणशब्दनिर्दिष्टप्रत्यगात्मयाथात्म्यवेदिनस्तु पुरुषार्थभूयस्त्वातिशयं मन्वानेन ' स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति ' (छां.७.१५.४) इति अतिक्रान्तवस्तुवादित्वमुक्तम् । अतोऽत्रैवात्मोपदेशस्समाप्त इति मत्वा शिष्यो भूयो न पप्रच्छ । आचार्यस्त्विदमपि साऽतिशयं मत्वा निरतिशयपुरुषार्थभूतं सत्यशब्दाभिधेयं परं ब्रह्म ' एष तु वा अतिवदति यस्सत्येनातिवदति ' (७.१६) इति स्वयमेवोपचिक्षेप । शिष्योऽपि परमपुरुषार्थरूपे परस्मिन्ब्रह्मण्युपक्षिप्ते तत्स्वरूपतदुपासनयाथात्म्यबुभुत्सया ' सोऽहं भगवस्सत्येनातिवदानि ' (७.१६) इति प्रार्थयामास । ततो ब्रह्मसाक्षात्कारनिमित्तातिवादित्वसिद्धये ब्रह्मसाक्षात्कारोपायभूतं ब्रह्मोपासनम् ,

## श्रुतप्रकाशिका

त्वादेव ' सोऽहं भगवस्सत्येनातिवदानि ' इति शिष्यःप्रार्थयते नतु प्राणेनातिवदानीत्यर्थः आचार्यश्चेति । 'सत्यं त्वेव विजिज्ञासितव्यम् ' इत्याह—नतु प्राण एवेतीत्यर्थः ॥

यद्वा अतिवादिशब्दस्य यौगिकत्वमुपपादयति अतएवैवमिति । अतिवादिशब्दस्य यौगिकत्वादेवहि ' अतिवदानी'त्याख्यातनिर्देश इत्यर्थः । यद्वा अतिक्रान्तस्वोपास्यवस्तुवादित्वस्यैवातिवादिशब्दप्रवृत्तिनिमित्तत्वादेवहि शिष्यप्रार्थनमित्यर्थः । अयमर्थः पूर्वोक्तार्थफलं आचार्यश्चेति । अतएवेत्यनुषङ्गः । अतिक्रान्तस्वोपास्यवस्तुवादित्वस्यैव प्रवृत्तिनिमित्तत्वादेवहि सत्यशब्दाभिधेयं ' सत्यंत्वेव विजिज्ञासितव्यम् ' इत्युपास्यतयोक्तमित्यर्थः ॥

किंच सत्यवचनमङ्गतया विहितञ्चेत् सत्य संपाद्यमित्युक्त स्यात् , तदानीं विजिज्ञासितव्यशब्दास्वारस्यं भवेत सत्यं विजिज्ञासितव्यं वचनार्थं ज्ञातव्यमित्यर्थं इतिचेत् अध्याहारप्रसङ्ग इति भावः । सूत्राभिप्रेतेन हेत्वन्तरेणाप्याधिक्यतयोपास्यान्तरत्वमुपपादयन् संप्रसादादध्युपदेशं विवृणोति आत्मनइति । पूर्वपक्षयुक्तिमनुवदति यच्चेति । परिहरति तदयुक्तमिति । उक्तञ्चेति । प्रश्नप्रतिवचनेहि लिङ्गं तदभावेऽपि तुशब्दश्रुतिरा मनः प्राणो पत्तिश्च लिङ्गमिति प्रमाणान्तरमुक्तमित्यर्थः । तत्र प्रश्नाभावः किं निबन्धन इत्यत्राह—अस्तीति । पुरुषार्थभूयस्त्वातिशयं मन्वानेन आत्मोपदेशस्य तत्पर्यन्तत्वं मन्वानेनेत्यर्थः स्वयमेवोपचिक्षेपेति । भगवद्गीतायामपि ' तस्माद्योगी भवार्जुन ' इति जीवात्मयोगं परिसमाप्य—

योगिनामपि सर्वेषां मद्गतेनान्तरात्मना । श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥

इति परमात्मोपासनं भगवानेव स्वयमुपाक्षिपत् तद्वदिति भावः. ततोब्रह्मेति । ब्रह्मसाक्षात्कारनिमित्तेत्यनेन ' यदावैवि-

## श्रीभाष्यम्

सत्यत्वेव विजिज्ञासितव्यम् ' (८.१६) इत्युपदिश्य तदुपायभूतं ब्रह्ममननम् ' मतिस्त्वेव विजिज्ञासितव्या ' (७.१८] इत्युपदिश्य श्रवणप्रतिष्ठार्थत्वान्मनस्य मननोपदेशेन श्रवणमर्थ सिद्धं मत्वा श्रवणोपायभूतां ब्रह्मणि श्रद्धाम् ' श्रद्धात्वेव विजिज्ञासितव्या ' (६.१९) इत्युपदिश्य तदुपायभतनांच तन्निष्ठां 'निष्ठात्वेव विजिज्ञासितव्या'[७.२०)इत्युपदिश्य तदुपायभूतां च तदुद्योगप्रयत्नरूपां कृतिमपि 'कृतिस्त्वेव विजिज्ञासितव्या' (छां७.२१) इत्युपदिश्य श्रवणाद्युपक्रमरूपश्रुतिसिद्धये प्राप्यभूतस्य सत्यशब्दाभिहितस्य ब्रह्मणस्सुखरूपता ज्ञातव्येति ' सुखंत्वेव विजिज्ञासितव्यम् ' (छां.७.२२] इत्युपदिश्य निरतिशयविपुलमेव सुखं परमपुरुषार्थरूपं भवतीति तस्यैव ब्रह्मणस्सुखरूपस्य निरतिशयविपुलता ज्ञातव्येति ' भूमात्वेव विजिज्ञासितव्यः ' (छां.२३] इत्युपदिश्य निरतिशयविपुलसुखरूपस्य ब्रह्मणो लक्षणमिदमुच्यते ' यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति सभूमा ' [छां.७.२४.१] इति । अयमर्थः—अनवधिकातिशयसुखरूपे ब्रह्मण्यनुभूयमाने ततोऽन्यत्किमपि न पश्यत्यनुभ-

## श्रुतप्रकाशिका

जानात्यथ सत्यं वदति ' इत्यस्य वाक्यस्यार्थ उक्तो भवति, विजानातिशब्दः साक्षात्कारपरः, नतु शास्त्रजन्यज्ञानपरः ' यदावै मनुतेऽथ विजानाति ' इति जानात्यर्थस्य मननसाध्यत्वावगमात् 'सत्यं वदति सत्यमतिवदति' इत्यर्थः अतिवादस्य प्रकृतत्वात् यदा ब्रह्मसाक्षात्करोति तदाऽतिवदति, तस्मादतिवादित्वनिमित्ततत्साक्षात्काराय तदुपायभूतं सत्योपासनं कुर्यादित्यर्थः । श्रवणोपायभूतां ब्रह्मणि श्रद्धामिति । श्रवणमनननिदिध्यासनप्राप्तिविषयोहि ब्रह्म तद्विषयश्रद्धा च तच्छ्रोतुं मन्तुं द्रष्टुं प्राप्तुं च भवति, तत्र श्रवणोपायभूता श्रद्धामित्यनेन श्रोतुं श्रद्धा विवक्षिता । श्रद्धा त्वरा तदुपायभूतां च तन्निष्ठामिति । तास्मिन् ब्रह्मणि निष्ठा तन्निष्ठा ब्रह्मैव श्रोतव्य नान्यदिति व्यवसायो निष्ठा श्रोतव्यत्व निश्चयेहि श्रोतुं त्वरा भवति तदुद्योगप्रयत्नरूपां कृतिमिति । उद्योगशब्दवाच्यप्रयत्नरूपा कृतिमित्यर्थः, साच श्रोतव्यान्तरेषु हेयत्वानुसन्धानेन मनसो नियमनरूपा अन्यासिक्तत्यादेयबुध्या प्रवणमनस्कस्याहि ब्रह्मैव श्रोतव्य नान्यदित्यध्यवसायो नभवति । श्रवणादीति । जिज्ञासितस्य पुरुषार्थत्वे तस्य निरतिशयत्वेच ज्ञातेसति मनसस्सातिशयपुरुषार्थान्तरवैमुख्यकरणं सम्भवतीत्यभिप्रायः । निरतिशयपुरुषार्थत्वावगमश्च शास्त्रादेवापातप्रतीतिदशायां भवति याथात्म्यकत्सज्जनसंवादादिना च सिद्ध्यति । ' यदावै श्रद्दधात्यथ मनुते यदावै निस्तिष्ठत्यथ श्रद्दधाति यदावै करोत्यथ निस्तिष्ठति ' इति मननादीनां श्रद्धाद्यानन्तर्यश्रवणात् भाष्ये तेषामुपायोपेयभाव उक्तः ' यदावै सुखं लभते ' इति श्रुतौ लाभशब्दो बुद्धिवाची, लभतः प्राप्त्यर्थत्वादित्यभिप्रायेण सुखरूपता ज्ञातव्ये युक्तम् । नहि श्रवणादेः पूर्वमेव निरतिशयसुखप्राप्तिरुपपद्यते । सत्यव्यतिरिक्तविषयाणि जिज्ञासितव्यपदानि सपाद्य ववाचीनि ' यत्र नान्यत् ' इति वाक्यऽन्यदर्शनश्रवणादिनिषेधात् दृश्यमिथ्यात्वशङ्का स्यादिति तद्व्युदासाय तस्य वाक्यस्यार्थमाह—अयमर्थइति । तस्य भावादनुभूयमान इत्यध्याहारः. कुतः नहि ब्रह्मसद्भावाद्दुःखरूपवस्त्वन्तरादर्शनं भवति, ततोऽन्यत् सुखरूपात् ब्रह्मणोऽन्यत्, न पश्यति दुःखरूपं तद्व्यतिरिक्तं च किञ्चिन्नपश्यतीत्यर्थः ' योवै भूमा तत्सुखम् ' इत्युक्तनिरतिशयसुखरूपब्रह्मलक्षणपरत्वाद्वाक्यस्य तत्र दुःखदर्शनाभावहेतुरनवधिकातिशयसुखरूपत्वम् । अनवधिकातिशयसुखरूपत्वाद्दुःखं नपश्यतीत्यर्थः अन्यदर्शनाभावे हेतुमाह—ब्रह्मस्वरूपेति । कृत्स्नस्य वस्तुजातस्येति । स्वरूपान्तर्गताः ज्ञानादिगुणाः विभूत्यन्तर्गतं जगदखिलमित्यभिप्रायः । अभिप्रेतहेतुसमुच्चयार्थश्चशब्दः,

### श्रीभाष्यम्

यिता, ब्रह्मस्वरूपतद्विभूत्यन्तर्गतत्वाच्च कृत्स्नस्य वस्तुजातस्य; अत ऐश्वर्यापरपर्यायविभूतिगुणविशिष्टं निरतिशयसुखरूपं ब्रह्मानुभवन् तद्व्यतिरिक्तस्य वस्तुनोऽभावादेव किमप्यथ्य न्नपश्यति ; अनुभाव्यस्य सर्वस्य सुखरूपत्वादेव दु खं च न पश्यति, तदेवहि सुखं यदनुभूयमानं पुरुषानुकूलं भवति ॥

ननु चेदमेव जगद्ब्रह्मणोऽन्यतयाऽनुभूयमानं दुःखरूपं परिमितसुखरूपं च भवत्कथमिव ब्रह्मविभूतित्वेन तदात्मकतयाऽनुभूयमानं सुखरूपमेव भवेत्। उच्यते–कर्मवश्यानां क्षेत्रज्ञानां ब्रह्मणोऽन्यत्वेनानुभूयमानं कृत्स्नं जगत्तत्तत्कर्मानुरूपं दुःखं च परिमितसुखं च भवति। अतो ब्रह्मणोऽन्यतया परिमितसुखत्वेन दुःखत्वेन च जगदनुभवस्य कर्मनिमित्ततया

### श्रुतप्रकाशिका

ननु यत्रेतिपद ब्रह्मपरम् नतु विभूतिपरम्। नच तद्विषय पदान्तरमस्ति अतो ब्रह्मस्वरूपतद्विभूत्यन्तर्गतत्वादित्युक्तम्। अस्तुवा तद्वाचिशब्दः 'नान्यत्पश्यति' इत्ययुक्तम्। विभूतिर्हि ब्रह्मणोऽन्येति शङ्कायामुक्तं विवृणोति—अतऐश्वर्येति। अतः ब्रह्मणस्सुखरूपतायाः कृत्स्नविभूतेस्तदन्तर्भावस्य च प्रामाणिकत्वात् विभूतिविषयो गुणः विभूतिगुणः सएव ऐश्वर्यापरपर्यायं नियमनं तद्विशिष्टं ब्रह्म नहीशितव्यज्ञानविनैश्वर्यविशिष्टानुभवसम्भवः निरूपकेण विना निरूप्यज्ञानायोगादिति भावः। यद्वा अत्रैवोपनिषदि 'स भगवः कस्मिन्प्रतिष्ठितः' इति स्वे महिम्नि प्रतिष्ठितइति यदिवा न महिम्नीति गो अश्वमिह महिमेत्याचक्षते हस्तिहिरण्य दासभार्यं क्षेत्राण्यायतनानि नाहंब्रवीम्यन्योऽह्यन्यस्मिन्प्रतिष्ठितः इति श्रूयते अत्र 'स्वे महिम्नि प्रतिष्ठित' इत्युक्ते हस्त्यादीना नियाम्यादीना महिमशब्दवाच्यत्वात् तत्प्रतिष्ठितत्वशङ्काया 'यदिवा नमहिम्नि' इति हस्तिहिरण्यादिमहिमनिष्ठत्वं निषिद्ध तदेव शङ्काबीजमुपन्यस्य व्युदस्यति 'गो अश्वम्' इत्यादिना 'अस्य महिमानमिति वीतशोकः' 'एतां विभूतिं योगं च' इत्यादि श्रुतिस्मृतिषु परमात्मनो महिमवत्त्वावगमादिह न महिमनिषेधः अपितु विभूतिरूपमहिमप्रतिष्ठितत्वनिषेध इत्यवगम्यते। अतो महिमविभूत्यादिशब्दाश्च न स्वरूपमात्रपराः 'विभूतिर्भूतिरैश्वर्यम्' इत्यैश्वर्यपर्यायत्वादिति महिमापह्नवशङ्काव्युदासायैश्वर्यापरपर्यायेत्युक्तम्। इदानीं विभूतिरेव गुणः गुणशब्दो विभूतेरपृथक्सिद्ध्यभिप्रायः। विभूत्या गुणैश्चेति वाऽर्थः विभूतिगुणविशिष्टेति। यच्छब्द एव ब्रह्मविशिष्टपरइति भावः। पूर्वं विभूत्यन्तर्गतत्वादिति अन्वयहेतुरुक्तः व्यतिरेकरूपं हेतुमाह तद्व्यतिरिक्तस्येति। विशिष्टब्रह्मणोऽन्यदर्शनं निषिध्यते नत्वन्यदर्शनमित्यर्थः। विभूतिविशिष्ट ब्रह्मानुभाव्यं चेद्विभूतेर्दुःखरूपत्वदर्शनाद्दुःखादर्शनमनुपपन्नमित्यत्राह–अनुभाव्यस्येति। सर्वस्य सर्वविभूतिकस्येत्यर्थः पूर्वाभिप्रेतादेव हेतोरित्येवकाराभिप्रायः। सर्वस्य सुखरूपत्वं कथं आत्मगुणविशेषोहि सुखमित्यत्राह–तदेवहि सुखमिति। अनुकूलत्वंनाम स्वतइष्टत्वं तथानिष्टनिवृत्तिरूपतयेष्टसाधनतया च विनापीष्टत्वम् ॥

अनुभवविरोधेन चोदयति ननुचेति। नह्येकमेकदैव सुखदुःखात्मकविरुद्धस्वभावालिङ्गितमिति दृश्यते, नहि निम्बपत्रकं कस्यचिन्मधुर भवति, नच सर्वः कस्यचिदनुकूलबुद्धिबोध्यो भवति नच जगतस्सर्वस्य दुःखपरत्वमपह्नोतुं शक्यं सर्वैरप्युपगन्तव्यत्वात्। इतरथा तज्जिहासया ब्रह्मजिज्ञासानुपपत्तेः, अतःपरिशेषात् सुखरूपत्वमेव त्याज्यमित्यभिप्रायः स्वतोऽपरिच्छिन्नसुखरूपस्याप्युपाधितोऽन्यथारूपसम्भवादविरोध इति परिहरति उच्यतइति। कर्म तत्तिरोधानकृतमब्रह्मात्मकत्वज्ञान चोपाधिः। ततः किमित्यत्राह—अतो ब्रह्मणइति। स्वतो मधुरस्यापि दोषवत्त्वादननुकूलत्वे अनुकूलत्व-

### श्रीभाष्यम्

त्कर्मरूपाविद्याविमुक्तस्य तदेव जगद्विभूतिगुणविशिष्टब्रह्मानुभवान्तर्गतं सुखमेव भवति । यथा पित्तोपहतेन पीयमानं पयः पित्ततारतम्येनाल्पसुखं विपरीतं च भवति ; तदेव पयः पित्तानुपहतस्य सुखायैव भवति ; तथैव राजपुत्रस्य पितुर्लीलोपकरणमतथात्वेनानुसन्धीयमानं प्रियत्वमनुपगतं तथात्वानुसन्धाने प्रियतमं भवति ; तथा निरतिशयानन्दस्वरूपस्य ब्रह्मणोनवधिकातिशयासङ्ख्येयकल्याणगुणाकरस्य लीलोपकरणं तदात्मकं चानुसन्धीयमानं जगन्निरतिशयप्रीतये भवत्येव । अतो जगदैश्वर्यविशिष्टमनवधिकातिशयसुखरूप ब्रह्मानुभवंस्ततोऽन्यत्किमपि न पश्यति ; दुःखं च न पश्यति । एतदेवोपपादयति वाक्यशेष.- ' स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुनआत्मानन्दस्सस्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति अथ येऽन्यथाऽतो विदुरन्यराजानस्तेक्षय्यलोका भवन्ति तेषां सर्वेषु लोकेष्वकामचारो भवति ' (छां.७.२५.२) इति । स्वराडकर्मवश्यः । अन्यराजानः कर्मवश्याः । तथा ' न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् । सर्वं ह पश्यःपश्यति सर्वमाप्नोति सर्वश ' [७.२६.२) इति च । निरतिशयसुखरूपत्वं च ब्रह्मण' ' आनन्दमयोऽभ्यासात् ' (शारी.१.१.१२) इत्यत्र प्रपञ्चितम् । अतः प्राणशब्दनिर्दिष्टप्रत्यगात्मनोऽर्थान्तरभूतस्य सत्यशब्दाभिधेयस्य ब्रह्मणो भूमेत्युपदेशाद्भूमापरं ब्रह्म ॥

## सू—८ धर्मोपपत्तेश्च (१.३.८)

### श्रुतप्रकाशिका

दुःखविषयस्य केनचित्सम्बन्धित्ववशानादनुकूलत्वे च दृष्टान्तद्वयमाह—पित्तोपहतेनेति । दार्ष्टान्तिकेऽपि तादृक्त्वमाह—तथेति । ' यत्र नान्यत् ' इति वाक्यस्यार्थं निगमयति अतइति । एतत् औपाधिकदुःखरूपतायास्तद्विगमेऽनवस्थानं सवा एषइति । रत्यादिशब्दाना प्रीतिपरत्वे व्यधिकरणबहुव्रीहि. अनुकूलविषयपरत्वे साक्षाद्बहुव्रीहिः आनन्दशब्दो विभूतिगुणविशिष्टब्रह्मपरः । रतिः स्रक्चन्दनादिजन्या प्रीति. क्रीडा, उद्यानादिजन्या मिथुन स्त्रीसभगा । आनन्दः विभूतिजन्या । एव सर्वविधसुखानुभव उक्तः ' स्वराड्भवति ' ' अन्यराजानस्तेऽक्षय्यलोकाः ' इति च परमात्मप्रतिक्षेपः प्रतीयत इत्याशङ्क्याह—स्वराडिति । अन्यराजानः स्वराडिति पदद्वयेन उपाधितद्विगमौ दर्शितौ । दुःखरूपतया प्रतिपन्नस्यापि स्वतस्सुखरूपत्वे श्रुतिमाह—नपश्यइति । सर्वं पश्यति न तत्र दुःखरूपतां पश्यति, सुखरूपतामेव पश्यतीत्यर्थः । उदाहृतवाक्ये विभूत्यादिविशिष्टस्यानन्दरूपत्वमस्पष्टमिति तद्विशदयाह—निरतिशयेति । ' तदात्मानं स्वयमकुरुत तस्मात्तत्सुकृतमुच्यत इति यद्वै तत्सुकृतं रसोवै स. रसंह्येवायं लब्ध्वानन्दी भवति' ' आनन्दो ब्रह्मेति व्यजानात् आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते ' इति च वाक्येषु कार्यकारणावस्थविभूत्यादिविशिष्टस्यैव आनन्दत्वंहि स्फुटतरम् । सूत्रार्थमुपसहरति अतइति ॥

## सू—८ धर्मोपपत्तेश्च (१.३.८)

## श्रीभाष्यम्

अस्य भूम्नो येन धर्माः आम्नायन्ते ; तेऽपि परस्मिन्नेवोपपद्यन्ते । 'एतमृदतम्' (छां.७ २४.१) इति स्वाभाविकममृतत्वम् , 'स्वे महिम्नि' इत्यनन्याधारत्वम् , 'स एवाधस्तात्' (छां.७.२५ १) इत्यादि 'स एवेदं सर्वम्' (७.२५ १) इति सर्वात्मकत्वम् , 'आत्मतःप्राणः [७.२६.१) इत्यादिप्राणप्रभृतिसर्वस्योत्पादकत्वमित्यादयो हि धर्माः परमात्मन एव । यत्तु 'अहमेवाधस्तात्' (७.२५.१] इत्यादिना सर्वात्मकत्वमुपदिष्टम् , तद्भूमविशिष्टस्य ब्रह्मणो ऽहङ्ग्रहेणोपासनमुपदिश्यते 'अथातोऽहङ्कारादेशः' [७.२५.१) इत्यहग्रहोपदेशोपक्रमात्। अहमर्थस्य प्रत्यगात्मनोऽपि ह्यात्मा परमात्मेत्यन्तर्यामिब्राह्मणादिषूक्तम् । अतः प्रत्यगर्थस्य परमार्थपर्यवसानादहंशब्दोऽपि परमात्मपर्यवसायीति प्रत्यगात्मशरीरकत्वेन परमात्मानु सन्धानार्थोऽयमहंग्रहोपदेशः । परमात्मनस्सर्वशरीरतया सर्वात्मत्वात्प्रत्यगात्मनोऽप्यात्मा परमात्मा । नह्येव 'अथात आदेशः' [७.२५.२) इत्यादिना 'आत्मैवेदं सर्वम्' (७.२६.१) इत्यन्तेनोच्यते । एतदेवोपपादयितुं प्रत्यगात्मनोऽप्यात्मभूतात्परमात्मनस्सर्वस्योत्पत्तिरुच्यते 'तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आकाशः' (७.२६.१) इत्यादिना । उपासकस्यान्तर्यामितयाऽवस्थितात्परमात्मनस्सर्वस्योत्पत्तिरित्यर्थः । अतः परमात्मन प्रत्यगात्मशरीरकत्वज्ञानप्रतिष्ठार्थमहंग्रहोपासनं कर्तव्यम् । तस्माद्भूमविशिष्टः परमात्मेति सिद्धम् ॥

### इति भूमाधिकरणम्

## श्रुतप्रकाशिका

कस्य धर्मा इत्याकाङ्क्षाया पूरयन्व्याचष्टे अस्येति । पूर्वपक्षयुक्तिं परिहरति यत्त्विति । अहग्रहणोपासन, अहमर्थशब्दयोः परमात्मपर्यन्तत्वबुद्ध्योपासनम् । एतस्मिन्नस्मिंस्तद्बुद्धिरस्यादित्यत्राह—अहमर्थस्येति । न केवलम् अन्तर्यामिब्राह्मणादिषु अस्मिन् प्रकरणेऽपि सर्वात्मत्वमुक्तमिति दर्शयिष्यन् तत्प्रतिपादकस्य 'अथात आत्माऽऽदेशः' इति वाक्यस्यार्थमाह—परमात्मनइति । उपासकात्मनोऽप्यात्मत्व फलितमित्युक्तम्; अथ कण्ठोक्तमिति दर्शयितुं कण्ठोक्तिमर्द्धविदस्यार्थमाह—एतदेवेति । विजानत इति पदस्य षष्ठ्यन्तत्वज्ञापनाय व्याचष्टे उपासकस्येति । पूर्वपक्षयुक्तिं परिहारं निगमयति अतइति । अधिकरणार्थमुपसंहरति तस्मादिति ॥

### इति भूमाधिकरणम्

श्रीभाष्यम्

सा चाम्बरान्तधृतिरस्याक्षरस्य प्रशासनादेव भवतीत्युपदिश्यते ' एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः, एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः, एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्धमासा मासा ऋतवस्संवत्सरा इति विधृतास्तिष्ठन्ति ' [बृ.५.८.९] इत्यादिना। प्रशासनम्-प्रकृष्टं शासनम्। नचेदृशं स्वशासनाधीनसर्ववस्तुविधरणं बद्धमुक्तोभयावस्थस्यापि प्रत्यगात्मनस्सम्भवति। अतः पुरुषोत्तम एव प्रशासिताक्षरम्॥

## सू—११ अन्यभावव्यावृत्तेश्च (१.३.११)

श्रुतप्रकाशिका

## सू—१० सा च प्रशासनात् (१.३.१०)

ननु नाताम्बरान्तधृतेः परमात्मप्रशासनाधीनत्वं साक्षाच्छ्रुतमिति शङ्कां परिजिहीर्षन् कतिपयवस्तुशासनस्य जीवेऽपि सम्भवात्तद्व्यावृत्तिं च दर्शयन् प्रशासनशब्दं व्याचष्टे प्रकृष्टमिति। क्वचिदप्यप्रतिहतत्वेन विषयप्रकर्षाच्छासनस्य प्रकर्षः प्रकर्षस्य निवारकाभावाच्छासनस्याम्बरान्तविषयत्वमपि सिद्ध्यतीति हृदयम्। ततः किमित्यपेक्षायां प्रकृतेः परमात्मशासनकर्मत्वे हेत्वन्तरञ्च द्योतयञ्जीवव्यावृत्तिसिद्धिं दर्शयति। नचेदृशमिति। स्वशासनाधीनसर्ववस्तुविधरणमिति। अयमभिप्रायः, न केवलं शासनप्रकर्षादनपोदितात्प्रकृतेः प्रशासनकर्मत्वसिद्धिः, किंतु 'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिस्सर्वमिदं प्रशास्ति ' इत्यादिश्रुत्यन्तरेषु शासनकर्मोपस्थापकसर्वशब्दासङ्कोचाच्च तत्सिद्धिः॥

किंच सत्यशब्दनिर्वचने ' तानि ह वा एतानि त्रीण्यक्षराणि सत्यमिति तद्यत्सत्तदमृतं अथ यत्ति तन्मर्त्यं अथ यद्य तेनोभौ यच्छति ' इति मर्त्यशब्दवाच्याचेतनस्य तन्नियाम्यत्वं च प्रतीयते। मर्त्यशब्दोऽयमवयवशक्तया पूर्वं पूर्वावस्था(त्य)मा(त्य)चेतने वर्तते, नशरीरमात्रे। द्यावापृथिवीत्यादीनां तन्नियाम्यत्वाभावप्रसङ्गात्। किंच ' यस्याव्यक्तं शरीरम् यस्याक्षरं शरीरं यस्य मृत्युश्शरीरम् ' इति प्रधानस्य परशरीरत्वश्रवणादत्यन्तनियाम्यस्यैव शरीरत्वाच्च नियम्यत्वसिद्धिः। इह च ' कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च ' इति पृष्टे ' एतद्वै तदक्षरं गार्गि ' इत्यारभ्य ' एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतप्रोतश्च ' इत्यक्षरेणाव्याकृतस्य धारणं श्रूयते। अतश्शासनस्य प्रकर्षाच्छ्रुत्यन्तरानुग्रहाच्चाम्बरान्तधृतिरपि प्रशासनाधीनेति सौत्रशब्दोऽयमर्थतया हेतुवाचीत्यभिप्रायेणाह—अतइति। अम्बरान्तधृतिः प्रशासनादेव सिद्ध्यतीति यतः तत एवेत्यर्थः 'प्रशासितारं सर्वेषां' 'विद्यात्तु पुरुषं परम् ' इति ' उत्तमःपुरुषस्त्वन्यः इत्यादिवचनाभिप्रायेण पुरुषोत्तम एव प्रशासिताक्षरमित्युक्तम्॥

एवं प्रधानपुरुषव्यतिरेकौ सूत्रद्वयेन पृथगुपपादितौ। अथैकसूत्रेण प्राकरणिकचरमवाक्यविषयेणोभयव्यतिरेकमाह—

## सू—११ अन्यभावव्यवृत्तेश्च (१,३.११)

व्यावर्त्यते—निवर्त्यते। निवर्तकधर्मः प्रतिपाद्यत इत्यर्थः। ततश्च सूत्रस्थव्यावृत्तिशब्दो व्यावर्तकधर्मपर इति दर्शितं स्यात्, तेन विषयवाक्यानुगुण्यं सूत्रस्य स्यात् तत्र ह्यन्यनिवर्तकधर्मो द्रष्टृत्वादिरवगम्यते। द्वितीययोजनाया अपेक्षित-

श्रीभाष्यम्

अन्यभाव-अन्यत्वम्, प्रधानादिभावः। अस्याक्षरस्य परमपुरादन्यत्व वाक्यशेषे व्यावर्त्यते 'तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतं श्रोतृमतं मन्तृविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ, नान्यदतोऽस्ति श्रोतृ, नान्यदतोऽस्ति मन्तृ, नान्यदतोऽस्ति विज्ञातृ एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च (बृ ५ ८ ११)' इति। अत्र द्रष्टृत्व श्रोतृत्वाद्युपदेशादस्याक्षरस्याचेतनभूतप्रधानभावो व्यावर्त्यते, सर्वैरदृष्टस्यैव सतस्सर्वस्य द्रष्टृत्वाद्युपदेशाच्च प्रत्यगात्मभावो व्यावर्त्यते। अत्र इयमन्यभावव्यावृत्तिरस्याक्षरस्य परमपुरुषतां द्रढयति। एवं वाऽन्यभावव्यावृत्ति -अन्यस्य सद्भावव्यावृत्तिरन्यभावव्यावृत्तिः; यथैतदक्षरमन्यैरदृष्टं सदन्येषां द्रष्टृ च सत्स्वव्यतिरिक्तस्य समस्तस्याधारभूत एवमनेनादृष्टमेतस्य द्रष्टृ च

श्रुतप्रकाशिका

त्वात् 'नान्यदतोऽस्ति' इत्यादिकमुदाहृतम्। अस्मिन्वाक्ये प्रधानव्यावृत्तिसिद्धिं दर्शयति अत्रेति। अत्र 'अदृष्टम्' इति वाक्ये द्रष्टादिशब्दा रूपशब्दप्रभृतिबाह्याक्षविषयाणां मननाध्यवसेयाद्यन्तःकरणविषयाणां च साक्षात्कर्तृवाचकाः शासनस्य शासितव्यवस्तुदर्शनसापेक्षत्वात् 'नदृष्टेर्द्रष्टारम्' 'नश्रुतेः श्रोतारम्' 'नमतेर्मन्तारम्' इत्यादिना परस्य श्रवणमननत्वादिकर्तृत्वनिषेधेन तेषामयोग्यत्वात् 'पश्यत्यचक्षुस्स श्रृणोत्यकर्णः' इति रूपादिसाक्षात्कर्तृत्वश्रवणाच्च जीवव्यावृत्तिं दर्शयति सर्वैरिति। सर्वैः योगिभिः सर्वस्येति। रूपतदाश्रयादिप्रत्येकवर्गस्य सर्वपरस्सर्वशब्दः, असङ्कुचितवृत्तितया द्रष्टृशब्देन सर्वसाक्षात्कारस्याभिहितत्वसत्यादिशब्दानाम् असत्प्राज्ञादीनां निर्विषयत्वप्रसङ्गात्। सर्वैरदृष्टत्वादि मात्र प्रधानादीनामपि सम्भवतीति तद्व्यवृत्त्यर्थमदृष्टस्यैव सतस्सर्वस्य द्रष्टृत्वाद्युपदेशाच्चेत्युक्तम्। अदृष्टत्वादिविशेषितद्रष्टृत्वादिकं प्रत्यगात्मव्यावर्तकमित्यर्थः। प्रत्यगात्मनस्सर्वे प्रत्येकं स्वस्वाहंप्रत्ययवेद्या रूपादिविज्ञातारश्च, परन्तु रूपादिज्ञानवेलायां योगिभिरपि स्वस्वरूपवद्रूपादिवच्च नज्ञायते। निष्ठान्ते पदे तत्तद्विषयप्रतिपत्त्यव्यवहिततया परमात्मनोऽनवगतत्वं विवक्षितम्। अश्रुत-शब्दश्रवणदशायामज्ञातम् अमतं स्थाणुपुरुषाद्यर्थविचारदशायां तद्विषयप्रतिपत्त्यविज्ञातम् अध्यवसायदशायां घटादिवत् स्वस्वरूपवत्त्वानवगतम्। अतएवहि विशेषितं द्रष्टृत्वादिकं परमात्मासाधारणम्। यद्वा रूपशब्दाद्यर्थवेदिभिस्सर्वैरवेद्यत्वेन विशेषितं तत्तदर्थद्रष्टृत्वं समुच्चित्य चिदचिद्व्यावर्तकमित्यर्थः 'अन्यभावव्यावृत्तेः' इत्युक्तहेतोस्साध्याविशिष्टत्वशङ्का च शमयन्निगमयति अतइति। इयं व्यावर्तकधर्मान्वयरूपा व्यावृत्तिः परमपुरुषं साधयति अतः साध्याविशिष्टत्वव्युदासः। अस्यां योजनायां प्रधानपुरुषव्यावर्तकधर्मवाचिवाक्यानि विषयीभूतानीति चिदचिद्व्यावृत्तिः कण्ठोक्तस्स्यात् चशब्दउक्तहेतुसमुच्चयः॥

सूत्रान्तरेण सूत्रं योजयति एवंवेति। अक्षरार्थमाह—अन्यस्येति। 'नान्यत्' इत्यादिवाक्यस्य सूत्रविषयत्वं हृदि निधाय तस्यार्थमाह—यथैतदिति। यथास्मिन्ग्रामे देवदत्त एव पुरुषो नान्य इत्युक्ते नपुरुषमात्रनिषेधः अपितु प्रस्तुततुल्यपुरुषान्तरनिषेधस्स्यात्। पुरुषान्तराणां प्रमाणसिद्धतया निषेद्धुमशक्यत्वात्, एवमिहापि द्रष्ट्रन्तराणां प्रामाणिकत्वात् प्रकृततुल्यद्रष्ट्रादिनिषेधपरमिदं वाक्यमित्यभिप्रायेण प्रकृतगुणविशिष्टं वृत्तम्। आधारभूतामिति। समस्तस्य प्रशासनेनाधारभूतमित्यर्थः। निषेधविषयं दर्शयति एवमिति। एतस्य अक्षरस्य आधारभूतं प्रशासनेन धारकम्। एवं परमात्मनो नियन्तृतया आधारभूतद्रष्ट्रन्तराभावादधिकनिषेधपरमिदं वाक्यं व्याख्यातम्। एवं वा एतदेतिपदं व्याप्तिरिक्तस्य समस्तस्येति पदप्रयोजनपरम्, अक्षरादन्यत् समस्तजगत् प्रशासनेन धारकं तेनादृष्टं द्रष्टृ नास्तीत्यर्थः। तदा समनिषेधपरं वाक्यशेषस्स्यात्॥

## श्रीभाष्यम्

सदेतस्याधारभूतमन्यन्नास्तीति वदन् 'नान्यदतोऽस्ति द्रष्टृ' (५.८.११) इत्यादिवाक्यशेषोऽन्यस्य सद्भावं व्यावर्तयन्नस्याक्षरस्य प्रधानभावं प्रत्यगात्मभावं च प्रतिषेधति। किञ्च— 'एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसन्ति यजमानं देवा दर्वीं पितरोऽन्वायत्ताः' (बृ.५.८.९) इति श्रौतं स्मार्तं च यागदानहोमादिकं सर्वं कर्म यस्याज्ञया प्रवर्तते तदक्षरं परब्रह्मभूतः पुरुषोत्तम एवेति निश्चीयते। अपि च 'यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः अथ य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः' (बृ.५.८.१०) इति यदज्ञानात्संसारप्राप्तिर्ज्ञानाच्चामृतत्वप्राप्तिस्तदक्षरं परं ब्रह्मैवेति सिद्धम् ॥

### इति अक्षराधिकरणम्

## श्रुतप्रकाशिका

ननु 'नान्यदतोऽस्ति द्रष्टृ' इति वाक्यं द्रष्टॄणां पुरुषाणां ब्रह्मतादात्म्येन अतदात्मकत्वनिषेधपरं किं न स्यात्। न ऐक्यविधानस्याप्रकृतत्वात् ऐक्यविधिशेषो हि भेदनिषेधः व्यतिरेकस्यान्वयशेषत्वात्। यदि क्वचिदैक्यविधानाभावेऽपि भेदनिषेधसम्भवति, तत्र तु निर्वाहान्तरासम्भवादभ्युपगन्तव्यः, इह तु गत्यन्तरसम्भवादैक्यविध्यभावे भेदनिषेधपरत्वाश्रयणमयुक्तम्। किंच 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' इत्युपक्रम्य 'एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इत्युपक्रमोपसंहाराभ्यां प्रकरणस्य परमात्मनो विधारकताप्रतिपादनपरत्वमवगम्यते, तत्वैयपरं च धारके अभिहिते तस्यापि धारकान्तरशङ्का स्यात्, लोके धारकाणामपि धार्यत्वदर्शनात् यथा कारणानामपि कार्यत्वदर्शनेन परमात्मनोऽपि जगत्कारणत्वेनान्यकार्यत्वशङ्कायां तद्व्यावर्तनेन परमकारणत्वसिद्धये 'सकारणं करणाधिपाधिपो नचास्य कश्चिज्जनिता नचाधिपः' इति कारणान्तरनिषेधः परमकारणत्वापेक्षितत्वात् क्रियते, एवमिहापि परमात्मनः परमाधारत्वसिद्धये धारकत्वानिषेधोऽपेक्षितः। भेदनिषेधस्तु प्रकृतार्थानपेक्षितः अपेक्षितविधेरनपेक्षितविधानदौर्बल्यमदर्शितम्। किंच 'नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ' इति द्रष्टृश्रोत्रादीनां पृथक्पृथग्भेदनिर्देशश्च विफलः। द्रष्टुरेव श्रोतृत्वसम्भवात् यथा 'तदेवाग्निस्तद्वायुः' 'ज्योतींषि विष्णुर्भुवनानि विष्णुः' इत्यादिष्वग्निवायुज्योतिर्भुवनगिरिदिगादीनामन्योऽन्यभिन्नजातीयतया तेष्वन्यतमस्य ब्रह्मात्मकत्वोपदेशेऽपि तदन्यस्य ब्रह्मात्मकत्वासिद्ध्या प्रत्येकं ब्रह्मात्मकत्वोपदेशस्सफलः। एवं द्रष्टृश्रोतृमन्त्रादीनां भिन्नजातीयत्वाभावात् पृथग्भेदनिषेधवैयर्थ्यम्, न च वाच्यं 'ब्रह्मदाशा ब्रह्म दासा' इत्यादौ दाशेष्वेव दासत्वकितवत्वादिसम्भवेऽपि पृथक्तादात्म्योपदेशवदिहाप्युपपद्यत इति। दाशेभ्यो भिन्नजातीयानामपि दासकितवादीनां सम्भवेन श्रुतिवाक्यस्यपदानां तद्विषयत्वोपपत्तेः। अन्यथा तत्रापि वैयर्थ्यप्रसङ्गस्य दुर्निवारत्वात्। अत इदं वाक्यं प्रकृततुल्यद्रष्ट्रन्तरनिषेधपरम्। अन्यस्य सद्भावं व्यावर्तयन्निति। सूत्रस्थैरन्यभावव्यावृत्तिशब्दैः श्रुतिवाक्यस्था अन्यदस्तिनेतिशब्दाः प्रत्यभिज्ञाप्यन्त इति भावः। व्यावर्तयन्नित्यन्तेनाक्षरार्थ उक्तः। फलितमाह अस्याक्षरस्येति। अस्यां योजनायां सूत्राक्षरानुरूप्यं दर्शितम्। नियन्तृरूपधारकान्तररहित्यमेव कण्ठोक्तं भवति चिदचिद्व्यावृत्तिरर्थसिद्धा स्यात्। चशब्दः पूर्ववत्प्रोक्तसमुच्चयपरः, अपित्वनुक्तसमुच्चयपर इत्यभिप्रायेण चशब्दार्थमाह—किं

(गूढार्थसङ्ग्रह —' ब्राह्मणः अप्यत ' इति ब्राह्मण इत्यर्थमभिप्रेत्य ' यज्ज्ञानाच्चामृतत्वप्राप्तिः ' इति भाष्यम्।)

अथ वेदान्तसारः

## सू–९ अक्षरमम्बरान्तधृतेः (१.३.९)

'एतद्वैतदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनणु ' (बृ.५.८.८) इत्यादिना अभिहितमक्षरं परब्रह्म अम्बरान्तधृतेः । ' यदूर्ध्वं गार्गि दिवः ' (५.८.७) इत्यारभ्य सर्वविकाराधारतया निर्दिष्ट आकाशः ' कस्मिन्नोतश्च ' (५.८.७) इति पृष्ट ' एतद्वै तदक्षरम् ' (५.८.८) इति निर्दिष्टस्याक्षरस्य वायुमदम्बरान्तधृतेः सर्वविकाराधारतया कथितो वायुमदम्बरान्तकारण प्रधानम् ; तद्धारक परब्रह्म ॥

## सू—१० सा च प्रशासनात् (१-३-१०)

साच धृतिः ' एतस्य वा अक्षरस्य प्रशासने गार्गि (बृ.५.८ ९) इत्यादिना प्रकृष्टाज्ञया क्रियमाणा श्रूयते। अत इदमक्षरं प्रत्यगात्मा च न भवतीत्यर्थः ॥

## सू—११ अन्यभावव्यावृत्तेश्च (१.३.११)

अन्यभावः—अन्यत्वम् ' अदृष्टं द्रष्टृ'(५.८.११ इत्यादिना परमात्मनोऽन्यत्व ह्यस्याक्षरस्य व्यावर्तयति वाक्य शेषः । अतश्च परएव ॥

इति वेदान्तसारः

अथ वेदान्तदीप

## सू—९ अक्षरमम्बरान्तधृतेः [१.३.९]

वाजसनेयके गार्गिप्रश्ने ' सहोवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वदीर्घमलोहितमस्नेहमच्छायम् (बृ.५.८.८) इत्यत्राक्षरशब्दनिर्दिष्ट प्रधानम्, जीवो वा उत परमात्मा इति संशयः । प्रधानम् जीवोवा न परमात्मा-इति पूर्वःपक्षः । ' कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च ' (५.८.७) इत्युक्ते आकाशाधारतयोच्यमानमक्षरं प्रधानम्, जीवो वा ; प्रधानस्य विकाराधारत्वात् जीवस्याचिद्वस्त्वाधारत्वात् ; न परमात्मा इति । राद्धान्तस्तु—' यदूर्ध्वं गार्गि दिवः ' (५.८.७) इत्यारभ्य, कालत्रयवर्तिनः कृत्स्नस्याधारतया निर्दिष्ट आकाशोऽव्याकृतमेव, न वायुमानाकाशः । तत स्थात् ' कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च ' (५.८.७) इति पृष्टे तदाधारतयोच्यमानमेतदक्षरं न प्रधानं भवितुमर्हति ; नापि जीवः ' एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत ' (५.८.९) इत्यारभ्य प्रशासनात् सर्वाधारत्वश्रुतेः । सूत्रार्थस्तु ' एतद्वै तदक्षरं गार्गि ' (५.८.८) इति निर्दिष्टमक्षरं परमात्मा, अम्बरान्तधृतेः अम्बरं वायुमानाकाशः, अम्बरान्तः—अम्बरपारभूतम् अम्बरकारणमिति यावत् ; कारणपर्यन्तो हि कार्यस्यान्तः । अम्बरान्त अव्याकृत प्रधानम् तस्य धृतेः धारणात् । अव्याकृतस्यापि धृतेरक्षरं परमात्मैवेत्यर्थः ॥

## सू—१० सा च प्रशासनात् (१.३.१०)

सा च अम्बरान्तधृति: 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ' (बृ.५.८.९) इति प्रशासनात् श्रूयते। प्रशासनम्—प्रकृष्टं शासनम् अप्रतिहताज्ञा। नचाप्रतिहताज्ञया कृत्स्नस्य चिदचिदात्मकस्य जगतः धृतिर्जीवे उपपद्यते; अतो नजीवः॥

## सू—११ अन्यभावव्यावृत्तेश्च (१.३.११]

अन्यभाव —अन्यत्वम् अस्याक्षरस्य परमपुरुषादन्यद् व्यावर्तयति वाक्यशेष 'अदृष्टं द्रष्टृ' इत्यादिना सर्वैरदृष्टमेतदक्षरं सर्वस्य द्रष्टृत्वादिप्रधानजीवासम्भावनीयार्थप्रतिपादनात्॥

इति वेदान्तदीप

अथ अधिकरणसारावळी

प्रख्याताकाशपूर्वस्वविकृतिवहनादक्षराख्यं प्रधानं
तस्याप्याकाशतोऽन्तो धृतनिखिलजगत् क्षेत्रितत्त्वं तु तत्स्यात्
मैवं द्रष्टृत्वपूर्वैरनितरनियतैरीशासनायत्तधृत्या
किञ्च द्रष्ट्रन्तरस्य व्युदसनमिह तत्तस्य तद्द्रष्टृपोहः॥

॥ इ ति अ क्ष रा धि क र णं स मा प्त म्॥



## अथ ईक्षतिकर्माधिकरणम्

### श्रीभाष्यम्

### सू—१२ ईक्षतिकर्म व्यपदेशात्सः (१.३.१२)

आथर्वणिकास्सत्यकामप्रश्नेऽधीयते—' य पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नः । यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्तस्ससामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते ' (प्रश्न.५.५) इति । अत्र ध्यायतीक्षतिशब्दावेकविषयौ ध्यानफलत्वादीक्षणस्य ' यथा क्रतुरस्मिँल्लोके पुरुषः ' [छां।३.१४.१) इति न्यायेन ध्यानविषयस्यैव प्राप्यत्वात् ' परं पुरुषम् ' (प्रश्न.५.१) इत्युभयत्र कर्मभूतस्यार्थस्य प्रत्यभिज्ञानाच्च ॥

तत्र संशय्यते—किमिह ' परं पुरुषम् ' इति निर्दिष्टो जीवसमष्टिरूपोऽण्डाधिपतिश्च

## अथ ईक्षतिकर्माधिकरणम्

### श्रुतप्रकाशिका

### सू—१२ ईक्षतिकर्म व्यपदेशात्सः (१.३.१२)

( अत्र स इत्युक्तिरस्मिन्पादे सर्वाधिकरणेषु साध्यप्रतिज्ञानुवृत्त्यर्था । यथा प्रथमपादे भेदव्यपदेशाच्चान्य इत्यन्य शब्दोक्तिः । यथा च द्वितीये 'अतएव च स ब्रह्म' इति ब्रह्मशब्दोक्तिः, यथा चतुर्थे ' वदतीति चेन्न प्राज्ञो हि प्रकरणात् ' इति प्राज्ञशब्दोक्तिश्च । तद्वत् पूर्वं ' अदृष्टं द्रष्टृ ' इति परमात्मनो द्रष्टृत्वमुक्तम् तर्हीक्षतिकर्म केनोक्तो न परमात्मेति शङ्कया सङ्गतिः । यद्वा पूर्वाधिकरणे अर्थविरोधेनाकाशशब्दस्य [illegible] तथाऽन्तरिक्षशब्दस्य [illegible]न्तरेण निर्वाहस्सुवच इति शङ्कया सङ्गतिः । यद्वा आकाशशब्दस्य अन्यगन्तृपरत्ववत् ब्रह्मलोकशब्दस्य नान्यथा निर्वाहोऽस्तीति शङ्कया सङ्गतिः । ' ससामभिरुन्नीयते ' ' एतत्सामगायन्नास्ते ' इतिवत् सामगानसहितैरित्यर्थः, यद्वा सान्त्वनादियुक्तैरातिवाहिकैरुन्नीयत इत्यर्थः । परैरीक्षतिकर्मणः [illegible] कृत्वा एकविषयतया सिद्धान्त उक्तः । तदनुपपन्नमित्यभिप्रायेणाह—अत्र ध्यायतीति । यथोपासनफलप्राप्तिन्यायात् ध्यायति कर्मैवेक्षतिकर्म । एकत्र परं पुरुषं, अन्यत्र ' परात्परं पुरुषम् ' इति च, अतो नाविषयैक्यमित्याह—परपुरुषमिति । यत्र पञ्चम्यन्तं पदं नास्ति तत्राप्यर्थसामर्थ्यात्तत्प्राप्नोतीति भावः ॥

यादवप्रकाशीयेतु जीवो हि ध्यातव्यः, तस्मात्पर ईक्षितव्यस्तु मुक्तजीव इति पूर्वपक्षितम्, तदध्ययनायुक्तमिति दर्शितम् अभिध्यातव्याज्जीवात् परो मुक्तजीव इत्युक्ते बद्धजीवो ध्यातव्य इत्युक्तं स्यात् बद्धात् [illegible] प्राप्तिरित्यनुपपन्नम् । तस्माद्ध्यायतीक्षत्योरुभयोरपि चतुर्मुखविषयत्वमेव पूर्वपक्षयितुं युक्तम् । तदयमाह— तत्रेति । किं ध्यायतीक्षतिकर्म चतुर्मुखः ? उत परमात्मा तदर्थं [illegible] किं मुख्याः ? उतामुख्याः, तदर्थं किं जीवघन शब्देन चतुर्मुखव्यतिरिक्तस्य ग्रहणं उत तस्यापि ग्रहणमिति । कथं ब्रह्मलोकशब्दश्चतुर्मुखस्थानपरः ? उत परव्योमपरः, किमीक्षतिकर्मविषये वाक्ये ' यत्तत्कवयो वेदयन्ते ' इति वैष्णवं पदं प्रत्यभिज्ञाप्यते ? नेति यद्वा प्रत्यभिज्ञानाभाव-

## श्रीभाष्यम्

चतुर्मुखः, उत सर्वेश्वरः पुरुषोत्तमः इति । किं युक्तम् समष्टिक्षेत्रज्ञ इति । कुतः? ' सयोहवै तद्भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत कतमं वाव सतेन लोकं जयति ' (प्रश्न.५.१) इति प्रक्रम्यैकमात्रं प्रणवमुपासीनस्य मनुष्यलोकप्राप्तिमभिधाय द्विमात्रमुपासीनस्य अन्तरिक्षलोकप्राप्तिमभिधाय त्रिमात्रमुपासीनस्य प्राप्यतयाऽभिधीयमानो ब्रह्मलोकोऽन्तरिक्षात्परो जीवसमष्टिरूपस्य चतुर्मुखस्य लोक इति विज्ञायते ; तद्गतेन चेक्ष्यमाणस्तल्लोकाधिपतिश्चतुर्मुख एव । ' एतस्माज्जीवघनात्परात्परम् ' (प्रश्न.५-१) इति च देहेन्द्रियादिभ्यः परादेहेन्द्रियादिभिस्सह घनीभूताज्जीवव्यष्टिपुरुषाद्ब्रह्मलोकवासिनस्समष्टिपुरुषस्य चतुर्मुखस्य परत्वेनोपपद्यते । अतोऽत्र निर्दिश्यमानः परः पुरुषस्समष्टिपुरुषश्चतुर्मुख एव । एवं चतुर्मुखत्वे निश्चिते अजरत्वादयो यथाकथञ्चिन्नेतव्याः ॥

इति प्राप्ते प्रचक्ष्महे—' ईक्षतिकर्मव्यपदेशात्सः ' ईक्षतिकर्म सः परमात्मा । कुतः ? व्यपदेशात् व्यपदिश्यते हीक्षतिकर्म परमात्मत्वेन । तथाहि ईक्षतिकर्मविषयतयोदाहृतेश्लोके ' तमोङ्कारेणैवायतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परं च ' (प्रश्न.५.७) इति । परं शान्तमजरममृतमभयमितिहि परमात्मन एवैतद्रूपम् ' एतदमृतमेतदभयमेतद्ब्रह्म ' (छां ४.१५ १) इत्येवमादिश्रुतिभ्यः । ' एतस्माज्जीवघनात्परात्परम् ' (प्रश्न.५.५) इति च परमात्मनएव व्यपदेशः ; न चतुर्मुखस्य तस्यापि जीवघनशब्दगृहीतत्वात । यस्यहि कर्म निमित्तं देहित्वं स जीवघनइत्युच्यते ; चतुर्मुखस्यापि तच्छ्रूयते ' यो ब्रह्माणं विदधाति पूर्वम् '(श्वे

## श्रुतप्रकाशिका

वात् ब्रह्मलोकशब्दस्य चतुर्मुखलोकपरत्व यदा च जीवघनशब्देन चतुर्मुखस्याग्रहण तदा शान्त वादीनाममुख्य वाद्ध्यायतीक्षतिकर्मचतुर्मुखस्यात् । यदा वैष्णवपदप्रत्यभिज्ञानेन ब्रह्मलोकशब्द. परमव्योमवाची, यदा च जीवघनशब्देन चतुर्मुखस्यापि ग्रहण तदानीं शान्तत्वाजर वादीना मुख्यत्वाद्ध्यायतीक्षतिकर्मपरमात्मेति सिद्धान्त. । चतुर्मुखस्येति । भूम्यन्तरिक्षक्रमप्राप्तश्चतुर्मुखलोकइत्यर्थ. । ततःकिमित्यत्राह–तद्गतेनचेति । ' जीवघनात् परात्परम् ' इति निर्देश. कथमुपपद्यत इत्यत्राह–एतस्मादिति । जीवघनपरशब्दयोस्सामानाधिकरण्येनोपपद्यत इत्यर्थ. । ब्रह्मणस्समष्टिपुरुषत्व देवतिर्यग्भावापेक्षया अजरत्वादयो यथाकथञ्चिन्नेतव्याइति । चिरकालस्थायित्वाभिप्रायेण वा चतुर्मुखस्यैव परिशुद्धावस्थस्वरूपपरत्वेन वा निर्वाह इतिभावः । अतएवोक्रमे ' परचापरं च ' इति निर्देशश्च कृतनिर्वाहः ॥

सिद्धान्ते परमात्मन एवैतद्रूपमिति । एतद्रूप नपुंसकान्तशब्दनिर्दिष्ट स्वरूपम् । चतुर्मुखपरत्वेहि पुल्लिङ्गान्तता स्यात् । यद्वा एतद्रूपम् एतद्वाक्यप्रतिपादित रूपम् । एवमर्थद्वयेऽप्यनुगुण श्रुत्य तरवाक्यमाह— एतदमृतमिति । अनेन सइति सौत्रपदस्य प्रयोजन दर्शित भवति अधिकारादेव साध्यप्रतिज्ञा सिद्धेस्तस्य प्रयोजनंहि वक्तव्यम् ' शान्तमजरममृतमभयम् ' इति व्यपदेशस्य कथ परमात्मसाधकत्वमित्यपेक्षाया श्रुत्यन्तरेषु परमात्मन. तादृक्त्वेन प्रसिद्धेरिति वक्तव्यम् । अनस्तथात्वेन श्रुत्यन्तरप्रसिद्धिद्योतन स इति पदस्य प्रयोजनमिति । व्यपदेशशब्दविवक्षित हेत्वन्तरमाह–एतस्मादिति । कथ चतुर्मुखस्यैतद्व्यपदेशासंभव इत्यत्राह—तस्यापीति । कथ तस्य जीवघनशब्दगृहीतत्वमित्यत्राह–यस्यहीति । कर्मकृतदेह दर्शयति चतुर्मुखस्यापीति । सशरीरत्वादेवहि चतुर्मुख नामितिभाव ॥

### श्रीभाष्यम्

६.१८] इत्यादौ । यत्पुनरुक्तमन्तरिक्षलोकस्योपरि निर्दिश्यमानो ब्रह्मलोकश्चतुर्मुखलोकइति प्रतीयते, अतस्तत्रस्थश्चतुर्मुख इति ; तदयुक्तम् । 'यत्तच्छान्तमजरममृतमभयम्' (प्रश्न. ५.७) इत्यादिनेक्षतिकर्मणः परमात्मत्वे निश्चितेसति ईक्षितुः स्थानतया निर्दिष्टो ब्रह्मलोको न क्षयिष्णुश्चतुर्मुखलोको भवितुमर्हति । किञ्च 'यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्तस्ससामभिरुन्नीयते ब्रह्मलोकम्' (५.२) इति सर्वपापविनिर्मुक्तस्य प्राप्यतयोच्यमानं न चतुर्मुखस्थानम् । अत एव चोदाहरणश्लोके इममेव ब्रह्मलोकमधिकृत्य श्रूयते 'यत्तत्कवयो वेदयन्ते' [सुबाल.६ ख] इति । कवयः सूरयः । सूरिभिर्दृश्यं च वैष्णवं पदमेव 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' (प्रश्न.५.२) इत्येवमादिभ्यः । नचान्तरिक्षात्परश्चतुर्मुखलोकः मध्ये स्वर्गलोकादीनां बहूनां सद्भावात् । अतः 'एतद्वै सत्य काम परं चापरं ब्रह्म यदोंकारस्तस्माद्विद्वानेतेनैवायनेनैकतरमन्वेति' (सुबाल.६.ख] इति प्रतिवचने यदपरं कार्यं ब्रह्म निर्दिष्टं तदैहिकामुष्मिकत्वेन द्विधा विभज्यैकमात्रं प्रणवमुपा·

### श्रुतप्रकाशिका

ननु कथं 'योब्रह्माणम्' इति श्रुत्या चतुर्मुखदेहस्यकर्मनिमित्तत्वावगमः नह्यत्र कर्मसम्बन्धः श्रूयते । उच्यते— कारणवाक्येषु 'ब्रह्म वा इदमेक एवाग्र आसीत्' इत्यारभ्य 'यान्यन्यानि देवक्षत्राणी इन्द्रो वरुणस्सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः' इति सृज्यतया श्रुतानामिन्द्रवरुणसोमयमादीनां कर्मवश्यत्वमवतिष्ठते, एवमेव चतुर्मुखस्याप्यपवादश्रुत्यभावात्सृज्यत्वेन स्वतः प्रसक्तकर्मवश्यत्वमवतिष्ठत इति आदिशब्देन 'योवै वेदांश्च प्रहिणोति तस्मै' इति पादोऽपि विवक्षितः । तेनोपदेशसापेक्षज्ञानप्रसरतया सङ्कुचितज्ञानत्वं स्वतःप्राप्तं इन्द्रविरोचनादीनामुपदेशसापेक्षतयाहि सङ्कुचितज्ञानत्वावगमः । भगवतस्सान्दीपानिप्रभृतिगुरूपदेशसापेक्षत्वं लीलात्ववचनैर्पोतं वाक्य ज्ञानसङ्कोचसाधकं इन्द्रविरोचनादीनामिव चतुर्मुखस्याप्यपवादरहितमुपदेशसापेक्षत्वं सङ्कुचितज्ञानत्वसाधकमिति तेनापि सङ्कोचककर्मसम्बन्धसिद्धिः । एवं सृज्यत्वादुपदेशसापेक्षज्ञानप्रसरत्वाच्च कर्मवश्यत्वच्चतुर्मुखस्य जीवघनशब्दगृहीतत्वसिद्धिः ॥

यत्पुनरित्यनूदितं पूर्वपक्षहेतुं परिहरति तदयुक्तमिति । परमात्मलोकत्वे हेतुत्रयमाह— यत्तदित्यादिना । कथं यस्सूरयइति । कवयः क्रान्तदर्शिनः अकर्मवश्यत्वादसङ्कुचितज्ञानाः । सूरयश्च ज्ञानाधिकाः प्रसिद्धाः अतोऽर्थवशात्सूरिप्रत्यभिज्ञानमित्यर्थः । ततः किमित्यत्राह—सूरिभिरिति । एवमादिभ्यइति । आदिशब्देन 'तद्विप्रासो विपन्यवः' 'यत्र ऋषयः प्रथमजा येपुराणाः' 'यत्र पूर्वे साध्यास्सन्ति देवाः' इत्यादिवाक्यानि विवक्षितानि, अजरत्वादिभिर्निश्चितपरमात्मभावस्य स्थानत्वात्, सर्वकर्मविनिर्मुक्तस्य प्राप्यस्थानत्वात्, सूरिभिर्दृश्यत्वप्रत्यभिज्ञानाच्च नचतुर्मुखलोकइत्यर्थः । लोकक्रमप्रत्यभिज्ञानभङ्गस्यास्वरसत्वमाशङ्क्याह—नचेति । अस्वारस्य तुरयमिति भावः ॥

ननु नास्माकं व्यवहितत्वादस्वारस्यं अन्तरिक्षशब्दस्य ब्रह्मलोकादर्वाचीनलोकानां प्रदर्शनार्थत्वात् । ब्रह्मलोकश्च प्राकृतलोकद्वयसाहचर्यात् प्राकृतलोक एव स्यादित्यत्राह—अत एतद्वैसत्यकामेति । अतः उदाहृतब्रुवाक्यस्वारस्यानुगुण्यात् 'परं चापरं च ब्रह्म यदोङ्कारः' इति सामानाधिकरण्यं वाच्यवाचकभावनिबन्धनं ओङ्कारवाच्यं परापररूपं ब्रह्मेति वा परापररूपब्रह्मवाचकओङ्कारइतिवाऽर्थः, अनन्तरं एतेन एकतरमिति पदाभ्यामोङ्कारस्य ब्रह्मणश्च निर्देशात् । अयनेन उपायभूतेन एकतरं कार्यकारणब्रह्मणोरन्यतरत् यदपरं कार्यं ब्रह्मेति । चतुर्मुखलोकस्यापरब्रह्मशब्दवाच्यत्वमेव

## श्रीभाष्यम्

सीनानामैहिकं मनुष्यलोकावाप्तिरूपं फलमभिधाय द्विमात्रमुपासीनानामामुष्मिकमन्तरिक्षशब्दोपलक्षितं फलंचाभिधाय त्रिमात्रेण परब्रह्मवाचिना प्रणवेन परं पुरुषं ध्यायतां परमेव ब्रह्म प्राप्यतयोपदिशतीति सर्वं समञ्जसम् । अत ईक्षतिकर्म परमात्मा ॥

### इति ईक्षतिकर्माधिकरणम्

## श्रुतप्रकाशिका

पुन नतु परब्रह्मलोक व 'कार्यं बादरि' 'कार्यात्यये' 'परंजैमिनि.' इति तस्य कार्यलोकत्वव्यपदेशात् ततःपृथग परब्रह्मव्यपदेशाच्चेति दर्शित कार्यब्रह्मशब्देन ऐहिकामुष्मिकत्वेन द्विधा विभज्येति । उपरि पृथक्पदत्वेन कीर्तनादिभागाऽभिप्रेत इत्यर्थः परावरशब्दयो: कारणकार्यपरत्वात् कार्यलोकस्य प्राकृत व सिद्धमिति कारणब्रह्मलोकस्याप्राकृतत्वमकार्यं वादेव सिद्धम् । अत. प्रकृताप्राकृतरूपेण प्राप्यलोकविभाग, प्राकृतेप्यैहिकामुष्मिकरूपेण विभागश्च श्रुत्यभिप्रेत, उपरि पृथक्करणत्वेन कीर्तनाविशेषात् । अत ऐहिकामुष्मिकविभागोक्तिः, प्राकृताप्राकृतविभागस्य प्रदर्शनार्थत्वमाह—आमुष्मिकमिति । चतुर्मुखलोकस्याप्यन्तरिक्षशब्दोपलक्ष्य वे सङ्ग्राहकमामुष्मिक वमस्ति चतुर्मुखलोकव्यतिरिक्तो परेषां सङ्ग्राहकाकारो नास्तीति वैषम्यमभिप्रेतम् । अन्तरिक्षशब्दोपलक्षितमिति । उपलक्षणतया व्यवधानपरिहारस्तुल्यः, सङ्ग्राहकलाभोऽधिक इतिभाव । पर पुरुष ध्यायतामिति 'पर पुरुषमभिध्यायीत' इतिवाक्य सारित तेन चतुर्मुखलोकप्राप्तिस्तत्क्रतुन्यायविरोधस्सूचित । परमेव ब्रह्मेति । चतुर्मुखलोकस्य प्राप्यत्व 'परात्पर पुरिशयपुरुषमीक्षते' इति फलवचनस्यपुरुषशब्दविरोध एवकाराभिप्रेत । एव कार्यब्रह्मान्तर्गतस्य चतुर्मुखलोकस्य तत पृथक्करणं परब्रह्मशब्दाविषयस्य तस्य परमात्मप्राप्तु प्राप्यत्वाश्रयण तत्क्रतुन्यायविरोध फलवचनविरोधश्चेत्यनेकयुक्तिभि प्राकृतलोकद्वयसाहचर्यं निरस्त आदावेव 'परंचापरं च' इति प्राप्यविभागस्याभिहितत्वात् प्राकृतसाहचर्ययुक्तिरुपक्रमोन्मूलितात्युक्त भवति । सर्वंसमञ्जसमिति ' परपक्षस्थानुपपत्तयस्स्वपक्षे न सन्ति, उपलक्षणतया व्यवधानपरिहारस्समानः 'अजरमभयम्' 'परात्परं पुरिशय पुरुषम्' 'यथा पादोदरस्त्वचा विनिर्मुक्त' 'यत्तत्कवयो वेदयन्ते' इत्यादीनि च वाक्यानि स्वरसानीति वैषम्यमित्यर्थः, अधिकरणार्थमुपसंहरति—अतइति ॥

### इति ईक्षतिकर्माधिकरणम्

## गूढार्थसङ्ग्रह

### अथ ईक्षतिकर्माधिकरणम्

'ईक्षतिकर्म व्यपदेशात्स' अत्र 'स' इति निर्देशेन बहवोऽर्थास्सूच्यन्ते । ध्यायतीक्षतिकर्मविषय वनैकस्य पुरुषस्य श्रूयत इत्युभयोरभेद इति, सङ्गतिरपि सूचिता भवति । 'द्युभ्वाद्यायतनम्' इति पादोपक्रम धारकत्वरूप माधारत्व यदुक्त तत्पूर्वाधिकरणे प्रधानाधीनमेवति निर्णीतम् । एतेन प्रशासिता धारकश्च एकएवेत्युक्त भवति शासिता नियामकश्चेत्यादय: पर्यायशब्दा । अन्तर्याम्यधिकरण एव शरीरिशरीरभावनिर्देशपूर्वक शरीरान्तर्वर्तिन: नियामकत्व

## गूढार्थसङ्ग्रहः

प्रतिपादितम् । अक्षराधिकरणेऽपि ओतप्रोतभावेन पदार्थानाममुक्तया अविभागस्य ततसिद्धतया शरीरशरीरिभावो दृढी-कृतो भवति ॥

अत्र पुरुषशब्दस्य 'पुरिशयम्' इति विग्रहप्रदर्शनेन सर्वशरीर्यर्थकतया सर्वनियामकत्वरूपं प्रशासितृत्व प्रति-पाद्यते । इदं च जीवे न संभवतीति पूर्वाधिकरणे निरूपितम् । हिरण्यगर्भेतरजीवाना तदसंभवेऽपि हिरण्यगर्भस्य जीव-समष्टिभूतस्य व्यष्टिसृष्टिकर्तृत्वस्य सिद्धान्तसिद्धतया सएवात्र विवक्षित इति पूर्वपक्षः । अयमर्थः 'समष्टिक्षेत्रज्ञः' इत्यादि भाष्यसूक्तया सूच्यते । एतेन 'स' इत्यनेन अधिकरणद्वयनिर्णीतः परमात्मैवेत्युक्त भवति । एवं स इति निर्देशेन निर्वि शेषस्यात्र विवक्षा नास्ति, चतुर्मुखलोके निर्विशेषपरब्रह्मध्यानस्य, तरतमभावापन्नमेव फलम् । अपरब्रह्मप्राप्तिरेव ब्रह्मप्राप्ति विवक्षिता । ध्यानं अतत्वापरब्रह्मविषयक ईक्षणंतु तत्वपरब्रह्मविषयम् । तत्र विचारेणैव निर्विशेषपरब्रह्मविषया ईक्षणेन पुरुषमीक्षत इति फलनिर्देशः ब्रह्मलोक प्राप्तस्य क्रममुक्तिरेव विवक्षिता इति परेषां प्रक्रिया ॥

नायमर्थः श्रुतिसूत्रयोः विवक्षितः 'स' इति पुलिङ्गनिर्देशेन 'परात्पर पुरिशयम्' इति वाक्ये पुल्लिङ्गान्तवि-शेषणविशेष्यशब्दैः निर्दिष्टं विवक्षितम् । तत्रच ध्यानवाक्योक्तवैलक्षण्यापेक्षया ईक्षतिवाक्यवैलक्षण्यं वर्तते । तेनच सामान्यतः अर्थः ध्याने, अर्थवैशद्यमीक्षणे स्फुटम् । तेनानन्तत्वस्य सर्वविद्याऽनुयायित्वेन सर्वशरीरत्वरूपतया सामान्येन सर्वेषा-मुपासनाविषयत्वं सभवति । उपासनाविषयातिरिक्तविषयानुभवएव नास्तीति सूचनेन यथाक्रतुन्यायं परसम्मतार्थो न विवक्षित इति सिद्ध्यति । यथाक्रतुन्यायार्थश्च सर्वत्रप्रसिद्ध्यधिकरण सूत्रकारैरेव निर्धारित इति पूर्वमेवोक्तम् । एवमीक्षणकर्मणि परात्परत्वस्य पुरिशयत्वस्य च प्रतिपादनेन 'सर्वासु पूर्षु पुरिशयः' इति बृहदारण्यकश्रुत्यनुसारेण अत्रापि सर्वशरीरिण एवेक्षण औपनिषदपुरुषस्यैवेदमीक्षणम् । अत्र सर्वेऽर्थाः विशेषणतया प्रविष्टाः । अत्र निर्विशेषस्य विशेषणद्वयप्रतिपाद्यधर्माविषयकस्य ईक्षण न भवितुमर्हति । एतेनापूर्वत्वं नास्तीति शङ्काऽपि प्रत्युक्ता । ब्रह्मलोकं प्राप्ताना-मेतादृशविशेषणस्यार्थसिद्धत्वासम्भवात् । 'यथा पादोदरस्त्वचा विनिर्मुच्यते–ससामभिरुन्नीयते ब्रह्मलोकम्' इतिश्रुति-क्रमः । अत्र पापविमोकानन्तरं ब्रह्मलोकप्राप्तिः श्रूयते । द्विमात्रेणोपासकस्य पुनरावृत्तिः पूर्वमुक्ता तेनैव त्रिमात्रेणोपास-कस्यापुनरावृत्तिःसिद्धा । एतेनापुनरावृत्तिफलकोपासनकर्मभूतः ईक्षणकर्मभूतरसएवेति प्रतिपादनं सिद्धम् ॥

'अश्वइव रोमाणि विधूय पापं–ब्रह्मलोकमभिसंभवामीति' छान्दोग्ये अपुनरावृत्तिश्रुतेः पूर्वं पठिता । तत्र पाप-विनिर्मोकः ब्रह्मलोकप्राप्तिश्चेत्युभय प्रतिपादितम् । तत्र 'अकृतम्' इति विशेषणेन ब्रह्मलोकस्य नित्यत्व सिद्धम् । तेन *'ससामभिरुन्नीयते ब्रह्मलोकम्' इत्यत्र प्रकृतिमण्डलादूर्ध्वं ब्रह्मलोक एव विवक्षितः, नपुनस्सत्यलोक इति सिद्ध्यति ।* उपक्रमे 'प्रायणान्तमोङ्कारमभिध्यायीत कतमं वाव सतेन लोकं जयति' इति प्रश्नः । 'ऋग्भिरेतं यजुरन्तरिक्षं ससा-मभिः यत्त कवयो वेदयन्ते' 'तमोङ्कारेणायतनेनान्वेति विद्वान्––परंचेति' इत्युपसंहारे 'ऋग्भिरेतं यजुर्भिरन्तरिक्षम्' इत्यत्र लोकवाचिशब्द उपात्तः । 'ससामभिः' इत्यत्रतु लोकवाचिशब्दो नोपात्तः तत्रचेदमेव बीजम् । 'ब्रह्मलोकम्' इत्यत्र ब्रह्मसंबन्धिलोकस्य पूर्वमभिधानेन तद्विषयकब्रह्मनिर्धारणे ब्रह्मलोकोऽपि निर्धारितो भवति । 'ब्रह्मलोकम्' इत्यत्र चतुर्मुखलोको नविवक्षितः । ब्रह्मशब्दस्य तत्रामुख्यत्वात् परब्रह्मणः लोके प्राप्तिः न भवतीति न भ्रमितव्यम् । तल्लोकत-दनुभवितृपुरुषाणां सत्त्वात् इत्यभिप्रायेण 'यत्तत्कवयो वेदयन्ते' इत्युक्तम् अत्र 'तेनोत्तरमं स्थानं यद्धे पश्यन्ति सूरयः' इति वचनोपबृंहिता 'तद्विष्णोःपरमं पदं सदा पश्यन्ति सूरयः' इति श्रुतिर्मूलमिति प्राक् (१.१.१.सू,४.पु.) उक्तम्। 'तमोङ्कारेणायतनेनान्वेति विद्वान्' इत्यत्रोङ्कारस्य परसम्मतरीत्या ब्रह्मलोकप्राप्तिसाधकस्य परम्परया परब्रह्मप्राप्तिसाधक च

## गूढार्थसङ्ग्रह

म विवक्षितम् । तथा वाक्यस्यात्र विरहात् , 'तमोङ्कारेणायतनेनान्वेति विद्वान्' इत्येकमेव वाक्यम् । इद च ब्रह्मलो कसाधकत्वेन पूर्वं नापात्तम् 'सएतस्मात्' इत्येव वाक्यसत्त्वात् । 'त्रिमात्रेण' इत्यादौ परपुरुषाभिध्याने करणत्वेन पूर्वं निर्देशः त्रिमात्रेण परमपुरुषाभिध्यानस्यैवेद फलम् । 'एतेनायतनेनैकत्वमन्वेति' इत्युपक्रमे वर्तते, अथापि 'ऋग्भि रेतम्' इत्यत्र प्रणवस्याकथनेन सामसम्बन्धिवाक्यानन्तरमेव प्रणवस्यकथनात् 'यत्त कवयो वेदयन्ते' इत्यत्र यत्कर्म भूत तदेव 'यत्तच्छान्तमजरममृत पर च' इति निर्दिष्टम् अत्र परपुरुषनिर्देशेन 'पर पुरुषमभिध्यायीत' इति ध्यानस्य इद फलमिति सूच्यते । एव तत्र करणत्वेन निर्दिष्टस्योङ्कारस्य उपायद्वारा प्राप्तौ करणत्वमत्रोक्त भवति । इति भ्रममुक्तेः न कथञ्चिदप्यत्रावकाशः ॥

'मान्त्रवर्णिकमेव च गीयते' इति सूत्रे 'सत्य ज्ञानम्' इति मन्त्रवर्णोदितब्रह्मण 'इमाँल्लोकान्प्रेत्य, एत- त्सामगायन्नास्ते' इति वाक्ये गानकर्म च विवक्षितमिति तात्पर्येण 'गीयते' इत्युक्तम् । तेनच फलदशाभाविगान वर्तते इति ब्रह्मप्राप्ते 'सामभिरुन्नीयते ब्रह्मलोकम्' 'सामभिर्यत्त कवयो वदयन्ते' 'यत्तच्छान्तमजरममृत परं चेति' इत्युत्तरत्र सामभिरुन्नयनस्यात्यन्तानुरूप्य स्फुट निर्मत्सराणाम् ॥

अत्र च निर्विशेषकथा नास्त्येव 'स' इति पुल्लिङ्गनिर्देशेन 'य.पुनरेत त्रिमात्रेणोमित्यनेन—अभिध्यायीत'इती क्षतिकर्माभिध्यायतिकर्मणः उपासने प्रणवस्य करण त्वमेव विवक्षितमिति एतत्फलनिरूपणपरे 'एतेनान्वेति विद्वान्' इ यु पसहारेऽपि तृतीयानिर्देशः । प्रतिवचनोपक्रमे 'सयथैकमात्रम्' इत्यत्र द्वितीयानिर्देशः यद्यपि वर्तते । त पूर्ववाक्यं 'एते नैवायतनेन' इति तृतीयानिर्देशेन प्रणवस्य करण त्वप्रतिपादनेन करणभूतप्रणवस्य ध्यानमेव विवक्षितम् । 'सयोहवै तन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत कतमं वाव सतेनलोक जयति' इति प्रश्नवाक्ये कर्मतया निर्देश. प्रणवस्य अथापि 'एतद्वै सत्यकाम पर चापर च ब्रह्म यदोङ्कार.' इत्यत्रापि प्रणवब्रह्मणोरभेदो निर्दिश्यते । नैतावन्मात्रेण भेददृष्टिरत्र विव क्षिता । अत्र 'कतमं वाव सतेन लोक जयति' इति प्रश्नस्य 'सामभिर्नीयते ब्रह्मलोकम्' इति यत्फल प्रदर्शित तत् ध्यानस्य परमफलत्वेन । अन्यथा प्रश्नप्रतिवचनयोरनानुरूप्य स्यात् । परमफल वे निर्णीते अभेददृष्टिरूपत्वेन अत्रोपासन विवक्षितमिति शङ्का नोदेति प्रणवकर्मकमुपासन कथमितिविचार प्रणवकर्मकपारम्परविषयकोपासनस्य उभयोर्ब्रह्मणोः ओ ङ्काराभेदनिर्देशः वाच्यवाचकभावनिबन्धन ओङ्कारवाच्यपरम फल ब्रह्मेत्यर्थ । कोशादिषु तच्छब्दवाच्यत्वतात्पर्येण समा नाधिकरणनिर्देशा दृश्यते । अयमर्थः मञ्जूषाया नागेशेनाङ्गीकृत . वाच्यवाचकयो. समानाधिकरणनिर्देशम प्रणववा च्यत्वेन पुरुषस्योपासने प्रणवस्याप्युपासनकर्मत्व सभवतीत्यनुपपत्तिर्नास्तीति सिद्धान्तित भवति । अतश्च इय विद्या न निर्विशेषविषयिणी, अपितु सविशेषविषयिण्येवेति सूत्रकारसिद्धान्त ॥

अत्रोपासनाविधानेन अभेदोपासन विवक्षितमिति परेषा प्रक्रिया । 'परचापर च ब्रह्म यदोङ्कार.' इतिवाक्य कोश वाक्यतुल्यमिति पूर्वमत्रोक्तम् । निर्विशेषस्य शुद्धस्योपासनमिति परषा प्रक्रिया उपनिषत्सु नैव विवक्षिता, 'तत्त्वमसि' 'अहमस्मि' इत्येतदेव महावाक्य प्रधानभूतम् । तत 'अह ब्रह्मास्मि' इति 'तदात्मानमेवावेदह ब्रह्मास्मि' इति वाक्यघटकम् 'आत्मानमेव लोकमुपासीत' इत्युपासिधातुर्वर्तते । तत तज्ज्ञानमुपासनात्मकमेवेति स्फुटम् । 'तत्त्वमसि' इत्यत्र नवकृत्व. अभ्यासो वर्तते अभ्यासश्च तात्पर्यलिङ्गान्तर्भूत , तेनैव जीवब्रह्मणोरैक्य विवक्षितमिति परेषा प्रक्रिया । अत्रमेवाभ्यास. ज्ञानावृत्तितात्पर्यक इति 'आवृत्तिरसकृदुपदेशात्' इत्यत्रोक्तम् । मन्दाधिकार्यभिप्रायेण ज्ञानावृत्त्यभि धानमिति तन्मतम् इदमेव विचित्रतरम् । उत्तराधिकारितात्पर्येण जीवब्रह्मणोरैक्य तन्मध्ये मन्दाधिकारितात्पर्येणावृत्त्यभि धानमिति अत. आवृत्त्यभिधानेनैव सद्विद्या उपासनमेव विदधातीति युक्तम् । प्रतर्दनविद्याया ज्ञानोपासनबाधिकाचन्द्र-

### गूढार्थसंग्रहः

यत्प्रयोगेण उपासनं ज्ञानमेव विवक्षितमिति उपनिषत्तात्पर्यं पूर्वं साधितम् इत्युपासनं क्रममुक्तिफलकमिति सिद्धान्तः न श्रुतिसूत्रानुगुणः ॥

सूत्रे 'ईक्षतिकर्मव्यपदेशात्' इत्यत्र यद्यपि 'भेदव्यपदेशात्' इति सूत्रान्तर इवेक्षतिकर्मण एव व्यपदेशः इत्यर्थस्स्वरसतः प्रतीयते। 'परमेव ब्रह्म इहाभिध्यातव्यमुपदिश्यते। कस्मात् ईक्षतिकर्मव्यपदेशात्' इत्यत्र (शां)भाष्यम् अथापि सूत्रघटकपदैरेव पक्षसाध्यादेःप्रतीतौ तादिहाध्याहारोनुचितः। अतः 'ईक्षतिकर्म' इत्यत्र सूत्रे 'ईक्षतिकर्म व्यपदेशात्' इत्यत्र समासानङ्गीकारः। 'भेदव्यपदेशात्' इत्यादिवत्तु निर्देशेष्वपि समासानङ्गीकारो नैव घटते। तत्र सर्वत्रापि बाधक वर्तते समासानङ्गीकारे 'भेदव्यपदेशात्' इति विन्यासासिद्धेः। अत्र नतथा बाधकम् अतः 'ईक्षतिकर्म' इति पृथक्पदमेव, परमते ईक्षतिकर्म परमात्मा ईक्षतिकर्मव्यपदेशात् इत्युक्तिरनपेक्षिता ईक्षतिकर्म परमात्मा व्यपदेशात् इत्येतावतैव तदर्थस्य सिद्धेः। यद्यपि 'भेदव्यपदेशाच्चान्यः' इत्यत्रान्यः भेदव्यपदेशादित्युक्तिः व्यर्थेति शङ्का स्यात्। तत्र 'अन्य' इत्युक्त्या 'विज्ञानं...अन्योऽन्तर आत्मा' इत्यत्र श्रुतौ यदन्यत्व तत् 'य आत्मनि तिष्ठन्नात्मनोऽन्तरः' इति श्रुतौ साध्यते, अतः शब्दद्वयमावश्यकम्। 'परात्परं पुरिशयम्' इत्येकमेव वाक्यमिति ईक्षतिकर्मत्वव्यपदेशो नात्र विवक्षितः ईक्षतिकर्मणः परमात्मत्वे ईक्षतिकर्मत्वव्यतिरिक्तहेतुधर्मव्यपदेश एवात्र हेतः विवक्षितः। 'स' इति सामान्यतो निर्देशनात्र पुरुषशब्दनिर्देशेन उपनिषत्सु प्राधान्येन तात्पर्यविषयीभूतः 'तंत्वौपनिषदं पुरुषम्' इति श्रुत्या निर्धारितः सर्वान्तर्यामी पुरुषोऽत्र विवक्षितः। सएव परःपुरुष इति तच्छब्देन लभ्यते। 'विज्ञानमानन्दं ब्रह्म रातिर्दातुःपरायणम्' इत्यत्र ब्रह्मशब्दनिर्दिष्टः औपनिषदपुरुषस्यैव ब्रह्मत्वं विद्यासामान्यफलदातृत्वं च तत्र विवक्षितम्। तेन एतद्विद्याफलमपि अदृष्टद्वारकमिति सिद्धम्। एतेन 'सामभिः—ब्रह्मलोकम्' इत्यत्र ब्रह्मशब्दः 'यत्तच्छान्तमजरममृतमभयं परं चेति' इत्यत्र परशब्दश्चैकार्थकः। अत्र परशब्देन पूर्वं श्रुतिवाक्ये पुरुषशब्दसहभावेन पठित परशब्दार्थस्यैव विवक्षितत्वेन तदर्थ.पुरुषशब्दार्थएव। पुरुषशब्दपरशब्दयोः परमात्मन्येव मुख्यतया एकत्र मुख्यार्थग्रहणे कारणाभावेन पुरुषस्यैव ब्रह्मलोके प्राप्तिव्यपदेशादिति तात्पर्येण उपायप्रभृतिफलदशापर्यन्तयावद्पर्यालोचनेन व्यपदेशशब्दः प्रयुक्तः। अतः ईक्षतिकर्मणः उपनिषत्तात्पर्यविषयपरमात्मत्वमेव। तस्य ओङ्कारवाच्यत्वमपि श्रुतिषु प्रसिद्धमिति श्रुतितात्पर्यं निर्मत्सराणां स्फुटम् ॥

बहुमतनतात्पर्येण कर्मशब्द इत्यपि न क्रियाशब्दनिर्देशादिति तदर्थासम्भवात्। धातुधात्वर्थान्यतरबोधकपदसमभिव्याहृतकर्मशब्दस्य तद्धात्वर्थकर्मबोधकद्वितीयादिप्रयोजकबोधकत्वं न्यायसिद्धम्। किंच ईक्षणादिव्यपदेशात् इतिनिर्देशेनापि तदर्थसिद्धेः। स्वरूपातिरिक्तेक्षणाभावात् ईक्षणकर्मव्यपदेशो नस्यादिति शङ्का विशेषणांशे क्रियाकर्तृभाव इति दर्शयितुमिति चेन्न, (व्यासतीर्थ.च) कर्तृशब्दप्रयोगेणापि तथाऽर्थसिद्धेस्सम्भवे कर्मशब्दनिर्देशः विलक्षितार्थ[illegible] [illegible] इति पथ्यम् ॥ )

इति ईक्षतिकर्माधिकरणम्

अथ वेदान्तसारः

## सू—१२ ईक्षतिकर्म व्यपदेशात्सः (१.३.१२)

'यःपुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत' (प्रश्न.५.५) इत्यारभ्य 'स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' (५.५) इत्यत्र ध्यायतिपूर्वकेक्षतिकर्म सः प्रशासिता परमात्मा इत्यर्थः, उत्तरत्र 'तमोङ्कारेणैवायनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परं च' (५.७) इति परमपुरुषासाधारणधर्मव्यपदेशात् 'यत्तत्कवयो वेदयन्ते' (५.७) इति तदीयस्थानस्य सूरिभिर्दृश्यत्वव्यपदेशाच्च ॥

इति वेदान्तसारः

अथ वेदान्तदीपः

## सू—१२ ईक्षतिकर्म व्यपदेशात्सः (१.३.१२)

आथर्वणिकानां सत्यकामप्रश्ने 'यःपुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत' (प्रश्न.५.५) इत्यारभ्य 'स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' इत्यत्र ध्यायतीक्षतिकर्मतया व्यपदिष्टः परं पुरुषः किं हिरण्यगर्भः ? उत परब्रह्मभूतः पुरुषोत्तम इति संशयः । हिरण्यगर्भ इति पूर्वपक्षः । पूर्वत्रैकमात्रप्रणवमुपासीनस्य मनुष्यलोकप्राप्तिं फलम् द्विमात्रमुपासीनस्यान्तरिक्षलोकप्राप्तिञ्च फलमभिधाय, अनन्तरं 'यः पुनरेतं त्रिमात्रेण' (५.५) इति त्रिमात्रं प्रणवमुपासीनस्य फलत्वेनोच्यमानब्रह्मलोकस्थपुरुषेक्षणकर्मभूतश्चतुर्मुख एवेति विज्ञायते । मनुष्यलोकान्तरिक्षलोकसाहचर्याद्ब्रह्मलोकोऽपि क्षेत्रज्ञलोक इति निश्चयात् । राद्धान्तस्तु 'परात्परं पुरिशयं पुरुषमीक्षते' (५.५) इतीक्षतिकर्मतया निर्दिष्टपुरुषविषये श्लोके 'तमोङ्कारेणैवायनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परं च' (५.७) इति निरुपाधिकशान्तत्वामृतत्वादिव्यपदेशात् परमात्मैवायमिति निश्चीयते । एवं परमात्मत्वे निश्चिते ब्रह्मलोकशब्दश्च तत्स्थानमेवाभिदधातीत्यवगम्यते । तद्विषयतयोदाहृते च श्लोके 'यत्तत्कवयो वेदयन्ते' (५.७) 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' (सुबाल.६.स) इत्येवमादिभिः सूरिभिर्दृश्यत्ववचनं तदेव द्रढयति । सूत्रार्थस्तु— ईक्षतिकर्मेशः परमात्मा ध्यायतीक्षत्योरेकविषयत्वेन ध्यायतिकर्मापि स एवेत्यर्थः, व्यपदेशात् तद्विषयतया 'शान्तमजरममृतमभयं परं च' इति परमात्मधर्माणां व्यपदेशात् ॥

इति ईक्षतिकर्माधिकरणम्

अथ अधिकरणसारावली

लक्ष्यीभूतोऽयमेकः खलु पुरुष इह ध्यायतेरीक्षतेश्च
  क्षेत्रज्ञस्सोऽयमण्डाधिप इतरपरत्स्वान्यजीवात्परोऽसौ ।
नो चेद्भोगादिभोगप्रकरणविहतिर्वो भवीतीत्ययुक्तं
  तस्मिन्शान्तामृतत्वप्रभृतिपरगुणख्यात्यनुक्त्योरयोगात् ॥

नन्वत्रोङ्कारमात्रात्रयफलगणनारूढभूम्यन्तरिक्ष
प्रत्यासत्त्या निवासस्सरसिजवसतेर्ब्रह्मलोकोऽस्तु मैवम् ।
पापोन्मुक्तेन लभ्यो ह्ययमिह कथितस्सूर्यसम्पत्तिपूर्वं
सोढव्यो मध्यलोकैर्व्यवधिरिति समस्तत्समाधानमार्गः ॥

॥ इ ति ई क्ष ति क र्मा धि क र णं स मा प्त म् ॥

अथ दहराधिकरणम्

श्रीभाष्यम्

## सू–१३ दहर उत्तरेभ्यः [१.३.१३]

इदमामनन्तिछान्दोगाः–' अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम् ' (छां.८.१.१) इति। तत्र सन्देहः किमसौ हृदयपुण्डरीकमध्यवर्ती दहराकाशो महाभूतविशेषः, उत प्रत्यगात्मा अथ परमात्मा इति । किं तावद्युक्तम् ? महाभूतविशेष इति। कुतः ? आकाशशब्दस्य भूताकाशे

अथ दहराधिकरणम्

श्रुतप्रकाशिका

## सू–१३ दहर उत्तरेभ्यः [१.३.१३]

पूर्वाधिकरणे ' परात्परं पुरिशयं पुरुषम् ' इत्युक्तस्य परमात्मत्वं साधितम्, अत्र पुरिशयस्याकाशशब्दवाच्यस्यापरमात्मत्वं निरस्यत इति सङ्गतिः । पूर्वं ब्रह्मलोकशब्दस्य परमात्मस्थानपरत्वमुक्तं तद्वदिहापि ब्रह्मलोकशब्दब्रह्मपुरशब्दयोस्स्थानपरत्वं स्यादिति शङ्कया सङ्गतिः । पूर्वमन्तरिक्षशब्दस्य प्रसिद्धान्तरिक्षपरत्वं स्थापितम् एवं दहराकाशशब्दस्य प्रसिद्धाकाशादन्यपरत्वमुच्यत इति सङ्गतिः । तर्हि ' अक्षरमम्बरान्तधृतेः ' इत्यस्यानन्तरं दहराधिकरणं प्राप्तं, उभयत्राकाशशब्दस्य विषयवाक्येषु श्रुतत्वात् 'ईक्षतिकर्म' इत्यधिकरणं दहराधिकरणानन्तर्यमर्हति तत्रान्तरिक्षशब्दश्श्रूयते, नत्वाकाशशब्द इतिचेन्न अक्षरेक्षतिकर्माधिकरणयोराकाशान्तरिक्षशब्दवाच्यादर्थान्तरस्य परमात्मत्वनिर्णयेन परस्परसङ्गत्यतिशयात् दहराधिकरणे चाकाशशब्दवाच्यस्यैव परमात्मत्वं विवक्षितमित्यस्य पूर्वाधिकरणद्वयानन्तरत्वं युक्तम् । विषयादिकं दर्शयति इदमित्यादिना । परस्मिन्नन्वेष्टव्यान्तरप्रतीत्यनुपपत्तेः पक्षान्तरद्वयेऽप्युपमानोपमेयभावानुपपत्तेश्च संशयः । किं दहराकाशो भूताकाशः ? उत जीवः अथ परमात्मेति तदर्थमन्वेष्टव्यान्तरनिर्देशः किं दहराकाशस्य परमात्मत्वविरोधी, उतन, 'तस्मिन्यदन्त.' इति निर्देशः किं दहराकाशस्य गुणजातविषयः उतार्थान्तरपरः ' एषआत्मा '

### श्रीभाष्यम्

ब्रह्मणि च प्रसिद्धत्वेऽपि भूताकाशे प्रसिद्धिप्रकर्षात्, 'तस्मिन्यदन्तस्तदन्वेष्टव्यम्' (८.१.१) इत्यन्वेष्टव्यान्तरस्याधारतया प्रतीतेश्च ॥

इत्येवंप्राप्तेऽभिधीयते–'दहर उत्तरेभ्यः' दहराकाशः परं ब्रह्म; कुतः? उत्तरेभ्यो वाक्यगतेभ्यो हेतुभ्यः। 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः' (छां.८.१.५)इति निरुपाधिकात्मत्वमपहतपाप्मत्वादिकं सत्यकामत्वं सत्यसङ्कल्पत्वं चेति दहराकाशे श्रूयमाणा गुणाः दहराकाशं परं ब्रह्मेति ज्ञापयन्ति। 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति' (छां.८.१.६) इत्यादिना 'यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति तेन सम्पन्नो महीयते' [८.२.१०] इत्यन्तेन दहराकाशवेदिनस्सत्यसङ्कल्पत्वप्राप्तिश्चोच्यमाना दहराकाशं परं ब्रह्मेत्यवगमयति। 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' (छां.८.१.३) इत्युपमानोपमेयभावश्च दहराकाशस्य भूताकाशत्वे नोपपद्यते। हृदयावच्छेदनिबन्धन उपमानोपमेयभाव इतिचेत् तथासति हृदयावच्छिन्नस्य द्यावापृथिव्यादिसर्वाश्रयत्वं नोपपद्यते ॥

### श्रुतप्रकाशिका

इति वाक्योक्तमपहतपाप्मत्वादिकं किं प्रजापतिवाक्योक्तजीवधर्मः? उत न? जीवधर्मत्वेऽपहतपाप्मत्वादिश्रुतिस्वारस्यमस्ति नेति विचारः। यदा 'तस्मिन्यदन्त' इति निर्देशोऽर्थान्तरपरः तदाऽन्वेष्टव्यशब्दस्य गुणविषयत्वाभावेन दहराकाशस्य भूताकाशत्वं स्यात्, 'एष आत्मा' इति वाक्योक्तगुणाष्टकस्य प्रजापतिवाक्योक्तजीवधर्मत्वे स्वारस्यमस्ति तदानीं 'एषआत्मा' इति वाक्यस्य जीवविषयतया दहराकाशो जीवस्स्यादिति पूर्वपक्षे फलफलिभावः। यदा 'तस्मिन्यदन्त' इति गुणजातविषयोक्तिः तदाऽन्वेष्टव्यशब्दस्य गुणजातविषयत्वाद्दहराकाशो भूताकाशातिरिक्त इति स्यात् यदा 'एषआत्मा' इति वाक्यस्य प्रजापतिवाक्योक्तजीवधर्मविषयत्वे स्वारस्यं नास्ति, तदा स्वरसतो गुणाष्टकविशिष्टपरमात्मप्रतिपादकतया दहराकाशः परमात्मा स्यादिति राद्धान्ते फलफलिभावः। आकाशशब्दस्य क्वचित्परमात्मपरत्वं दृष्टमिति तद्व्यावृत्त्यर्थं प्रसिद्धिप्रकर्षादित्युक्तम्। 'एषआत्माऽपहतपाप्मा' इत्यादिभिरस्याकाशस्य परमात्मगुणेषु श्रूयमाणेषु समुत्कर्षप्रसिद्धिप्राचुर्यात् भूताकाशत्वेन प्रत्यवस्थानमित्यत्राह—तस्मिन्यदन्तरिति। एतच्चोत्तरभाष्यस्यादित्यादिना व्यक्तीभविष्यति ॥

राद्धान्तमाह–एवंप्राप्तइति। नहि परमात्मधर्माणामुत्तरत्वापरत्वादिकमस्ति, कस्माद्धेतोरुत्तरत्वं यावदाकाङ्क्षायामाह–वाक्यगतेभ्यइति। उत्तरेभ्य इत्युक्ते चतुर्थ्यन्तत्वशङ्का माभूदिति पञ्चमीस्फुटीकरणाय हेतुभ्य इत्युक्तम्। 'षष्ठी हेतुप्रयोगे' इति नियमःप्रयोजनतया हेतुत्वविवक्षायां न सर्वदा यथा 'अल्पस्य हेतोर्बहुहातुमिच्छन्' इति, उत्तरवाक्यगतहेतून्दर्शयति एषइत्यादिना। निरुपाधिकत्वामिति। जीवस्यापि व्यावर्तनक्षममात्मत्वमित्यभिप्रायेण निरुपाधिकशब्दः देवादिकतिपयशरीरविशेषानवच्छिन्नत्वं निरुपाधिकत्वम्। अपहतपाप्मत्वादेरपि निरुपाधिकत्वमभिप्रेतम्, यद्वा आकाशस्यापि स्वकार्यव्याप्तया यौगिकआत्मशब्दउपपन्न इतिशङ्काव्यावृत्त्यर्थो निरुपाधिकशब्दः। यौगिकत्वाश्रयणं चक्लिष्टम् स्वनदशरीरप्रतिसम्बन्धिनियत्वरूपत्वात् हि आत्मशब्दप्रयोग इतिभावः। अपहतपाप्मत्वादिकमित्यादिशब्देन सत्यकामत्वादिग्रहणे वाक्येऽपि गुणानां विधिनिषेधरूपेण द्वैविध्यज्ञापनाय सत्यकामत्वादेः पृथगुपादानम्...

## श्रीभाष्यम्

ननु च दहराकाशस्य परमात्मत्वेऽपि बाह्याकाशोपमेयत्वं न सम्भवति 'ज्यायान्पृथिव्याज्ज्यायानन्तरिक्षात्' (छां.३.१४.३) इत्यादौ सर्वस्माज्ज्यायस्त्वश्रवणात्-नैवम् दहराकाशस्य हृदयपुण्डरीकमध्यवर्तित्वप्राप्ताल्पत्वनिवृत्तिपरत्वादस्य वाक्यस्य ; यथा अधिकजवेऽपि सवितरि 'इपुवद्गच्छति सविता' इति वचनं गतिमान्द्यनिवृत्तिपरम्। अथस्यात् 'एष आत्माऽपहतपाप्मा' (छां.८.१.५) इत्यादिना दहराकाशो ननिर्दिश्यते 'दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम्' (८.१.१) इति दहराकाशान्तर्वर्तिनस्ततोऽन्यस्यान्वेष्टव्यत्वेन प्रकृतत्वादिह 'एष आत्माऽपहतपाप्मा' (८.१.५) इति तस्यैवान्वेष्टव्यस्य निर्देष्टुं युक्तत्वात् ; स्यादे तदेवम्, यदि श्रुतिरेव दहराकाशं तदन्तर्वर्तिनं च न्यभाङ्क्ष्यत्; व्यभांक्षीत्तु सा तथा हि 'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम्' (८.१.१) इति ब्रह्मपुरशब्देनोपास्यतया सन्निहितपरब्रह्मणः पुरत्वेनोपासकशरीरं निर्दिश्य तन्मध्यवर्ति च तदवयवभूतं पुण्डरीकाकारमल्पपरिमाणं हृदयं परस्य ब्रह्मणो वेश्मतयाऽभिधाय सर्वेशं सर्वशक्तिमाश्रितवात्सल्यैकजलधिमुपासकानुग्रहाय तस्मिन् वेश्मनि सन्निहितं सूक्ष्मतया ध्येयं दहराकाशशब्देन निर्दिश्य तदन्तर्वर्तिचापहतपाप्मत्वस्वभावतो निरस्तनिखिलहेयत्वसत्यकामत्वादि

## श्रुतप्रकाशिका

नोपमेयभावो नसंघटत इत्यर्थः, उपमानोपमेयभावस्य हृदयावच्छेदनिबन्धनत्वमाशङ्क्य परिहरति हृदयेत्यादिना। अतएवेदमपि नाशङ्कनीयम् 'रामरावणयोर्युद्धं रामरावणयोरिव' इतिवदुपमानशून्यताज्ञापनपरं वाक्यमिति। यावच्छब्दानुपपत्तेः अंशभेदोक्तेश्च। न्यूनपरिमाणस्येव अधिकपरिमाणस्यापि नमध्यमपरिमाणेन साधर्म्यं युक्तमिति चोदयति—ननुचेति। अन्यूनपरिमाणत्वमात्र साधर्म्यमिति परिहरति नैवमिति। अथस्यादिति। यद्यपि 'यावान्वा अयमाकाशः' इति मध्यगतवाक्यस्याकाश एव प्रथमतया निर्दिष्टत्वादासन्नत्वाच्च एषइति परामर्शनीयः, तथाऽप्युपक्रमे 'तस्मिन्यदन्तस्तदन्वेष्टव्यम्' इत्यन्वेष्टव्यतया प्राधान्येनावगतत्वात् 'आत्मावा अरे द्रष्टव्यः' 'सोऽन्वेष्टव्यः' इत्यादिष्वात्मनोऽन्वेष्टव्यत्वनिश्चयादिहाप्यन्वेष्टव्यस्य तदन्तर्वर्तिन आत्मत्वावगमात् 'एषआत्मा' इति तदन्तर्वर्तिनोऽन्वेष्टव्यस्यात्मनः परामर्शः, अत आत्माऽधिकरणतयाऽवगतत्वेन तद्व्यतिरिक्तत्वाद्युपपत्त्यनुरोधेन भूताकाशएव दहराकाश इत्यर्थः। पूर्वपक्षेऽन्वेष्टव्यान्तरस्याधारतया प्रतीतेश्चेत्यनेन वाक्येनाभिप्रेतोऽर्थ इहाथस्यादित्यादिना कण्ठोक्तो भवति। परिहरति स्यादेतदिति ब्रह्मपुरशब्दार्थमाह—उपास्यतयेति। न केवल ब्रह्मणस्सर्वस्यापि त्वाच्छरीरेण साधारण सम्बन्धमात्रं अपितूपासनस्थानभूतहृदयाधारत्वात् संबन्धविशेषश्च विद्यते, ब्रह्मशब्दश्च परस्मिन्मुख्यः अतो ब्रह्मपुरं शरीरमित्यर्थः

अत्रेदमप्यर्थसिद्धं दहराकाशो जीवइति पूर्वपक्षस्य साधकतया ब्रह्मपुरशब्दनिर्देशः परैरुक्तः—तदयुक्तमिति। कथ उच्यते ब्रह्मणस्सर्वविकारसाधारणत्वा,दसाधारणेन व्यपदेशस्य युक्तत्वात् जीवस्य भोगोपकरणतया सम्बन्धविशेषसद्भावाज्जीवशरीरमेव ब्रह्मपुरमिति तद्विशेषपुराधिपो जीव इति शङ्कितं, तदयुक्तम् मुख्यार्थस्य स्वतो प्राप्तत्वात् परमात्मन उपास्यत्वाय शरीरान्तरवस्थानस्य 'निचाय्यतमदेवम्' इत्यत्र दर्शिततया संबन्धविशेषसद्भावाच्च जीवशापकत्वदृष्टाऽनुपपानादिति। अल्पपरिमाणमित्यनेन 'दहरं पुण्डरीकम्' इत्यत्र दहरशब्दो व्याख्यातो भवति। सर्वशक्तिमित्यस्य[illegible]-

### श्रीभाष्यम्

स्वाभाविकानवधिकातिशयकल्याणगुणजातं च ध्येयं 'तदन्वेष्टव्यम्' [८.१.१] इत्युपदिश्यते। अत्र 'तदन्वेष्टव्यम्' इति तच्छब्देन दहराकाशम्, तदन्तर्वर्तिगुणजातं च परामृश्य तदुभयमन्वेष्टव्यमित्युपदिश्यते; 'यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' (८.१.१) इत्यनूद्य तस्मिन्दहरपुण्डरीकवेश्मनि यो दहराकाशः, यच्च तदन्तर्वर्तिगुणजातं तदुभयमन्वेष्टव्यमिति विधीयत इत्यर्थः। दहराकाशशब्दनिर्दिष्टस्य परब्रह्मत्वं 'तस्मिन्यदन्तः' इति

### श्रुतप्रकाशिका

ह्यत्वसिद्धान्गुणानाह—स्वाभाविकेति। ननु आकाशशब्दवाच्यस्य गुणित्वेन तस्य ध्येयत्वं वक्तव्यं तेन विना गुणध्यानायोगात् तच्छब्दस्य तदन्तर्वर्तिपरत्वादाकाशाभिधायित्वम्। गुणिनो ध्येयत्वे कथिते गुणानां ध्येयत्वमर्थसिद्धं स्यात्, ननु गुणानां ध्येयत्वे कथिते गुणिनोऽन्तर्भावः। अतोऽन्वेष्टव्यमितिपदं गुणिपरम् न तु गुणपरमित्यत्राह—अत्रेति। तच्छब्द एवोभयपरामर्शीत्यर्थः॥

ननु यच्छब्दनिर्दिष्टं हि तच्छब्देन परामृश्यते। यच्छब्दस्त्वन्तर्वर्तिपरः नाकाशपरः तत्कथमुभयपरामर्शित्वं तच्छब्दस्येति शङ्कायामस्य वाक्यस्य परोक्तार्थपरत्वं च व्युदस्यन् तच्छब्दस्य उभयपरामर्शित्वमाह—यदिदमस्मिन्निति। तस्मिन्दहरपुण्डरीकवेश्मनि यदन्तर्गतं दहराकाशाख्यं वस्तु तदन्वेष्टव्यमिति परैरुच्यते, तद्व्युदस्यति यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्मेत्यनूद्येत्यादिना। अयमर्थः यदिदं दहरं पुण्डरीकं वेश्म तस्मिन्दहराकाश इति दहराकाशस्य पुण्डरीकवेश्माधारत्वस्योक्तत्वात् पुनरपि 'तस्मिन्यदन्त' इति आकाशस्य पुण्डरीकवेश्माधारत्वकथनवैयर्थ्यं स्यादिति, 'तस्मिन्यदन्त' इति सगुणविषयत्वे तु न वैयर्थ्यं पूर्वमनुक्तत्वात् अतोऽपेक्षितविधेरनपेक्षितविधानं दुर्बलम्। अत्र दूषणान्तराण्यप्यभिप्रेतानि। अव्यवहितदहराकाशं विहाय व्यवहितपुण्डरीकवेश्मपरामर्शोऽनुपपन्नः। किंच पुल्लिङ्गशब्दनिर्दिष्टस्य दहराकाशस्य यदिति नपुंसकलिङ्गान्तपदेन परामर्शानुपपत्तिश्च। 'तस्मिन्यदन्तः' इति वाक्यं दहराकाशस्य पुण्डरीकवेश्माधारकत्वप्रतिपादनपरं चेत् अनन्तरवाक्यस्य तदाक्षेपपरतया व्याख्यानमनुपपन्नम्। दहरा[illegible]वर्ति तत्कारणं सूक्ष्मं किमपि न सम्भवतीति 'किं तदत्र विद्यते' इति वाक्येनाक्षिप्यास्य द्यावापृथिव्यादिकार्यस्य तदन्तर्वर्तितया समाधानमिति हि परैर्वर्ण्यते दहराकाशः पुण्डरीकवेश्मवर्तीत्युक्ते किमत्राक्षेप्यम्। तथा 'अस्मिन्कामास्समाहिताः' 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्' इति गुणानां तदन्तर्वर्तित्वमुक्त्वा गुणगुणिनोरुभयोरप्युपासनतत्फलप्रतिपादकोपरितनवाक्यस्वारस्यभङ्गश्च भवेत्। अतः परोक्तार्थोऽनुपपन्न इत्यभिप्रायः॥

'दहरोऽस्मिन्' इति वाक्यं व्याचष्टे तस्मिन्दहरेति। पुल्लिङ्गयच्छब्दाध्याहारेण योजनया यच्छब्दद्वयनिर्दिष्टमुभयं तच्छब्देन प्रतिनिर्दिश्यत इत्यभिप्रायेण यो दहराकाशः यच्च तदन्तर्वर्तिगुणजातं तदुभयमिति युक्तम्। यद्वा पुल्लिङ्गयच्छब्दानध्याहारेण 'दहरोऽस्मिन्' इत्यादेरेकवाक्यत्वं मन्वान आह—तस्मिन्दहरेति। श्रुतिवाक्येऽन्तश्शब्दोऽन्तर्वर्तिपरः। अस्मिन्वर्तमानो दहराकाशस्तदन्तर्वर्ति च यत्तदुभयमन्वेष्टव्यमिति वाक्यस्यार्थ इत्यर्थः, 'त्यदादीनि सर्वैर्नित्यम्' इति पुल्लिङ्गनपुंसकलिङ्गयोर्यच्छब्दयोरेकशेषः 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इति नपुंसकत्वमेकवचनान्तत्वं च। तस्मादाकाशतदन्तर्गतान्वेष्टव्यगुणपरं पुनरुक्तं तयच्छब्दद्वयार्थविषयं तदिति पदमित्यभिप्रायः। एवं 'तदन्वेष्टव्यम्' इति तत्पदेनैव मनोऽभ्युक्तत्वादन्वेष्टव्यतया प्राधान्यावगतिरन्वेष्टव्यस्य[illegible]प्रसिद्धिश्चोपपन्ने इति चोद्यपरिहारसिद्धिः। दहराकाशेति। विवक्षितार्थस्य प्रामाणिकत्वसिद्धौ हि श्लिष्टनिर्वाह उपपद्यते, तस्माद्दहरा-

## श्रीभाष्यम्

**निर्दिष्टस्य च तद्गुणत्वम् , तच्छब्देनोभयं परामृश्योभयस्याप्यन्वेष्टव्यतया विधानं च कथमवगम्यत इतिचेत्—तदवहितमनाश्शृणु—'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदयआकाशः' (छां.८.१.३) इति दहराकाशस्यातिमहत्तामभिधाय 'उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि' (८.१.३) इति प्रकृतमेव दहराकाशमस्मिन्निति निर्दिश्य तस्य सर्वजगदाधारत्वमभिधाय 'यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितम्' (८.१.३) इति पुनरप्यस्मिन्निति तमेव दहराकाशं परामृश्य तस्मिन्नस्योपासकस्येह लोके यद्भोग्यजातमस्ति, यच्च मनोरथमात्रगोचरमिह नास्ति, सर्वं तद्भोग्यजातमस्मिन्दहराकाशे समाहितमिति निरतिशयभोग्यत्वं दहराकाश-**

## श्रुतप्रकाशिका

काशस्य परब्रह्मत्वे तदन्तर्वर्तिनो गुणजातत्वे तयोरन्वेष्टव्यत्वे च प्रमाणं वक्तव्यमित्यर्थः। प्रतिवक्ति तदवहितेत्यादिना। 'तदन्वेष्टव्यम्' 'यावान्वा अयमाकाशः' इति वाक्ययोर्मध्ये 'किं तदत्र विद्यते' इति वाक्यं श्रूयते, परमात्मनोऽन्तर्वर्तिनः कस्यचिदसम्भवात् 'किं तदत्र विद्यते' इति वाक्यमाक्षेपपरमित्याहुः परे। प्रश्नपरमिदवाक्यमित्युचितम् बुभुत्साख्यापनमात्रं प्रश्नः। अनुपपत्त्युद्घाटनेनार्थाक्षेपपूर्वकं परिहारबुभुत्साख्यापनं चोद्यम्। अबुभुत्सितपरिहारेण वक्त्रा प्रतिषेधःप्रतिक्षेपः 'कुतस्तु खलुसोम्य' इतिवत्। न प्रतिक्षेपपरमिदं परिहारस्य वक्ष्यमाणत्वात्, नकेवलः प्रश्नः अनुपपत्तेर्विद्यमानत्वात्। *सर्वान्तरस्य परमात्मनोह्यन्तरभूतं तत्त्वान्तरमसम्भावितम् अनुपपत्त्युद्घाटनमुखेनाक्षेपस्य कण्ठोक्त्य*भावान्नकेवलं चोद्यमित्यप्युचितम्। अतो विनयं प्रकाशयता शिष्येणानुपपत्तिमभिप्रेत्य तामस्फुटं ब्रुवता बुभुत्साख्यापनं क्रियतइति प्रश्नवाक्यतुल्यं फलतश्चोद्यपरमिदं वाक्यम्। तच्छब्दनिर्दिष्टयोराकाशतदन्तर्वर्तिनोरन्तर्वर्तिविशेषानवगमादुक्तानुपपत्तिगर्भस्तदन्तर्वर्त्यंशविषयः प्रश्नः 'किं तदत्र' इति। 'सब्रूयात् आचार्यो ब्रूयात्' इत्यर्थः प्राकरणिकानामिदमेतच्छब्दानामाकाशपरामर्शपरत्वार्थं तस्याव्यवहितत्वज्ञापनार्थं शब्दतोऽर्थतश्चाकाशस्य प्राधान्यज्ञापनार्थं च 'यावान्वाअयम्' इत्यादिप्रदर्श्यते। इदं वाक्यं दहराकाशस्याल्पत्वनिवृत्तिपरमित्यभिप्रायेणातिमहत्तामित्युक्तम्। प्रकृतमेवेति। अन्तर्वर्त्यन्वेष्टव्य आकाशशब्दव्यवहितत्वान्नेदशब्दविषय इतिभावः। दहराकाशस्यानुवृत्त्यविच्छेदं दर्शयति तमेवेति। अस्येति व्याख्येयम् उपासकस्येति, व्याख्यानम्। इदंशब्दष्षष्ठ्यन्तोबुद्धिस्थपरइत्यर्थः। अन्वेषणविजिज्ञासयोः कर्तृत्वेन उपासकोहि बुद्धिस्थः। अस्येहास्ति नास्तीति अस्तित्वनास्तित्वयोस्सप्रतियोगिकत्वावगमादनन्तरं चोदयितुरनुभाषणवाक्ये 'सर्वेच कामाः' इत्यनुभाषणाच्छब्दो भोग्यजातपर इत्यभिप्रायः। फलितमर्थमाह—निरतिशयभोग्यत्वमिति। यथा समुद्रे गोष्पदपल्वलादीनामन्तर्भाववचनात् समुद्रस्यानवधिकजलौघत्वं सिद्ध्यति, एवं 'सर्वं तदस्मिन्समाहितम्' इत्यनेन निरतिशयभोग्यत्वसिद्धिरित्यर्थः॥

ननु कथमस्य वाक्यस्यामुख्यार्थत्वमाश्रीयते जीवभोग्यवस्तूनामाधारत्वमुक्तं किं न स्यात्। उच्यते—अस्येति पदं तावन्न ब्रह्मपरं यच्चास्य नास्ति सर्वमस्मिन्समाहितमिति व्याघातात्। नच जीवमात्रपरं—जीवविशेषस्योपासकस्य बुद्धिस्थत्वात्। उपासकस्य स्वर्गपश्वादिकं नभोग्यमिति तदाधारत्वकथनमनुपपन्नम्। एस्य च ब्रह्मैव प्राप्यं तस्यापरिच्छिन्नत्वमितरफलान्तवत्त्वञ्चेहैवानान्तरमुच्यते अतो निरतिशयभोग्यतापरत्वम्। अन्वेष्टव्योपयुक्तत्वाच्च निरतिशयभोग्यत्वाभिधानं युक्तम्। नन्वानन्दत्वस्य स्वरूपनिरूपकधर्मतया सर्वविद्यास्वनुयायित्वादर्थसिद्धमिति निरतिशयभोग्यत्वं न वक्तव्यम्।

### श्रीभाष्यम्

मभिधाय तस्य दहराकाशस्य देहावयवभूतहृदयान्तर्वर्तित्वेऽपि देहस्य जराप्रध्वंसादौ सत्यपि परमकारणतयाऽतिसूक्ष्मत्वेन निर्विकारत्वमुक्त्वा ततएव 'एतत्सत्यं ब्रह्मपुरम्' (८.१.५) इति तमेव दहराकाशं सत्यभूतं ब्रह्माख्यं पुरं निखिलजगदावासभूतमित्युपपाद्य 'अस्मिन्कामाः समाहिताः' (८.१.५) इति दहराकाशमस्मिन्निति निर्दिश्य काम्यभूतांश्च गुणान्कामाइति निर्दिश्य तेषां दहराकाशान्तर्वर्तित्वमुक्त्वा तदेव दहराकाशस्य काम्यभूतकल्याणगुणविशिष्टत्वं तस्यात्मत्वं च 'एष आत्माऽपहतपाप्मा' [८.१.५] इत्यादिना 'सत्यसङ्कल्पः'

### श्रुतप्रकाशिका

नैवं स्वरूपनिरूपकस्य सत्यत्वस्यात्र पृथगुक्तत्वात्, अपेक्षितेष्वर्थेषु अनुक्तस्यान्यतोग्राह्यत्वं नतूक्तपरित्यागेनान्यतोऽग्राह्यत्व युक्तम्। अतो यथोक्त एवार्थः, 'अथ तचेद्ब्रूयुः' इत्यादिचोद्यपरिहारवाक्यानामर्थं हृदि निधायाह— तस्य दहराकाशस्येति। 'अस्मिश्च यदिद ब्रह्मपुरे सर्वं समाहितं सर्वाणि भूतानि सर्वेच कामाः यदैनं जरावाप्नोति प्रध्वंसतेवा किं ततो विशिष्यते' इति चोद्यम्। 'किं तदत्र विद्यते' इति प्रश्नस्य प्रतिवचनम् 'अस्मिन्कामास्समाहिताः' इति वक्ष्यते; मध्ये चोद्यान्तरमिदमुत्थितं शरीरान्तर्वर्तिनि दहराकाशे सर्वं द्यावापृथिव्यादिकं स्थितं चेद्देहप्रध्वंसे तदन्तर्गतस्याकाशस्यापि हृत्पुण्डरीकस्येव प्रध्वंससम्भवात् तस्य द्यावापृथिव्याद्याश्रयत्वमनुपपन्नं, देहप्रध्वंसेऽपि द्यावापृथिव्याद्यवस्थानात् अस्थिरत्वादेव निरतिशयभोग्यत्वं चानुपपन्नमिति। एवं चोद्योत्थानबीजं सूचयति देहावयवभूतहृदयान्तर्वर्तित्वेपीति। 'यदैनं जरावाप्नोति' इत्येतच्छब्दः पूर्वप्रकृतं व्यवहितमपि ब्रह्मपुराख्यं शरीरं परामृशति जराभिस्पर्शाभिधानात्, नतु तदन्तर्वर्तिपरामर्शी, तस्य सत्यत्वस्य वक्ष्यमाणत्वादित्यभिप्रायेण देहावयवेत्युक्तं चोद्यपरे श्रुतिवाक्ये 'सर्वं समाहितम्' इति द्यावापृथिव्याद्युपलक्षितभोग्यभोगोपकरणभोगस्थानाधारत्वमनूदितं सर्वाणि भूतानीति सूर्याचन्द्रमोनक्षत्रोपलक्षितभोक्तृवर्गाधारत्वमनूदितं 'सर्वे च कामाः' इति निरतिशयभोग्यत्वमनूदितम्। पूर्ववाक्यानुगुणत्वादनुवादित्वावगमः॥

ननु सर्वशब्दसङ्कोचेन जीवभोग्याधारपरमिदंवाक्य मुख्यत्वोपपत्तेरिति। नैवम् अमुख्यत्व सोढव्यम्, प्रथमश्रुत सर्वशब्दसङ्कोचस्यायुक्तत्वात् पुरोवादानुरूप्यसिद्धेः, उपासकफलस्य निरतिशयतया वक्ष्यमाणत्वानुगुणत्वाच्च। नच गुणाष्टकविषयोऽस्य चोद्यवाक्यस्थः कामशब्दः 'अस्मिन्कामाः' इति तस्य वक्ष्यमाणस्य पूर्वमुक्तत्वायोगादुक्तानुभाषणरूपत्वाच्चास्य वाक्यस्य, अतः 'सर्वे च कामाः' इति निरतिशयभोग्यत्वानुवादः 'नजीर्यति नहन्यते' इत्यनेन प्रतिवचनवाक्येनार्थसिद्धमकारमाह— परमकारणतयाऽतिसूक्ष्मत्वेनेति। कार्याद्धास्वादेः कारणमाकाशादिकं सूक्ष्मं, तत एव वाय्वादिविकारेऽप्याकाशस्य न तादृशविकारसम्भव इति तत्कारणत्वान्तरामनो निरतिशयसूक्ष्मत्वान्निर्विकारत्वमिति भावः। ततएवेति। श्रुतिवाक्यस्थसत्यशब्दस्य निर्विकारत्वमर्थ इतिभावः। षष्ठीतत्पुरुषव्यावृत्त्यर्थमाह—ब्रह्माख्यमिति सत्यशब्दसामानाधिकरण्यान्नप्राकृतशरीरमित्यभिप्रायः। पुरशब्दविषयत्वहेतुं गुणमाह—निखिलजगदिति। 'सत्यंब्रह्मपुरम्' इत्यन्तमवान्तरचोद्यपरिहारपरं 'अस्मिन्कामाः' इतितु प्रथमचोद्यप्रतिवचनम्। दहराकाशमस्मिन्निति निर्दिश्येति। अव्यवहितैतत्सत्यं ब्रह्मपुरमित्यादिशब्दोपस्थापितत्वादस्येतिभावः। गुणानां कामशब्दवाच्यत्वमुपपादयति। काम्यभूतानिति। अवयवशक्त्येत्यर्थः। समाहिता इति पदस्यार्थमाह— दहराकाशान्तर्वर्तित्वमिति। एव दहराकाशस्य कामवैशिष्ट्यमुक्तम्। तदेवेति। कोदहराकाशः कैः, कामैर्विशिष्ट इत्यपेक्षायां 'एष आत्मा' इतिवाक्य गुण

## श्रीभाष्यम्

**इत्यन्तेन स्फुटीकृत्य ' यथा ह्येवेह प्रजा अन्वाविशन्ति ' (८.१.५) इत्यारभ्य ' तेषां सर्वेषु लोकेष्वकामचारो भवति ' (८.१.६) इत्यन्तेन तदिदं गुणाष्टकं तद्विशिष्टं दहराकाशशब्दनिर्दिष्टमात्मानं चाविदुषामेतद्व्यतिरिक्तभोग्यसिद्धये च धर्मं कुर्वतामन्तवत्फलावाप्तिमसत्यसङ्कल्पत्वं चाभिधाय ' अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति ' (८.१.६) इत्यादिना दहराकाशशब्दनिर्दिष्टमात्मानं तदन्तर्वर्तिनश्च काम्यभूतानपहतपाप्मत्वादिकान्गुणान्विजानतामुदारगुणसागरस्य तस्य परमपुरुषस्य**

## श्रुतप्रकाशिका

विशेषविशिष्टधर्मिविशेषप्रतिपादकमित्यर्थः । ' अपहतपाप्मा ' इत्यादिवाक्ये सत्यकामशब्दो न कामनाया सत्यत्वपरः अमोघाशात्वस्य सत्यसङ्कल्पशब्देनापि सिद्धत्वात् । नापि भोगानां सत्यत्वपरः, इच्छाविशेषवाचकतया व्युत्पन्नस्य कामशब्दस्य भोगवाचित्वाभावात्, नापि काम्यन्त इति व्युत्पत्त्या गुणमात्रपरः कतिपयगुणान्तराणां पृथगुक्तत्वात् सङ्कुचितावयवार्थसम्भवे गोबलीवर्दन्यायेनानुक्तगुणविषयतयाऽसङ्कोचायोगाच्च अतो भोग्यभोगोपकरणभोगस्थानरूपा नित्याः काम्या अस्य सन्तीत्युच्यते 'तदक्षरे परमे व्योमन्' इत्युक्तनित्यविभूतिविशिष्टत्वं सत्यकामशब्दार्थः। स्फुटीकृत्येति । आकाङ्क्षितगुणगुणिविशेषप्रदर्शनं स्फुटीकारः । गुणगुणिनोरुभयोरप्युपास्यत्वं फलवाक्ये दर्शयिष्यन्मध्यगतवाक्यानामर्थं वदति, यथाह्येवेति । ' यथाह्येवेह प्रजा अन्वाविशन्ति यथाऽनुशासनं यंयमन्तमभिकामा भवन्ति यं जनपदं यं क्षेत्रभागं तं तमेवोपजीवन्ति तद्यथेह कर्मचितो लोकः ' इत्यादि प्रथमस्य यथाशब्दस्य तथोपजीवन्तीत्यन्वयः । इह लोके प्रजाः यथाऽनुशासनं, राजशासनं यथा तथा अन्वाविशन्ति लभन्ते किमित्यत्राह—यं यमन्तमिति, अन्तः फलसाधनानुष्ठानावसानभावित्वात् यं यमन्तं फलं क्षेत्रजनपदादिकं प्रति अभिकामाः अभ्यर्थिनो भवन्ति तत्तत्फलं तथोपजीवन्तीति लौकिकराजसेवादिप्रवृत्त्या लौकिकफलभोगाप्तौ तस्य क्षयित्वमाह—तद्यथेह कर्मचितो लोकः इति। अलौकिकफलस्यापि तद्वत्क्षयित्वमाह—' एवमेवामुत्र ' इति दहराकाशतद्गुणानुपासकानामन्तवत्फलभाक्त्वमाह—' तद्य इहात्मानमनुविद्य ' इत्यादिवाक्येन अननुविद्य अनुपास्य व्रजन्ति परलोकमितिशेषः । भाष्ये धर्मं कुर्वतामिति । ' तद्यथेह कर्मचितः ' इत्यादिश्रुत्यर्थोऽभिप्रेतः । अकामचारशब्दार्थमाह—असत्यसङ्कल्पत्वं चेति । अनाविर्भूतगुणाष्टकत्वं विवक्षितम् । अथ य इहात्मानमनुविद्येति । अत्रात्मानमेतांश्च सत्यान्कामानिति दहराकाशतदन्तर्वर्तिशब्दार्थानुवादः ' कामचारो भवति ' इति सत्यसङ्कल्पत्वपर्यन्तगुणाष्टकाविर्भावो विवक्षितः । ' एतांश्च सत्यान्कामान् ' इति वाक्ये कामशब्दोऽपहतपाप्मत्वादिगुणाष्टकपरः, न तु सत्यकामपदोक्तकामपरः ' एतांश्च ' इत्येतच्छब्दस्य प्रकृतगुणविषयतया कामशब्दस्य काम्यन्त इत्यवयवशक्त्या वृत्त्युपपत्तेः ' अस्मिन्कामास्समाहिताः ' इति वाक्यस्थकामशब्दैकार्थ्याच्च, सत्यशब्दविशेषितत्वं प्राक्तननिर्विशेषणकामशब्दार्थप्रत्यभिज्ञाविरोधि, सत्यकामपदवाच्यप्रत्यभिज्ञापकं चेति चेन्न ततः पूर्वं श्रुतस्यैतच्छब्दस्य प्रकृतगुणपरामर्शक्षमतया पश्चाच्छ्रुतस्य सत्यशब्दस्य तदनुविधायित्वात् ' तइमे सत्याःकामाः ' इति प्रकृतानां कामानां सत्यशब्दविशेषितत्वाच्च अनेन श्रुत्यर्थोपन्यासेन पूर्वप्रस्तुतशङ्कायाः परिहृतत्वं दर्शयति अतो दहराकाशइति ॥

ननु उपक्रमानुगुणमुपसंहारो वर्णनीयः तत्कथमुपसंहारानुगुणमुपक्रमार्थवर्णनमितिचेन्न, उपक्रमावगतस्य तदन्तर्वर्तिनोऽन्वेष्टव्यत्वस्य बाधाभावात् उपसंहारावगतस्य आत्मनोऽप्यन्वेष्टव्यत्वस्य उपक्रमे विवक्षितत्वमात्रं कृतम् , न तूपक्रान्तावगतप्रहाणम् । ननूपक्रमवाक्यमन्तर्वर्तिन एवान्वेष्टव्यत्वपरं स्यात् आत्मनोऽन्वेष्टव्यत्वं तु उपसंहारवाक्यादेवावगतस्य

श्रीभाष्यम्

प्रसादादेव नवैकामाधाप्तिस्सत्यसङ्कल्पता चोच्यते। अतो दहराकाशः परं ब्रह्म, तदन्तर्वर्ति चापहतपाप्मत्वादिकाम्यगुणजातम् तदुभयमन्वेष्टव्यं विजिज्ञासितव्यमिति चोच्यत इति निश्चीयते। तदेतद्वाक्यकारोऽपि स्पष्टयति 'तस्मिन्यदन्तरिति कामव्यपदेशः' (वाक्यकारः) इत्यादिना। अत एतेभ्यो हेतुभ्यो दहराकाशः परमेव ब्रह्म ॥

## सू-१४ गतिशब्दाभ्यां तथा हि दृष्टं लिंगं च (१.३.१४)

इतश्च दहराकाशः परं ब्रह्म 'तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो नविन्देयुरेवमेवेमास्सर्वाःप्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेनहि प्रत्यूढाः (छां.८.३.२) इति एतमिति दहराकाशं निर्दिश्य तत्राहरहस्सर्वेषां क्षेत्रज्ञानां गमनम् गन्तव्यस्य तस्य दहराकाशस्य ब्रह्मलोकशब्दनिर्देशश्च दहराकाशस्य परब्रह्मतां गमयतः। कथमनयोरस्य परब्रह्मत्वसाधकत्वमित्यत आह-तथा हि दृष्टम् इति। परस्मिन्ब्रह्मणि सर्वेषां क्षेत्रज्ञानामहरहस्सुषुप्तिकाले गमनमन्यत्राभिधीयमानं दृष्टम्-'एवमेव खलु सोम्येमास्सर्वाः प्रजास्सति सम्पद्य न विदुस्सति सम्पत्स्यामह इति' [६.९.२] 'सत आगम्य न विदुस्सत आगच्छाम इति' (६.९.२) इति च। तथा ब्रह्मलोकशब्दश्च परस्मिन्ब्रह्मणि दृष्टः 'एष ब्रह्मलोकः सम्राडिति होवाच' (७.१०.२) इति। माभूदन्यत्र ब्रह्मणि गमनदर्शनम्। एतदेव तु दहराकाशे सर्वेषां क्षेत्रज्ञाना प्रळयकाल इव निरस्तनिखिलदुःखानां सुषुप्तिका-

श्रुतप्रकाशिका

किं क्लिष्टनिर्वाहेणेतिचेन्न फलवाक्यगतोपासनानुवादस्य पुरोवादस्यैकरूपतया अवश्याभ्युपगन्तव्यत्वात्। नह्यप्राप्तं गुण्युपासनमनुवदितुं शक्यम्। नच 'अथ यदिदमात्मानम्' इति वाक्यं विशिष्टविधिपरं, गुणांशस्य प्राप्तत्वात् नापि गुणानुवादेन गुण्युपासनविधायकं उभयानुवादेन फलप्रतिपादनपरत्वात्। अतोप्राप्तस्यानुवादायोगात् फलवाक्यानूदितस्य गुण्युपासनस्य गुणोपासनस्येव 'तदन्वेष्टव्यम्' इति वाक्येनैव विहितत्वमवश्याभ्युपगन्तव्यमिति दहराकाशगुणाष्टकयोरुभयोरप्युपासनं 'तदन्वेष्टव्यम्' इति विहितम्। अथान्तर्वर्तिनः कामस्य सम्प्रदायतो द्रढयति तदेतदिति। सूत्रार्थमुपसंहरति अतएतेभ्यइति ॥

## सू-१४ गतिशब्दाभ्यां तथा हि दृष्टं लिंगं च (१.३.१४)

'अहरहर्गच्छन्ति' इति सुषुप्तौ गमनं विवक्षितं, तच्च पृथक्प्रतिपत्तिव्यवहारानर्हतया स्थितिः। निर्गमनं पृथक्प्रतिपत्त्यर्हतापत्तिः कथमनयोरिति। कथं श्रुतिषु परमात्मधर्मत्वेन अन्वयदर्शनाद्वा जीवादिप्रतिपादकवाक्येष्वदर्शनेन जीवादिष्वसंभावितत्वाद्वा गतिशब्दयोः परमात्मसाधकत्वमित्यर्थः। 'तथाहि दृष्टम्' इति सूत्रखण्डं परमात्मपरसपक्षभूतवाक्येष्वन्वयदर्शनपरं व्याचष्टे तथाहीति। गतेश्श्रुत्यन्तरप्रसिद्धिं दर्शयति परस्मिन्निति। शब्दस्यान्यत्र प्रसिद्धिं दर्शयति तथेति। 'लिङ्गं च' इति सूत्रखण्डं जीवादिप्रतिपादकविपक्षभूतवाक्येष्वदर्शनरूपव्यतिरेकाद्गतिशब्दयोरसाधारणसाधकत्वपरं व्याचष्टे माभूदिति। तत्र गतेः श्रुत्यन्तरेऽन्वयदर्शननैरपेक्ष्येण साधकत्वमाह—एवमेवेति। श्रूय

श्रीभाष्यम्

ऽयस्थानं श्रूयमाणस्य परब्रह्मत्वे पर्याप्तं लिङ्गम्; तथा ब्रह्मलोकशब्दश्च समानाधिकरणवृत्त्या ऽस्मिन्दहराकाशे प्रयुज्यमानोऽस्य ब्रह्मत्वे प्रयोगान्तरनिरपेक्षं पर्याप्तं लिङ्गमित्याह—लिङ्गं च इति। निषादस्थपतिन्यायाच्च षष्ठीसमासात्समानाधिकरणसमासो न्याय्यः॥

अथवा 'अहरहर्गच्छन्त्यः' [छां.८.३.२] इति न सुषुप्तिविषयं गमनमुच्यते; अपि त्वन्तरात्मत्वेन सर्वदा वर्तमानस्य दहराकाशस्य परमपुरुषार्थभूतस्योपर्युपर्यहरहर्गच्छन्त्यः सर्वस्मिन्काले वर्तमानाः तमजानन्त्यस्तं न विन्दन्ति—न लभन्ते; यथा हिरण्यनिधिं निहितं तत्स्थानमजानानास्तदुपरि सर्वदा वर्तमाना अपि न लभन्ते, तद्वदित्यर्थः। सेयमेवमन्तरात्मत्वेन स्थितस्य दहराकाशस्योपरि तन्नियमितानां सर्वासां प्रजानामजानतीनां सर्वदा गतिरस्य दहराकाशस्य परब्रह्मतां गमयति। तथा ह्यन्यत्र परस्य ब्रह्मणोऽन्तरात्मतयाऽवस्थितस्य स्वनियाम्याभिस्स्वस्मिन्वर्तमानाभिः प्रजाभिरवेदनं दृष्टम्। यथा अन्तर्यामि-

श्रुतप्रकाशिका

माणमिति। निधिदृष्टान्तसचिवमिति भावः। 'तद्यथा' इत्यादेर्वाक्यस्योदाहृतत्वादत्र निधिदृष्टान्तस्य श्रुतत्वाद्धि दृष्टान्तावगतपरमपुरुषार्थभावस्येति योजनान्तरेऽनन्तरमेवोच्यमानत्वाच्च। निधिदृष्टान्तश्च परमपुरुषार्थत्वज्ञापकः, अतो दृष्टान्तानुगृहीमहरहर्गमनमेकं पर्याप्तं लिङ्गमित्यर्थः शब्दस्य च न्यायविशेषानुगृहीतस्य श्रुत्यन्तरेऽन्वयनिरपेक्षं साधकत्वमाह—तथा ब्रह्मलोकेति॥

ननु कथं ब्रह्मलोकशब्दस्य समानाधिकरणवृत्तित्वागमः व्यधिकरणवृत्तावपि तदेव हि शब्दरूपमिति शङ्कायां विवक्षितमनुग्राहकं दर्शयति निषादेति। 'एतया निषादस्थपतिं याजयेत्' इत्यत्र कर्मधारयपरिग्रहे निषादजातीयस्य स्थपतेरग्निविद्ययोरसम्भवेन स्वतो निरधिकारत्वात् षष्ठीसमासपरिग्रहे च त्रैवर्णिकान्तर्भूतस्थपतिग्रहणेऽपि निषादस्थपतिशब्दनिर्वाहसम्भवात् षष्ठीसमासपरिग्रहेणापशूद्राधिकरणन्यायानुरोधो युक्त इति प्राप्तेऽभिहितं 'स्थपतिर्निषादस्स्याच्छब्दसामर्थ्यात्' इति। अयमर्थः षष्ठीसमासपक्षे निषादसम्बन्धविशेषोऽभिधेयः, कर्मधारयपक्षे निषादत्वविशिष्टः, तत्र षष्ठ्या अश्रवणान्निषादप्रातिपदिकेन विभक्त्यर्थो लक्षणीयः। न चेदं युक्तम् श्रौतार्थपरिग्रहे विरोधाभावात् न चाग्निविद्याराहित्यं दोषः, द्रव्यवदेतदुपयोग्यग्निविद्ययोरपि यथाकथञ्चिदार्जनस्य विध्यनुमतिसंभवात् तस्मात्कर्मधारय एव न्याय्य इति। एतन्न्यायानुगृहीतो ब्रह्मलोकशब्दः श्रुत्यन्तरेऽन्वयनिरपेक्षः परमात्मत्वसाधक इत्यर्थः। तर्हि 'सुसामभिरुन्नीयते ब्रह्मलोकम्' इत्यत्र कथं ब्रह्मलोकशब्दस्य वैयधिकरण्यम्, उच्यते नयतिः प्राप्तिवचनः नित्यप्राप्तस्य ब्रह्मणः प्राप्तिर्नामानुभवः, स च 'परात्परं पुरुषमीक्षते' इत्युक्तः अतो ब्रह्मानुभवः पुनर्न वक्तव्य इति 'उन्नीयते' इत्युपूर्वनयतिरुपरिस्थितप्राप्तिवाची, न बुद्धिवाची प्राप्यश्च लोक इति वैयधिकरण्यम् अत्र तु तादृशानुपपत्त्यभावात् सामानाधिकरण्यमिति—ब्रह्मलोकशब्दस्य चतुर्मुखलोकपरत्वशङ्कानिवर्तकलिङ्गमहरहर्गमनं, नहि प्रजाः प्रत्यहं चतुर्मुखलोकं गच्छन्तीति दर्शनपरम् 'लिङ्गं च' इति सूत्रखण्डमन्वैर्व्याख्यातम्। तदानीं गतिशब्दयोः परस्परोपपाद्योपपादकभावेन समुदितस्य परमात्मत्वसाधकत्वं स्यात्, न त्वेकैकस्य, ततोऽपि प्रत्येकं पर्याप्तलिङ्गसिद्धिरित्यभिप्रायेण तदनादृत्यैव व्याख्यातम्॥

गतिशब्दमात्रस्य योजनान्तरमाह—अथवेति। पूर्वयोजनायां दृष्टान्तप्रयोगरिशब्दान्वयः, अत्र तु दार्ष्टान्तिकेऽपि दहराकाशस्योपरीति। पर्यवस्याभिप्रायेणैवमुक्तम् अन्तरात्मतया स्थितत्वेनाधारः न तु उपासकानुग्राहकतया स्थितत्वेन उपरिस्थितिर्नियमितानामिति। अस्मिन्प्रकरणे सम्यग्दर्शनिबन्धनापगमाहं चेतनाचेतनयोर्नियमनस्य परस्य 'य आत्मनि

श्रीभाष्यम्

ब्राह्मणे 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति' (बृ.५।७.२२.मा,पा] ' अदृष्टो द्रष्टा अश्रुतश्श्रोता ' [५.७.२३] इति च। मा भूदन्यत्र दर्शनम्; स्वयमेव त्विदं निर्दिष्टान्तावगतपरमपुरुषार्थभावस्यास्य हृदयस्यस्योपरि तदाधारतयाऽहरहस्सर्वदा सर्वासां प्रजानामजानतीनां गतिरस्य परब्रह्मत्वे पर्याप्तं लिङ्गम् ॥

## सू—१५ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः [१.३.१५]

' अथ य आत्मा ' (छां.८.४.१) इति प्रकृतं दहराकाशं निर्दिश्य ' स सेतुर्विधृतिरेषां लोकानामसम्भेदाय ' [८.४.१] इत्यस्मिञ्जगद्विधरणं श्रूयमाणं दहराकाशस्य परब्रह्मतां गमयति; जगद्विधरणं हि परस्य ब्रह्मणो महिमा. ' एष सर्वेश्वर एष सर्वभूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय ' (बृ ६.४.२२) इति, ' एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः ' (५.८.९) इत्यादिभ्य । सचायं तस्य परस्य ब्रह्मणो धृत्याख्यो महिमाऽस्मिन्दहराकाश उपलभ्यते; अतो दहराकाशः परंब्रह्म ॥

## सू—१६ प्रसिद्धेश्च (१-३-१६)

आकाशशब्दश्च परस्मिन्ब्रह्मणि प्रसिद्धः ' कोह्येवान्यात्कः प्राण्यात्। यदेष आकाशआनन्दो न स्यात् (तै आन.७) 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' (छां.१.९.१) इत्यादिषु अपहतपाप्मत्वादिगुणसनाथाप्रसिद्धिः भूताकाशप्रसिद्धेर्बलीयसीत्यभिप्राय ॥

एवं तावद्दहराकाशस्य भूताकाशत्वं प्रतिक्षिप्तम्। अथेदानीं दहराकाशस्य प्रत्यगात्मत्वमाशङ्क्य निराकर्तुमुपक्रमते—

श्रुतप्रकाशिका

मन्तरो यमयति ' इत्यादिश्रुत्यन्तरप्रसिद्धेत्यभिप्रेतम्। अस्य परब्रह्मत्वे पर्याप्तं लिङ्गमिति लिङ्गमित्यस्यैवार्थः ॥

## सू—१५ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः (१.३.१५)

अस्य परमात्मनः महिमा धृतिः—तस्यास्मिन्दहराकाशे उपलब्धेरित्यर्थः। धृतिः—विधृतिः, अतो दहराकाशः परं ब्रह्मेति। भूताकाशादन्यत्वे तात्पर्यम् भूताकाश प्रतिक्षिप्तमितिहि वक्ष्यते। सएव वस्तुगत्या परमात्मेति परब्रह्म युक्तम् ॥

## सू–१६ प्रसिद्धेश्च (१.३.१६)

प्रसिद्धिप्राचुर्यंहि भूताकाश इत्यत्राह—अपहतेति। पूर्वसूत्रचतुष्टयकृत्य वदुत्तरेषां सूत्राणां कर्तव्यमाह—एवं तावदिति। पूर्वोक्तहेतूनां स्वरसतो जीवव्यावर्तनक्षमत्वेऽपि वक्ष्यमाणशङ्काप्रतिक्षेपानन्तरमेव स्वारस्यज्ञानपोषवव्यसिद्धिः।

## श्रीभाष्यम्

## सू–१७ इतरपरामर्शात्स इति चेन्नासम्भवात् (१,३.१७)

यदुक्तं वाक्यशेषवशाद्दहराकाशः परं ब्रह्मेति, तदयुक्तम् वाक्यशेषे परस्मादितरस्य जीवस्यैव साक्षात्परामर्शात् ' अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्म ' (८।३.५) इति। यद्यपि ' दहरोऽस्मिन्नन्तर आकाशः ' (८.१.१) इति हृदयपुण्डरीकमध्यवर्तितयोपदिष्टस्याकाशस्योपमानोपमेयभावाद्यसम्भवाद्भूताकाशत्वं नभवति तथाऽपि वाक्यशेषवशात्प्रत्यगात्मत्वं युक्तमाश्रयितुम्। आकाशशब्दोऽपि प्रकाशादियोगाज्जीव एव वर्तिष्यत इति चेत् अत्रोत्तरं नासम्भवात् इति। नायंजीवः; नह्यपहतपाप्मत्वादयो गुणा जीवेसम्भवन्ति,

## सू–१८ उत्तराच्चेदाविर्भूतस्वरूपस्तु (१.३.१८)

उत्तरात्–प्रजापतिवाक्यात् जीवस्यैवापहतपाप्मत्वादिगुणयोगो निश्चीयत इति चेत् एतदुक्तं भवति। प्रजापतिवाक्यं जीवपरमेव, तथा हि ' य आत्माऽपहतपाप्मा विजरो

श्रुतप्रकाशिका

अतो भूताकाशत्वव्युदसने तात्पर्यमितिभावः। तत्परत्वे व्युदस्ते हेत्वन्तरेण जीवपरत्वमाशङ्क्यैतैर्हेतुभिरेव तन्निरासः क्रियतेऽनन्तरसूत्रेण। उपक्रम इत्यनेन अनन्तरसूत्र नाधिकरणान्तरमिति सूचितम्, अविच्छेदप्रतीतेः॥

## सू–१७ इतरपरामर्शात्स इति चेन्नासम्भवात् (१.३.१७)

इतरशब्दस्य प्रतिसम्बन्धिसापेक्षत्वादाह–परस्मादिति। जीवस्यैवेति। दहराकाशस्य परमात्मत्वे वदतोऽपि अस्य वाक्यस्य जीवपरत्वं संप्रतिपन्नमिति एवकाराभिप्रायः। साक्षात्परामर्शादिति। नजीवसम्बन्धिद्वारा परामर्शः, किंतु तद्वाचकशब्देन परामर्शः तस्मादित्यर्थः ' अथ यएष ' इत्येतच्छब्दोहि प्रकृतपरामर्शी; अतः पूर्ववाक्येष्वपि जीवएव प्रतिपाद्यत इति परामर्शशब्दाभिप्रायः। जीवपरामर्शोद्दहकारिणी तदन्तर्वर्तित्वं देहस्याप्रतीतिश्च जीवत्वहेतुरनुसन्धेयः। अणोर्जीवस्य विपुलतरप्रसिद्धाकाशोपमेयत्वसर्वाधारत्वाद्यनुपपत्तेर्भूताकाशप्रतिक्षेपयुक्तिभिरेव जीवत्वशङ्का प्रतिक्षिप्तेत्यत्राह–यद्यपीति। उपमानोपमेयभावाद्यस्वारस्यं वाक्यशेषवशात्सोढव्यमितिभावः। नह्यपहतेति। परामर्शान्यथासिद्धेर्वक्ष्यमाणत्वादपहतपाप्मत्वादिश्रुतिस्वारस्यमनपोदितमिति भावः॥

## सू–१८ उत्तराच्चेदाविर्भूतस्वरूपस्तु (१.३.१८)

सूत्रे शङ्कांशस्याक्षरार्थमाह–उत्तरादिति। उत्तरवाक्यानुसारेण दहरवाक्येऽपि जीवत्वमेवेति निश्चीयत इत्यर्थः किमिदं प्रजापतिवाक्ये तत्रापहतपाप्मत्वादिः प्रतीतोऽपि परमात्मन एव स्यादित्यत्राह—एतदुक्तमिति। जीवपरमेवेति ' स उत्तमः पुरुषः ' इत्यनेन परमात्मपरत्वं नशङ्क्यम् तदुक्तिः प्रासङ्गिकीति भावः।

## श्रीभाष्यम्

विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पस्सोऽन्वेष्टव्यस्स विजिज्ञासितव्यस्स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानाति'(छां.८.७.१) इति, प्रजापतिवचनं प्रतिघोषरूपेणोपश्रुत्याऽन्वेष्टव्यात्मस्वरूपजिज्ञासया प्रजापतिमुपसेदुषे मघवते प्रजापतिर्जागरितस्वप्नसुषुप्तावस्थं जीवात्मानं सशरीरं क्रमेण शुश्रूषुयोग्यतापरीचिक्षिषयोपदिश्य तत्रतत्र भोग्यमपश्यते परिशुद्धात्मस्वरूपोपदेशयोग्याय तस्मै मघवते 'मघवन्मर्त्यं वा इदं शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानम्' (८.१२.१) इति शरीरस्याधिष्ठानतामात्मनश्चाधिष्ठातृतामशरीरस्य च तस्यामृतत्वस्वरूपतां चोक्त्वा 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' (८.१२.१) इति कर्मारब्धशरीरयोगिनस्तदनुगुणसुखदुःखभागित्वरूपानर्थं तद्विमोक्षे च तदभावमभिधाय 'एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपस-

## श्रुतप्रकाशिका

मघवतइति। यद्यपि विरोचनोऽपि प्रजापतिमुपासदत् तथाऽपि छायापुरुषाधिगममात्रतृप्ततया अपक्रान्तः अतस्तदनुक्तिः इन्द्र एवार्थान्तरबुभुत्सया स्थितइति सन्निहितत्वात्तन्निर्देशः । खण्डपञ्चकस्यार्थं संक्षेपेणाह—जागरितेति । 'नाहमत्र भोग्यं पश्यामि' इत्यस्यार्थमाह—तत्रतत्र भोग्यमपश्यत इति । 'य आत्मा' इत्यादिप्रजापतिवाक्यं परिशुद्धजीवस्वरूपाभिप्रायम् । तच्छ्रुत्वा पश्चादुपसन्नयोरिन्द्रविरोचनयोः प्रजापतिरुपति 'य एषोऽक्षिणि पुरुषो दृश्यत' इतिदिशा नेहाक्षिपुरुषः परमात्मा 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' इत्युपक्रम्य स्वप्नादवस्थाऽभिधानात् नचेह जीवस्याक्षिणि स्थितिरुपादिश्यते, किंतु अविकाराभ्यां जीवस्य स्थितिगती निश्चीयेते अतोऽक्ष्णोः जीवस्थितिगतिसूचकत्वादक्षिणि दृश्यत इत्युक्तम् अस्मिन्कर्मण्यस्य सामर्थ्यं दृष्टमितिवत् । ततश्च गृहे स्थित्वा निर्गच्छन् पुरुषो यथा गृहादन्यः एवं शरीरे स्थितिगतिमानात्मा देहातिरिक्त इत्युक्तं भवति । 'अमृतम्' इति निरतिशयसुखरूपत्वम् 'अभयम्' इति दुःखासम्भिन्नत्वम् 'ब्रह्म' इत्यसङ्कुचितज्ञानतया बृहत्त्वं ब्रह्मात्मकत्वं चोक्तं, एवं प्रजापतिहृदयानभिज्ञानेन छायापुरुषं उपदिष्टं मत्वा पुनःपप्रच्छतुः 'कतम एषः' इत्यादिना सर्वेष्वेतेषु नेत्रादिस्थानेषु परिख्यायते कतमएष इत्यर्थः । पुनश्चाक्षुषदेहस्यानात्मत्वमिदतयाऽवभासनादन्वयव्यतिरेकाभ्याञ्च दर्शयितुमुदशरावब्राह्मणेन केवलदेहस्य वसनाभरणालङ्कृतदेहस्य च छायादर्शने प्रजापतिनियोगस्तयोस्तद्दर्शनञ्चोक्तम् । यथा वसनाभरणादिरन्वयव्यतिरेकाभ्यामनात्मा, एवंचाक्षुषत्वादिदृग्गोचरत्वाच्च, देहो नात्मेति प्रजापतेरभिसन्धिः । विरोचनो पक्वकषायत्वात्तावता तृप्तो जगाम । इन्द्रस्तु प्रजापतेरभिसन्धिमजानन्नपि देहस्यामृतत्वाभयत्वानुपपत्तिं दृष्ट्वा 'नाहमत्र भोग्यं पश्यामि' इति पुनरुपससाद, प्रजापतिस्तु जाग्रद्दशायां वसनादीनामिव जीवाच्छरीरस्यापगमाभावात् व्यतिरेको दुर्दर्श इति मत्वा स्वाप्नदेहाभिमानिन आत्मनः जाग्रद्देहव्यतिरेकस्य सुगमत्वात् स्वप्नावस्थामुपदिदेश । तदभिप्रायानभिज्ञ इन्द्रस्तत्र अमृतत्वाभयत्वानुपपत्तिं जानन् 'नाहमत्र भोग्यं पश्यामि' इत्युपासदत्, बाह्याभ्यन्तरदेहद्वयमनुष्यत्वादिगन्धपराञ्चोपाधिक चक्षुरादिदेहेन स्वयप्रकाशमात्मानं दर्शयितुं सुषुप्त्यवस्थामुपादिशत् । तदानीमपीन्द्रस्तदभिप्रायाज्ञानेनामृतत्वाभयत्वाद्यनुपपत्त्या 'नाहमत्रभोग्यं पश्यामि' इत्युपसन्नोऽभूत्, एवमनतिस्फुटं गहनमुपदिशतः प्रजापतेस्तात्पर्यमुक्तं शुश्रूषुयोग्यतापरीचिक्षिषयेति 'मघवन्मर्त्यं वा इदं शरीरम्' इत्यादिना निष्कृष्टात्मस्वरूपं स्फुटतरमुपादिक्षत् । तदुपदेशप्रकारमाह— शरीरस्याधिष्ठानतामित्यादिना । अथ मुक्त्यवस्थोपदेशं दर्शयति एवमेवैषसंप्रसादइति ॥

## श्रीभाष्यम्

**परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते'(छां.८।१२.२)इति जीवात्मनस्स्वरूपमेव शरीरविमुक्तमुपदिश्य ' स उत्तमः पुरुषः स तत्र पर्येति जक्षत्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरम् ' [८.१२.३] इति,**

## श्रुतप्रकाशिका

*एवमित्यादिकमुपाददानस्यायमभिप्रायः,* **' अस्माच्छरीरात् '** *इत्यादिवाक्यस्य परोक्तार्थो दार्ष्टान्तिकवाक्यानुगुण*त्वादिदोषविध्वस्त इति तथाहि शरीरात्समुत्थानं नाम श्रवणमननध्यानाभ्यासरूपविवेकः । स्वेन रूपेणाभिनिष्पत्तिर्नाम प्रपञ्चविलापको वृत्तिरूपसाक्षात्कारः, तेन परज्योतिर्भवति **' उपसम्पद्य '** इति निर्देशो मुखं व्यादाय स्वपितीतिवदिति केचिद्व्याचक्षते । तदयुक्तम् समुत्थानशब्दस्य विवेकवाचित्वाभावात् शरीरविषयो विवेक इतिचेत्पञ्चमी नघटते तस्य द्वितीयार्थत्वाभावात् । शरीरादात्मनो विवेकश्चेदात्मनात्म्यत्वाहारः **' तयोर्ध्वमायन्नमृतत्वमेति '** इत्यादिश्रुत्यैकार्थ्यप्रत्यभिज्ञाविरोधश्च *शरीराभिमानादुत्थानमिति चेत् शरीरशब्दस्य लक्षणा ।* शरीरादात्मन उत्थानं विवेकश्चेत् सशरीरस्य तत्सम्भवान्मोक्षस्य चाशरीरतालक्षणत्वादस्य वाक्यस्य मोक्षविषयत्वं नस्यादितिचेत् अर्चिरादिमार्गगमनस्य सूक्ष्मदेहसापेक्षत्वात्तेनागतवतएव सवासनसर्वहेयप्रहाणाच्च मुख्यार्थपरत्वे सत्येव मुक्तिविषयत्वोपपत्तेः । स्वरूपाभिनिष्पत्तेः विवक्षितक्रमत्वं च क्लिष्टं गत्यभावद्योतक **' सम्पद्याविर्भावः'** इति सूत्रविरोधश्च, नह्याविर्भूय सम्पत्स्यत इति सूत्रितम् । भेदप्रविलयातिरेकेण परज्योतिर्भावात्मकार्थान्तरासम्भवात् **' परंज्योतिरुपसम्पद्य '** इति निर्देशवैयर्थ्यं च परज्योतिर्भावो नाम न धर्मान्तरं निर्विशेषवस्तुन्युपपद्यते नचाविर्भवति ननु परज्योतिर्भावो नाम अद्वितीयत्वम् । तेन निवर्तकशनसद्वितीयत्वव्युदास इति चेन्न सम्पत्तिशब्दस्येतरनिवृत्तिवाचित्वाभावात् । नहि घटो भवतीत्युक्ते दण्डचक्रादिद्वितीयनिवृत्तिरस्ति । भवति उपसम्पत्तेस्सकर्मकत्वप्रतीतिस्वारस्यविरोधश्च । अस्य वाक्यस्यैवमर्थपरत्वे दृष्टान्तोऽप्यस्यादर्थपूर्वं वाक्ये स्यात् पूर्वंहि **' अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः '** इत्युक्त्वा **' अशरीरो वायुरभ्रं विद्युत् स्तनयित्नुः '** इति वाय्वादीनां कर्मकृतशरीराभावेन प्रियाप्रियानन्वयं दर्शयित्वा **' तद्यथैतान्यमुष्मादाकाशात् समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यन्ते'** इत्युक्तम् । नहि वाय्वादीनामाकाशात्समुत्थानं नाम विवेकज्ञानरूपं, अपितु स्थितिवेलाया स्वकार्यकरणायोर्ध्वदेशेऽभिवृद्धिः । परशब्दो वाय्वादीनां कारणवस्तुवाची । ज्योतिश्शब्दस्तु कारणानां कार्योत्पादनद्वारेण तदभिव्यक्तिहेतुतया प्रयुक्तः वाय्वादीनिच स्वकारणद्रव्यमुपगम्य कार्यावस्थां हित्वा कारणस्वरूपेण रूपेण विशिष्टानि भवन्ति वायुर्धावद्रूपवहादिरूपेण समविषत्वं हित्वा वायुत्वमात्रेणावतिष्ठते । विद्युच्च विद्युत्त्वं हित्वा तेजस्त्वेन अभ्रस्तनयित्नू जलात्मनादिप्रहाणेन स्वकारणभूतरूपेण एवं जीवश्च मार्गविशेषेण गत्वा परब्रह्मप्राप्य स्वकार्यवस्थाप्रहाणेन परमात्मस्वरूपेणाविर्भवतीत्येवमर्थसतिहि दृष्टान्तदार्ष्टान्तिकवाक्यसामञ्जस्यं भवति ॥

अस्य वाक्यस्य मुमुक्षुविषयत्वेऽप्युक्तदूषणानतिवृत्तिरनुसन्धेया । यतः **' अस्माच्छरीरात् '** इति वाक्यं न मुक्तस्य जीवस्य स्वरूपैक्यप्रतिपादकम्, अतएव **' नासम्भवात् '** इति सूत्रकारेण भेदनिर्देशो न जीवपरयोरसत्त्वबोधाभिप्रायः, अपितु द्योम्निमालित्यादिकमिव परस्मिन्नविद्याकल्पितजीवभावमपनेतुं जीवस्वरूपैक्यलक्षणाभिप्राय इत्यादापि निरस्तम् जीवस्वरूपमपनिनीषोर्भेदनिर्देशे किं फलम् यावद्भेदनिर्देशेन ईश्वरस्यासंसारित्वमप्रतिपन्न तावत्तदैक्यापत्तिः पुरुषार्थस्स्यात् आसत्स्वरूपापत्तेः पुरुषार्थत्वाय तस्यासंसारित्वप्रतिपत्तये भेदनिर्देश इति चेत् नहि परमात्मनि कश्चित्भेदनिर्देशः तेन तस्य संसारितया तदैक्यापत्तेरपुरुषार्थत्वं को वारयेत् । अविद्यानिवृत्तौ तत्कल्पितापुरुषार्थत्वं निवर्तत इति चेत् —

## श्रीभाष्यम्

प्राप्यस्य परस्य ज्योतिषः पुरुषोत्तमत्वं, निवृत्ततिरोधानस्य परंज्योतिरुपसम्पन्नस्य प्रत्यगात्मनो ब्रह्मलोके यथेष्टभोगावाप्तिम् ' प्रियाप्रियावियुक्तकर्मनिमित्तशरीराद्यपुरुषार्थाननुसन्धानं चाभिधाय ' स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिञ्शरीरे प्राणो युक्तः ' (८.१२.३) इति यथोक्तस्वरूपस्यैव संसारदशायां कर्मतन्त्रं शरीरयोगं युग्यशकटयोगदृष्टान्तेनाभिधाय ' अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमथ यो वेदेदमभिव्याहराणीति स आत्माऽभिव्याहाराय वागथ यो वेदेदं शृणवानीति स आत्मा श्रवणाय श्रोत्रम् । अथ यो वेदेदं मन्वानीति स आत्मा मनोऽस्य दैवं चक्षुः ' (८.१२.४,५) इति चक्षुरादीनां करणत्वं रूपादीनां ज्ञेयत्वमस्य च ज्ञातृत्वं प्रदर्श्य तत एव शरीरेन्द्रियेभ्योऽस्य व्यतिरेकमुपपाद्य ' स वा एष एतेन

### श्रुतप्रकाशिका

पुरुषार्थप्रतिपत्तेर्जीववैलक्षण्यप्रतिपत्तिमूलकत्वाद्वैलक्षण्यस्याविद्यानिवृत्तौ निवृत्तः पुरुषार्थत्वप्रतिपत्तिरपि निवर्तेत अनभिमतत्वप्रतिबुद्धौ निवृत्ताया तासाम् स्पृहणीयत्वबुद्धिनिवृत्तिवत् । ततश्च तद्भावापत्तिः पुरुषार्थ एव स्यात् ॥

किंच एवमुपदिदिक्षोर्भेदवादमुखेन असत्सारिव दर्शयतः प्रतारकत्वं च स्यात् भेदवादोऽनुवादरूपः प्रतिषेधार्थं क्रियत इतीदमत्यन्तमयुक्तम् जीवपरयोर्नियन्तृनियाम्यतादिलक्षणभेदस्य लौकिकत्वात् । अतश्च श्रुतिसूत्राणामुभयत्रैव मृषावादिना स्थितम्—' सउत्तम पुरुष ' इति शब्देन परमात्मपरत्वशङ्कया तत्परिहारायाह–प्राप्यस्य परस्य ज्योतिष पुरुषोत्तमत्वमिति । जीवस्य प्राप्यतया पुरुषोत्तमप्रसङ्गः, न तु प्रकरणप्रतिपाद्यत्वमिति भावः । ' सउत्तम पुरुष ' इति यदुपसदनेन स उपसदनीयः पुरुष उत्तम इत्यर्थः । ' सतत्र पर्येति ' इति, स उपसम्पत्ता तत्र परमात्मनि पर्येति तं परितोऽनुभवति । यद्वा अनुसञ्चरति ' कामरूप्यनुसञ्चरन् ' ' येनयेन धाता गच्छति ' इति श्रुत्यन्तरात् ॥

ननु यउपसम्पद्याभिनिष्पद्यत सउत्तम पुरुषइति तच्छब्देन प्रथमानिर्दिष्टप्रकृतपरामर्शस्वारस्यात् , ' स तत्र पर्येति ' इत्यनन्तरवाक्यस्यप्रथम तत्तच्छब्देनैकार्थत्वप्रतीतेश्च । नैवम् उ सम्पद्यमानाद्यपि प्रकृतमेव तत् । प्रथमानिर्दिष्टेतरविषयत्वे तच्छब्दस्वारस्याभावेऽप्युत्तमपुरुषशब्दयोरुभयोरपि स्वारस्याच्च । उत्तमपुरुषशब्दो जीवेश्वरसाधारण पुरुषवमपीह भगवत्येव स्वरससिद्धम् । केवल एकवचनान्त पुरुषशब्दोऽपीह भगवत्येव स्वारसः ' कुतउत्तमःपुरुषशब्दः ' ' उत्तम पुरुषस्त्वन्यः ' इति स्मृत्यर्थस्य झडिति प्रत्यभिज्ञानाच्च एव चकास्ति ' सतत्र ' इति तत्सम्पन्न तच्छब्दस्याव्यवहितोत्तमपुरुषपरामर्शित्व न स्यात् ननु व्यवहितपरज्योतिःपरामर्शस्वारस्यम । ननु ' सउत्तम पुरुष ' इति मुक्तस्य ब्रह्मात्मकत्वपरं स्यात् तदा तच्छब्दस्वारस्यञ्च स्यात् , प्रकृताप्रहाणात् , नैव ' सतत्र ' इत्यनन्तरवाक्ये स इति पदस्य वैयधिकरण्येन जीवपरामर्शे रीतिभेदेनास्वारस्यापातात् । तदपि पद समानाधिकरणमपि विवक्षित चेत् तेनैव परमात्मनो वैयधिकरण्येनोपादानात् । तत्र इति पदस्य च सम्बन्धित्वेऽपि क्लेशः, अतो यथातथास्तु ' सउत्तम पुरुष ' इति वचनम् ।

' नोपजनं स्मरन् ' इत्यस्यार्थमाह–प्रियाप्रियेति । अनुभूतस्याह स्मरण पूर्वमब्रह्मात्मकतया दुःखात्मकत्वेन ह्यनुभूतम् न तथा स्मरति कृत्स्नस्य भगवदात्मकत्वेन अनुभवयोग्यत्वादित्यर्थः । प्रयोग्य युग्यः आचरण शकट ' अथ यत्रैतत् ' इत्यादिश्रुतेरर्थमाह–चक्षुरादीनामिति । आकाश प्रकाशकम् आलोकादि प्रकाशमान रूप वा प्रकाशयति यत् चाक्षुषः चक्षुरुपकारकः तत्फलितमर्थमाह–ततएवेति ।

## श्रुतप्रकाशिका

तदत्र ' इति वैयधिकरण्येन प्रश्नस्य ' एषआत्मा, परमाकाशशरीरक आत्मा,' इति सामानाधिकरण्येनोत्तरम् ततश्च तदन्तर्वर्तित्व फलितमितिचेन्न वैयधिकरण्येन, प्रश्नस्य वैयधिकरण्येन प्रतिवचने सम्भवति, सामानाधिकरण्येन, प्रतिवचनकल्पनायोगात् । अतश्चमयोहि तथा निर्वाह उपपद्यते, नकेवल परमाकाशशरीरस्य हृदयान्तर्वर्ति व प्रतात्प्रकरणपर्यालोचन विरुद्धम् सन्नादप्रमाणान्तराभावविध्वस्त च ' यो वेद निहितम् ' इति वाक्यम्-यर्थासिद्धम् ॥ ' परमे व्योमन् सोऽश्नुते ' इत्यन्वयसम्भवात् शाण्डिल्यविद्याया च ' आकाशात्मा ' ' एषम आत्माऽन्तर्हृदये ' इत्यादिवाक्यैराकाशवत्सूक्ष्मस्वच्छव्यापिस्वरूपस्य हृदि वर्तमानत्वमुच्यत इत्यन्यथासिद्धम् , अतोऽनुपपन्नमिदम् ॥

## इति दहराधिकरणम्

## अथ दहराधिकरणम्

### गूढार्थसङ्ग्रह.

' दहर उत्तरेभ्यः ' सूत्रार्थः श्रुतप्रकाशिकायामिवोक्ता । अत्र दहर. उत्तरेभ्य इति पदच्छेदः सिद्धान्ते परमेच सम्मतः । दहरे उत्तरेभ्य इति नवीनाना पदच्छेदः, नव्यमते, दहरे भूताकाशे विद्यमान, परमात्मा इति , तस्मिन्यदन्तः ' इत्यत्र अन्तश्शब्दार्थः परमात्मा । अत्र दहरे इति विग्रहकरणमात्रेण श्रुतौ द्विवार प्रयुक्तयोर्दहरशब्दयोर्मध्ये प्रथमदहरशब्दार्थ नविवक्षित. ; द्वितीयदहरशब्दार्थ एव विवक्षित इत्यत्र किं गमकम्, इति विचारे ' तस्मिन्यदन्त, स्तदन्वेष्टव्यम् ' इत्यन्तर्विद्यमानस्यान्वेष्टव्यत्वप्रतिपादनमेव । द्वितीयदहरशब्दार्थ एव दहरे इति सप्तम्यन्तस्य विवक्षागमकम् ॥

अत्र ' किं तदत्र विद्यते—विजिज्ञासितव्यम् ' इति प्रश्नस्य अन्वेष्टव्य जिज्ञासितव्यशब्दघटनेन प्रतिवचनं पूर्वमोक्तमिति, ' एष आत्माऽपहतपाप्मा ' इति वाक्य ' उत्तरेभ्य ' इत्यत्र विवक्षितमिति नवीनानामाशयः प्रतीयते । ' तदन्वेष्टव्य, तद्वाव विजिज्ञासितव्यम् ' इत्यत्र विधि । मुक्तिपर्यन्तफलपरम्परया उत्तरत्र प्रतिपादनेन एतद्विद्यायाः समाप्तिः समजनि ' अस्मिन्कामास्समाहिता. ' ' एष आत्माऽपहतपाप्मा विजरो विमृत्यु. ' इत्युत्तरवाक्यम् । तत्र ' अस्मिन् ' इत्यस्य ' एष आत्मा ' इति वक्ष्यमाणः आत्मैव विवक्षितः । तत उत्तर ' तद्य इहात्मानमनुविद्य व्रजन्ति' इत्यत्र वेदनाभावे फलाभाव. 'य इहात्मानमनुविद्य व्रजन्ति' इत्यत्रात्मनः कामानाच वेदनस्य फलमुक्तम् । आत्मतद्गुणधर्मयो. समुच्चित्य ज्ञानस्य फलाभिधानेन विदि धातुप्रयोगेण ' तस्मिन् यदन्तस्तदन्वेष्टव्यम् , तद्वाव विजिज्ञासितव्यम् ' इत्यत्र आत्मतद्गुणधर्माणां समुच्चित्य ज्ञानस्यैव विधिरिति स्पष्ट निर्मत्सराणां विदुषाम् ॥

एष च ' य इहात्मानमनुविद्य—कामचारो भवति ' इति वाक्ये आत्मतद्गुणधर्माणां समुच्चित्य ज्ञानस्य फल निरूपणेन अत्रापि परमात्मतद्गुणधर्मयोः समुच्चित्य वेदनमेव विवक्षितम् । ' अस्मिन्कामास्समाहिताः ' एष आत्मा' इति वाक्ये अपहतपाप्मत्वादीनां कामनाविषयत्व वर्तत इति नवीनानामपि सम्मतम् । अत तत्र ' सत्यान्कामान् ' इत्यत्र एतत्फलत्रवाक्यगतपित्रादेः न कामशब्दार्थ व परोक्तरीत्या (ब्र.वि) युक्तम् । ' अस्मिन्कामास्समाहिता: ' ' एतांश्च सत्यान्कामान् ' इति वाक्ये गुणवृत्तिकामाएव विवक्षिता । ' एष उत पुरुषः सत्यकामः ' इति धर्मिणि सत्यशब्दप्रयोगेण तद्गुणधर्मेष्वप्यपहतपाप्मत्वादिषु तद्वदेव सत्यशब्दप्रयोगेण च धर्मिण तद्गुणधर्माणां च सत्यत्वमेकरूप वर्तत इति बोधितम् ॥

श्रीभाष्यम्

अतो दहराकाशोऽनाघ्राताविद्याद्यशेषदोषगन्धः स्वाभाविकनिरतिशयज्ञानबलैश्वर्यवीर्यशक्तितेजःप्रभृत्यपरिमितोदारगुणसागरः पुरुषोत्तम एव। प्रजापतिवाक्यनिर्दिष्टस्तु 'घ्नन्ति त्वेवैनं विच्छादयन्ति (छां.८.१०.२) इत्येवमादिभिरवगतकर्मनिमित्तदेहपरिग्रहः पश्चात्परं ज्योतिरुपसम्पद्याविर्भूतापहतपाप्मत्वादिगुणस्वस्वरूप इति न दहराकाशः ॥

## सू-२१ अनुकृतेस्तस्य च (१.३.२१)

तस्य दहराकास्य परस्य ब्रह्मणः, अनुकारात् अयमपहतपाप्मत्वादिगुणको विमुक्तबन्धः प्रत्यगात्मा न दहराकाशः। तदनुकारः तत्साम्यम्। तथा हि प्रत्यगात्मनो विमुक्तस्य परब्रह्मानुकारश्श्रूयते 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जन परमं साम्यमुपैति' [मु.३.१.३) इति। अतोऽनुकर्ता प्रजापतिवाक्यनिर्दिष्टः। अनुकार्यं ब्रह्म दहराकाशः ॥

## सू—२२ अपि स्मर्यते (१.३.२२)

संसारिणोऽपि मुक्तावस्थायां परमसाम्यापत्तिलक्षण परब्रह्मानुकारः स्मर्यते 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः। सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' (गी.१३.२ इति। केचित् 'अनुकृतेस्तस्य च' 'अपि स्मर्यते' इति सूत्रद्वयमधिकरणान्तरं

श्रुतप्रकाशिका

दन्यत्व स्फुटयति अतोदहरेति। यद्वा इह वाक्यशेषसहकृतस्य वस्तुतेजस्य च 'स्वाभाविक'मित्यधिका शङ्का। सहि शाण्डिल्यविद्याया वाक्यशेषसहकृतस्य वस्तुतः प्रकरणरूपवाक्यशेषापेक्षयाऽपहतपाप्मत्वादिलिङ्ग प्रबलमित्यधिकः परिहारः, वस्तुसामर्थ्यं दर्शयति अनाघ्रातेत्यादिना। अत्र ज्ञानशक्त्यादयस्सत्यसङ्कल्पवत्फलितवादुक्ताः ॥

एवमुपक्रमोपसंहारानिर्वाहः प्रमाणान्तरेण परमात्मनोऽपहतपाप्मत्वादीनां स्वाभाविकत्वास्वाभाविकत्वसिद्धे सुपपद्यते अन्यथा 'अनुक्तमन्यतो ग्राह्यम्' इति न्यायाद्दहरवाक्येऽपि मुक्तावस्थस्य गुणाष्टकान्वयो विवक्षितस्स्यादिति शङ्कायामाह—

## सू—अनुकृतेस्तस्य च (१.३.२१)

तथाभूतस्य तथाभावाभिनयशङ्काप्रतिक्षेपार्थमाह—तदनुकारस्तत्साम्यमिति। तद्दृष्टान्तेनहानुकारो विवक्षितः तेन तन्मूलभूत गुणसाम्यमपि अर्थित भवति। सोऽस्तु 'स्वच्छन्दवृत्तिरूपस्तदनुकारश्श्रूयते' इत्युक्ति गुणसाम्योपलक्षणार्था—

## सू—२१ अपि स्मर्यते (१.३.२२)

'साम्यमुपैति' इत्युक्ते केन धर्मिणा साम्यमित्यपेक्षापूरणार्थं 'मम साधर्म्यमागता.' इति वचनमुदाहृतम्, परैः कृतमधिकरणभेदमनूद्य दूषयति केचिदित्यादिना। मारूपत्वश्रवणात् प्राकृतज्योतिष्ट्वद्ब्रह्माभिरूपधर्मविवक्षाभ्रमो

## श्रीभाष्यम्

'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' (मु २.२.१०) इत्यस्याश्श्रुतेः परब्रह्मपरत्वनिर्णयाय प्रवृत्तं वदन्ति। तत्तु 'अदृश्यत्वादिगुणको धर्मोक्तेः' (शारी.१.२.२२) 'द्युभ्वाद्यायतनं स्वशब्दात्' (१.३.१) इत्यधिकरणद्वयेन तस्य प्रकरणस्य परब्रह्मविषयत्वप्रतिपादनात् 'ज्योतिश्चरणाभिधानात्' (१.१.२५) इत्यादिषु परस्य ब्रह्मणो भारूपत्वावगतेश्च पूर्वपक्षानुत्थानादयुक्तम्, सूत्राक्षरवैरूप्यं च ॥

## इति दहराधिकरणम्

### श्रुतप्रकाशिका

युक्त इत्यत्राह–ज्योतिश्चरणाभिधानादित्यादिष्विति। प्रकृतप्रकरणस्यानेकाधिकरणनिरूप्यत्व ह्यधिकारदृष्ट्या स्थानुचित अत्र तदभावादयुक्तमित्यभिप्राय.। दूषणान्तरमाह–सूत्राक्षरेति। अनुकृतिरनुभानमितिहि परैरुक्तम् तदयुक्तम्, करोतिभात्योरेकार्थत्वाभावात् 'तस्य च' इति श्रुतिप्रतीकोपादानमित्युक्तम् तदयुक्तम् 'यदेव विद्ययेव' इतिवदितिकरणाभावात् तस्यानुकृतेरित्यन्वये स्वारसिकेऽपि तत्प्रहाणेनार्थवर्णनं च क्लिष्टम्। यादवप्रकाशीयैस्तु 'अनुकृति अनुशब्दस्य करणम्' इत्युक्तम् तदयुक्त, यथा 'स्वं रूपं शब्दस्याशब्दसंज्ञा' इति परिभाषासिद्धं व्याकरणे शब्दस्वरूपोपादानं न एवमस्मिञ्छास्त्रे परिभाषाया अभावाच्छब्दस्वरूपाविवक्षायामिति करणस्य दर्शितं वाच्य 'अन्तस्तद्धर्मोपदेशात्' 'आकाशस्तल्लिङ्गात्' इत्यादिष्विव प्रतिज्ञाखण्डाभाव चशब्दवैयर्थ्यं चेति दूषणद्वयं सर्वसाधारणमभिप्रेतम् ॥

दहराकाशो भूताकाश. तदन्तर्वर्ती जीव इति पूर्वपक्षं कृत्वा दहराकाश परमाकाश, तदन्तवर्ती परमात्मेति सिद्धान्तितम्। तत्र तावत्पूर्वपक्षस्थितिरनुपपन्ना, भूताकाशान्तवर्तित्वस्य जीवासाधारणत्वाभावात् 'यस्य वायुश्शरीरम्' 'य आकाशे तिष्ठन्' 'यस्याकाशश्शरीरम्' इत्यन्तर्यामिब्राह्मण भूताकाशान्तर्वर्तिन परमात्मत्वनिश्चयात् सिद्धान्ते च 'किं तदत्र विद्यते यदन्वेष्टव्यम् यद्वाव विजिज्ञासितव्यम्' इति प्रश्नस्य प्रतिवचनसामञ्जस्य न भवति। नतावत् 'उभे अस्मिन्द्यावापृथिवी' इत्यादिवाक्योक्तद्यावापृथिव्यादिक तदन्तर्वर्तीति प्रतिवचन युक्तम्, तस्य विजिज्ञास्यत्वाभावात् नह्यन्तर्वर्तिमात्रविषय प्रश्न, किंतु उपास्यभूता तदन्तर्वर्तिविषय 'अस्मिन्कामास्समाहिता' इति च नोत्तरम्, अस्मिन्निति पदं तावत् प्रकृतब्रह्मपुरविषयम् 'एतत्सत्यं ब्रह्मपुरमस्मिन्कामास्समाहिता.' इतिहि श्रूयते, परमाकाश एव ब्रह्मणः पुरं शरीरस्य ब्रह्मपुरत्वं तत्सम्बन्धादौपचारिकमिति पश्चात् पुष्पवदद्भिर्ब्रह्मपुरशब्दो दहराकाशवाचकपरमाकाश पर इति व्याख्यात ततश्चास्मिन्निति परमाकाशनिर्देशस्स्यात् ॥

एवं च सति कामशब्द. किं परमात्मपर., उत तद्गुणपर. उत द्यावापृथिव्यादिपर न प्रथम बहुवचनान्तत्वात्, 'आत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्' इति भेदनिर्देशाच्च। नद्वितीय. परमात्मगुणाधारतया प्रतीयमानस्य परमात्मत्वापत्तौ, अस्मदीयपक्षपरिग्रहस्स्यात् नहि परमात्मगुणानां धर्मी परमाकाश.। नतृतीय., उपास्यरूपतदन्तर्वर्तिप्रश्नस्योत्तरत्वायोगात् अन्तर्वर्तिप्रश्नस्योत्तरं 'एष आत्मा' इति वाक्यमितिचेन्न एकवचनान्तस्यैतच्छब्दस्य ब्रह्मपुरविषयत्वेन तदन्तर्वर्तिविषयत्वायोगात्। परमाकाशशरीर. परमात्मैवैतच्छब्देन परामृश्यत इतिचेत्। तदप्ययुक्तम् परमाकाशान्तर्वर्तिविषयप्रश्नप्रतिवचनस्य परमाकाशविशिष्टविषयत्वायोगात्, नहि गृहविशिष्टस्य गृहमधिकरणम्। एष इतिपदं नप्रकृतविषयं किंतु बुद्धिस्थविषयमितिचेत् प्रकृतपरामर्शित्वस्वारस्यभङ्ग। सच प्रकृतपरामर्शित्वसम्भवेऽनुपपन्न, 'किं

## श्रुतप्रकाशिका

तदत्र ' इति वैयधिकरण्येन प्रश्नस्य ' एष आत्मा, परमाकाशशरीरक आत्मा,' इति सामानाधिकरण्येनोत्तरम् ततश्च तदन्तर्वर्तित्व फलितमितिचेन्न वैयधिकरण्येन, प्रश्नस्य वैयधिकरण्येन प्रतिवचने सम्भवति, सामानाधिकरण्येन प्रतिवचनकल्पनायोगात् । असम्भवेहि तथा निर्वाह उपपद्यते, नकेवल परमाकाशशरीरस्य हृदयान्तर्वर्तित्व एतत्प्रकरणपर्यालोचन विरुद्धम् सत्रादप्रमाणान्तराभावविध्वस्त च ' यो वेद निहितम् ' इति वाक्यमन्यथासिद्धम् । ' परमे व्योमन् सोऽश्नुते ' इत्यन्वयसम्भवात् शाण्डिल्यविद्याया च ' आकाशात्मा ' ' एषम आत्माऽन्तर्हृदये ' इत्यादिवाक्यैराकाशवत्सूक्ष्मस्वच्छव्यापिस्वरूपस्य हृदि वर्तमानत्वमुच्यत इत्यन्यथासिद्धम् , अतोऽनुपपन्नमिदम् ॥

## इति दहराधिकरणम्

### अथ दहराधिकरणम् ॥

### गूढार्थसङ्ग्रह

' दहर उत्तरेभ्य ' सङ्गति श्रुतप्रकाशिकायामेवोक्ता । अत्र दहर उत्तरेभ्य इति पदच्छेद सिद्धान्ते परमते च सम्मत । दहर उत्तरेभ्य इति नवीनाना पदच्छेद , नव्यमते, दहरे भूताकाशे विद्यमान, परमात्मा इति, ' तस्मिन्यदन्त ' इत्यत्र अन्तरशब्दार्थ परमात्मा । अत्र दहरे इति विग्रहकरणमात्रेण श्रुतौ द्विवार प्रयुक्तयोर्दहरशब्दयोर्मध्ये प्रथमदहरशब्दार्थ नविवक्षित , द्वितीयदहरशब्दार्थ एव विवक्षित इत्यत्र किं गमकम्, इति विचारे ' तस्मिन् यदन्तस्तदन्वेष्टव्यम् ' इत्यन्तर्विद्यमानस्यान्वेष्यत्वप्रतिपादनमेव । द्वितीयदहरशब्दार्थ एव दहरे इति सप्तम्यन्तस्य विवक्षागमकम् ॥

अत्र ' किं तदत्र विद्यत—विजिज्ञासितव्यम् ' इति प्रश्नस्य अन्वेष्टव्य जिज्ञासितव्यशब्दघटनेन प्रतिवचन पूर्वं नोक्तमिति, ' एष आत्माऽपहतपाप्मा ' इति वाक्य ' उत्तरेभ्य ' इत्यत्र विवक्षितमिति नवीनानामाशय प्रतीयते । ' तदन्वेष्टव्य, तद्वाव विजिज्ञासितव्यम् ' इत्यत्र विधि । मुक्तिपर्यं तपल्परम्पराया उत्तरत्र प्रतिपादनेन एतद्विद्यायास्समाप्ति समजनि ' अस्मिन्कामास्समाहिता ' ' एष आत्माऽपहतपाप्मा विजरो विमृत्यु ' इत्युत्तरवाक्यम् । तत्र ' अस्मिन् ' इत्यत्र ' एष आत्मा ' इति वक्ष्यमाण आत्मैव विवक्षित. । तत उत्तर ' तद्य इहात्मानमनुविद्य व्रजन्ति ' इत्यत्र वेदनाभावे फलाभाव ' य इहात्मानमनुविद्य व्रजन्ति' इत्यत्रात्मन कामानाच वेदनस्य फलमुक्तम् । आत्मतद्वृत्तिधर्मयो समुच्चित्य ज्ञानस्य फलाभिधानेन विदि धातुप्रयोगेण ' तस्मिन् यदन्तस्तदन्वेष्टव्यम् , तद्वाव विजिज्ञासितव्यम् ' इत्यत्र आत्मतद्वृत्तिधर्माणा समुच्चित्य ज्ञानस्यैव विधिरिति स्पष्ट निर्मत्सराणां विदुषाम् ॥

एव च ' य इहात्मानमनुविद्य—कामचारो भवति ' इति वाक्ये आत्मतद्वृत्तिधर्माणां समुच्चित्य ज्ञानस्य फल निरूपणेन अत्रापि परमात्मतद्वृत्तिधर्मयो समुच्चित्य वेदनमेव विवक्षितम् । ' अस्मिन्कामास्समाहिता ' ' एष आत्मा ' इति वाक्ये अपहतपाप्मत्वादीना कामनाविषयत्व वर्तत इति नवीनानामपि सम्मतम् । अत तत्र ' सत्याःकामान् ' इत्यत्र एतत्फलवाक्यगतविशदे न कामशब्दार्थ व परोक्षरीत्या (ब्र वि) सूचम् । ' अस्मिन् कामास्समाहिता ' ' एतांश्च सत्याःकामान् ' इति वाक्य महाव्युत्पिकामाएव विवक्षिता । ' एतत्सत्य ब्रह्मपुरमस्मिन्कामा ' इति धर्मिणि सत्यशब्दप्रयोगेण तद्गतधर्मेष्वप्यपहतपाप्मत्वादिषु तद्वदेव सत्यशब्दप्रयोगेण च धर्मिण तद्वृत्तिधर्माणां च सत्यत्वमेकरूप वर्तते ' इति बोधितम् ॥

## गूढार्थसंग्रहः

समुच्चित्योपासनावादिभिः 'उभे अस्मिन्द्यावापृथिवी' इत्यादिना पूर्वोक्ताः पृथिव्यादयः 'स यदि पितृलोककामो भवति' इत्यादिना वक्ष्यमाणपित्रादयश्च विवक्षिता इति परोक्तिर्नादरणीया । पृथिव्यादीनां कामनाविषयत्वेनानुक्तेः । केषांचित्परमात्मकामनाविषयत्वमत्रानुक्तमपि पित्रादिजीवकामनाविषयत्वमिति कल्पनमपि नश्रुतिवाक्यानुगुण्यम् 'एतांश्च' इत्यनेनैव परेषां विवक्षितार्थलाभसंभवात् । 'एतान् कामान्' इति पदद्वयवैयर्थ्यमेव । सिद्धान्ते तु धर्मिवत् धर्माणामपि कामनाविषयत्वं वर्तत इति बोधनाय कामशब्दप्रयोगः) इयं कामनाशब्दप्रयोगः तैत्तरीयेऽपि वर्तते । "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चितेति" तत्र धर्मेषु कामनाभावे धर्मिणि कामना संभवतीति धर्माणामेव प्राधान्यं बोधयितुं 'सहे'ति ब्रह्मणः अप्राधान्यनिर्देशः ॥

एवमानन्दमयब्रह्मविचारे 'आनन्दं ब्रह्मणो विद्वान्' इति निर्देशोऽपि गुणानामुक्तप्राधान्यविवक्षयैवेति भाष्य एव व्यक्तम् । एतेन 'दहरोऽस्मिन्नन्तर...व्यमिति' वाक्येऽपि उत्तरैतद्वाक्यानुरोधेन समुच्चित्योपासनविवक्षायाः परेषामपि संमततया समुच्चित्योपासने विवक्षिते अन्तस्थपदार्थानामुपासनविधाने गुणानामुक्तप्राधान्यविवक्षैव मूलमिति सिद्धान्ते कामशब्देन सूचितं भवति । परमते तस्य वैयर्थ्यमेव, अतः 'अस्मिन्कामास्समाहिताः' 'एतांश्च सत्यान्कामान्' इत्युभयत्र कामशब्दनिर्देशेन 'अस्मिन्कामाः' इति सप्तम्यन्तनिर्देशेन च उपक्रमे गुणानां प्राधान्यविवक्षयैव 'तस्मिन्यदन्त' इत्यन्तरशब्दार्थप्रधानकनिर्देशः । 'तस्मिन्यदन्तस्तदन्वेष्टव्यम्' इति वाक्ये तच्छब्दस्य तद्वृत्तित्वविशिष्टपरत्वेऽन्वेष्टव्यत्वबोधनार्थत्वे समुच्चित्योपासनं सिद्धान्त एवेति तात्पर्येणोत्तरवाक्यानुसारेण च भाष्योक्तार्थ एव युक्तः ॥

नवीनमतेऽपि 'य आत्माऽपहतपाप्मा' इति वाक्यस्योत्तरवाक्यतया उपादानेनात्र अपहतपाप्मत्वादिगुणविशिष्टोपासनस्यैवोक्त्या 'तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्' इत्यत्र समुच्चितोपासनस्य स्पष्टमुक्तया गुणविशिष्टगुण्युपासनमेव 'तस्मिन्यदन्तः' इत्यत्र विवक्षितमिति वाच्यम् ; एवंस्थिते 'दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम्' इति वाक्येन श्रुत्यन्तरानुरोधेन भूताकाशस्यपरमात्मोपासनमेव विवक्षितमित्यभिप्रेत्य आकाशशब्दः परमात्मेति निर्णयोऽपि निरवकाशः । समुच्चितोपासनपूर्वकं 'अस्मिन्कामास्समाहिताः' इति वाक्ये 'अस्मिन्' इति सप्तम्यन्तेन 'तस्मिन्यदन्तः' इत्येतद्वाक्यार्थसमान एवात्रापि वाक्यार्थ इति स्फुट प्रतीत्या तथा विवक्षाऽङ्गीकारे दोषाभावात् । श्रुत्यन्तरादस्याश्श्रुतेः वैलक्षण्यमपि प्रतीयते 'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' इत्यनेन नगरमतीत्या राजा प्रतीयते । अतएव 'यथाऽनुशासनम्' इत्युत्तरत्र राजशासनकीर्तनमपि सङ्गतम् । 'एतस्य वा अक्षरस्य प्रशासने' (बृ) इति श्रुत्यन्तरानुगुणं च । 'दहरं पुण्डरीकं वेश्म' इति वेश्मशब्दनिर्देशः राजगृहतात्पर्येण, एवमर्थस्याविवक्षितत्वेन नवीनोदाहृतश्रुत्यन्तरैकार्थ्यं नैव विवक्षितमिति प्रतीयत इति भूताकाशस्य न 'दहरोऽस्मिन्नन्तर आकाशः' इत्यत्र विवक्षा । एतेन 'दहरे' इति पदच्छेदोऽपि न सूत्रकाराभिमतः । तथा श्रुत्यभावात् प्रथमान्ततयैव दहरशब्दस्य सत्वात् 'अल्पश्रुतेः' इति सूत्रे 'अर्भकौकस्त्वात्' इति सूत्रे च 'निचाय्यत्वात्' इत्युक्तार्थस्य विवक्षा नवीनानामपि समता । तत्र 'अर्भकौकस्त्वात्' इत्यत्र ओकशब्दः गृहवाची । तत्र अर्भकः ओकः अल्पपरिमाणः इत्येकोऽर्थः । 'अल्पौकस्त्वात्' इत्यनेनैव तथाऽर्थसम्भवे एवं निर्देशवैयर्थ्यान्यथानुपपत्त्या अर्भकस्य यदोकः तदेव परमात्मन ओकः इत्यर्थस्य सूत्रकृतोविवक्षितत्वेन शाण्डिल्यविद्यावाक्यवत् अत्रापि हृदयरूपाल्पपरिमाणदेशसम्बन्धस्य एतन्मन्त्रे परमात्मनि प्रतिपादनेन जीवस्य हृदयसम्बन्धस्य श्रुतिसूत्रया तत्रैव परमात्मनोऽपि हृदयसम्बन्धस्य प्रतिपादनस्यापि इत्यमेव तात्पर्यत्वेदम् । अंतश्च तदनुसार्येवार्थः । एतेन आकाशशब्दार्थस्य परमात्मत्वं श्रुतौ विवक्षितमिति सिद्धम् ॥

## गूढार्थसंग्रहः

तत्र सर्वत्रप्रसिद्ध्यधिकरणे 'विवक्षितगुणोपपत्तेश्च' इतिसूत्रे गुणानामभिधानेऽप्यपहतपाप्मत्वादिगुणानां प्राधान्येन विवक्षा सूत्रकृदभिमतेति सिद्ध्यति। एतेन राजकुमारनयस्य द्रमिडाचार्यसंमतस्य श्रुतिसूत्रपर्यवसितता सिद्धा। अतएव अपहतपाप्मत्वादिगुणानां जीवेऽपि संभवः जीवस्य ज्ञानानन्दाद्याविर्भावश्चात्र वक्ष्यमाणः राजकुमारन्यायमुपोद्बलयति। तदेतत्सर्वमभिसन्धायैव 'उत्तरेभ्यः' इति बहुवचननिर्देशः। एतमेव सर्वमभिप्रेत्याचार्यपादैः "दहरकुहरे देवस्तिष्ठन् निषद्वरदीर्घिका निपतितानिजापत्यादिस्त्रावतीर्णपितृक्रमात्। यमनिमिहनस्तस्मिन्काले स एव शताधिकः मकृतकपुरप्रस्थानार्थं प्रवेशयतिप्रभुः॥" इत्यनुगृहीतम्। दहरविद्यायां 'शतंचैका च' इति श्रुतौ मूर्धन्यनाड्या गमनं वक्ष्यते। 'हार्दानुगृहीतश्शताधिकया' इति सूत्रम्। अत्र 'यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः' इति सर्वजनहृदयवर्तित्वमेव प्रतिपादयति। तेन 'सर्वभूताधिवासं मां...सर्वानुग्राहकत्वेन' इति श्रुत्युक्तार्थः अत्रापि विवक्षित इति प्रतीयते। भूतेषु वासस्य सर्वानुग्राहकत्वोक्त्या एतच्छ्रुत्यनुसारेणैव 'हार्दानुगृहीत' इति सूत्रकृदुक्तिश्च। ईक्षतिकर्माधिकरणे ध्यानस्य यत्फलं तदपि सर्वेषां समर्मेव, न तु तरतमभावापन्नं, नापि क्रममुक्तिफलकमित्यपि सिद्ध्यति। एवं 'सत्सामभिः...ब्रह्मलोकं' इत्यत्र ब्रह्मलोकोऽपि न चतुर्मुखलोकः प्राप्यब्रह्मणि पुरुषशब्दप्रयोगात्। 'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य' इत्यादौ 'स उत्तमःपुरुषः' इत्यत्र उत्तमपुरुषशब्दप्रयोगेण 'अस्माल्लोकात्समुत्थाय' इत्युत्क्रान्तिपूर्वकगमनस्याभिधानेन 'जक्षत्क्रीडन्रममाणः' इति क्रियाप्रतिपादनेन च प्राप्यब्रह्मलोकः परब्रह्मलोक एव नापरब्रह्मलोक इति निश्चयसम्भवात्॥

'स्वेन रूपेणाभिनिष्पद्यत' इति स्वरूपाविर्भावस्य ज्ञानानन्दादिसाम्यपर्यवसितायाः सिद्धान्तयिष्यमाणतया भूमविद्यायां 'सर्वं ह पश्यः पश्यति' इत्युपक्रमदर्शनं मुक्तिकालिकमेव। प्रश्नोपनिषद्यपि 'स सर्वज्ञः' इतिमुक्तस्य सर्वज्ञत्वं द्वेधा प्रतिपाद्यत इति ईक्षतिकर्माधिकरणे सोऽर्थो विवक्षितः। 'परात्परं पुरिशयं पुरुषमीक्षते' इत्यत्र सर्वशरीरि पुरुषेक्षणं सर्वेक्षणमन्तरा न घटत इति तत्रापि सर्वसाक्षात्कारो विवक्षितः॥

एतेन द्युभ्वाद्यधिकरणे परमसाम्यश्रुतेः सर्वविषयज्ञानानन्दपरत्वेन साम्यपरत्वमधिकरणचतुष्टये विषयवाक्यश्रुतिपर्यालोचनायां निर्मत्सरैरवश्यमङ्गीकरणीयमिति सिद्धम्। ततश्च दहरविद्या सगुणविद्या भूमविद्या निर्गुणविद्येति परेषां कल्पना निरवकाशा॥

'गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च।' 'य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान् तेषां सर्वेषु लोकेषु कामचारो भवति।' 'य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान् तेषां सर्वेषु लोकेषु कामचारो भवति' इत्यत्र धर्मधर्म्युभयवेदनतदभावयोः फलभेदः प्रतिपादितः। तत्रोभयवेदनस्य ध्यानपर्यवसितस्य मुक्तिः फलमिति पूर्वमभिहितम्। अत्र वेदनस्य संभावनासत्त्वेऽपि वेदनप्रतिबंधकसद्भावात् वेदनं न सुलभमिति मनसि निधाय वेदनस्य संभावितत्वावबोधकहेतुनाऽपि परमात्मपरत्वं दहराकाशस्य सिद्ध्यतीत्याह—गतिशब्दाभ्यामिति॥

'एवमेवेमास्सर्वाः प्रजाः—अनृतेन हि प्रत्यूढाः' इतिश्रुतिः। 'त इमे सत्याःकामाः' इति प्राचीन श्रुतिः इदं च श्रुतिद्वयं धर्मिणां धर्माणां च कर्मणा प्रतिबन्धकं ज्ञानाभावपरम्। 'सर्वाःप्रजा अहरहर्गच्छन्त्यः' इति वेदनस्य संभावितत्वप्रदर्शनपरम्। गमनं च नाडीपूर्वकपुरीतद्देशगमनकालिकम्। 'ताभिःप्रत्यवसृप्य पुरीतति शेते' इत्यर्थस्य 'तदभावो नाडीषु तच्छ्रुतेरात्मनि च' इत्युपपादयिष्यमाणत्वात्। 'ब्रह्मलोकम्' इत्यत्र लोकशब्दः 'लोकृ दर्शने' इति धातुना निष्पन्नः साक्षात्कारयोग्यपरः। योग्यता च सुषुप्तौ इन्द्रियाणां विषयान्तरासङ्गेनैव इन्द्रियाणां विषयासङ्गाभावमात्र नब्रह्मसाक्षात्कारसाधकं भवति, कर्मरूपप्रतिबंधकसद्भावात् कर्म च भगवन्निग्रहरूपम् भगवच्छासनानुरोधे

## गूढार्थसंग्रहः

नैव वर्तत एव भगवदनुग्रह इति पूर्व 'यथा ह्येवेह प्रजा अन्वाविशन्ति यथाऽनुशासनम्' (छां ८.६ ५) इत्युक्तम्, शासनानुवृत्तिश्च धर्माधर्मानुभवविषयवेदनसम्बन्धेनेति भगवन्निग्रहरूपकर्मसम्बन्धेनैव साक्षात्कारभाव । एवमर्थविरोधस्याथ उक्तौ 'एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति कर्मबन्धविनिर्मुक्तस्य अप्राकृतदेहविशिष्ट दिव्यमङ्गलविग्रहविशिष्टस्य परिक्लि वक्ष्यमाणस्य साक्षात्कारस्य च वैलक्षण्य प्रतिपादित भवति एतेन सुषुप्तिकालिकगमनस्य मुक्तिकालिकगमनस्य च विशेष श्रुतौ प्रतिपादिता भवति । तेन यथा सुषुप्तिकाले परमात्मगमने दु खाभावमात्रम्, ज्ञानानन्तरकालिकगमनक लतु स्वरूपसाक्षात्कारोऽपि । एवमत्रापि श्रुतौ लोकशब्देन प्रतीयते गतिः ब्रह्मलोकशब्द ब्रह्मशब्दपर्यवसित इत्युभय 'गतिशब्दाभ्याम्' इत्यत्र विवक्षितम् । 'तथा हीति' पद पूर्वोक्तार्थो पपादकत्वेनोच्यत इति बोधकम् । अतएव 'दृष्टं लिङ्गं च' इति गतिशब्दरूपार्थद्वयमेवाभिप्रैति । 'दृष्ट'मिति पदो पादानं श्रुत्यन्तरोक्तत्वतात्पर्येण दृष्टशब्दो श्रुत्यन्तरबोधकतात्पर्येण सूत्रे प्रयोगात् । श्रुत्यन्तरे 'सता सोम्य तदा सम्पन्नो भवति' इति ब्रह्मगमनस्यैव प्रतिपादनेन 'अहरहर्गच्छन्त्य एतं ब्रह्मलोकम्' इत्यत्रापि ब्रह्मगमनमेव विवक्षितम् । न ब्रह्मा धिकरणे ब्रह्मगमनम् । 'लिङ्गं च' गमनं शब्दश्चेत्युभयमपि दहरस्य परमात्मत्वे लिङ्गं च भवतीत्यर्थः ॥

'धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः' सूत्र अस्य सुखेरेवमाशय । अस्य पूर्वमक्षरवाक्ये प्रतिपन्नस्य परमा त्मनो या धृति महिमरूपा तस्यास्मिन्नुपलब्धेरित्यर्थ । एतेन अक्षरवाक्यविषयभूत दहरवाक्यविषयभूत चैक एव एकत्र सगुणरूपमन्यत्र निर्गुणरूपं च नास्तीति सूच्यते । 'धृतेश्च' इत्यनभिधाय 'धृतेश्च महिम्न' इत्यभिधानेन धृतिरूपम् हिमा तदतिरिक्तमहिमा च इति चशब्देन समुच्चीयते धृति शासनाधीना अक्षराधिकरणे निर्णीता । एव च स्वभाव मक्रत्वया तदनिर्वाकाल तथाऽन्य परिमृश्यमाना । तदस्यैव महिमा तु लोक यन्त आम्यते ब्रह्मचक्रम्' इति श्रुत्युक्तार्थ प्रकाशनेन स्पष्ट वक्ष्यमाणसूत्रोक्तप्रयोजनव्यतिरेकेण स्वभावरूप व न श्रुतौ विवक्षितमित्यर्थोऽपि सूचिता भवति । अथ 'य आत्मा स सेतुर्विधृति ' इत्यत्र धारण प्रतिपाद्यते । लोकासम्भेदकर धारण 'एतस्य वा अक्षरस्य प्रशासने' इत्यक्षर श्रुत्या धारण तदतिरिक्तमहिमाचेति महिमद्वय प्रतिपादित भवति । एव बृहदारण्यके षष्ठ 'एष भूताधिपतिरेष सेतु' तदतिरिक्तमहिमद्वय प्रतिपादितम् । अत्र महिमशब्दप्रयोगेण वाक्यत्रयेऽपि महिमवान् राजा प्रतिपादित इति परब्रह्मणः राजत्व प्रतिपादितम् ॥

एव सूत्रैर्दहरशब्दवाच्य व परमात्मत्वं साधितम् । अथ जीवस्यापि तत्र प्रकरण प्रतिपादन श्रुतौ न भवतीति शङ्कायामाह—'इतरेत्यादि । स इतरएव इतरपरामर्शादितिचेन्न असम्भवात् अपहतपाप्मत्वयोग्य वेऽपि जीवस्य अपहतपा प्मत्वादिकं न सम्भवतीत्यत्र जाग्रत्स्वप्नसुषुप्त्यवस्थावत जीवस्य कर्मपरवश सन् अपहतपाप्म वादसम्भव पूर्वमुक्त, अत्र 'दहर उत्तरेभ्यः' इति प्रथमसूत्रम् । एतेन दहरविद्यावाक्यमेव विषय इति स्पष्ट साधित भवति । 'इतरपरामर्शात्स इतिचेन्नासम्भवात्' इतिसूत्रे 'एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति वाक्य विषय इति सर्वैरभ्युपगतम् । एवमभ्युपगम दहरविद्यावाक्यार्थपूर्तिरिदानीमेव सञ्जनीति सर्वैरभ्युपगत भवति ॥

एतदनन्तरम् 'उत्तराच्चेदाविर्भूतस्वरूपस्तु' इतिसूत्र उत्तरशब्देन कस्योपादानमिति च चिन्तनीयम् । तत्र सूत्र क्रमपर्यालोचनायां दहरवाक्यास्तरवाक्यमित्येव प्रतीयते,तत्र प्रजापतिविद्यावाक्यमेव भवतीति 'उत्तरात्' प्रजापतिवाक्यात् इत्युक्तम् 'एषम आत्मा' इति वाक्य एवान्ते 'इतिह प्रजापतिरुवाच' इतिसन्दर्भक्रम इति सूत्रस्वारस्य सिद्धान्ते ।

## गूढार्थसंग्रहः

परमते प्रजापतिविद्यायामुत्तरम् 'स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' इति वाक्यस्य विषयत्वे जीवब्रह्मणोरभेदस्यैव प्रतिपिपादयिषितत्वेन तदर्थस्य सूत्रे अकथनं कुतः ? तत्र बीजं किं ? प्राथमिकवाक्यपरित्यागे वा किं बीजम् ? 'आविर्भूतस्वरूपस्तु' इति सिद्धान्ते युक्तिप्रदर्शनमपि जीवब्रह्मणोरभेदेन स्वरसम् ॥

नव्यमते 'जक्षत्क्रीडन्रममाणः' इति वाक्यस्य विषयत्वकल्पनं न सूत्रकाराशयानुगुणम् । दहरविद्यावाक्योत्तरवाक्यसामान्यत्यागस्य निर्बीजत्वात् । जक्षणादिसूचकपदाभावाच्च । जक्षणादेः जीवमहिमरूपत्वाभावाच्च । एतेन नव्यमते असम्भवनिराकरणं न संभवति । सिद्धान्ते तु अपहतपाप्मत्वादेः साक्षात्प्रतिपादकवाक्यसद्भावात् असम्भवनिराकरणम् । आत्मशब्दस्य परमात्मनि प्रसिद्धया परमात्मपरमिदं वाक्यमिति नवीनानामाशयः । एवमङ्गीकारे 'अथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणम्' इत्यादीनां बहूनां वाक्यानां गौणार्थकल्पनाप्रसङ्गात् । सूत्रकृतोऽपि नायमर्थस्संमतः । 'आविर्भूतस्वरूपस्तु' इत्यत्र 'अथ यो वेदेदं जिघ्राणीति स आत्मा' इत्यत्र वक्ष्यमाणत्वाच्च । नवीनैरप्यपहतपाप्मत्वादयः मुक्तजीवेऽप्यङ्गीक्रियन्ते । एवं 'अनुकृतेस्तस्य च' इति सूत्रकर्तुः नवीनाभिमतार्थः पराभिमतार्थश्च नैव संमतः । छान्दोग्यवाक्यार्थनिर्धारणापेक्षायाम् असम्भवे तत्परित्यज्य पृथगधिकरणविषयवाक्यकल्पनायाः अन्याय्यत्वात् । सूत्रस्वारस्यविरोधाच्च । 'तमेव भान्तमनुभाति सर्वम्' इति श्रुतिमतद्वयेऽपि विषयतयोपात्ता । अत्र यदि विषयवाक्यत्वं सूत्रकृतामभिमतमभविष्यत् तदा 'अनुमानात्तस्य च' इत्येव सूत्रमकरिष्यत् । अनुकृतिः अनुकार इत्यादयः सदृशधर्मवद्बोधकाश्शब्दाः । दहरविद्यायां परमात्मनि अपहतपाप्मत्वादिधर्मानभिधाय 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति मुक्तस्यापि तद्धर्माविर्भावकथनेन 'य आत्माऽपहतपाप्मा' इत्यादिना तानेव धर्मान्विशिष्याभिधाय जाग्रत्स्वप्नसुषुप्तयवस्थानिरूपणानन्तरं जीवस्वरूपनिर्धारणपूर्वकं 'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' इत्याद्यभिधानात् (नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम्। ऋते तमेकं पुरुषं वासुदेवं सनातनम्'। 'भगवानिति शब्दोऽयं तथा पुरुष इत्यपि। निरुपाधी च वर्तेते वासुदेवे सनातने' इति स्मृतिद्वयेन च) एवमभिधानेन पूर्वं परमात्मगतत्वेनोक्तानां हि जीवेऽङ्गीकारस्सम्भवति । स्वगतधर्मसम्बन्धः परमात्मसम्बन्धः पूर्वं दहरवाक्यैरेव सिद्धः । 'स उत्तमः पुरुष' इति वाक्यं तु 'दहरोऽस्मिन्नन्तर आकाशः' इति प्रागुक्तदहराकाशाभेदबोधनार्थः प्राप्यस्य परत्वोक्तया अनन्तरं तस्यैव उत्तमशब्देन निर्देशौचित्यात् । अविशेषेण सर्वहृदयान्तर्वर्तित्वस्य प्रतिपादने पुरुषशब्दार्थस्यापि प्रतिपादनप्रायत्वात् । पुरुषशब्दार्थो वासुदेवः 'यद्भूतेषु वसत्यपि सर्वानुग्राहकत्वेन' इति ब्रह्मबिन्द्वनुरोधेन 'नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम्'। ऋते तमेकं पुरुषं वासुदेवं सनातनम्' 'भगवानिति शब्दोऽयं तथा पुरुष इत्यपि । निरुपाधी च वर्तेते वासुदेवे सनातने' इति स्मृतिद्वयेन च सर्वहृदयपुण्डरीके स्थितेर्निश्चयेन राजकुमारन्यायेन राजपुत्राणामन्तरङ्गभूतानां राजसमानभोगवत्, अत्राप्यपहतपाप्मत्वादिज्ञानानन्दाद्यनन्तसर्वगुणसाम्यं संभवतीत्याशयः सूत्रकर्तुरिति निर्मत्सराणां स्फुटम् । इममर्थं गीताचार्योऽभिप्रैतीति सूचयति—अपि स्मर्यत इति ॥

इति दहराधिकरणम्

## सू–१३ दहर उत्तरेभ्यः [१.३.१३]

'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' इत्यत्र दहराकाशशब्दनिर्दिष्टः परमात्मा, उत्तरेभ्यः वाक्यगतेभ्यः हेतुभ्यः । उत्तरत्र दहराकाशस्य सर्वाधारतयाऽपि महत्त्वमभिधाय, एतत्सत्यं ब्रह्माख्यं पुरमिति निर्दिश्य तस्मिन् ब्रह्माख्ये दहराकाशे कामाः समाहिता इत्युक्ते कोऽयं दहराकाशः ? के च कामाः ? इत्यपेक्षायाम् 'एष आत्मा अपहतपाप्मा' (छा.८.१.५) इत्यारभ्य 'सत्यकामस्सत्यसङ्कल्पः' (८.१.५) इत्यन्तेन दहराकाश आत्मा, कामाश्च अपहतपाप्मत्वादयः तद्विशेषण गुणा इतिहि ज्ञापयति । 'दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम्' (८.१.१) इत्यत्र दहराकाशस्तदन्तर्वर्ति च यत् तदुभयमन्वेष्टव्यमित्युक्तमिति विज्ञायते । 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्' इति व्यज्यते

## सू–१४ गतिशब्दाभ्यां तथा हि दृष्टं लिंगं च (१.३.१४)

'एवमेवेमास्सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' (छा.८.३.२) इत्यहरहस्सर्वासां प्रजानाम् जानतीनां दहराकाशोपरि गतिः वर्तनम्, दहराकाशसमानाधिकरणो ब्रह्मलोकशब्दश्च दहराकाशं परं ब्रह्मेति ज्ञापयति तथाह्यन्यत्र सर्वासां परमात्मोपरि वर्तमानत्वं दृष्टम्, 'तस्मिँल्लोकाश्श्रितास्सर्वे' (कठ.२.६.१) 'तदक्षरे परमे प्रजाः' (नारायण.६.१.३) इत्यादौ । ब्रह्मलोकशब्दश्च 'एष ब्रह्मलोकः' (बृ ६.३.३३) इत्यादौ । अन्यत्र दर्शनाभावेऽपि इदमेव पर्याप्तम् अस्य परमात्मत्वे लिङ्गम् यद्दहराकाशोपरि सर्वस्य वर्तमानत्वम् ब्रह्मलोकशब्दश्च ॥

## सू—१५ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः (१.३.१५)

'अथ य आत्मा स सेतुर्विधृतिः' (छा ८.४.१) इति जगद्धृतेः परमात्मनो महिम्नोऽस्मिन् दहराकाशे उपलब्धेश्चायं परः ; सा हि परमात्ममहिमा, 'एष सेतुर्विधरणः' (बृ.६.४.२२) इत्यादिश्रुतेः ॥

## सू—१६ प्रसिद्धेश्च (१-३-१६)

आकाशशब्दस्य 'यदेष आकाश आनन्दः' (तै.आनन्द ७.१) इति परमात्मन्यपि प्रसिद्धेश्चायं परः, सत्यसङ्कल्पत्वादिगुणवृन्दोपबृंहिता प्रसिद्धिः भूताकाशप्रसिद्धेर्बलीयसीत्यर्थः ॥

## सू–१७ इतरपरामर्शात्स इति चेन्नासम्भवात् (१,३,१७)

'अथ य एष सम्प्रसादः' (छां ८.३.४) इतीतरस्य जीवस्य परामर्शात् प्रकृताकाशस्स इतिचेत्–नैतत् तद्गुणानां तत्रासम्भवात् ॥

## सू—१८ उत्तराच्चेदाविर्भूतस्वरूपस्तु (१.३.१८)

उत्तरत्र ' य आत्मा अपहतपाप्मा ' (छा.८.७.१) इति जीवस्य अपहतपाप्मत्वादिश्रवणात्सोऽयमत्र, जागरित स्वप्नसुषुप्त्याद्यवस्थासु वर्तमानत्वात् सोऽहं जीव, इतिचेत्—नैतत् आविर्भूतस्वरूपस्तु कर्मारब्धशरीरसम्बन्धेन तिरोहितापहतपाप्मत्वादिकः पश्चात् परं ज्योतिरुपसम्पद्याविर्भूतस्वरूपः तत्र अपहतपाप्मत्वादिगुणको जीव प्रतिपादित । दहराकाशस्तु अतिरोहितकल्याणगुणसागर इति नाय जीवः ॥

## सू—१९ अन्यार्थश्च परामर्शः [१-३-१९]

' अस्माच्छरीरात् समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते ' (छा.८.३.४) इति जीवामर्शो दहराकाशोपसम्पत्त्या स्वरूपाविर्भावापादनरूपमाहात्म्यप्रतिपादनार्थोऽत्र जीवपरामर्श. ॥

## सू—२० अल्पश्रुतेरितिचेत्तदुक्तम् (१-३-२०

अल्पस्थान वस्वरूपाल्पत्वश्रुतेर्नाय परमात्मेतिचेत्—तत्रोत्तरमुक्तम् ' निचाय्यत्वादेव व्योमवच्च ' (शारी.१.२ ७) इति ॥

## सू—अनुकृतेस्तस्य च (१.३.२१)

तस्य दहराकाशस्य परंज्योतिष , अनुकरणश्रवणाच्च जीवस्य न जीवो दहराकाशः ' स तत्र पर्येति जक्षत्क्रीडन् रममाण. ' (छा.८.१२.३) इत्यादिस्तदुपसत्त्या स्वच्छन्दवृत्तिरूपस्तदनुकारश्श्रूयते ॥

## सू—२१ अपि स्मर्यते (१.३.२२)

' इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ ' (गी १४.२) इति

इति वेदान्तसार

अथ वेदान्तदीप.

## सू=१३ दहर उत्तरेभ्यः [१.३.१३]

छान्दोग्ये—' अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम् ' (छा.८.१.१) इत्यत्र हृदयपुण्डरीकमध्यवर्ती दहराकाशश्श्रूयमाण किं भूताकाश ? उतजीव अथ परमात्मा—इति संशय । प्रथम तावद्भूताकाश इति युक्तमाश्रयितुमिति पूर्व पक्ष , आकाशशब्दस्य भूताकाशे प्रसिद्धिप्राचुर्यात् आकाशान्तर्वर्तिनोऽन्यस्यान्वेष्टव्यताप्रतीतेश्च । राद्धान्तस्तु—' किं तदत्र विद्यते यदन्वेष्टव्यम् ' इत्याक्षिप्ते ' यावान्वा अयमाकाश. ' (८.१.२,३) इत्यारभ्य ' एतत्सत्य ब्रह्मपुरम् ' (८.१.५) इत्यन्तेन दहराकाशस्यातिमहत्त्व-

सर्वाश्रयत्वाजरत्वसत्य वाद्यमिधाय, 'अस्मिन्कामास्समाहिताः' (छा.८.१.५) इत्याकाशान्तर्वर्तिनोऽन्वेष्टव्याः कामाइति प्रतिपाद्य, कोऽयं दहराकाशशब्दनिर्दिष्टः ? के तदाश्रयाः कामाः ? इत्यपेक्षायां 'एष आत्माऽपहतपाप्मा' इत्यारभ्य 'सत्यसङ्कल्पः' (८.१.५) इत्यन्तेन आकाशशब्दनिर्दिष्ट आत्मा, कामाश्चापहतपाप्मत्वादयस्तद्विशेषणभूताइति प्रतिपादयद्वाक्यमपहतपाप्मत्वादिविशिष्टपरमात्मानमाह । उक्तकामान्वेष्टव्यतया प्रतिज्ञात आकाश आत्मा, एतद्विशेषणभूताः अपहतपाप्मत्वादयः कामा इति वाक्य शावयत् 'अथ यइहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामा न् तेषां सर्वेषु लोकेषु कामचारो भवति' (८.१.६) इत्युपसंहरति । अतोऽयं दहराकाशोऽपहतपाप्मत्वादिविशिष्टः परमात्मेति निश्चीयते, न भूताकाशादिरिति । एवत्र्हीतस्मिन्वाक्ये 'अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय' (८.३.४) इति प्रत्यगात्मप्रतीतेः, तस्यैवोत्तरत्र प्रजापतिवाक्येऽपहतपाप्मत्वादिगुणक त्वावगमात्, प्रत्यगात्मैव दहराकाशइति पूर्वपक्षी मन्यते सिद्धान्तीतु प्रत्यगात्मा कर्मपरवशतया जागरितस्वप्नसुषुप्तावस्थासु तिरोहितापहतपाप्मत्वादिकः परमात्मानमुपसम्पद्य तत्कर्मादाविर्भूतगुणकः प्रजापतिवाक्ये प्रतिपादितः । दहराकाशस्त्वतिरोहितनिरस्तनिखिलदोषत्व स्वभावः सर्वेश्वरत्वान्यसम्भावनीयजगद्विधरणसमस्तचिदचिद्वस्तुनियमनाद्यनन्तगुणकः प्रतिपन्न इति नाय प्रत्यगात्मा दहराकाशः अपितु परमात्मैवेति मन्यते । सूत्रार्थस्तु—दहराकाशः पर ब्रह्म, उत्तरेभ्यः उत्तरवाक्यगतेभ्योऽपहतपाप्मत्वादिपरमात्मासाधारण धर्मेभ्यो हेतुभ्यः ॥

## सू—१४ गतिशब्दाभ्यां तथा हि दृष्टं लिंगं च (१.३.१४)

अस्मिन्दहराकाशे सर्वासां प्रजानामजानतीनामहरहर्गतिश्श्रूयते, यश्च दहराकाशावमर्शत्वेतस्त्वस्यसामानाधिकरणतया प्रयुक्तो ब्रह्मलोकशब्द, ताभ्यां दहराकाशः परब्रह्मेत्यवगम्यं, 'तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमास्सर्वाः प्रजा अहरहर्गच्छन्त्य एत ब्रह्मलोकं न विन्दन्त्यनृतेनहि प्रत्यूढाः' (छा.८.३.२)इति, तथाहि दृष्टम्—तथाह्यन्यत्र परस्मिन्ब्रह्मण्येवरूप गमन दृष्टम्—'एवमेव खलु सोम्येमास्सर्वाः प्रजास्सति सम्पद्य नविदुस्सति सम्पद्यामह इति' (६.८.२) इति ; 'सत आगम्य नविदुस्सत आगच्छामहइति' (६.१०.२) इति। तथा ब्रह्मलोकशब्दश्च परस्मिन्ब्रह्मण्येव दृष्टः. 'एष ब्रह्मलोकस्सम्राडिति होवाच' (बृ.६.३.३३) इति । किञ्च—माभूदन्यत्र दर्शनम् अस्मिन्प्रकरणे सर्वासां प्रजानां श्रूयमाणमहरहर्गमनं, ब्रह्मलोकशब्दश्च दहरकाशस्य परमात्मत्वे पर्याप्तं लिङ्गम् । चशब्दोऽवधारणे एतदेव पर्याप्तमित्यर्थः ॥

## सू—१५ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः [१.३.१५]

अस्य धृत्याख्यस्य परमात्मनो महिम्नः अस्मिन्दहराकाशे उपलब्धेरयं परमात्मा धृतिः—जगद्विधरणं परमात्मनो महिमेत्यन्यत्रावगम्यते । 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय' (बृ.६.४ २२) इति । साचास्मिन्दहराकाशे उपलभ्यते 'अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय' (छा.८.४.१) इति

## सू—१६ प्रसिद्धेश्च (१.३.१६)

'कोह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो नस्यात्' (तै.आनन्द.७) 'सर्वाणि हवा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' (छा.१.९.१) इत्यादिष्वाकाशशब्दस्य परस्मिन् ब्रह्मणि प्रसिद्धेः । आकाशशब्दएव परमात्मधर्मविशेषितो भूताकाशशङ्कां निवर्तयतीत्यर्थः ॥

## सू-१७ इतरपरामर्शात्स इति चेन्नासम्भवात् (१.३.१७)

परमात्मन इतरः जीवः ; 'अथ यएष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय' (छा.८.३४) इति जीवपरामर्शात्स एव दहराकाश इतिचेत्—तन्न, पूर्वोक्तानां गुणानां तस्मिन्नसम्भवात् ॥

## सू—१८ उत्तराच्चेदाविर्भूतस्वरूपस्तु (१.३.१८)

उत्तरात् प्रजापतिवाक्यात्, अपहतपाप्मत्वादिगुणको जीवोऽवगम्यत इतिचेत्—तन्न, जागरिताद्यवस्थाभिरनादिकालप्रवृत्ताभिः पुण्यपापरूपकर्ममूलाभि. तिरोहितगुणकः परब्रह्मोपासनजनिततदुपसम्पत्याऽऽविर्भूतस्वरूपोऽसौ जीवः तत्र प्रजापतिवाक्येऽपहतपाप्मत्वादिगुणकः कीर्तित । दहराकाशस्त्वतिरोहितस्वरूपोऽपहतपाप्मत्वादिगुणकइत्यस्मिन्दहराकाशे न जीवशङ्का ॥

## —१९ अन्यार्थश्च परामर्शः [१.३.१९]

'अस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते (छा,८.३.४) इति परंज्योतिरूपदहराकाशोपसम्पत्त्याऽस्य जीवस्यानृततिरोहितस्वरूपस्य स्वरूपाविर्भावो भवतीति दहराकाशस्य कर्माद्यावरणादिकजीवस्वरूपाविर्भावापादनरूपसम्पाद्विशेषप्रतिपादनार्थो जीवपरामर्शः ॥

## सू—२० अल्पश्रुतेरितिचेत्तदुक्तम् [१-३-२०]

'दहरोऽस्मिन्' (छा.८.१.१) इत्यल्पपरिमाणश्रुतिराराग्रोपमितस्य जीवस्यैवोपपद्यते, नतु सर्वस्माज्ज्यायसो—ब्रह्मण इतिचेत् तत्र यदुत्तरं वक्तव्यं तत्पूर्वमेवोक्तम् 'निचाय्यत्वात्' (शारी.१.२.७) इत्यनेन ॥

## सू-२१ अनुकृतेस्तस्य च (..२१·३)

अनुकृति. अनुकारः तस्य परमात्मनोऽनुकाराद्धि जीवस्याविर्भूतस्वरूपस्यापहतपाप्मत्वादिगुणकत्वम्, अतोनुकर्तुः जीवादनुकार्यः परब्रह्मभूतो दहराकाशोऽर्थान्तरभूत एव । तदनुकारश्च त साम्यापत्ति श्रूयते 'यदा पश्य पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' (मु.३.१.३) इति ॥

## सू—२२ अपि स्मर्यते (१.३.२२)

स्मर्यते च तदुपासनात्तत्साम्यापत्तिरूपानुकृतिर्जीवस्य 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' (गी.१४.२) इति ॥

इति वेदान्तदीप

अथ अधिकरणसारावली

दह्रं हृत्पुण्डरीके गगनमभिहितं तैत्तिरीयश्रुतौ य-
च्छन्दोगैस्तत्र गीतं यदपि च दहराकाश इत्येतदेकम् ।
भूताद्यं तत्प्रसिद्धेर्महिमत इति न प्रत्यनीकैरकैः
श्रौती च स्यात्प्रसिद्धिर्भगवति बलिनी लिङ्गवर्गैस्सनाथा ॥

दाह्राकाशश्च वाचानयमपि हि तथेत्येतमक्लिष्टमीशे
सत्यात्मप्राणशब्दा नभसि न कथमप्यन्वयं प्राप्नुवन्ति ।
कामाधारश्च योऽसौ समगणि दहराकाशवाचाऽत्र नित्य-
स्तस्यैव ह्येष आत्मेत्यनुवदनमतस्तद्गुणाश्चिन्त्यकामाः ॥

सर्वेशाधारतोक्त्या भवतु च हृदयव्योम तद्वाज्यधीतं
छान्दोग्यस्थो निषादस्थपतिनयपदं ब्रह्मलोकादिशब्दः ।
आपस्तम्बश्च वैभाजनपुरमवदद्ब्रह्म सर्वात्मभूतं
पूर्लस्य प्राणिनस्स्युस्तदपि तदपि हि स्यात्पुरं सर्ववासात् ॥

जीवस्तर्ह्यत्र आत्मा गुणगणघटनात्तत्परामर्शदृष्टे
रत्पत्वाग्नित्यभेदस्सदनुपधिकास्सत्यसङ्कल्पतादेः ।
विश्वैकाधारतादेरपि स खलु परो दाह्रतोपाधिकी स्यात्
प्राजापत्यात्तु वाक्यात्परसमदशया तद्गुणोक्तिर्विमुक्ते ॥

दह्राकाशोऽपवर्गप्रद इति गदितुं सम्प्रसादोक्तिरत्र
प्राजापत्ये तु वाक्ये परपरिपठनं प्राप्य निष्कर्षणार्थम् ।
आकांक्षाद्यैस्तदेवं परतदितरयोरन्विते वाक्ययुग्मे
युक्तश्चान्योन्यबाधप्रभृतिकमिह तत्सामरस्यं हि सौत्रम् ॥

॥ इति दहराधिकरणं समाप्तम् ॥



## अथ प्रमिताधिकरण

### श्रीभाष्यम्

## सू–२३ शब्दादेव प्रमितः [१,३.२३]

कठवल्लीषु श्रूयते–' अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य न ततो विजुगुप्सते । एतद्वै तत् ' [कठ.२.४.१२] ; अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः । ईशानो भूतभव्यस्य स एवाद्य स उ श्वः । एतद्वैतत् ' (२.४.१३) ' अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण । तं विद्याच्छुक्रममृतम्' (कठ.२३.१७) इति । तत्र सन्दिह्यते किमयमङ्गुष्ठमात्रप्रमितः प्रत्यगात्मा उत परमात्मा–इति । किं युक्तम् ? प्रत्यगात्मेति । कुतः ? जीवस्यान्यत्राङ्गुष्ठमात्रत्वश्रुतेः— ' प्राणाधिपस्सञ्चरति स्वकर्मभिः । अङ्गुष्ठमात्रो रवितुल्यरूपः सङ्कल्पाहङ्कारसमन्वितो यः'

## अथ प्रमिताधिकरणम्

## सू–२३ शब्दादेव प्रमितः (१.३.२३)

### श्रुतप्रकाशिका

' अल्पश्रुतेरितिचेत् ' इत्यत्राल्पपरिमाणत्वं भगवत इत्युक्तम्, अथाल्पपरिमाणत्वविशेषः परमात्मव्यतिरिक्तस्य दृश्यत इति शङ्कया सङ्गतिः ' शुक्रममृतम् ' इत्यन्त विषयवाक्यमुपाददानस्यायंभावः, अङ्गुष्ठप्रमितत्वमात्र श्रुत, ननु स्थानविशेषः नचोपासनम् अतः परमात्मपरत्वानादरेण जीवपरत्व शङ्क्यत इति पूर्वपक्षं केचिदाहुः । तदाहु –' सदा जनानां हृदये सन्निविष्टः ' ' तं विद्याच्छुक्रममृतम ' इत्यनन्तरवाक्ये स्थानोपासनावगमात् तदनवगमस्य हेतुत्वकथनायोगादिति परमात्मनोऽङ्गुष्ठपरिमितत्वानुपपत्तेर्जीवस्य सर्वेशानत्वानुपपत्तेश्च संशयः । अङ्गुष्ठप्रमितः किं प्रत्यगात्मा? उत परमात्मेति । तदर्थमीशानत्व किं देहेन्द्रियाद्यपेक्ष उत सर्वापेक्षमिति । उपक्रमावगत प्रमितत्वं किमीशानत्वलिङ्गस्वारस्यविरोधि उत अविरोधीति ? तत्प्रमितत्व किं जीवे समञ्जसम् उतोभयत्रासमञ्जसमिति । यदा जीवे समञ्जसं– तदानीं स्वसामञ्जस्यसिद्ध्यर्थमुपक्रमावगत प्रमितत्वमीशानत्वलिङ्गस्वारस्यविरोधीतीशानत्वस्य देहेन्द्रियाद्यपेक्ष वादङ्गुष्ठप्रमितो जीव इति पूर्वःपक्षः । यदोभयत्र प्रमितत्वमसमञ्जस तदा प्रत्यगात्मन्यपि स्वारस्यासिद्धेस्तदर्थमीशानत्वलिङ्गस्वारस्यानुपरोधकत्वादीशानत्व सर्वापेक्षमिति अङ्गुष्ठप्रमितः परमात्मेति राद्धान्ते फलफलिभावः । कृत्वा चिन्तेय परमात्मनोऽन्यत्राङ्गुष्ठप्रमितत्वश्रवणाभावमभ्युपगम्यानेनैव वाक्येनाङ्गुष्ठप्रमितत्व किं सिद्ध्यति उत नेति विचार्यते ? अन्यत्राङ्गुष्ठप्रमितत्वं भगवतः श्रूयते, श्वेताश्वतरे ' अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । हृदा मनीषा मनसाऽभिक्लृप्तो य एतद् विदुरमृतास्ते भवन्ति ' इति तैत्तिरीये च ' अङ्गुष्ठमात्रःपुरुषोऽङ्गुष्ठं च समाश्रितः । ईशस्सर्वस्य जगतः प्रभुःप्रीणाति विश्वभुक् ' इति अन्तरात्मत्व मोक्षप्रदत्व सर्वस्य जगत ईशत्वमपिहि तत्र श्रुतम् । यदा सर्वजगच्छब्दादिकमपि क्लिष्टं कृत्वा तावपि मन्त्रौ विवादास्पदीकृतौ, तदानीं नकृत्वा चिन्तेयम् ॥

श्रीभाष्यम्

(श्वे.५.८.७) इति । नचान्यत्रोपासनार्थतयाऽपि परमात्मनोऽङ्गुष्ठमात्रत्वं श्रूयते । एवं निश्चिते जीवत्वे ईशानत्वं शरीरेन्द्रियभोग्यभोगोपकरणापेक्षयाऽपि भविष्यति ॥
इति प्राप्ते ब्रूमः 'शब्दादेव प्रमितः' अङ्गुष्ठप्रमितः परमात्मा ; कुतः ? 'ईशानो भूतभव्यस्य' (कठ.२.४.१३) इति शब्दादेव । नच भूतभव्यस्य सर्वस्येशितृत्वं कर्मपरवशस्य जीवस्योपपद्यते ॥

कथं तर्हि परमात्मनोऽङ्गुष्ठमात्रत्वमित्यत्राह—

## सू—२४ हृद्यपेक्षया तु मनुष्याधिकारत्वात् (१.३.२४)

परमात्मन उपासनार्थमुपासकहृदये वर्तमानत्वादुपासकहृदयस्याङ्गुष्ठमात्रप्रमाणत्वात्तदपेक्षयेदमङ्गुष्ठप्रमितत्वमुपपद्यते, जीवस्याप्यङ्गुष्ठप्रमितत्वं हृदयान्तर्वर्तित्वात्तदपेक्षमेव; तस्याराग्रमात्रत्वश्रुतेः । मनुष्याणामेवोपासकत्वसम्भावनया शास्त्रस्याधिकारत्वान्मनुष्यहृदयस्य

श्रुतप्रकाशिका

ननु जीवस्याप्याराग्रमात्रस्याङ्गुष्ठमात्रत्वममुख्यम् अत उपासनार्थमिति निर्वाह्यम् । तत्परमात्मपरत्वेऽपि सम्भवति उपासनार्थमल्पपरिमाणं च परस्यापीहि श्रुतम् । तत् कथं जीवपरत्वशङ्कत्यत्राह— नचेति । प्राणाधिपस्य स्वकर्मकृदयस्याङ्गुष्ठमात्रत्वममुख्यत्वमपीहि श्रुतं न तु परमात्मन अतो जीवस्य बुद्धिस्थत्वात्तस्य प्रतिपाद्यत्वशङ्केत्यर्थः । ईशानत्वं कथमित्यत्राह—एवंनिश्चितइति ॥

राद्धान्ते ननु भूतभव्यस्येशान इति वाक्यं तच्च प्रमितत्वाल्लिङ्गाद्दुर्बलम् ईशानशब्दश्च शब्दशब्देन विवक्षितत्वात् ईशानशब्दस्य देहेन्द्रियाद्यपेक्षया सङ्कोचस्य अनुपपत्तिपरिहारार्थमीशानो भूतभव्यस्येति शब्दादेवेति भूतभव्यशब्दोपादानम् । किमीश्वरः किं जीव इति विचारे नेश्वरसमानलिङ्गान्निर्णयः, किं वीश शब्दादिशब्दादेवेत्येवकाराभिप्रायः । यद्वा पूर्वपक्षाभिप्रेताया ईशानशब्दान्यथासिद्धेः प्रतिक्षेप एवकाराभिप्रेतः । तं दर्शयति नच भूतभव्यस्येति ।

उत्तरसूत्रस्य शङ्कामाह—कथंतर्हीति ।

## सू—२४ हृद्यपेक्षया तु मनुष्याधिकारत्वात् (१-३-२४)

वर्तमानत्वादित्यध्याहारेण योजना यद्वा 'हृदि' इति विषयसप्तमी हृद्विषयापेक्षयेति सूत्रार्थे ववदृमर्थसिद्धमर्थमह वर्तमानत्वादिति । यदपेक्षया परस्याङ्गुष्ठप्रमितत्वव्यवहारः तस्य हृदयस्य तत्परिमाणं कुतः—हृदयस्येति । अङ्गुष्ठमात्रत्वस्यास्वारस्यमुभयत्र तुल्यं कथमिदं परमात्मपरिग्रह इत्यत्राह–जीवस्यापीति । अङ्गुष्ठप्रमितस्य जीवत्वपक्षे अङ्गुष्ठप्रमितेशानशब्दयोरुभयोरस्वारस्यं परमात्मत्वपक्षेऽङ्गुष्ठप्रमितशब्दस्यैकस्यैवास्वारस्यमितिभावः ; खरतुरगादीनामनङ्गुष्ठत्वेन हृदयाना तत्तदङ्गुष्ठप्रमितत्वाभावादङ्गुष्ठप्रमितत्वमननुयायीति शङ्कायां 'मनुष्याधिकारत्वात्' इति पदं व्याचष्टे मनुष्याणामेवेति । अत्र ब्रूमः । वस्तु जीवत्वमभ्युपगम्यैव जीवस्य परमात्मैक्योपदेशपरतया प्रकरणस्य परमात्मप्रतिपादकत्वं यत्परैरुक्तं तदयुक्तम् जीवेश्वरत्वयोरुभयोरपि कल्पितत्वाभ्युपगमात् सर्पभूदलनयोरिव काल्पनिकयोरर्थयोरैक्योपदेशानुप

## गूढार्थसङ्ग्रहः

ऽपि विवक्षितः। जीव व्याप्यस्थितिरपि निराश्रिता, अत्र जीवं व्याप्य स्थितो यः स एव प्रमितो भवति, एतेन विभुत्वमप्युपपादितं भवति। गुणनिबन्धनप्रकर्षस्तु असङ्कुचितभूमस्थानत्वात्। अतः पूर्वपक्षिलिङ्गापेक्षया सिद्धान्तसमतलिङ्गप्रबलमिति तद्बाधकत्वमप्यायातम्। किंच पूर्वपक्षिणोऽपि लिङ्गं दर्शयति 'अङ्गुष्ठमात्रः संशिको दर्शनात्' अणुत्वस्यैव श्वेताश्वतरे उक्तेः। अत्र शब्दशब्दोपादानं कुत इति चेत् ईशानशब्दस्य श्रुतिः च नास्तीति बोधनार्थं दर्शनादिकार्यकबोधकानां स्वार्थसम्बन्धोपस्थापकत्वस्य वै तत्पदार्थस्य इति दुर्वारत्वात्। लिङ्गापेक्षया श्रुतेः प्राबल्यप्रयोजकं यत् शीघ्रोपस्थितिकत्वं तदत्र समानमिति श्रुतेः प्राबल्योपपादानं न सम्भवति। एवमीशानशब्दस्य 'प्राधुर्णाप्यर्थसंयोगात्' इति न्यायेन यौगिकत्वेनैव रूढेऽपि प्रयोगोपपत्तौ पृथगुपादानमत्र नतुच्छमिति बोधनायैव शब्दशब्दप्रयोगः।

अत्र अङ्गुष्ठमात्रबोधकपरिमाणबोधककठवल्लीस्थवाक्यसामान्यं विषय इति स्फुटं निर्मत्सराणाम्। कठवल्लीष्वाम्नायते 'अङ्गुष्ठमात्रःपुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः तं स्वाच्छरीरात्प्रवृहेत् मुञ्जादिवेषीकां धैर्येण' इति श्रुतिरप्यस्मिन्नधिकरणे विवक्षिता। हृद्यपेक्षया अङ्गुष्ठप्रमितत्वमित्युत्तरसूत्रे इदं वाक्यं विषयतया परैरप्युदाहृतम्। अत्र 'जनानां हृदये संनिविष्टः' इत्युक्त्या उपबृंहणानुसारेण 'अर्भकौकस्त्वात्' इति सूत्रोक्तरीत्यनुसारेण 'द्वा सुपर्णा' इत्यादिश्रुत्यनुसारेण तत्रैव पुरुषशब्दार्थासङ्कुचितार्थानुसारेण च जनशब्दे जीवानामपि विवक्षितत्वेन 'स्वाच्छरीरात् प्रवृहेत्' इत्यत्र अचेतनवच्चेतनचेतनविवक्षाया अपि प्रत्याख्यानासम्भवेन भेदज्ञानमेव प्रतिपादितमिति अङ्गुष्ठमात्रश्रुतिः जीवब्रह्माभेदपरेति परमार्थोक्तिः श्रुतिसूत्रतात्पर्याननुगुणा॥

'**हृद्यपेक्षया तु मनुष्याधिकारत्वात्**' परमात्मनः अङ्गुष्ठमात्रत्वमुपपादयितुं प्रवृत्तमिदं सूत्रं जीवस्यापि अङ्गुष्ठमात्रत्वमेतन्निबन्धनमिति स्थापयति परमात्मा हृद्यपेक्षया प्रमित इति सूत्रार्थः। सर्वतुरगहृदयानामङ्गुष्ठप्रमितत्वेन 'अङ्गुष्ठमात्रःपुरुषः' इति श्रुत्युपपत्तिः कथमित्यत्राह— मनुष्याधिकारत्वात्' इति। अयमाशयः—जीवपरमात्मनोऽणुपरिमाणस्य हृदयमेव स्थानम् सर्वगतोऽपि परमात्मा सर्वान्तर्यामी हृदयदेशेऽपि तिष्ठति। स्वसमीपवर्तिजीवप्रतिबोधनार्थं, तत्र मनुष्याणामेव विवेकज्ञानात्फलविशेषलाभेच्छया प्रवृत्तिः। परमात्मनः सौलभ्यविशेषानुसन्धानेनात्माध्यवसायः 'इतिदस्य स्याद्धा न विचिकित्साऽस्ति' इति शाण्डिल्यविद्यायामुक्तः॥

शाण्डिल्यविद्यायाम्—'अर्भकौकस्त्वात्' इति सूत्रे हृदयस्थितस्तात्पर्यं वादिनम् तदेव तात्पर्यं दहरविद्यायामपि 'अल्पश्रुतेरितिचेत्तदुक्तम्' इत्यत्र स्फुटम् तत्सर्वमस्मिन्सूत्रे दर्शयिष्यते। जीवपरयोरुभयोः हृदयस्थितेरत्र विवक्षितत्वेन 'अर्भकौकस्त्वात्' इत्यर्भकस्य यदोकः तदुक्तोकः सूत्रकृतो विवक्षित इतिनिर्धार्यते। कर्माधीनशरीरत्वाज्जीवः कर्माधीनत्वप्रयुक्तलिप्ततद्यामूलकशरीरसम्बन्धः परमात्मा। जीवस्य कर्ममूलकशरीरसम्बन्धविरहदशायामेव निरतिशयं सुखम्। अङ्गुष्ठप्रमितश्रुतौ पुरुषशब्दश्श्रूयते। पुरुषशब्दश्च सर्वशरीरवाचकः। एवं सर्वपापदाहकत्वस्यापि अत्र 'जनानां हृदये' इत्यत्र जनशब्दः चेतनपरः चेतनानामाधारभूते चेतनोद्भावनेच्छया वर्तते इति 'रम्' इत्युपसर्गविशिष्टः संनिविष्टः इत्यत्र पूर्वार्धतात्पर्यम् तं स्वोज्जीवनार्थं स्वस्य ज्ञानादिसम्पादनार्थं स्वसन्निहितं परमात्मानं परमात्मना अन्यभूतात् स्वस्मात् पृथक्कुर्यात् एवं पृथग्ज्ञाने सति स्वस्य सर्वपापनाशो भवति। कर्मनिरपेक्षशरीरसम्बन्धिनः परस्य कर्माधीनशरीरसम्बन्धवतः स्वस्माद्भेदज्ञाने स्वीयपापनिवर्तकत्वमन्तर्भवत्येव। एवं निश्चयवन्तो मनुष्या एव, एवं निश्चयपूर्वकं स्वशरीरसम्बन्धप्रयोजककर्मनाशेच्छया परमात्मोपासनाधिकारिणः मनुष्या एव भवन्ति। मनुष्याधिकारत्वाच्छास्त्रस्य हृदयपरिमाणोक्तिः सङ्गता। अत्राधिकारशब्दार्थफलाश्रयत्वसमानाधिकरणं सामर्थ्यम्। फलार्थित्वं जीवब्रह्माभेदे न घटते। एतच्छ्रुत्वा—

श्रीभाष्यम्

च तत्तदंगुष्ठप्रमितत्वात्खरतुरंगभुजगादीनामगुष्ठप्रमितत्वेऽपि न कश्चिद्दोषः स्थितं तावदु त्तरत्र समापयिष्यते ॥

इति प्रमिताधिकरणम्

श्रुतप्रकाशिका

पत्तेः, जीवत्वेशानत्वाद्यनादरेण वस्तुमात्रविषयत्वे ईशानादिशब्दानां लक्षणिकत्वप्रसङ्गात्—प्रासङ्गिकार्थस्य निरूपयिष्यमाणत्वं बुद्ध्याह—स्थितंवावदिति ॥

इति प्रमिताधिकरणम्

अथ प्रमिताधिकरणम्

गूढार्थसंग्रहः

'शब्दादेव प्रमितः' दहराधिकरणे दहरशब्दः अल्पवचनः । 'अल्पश्रुतेरितिचेत्' इत्युत्तरसूत्रेऽप्यल्पशब्द एव प्रयुक्तः तत्रच उत्तरवाक्यानुरोधेनर्थानुरोधेन परमात्मत्वं साधयितुं शक्यम् । 'अङ्गुष्ठमात्र' इत्यत्रतु परिमाणवाचि शब्द एव वर्तते, अत्र परिमाणविशेषबोधात् तद्विशिष्ट बाध्यः इति अङ्गुष्ठमात्र इत्यत्र जीव एव विवक्षितः । 'य इदं मध्वदं वेद आत्मानं जीवमन्तिकात् । ईशानं भूतभव्यस्य' इति भूतभव्येशानत्वोक्त्या अत्रापि सएव विवक्षित इति युक्तम् । अणोर्जीवस्याङ्गुष्ठमानत्व अप्रसिद्धमिति शङ्क्यम् । 'प्राणाधिपस्संचरति स्वकर्मभिः अङ्गुष्ठमात्रो रवितुल्यरूपः' इत्यङ्गुष्ठमात्रं जीवं प्रस्तुत्य 'अङ्गुष्ठमात्रः पुरुषः' इति जीवस्थानस्य तात्त्विकं परिमाणं प्रस्तुत्य जीवस्य 'वालाग्रशतभागस्य' इत्यादिना तात्त्विकाणुपरिमाणनिरूपणात् । सर्वगतस्य परस्य तात्त्विकपरिमाणस्य दुर्घटम् । 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा' इत्यपि जीवपरमेव । तत्र जनशब्दः जनिमदचेतनजीवपरः । हृदयस्याङ्गुष्ठपरिमाणत्वेन तत्र स्थितत्वेन जीवस्याङ्गुष्ठमात्रत्वम् इति शङ्कायां 'शब्दादेव प्रमितः' इति ॥

अत्र प्रमितशब्देन 'अङ्गुष्ठमात्र' इति श्रुतिः प्रत्यभिज्ञायते । तत्र प्रमाणे मात्रच्प्रत्ययः अङ्गुष्ठपरिमाणत्वेन श्रुतः परमात्मा शब्दादेव । प्रमितत्वं लिङ्गम् । 'ईशानो भूतभव्यस्य' इति वाक्यं, वाक्यात् लिङ्गं प्रबलमिति पूर्वपक्षिणआशयः सिद्धान्तिनस्तु अयमाशयः शब्दपदं वाक्यपरमेव श्रुतेरत्र विवक्षितत्वे श्रुतेरेवेति ब्रूयात् । एवकारस्तु यत् पूर्वपक्षिणः दुर्बलप्रमाणत्वाप यस्तं तस्मादेवेत्यवकाराभिप्रायः । प्रमितशब्दः नैकार्थकः, सिद्धान्तयुक्तिसूचनायानेकार्थश्च प्रमितशब्दः आवर्तते प्रमितः वाक्यादेव प्रकर्षेण मितः इत्यर्थः, प्रकर्षश्च स्वरूपतः गुणतश्च स्वरूपतः प्रकर्षः गुणतः प्रकर्षसाधकः । 'महान्तं विभुमात्मानं मत्वा धीरो नशोचति । ईशानो भूतभव्यस्य' इति वाक्यम् तत्र महत्वाणुत्वयोः जीवऽसंभवात् तदुभयं परमात्मगतम् । महत्त्वं गुणनिबन्धनम् विभुत्वं स्वरूपनिबन्धनम् । 'मध्वदं जीवम्' इति कर्मफलहेतुत्वेन जीवो निर्दिष्टः अन्तिकशब्दप्रयोगसार्थक्याय मध्वदं जीवमन्तिकस्थमीशानं वेति विवक्षितम् । 'अङ्गुष्ठमात्रः पुरुषः मध्य आत्मनि तिष्ठति' इत्यत्र वाक्यं मध्यः शरीरमध्ये आत्मनि जीवे तिष्ठतीत्यर्थः । एतेन अन्तिकशब्दार्थः प्रकटीकृतः ॥

कठोपनिषद्येव 'तमात्मस्थं येऽनुपश्यन्ति धीराः' इति वर्तते । 'तमात्मस्थम्' इति वाक्यमभ्यस्यते श्वेताश्वतरे , व्याप्य नारायणस्थित' इत्यत्र 'यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वम्' इत्युक्त्या जीवो-

अथ वेदान्तदीपः

## सू–२३ शब्दादेव प्रमितः (१.३.२३)

कठवल्लीष्वाम्नायते—' अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य न ततो विजुगुप्सते । एतद्वै तत् ' (कठ.१.४.१२) उत्तरत्र च ' अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ' (२.४.१३) तथोपरिष्टात् ' अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः ' (२.६.१७) इति । अत्राङ्गुष्ठप्रमितो जीवात्मा, उत परमात्मेति संशयः । जीवात्मेति पूर्वःपक्षः, अन्यत्र स्वीकृतस्पष्टजीवभावे पुरुषे अङ्गुष्ठप्रमितत्वश्रुतेः ' प्राणाधिपः संचरति स्वकर्मभिः, अङ्गुष्ठमात्रो रवितुल्यरूपः ' (श्वे.५.७.८) इति । राद्धान्तस्तु– तत्र 'स्वकर्मभिः' इति जीवभावनिश्चयवदत्रापि ' ईशानो भूतभव्यस्य ' (कठ.२.४.१२) इति भूतभव्येशितृत्वदर्शनात् परमात्मैव इति । सूत्रार्थस्तु शब्दादेव प्रमितः अङ्गुष्ठप्रमितः परमात्मैव, ' ईशानो भूतभव्यस्य ' इति परमात्मवाचिशब्दात् ॥

## सू—२४ हृद्यपेक्षया तु मनुष्याधिकारत्वात् (१-३-२४)

कथमनवच्छिन्नस्य परमात्मनोऽङ्गुष्ठप्रमितत्वमित्याशङ्क्याह—

उपासनार्थमुपासकहृदये वर्तमानत्वात् उपासकहृदयस्याङ्गुष्ठमात्रत्वात् तदपेक्षयाङ्गुष्ठप्रमितत्वम् । मनुष्याणामेवोपासकत्वसम्भावनया मनुष्यानधिकृत्य प्रवृत्तत्वाच्छास्त्रस्य मनुष्यहृदयापेक्षयेदमुक्तम् । स्थितं चाङ्गुष्ठमात्रः परमात्मेति ॥

इति प्रमिताधिकरणम्



अथ अधिकरणसारावली

प्राणेशोऽङ्गुष्ठमात्रः क्वचिदनुकथितस्संचरन् कर्मभिः स्वै-<br>
रन्यत्राङ्गुष्ठमात्रं पुरुषमपि यमो निश्चकर्षेति दृष्टम् ।<br>
तस्मादेतत्प्रमाणप्रमितमुपनिषज्जीवमाहेत्ययुक्त<br>
वाक्यस्थेशानतादेर्नरहृदयपरिच्छित्तितस्तद्धि मानम् ॥<br>
नह्यङ्गुष्ठप्रमाणं हृदयमखिलजन्त्वाश्रयन्तत् परस्मिन्-<br>
व्याप्ते तन्मानतोक्तिः क्वचिदिति मनुजाधिक्रियोक्तिप्रसङ्गे ।<br>
सूत्रद्वन्द्वद्वयान्तस्त्रिभिरधिकरणैश्चिन्त्यते तद्विशेष-<br>
स्तार्तीयैस्स्थापनीयात्मयजिगमिषिता सेतिकर्तव्यताऽत्र ॥

॥ इ ति प्र मि ता धि क र णं स मा प्त म् ॥



## गूढार्थसङ्ग्रहः

' प्राणाधिपस्सञ्चरति स्वकर्मभि. सङ्कल्पमात्रो रवितुल्यरूप ' इत्युत्तरवाक्यतात्पर्यमपि प्रकाशितम् । ' नैव स्त्री नपुंसं नेव. ' इत्युत्तरश्रुत्यर्थ एव मनुष्यशब्दे विवक्षित: । कर्ममूलकमनुष्यशरीरसम्बन्धवान् एवशानवत्त्व शरीराद्विवेक: वर्तत एव ॥

यद्यपि परे ' शास्त्रीयेतु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वाऽऽत्मन: परलोकसम्बन्धमधिक्रियते तथाऽपि अशनायाद्यतीतत्वज्ञानमनपेक्षित बाधक च ' इत्युक्तम् । सत्यार्थ. ' सत्त्वान्त्याय कल्पते ' इति श्रुतिसन्दर्भेणैव पर्यालोचित , कर्ममूलकशरीरसम्बन्धदशाया अशनायाऽऽदिमत्त्वेऽपि ' सत्त्वान्त्याय कल्पते ' इति मादितश्रोत्रादिकारनाद्यतीतत्वस्य नविरोध., पूर्वोक्तार्थस्य सर्वस्य पर्यालोचने छान्दोग्यकठवल्लीवाक्ययोरुभयोरेकार्थता पर्यं स्फुटम् । ' आत्मान रथिन विद्धि' इत्यादिना इन्द्रियवशीकरणार्थं बुद्धेरपि सारथित्वोक्तावपि बुद्धेरपि परमात्माधीनत्वस्य पुरुषशब्दतात्पर्यपर्यालोचनया सिद्ध्या सारथि परमात्मैव भवति । ' छान्दोग्यतु ' सयथा प्रयोग्य आचरणे युक्त ' इत्यन्तजीवस्य कठवल्ल्याभिवे रथि व निर्दिष्टम् । परमात्मा सारथित्वेनेति सङ्क्षेपविस्तरप्रक्रियया उभयोरत्रैव तात्पर्यम् ॥

छान्दोग्येऽपि ' अस्माच्छरीरात्समुत्थाय परज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते ' इति श्रूयते, तदानुगुण्येन अशनयाद्यतीतत्वस्याऽपि कर्ममूलक शरीरसम्बन्धविगमकालिकत्वमेव । सूत्रकारोऽप्युपनिषद्द्वयस्य ऐकरस्यमभिप्रयन् 'हार्दानुगृहीतश्शताधिकया ' इति वक्ष्यति । एव परमात्मन हृदयदेशे स्थिते स्वोपकारार्थतया ये निश्चिन्वन्ति मनुष्यधीरिया तेषा तरतमभावानापन्न फलमेवेति शाण्डिल्यविद्यायामेव निर्णीतम् ॥

इति प्रमिताधिकरणम्

अथ वेदान्तसारः

## सू–२३ शब्दादेव प्रमितः (१,३२३)

' अङ्गुष्ठमात्र पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य ' (कठ.२.४.१२) इत्यादौ अङ्गुष्ठप्रमित परमात्मा ' ईशानो भूतभव्यस्य ' (२.४.१२) इति सर्वेश्वरत्ववाचिशब्दादेव ॥

## सू=२४ हृद्यपेक्षया तु मनुष्याधिकारत्वात् [१.३.२४]

अनवच्छिन्नस्यापि उपासकहृदि वर्तमानत्वापेक्षमङ्गुष्ठप्रमितत्वम । मनुष्याणामेवोपासनसम्भावनया तद्विषय यत्, शास्त्रस्य मनुष्यहृदयापेक्षयेदमुक्तम । स्थित तावदुत्तरत्र समापयिष्यते ॥

इति वेदान्तसार.

अथ वेदान्तदीपः

## सू—२३ शब्दादेव प्रमितः (१.३.२३)

कठवल्लीष्वाम्नायते—' अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य न ततो विजुगुप्सते । एतद्वै तत् ' (कठ.१.४.१२) तथाऽत्र च ' अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ' (२.४.१३) तथोपरिष्टात् ' अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः ' (२.६.१७) इति । अत्राङ्गुष्ठप्रमितो जीवात्मा, उत परमात्मेति संशयः । जीवात्मेति पूर्वःपक्षः, अन्यत्र स्वीकृतसशरीरजीवभावे पुरुषे अङ्गुष्ठप्रमितत्वश्रुतेः ' प्राणाधिपः संचरति स्वकर्मभिः, अङ्गुष्ठमात्रो रवितुल्यरूपः ' (श्वे.५.७.८) इति । राद्धान्तस्तु— तत्र 'स्वकर्मभिः' इति जीवभावनिश्चयहेतुदर्शनेऽपि ' ईशानो भूतभव्यस्य ' (कठ.२.४.१२) इति भूतभव्येशितृत्वदर्शनात् परमात्मैव इति । सूत्रार्थस्तु शब्दादेव प्रमितः अङ्गुष्ठप्रमितः परमात्मैव, ' ईशानो भूतभव्यस्य ' इति परमात्मवाचिशब्दात् ॥

## सू—२४ हृद्यपेक्षया तु मनुष्याधिकारत्वात् (१-३-२४)

कथमनवच्छिन्नस्य परमात्मनोऽङ्गुष्ठप्रमितत्वमित्याशङ्क्याह—

उपासनार्थमुपासकहृदये वर्तमानत्वात् उपासकहृदयस्याङ्गुष्ठमात्रत्वात् तदपेक्षयेदमङ्गुष्ठप्रमितत्वम् । मनुष्याणामेवोपासकत्वसम्भावनया मनुष्यानधिकृत्य प्रवृत्तत्वाच्छास्त्रस्य मनुष्यहृदयापेक्षयेदमुक्तम् । स्थितं चेदमुत्तरत्र प्रतिपादयिष्यते ॥

इति प्रमिताधिकरणम्



अथ अधिकरणसारावली

प्राणेशोऽङ्गुष्ठमात्रः क्वचिदनुकथितस्सञ्चरन् कर्मभिः स्वै-<br>
रन्यत्राङ्गुष्ठमात्रं पुरुषमपि यमो निश्चकर्षेति दृष्टम् ।<br>
तस्मादेतत्प्रमाणप्रमितमुपनिषज्जीवमाहेत्ययुक्त<br>
वाक्यस्थेशानतादेर्नरहृदयपरिच्छित्तितस्तद्धि मानम् ॥<br>
नह्यङ्गुष्ठप्रमाणं हृदयमखिलजन्त्वाश्रयन्तत्परस्मिन्-<br>
व्याप्ते तन्मानतोक्तिः क्वचिदिति मनुजाधिक्रियोक्तिप्रसङ्गे ।<br>
सूत्रद्वन्द्वद्वयान्तस्त्रिभिरधिकरणैश्चिन्त्यते तद्विशेष-<br>
स्तार्तीयैस्स्थापनीयात्त्वयजिगमिषिता सेतिकर्तव्यताऽत्र ॥

**॥ इ ति प्र मि ता धि क र णं स मा प्त म् ॥**





## अथ एतद्गर्भे देवताधिकरणम्

### श्रीभाष्यम्

### सू—२५ तदुपर्यपि बादरायणस्सम्भवात् (१.३.२५)

परस्य ब्रह्मणोऽङ्गुष्ठप्रमितत्वोपपत्तये मनुष्याधिकारं ब्रह्मोपासनशास्त्रमित्युक्तम्। तत्प्रसङ्गेनेदानीं ब्रह्मविद्यायां देवादीनामप्यधिकारोऽस्ति नास्तीति विचार्यते। किं तावद्युक्तम्? नास्ति देवादीनामधिकार इति। कुतः? सामर्थ्याभावात्, नह्यशरीराणां देवादीनां विवेकविमोकादिसाधनसप्तकानुगृहीतब्रह्मोपासनोपसंहारसामर्थ्यमस्ति। नच देवादीनां सशरीरत्वे प्रमाणमुपलभामहे। यद्यपि परिनिष्पन्नेऽपि वस्तुनि व्युत्पत्तिसम्भावनया वेदान्तवाक्यानि परे ब्रह्मणि प्रमाणभावमनुभवन्ति, तथाऽपि देवादीनां विग्रहवत्त्वप्रतिपादनपरं न किंचिदपि वाक्यमुपलभ्यते। मन्त्रार्थवादास्तु कर्मविधिशेषतयाऽन्यपरत्वान्न देवादिविग्रहसाधने प्रभवन्ति। कर्मविधयश्च स्वापेक्षितोद्देश्यकारकत्वातिरेकि देवतागतं किमपि न सा

## अथ एतद्गर्भे देवताधिकरणम्

### श्रुतप्रकाशिका

### सू—२५ तदुपर्यपि बादरायणस्सम्भवात् [१-३-२५]

प्रसङ्गात्सङ्गतिमाह—परस्येति। 'मनुष्याधिकारत्वात्' इत्यत्र मनुष्यशब्देन तिर्यङ्मात्रं व्यावर्तितं, उत देवादिरपीति बुभुत्सया सङ्गतिरित्यर्थः। किं ब्रह्मविद्यायां देवादीनामधिकारोऽस्ति? नेति विचारः। तदर्थं किं तेषां साङ्गब्रह्मविद्योपसंहारसामर्थ्यमस्ति, नेति तदर्थं किं तेषां विग्रहवत्त्वं संभवति नेति, किं तद्विग्रहप्रतिपादकमन्त्रार्थवादानां तत्परत्वं संभवति नेति, किं मन्त्रार्थवादानां अनुष्ठेयार्थप्रकाशनस्तुतिपरत्वं विग्रहादिविवक्षाविरोधि, उत नेति किं विग्रहादिमत्त्वमनुष्ठेयार्थप्रकाशनस्तुत्योरुपयोगि, नेति यदाऽनुपयोगि तदाऽनुष्ठेयार्थप्रकाशनस्तुतिपरत्वस्य विग्रहादिविवक्षाविरोधितया मन्त्रार्थवादानां देवताविग्रहादिपरत्वाभावेन देवानां विग्रहविरहेण सामर्थ्याभावात्तदनधिकार इति फलितम्, यदोपयोगि तदाऽनुष्ठेयार्थप्रकाशनस्तुतिपरत्वस्य विग्रहादिविवक्षाऽनुगुणतया मन्त्रार्थवादानां तत्परत्वेन देवानां विग्रहवत्त्वोपपत्त्या साङ्गब्रह्मविद्योपसंहारसामर्थ्यादस्ति ब्रह्मविद्यायामधिकार इति फलितम्। सामर्थ्याभावादिति। अर्थित्वाभावस्याप्युपलक्षणमेतत्। सामर्थ्याभावमुपपादयति नहीति। उपसंहारः, अनुष्ठानम् अशरीरत्वं कथमित्यत्राह—नचेति। वेदान्ताः प्रमाणं स्युरित्यत्राह—यद्यपीति। प्रयोजनपर्यवसायितयैवहि शब्दस्य प्रामाण्यं तत्र पूर्वभागवचसां प्रवृत्तिनिवृत्तिरूपप्रयोजनपर्यवसानात् तत्र तात्पर्यं, ब्रह्मणः पुरुषार्थरूपतया तत्र वेदान्तानां तात्पर्यं देवादीनां विग्रहेषु तथात्वाभावात्तत्तात्पर्यमित्यर्थः, पूर्वभागे मन्त्रार्थवादास्तत्र प्रमाणमित्यत्राह—मन्त्रार्थवादास्त्विति। मन्त्राश्चार्थवादाश्चेत्यर्थः। अन्यपरत्वादिति। अनुष्ठेयार्थप्रकाशनस्तुत्योरन्यपरत्वादित्यर्थः, मास्तु सोऽन्यपरेण मन्त्रार्थवादेन देवताविग्रहादि किंतु कर्मविधिभिरत्वेन से स्यति, कर्मणो द्रव्यदेवतानिरूप्यत्वात् क्षणध्वंसिनः कर्मणः कालान्तरभाविफलसाधनत्वनिर्वाहाय देवतैश्वर्यस्यापेक्षितत्वाच्छ्रुतहानेनाश्रुतापूर्वकल्पनयोगाच्चेत्यत आह—कर्मविधयश्चेति॥

श्रीभाष्यम्

धयन्ति । अत एव तासामर्थित्वपि न सम्भवति । अतस्सामर्थ्यार्थित्वयोरभावाद्देवादीनामनधिकार इति ॥

एवं प्राप्ते प्रचक्ष्महे—' तदुपर्यपि बादरायणस्सम्भवात् ' तदुपर्यपि तत् ब्रह्मोपासनं उपरि देवादिष्वपि, संभवतीति भगवान् बादरायणो मन्यते, तेषामर्थित्वसामर्थ्ययोरसम्भवात्। अर्थित्वं तावदाध्यात्मिकादिदुर्विषहदुःखाभितापात्परस्मिन्ब्रह्मणि च निरस्तनिखिलदोषगन्धेऽनवधिकातिशयासङ्ख्येयकल्याणगुणगणे निरतिशयभोग्यत्वादिज्ञानाच्च सम्भवति। सामर्थ्यमपि पटुतरदेहेन्द्रियादिमत्तया सम्भवति। देहेन्द्रियादिमत्वं च ब्रह्मादीनां सकलोपनिषत्सु सृष्टिप्रकरणेषूपासनप्रकरणेषु च श्रूयते। तथा हि 'सदेव सोम्येदमग्र आसीत् ' ' तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत ' (छां.६.२.१,३) इत्यारभ्य सर्वमचेतनं तेजोबन्नमुखावस्थाविशेषवद्व्याकृत्य 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि ' (छां.६.३.२) इति सङ्कल्प्य ब्रह्मादिस्थावरान्तं चतुर्विधं भूतजातं तत्तत्कर्मोचितशरीरं तदुचितनामभाक्चायमकरोदित्युक्तम्। एवं सर्वत्र सृष्टिवाक्येषु देवतिर्यङ्मनुष्यस्थावरात्मना चतुर्विधा सृष्टिराम्नायते। देवादिभेदश्च तत्तत्कर्मानुगुणब्रह्मलोकप्रभृतिचतुर्दशलोकस्थफलभोगयोग्यदेहेन्द्रियादियोगायत्तः, आत्मनां स्वतो देवादित्वाभावात्। तथा ' तद्धोभये देवासुरा अनुबुबुधिरे ते होचुः इन्द्रो ह वै देवानामभिप्रवव्राज विरोचनोऽसु-

श्रुतप्रकाशिका

अयमभिप्रायः यद्यपि देवतावत्सु यागहोमादिकर्मसु देवतैश्वर्याङ्गीकारेणापि फलप्रदत्वानिर्वाहसम्भवः, तथाऽपि दान तपःप्रभृतिषु देवतानामभावात् कल्पनीयमेवापूर्वं तथा च समानन्यायतया यागहोमादावप्यपूर्वमेव कल्प्यतां किमर्थंवैश्येन । किंच तत्रैव कल्पे सर्वकर्मफलभोगनियमाभावाद्देवतानां सृष्टिप्रळयाद्युपरमाच्च फलप्रदातुरभावात् तेषां कर्मणां नैष्फल्यमेव स्यात् । अथ तत्तद्देवताशरीरकः परमात्मा तत्तत्कर्मभिराराधितो निरैश्वर्यतया फलप्रद इति मतं, तथाऽपि प्रतिमाप्रतिमेयन्यायस्स्यात्, यथा प्रतिमोद्देशिभिरुपचारैर्देवताप्रीतिः एवं देवतोद्देशिभिर्द्रव्यत्यागैः परमात्मप्रीतिस्स्यात् ततश्च प्रतिमाया इव देवताया अभ्युदेश्यकारकत्वमात्रं विवक्षितं नैश्वर्यमपीत्यनपेक्षितम् देवतैश्वर्यं नकल्प्यमिति । उक्तोपजीवनेनार्थि त्वाभावमाह–अतएवेति । यतएव न विग्रहवत्त्वं देवतानां, अतएवार्थित्वमपि नसम्भवति, दुःखस्य तज्जिहासायाश्च देहसम्बन्धमूलत्वादर्थित्वस्य दुःखजिहासारूपत्वाच्चेत्यर्थः। एवं प्राप्तइति । अक्षरार्थमाह—तदुपर्यपीति । अर्थित्वमुपपादयति अर्थित्वमिति। सामर्थ्यमुपपादयति सामर्थ्यमपीति । पटुतरशब्दो मनुष्यदेहादपि पटु त्वातिशयपरः। प्रमाणाकांक्षायामाह–देहेति । तत्त्वोद्देशप्रधानमन्त्रब्राह्मणरूपवेदभागाउपनिषदः ताश्च द्विविधा तत्त्वपरा उपासनपराश्चेति, उभयीष्वपि तासु देवतानां विग्रहादिमत्त्वमवगम्यत इत्यर्थः । कानि तत्त्वप्रतिपादकवचांसि कथतैर्विग्रहवत्त्वप्रतिपादनमित्यत्राह–तथाहीति । सदेवेत्यादि । नामरूपव्याकरणस्य कण्ठोक्तत्वा नामरूपाणां चातुर्विध्यस्य प्रमाणसिद्धत्वान्नामरूपव्याकरणश्रुत्यैव देवताविग्रहवत्त्वं सामान्येन सिद्धमित्यर्थः। । ' इन्द्रोवरुणस्सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः ' ' नारायणाद्ब्रह्मा जायते ' इत्यादीनि विशेषोक्तिमन्तिच वाक्यान्यभिप्रेतानि । चतुर्विधसृष्टिराम्नाता भवतु ततः किमित्यत्राह–देवादीति । उपासनदशायां परमकारणभूतस्योपास्यस्य लक्षणत्वेन प्राप्यदशायां प्राप्यविशेषणत्वेन विग्रहादिमत्त्वं सिद्धमित्यर्थः। उपासनप्रकरणेषु दर्शयति तथेति । कर्मविधिशेषत्वेनापि सिद्ध्यतीत्याह–कर्मविधीत्यादिना । तत्र प्रथमं

## श्रीभाष्यम्

राणां तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः' (छा.८.७.२) 'तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुः तौ ह प्रजापतिरुवाच (८.७.३) इत्यादिना स्पष्टमेव शरीरेन्द्रियवत्त्वं देवादीनां प्रतीयते। कर्मविधिशेषभूतमन्त्रार्थवादेष्वपि 'वज्रहस्तः पुरन्दरः' (अष्ट.२.प्र.६.अनु.७.पं.३४) 'तेनेन्द्रो वज्रमुदयच्छत्' (काण्ड.२.प्र.४.अनु.१२) इत्यादिभिः प्रतीयमानं विग्रहादिमत्त्वं प्रमाणान्तराविरुद्धं तत्त्वमेव। नचानुष्ठेयार्थप्रकाशनस्तुतिपरत्वाभ्यां प्रतीयमानार्थान्तराविवक्षा शक्यते वक्तुम्, स्तुत्याद्युपयोगित्वात्तेन विना स्तुत्याद्यनुपपत्तेश्च। गुणकथनेन स्तुतित्वम्। गुणानामसद्भावे स्तुतित्वमेव हीयेत। नचासता गुणेन कथितेन प्ररोचना जायते। अतः कर्मप्ररोचयन्तो गुणसद्भावं बोधयन्त्येवार्थवादाः। मन्त्राश्च कर्मसु विनियुक्तास्तत्र तत्र क्रियमाणस्यानुष्ठेयमर्थं प्रकाशयन्तो देवतादिगतविग्रहादिगुणविशेषमभिदधत एव तत्र किञ्चित्कुर्वन्ति, अन्यथेन्द्रादिस्मृत्यनुपपत्तेः। नच निर्विशेषा देवता धियमधिरोहति।

## श्रुतप्रकाशिका

सूत्रे सिद्धवस्तुनि तात्पर्यसम्भवस्य फलवेन सिद्धिरुक्ता, अथ साधकत्वप्रकाशकत्वहेतुतया 'फलमत उपपत्तेः' इत्यत्र फलसाधनत्वेनेति द्विधा विभागः। 'आदित्यो यूपः' इत्यादिष्वाशङ्क्यार्थमाह—प्रमाणान्तराविरुद्धमिति। अन्यपरत्वमनूद्य निरस्यति नचेत्यादिना। स्तुत्याद्युपयोगित्वादिति। आदिशब्देनानुष्ठेयार्थप्रकाशनं मन्त्रकृत्यं गृह्यते मन्त्रार्थवादोभयोद्देश अनुष्ठेयार्थप्रकाशनस्तुतिपरत्वाभ्यामित्यनूद्देशोचावगतक्रमोऽत्र परित्यक्तः, तत्र कारणं मन्त्रैरपि क्वचित्स्तुतिदर्शनेन स्तुतेर्व्यापकत्वम्। दृश्यते हि मन्त्रे स्तुतिः 'नकिरिन्द्र त्वदुत्तरो न ज्यायोऽस्ति वृत्रहन्,' तथा 'अर्हन्बिभर्षि सायकानि धन्वार्हन्निष्कं यजतं विश्वरूपम्। अर्हन्निदं दयसे विश्वमभ्भुवं न वा ओजीयो रुद्र त्वदस्ति' इत्यादिभिः 'अर्हन्बिभर्षि' इत्यादिमन्त्रस्य स्तुतिपरत्वं ब्राह्मणेनैवावगम्यते 'अर्हन्बिभर्षि सायकानि धन्वेत्याह। स्तौत्येवैनमेतत्' इति। तेनविना, प्रतीयमानार्थेन विना। तत्र स्तुत्यनुपपत्तिं विवृणोति गुणकथनेनेति। व्यतिरेकेणोपपादयति गुणानामिति। स्तुतित्वमेव हीयेतेति। प्ररोचकत्वमेव हीयेतेत्यर्थः। शेषभूतस्य शेषिणंप्रति किंचित्कारोऽपेक्षितः, स न सिद्ध्यतीति यावत्॥

ननु यदि गुणकथनेन स्तुतित्वं तथासति गुणकथनाभावे स्तुतिहानिः स्यात्, न गुणानामसद्भाव इत्यत्राह—नचासतेति। अनेन 'नासता स्तुतिरुपपद्यते' इति द्रमिडभाष्यं स्मार्यते। अर्थप्रकाशनानुपपत्तिं विवृण्वन्मन्त्राणां विग्रहादिमत्त्वे प्रामाण्यमुपपादयति मन्त्राश्चेत्यादिना। द्रव्यदेवते हि कर्मनिरूपिके एतद्देवत्यमिदं कर्मेति प्रतिपत्तौ देवताविशिष्टत्वेनहि कर्मप्रतिपत्तिः 'यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्' इति देवता ध्यातव्येति श्रूयते, देवता चेदृशीत्येव प्रतिपत्तव्या निर्विशेषवस्तुनः प्रतिपत्तुमशक्यत्वात्। इन्द्रत्वादिकं च न शुद्धात्मस्वरूपस्य विद्यते अतो विग्रहादौ विवक्षितत्वम्। प्रतीतेरालम्बनमात्रमपेक्षितम्, नार्थसद्भाव इति चेन्न नह्यतस्मिंस्तद्दृष्टिः फलाय विधीयते अपितु यथाऽवस्थितकर्मस्वरूपबोधनं हि क्रियते तस्मादनुष्ठेयार्थप्रकाशकत्वसिद्ध्यर्थं मन्त्राणां विग्रहादिमत्त्वे च प्रामाण्यमस्त्येवेत्यर्थः। अर्थसद्भावाभावेऽपि प्ररोचनं दृश्यत इति चेन्न इष्टसाधनत्वाभावेऽपि बालातुरादिषु विप्रलम्भवाक्यानां प्रवृत्तिहेतुत्वं दृश्यत इति विधिवाक्यस्याप्ययथार्थत्वप्रसङ्गात्। अपौरुषेयतया निर्दोषं विधिवाक्यं निरुपकविषय

## श्रीभाष्यम्

तत्र प्रमाणान्तराप्राप्तान्गुणान् स्वयमेव बोधयित्वा तैः कर्म प्ररोचयन्ति ; गुणविशिष्टं वा प्रकाशयन्ति ; प्राप्तांश्चानूद्य तैः प्ररोचनप्रकाशने कुर्वन्ति ; विरुद्धत्वे तु तद्वाचिभिश्शब्दैरविरुद्धान्गुणान् लक्षणया कुर्वन्ति । कर्मविधेश्च देवताया ऐश्वर्यमपेक्षितमेव । कामिनः कर्तव्यतया कर्म विधीयमानं स्वयं क्षणप्रध्वंसि कालान्तरभाविनः फलस्य स्वर्गादेस्साधकमपे-

## श्रुतप्रकाशिका

निति याथार्थ्यमितिचेत्, तर्हि मन्त्रार्थवादानामप्यपौरुषेयतया निरुपकविषयत्वादतस्मिन् तद्दृष्टिविधानपरत्वाभावाच्च स्वार्थे प्रामाण्यमस्तीति भावः ॥

प्रयोगमर्थविशेषप्रदर्शनेन प्रयोगप्रकारोऽर्थसिद्धः, विमता इन्द्रादिशब्दाः स्वरूपातिरिक्तपदार्थप्रतीतिहेतवः अपारिभाषिकत्वेसति बोधकत्वान्निर्दोषवाक्यस्य आदिविधिपदवत् । विमता चतुर्थी प्रकृत्यतिरिक्तार्थनिष्ठस्वार्था अपारिभाषिकशब्दसविभक्तित्वात् 'दध्ना' इति विभक्तिवत् । विमता सम्प्रदानकारकबुद्धिश्शब्दातिरिक्तविषया कारकबुद्धित्वात् करणकारकबुद्धिवत् । विमता मन्त्रार्थवादाः प्रतीयमानार्थे प्रमाणानि साधकबाधकागोचरार्थबोधकत्वात् विधिवाक्यवत् विमतशब्देन 'आपो वै शान्ता.' 'आदित्यो यूप.' इत्यादि व्यावृत्तिः । विमतानि पदानि मुख्यार्थसंसर्गे प्रमाणानि, साधकबाधकागोचरार्थप्रतिपादकवाक्यस्थत्वात् विधिपदवत् विमतानि पदानि परमार्थभूतप्रतीयमानार्थसंसर्गाणि साधकबाधकागोचरार्थप्रतिपादकवाक्यस्थत्वात् विधिपदवत् । नन्वर्थवादानां वाक्यत्वमसिद्धम् प्रवर्तकार्थानवबोधनात् अतः पदशब्दवाच्या अर्थवादा इति वाच्यम् ; अर्थवादाः न पदशब्दवाच्या तिङ्कारकपदसङ्घातरूपत्वात् विधिवाक्यवत् । अर्थवादाः प्रमाणभूतवाक्यरूपाः साधकबाधकगोचरसंसर्गप्रत्यायकतिङन्तकारकपदात्मकत्वात् विधिवाक्यवत् विमता मन्त्रार्थवादाः प्रतीयमानार्थविवक्षान्विता, साधकबाधकागोचरार्थत्वे सतिहि विधिनैकवाक्यत्वात् प्रयाजादिवाक्यवत्, नच प्रवर्तकवाक्यत्वमुपाधिरिति वाच्यम् ; साधकारविधिवाक्यत्वेन तस्यापि सोपाधिकत्वप्रसङ्गात् । प्रयाजादिविधीनामविवक्षितार्थत्वेऽनुष्ठानविरोधात् साधकारविधिवाक्यत्वं नविवक्षितार्थत्वे प्रयोजकमितिचेत्—, अनुष्ठानस्य प्रामाणिकतया हि इन्द्रादेरप्यनिष्टता एवमर्थवादाभावेसति स्वतस्सिद्धयतः प्रमाणभावस्य भङ्गप्रसङ्गात् प्रवर्तकवाक्यत्वमप्रयोजकम् । इत्यादिरूपाधिको हेतु. विगीता अर्थवादाः परमार्थस्वार्थोपस्थापकाः निरुपकपुरुषप्ररोचकत्वात् रसायनादुष्यताप्रतिपादकवाक्यवत् कारणदोषबाधकप्रत्ययविरहितत्वाद्वा स्वर्गयागयोः साध्यसाधनभावप्रतिपादकवाक्यवत् । विमता मन्त्रार्थवादाः प्रतीयमानार्थे प्रमाणानि विद्धयपेक्षितार्थसमर्पकत्वात् 'छागस्य वपाया' इतिमन्त्रवत् रात्रिसत्रार्थवादवच्च । विमता प्राशस्त्यबुद्धिः प्राशस्त्यहेतुभूतपरमार्थनिबन्धना, निरुपकपुरुषाश्रयप्राशस्त्यबुद्धित्वात् औषधविषयप्राशस्त्यबुद्धिवदिति च 'आपो वै शान्ताः' 'आदित्यो यूप' इत्यादिषु प्रमाणान्तरसिद्धस्य तद्विरुद्धार्थस्यचाप्रत्युच्यमानत्वात् [illegible] प्रामाण्यमिति शङ्कायामाह—तत्र प्रमाणान्तरेति । बोधयित्वा विधाय प्ररोचयन्ति, अर्थवादाः प्ररोचयन्ति [illegible] इति लक्षयित्वा कुर्वन्तीति । प्ररोचनप्रकाशने कुर्वन्तीत्यर्थः ॥

ननु विद्धयपेक्षितार्थेहि तात्पर्यं देवताविग्रहादेर्विद्धयपेक्षितत्वं कथमित्यत्राह-कर्मविधेश्चेति । 'फलमत उपपत्तेः' इत्यधिकरणार्थो बुद्धिसौकर्यार्थमत्र सङ्क्षिप्य कथ्यते, नचैतदधिकरणासाधारणार्थतया असाधारणत्वन्तु साधकत्वाद्देवताप्रकाशकत्वसिद्धये प्रतीयमानार्थे प्रामाण्यमस्त्यस्यमर्थः, स च पूर्वमेवोक्तः कृष्यादेरङ्कुरादिहासकत्वमिवान्तरेणद्वारकम [illegible]

## श्रीभाष्यम्

क्षते । मन्त्रार्थवादयोश्च ' वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति ' (यजु.का.१.प्र.अनु.१.पं.१) ' यदनेन हविषाऽऽशास्ते तदश्यात्तदृध्यात्तदस्मै देवा राधन्ताम् ' (अष्टक.प्र.२) इत्यादिषु देवतायाः कर्मणाऽऽराधितायाः फलदायित्वं तदनुगुणं चैश्वर्यं प्रतीयमानमपेक्षितत्वेन वाक्यार्थे समन्वीयते । देवपूजाभिधायिनो यजिधातोश्च यागाख्यं कर्म स्वाराध्यदेवताप्रधानं प्रतीयते । तदेवं कृत्स्नवाक्यपर्यालोचनया वाक्यादेव विध्यपेक्षितं सर्वमवगतमिति नापूर्वादिकं व्युत्पत्तिसमयानवगतं कर्मविधिष्वभिधेयतया कल्प्यतया वाऽऽश्रयितव्यम् । तथा सङ्कीर्णब्राह्मणमन्त्रार्थवादमूलेषु धर्मशास्त्रेतिहासपुरा-

## श्रुतप्रकाशिका

दित्यत्राह—वायुर्वाइति । श्रुतहानमश्रुतकल्पनं चानुपपन्न रात्रिस त्रादिष्विवेति भाव. । वाक्यार्थे समन्वीयतइति । आर्थवादिकार्थानां श्रूयमाणत्वात्तद्विशिष्टे वाक्यतात्पर्यमिति निश्चितसति रक्तःपटो भवतीतिवदुत्थापिताकाङ्क्षत्वेन विधिनैकवाक्यतया समन्वयोऽर्थवादानामितिभावः । यत्र वाक्यशेषवशादपेक्षितदेवताप्रीतिद्वारकत्व न सिद्ध्यति, तत्रापि यजिसामर्थ्यात्तत्सिद्ध्यति अर्थवादाभावेऽपि विधिसामर्थ्यात् स्तुतिरिवेत्याह–देवपूजाभिधायिनइति । नच ' यजदेव पूजा सङ्गतिकरणदानेषु ' इति शाब्दिकानां स्मरणं भ्रान्तिमूलमिति वाच्यम् विध्यपेक्षितार्थसमर्पकतया स्वार्थे प्रमाणभूतत्वान्मन्त्रार्थवादानां अस्य स्मरणस्य तन्मूलत्वोपपत्तेः, विमतो विधिप्रत्ययः चेतनप्रीत्यतिरिक्तफलसाधनत्वकल्पनानिराकाङ्क्षः, चेतनप्रीत्यतिरिक्तफलसाधनवाचकत्वकल्पननिराकाङ्क्षश्च कृतिसाध्यचेतनप्रीत्यवगमकवाक्यस्थत्वात् राजानं सेवेतेतिवाक्यस्थविधिप्रत्ययवत् विमतशब्देन जुहुयादित्यादिव्यावृत्तिः। जुहुयादित्यादिषु विधिप्रत्ययेषु विधिप्रत्ययत्वलिङ्गेन पूर्वोक्तसाध्यद्वय समर्थनीयम् तदेवमिति । कृत्स्नशब्देन मन्त्रार्थवादविषयो विवक्षितः. वाच्यापूर्ववादपक्षे अश्रुतकल्पनं नास्तीतिदृश वाच्यत्वस्यापि कल्प्यमानत्वात् कल्प्यापूर्ववादे अपूर्वमेव कल्प्य वाच्यपक्षे वाच्यत्वमपि कल्प्यमित्यभिप्रायेण व्युत्पत्तिसमयानवगतमित्युक्तम् । तथेत्यादि । ब्राह्मणशब्देन विध्युद्देशग्रहणं विध्यर्थवादमन्त्ररूपेण विभागवतामस्मदादिभिरनधीतासु अधीतासु च शाखासु तत्राप्यन्यतरप्रकरणेषु प्रसङ्गादनुप्रविष्टानां भगवता व्यासेन व्यस्तेष्वव्यस्तेषु च वेदभागेषु विप्रकीर्णानां वाक्यानामर्थाः इतिहासादिषु सङ्कलय्य कथ्यन्त इतिभावः । सङ्कीर्णशब्देन नित्यानुमेयश्रुतिमूलत्वोपपदाद्वामूलत्वव्युदासः तदुभयमपि ह्यनुपपन्नम् । तत्र यस्तावन्नित्यानुमेयतयाऽभिमतो वर्णसमुदायः सकिं वर्णमात्रस्वरूपः ; उतानुपूर्वीविशेषविशिष्टः प्रथमेकचटतपादिवदर्थावबोधकत्वाभावेन वाक्यत्वाभावाद्वाक्यविशेषत्वरूपवेदत्वासिद्धेः स्मृतीनां वेदमूलत्वं न स्यात् । द्वितीये नित्यानुमेयत्वं व्याहतं स्वतः क्रमरहितानां वर्णानामुच्चारणेन विना आनुपूर्वीविशेषविशिष्टत्वायोगात् उच्चारणयोग्यताऽस्तीतिचेन्न उच्चारणयोग्यतानामस्मदुत्तरदाशि द्वयपुरा बुद्धिस्थितिः, सा च योग्यता किं वर्णमात्रगता उतानुपूर्वीविशेषविशिष्टवर्णगता । नप्रथमः वर्णमात्रस्यार्थानवबोधकतया स्मृतेर्निर्मूलत्वप्रसङ्गात्, सत्यामानुपूर्व्यां स्मृतिप्रतिपाद्यार्थावबोधनक्षमत्व वर्णेष्वस्तीतिचेत् तर्ह्येव वर्णेष्वानुपूर्व्यन्तरेऽपीत चैत्यवन्दनकर्तव्यताद्यर्थबोधनक्षमत्वमप्यस्तीति बुद्धस्मृतेरपि वेदमूलत्वप्रसङ्गः वेदबाह्यतया सम्प्रतिपन्नत्वान्नतस्याः वेदमूलत्वानुमानशङ्कोदय इतिचेत् । धस्य शास्त्रस्य वेदमूलत्वप्रसङ्गः प्रवर्तकार्थपरत्वाभावान्न वेदमूलत्वानुमानमितिचेत् ' कार्या सपत्नी नरं सामिथुनस्त्रीतोयदामालिनी ' इति वाक्यस्य वेदमूलत्वप्रसङ्गः । आनुपूर्वीविशेषविशिष्टवर्णगतायोग्यतेत्यप्ययुक्तम् । पूर्वं केनचिदुच्चारितत्वाभावादानुपूर्व्यसिद्धेः, ततश्चानाद्यानुपूर्वीविशिष्टतारूपवेदत्वं दूरोत्सारितम् । आनुपूर्वीविशेषेणोच्चारणयोग्यत्वं वर्णानामनादीति

## श्रीभाष्यम्

णेषु ब्रह्मादीनां देवासुरप्रभृतीनां च देहेन्द्रियादयस्स्वभावभेदाः स्थानानि भोगाः फलानि

## श्रुतप्रकाशिका

चेत् तर्हि त्वत्कन्दनप्रतिपादनानुगुणानुपूर्व्या अपि तुल्यम् अतस्तत्रापि वेदमूलत्वं स्यात् कर्तृसामान्याभावान्न तत्र वेदमूलत्वानुमानं श्रुतिस्मृत्यर्थयोस्तुल्यतया कर्तृसामान्यात् स्मृतेर्वेदमूलत्वानुमानमितिचेत् माभूत्कर्तृसामान्यं तेन मन्वादिस्मृतीनां वेदमूलत्वेऽनुमिते तुल्यन्यायतया आपतितं वेदमूलत्वं को वारयेत् स्वावगतार्थप्रतिपादनानुगुणानुपूर्वी विशेषेणानादिसंबन्धयोग्यवर्णास्तित्वज्ञानहि सर्वत्र समान तज्ज्ञाननियमो बुद्धादीनां ग्रन्थनिर्माणदशायां नास्तीतिचेत् तज्ज्ञानपूर्वकमेवेदानीं रथ्यातृणानि गणयेत् स्वर्गकाम इ युक्तस्य वाक्यस्य वेदमूलत्वप्रसङ्गः ॥

नन्वनेनैव स्मृत्यवगतार्थविशेषेणावच्छिन्नानुपूर्वीविशिष्टानां वर्णानां वेदत्वमितिचेन्न मन्वादिवाक्यस्यापि तदर्थावच्छिन्नानुपूर्वीविशिष्टवर्णसमुदायात्मकतया वेदत्वप्रसङ्गेनानुमेयान्तराभावान्नित्यानुमेयश्रुतिमूलत्वासिद्धेः। अतो नित्यानुमेयश्रुतिमूलत्वमनुपपन्नं उत्सन्नशाखामूलत्वपक्षेऽप्यधीयमानशाखास्वेव प्रमादात्कतिपयवाक्यानां क्वचित्क्वचिद्देशे प्रलीनत्वात्तन्मूलाः स्मृतयः प्रणीता इत्यप्ययुक्तम्। पदवाक्यसङ्ख्यानियमेन बहुभिरध्येतृभिरस्खलितमधीयमानत्वात् कतिपयवाक्यानां प्रलीनत्वानुपपत्तेः। स्मृतीनां मूलभूतशाखाकात्स्न्येन काचिदुत्सन्ना तन्मूला स्मृतय इत्यप्ययुक्तम्। तथाहि शाखाया उत्सादो नाम किं कतिपयदेशेष्विदानीमध्येतृविरहः उत सर्वदेशेष्वप्यध्येतृविरहः। प्रथमः कल्पोऽभ्युपगतः। नद्वितीयः, तपःप्रभावाधिगतसार्वज्ञ्यादीनां व्यासादीनां तत्तच्छाखाविशेषाभिज्ञानां तदध्ययनपरित्यागे कारणाभावात् स्वशिष्याध्यापनसम्भवाच्च। नचेदानीं तं शिष्यबुद्धिमान्द्यादिदानीं तदध्यापनासम्भवः, बहुशाखाध्ययनासामर्थ्येऽप्यसदादेरिव तत्तदेकशाखाध्ययनसमर्थशिष्यसम्भवात्। अतः प्राचीन एव पक्षः परिशिष्यते अतः स्मृतीनां सङ्कीर्णवेदभागमूलत्वमेव युक्तम् स्मृतिमूलभूतवेदभागसद्भावे स्मृतिप्रणयनवैयर्थ्यमितिचेन्न तच्छाखाध्येतृपुरुषविरहितदेशेषु तद्युक्तदेशेष्वपि बहुशाखाध्ययनधारणतदर्थनिरूपणनिर्णयासमर्थपुरुषेषु च सफलत्वात् अतः स्मृतीनां सङ्कीर्णवेदभागमूलत्व युक्तम् कर्मविधेश्च इत्यादौ भाष्ये इदमर्थसिद्धं यदुक्त यागादौ दानादौचार्यवैरूप्याश्रयणादर्थवैशसमिति तदसत् सर्वशाप्यपूर्वकल्पनानभ्युपगमात्। नच फलसाधनतानुपपत्तिः कर्मोपजनितप्रीतेः परमात्मन एव तत्सिद्धेः, 'वासो ददाति। सर्वदेवत्यं वै वासः, सर्वा एव देवताः प्रीणाति' इत्यादिभिर्दानादीनामपि देवताप्रीतिहेतुत्वावगमाच्च। नच परमात्मप्रीत्या फलसम्भवे देवतैश्वर्यानुपयोगः प्रधानावान्तरापूर्वकल्पनान्यायस्यात्रापीष्टत्वात्। यथाहि पूर्वापरभूतानामङ्गप्रधानरूपाणामनेकेषां कर्मणां यौगपद्याभावादवान्तरापूर्वद्वारा परमापूर्वनिष्पत्तिरङ्गीक्रियते, एवमेव तत्तत्कर्मजनितप्रीत्यतिशयाभिर्देवताभिः परमात्मन्यखण्डैकप्रीतिजननमातिष्ठामहे। इदमेव च देवतायाःफलदानानुगुणमैश्वर्यं यत्फलप्रदे परमात्मनि स्वप्रीतिद्वारा प्रीतिजनन, उक्तं हि भगवता 'यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति' इत्यारभ्य 'लभते च ततःकामान्मयैव विहितान्हितान्' इति। तेन फलोपभोगस्यानियतकालत्वेऽपि नदोषः ॥

नचैवंसति प्रतिमाप्रतिमेयन्यायेन देवताप्रीतिरनाश्रेया 'यस्यै देवतायै हविर्गृहीतं स्यात् तां ध्यायेद्वषट्करिष्यन्' 'साक्षादेव देवताः प्रीणाति' 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति' 'सएनं तृप्ता आयुषा तेजसा वर्चसा श्रिया यशसा ब्रह्मवर्चसेन अन्नाद्येन च तर्पयन्ति' - 'येचैव देवास्सायंयावानो येच प्रातर्यावाणः तानेवोभयांस्तर्पयति तएनं तृप्ताः प्रजया पशुभिस्तर्पयेयुः' इति देवतातृप्तेःश्रुतत्वात्तत्प्रहाणानुपपत्तेः। 'पितरि

श्रीभाष्यम्

चेत्येवमादयस्सुव्यक्ता प्रतिपाद्यन्ते । अतो विग्रहादिमत्त्वाद्देवानामप्यधिकारोऽस्त्येव ॥

श्रुतप्रकाशिका

प्रीतिमापन्ने सर्वास्तुष्यन्ति देवता. ' इति न्यायात् भृत्यप्रीणने भूभृत्प्रीणनन्यायाच देवताप्रीति. परमात्मप्रीतिहेतुर्वो पपत्तिश्चेति । सूत्रार्थमुपसंहरति अतइति ॥

ननु कथं देवताना ब्रह्मविद्याऽधिकार. नह्यत्रैवर्णिकाना तेषामुपनयनाभावेन अध्ययनसिद्धस्वाध्यायलब्धविद्य व नच तेषा विद्याङ्गभूतकर्मानुष्ठानयोग्यत्व अग्निनिष्पत्त्यनुपपत्तेः । ' वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यआदधीत शरदि वैश्य आदधीत ' इति त्रैवर्णिकविषयाधानविधि: कथ देवानधिकरोति, अन्यार्षेयस्यचानधिकारोऽधिकरणसिद्ध', देवाना देवर्षीणा च मूलभूतऋष्यन्तराभावादन्यार्षेयतयाचानधिकारः । अग्नीन्द्रादीनामग्नीन्द्रादिदेवताभिः वादमयायुद्देशेन हवि. प्रक्षेपानुपपत्तिश्चेति । उच्यते नतावदुपनयनाभावात्साङ्गविद्यानधिकारः । तस्याध्ययनाङ्गत्वात् , यज्ञादिकर्मब्रह्मोपासनयोरङ्गत्वाभावात् अध्ययनाभावेऽपि देवताना सुकृतप्रकर्षेण पूर्वजन्मविशेषाधीतस्वाध्यायतदर्थस्मरणोपपत्तेश्च विश्वाचादयोऽपिहि पूर्वजातिं स्मरन्ति, किं पुनर्देवा देवर्षयश्च ? नचोपनयनदिवद्विद्याकर्मणोरनधिकार — शूद्रादीनामपि उपनयनविरहप्रयुक्तत्वाभावादनधिकारस्य, सखलु तेषा सामर्थ्याभावानुगृहीतशास्त्रनिषेधप्रयुक्त. । देवताना हिविद्याकर्मणी नक्वचित्प्रतिषिद्धे प्राक्तनज्ञानाप्रमोषा सामर्थ्यं च स्थितम्, नचात्रैवर्णिकत्वादग्न्याधानाभावादन्यार्षेयतया च विद्याङ्गकर्मानधिकार. मनुष्यकर्तृकाधानस्यैव त्रैवर्णिकत्वार्षेयाधिकारित्वनियमात् किमत्र नियामकमितिचेत् । देवाः सत्रमासत ' ' विश्वसृज. प्रथमास्सत्रमासत ' इत्यादिश्रुतिभिर्देवादीना क्रत्वनुष्ठानदर्शनात् विशेषत इन्द्रादीन वृत्रवधादिजनितकलुषक्षालनाय क्रत्वनुष्ठानस्मरणाच्चेति ब्रूमः ॥

यद्वा ब्राह्मण्यादिक देवतादीनामप्यस्ति, तत्खल्वदृष्टविशेषसम्बन्धरूप नतु जातिरूप ब्राह्मणादिभिर्ब्राह्मण्यादिषू त्पत्तिमात्रवा अन्यथा आदिकाले ब्रह्मणो मुखबाहूरुप्रभवाना पश्चाद्विश्वामित्रप्रभृतीना च ब्राह्मण्याद्यभावप्रसङ्गात् । सन्ता नविशेषप्रसूतत्वंच तादृगदृष्टवत्त्वसूचक सतानविशेषो पत्तेः प्रकृष्टादृष्टकार्यत्वात् अलौकिकप्रकर्षविशेषकारणत्वाच, ईदृश ब्राह्मण्यादिक देवतास्वपि सभवति । अवगम्यते च तत् वाजपेय प्रकृत्य ' तंबृहस्पतिरुदजयत्तेनाजयत तेनेन्द्रमयाजयत् ' इति वृहस्पतिनेन्द्रेण च वाजपेयस्यानुष्ठितत्वमुक्त्वा ततएव हेतोः ' सवा एष ब्राह्मणस्यचैव राजन्यस्यच यज्ञ.' इति वाजपेयस्य ब्रह्मक्षत्राधिकारत्वमुच्यमान बृहस्पतेर्ब्राह्मण्यमिन्द्रस्य क्षत्रत्वमपि ह्यवगमयति ' ब्रह्मावृहस्पतिः क्षत्रमिन्द्र. ' इति च श्रूयते तथा ' मरुतो वै देवानां विशः ' इति मरुतो विशश्श्रूयन्ते अतो देवताविशेषाणां ब्रह्मक्षत्रविड्विभागाद्विद्वेषाग्निसंबन्धो युक्तः । विद्यानुग्राहक ब्रह्मचर्यादिक च देवाना श्रूयते ' एकशत ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवास ' इत्यादिषु । अतो विद्याङ्गकर्मगुणपौष्कल्यात्सामर्थ्यं सिद्धम् । नच यष्टव्यदेवतान्तराभावादग्न्या नानुपपत्तिः अग्नीन्द्रादिशब्दप्रवृत्तिनिमित्ताना ज्ञानशक्त्यैश्वर्यविशेषाणां निरुपाधिकाश्रयतया तच्छब्दवाच्यस्य परमात्मनो ऽव्यवधानेन देवताभिराराध्यत्वात्, अग्नीन्द्रादीनां तत्तद्यज्ञभागभागि व स्वाराधनप्रीतेन भगवता दत्त नतु स्वाभाविक यथाह व्यासेन कृष्णद्वैपायनेन मोक्षधर्मे यज्ञाग्रहाराध्याये—

ततस्ते विबुधास्सर्वे ब्रह्मा ते च महर्षय । वेददृष्टेन विधिना वैष्णवं क्रतुमाहरन् ॥
तस्मिन्सत्रे तथाब्रह्मा स्वयम्भागमकल्पयत् । देवा महर्षयश्चैव सर्वे भागानकल्पयन् ॥
ते कार्तयुगधर्माणो भागाःपरमसत्कृता. । प्रापुरादित्यवर्णंत पुरुष तमस.परम् ॥

श्रीभाष्यम्

## सू—२६ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् [१.३.२६]

देवादीनां विग्रहादिमत्त्वाभ्युपगमे कर्मणि विरोधः प्रसज्यते, बहुषु यागेषु युगपदेकस्यैन्द्रस्य विग्रहवतः 'अग्निमग्न आवह' (यजु.अष्ट.प्र.३.५), 'इन्द्रागच्छ हरिव आगच्छ' (यजुरारण्यक.प्र.१.अनु.१२) इत्यादिना आहूतस्य तस्य सन्निधानानुपपत्तेः । दर्शयति चाग्न्यादीनां तत्प्रसङ्गम् 'यस्य वा इ देवा यज्ञमागच्छन्ति यस्य वा न बहूनां यजमानानां यो वै देवताः पूर्वं परिगृह्णाति स एना श्वो भूते यजते' (यजु.काण्ड.१ प्र.६ अनु ७.पं.२१) इति । अतो विग्रहादिमत्त्वे कर्मणि विरोधः प्रसज्यत इति चेत्, नानेकप्रतिपत्तेर्दर्शनात् दृश्यते हि सोभरिप्रभृतीनां शक्तिमतां युगपदनेकशरीरप्रतिपत्तिः ॥

श्रुतप्रकाशिका

भिन्नत्वेन भगवतो यद्व्यत्वमुक्तम् । तत्र भगवद्वचः—

येन य त्कल्पितो भागस्स तथा समुपागतः । प्रीतोऽहं प्रदिशाम्यद्य फलमावृत्तिलक्षणम् ॥

तत्र यज्ञैर्यचापि यक्ष्यन्ति मर्त्यलोकेषु वै सुराः । कल्पयिष्यन्ति वो भागान् ते नरा वेदकल्पितान् ॥

यो मे यथा कल्पितवान् भागमस्मिन्महाक्रतौ । स तथा यज्ञभागार्हो वेदसूत्रे मयाकृतः ॥

इत्यत्र भगवता यज्ञभागमात्रं देवानां दत्तमिति प्रतीयते । अतः देवानां कर्मानधिकाराभ्युपगमेन विद्यामात्राधिकारवादोऽनुपपन्नः । अतस्साङ्गब्रह्मविद्योपसंहारसामर्थ्यं देवादीनामस्तीति सिद्धम् देवानां ब्रह्मविद्याधिकारित्वम् ॥

## सू-२६ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् (१.३.२६)

विग्रहाभ्युपगमे इन्द्रादीनां युगपदनेकत्र आह्वानागमने चाभ्युपेये, तदा युगपदनेककर्मस्थत्वे विरोधः शरीरस्यैकत्वादिति गमनस्यैक्यात् । आगमनमात्रं प्रामाणिकमिति हि तथाऽप्यत्र विरोध इत्यागमने प्रमाणम् इ— दर्शयतिचेति । नैतदिति व्याचष्टे नेति । 'दर्शनात्' इत्येतद्व्याचष्टे दृश्यते हीति ।

आत्मनो वै शरीराणि बहूनि मनुजेश्वर । योगी कुर्याद्बलं प्राप्य तैश्च सर्वैर्महीं चरेत् ॥

इति भारतवचनादिद्रष्टव्यम् । चाक्षुषानुपलम्भस्तु मन्त्रौषधादिभिर्मनुष्याणामिव शक्तिविशेषैर्देवानामपि सम्भवतीति न विरोध इति भावः ॥

ननु यदि देवा इहागत्य हविरदन्ति, तर्ह्यन्यत्र मन्त्रार्थवादप्रतिपन्नमग्नेर्हव्यवाहत्वं भज्येत । अवगम्यते ह्येतत् 'हव्यवाडग्निरजरः पिता नः' इति, 'अग्ना हव्यानि सुरभीणि कृत्वा । प्रादाः पितृभ्यः स्वधयाते अक्षन्' इति 'अग्नेस्त्रयो ज्यायांसो भ्रातर आसन् ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त' इत्यादिषु इह प्रक्षिप्तस्य हविषो लोकान्तरप्राप्तिश्च श्रूयमाणानुपपद्यते, अग्निहोत्राहुती प्रकृत्य 'ते वा एते आहुती हुते उत्क्रामतः ते अन्तरिक्षमाविशतः ते अन्तरिक्षं तर्पयतः ते दिवमाविशतः ते दिवं तर्पयतः ते तत आवर्तेते ते इमामाविशतः' इति । स्मर्यते च

अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥

श्रीभाष्यम्

## सू—२७ शब्द इति चेन्नातःप्रभवात् प्रत्यक्षानुमानाभ्याम् (१.३.२७)

श्रुतप्रकाशिका

इति। 'तत आवर्तते' इति इह हविषोऽनावृत्तिश्चानुपपन्ना, कथं देवैर्भक्षितस्यावृत्तिः प्रत्यक्षेण दग्धस्य हविषः कथं देवैर्भक्ष्यमाणत्वं च युक्तमिति। उच्यते—'अयाड्ढव्यानि सुरभीणि कृत्वा प्रादाः' इति श्रवणादग्निना परिणाम्यमाणस्य हविषः सूक्ष्मं रूपं किमप्यलौकिकं विद्यत इत्यभ्युपेत्य श्रेयस्साधनत्ववत्। तच्च देवानामिच्छावशादतीव वर्धते, तथाहि ब्राह्मण 'यद्वै देवा हविर्जुषन्ते अल्पमप्येकामाहुतिमपि तद्गिरिमात्रं वर्धयन्ते' इति। अतोऽपरिमितत्वेन किञ्चिद्भुज्यते किञ्चिन्नीयते इति सर्ववाक्यानुगुण्येन कल्प्यम्। यद्वा इह सन्निधायाऽपि हविर्गृहीत्वा स्वस्थानं गत्वा तद्भुक्तौ कोबाधः। हविषोरिहावृत्तिर्नाम तत्फलभूतवृष्ट्यादेरिह सम्भव उपचारादुक्तः। यद्वा 'इन्द्र आगच्छ हरिव आगच्छ मेधातिथेः' 'अग्निमग्न आवह सोममावह' इति येष्विष्ट्यादिकर्मसु देवताह्वानतदागमने श्रुते, तेष्वेव कर्मस्विहागत्य हविरदनं अन्यत्रत्वग्निभिर्हविष उन्नयनमिति विभागः 'देवा एते आहुती हुते उत्क्रामतः' इति वाक्यमप्यग्निहोत्राहुतिविषयं, नतत्र देवताह्वानागमने॥

*ननु तत्रापि सायंयावप्रातर्यावसंज्ञानां देवानामागमनं श्रूयते* 'सायं यावानश्च वै देवाः प्रातर्यावाणश्चाग्निहोत्रिणो गृहमागच्छन्ति' इति सत्यं तेतु नाग्निहोत्राहुतिभोक्तारः 'सजूर्देवैस्सायं यावभिरिति सायँसम्मृशति। सजूर्देवैः प्रातर्यावभिरिति प्रातः। येचैव देवास्सायं यावानो ये च प्रातर्यावाणः, तानेवोभयाँस्तर्पयति' इति सम्मर्शनमात्रतृप्तिश्रवणात्तेषाम्। हुतहविर्भोक्तृत्वंतु सूर्यादीनामेव नच तत्र सूर्यादीनामाह्वानम् अतो देवताह्वानवत्सु कर्मस्विहागत्य हविरदनं अन्यत्र हविष उन्नयनमिति विभाग उपपन्नः। अतोऽग्नेर्हव्यवाहत्वश्रुतिराहुत्योरुत्क्रमणश्रुतिः 'अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठते' इति स्मृतिश्च चरितार्था। अतोऽनेकशरीरप्रतिपत्त्या देवानां सन्निधानात्कर्मणि विरोधः। इतरेस्तु 'कतिदेवा' इत्युपक्रम्य 'त्रयश्च त्रिच शतात्रयश्च त्रिच सहस्रेति' इति निरुच्य 'कतमेत' इत्यस्याः पृच्छायां 'महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवाः' इति निर्ब्रुवन्ती श्रुतिरेकैकदेवताया अनेकरूपतायां प्रमाणत्वेनोपन्यस्ता। अत्र त्रयस्त्रिंशतां देवानां प्राधान्यमितरेषां तद्गुणभावश्च प्रतीयते। 'महिमान एवैषामेते' इतिहि श्रूयते। महिमशब्दस्य शरीरवाचित्वेन व्युत्पत्त्यभावात् एत इति च न शरीरमात्रनिर्देशः अपितु सशरीरचेतनव्यपदेशः 'कतिदेवा' इत्युपक्रमस्थदेवशब्दसामानाधिकरण्यादेत इति पदस्य, नहि देवशब्दो देहमात्रपरः। नच देवशब्दनिर्दिष्टादेवा जीवान्तराणां शरीरभूताः शरीरलक्षणस्य सर्वथाऽनुपपत्तेः, 'कतम एको देवः' इति पृष्ट्वा 'प्राणः' इति प्रतिवचनवाक्येऽपि प्राणशब्दो नप्रसिद्धप्राणपरः, अपितु परमात्मपरः। अतोऽस्याश्श्रुतेरेकैकदेवताया अनेकरूपताप्रतिपादकत्वानुपपत्तिमभिप्रेत्य अत्र सैषा श्रुतिरनुदाहृता। व्याख्यात्रन्तरैः 'अनेकप्रतिपत्तेः' इत्यस्य शब्दस्य युगपदनेककार्योपलम्भसामर्थ्यपरत्वेन व्याख्यातत्वेऽपि 'आगच्छन्ति' इति श्रुत्यक्षरस्वारस्यानुगुणं अनेकशरीरप्राप्तिपरतया व्याख्यातम्॥

## सू—२७ शब्द इति चेन्नातःप्रभवात् प्रत्यक्षानुमानाभ्याम् [१-३-२७]

## श्रीभाष्यम्

विरोध इति वर्तते। मा भूत्कर्मणि विरोधोऽनेकशरीरप्रतिपत्तेः। शब्दे तु वैदिके विरोधः प्रसज्यते, अनित्यार्थसंयोगात्। विग्रहवत्त्वे हि सावयवत्वेनेन्द्रादेरर्थस्यानित्यत्व मनिवार्यम्। ततो देवदत्तादिशब्दवदिन्द्राद्यर्थजन्मनः प्राग्विनाशादूर्ध्वंचेन्द्रादिशब्दानां वैदिकानामर्थशून्यत्वमनित्यत्वं वा वेदस्य स्यादितिचेत्—तन्न, अतःप्रभावात् असादिन्द्रादिशब्दादेव पुन पुनरिन्द्राद्यर्थस्य प्रभवात्। एतदुक्तंभवति नहि देवदत्तादिशब्दवदिन्द्रादिशब्दा वैदिका व्यक्तिविशेषमात्रे सङ्केतपूर्वकाः प्रवृत्ताः; अपि तु स्वभावत एव गवादिशब्दवदाकृतिविशेषवाचित्वेन। ततश्चैकस्यामिन्द्रव्यक्तौ विनष्टायामत एव वैदिकादिन्द्रशब्दान्मनसि विपरिवर्तमानादवगततद्वाच्यभूतेन्द्राद्यर्थाकारो धाता तदाकारमेवापरमिन्द्रं

## श्रुतप्रकाशिका

शब्दशब्दं विशिनष्टि वैदिकइति। अभिप्रेतं हेतुमाह—अनित्यार्थसंयोगादिति। हेत्वर्थं विवृणोति विग्रहवत्त्वेहीति। अर्थशून्यत्वमनित्यत्वयेति। देवदत्तादिविनाशे देवदत्तादिशब्दस्येवानर्थकत्वम्। अनित्यत्व अनुच्चार्यमाणत्वं नित्यत्वेऽर्थशून्यत्व विग्रहादिमदिन्द्राद्यर्थस्य यावच्छब्दभावित्वाभावात् अर्थवत्त्वे अनित्यत्वं वा शब्दस्य यावदर्थभावित्वादर्थाना चानित्यत्वादित्यर्थः॥

ननु कथमर्थशून्यत्वं शब्दानां अतीतानागतभूतभविष्यदादयश्शब्दा ह्यर्थसमकालत्वाभावेऽप्यर्थवन्त एव। नहि तेषां कदाचिदप्यर्थसमकालत्वसम्भवः नच तेषामर्थशून्यत्वम्। यथा विन्ध्यस्थेनोच्चारितो मेरुशब्दो देशविप्रकर्षेऽप्यर्थवान्भवति। एवमिन्द्रादिशब्दाश्चेन्द्रादिव्यक्तीनां कालविप्रकर्षेऽप्यर्थवन्तः कस्मान्नभवन्ति, कचित्कदाचिदर्थस्य प्रामाणिकत्वंहि शब्दस्यार्थवत्त्वनिबन्धनमिति। उच्यते अनभिज्ञा भवन्तो भाष्यहृदयस्य य एवं परिचोदयन्ति। एतदपाकरणाय हि शब्देतु वैदिक इति विशेषितम्, सौत्रं पदं इहापीन्द्रादिशब्दानां वैदिकानामित्युक्तम्। अयमभिप्रायः 'इन्द्र आगच्छ हरिव आगच्छ' इत्यादिकं मन्त्रजातं वैदिककर्मसु विनियुज्यते तत्र पूर्वमेवेन्द्रव्यक्तौ विनष्टायामिन्द्रशब्दवाच्यव्यक्तेः पाश्चात्ययज्ञकर्मण्यागमनाभावात्, 'इन्द्र आगच्छ' इत्यादिशब्दानामुच्चार्यमाणानामर्थशून्यत्वम् अनुच्चार्यमाणत्वं वा स्यादिति इन्द्रव्यक्त्यन्तरेणार्थवत्त्वमितिचेत्; तद्व्यक्त्यन्तरं पूर्वव्यक्तिसमानाकारायुधपराक्रमविभूतिकं वा नवा प्रथममनुपपन्नं स्रष्टृस्वातन्त्र्यस्यानिवार्यत्वात् सरूपसृष्टिनियमानुपपत्तेः वैरूप्यसम्भवात्। ततश्चान्याकारवाचिनामिन्द्रादिशब्दानां प्रवृत्तावाकारान्तरस्य निमित्तत्वायोगादर्थशून्यत्वमवर्जनीयम्। द्वितीयेतु या व्यक्तिरिन्द्रशब्दविषयत्वेनाभिमता स्यात् तस्यां व्यक्तौ तच्छब्दप्रवृत्तिनिमित्तस्य कस्यचिदभावादेव तदवाचकतयाऽर्थशून्यत्वम्। तथाऽपि स्रष्टृपुरुषबुद्ध्यधीनसङ्केतवशात् प्रयोगश्चेत् शब्दसङ्केतगोचरस्यार्थस्य सङ्केतयितृपुरुषबुद्ध्यगोचरत्वे सङ्केतानुपपत्ते, देवदत्तादिशब्दानामिवेन्द्रादिशब्दानां पुरुषान्तरबुद्धिसापेक्षप्रवृत्तित्वाद्वेदस्यानपेक्षत्वलक्षणं प्रामाण्यं न स्यात्। यदि प्रधानकालपरमात्मशब्दवदेकैकव्यक्तिवाचित्वमिन्द्रादिशब्दानां स्यात् तदा सङ्केतनैरपेक्ष्येण निरपेक्षत्वलक्षणं प्रामाण्यं स्यात्। अत इन्द्रादीनां प्रधानादीनामिव नित्यत्वाभावात्तन्नाशेऽर्थशून्यत्वानुच्चार्यमाणत्वयोरन्यतरप्रसङ्गो दुर्वारइति। 'नातःप्रभवात्' इत्येतद्व्याचष्टे तन्नेत्यादिना। शब्दादर्थस्योत्पत्तिः कथं ततश्चार्थशून्यत्वानित्यत्वपरिहारः कथमित्यत्राह—एतदुक्तमिति। धाता तदाकारमेवेति पदैः 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' इति श्रुतिः।

यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये। दृश्यन्ते तानितान्येव तथा भावायुगादिषु॥

## श्रीभाष्य

सृजति ; यथा कुलालो घटशब्दान्मनसि विपरिवर्तमानात्तदाकारमेव घटम्-इति। कथ मिदमवगम्यते ? प्रत्यक्षानुमानाभ्यां-श्रुतिस्मृतिभ्यामित्यर्थः । श्रुतिस्तावत् , 'वेदेन रूपे व्याकरोत्सतासती प्रजापतिः' (अष्ट २ प्र ६ अनु २ प ७) इति तथा 'स भूरिति व्याहरत् स भूमिमसृजत, स भुव इति व्याहरत् सोऽन्तरिक्षमसृजत' (२ - ४ २२) इत्यादिः। प्राच कशब्दपूर्वकं तत्तदर्थसंस्थानं स्मरन् तत्तत्संस्थानविशिष्टं तमर्थं सृष्टवानित्यर्थः । स्मृतिरपि 'अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा । आदौ वेदमयी दिव्या यतः सर्वाः प्रसूतयः' (मनु अ.१ श्लोक २८) इति ; 'सर्वेषां तु स नामानि कर्माणि च पृथक्पृथक् । वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ; ( ) इति । संस्था संस्थानानि रूपाणीति यावत् ; तथा 'नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम् । वेदशब्देभ्य एवादौ देवादीनां चकार सः' [वि पु अ १] इति । अतो देवादीनां विग्रहवत्त्वेऽपि वैदिकशब्दानामानर्थक्यं, वेदस्यादिमत्त्वं च न प्रसज्यते ॥

## श्रुतप्रकाशिका

इति स्मृतिश्च स्मर्यते । धीस्थस्य शब्दस्य तत्तदाकृतिस्मारकतया हेतुत्वम् । तदत्र दृष्टान्तेन विशदयति । यथेति । मनसि विपरिवर्तमानत्वं आलोच्यमानत्वम् । श्रुतिस्मृतिभ्यामिति । प्रत्यक्षग्राह्यो वेदः प्रत्यक्षशब्दवाच्यः स्वानुरूपवेदानुमापिका स्मृतिरनुमानशब्दवाच्येत्यर्थः । सतासती इत्यादावती रूपे व्याकरोत् विविधमकरोदित्यर्थः ॥

परैस्तु अनित्याच्छब्दाज्जगतः प्रभवानुपपत्तेरनित्यवर्णातिरिक्तो नित्यश्शब्दः स्फोट इत्येकदेशिमतेनोपन्यस्य तद्व्युदस्य वर्णानां नित्यत्वं प्रसाध्य वर्णानित्यत्वेऽपि तद्गतजात्या सम्बन्धग्रहणादिकं जगत्स्तत प्रभवादिकं चोपपद्यत इति युक्तम्। तदयुक्तं इहानुपयोगाद्विरोधाच्च, तथाहि न तावच्छब्दो जगदुपादानं ब्रह्मोपादानत्वाभ्युपगमात् । निमित्तत्वं च न दण्डचक्रादिवत् कारकतया किंतु बुद्धिस्थितार्थस्मारकतया तत्र च धर्माधर्मयोरनित्ययोरपि विषमजगदुत्पत्तौ निमित्तत्वमभ्युपगतं दण्डचक्रादीनां चानित्यानामपि निमित्तत्वं दृश्यते, किं कार्यमात्रस्य अनित्यादुत्पत्तिरनुपपन्ना, उत जगद्रूपकार्यविशेषस्य । न प्रथमः दण्डचक्रादीनां घटादिकारणत्वदर्शनात् । नाद्वितीयः धर्माधर्मयोर्जगन्निमित्तत्वाभ्युपगमात् । एवं सत्त्वदीपकारकाणामप्यनित्यानां कारणत्वं यदा संभवति तदा स्मर्यमाणतयोपकारकाणां शब्दानामनित्यत्वेऽपि कारणत्वसंभवे किंपुनर्वाच्यमिति । अतो नित्यत्वस्यानुपयोगात् स्फोटवादो न प्रस्तोतव्यः दूरं तस्य निरसनीयता । वर्णानां च नित्यत्वसमर्थनमत एव निष्फलम् । किंच नित्यानामपि वर्णानां न वर्णत्वाकारेणार्थवाचित्वं किं त्वानुपूर्वीविशेषविशिष्टपदवाक्यरूपेण विभुतया नित्यतया च देशतः कालतश्च क्रमरहितानामानुपूर्व्या उच्चारणनिबन्धनत्वात्, तस्य च क्षणभङ्गुरत्वादर्थावबोधप्रयोजनमपेक्ष्य वर्णनित्यत्वसाधनं तद्गतजात्यवस्थानवचनं च विफलम् अर्थावगाहकरूपस्यानित्यत्वात् । यथा उदकाहरणरूपप्रयोजनमपेक्ष्य पृथिवीस्थिरत्वसमर्थनं पृथिवीत्वजात्यवस्थानवचनं च नोपयुज्यते, पृथिव्या घटरूपेण उदकाहरणसाधनत्वात् पार्थिवावयवरचनाविशेषरूपस्य घटस्य चानित्यत्वात् । तद्वत् किंच वर्णानां नित्यत्वं नाम किं महाप्रळयावस्थायित्वं उताभयावधिराहित्यम् । प्रथमे पूर्वोक्तवैयर्थ्यं स्थितं पृथिव्या आप्रळयावस्थायित्वसमर्थनस्य घटेन उदकाहरणेऽनुपयोगात् । द्वितीये शब्दगुणकाकाशसृष्टिप्रळयविरोधः । वर्णानित्यत्वेऽभ्युपगम्यमानेऽपि इदं दूषणम् [illegible] विरुद्धं कृत्स्नव्यक्त्यनवस्थाने जात्यवस्थानानुपपत्तेः । महाप्रळये कतिपयव्यक्त्यवस्थानं तु कारणवाक्यविरुद्धम् । 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इति हि श्रुतिः । अवधारणाद्वितीयनिषेधौ कथं कतिपयव्यक्त्यवस्थाने जाघ०

### श्रीभाष्यम्

## सू—२८ अत एव च नित्यत्वम् (१.३.२८)

यत एवेन्द्रवसिष्ठादिशब्दानां देवर्षिवाचिनां तत्तदाकारवाचित्वं तत्तच्छब्देन तत्तदर्थ-स्मृतिपूर्विका च तत्तदर्थसृष्टिः तत एव 'मन्त्रकृतो वृणीते' (          ) 'नम ऋषिभ्यो मन्त्रकृद्भ्यः' (आरण.प्र ७.अनु १.प.१) 'अयगूँसो अग्निरिति विश्वामित्रस्य सूक्तं भवति' (यजु का.५.प्र.२.अनु ३ पं.३) इत्यादिभिर्वसिष्ठादीनां मन्त्रकृत्त्वकाण्डकृत्त्वाद्यर्षित्वादौ प्रतीयमानेऽपि वेदस्य नित्यत्वमुपपद्यते। एभिरेव 'मन्त्रकृतो वृणीते'

### श्रुतप्रकाशिका

स्यानन्न सहते, किञ्च वर्णनित्यत्वादिकं किं बोधकत्वोपयोगितया समर्थ्यते किं वा जगत्प्रभवोपयोगितया ? प्रथमे वर्णनित्यत्वादिकं सर्वमपि 'अथातो ब्रह्मजिज्ञासा' इत्यत्रैव वक्तव्यम् अनवबोधकत्वस्य शास्त्रानारम्भहेतुत्वात्। द्वितीये न जन्मादिसूत्रे तत्सर्वं समर्थनीयम् लक्षणसिद्ध्युपयोगित्वात्। किञ्च वर्णनित्यत्वादिकं सर्वाधिकरणेषु यथाकथञ्चिद्घटयितुं शक्यते। अतएवैतदधिकरणासाधारणार्थानुपयोगाद्विरोधाभावाच्च वर्णनित्यत्वादिप्रपञ्चनमयुक्तम्। 'प्रत्यक्षानुमानाभ्याम्' इति सौत्रपदमन्यथा व्याख्यातम् घटादिनिर्माणस्य शब्दपूर्वकत्वस्य प्रत्यक्षसिद्धत्वात् जगत्सृष्टावप्येतदनुमानादिति तथा सति नतयोस्समुच्चित्य हेतुत्वमेकसाध्यं सिध्यति, जगत्सृष्टेश्शब्दपूर्वकत्वे अनुमानस्यैवाव्यवधानेन प्रवृत्ते प्रत्यक्षस्य व्याप्तिग्रहणोपायिकत्वेन तच्छेषभूतत्वात् ततश्च 'प्रत्यक्षानुमानाभ्याम्' इति द्विवचनं क्लिष्टं स्यात्, नहि दण्डपरशुभ्यां वृक्षश्छिद्यत इति व्यपदिश्यते दण्डस्य परशूपकरणत्वात्। अतः प्रत्यक्षमूलानुमानादिति निर्देष्टव्यं तथा च न निर्दिष्टम्। यदि क्वचिदेवमपि दृष्टं तद्गत्यभावात् स्यात् इह च गत्यन्तरसम्भवादयुक्तम्। कल्पादिकालीनसृष्टेः शब्दपूर्वकत्वं सृष्टित्वादनुमातुं च नशक्यं मूककर्तृकघटादिसृष्टौ व्यभिचारिता स्यात्, अतः यथोक्त एवार्थः ॥

एवमर्थद्वारकमनित्यत्वमाशङ्क्य परिहृतम् अथ शब्दद्वारकमनित्यत्वं परिह्रियते।

## सू–२८ अत एव च नित्यत्वम् (१.३.२८)

उक्तशङ्काविर्मन्त्रकृतो वृणीत इत्यादिना अभिप्रेता यतएवेति। अर्थवादानां प्रतीयमानार्थे तात्पर्यमस्ति चेत् 'मन्त्रकृत' इत्यादिवाक्येष्वपि मन्त्रकृत्त्वे तात्पर्यसम्भवात् अनित्यत्वमिति शङ्का। इयमपीन्द्रादिशब्दानामाकृतिवाचित्वात्तत्तच्छब्देन तत्तदर्थस्मृतिपूर्वकतत्तदर्थसृष्ट्या परिहृतेत्यर्थः। उक्तशङ्कापरिहारपरं सूत्रं ये न व्याचक्षते तेषामते सूत्रवैयर्थ्यं स्फुटम्। शङ्कांशः परिहृतत्वं स्पष्टयति एभिरेवेति। मन्त्रकृत्त्वं नामानधीत्यैव मन्त्राणामस्खलितक्रमस्वरवर्णतया दर्शनं तच्च तत्तन्मन्त्रस्मृतिपूर्वकं प्रजापतिना यथापूर्वं सृष्टैस्तत्तन्नामरूपभाग्भिः प्रवाहपरम्परया आगतैर्वसिष्ठादिभिः क्रियत इति वेदनित्यत्वमन्त्रकृत्त्वाविरोध इत्यर्थः। नियुक्ते मन्त्रदर्शनानुगुणं तपश्चरेति नियुक्त इत्यर्थः, अस्खलितान्पश्यन्ति पूर्वकल्पाधीतवेदमन्त्रप्रत्यभिज्ञापूर्वकं पश्यन्ति न विद प्रथमतयेत्यर्थः। श्रुतिरपि ऋषिज्ञानपूर्वकमेव मन्त्राणामनुष्ठानं दर्शयति 'योह वा अविदितार्षेयच्छन्दो दैवतेन मन्त्रेण यजति याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पद्यते प्रवा मीयेत पापीयान्भवति यातयामान्यच्छन्दाग्ँसि भवन्ति अथयो मन्त्रेमन्त्रे वेद ससर्वमायुरेति श्रेयाश्च भवति

## श्रीभाष्यम्

इत्यादिभिर्वेदशब्दैस्तत्तत्काण्डकमन्त्रकृतामृषीणामाकृतिशक्त्यादिकं परामृश्य तत्तदाकारान् तत्तच्छक्तियुक्तांश्च सृष्ट्वा प्रजापतिस्तानेव तत्तन्मन्त्रादिकरणे नियुङ्क्ते। तेऽपि प्रजापतिना आहितशक्तयस्तत्तदनुगुणं तपस्तप्त्वा नित्यसिद्धान्पूर्वपूर्ववसिष्ठादिदृष्टान् तानेव मन्त्रादीननधीत्यैव स्वरतो वर्णतश्चास्खलितान्पश्यन्ति। अतश्च वेदानां नित्यत्वमेषां च मन्त्रकृत्त्वमुपपद्यते ॥

अथ स्यात् नैमित्तिकप्रळयादिष्विन्द्राद्युत्पत्तौ वेदशब्देभ्यः पूर्वपूर्वेन्द्रादिस्मरणेन प्रजापतिना देवादिसृष्टिरुपपद्यतां नाम, प्राकृतप्रळये तु स्रष्टुः प्रजापतेर्भूताद्यहङ्कारपरिणामश-

## श्रुतप्रकाशिका

अयातयामान्यस्यच्छन्दांसि भवन्ति तस्मादेतानि मन्त्रेमन्त्रे विद्यात्' इति। शौनकादिभिश्च स्मर्यते 'दाशग्र्यो मधुच्छन्दःप्रभृतिभिर्दृष्टाः' इति। उक्तं च भगवता व्यासेनैव—

युगान्तेऽन्तर्हितान् वेदान् सेतिहासान्महर्षयः। लेभिरे तपसा पूर्वमनुज्ञातास्स्वयम्भुवा ॥

इति। एवमादिचात्र प्रमाणं द्रष्टव्यम् ॥

नन्वितिहासानामप्यपौरुषेयत्वं वेदस्य वा पौरुषेयत्वं प्रसज्येत् अस्मिन्वचने वेदानामितिहाससहपाठेन तुल्ययोगक्षेमत्वादिति चेन्न इतिहासशब्देन वेदशब्दान्तर्गतानां पुरावृत्तानां विवक्षितत्वात्। यथा 'वातरशनाह्वा ऋषयश्श्रमणा ऊर्ध्वमन्थिनो बभूवुः' 'पृथुं वैन्योऽभिषिच्यते' 'उशन् ह वै वाजश्रवसस्सर्ववेदसं ददौ' इत्यादीनि पुरावृत्तानि हि दृश्यन्ते, ततश्च सेतिहासान् इत्यनेन वेदानामर्थज्ञानेन सह लब्धत्वमुक्तं भवति, अतो न प्रबन्धविशेषवाचकोऽयमितिहासशब्दः, अङ्गेषु धर्मशास्त्रादिषु च सत्स्वपीतिहासमात्रोपादानस्य प्रयोजनाभावात् तथाऽन्यत्र

ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः। शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः ॥

इति वेददर्शनप्रदानं च स्मर्यते, काठकादिशब्दश्च कन्यादाद्युपाधिभिस्तपसा लब्धवेदभागानां प्रवर्तितत्वमुक्तं भाति। नतावत् कठेनादौ प्रोक्तं काठकमिति वेदपौरुषेयत्ववादिनोऽप्यभीष्टं, ईश्वरप्रणीतत्वविरोधात्। अथ काठकादिसमाख्याः प्रवचननिमित्ताः। न इदानींतनप्रवक्तृसंज्ञाभिश्च व्यपदेशप्रसङ्गात् कठादिभ्यः पूर्वपुरुषसंज्ञाभिश्च समाख्यानप्रसङ्गात्, पूर्वेत्वनेकशाखाध्यायिनः कठादयस्त्वेकैकशाखाध्यायिन इति तथात्वा समाख्यानमिति न वाच्यम्; सर्वेषां तत्पूर्वपुरुषाणां बहुशाखाध्यायित्वानियमस्याप्रामाणिकत्वात्, दृष्टविपर्ययेण कल्पनाऽनुपपत्तेश्च। अथ कल्पादिषु प्रथमप्रवचननिबन्धना कठादिसमाख्याः। तन्निबन्धनत्वं च जगन्नित्यत्ववादेऽनुपपन्नम् प्रथमप्रवचनासम्भवात्। अतः काठकादिसमाख्यान्यथाऽनुपपत्तिश्च महर्षीणां तपसा दृष्टवेदभागत्वे प्रमाणम्। एवं 'यो वै वेदांश्च प्रहिणोति' 'ब्रह्म स्वयम्भ्वभ्यानर्षत्' इत्यारभ्य 'त एतं ब्रह्मयज्ञमपश्यन्' 'वाचा विरूपनित्यया' 'वेदेन रूपे व्याकरोत्' 'अनादिनिधना ह्येषा' 'याश्च वेदेषु दृष्टयः' 'वेदशब्देभ्य एवादौ' 'युगान्तेऽन्तर्हितान्वेदान्' इत्यादिवचनैः आद्ये कल्पे प्रथमवेदोच्चारणं यथा पूर्वक्रमविशेषविशिष्टवेदोच्चारणत्वात्' इदानींतनवदित्यादिभिरनुमानैश्च वेदनित्यत्वस्य प्रतिपादनात्तदनुरोधेन मन्त्रकृदादिपदान्यस्वारस्येन व्याख्यातानि ॥

उत्तरसूत्रं शङ्कापूर्वकमवतारयति अथ स्यादिति। महाप्रळये तत्पूर्वपूर्वसमुच्चारणप्रवाहविच्छेदस्य प्रमाणसिद्धत्वेन शब्दस्वभावस्य शब्दनित्यत्वमिति [illegible] नित्यत्वं प्रमाणमिति पौरुषेयत्वाग्रहमिदं सूत्रमिति पूर्वपक्षः—

श्रीभाष्यम्

प्दस्य च विनष्टत्वात्कथं प्रजापतेश्शब्दपूर्विका सृष्टिरुपपद्यते । कथन्तरां विनष्टस्य वेदस्य नित्यत्वम् । अतो वेदनित्यत्ववादिना देवादीनां विग्रहवत्त्वाभ्युपगमेऽपि लोकव्यवहारस्य प्रवाहानादिताश्रयणीयेति । अत्रोत्तरं पठति—

## सू—२९ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च (१.३.२९

कृत्स्नोपसंहारे जगदुत्पत्त्या वृत्तावपि पूर्वोक्तात्समाननामरूपत्वादेव न कश्चिद्विरोधः । तथाहि स भगवान्पुरुषोत्तमः प्रळयावसानसमये पूर्वसंस्थानं जगत्स्मरन् 'बहुस्याम्' (छां.६.२.३) इति सङ्कल्प्य भोग्यभोक्तृजातं स्वस्मिन् शक्तिमात्रावशेषं प्रलीनं विभज्य महदादिब्रह्माण्डं हिरण्यगर्भपर्यन्तं सृष्ट्वा वेदांश्च पूर्वानुपूर्वीविशेषसंस्कृतानाविष्कृत्य हिरण्यगर्भायोपदिश्य पूर्ववदेव देवाद्याकारजगत्सर्गे तं नियुज्य स्वयमपि तदन्तरात्मतयाऽवतस्थे अतो यथोक्तं सर्वमुपपन्नम् । एतदेव च वेदस्यापौरुषेयत्वं नित्यत्वं च.

श्रुतप्रकाशिका

## सू–२९ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च [१.३.२९]

पूर्वोक्तात्समाननामरूपत्वादेवेति । पूर्वसूत्रोक्तया तत्तच्छब्देन तत्तदर्थस्मृतिपूर्विकया तत्तदाकृतिविशिष्टवस्तुसृष्ट्या समाननामरूपत्वमुक्तमिति फलितम्, अतः पूर्वोक्तादित्युक्तम् । एवकारेण सूत्रस्थश्शब्दोऽवधारणार्थ इति गम्यते । समाननामरूपत्वमनुपपन्नं तत्तच्छब्दस्मृतिपूर्वकतत्तदर्थस्रष्टुरभावादित्यत्राह— तथाहीति । स इति श्रुतिप्रसिद्धिं द्योतयति भगवानिति ज्ञानशक्त्यादिवैचित्र्यं भगवत्पुरुषोत्तमशब्दाभ्याम् 'सर्वव्यापी च भगवान्' 'महान्प्रभुर्वै पुरुषः' इत्यादिश्वेताश्वतरवाक्यं स्मारितम् । शक्तिमात्रावशेषमिति । विद्यमानस्यैव भोग्यभोक्तृवर्गस्य भोग्यत्वाद्यनुगुणशक्तिरस्ति, नतु तत्कार्यं भोक्तृत्वादिकमिति भावः । चतुर्मुखादेरेव स्वतन्त्रस्रष्टृत्वभ्रमनिरासाय ह— स्वयमपीति ।

तवान्तरात्मा मम च येचान्ये देहिसंज्ञिताः । सर्वेषां साक्षिभूतोऽसौ नग्राह्यः केनचित्क्वचित् ॥

इति चतुर्मुखवचनं 'सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते' इति भगवद्वचनं 'तदनुप्रविश्य' इति सामान्यविषयां श्रुतिं च प्रमाणमभिप्रेत्याह—तदन्तरात्मतयेति । अनेन चतुर्मुखपरमात्मनोः कर्तृत्वव्यवस्थैककार्यत्वसिद्धिः । सर्वमुपपन्नमिति । समाननामरूपत्वतत्कृतवेदनित्यत्वतत्सार्थकत्वान्युपपन्नानीत्यर्थः । शब्दस्योत्पत्तिविनाशाभ्युपगमेऽपि कथं वेदनित्यत्वसिद्धिरित्यत्राह——एतदेवचेति । अक्षराणां पदानां वा नित्यत्वं वेदनित्यत्वं चेत्,—कालिदासादिवाक्यानामपि नित्यत्वप्रसङ्गः । वर्णानुपूर्वीनित्यत्वं चेत्तदप्यनुपपन्नम्, युगपत्सर्गप्रळयमनभ्युपगच्छद्भिः वर्णानां विभुत्वाभ्युपगमात् न देशतः आनुपूर्वी सम्भवति नित्यत्वाभ्युपगमाच्च न कालतः । तस्मादुच्चारणगतः क्रम इति तैरभ्युपेत्यं उच्चारणस्योत्पत्तिविनाशवदेवेति क्रमनित्यत्वमप्यनुपपन्नं तस्मात्पूर्वपूर्वोच्चारणक्रमविशेषो यादृशः तादृशेनैव क्रमेणोत्तरोत्तरमुच्चार्यत्वं नित्यत्वमित्यस्मदभिमतमेव तैरपि स्वीकर्तव्यमित्यभिप्रायेणैतदेवेत्युक्तम् ॥

ननु पूर्वान्ताभावः पुरुषकृतत्वाभावो वा स्यादपौरुषेयता उत्तरान्ताभावः उभयान्तविरहो वा नित्यता क्रमविशेषेणोच्चार्यत्वं तु वेदस्य स्वरूपं कथमेषामेकत्वं स्यात् द्विविधावधिवैधुर्यरूपनित्यत्वमेव वेदे विवक्षितम् तस्मात् पूर्वव-

## श्रीभाष्यम्

यत्पूर्वपूर्वोच्चारणक्रमजनितसंस्कारेण तमेव क्रमविशेषं स्मृत्वा तेनैव क्रमेणोच्चार्यत्वम्, तद् स्मासु सर्वेश्वरेऽपि समानम्। इयांस्तु विशेषः-संस्कारानपेक्षमेव स्वयमेवानुसन्धत्ते पुरुषोत्तमः। कुत इदं यथोक्तमत्र गम्यत इतिचेत्-तत्राह-दर्शनात्-स्मृतेश्च। दर्शनं तावत्

## श्रुतप्रकाशिका

धिविधूनन प्राधान्येन सिषाधयिषित स्वतन्त्रपुरुषविश्रान्तेर्निरसनीयत्वात्, तन्निरसने च प्रतिकल्प तथाभावेनोत्तरावधि वैधुर्यसिद्धेश्च; अतो वेदस्य नित्यत्वमपौरुषेयत्वचैकमिति फलितम्। तथापौरुषेयत्व नित्यत्व वा वेदक्रमविशेषविशिष्टोच्चारणमात्रत्वे पर्यवसित अपूर्वक्रमविशिष्टोच्चारयितृपुरुषसद्भावातिरेकेणानित्यत्वपौरुषेयत्वयोरभावात् नित्यत्वापौरुषेयत्वयोस्त द्विपरीतरूपत्वाच्च, यद्वा तेनैव क्रमेण सर्वदोच्चार्यमाणत्वमपौरुषेयत्वानित्यत्वयोस्साधकमिति हेतुहेतुमद्भावाद्भेदव्यपदेश। एवमेव भगवताऽप्युच्चार्यमाणत्वाद्युगपत् सर्वोत्पत्तिसंहारेऽपि नित्यत्वमुपपन्नमित्यभिप्रायेणाह—तदस्मास्विति। सर्वेश्वरोऽपि पूर्वक्रमविशेष स्मृत्वोच्चारयतिचेत् तत्संस्कारोद्बोधात् पूर्वमज्ञत्वमन्याधीनज्ञानत्व च स्यादित्यत्राह-इयांस्त्विति। अस्माक स्वोच्चारणजनितसंस्कारानपेक्षोच्चारणमध्यापयितृसापेक्ष अध्यापयितृनिरपेक्षोच्चारण स्वोच्चारणजनितसंस्कारसापेक्ष एतदुभय व्यावर्तयति संस्कारानपेक्ष स्वयमेवेति। स्वयमेवेत्यध्यापकोच्चारणजनितसंस्कारापेक्षा व्यावृत्ति। यद्वा संस्कारानपेक्ष अध्यापकोच्चारणस्वोच्चारणजनितसंस्कारानपेक्षमित्यर्थ। स्वतन्त्रस्येश्वरस्य क्रमान्तरापरिकल्पनेन पूर्वक्रमेणैवोच्चारणे को नियामक इत्यत्राह–स्वयमेवेति। वेदाख्य शब्दराशिं पूर्वपूर्वक्रमविशिष्टमेवोच्चारयय, नतु क्रमान्तर कल्पयेयमिति। 'बहु स्याम्' इतिवत् स्वसङ्कल्पादेव क्रमान्तरमपरिकल्पयन्यथापूर्वमनुसन्धत्ते, नत्वस्य परतन्त्रतयेत्यर्थ. अनुसन्धत्ते जानातीत्यर्थ. स्मरणार्थत्वे संस्कारानपेक्षत्वव्याघातात्,

ननु 'संस्कारास्तेभवन्वेदा.' इति स्मृत्या वेदानामीश्वरस्मृतिविषयत्वमवगम्यते। नैव, संस्कारशब्दस्य स्मृतिविषयवाचित्वाभावात् स्मृतेस्संस्कारकार्यतया तद्विषयो लक्षितलक्षणया प्रतिपाद्यत इतिचेत्, तर्हि प्रमाणविरुद्धलक्षणाया, प्रमाणानुसारिणी लक्षणा बलीयसी, ईश्वरस्य च स्वत.सर्वदा सम्यक्सर्वार्थसाक्षात्कारित्व 'यस्सर्वज्ञस्सर्ववित्', 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाच' इति श्रुतिसिद्धम्। ज्ञानस्य स्वाभाविकत्व इन्द्रियादिनैरपेक्ष्यम् विविधत्व विषयवैविध्यात्। परत्व याथार्थ्यापरोक्ष्यरूपप्रकर्ष, अतस्तदनुगुणया लक्षणया भवितव्यम्। ततश्च संस्कार इति संस्कारबोध्या: यथापूर्वं बुद्धिस्था इत्यर्थः यद्वा संस्कारवत् स्वस्मिन्नवस्थिता इत्यर्थ. ॥

नन्वीश्वरस्य सर्वज्ञतया शब्दानां सर्वा अप्यानुपूर्व्यः सदा बुद्धिस्था इति सर्ववाक्यानामानुपूर्वीविशिष्टत्या वेदत्व स्यात् पौरुषेयापौरुषेयविभागश्च न स्यात् नैवम् ईश्वरस्य सार्वज्ञ्यादेव सर्वविभागसिद्धे, सर्वासामानुपूर्वीणां तद्बुद्धिस्थत्वेऽपि यादृशक्रमविशिष्टशब्दराशेर्याथार्थ्य स्वरादिनियमवत्त्व देशकालादिनियमवत्तयैवोच्चार्यत्वच तमेव शब्दराशिं वेदाख्य मन्वानस्तादृशक्रमविशिष्ट तमेवप्रतिब्रह्माण्डसर्ग प्रमाणतया प्रवर्तयति नत्वन्यच्छन्दजात अतो याथार्थ्यसनियमोच्चार्यत्वाभ्यां वेदावेदविभागसिद्धिः। सर्वदा पूर्वपूर्वक्रमपरामर्शसापेक्षोच्चारयितृक त्व तन्निरपेक्षवक्तृकत्वेति पौरुषेयापौरुषेयत्वमिति नकाचिदनुपपत्तिरिति। 'दर्शनात् स्मृतेश्च' इति सौत्रपदद्वयस्य शङ्कामाह–कुतइति। युगपत्सर्वसृष्टौ भगवतो यथापूर्ववेदसम्प्रदायप्रवर्तकत्वे च श्रुतिस्मृती दर्शयति दर्शनं तावदित्यादिना। उदाहृतश्रुतिस्मृतिवाक्येषु सर्वेषु चतुर्मुखस्य भगवता सृष्टत्व दृश्यते वेदोपदेशस्तु केषुचिद्दृश्यते, तत्र 'अनुक्तमन्यतो ग्राह्यम्' इति न्यायात् वेदोप

श्रीभाष्यम्

' यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ' (श्वे.६.१८) इति । स्मृतिरपि मानवी ' आसीदिदं तमो भूतम् ' इत्यारभ्य ' सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु वीर्यमपासृजत् ॥ तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् तस्मिन्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥ (मनु.१.५ ८,९) इति । तथा पौराणिकी ' तत्र सुतस्य देवस्य नाभौ पद्ममजायत । तस्मिन्पद्मे महाभाग वेदवेदाङ्गपारगः ॥ ब्रह्मोत्पन्नस्स तेनोक्तः प्रजास्सृज महामते ' ( ) तथा ' परो नरायणो देवस्तस्माज्जातश्चतुर्मुखः

श्रुतप्रकाशिका

देशोऽपि सृष्ट्युपयोगित्वात् सिद्ध्यतीतिभावः । सम्प्रदायप्रवर्तकसद्भावमात्रे प्रमाणं वा स्यात्तद्वचनजातम् । उदाहृतवचनजातप्रदर्शनार्थं ईदृशानि वचनान्तराण्यपि अस्मिन्नर्थे द्रष्टव्यानि यथा—' सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् दिवं पृथिवींचान्तरिक्षमथो सुवः '

यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानितान्येव तथाभावायुगादिषु ॥

इति श्रुति स्मृत्योर्वेदान्तसारे दर्शितत्वात्—

हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते । तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते ॥

इत्यनेन पूर्वसृष्टिसारूप्यं प्रतीयते ॥

किंच तथाऽभिमानिनो नीतास्तुल्यास्ते सांप्रतैरिह । देवादेवैरतीतैर्हि रूपैर्नामभिरेव च ॥

यस्मिन्यो यः पुराकल्पो यस्मिन्देशे यथास्थितिः । तस्य तस्यानुरूप्येण प्रजासर्गः प्रवर्तते ॥

ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः । शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः ॥ इत्यादि ॥

किंच ' अग्निर्वा अकामयत । अन्नादो देवानाग्ंस्यामिति । स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरवपत् । ततो वै सोऽन्नादो देवानामभवत् । अग्निर्वै देवानामन्नादः ' तथा ' इन्द्रोवा अकामयत, ज्यैष्ठ्यं देवानामभिजयेयमिति, स एतमिन्द्राय ज्येष्ठाय पुरोडाशमेकादशकपालं निरवपन्महाव्रीहीणाम् । ततो वै स ज्यैष्ठ्यं देवानामभ्यजयत् ' इत्यादिना पूर्वपूर्वाग्नीन्द्रादियजनेन पाश्चात्याग्नीन्द्रादीनामैश्वर्यप्राप्तिरित्यवगम्यते, प्रथमान्ताग्न्यादिशब्दा यजमानं चेतनं विधायिषितरूपेण निर्दिशन्ति इदानीमिन्द्रः पूर्वस्मा इन्द्राय निरवपदित्यर्थः । अतः पूर्वपूर्वाग्नीन्द्रादिसरूपतया उत्तरोत्तराग्नीन्द्रादिसृष्टिरिति निश्चीयते ॥

किंच कर्मविधानमिष्टप्राप्त्यनिष्टनिवृत्तिफलं पुरुषप्रवृत्तिश्च सुखलिप्सा दुःखजिहासामूला, रागद्वेषौ च दृष्टानुमितिश्रुतसुखदुःखतत्साधनभूतभोग्यतदुपकरणतत्स्थानविषयौ, नत्वप्रतिपन्नविषयौ अतः पूर्वकल्पादिगतेन्द्रादिपदकामनासञ्चितधर्मफलभोगानुगुणोत्तरोत्तरसृष्टिश्च पूर्वसृष्टिसजातीया भवितुमर्हति, अतो वेदनित्यत्वनाम प्रत्युच्चारणं पूर्वपूर्वक्रमसुसदृशानुपूर्वीविशिष्टतयोच्चार्यमाणत्वम् । अर्थनित्यत्वनाम प्रतिसर्गमिन्द्राद्यर्थानां पूर्वपूर्वाकारसुसदृशसंस्थानविशिष्टत्वम्, तथाविधार्थप्रतिपादकत्वमेव वेदस्य नित्यार्थसंयोगः ॥

ननु प्रलयदशायामेकस्यप्रतिभातो वेदः कृतकादविशिष्टस्स्यात् एकस्य प्रतिभातः कुमारसम्भवादिः कृतकइतिचेत् उच्यते कृतकादविशिष्टत्वं वदतः कोऽभिप्रायः ? एकस्य प्रतिभातत्वं कृतकवत्त्वात्सामिति वा कृतकत्वशङ्काजनकमिति वा? न प्रथमः बहुषु सुप्तेषु जाग्रत एकस्य प्रतिपन्ने स्वात्मनि व्यभिचारात् । नह्यात्मा कृतकः एकस्य प्रतिभातत्वादयत्वं विष-

## श्रीभाष्यम्

इति । तथा 'आदिसर्गमहं वक्ष्ये' इत्यारभ्योच्यते—'अद्या नारं तोयमन्तस्स्थितोऽहं येन स्यान्मे नाम नारायणेति । कल्पेकल्पे तत्र शयामिभूयस्सुप्तस्य मे नाभिज स्याद्यथाऽब्जम् । एवंभूतस्य मे देवि नाभिपद्मे चतुर्मुखः । उत्पन्नस्स्य मया चोक्तः प्रजाःसृज महामते' इति ॥

अतो देवादीनामप्यर्थित्वसामर्थ्ययोगाद्ब्रह्मविद्यायामधिकारोऽस्तीति सिद्धम् ॥

## इति देवताधिकरणम्

## श्रुतप्रकाशिका

क्षितमितिचेत् । किमेकस्य प्रतिभातत्वं नाम एकस्य प्रतिपन्नत्वं उतैकस्य प्रथमप्रतिपन्नत्वम् न प्रथमः दृष्टान्तस्य साधनविकलत्वात्; नहि कुमारसम्भवोऽस्माकमन्येषां च कदाचिदप्रतिपन्नः । द्वितीये हेत्वसिद्धिः, पक्षीकृतेषु वेदेषु ह्येकस्य प्रथमप्रतिपन्नत्वं नास्ति, सर्गप्रवाहस्यानादित्वात् यस्य कल्पस्यादौ प्रतिभासः प्रथममिति विवक्षितं तत्पूर्वकल्पेऽपि तेषामेव वेदानां प्रतिभातत्वात् प्राथम्यासिद्धिः, तेषामेव वेदानां तत्तत्पूर्वकल्पेऽपि प्रतिभातत्वं वेदोच्चारणत्वेन लिङ्गेन सिद्धम्, विगीतं वेदोच्चारणं, पूर्वाध्ययनसिद्धक्रमविशिष्टविषयं वेदोच्चारणत्वात्, सम्प्रतिपन्नवदिति । नच वाच्यं वेदाः कृतकाः कल्पादावेकस्य प्रतिभातत्वात्, चतुर्मुखवक्तृकप्रथमवाक्यवदिति । दृष्टान्तस्य साधनविकलत्वात्, चतुर्मुखस्य प्रथमवाक्यं हि स्वतस्सर्वज्ञेन तदन्तरात्मना ज्ञायते । कल्पादौ एकक्षेत्रज्ञस्य प्रतिपन्नत्वं हेतुरितिचेन्न, असिद्धेः असिद्धिश्च यौगपद्येन प्रवाहतश्चाण्डबाहुल्येन चतुर्मुखतत्सृष्टमहर्षिबाहुल्यात् । एतस्मिन्ब्रह्माण्ड इति हेतुर्विशेष्यत इतिचेत् तर्ह्येकस्मिन्गृहे दिवसादावेकस्य प्रतिपन्नत्वादुपाध्यायवक्तृकप्रथमवाक्यवद्वेदस्य तदुक्तत्वं किं न स्यात्, देशकालान्तरवर्तिपुरुषप्रतिपन्नत्वात्, तेनाप्युपाध्यायेन पूर्वसिद्धत्वेन प्रतिपन्नत्वाच्च तद्वक्तृकत्वस्य बाधितत्वादितिचेत् तुल्यं तथाहि, एकस्मिन्नण्डे कल्पादावेकक्षेत्रज्ञप्रतिपन्नत्वरूपहेत्वसिद्धिः कुतः ? 'यो वै वेदांश्च प्रहिणोति तस्मै' इत्यादिश्रुतेरितिचेत्, तर्हि सैव श्रुतिर्वेदानां पूर्वसिद्धत्वमवगमयतीति हेतुग्राहकप्रमाणेन बाधितविषयता स्यात् । एकस्य प्रतिभातवाक्यत्वं कृतकत्वशङ्कावहमितिचेत्—न आप्ततया परिज्ञातेन तेनैव पुरुषेणानादिसिद्धतयोपदिष्टवाक्ये कृतकत्वशङ्काऽनुदयात् । ईश्वरेण प्रथमसृष्टाश्चतुर्मुखादयः प्राचीनसुकृतातिशयादीश्वरावगमानुगुणज्ञानान्विता एव जायन्त इति न शङ्कोदयः । नन्वीश्वरसिद्धौ वेदसंप्रदायाविच्छेदसिद्धिः तत्सिद्धौ वेदसत्यत्वसिद्धिः, तत्सिद्धौ वेदप्रामाण्यसिद्धिः तत्सिद्धावीश्वरसिद्धिरिति च चक्रकमिति ॥

एवं तर्हि पूर्वमीमांसायामपि वेदप्रामाण्यसमर्थनपरे प्रथमेऽध्याये प्रथमे पादे बाह्यहेतूत्थाप्रामाण्यं निराकृत्य त्रिपाद्या अवान्तरहेतूत्थाप्रामाण्यनिरासे क्रियमाणे त्वदुक्तं चक्रकं प्रसजेत्, तथाहि 'सन्दिग्धेषु वाक्यशेषात्' इत्यादिषु 'अक्ताश्शर्करा उपदधाति' इत्यादिवेदवाक्यानामञ्जनसाधनद्रवद्रव्यविशेषानुपस्थापनेन सन्देहलक्षणाप्रामाण्ये पूर्वपक्षिणोक्ते 'तेजो वै घृतम्' इत्यादिवाक्यशेषावगतद्रव्यविशेषसिद्ध्या तन्निरासस्सिद्धान्तिना क्रियते, तत्र 'तेजो वै घृतम्' इत्यादिवाक्यशेषप्रामाण्यसिद्धौ अक्ताश्शर्करा इत्यादिवाक्यशेषस्य सन्देहलक्षणाप्रामाण्यनिराससिद्धिः, तत्सिद्धौ कृत्स्नवेदप्रामाण्यसिद्धिः, तत्सिद्धौ कृत्स्नवेदान्तर्गतवाक्यशेषप्रामाण्यसिद्धिरिति चक्रकं प्रसज्यत एवेति, न प्रसज्यते, प्रथमे पादे शब्दस्य स्वतः प्रामाण्यसमर्थनादपवादहेतोश्चापूर्वक्रमविशेषविशिष्टोच्चारयितृविशेषरूपकर्तुः स्मर्तव्यत्वेऽप्यस्मर्यमाणत्वलक्षणयोग्यानुपलब्धिनिरस्तत्वाद्वेदप्रामाण्यसिद्धौ तदन्तर्गतवाक्यविशेषस्याभिधानदृष्टिः प्राबल्यप्रामाण्यविरोधिनीव

श्रुतप्रकाशिका

प्रतिभातीति शङ्कामात्रस्य वाक्यशेषादिकृत्स्नपदान्वितवाक्यपर्यालोचनाभिधानवृत्तिस्तया प्रतिभातीति परिहारमात्रस्य क्रियमाणत्वादितिचेत्, तदसत्पक्षेऽपि समानमिति परितुष्यतामायुष्मता। येतु 'अक्तादशर्करा' इत्यादिवाक्यस्याप्रामाण्यशङ्का, ननु कृत्स्नवेदस्य तावन्मात्रस्य परिहारश्चेति वदन्ति, तन्मतेऽपि इयमेव प्रतिबन्दी 'अक्तादशर्करा' इत्यादिकतिपयवाक्याप्रामाण्येन कृत्स्नाप्रामाण्यशङ्काहि दुर्निवारा वेदत्वाविशेषात् 'अक्तादशर्करा' इति वाक्यप्रामाण्यनिरासे कृत्स्नवेदाप्रामाण्यशङ्कानिवृत्तिः तन्निवृत्तौ 'तेजोवै घृतम्' इत्यादिवाक्यशेषाप्रामाण्यशङ्कानिवृत्तिः तन्निवृत्तौ 'अक्तादशर्करा' इत्यादिवाक्यस्य संदेहलक्षणाप्रामाण्यनिवृत्तिरिति परिहारस्तुल्यः। अधिकरणार्थमुपसंहरति—अतइति ॥

इति देवताधिकरणम्

अथ यतद्गर्भे देवताधिकरणम्

गूढार्थसङ्ग्रहः

'हृद्यपेक्षयातु मनुष्याधिकारत्वात्' इति पूर्वसूत्रे परमात्मनः अङ्गुष्ठप्रमितत्वं अङ्गुष्ठपरिमितहृदयदेशवृत्तित्वनिबन्धनम्। मनुष्याणां हृदयस्याङ्गुष्ठप्रमितत्वेन इतरहृदयस्यानङ्गुष्ठप्रमितत्वेऽपि मनुष्याधिकारत्वात् श्रुतिष्वनङ्गुष्ठप्रमितत्वोक्तिर्युक्ता इत्युक्तम्। प्राप्यस्य परस्य हृदयदेशस्थत्व नघटत इत्याक्षेपस्य परिहारः 'निचाय्यत्वात्' इत्यनेनैव पूर्वमुक्तः। दहराधिकरणे सएव 'अल्पश्रुतेरि'ति प्रतिबोधितः 'हृद्यपेक्षया' इत्यत्रापि सएवार्थो विवक्षितः, अतो ध्यानार्थमेव हृदयस्थितिरित्यर्थस्य पूर्वमुद्दिष्टतया मनुष्याणामेव ध्यानेऽधिकारस्य पूर्वमुक्तौ देवानामधिकारस्यापनाभावे तेषामधिकारो नास्तीति भ्रमस्स्यात् मनुष्याधिकारस्य तत्रान्ययोगव्यवच्छेदः न विवक्षित इति बोधनीयम्। अतो देवानामधिकारस्साधनीयः, तच्च न सम्भवति। असम्भवश्च द्वेधा, अर्थित्वसामर्थ्ययोर्विरहात् असम्भवः 'हृद्यपेक्षया' इत्यनेन ध्यानार्थे हृदयान्तस्थत्वमुक्तम् देवानां शरीराभावेन तदसम्भवति ॥

एवं प्रानन्तर्यमित्यस्य ज्ञानविकासार्थत्वाभिधानेन शरीरस्याभावे ज्ञानविकासोऽपि न सम्भवति। किंच कर्मभिः चित्तशुद्धिसम्पादनमन्तरा उपासनं नसम्भवति, अशरीराणां कर्मानुष्ठानं नसम्भवति। देवानां धर्मविचारमाबेन ब्रह्मविचारे प्रवृत्तेरभावे 'आत्मा वा अरे द्रष्टव्यश्श्रोतव्यो मन्तव्यः' इति विचारानन्तरकालिकध्यानस्य सर्वथाऽसम्भवएवेति शङ्कायां—'तदुपर्यपि बादरायणस्सम्भवात्' इति सूत्रम्। 'हृद्यपेक्षया' इत्यत्र उपासनस्योपस्थिततया तस्य तच्छब्देन परामर्शो युक्तएव। यद्यपि तेभ्य उपरि तदुपरि इति विग्रहकरणपूर्वकं 'मनुष्येभ्य उपरि वर्तमानानां देवाना'मिति प्रथमं दीपे अभिहितम्। तथाऽपि उपर्यादिशब्दसमभिव्याहारे असमासेनैव शब्दस्वरूपोस्थितिः प्रथमतः। सुबन्ताव्ययोरसमासमन्तरा निर्वाहे संभवति समासेन निर्वाहस्यास्वरसत्वात् गत्यभावेतु समासोङ्गीकरणीयः ॥

अत्रतु तदिति व्यासाङ्गीकारेणैवोपपत्तिस्संभवतीति समासो नावश्यकः, किंच समासे विशेष्याध्याहार आवश्यकः व्यासाङ्गीकारेतु उपरिपदस्य सम्बन्धिकपदत्वेन स्वयमेवावधिर्लभ्येत, अतः देवानामुपस्थितिरस्सम्भवत्येव। अत एवदेवानामित्यनभिधाय उपरीत्युक्त्या हेतुसत्वं द्रढीकृतम्। उपरीत्यनेन मनुष्येभ्यः आधिकज्ञान शक्त्यादिः, तेन च विचारमन्तरैव ध्याने प्रवृत्तिस्संभवतीति प्रकाराप्रकाराक्षेपस्य नावसरः। इत्थंच बहुशरीरसम्बन्धोऽपि सम्भवति अयमेवार्थः अनेक

## गूढार्थसंग्रहः

प्रतिपत्तेरित्युच्यते । योगिनामेव युगपदनेकशरीरग्रहणसम्भवेन अनेककर्मसमवधानासम्भवात् । उपरिशब्देन देवानामतिशयितज्ञानशक्तिमत्त्वसूचनेन 'सम्भवात्' इत्यनेन अर्थित्वसामर्थ्यसंभवः पूर्वपक्षोक्तः निरस्त इति । अथवा तदुपरि मनुष्यदेहापेक्षया उत्कृष्टदेहसम्बन्धवत्सु इत्यर्थः । तेन च तदनुगुणज्ञानशक्त्याद्यतिशयोऽपि विवक्षित इति आनन्दतीर्थमतेऽपि देवत्वप्राप्त्यनन्तरमित्याद्यर्थवर्णनेऽपि साध्यवाचकपदाध्याहारक्लेशः अवर्जनीयः । अपिर्विरोधसूचक, शरीरसम्बन्धपरिग्रहे एकदा बहुत्रानुष्ठितयज्ञेषु देवानां गमनासम्भवः । तेनासम्भवः पूर्वपक्षहेतुस्सूचित, सिद्धान्ते उपरिशब्देनातिशयितशरीरसम्बन्धमूलकज्ञानक्रियाशक्तिमत्त्वसूचनेन हेतुर्दृढीकृतः ॥

नव्यमतेतु उपरि इत्यस्यान्यार्थकथनेन हेतुदार्ढ्यसूचकत्व नसम्भवति । बादरायणपद पूर्वकाण्डोक्तकर्मणि पुरुषस्यैवाधिकारः नतु स्त्रिया एकवचननिर्देशादिति शङ्कायां 'जातिंतु बादरायणः' इति सूत्रे स्वर्गकामनाया उभयलिङ्गत्वेन व्यक्तिगतमैक्य नविवक्षितम् । अपितु धर्मैक्यमेवेति यत्सिद्धान्ते अकथयत् सः मनुष्यमात्राधिकार नसहते, किंतु देवानाधिकारमनुमन्यत इति सूचनाय तत्र स्वर्गकामनाया उभयत्र सत्त्वेन उभयोरधिकारवत् अत्र पूर्वोत्तरकाण्डयो. ऐक्यस्य सूचितमिति । पूर्वपक्ष्यभिप्रेतदोषानुवादपूर्वकं तन्निरासः 'विरोध.कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्' इति सूत्रे क्रियते । कर्मपदं वैदिककर्मपरमिति प्रकरणादेव लभ्यते, एकशरीरेषु बहुषु यज्ञेषु गमनसम्भवेन वैदिककर्मणि विरोधइति चेन्न अनेकप्रतिपत्तेः एकशरीरसत्वे विरोधः, अनेकशरीरसत्वेतु विरोध.सुपरिहर इत्याशयः । सौभर्यादिष्वनेकशरीरपरिग्रहः योगबलेन प्रमाणतस्सिद्धया सत्कालस्थाना दर्शनेन अनेकशरीरपरिग्रहहेतुसङ्कल्पशक्त्यादिसूचनेन कर्मणि विरोधपरिहारस्सम्यगुपपादितो भवति ॥

'शब्दइतिचेन्नात प्रभवात्प्रत्यक्षानुमानाभ्याम्' शब्दइतिचेत् इत्यत्र शब्दशब्दः विरोध.कर्मणि इत्यत्र कर्मशब्दश्च प्रयुक्तः, एतदुभयानुरूप्यपर्यालोचनेतु कर्मघटितवाक्यबोध इत्यर्थ एव प्रतीयते । तेन च पूर्वसूत्रे अर्थविरोध परिहारः बहुभिस्तुते यज्ञादिरूपेऽर्थे तच्छरीरक इत्यादिसन्निधानरूपार्थविरोधस्य परिहारः । एव च स्वानुष्ठितकर्मणि एक शरीरकस्य सान्निध्यस्य विरोधः परिहृतः तेन शरीराणामनित्यत्वं प्रतिपन्नम्, शरीराणामनित्यत्वे तत्तदर्थप्रतिपादकशब्दस्यानित्यार्थबोधकत्व स्यात्, अतश्च विरोध इत्यस्यानुषङ्गः अतश्च शब्देऽपि विरोध इत्यर्थः । समाधानतु अतइत्यादि । अत इत्यस्य शब्दादेवेत्यर्थः इन्द्रादिशब्दादेव अर्थस्य प्रभव प्रकाशनमिति यावत् । एतेन शब्दार्थज्ञानयोरेककालिकत्वं सूचितम् । अर्थस्मृतिकाले शब्दज्ञान वर्तत एव, एवमुक्त्या अर्थस्यासजातीयस्य सा च सजातीयार्थज्ञानं सजातीयशब्दज्ञान च सदा वर्तत इत्युक्तेः वाच्यवाचकयोः प्रवाहतः स्थित्यवगत्या आकृतिवचनकेन शब्देन नाविरोधः ॥

प्रत्यक्षानुमानाभ्यामिति । शब्दस्य पूर्वमुपस्थिततया निरपेक्षसापेक्षशाम्या तयोःशब्दयोः श्रुतिस्मृतिपरत्व शङ्करभाष्येऽप्युक्तम् । अत्र एवमप्यर्थो वक्तु शक्यते, अत प्रभवात् इत्यत्रार्थसृष्टिकाले शब्दज्ञानस्योपपादनेन चतुर्मुखसृष्टेरङ्गीकारेऽपि तच्छरीरकपरमात्मनैव सृष्टत्वात् परमात्मप्रत्यक्षविषयीभूतात् शब्दादित्यर्थः । यदा श्रुतिपरत्व प्रत्यक्षपदस्य तदाऽनुमानपदस्य स्मृतिपरत्व स्वतस्सिद्ध्यतीति । अतः प्रभवात् इत्यत्र शब्दस्मरणपूर्वक पूर्वकालिकार्थविचार स्मृत्या अर्थस्योपपादनेन वैदिकशब्देनार्थस्य प्रभव उपपादितः । तेन एकव्यक्तिनाशेऽपि सजातीयसर्वव्यक्त्यन्तरगताकृतेः सत्त्वेन अनित्यार्थसंयोगित्व वेदस्य नास्ति । अतएव एवमुपपादनादेव वेदस्य नित्यत्व वर्णानां नाशेऽपि कार्यार्थस्य नाशेऽपि च तद्गताकृतेः आनुपूर्वीरूपायाः अनादित्व सकलवर्णनित्यत्व पूर्वपूर्वज्ञातवर्णगतानुपूर्वीस्मरणेन उत्तरोत्तर

गूढार्थसङ्ग्रहः

वेदवाक्योच्चारणेन सजातीयानुपूर्वीनिबन्धनमेव नित्यत्वम् । आनुपूर्वी च नकल्पिता अतएव च नित्यत्वं पूर्वपूर्वानुपूर्वीस्मरणपूर्वकसमानानुपूर्व्युच्चारणकर्मत्वमेव । नतु कालिदासादिग्रन्थेष्विवानुपूर्व्याः कल्पितत्वमिति विशेषः ॥

'समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च' इति । नैमित्तिकप्रळये तथाऽङ्गीकारेऽपि प्राकृतप्रळये नाशेऽपि निरन्वयविनाशाभावात् । परिणामेन पूर्वं प्रकृतानां पदार्थानां या आकृतिः तयैवाकृत्या तद्बोधकशब्दशानेन अर्थोत्पत्त्या विरोधो नास्ति । 'यो ब्रह्माणम्' इति श्रुतेः प्रत्यक्षपदस्थाने दर्शनशब्दः स्मृतिशब्दसहभावेनापि दर्शनशब्दः श्रुतिपरः ॥

इति देवताधिकरणम्

---

अथ वेदान्तसारः

## सू—२५ तदुपर्यपि बादरायणस्सम्भवात् [१-३-२५]

तत् ब्रह्मोपासनम् ; उपरि देवादिष्वप्यस्ति, अर्थित्वसामर्थ्यसम्भवादिति भगवान्बादरायणः मेने ; सम्भवश्च पूर्वोपार्जितज्ञानाविस्मरणात्, मन्त्रार्थवादेषु विग्रहादिमत्तया स्तुतिदर्शनात्, तदुपपत्तये तत्भवे तेषामेव प्रामाण्येन विग्रहादिमत्त्वाच्च ॥

## सू-२६ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् (१.३.२६)

विग्रहादिमत्त्वे एकस्यानेत्र युगपत्सान्निध्यायोगात्, कर्मणि विरोधः इति चेन्न, शक्तिमत्सु सौभरिप्रभृतिषु युगपदनेकशरीरप्रतिपत्तिदर्शनात् ॥

## सू—२७ शब्द इति चेन्नातःप्रभवात् प्रत्यक्षानुमानाभ्याम् [१-३-२७]

वैदिकेतु शब्दे विरोधप्रसक्तिः—देहस्य सावयवेनोत्पत्तिमत्त्वादिन्द्रादिदेवो पत्तेः प्राक् विनाशादूर्ध्वं च वैदिकेन्द्रादिशब्दानामर्थशून्यत्वमनित्यत्वं वा स्यादितिचेन्न, अतः—वैदिकादवेन्द्रादिशब्दादिन्द्राद्यर्थसृष्टेः । नहीन्द्रादिशब्दाः व्यक्तिवाचकाः ; अपितु गवादिशब्दवदाकृतिवाचिनः ; पूर्वस्मिन्निन्द्रादौ विनष्टे वैदिकेन्द्रादिशब्दादेव ब्रह्मा पूर्वेन्द्राद्याकृतिविशेषं स्मृत्वा तदाकारमपरम् इन्द्रादिकं कुलालादिरिव घटादिकं सृजतीति न कश्चिद्विरोधः । कुतइदमवगम्यते ? श्रुतिस्मृतिभ्याम् श्रुतिः 'वेदेन रूपे व्याकरोत् सतासतीप्रजापतिः' (अष्टक.२.प्र६.अनु.२) 'स भूरिति व्याहरत् स भूमिमसृजत' (२.२) इत्यादिः । स्मृतिरपि 'सर्वेषां तु स नामानि कर्माणि च पृथक्पृथक् । वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥' (मनु.१.२१) इत्यादिः ॥

## सू-२८ अत एव च नित्यत्वम् (१.३.२८)

यतो ब्रह्मा वैदिकाच्छन्दादर्थान् स्मृत्वा सृजति ; अतएव 'मन्त्रकृतो वृणीते' 'विश्वामित्रस्य सूक्तं भवति' (का.५.प्र.२.अनु.४)इति विश्वामित्रादीनां मन्त्रादिकृत्त्वेऽपि मन्त्रादिमयवेदस्य नित्यत्वं तिष्ठति । अनधीतमन्त्रादिदर्शनशक्तान् पूर्वविश्वामित्रादीन् तत्तद्वैदिकशब्दैः स्मृत्वा तदाकारानपरान् तत्तच्छक्तियुक्तान् सृजतिहि ब्रह्मा नैमिकप्रळयानन्तरम् । ते चानधीत्यैव तामेव मन्त्रादीन् अस्खलितान् पठन्ति । अतस्तेषां मन्त्रादिकृत्त्वं वेदनित्यत्वं च स्थितम् ॥

प्राकृतप्रलयेतु चतुर्मुखे वेदाख्यशब्दे च विनष्टे वेदस्य नित्यत्वमित्यत आह—

## सू—२९ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च [१.३.२९]

अतएव सृज्यानां समाननामरूपत्वात् प्राकृतप्रळयावृत्तावपि न विरोधः । आदिकर्ता परमपुरुषोहि पूर्वरूपसंस्थानं जगत् स्मृत्वा तदाकारमेव जगत् सृजति, वेदांश्च पूर्वानुपूर्वीविशिष्टानाविष्कृत्य चतुर्मुखाय ददातीति, श्रुतिस्मृतिभ्यामादिकर्ता पूर्ववत्सृजतीत्यवगम्यते । श्रुतिस्तावत् 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' (तै.नारायण.६.१.३८) इत्यादिका, 'यो ब्रह्माणं विदधाति पूर्वं योवै वेदांश्च प्रहिणोति तस्मै' (श्वे.६.१८) इति च । स्मृतिरपि 'यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येवेह तथा भावायुगादिषु ॥' इति वेदस्य नित्यत्वं च पूर्वपूर्वोच्चारणक्रमविशिष्टस्यैव सर्वदोच्चार्यमाणत्वात् ॥

इति वेदान्तसारः

अथ वेदान्तदीपः

## सू—२५ तदुपर्यपि बादरायणस्सम्भवात् (१.३.२५)

मनुष्याधिकारं ब्रह्मोपासनशास्त्रमित्युक्तम् ; तत्प्रसङ्गेन देवादीनामपि ब्रह्मविद्यायामधिकारोऽस्ति नवेति चिन्त्यते, न देवानामधिकारोऽस्तीति पूर्वःपक्षः, परिनिष्पन्ने ब्रह्मणि शब्दस्य प्रामाण्यसम्भवेऽपि देवादीनां विग्रहादिमत्त्वे प्रमाणाभावात् मन्त्रार्थवादानामपि विधिशेषतया विग्रहादिसद्भावपरत्वाभावात् विग्रहवन्निर्वर्त्याहरहरनुष्ठीयमानविवेकादिसाधनसप्तकसंस्कृतमनोनिष्पाद्योपासननिष्पत्तौ तेषां सामर्थ्याभावात् । राद्धान्तस्तु—जगत्सृष्टिप्रकरणेषु नामरूपव्याकरणश्रुत्यैव देवादीनां विग्रहादिमत्त्वं सिध्यति । देवादीनां देहेन्द्रियादिकरणमेवहि नामरूपव्याकरणम् ; मन्त्रार्थवादयोश्च तदुपसंबंधे तयोरनुष्ठेयप्रकाशनस्तुतिपरत्वेऽपि तदुपपत्तये तत्सद्भावे प्रमाणत्वाद्देवादीनां विग्रहादिमत्त्वसिद्धिः ; नहि विग्रहादिमत्त्वया स्तुतिःप्रकाशनं च तदभावे सम्भवति । अतस्सामर्थ्यसंभवादस्त्येवाधिकारः, सूत्रार्थस्तु तदुपर्यपि तेभ्यः मनुष्येभ्यः उपरि वर्तमानानां देवादीनामप्यधिकारोऽस्ति, यद्वा तत् ब्रह्मोपासनम् उपरि देवादिष्वपि संभवति ; तेषामपि ब्रह्मस्वरूपतदुपासनप्रकारज्ञानतदर्थित्वतदुपादानसामर्थ्यसंभवात् ; पूर्वोपार्जितज्ञानाविस्मरणात् ज्ञानसम्भवः तापत्रयाभिहतिपूर्वकब्रह्मगुणज्ञानादर्थित्वसम्भवः, सृष्टिवाक्यमन्त्रार्थवादेषु विग्रहवत्त्वादिदर्शनात् सामर्थ्यसंभवश्चेति भगवान् बादरायण मन्यते ॥

## सू—२६ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् [१.३.२६]

कर्मणि यागादौ विग्रहवत्त्वे सति एकस्य युगपदनेकयागेषु सन्निधानानुपपत्तेः विरोधः प्रसज्यत इति चेत्— रस शक्तिमतां सौभरिप्रभृतीनां युगपदनेकशरीरप्रतिपत्तिदर्शनात् ॥

## सू—२७ शब्द इति चेन्नातःप्रभवात् प्रत्यक्षानुमानाभ्याम् (१.३.२७)

विरोध इति वर्तते ; माभूत्कर्मणि विरोधः, शब्देतु वैदिके विरोधः प्रसज्यते, विग्रहवत्त्वेहि तेषां सावयवेनोत्पत्तिविनाशयोगादुत्पत्तेः प्राग्विनाशादूर्ध्वं च, वैदिकानामिन्द्रादिशब्दानामर्थशून्यत्वमनित्यत्वं वा स्यादितिचेत्–तन्न, अतः प्रभवात्–अतः वैदिकादेव शब्दात् इन्द्रादेः प्रभवात् ; पूर्वपूर्वेन्द्रादौ विनष्टे वैदिकेन्द्राद्याकृतिविशेषवाचिनःशब्दादिन्द्राद्याकृतिविशेषं स्मृत्वा तदाकारमपरमिन्द्रादिकं सृजति प्रजापतिरिति वैदिकस्य शब्दस्य न कश्चिद्विरोधः । नहि देवदत्तादिशब्दवदिन्द्रादिशब्दाः व्यक्तिविशेषे सङ्केतपूर्वकाः प्रवृत्ताः, अपितु गवादिशब्दवदाकृतिविशेषवाचिन इति तेषामपि नित्य एव वाच्यवाचकभावः । वैदिकादिन्द्रादिशब्दात्तदर्थविशेषं स्मृत्वा कुलालादिरिव घटादिकं प्रजापतिस्सृजतीति कुतो वा गम्यते ? 'प्रत्यक्षानुमानाभ्याम्' श्रुतिस्मृतिभ्यामित्यर्थः । श्रुतिस्तावत् 'वेदेन रूपेव्याकरोत् सतासती प्रजापतिः' (यजु.अष्टक.२,प्र.६.अनु.२) तथा 'स भूरिति व्याहरत् । स भूमिमसृजत' (२.२.४) इत्यादिका स्मृतिरपि—'सर्वेषां च सनामानि कर्माणि च पृथक्पृथक् । वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥' (मनु.१.२१) 'नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम् । वेदशब्देभ्य एवादौ देवादीनां चकारसः ॥' (वि.पु.१.५.६३) इत्यादिका

## सू—२८ अत एव च नित्यत्वम्( १.३.२८)

यतः प्रजापतिः वैदिकाच्छाब्दादर्थाकारं स्मृत्वा तदाकारं सर्वं सृजति, अतश्च वसिष्ठविश्वामित्रादीनां मन्त्रसूक्तादिकृत्त्वेऽपि मन्त्रादिमयस्य वेदस्य नित्यत्वं तिष्ठत्येव , प्रजापतिर्हि नैमित्तिकप्रळयानन्तरम् 'गन्धर्वे वृणीते' (आपस्तम्बप्रवरखण्डे.१.७) 'विश्वामित्रस्य सूक्तं भवति' (का.५.प्र.२.अनु.४) इत्यादिवेदशब्देभ्योऽनधीतमन्त्रादिदर्शनशक्तवसिष्ठाद्याकृतिविशेषं स्मृत्वा वासिष्ठादिपदप्राप्तयेऽनुष्ठितकर्मविशेषांश्चानुसृत्य, तदाकारांश्चैषाञ्चर्षीन्सृजति ; ते चानधीत्यैव वेदैकदेशभूतमन्त्रादीन् स्वरतो वर्णतश्चास्खलितापठन्ति तदेषां मन्त्रादिकृत्त्वेऽपि वेदनित्यत्वमुपपद्यते ॥

प्रजापतिप्रभृतिषु सर्वेषु तत्त्वेष्वव्याकृतपर्यन्तेषु अव्याकृतपरिणामरूपेषु शब्दमयेषु वेदेषु च विनष्टेष्वव्याकृतस्यावृत्तौ कथं वेदस्य नित्यत्वमित्यत आह—

## सू—२९ समाननामरूपत्वाचावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च (१.३.२९)

अव्याकृतस्यावृत्तावपि सृज्यानां समाननामरूपत्वादेव न कश्चिद्विरोधः । आदिसर्गेऽपिहि परमपुरुषः पूर्वसंस्थानं जगत्स्मरन् तथैतत् सृजति , वेदांश्च पूर्वानुपूर्वीविशिष्टानाविष्कृत्य हिरण्यगर्भाय ददाति इति पूर्वसंस्थानमेव जगत्सृजतीति कथमवगम्यते–दर्शनात् स्मृतेश्च–दर्शनं श्रुतिः 'अहोरात्राणि विदधद्विश्वस्य मिषतो वशी । सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् दिवं च पृथिवीं चान्तरिक्षमथो सुवः' (तै.नारायण.६.१.३८) इति 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' (श्वे.६.१८) इतिच। स्मृतिरपि–'यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते

तानि तान्येव तथा भावायुगादिषु ॥ ' (वि.पु.१.५.६५) इति । एतदेव वेदस्य नित्यत्वम्—यत्पूर्वपूर्वोच्चारणक्रमविशेष स्मृत्वा तेनैव क्रमेणोच्चार्यत्वम् , परमपुरुषोऽपि स्वस्वरूपस्वाराधनतत्फल्याथात्म्यावबोधिवेद स्वस्वरूपवन्नित्यमेव पूर्वानुपूर्वीविशिष्ट स्मृत्वाऽविष्करोति । अतो देवादीनां ब्रह्मविद्याऽधिकारे न कश्चिद्विरोधः ॥

इति वेदान्तदीपः

अथ अधिकरणसारावळी

शब्दात्मा लौकिकार्थाकृतिरियमथवा देवतातो न तस्या
ब्रह्मोपासेत्यनार्षं श्रुतपरिहरणं कल्पनं चाश्रुतस्य ।
विश्वस्रष्टा च माभूदनुमितिविषयस्तत्परैस्त्वेष शास्त्रै-
र्निर्बाधैस्स्थापितः प्राक्स्वयमपि विभुना नैव शक्यापलापः ॥
सामर्थ्यं देवतानामुचिततनुभृतामर्थिता तापभाजां
सम्पद्येतेति तासामपि भवति परोपास्तिवर्गाधिकारः ।
स्यात्तं मन्त्रार्थवादप्रभृतिषु निखिलं दोषबाधाद्यभावे
'मिथ्येत्युद्घोषयन्तस्स्वत इति कथितांमानतां प्रस्सरन्ति ॥
द्वेधा वृत्तिस्तुतौ स्यात् स्वपरगुणमुखी प्राक्तनी तावदर्थ्या
निर्धार्यैःपश्चिमायामपि निपुणधियाम्मुख्यधर्मैकदेशः ।
रुच्यर्थायां च तस्यामनृतकथनतो रोचना नह्यमुग्धे
भूतार्थे का स्तुतिस्यादिति मुनिगदिता गौणतादेर्निवृत्त्यै ॥
नानादेहासिद्धास्ताः कथमिह युगपत्कर्मसन्निद्ध्यनर्हा-
स्तद्वृत्तान्तसत्त्वे श्रुतिषु भवति नानित्ययोगः प्रवाहात् ।
काण्डादौ कर्तृवाद· प्रवचननियतो वेदनित्यत्वसिद्धे-
रीशः प्राचीनकल्पःक्रमत उपदिशेद्वर्णसर्गेऽपि वेदान् ॥
वेदानामीशबुद्ध्या क्रमनियमहतिः कल्पभेदे यदीष्टा
मन्त्रांशानन्त्यता स्याच्च खलु तदुचितं व्रीहिसोमादिसाम्यात् ।
इत्थं विद्ध्यर्थवादक्रम इति नियमे पाक्षिके वा तथात्वे
पक्षोऽसावाक्षपाद परम्परिपत्कोटिमाटीकतां न ॥
सौक्ष्म्यात्तुल्याभिघारात् सहकृदपनयाच्छादकादान्यपर्या
दत्यासत्याऽतिदूराद्बलवदभिभवानुद्भवाक्षोपघातैः ।
नेक्ष्यन्ते वर्तमानान्यपि हि सुरगणस्तद्वदन्नाधि शक्तेः
प्रख्यातास्सिद्धिभेदा अपिजननतपो योगमन्त्रौषधीभ्यः ॥

॥ इ ति दे व ता धि क र णं स मा प्त म् ॥

## अथ एतद्गर्भे मध्यधिकरणम्

### श्रीभाष्यम्

### सू–३० मध्वादिष्वसम्भवादनधिकारं जैमिनिः (१.३.३०)

ब्रह्मविद्यायां देवादीनामप्यधिकारोऽस्तीत्युक्तम्; इदमिदानीं चिन्त्यते येपूपासनेषु या देवता पयोपास्यास्तेषु तासामधिकारोऽस्ति न इति। किं प्राप्तम्? नास्त्यधिकारस्तेषु मध्वादिष्विति जैमिनि मन्यते; कुतः? असम्भवात् नह्यादित्यवस्वादिभिरुपास्या आदित्यवस्वाद्योऽन्ये सम्भवन्ति। नच वस्वादीनां सतां वस्मादित्वं प्राप्यं भवति, प्राप्तत्वात्

## अथ एतद्गर्भे मध्वधिकरणम्

### सू—३० मध्वादिष्वसम्भवादनधिकारंजैमिनिः (१-३-३०)

### श्रुतप्रकाशिका

पूर्वाधिकरणे उपासनसामान्ये देवतासामान्यस्याधिकारोऽस्तीत्युक्तम्, अथोपासनविशेषे देवताविशेषस्याधिकारो निरूप्यत इति सङ्गतिः। इममर्थमाह—ब्रह्मविद्यायामित्यादिना। इदमधिकरणं न मधुविद्यामात्रविषयम् अपि-तुदहरसर्ववाक्यपरम्, अतएवहि 'मध्वादिषु' इति आदिशब्दप्रयोग इत्यभिप्रेत्योक्तम्। येपूपासनेष्विति। किं मधुविद्यादिषु या देवतोपास्या, तासु किं तस्या अधिकारोऽस्ति, नेति विचारः तदर्थं 'य एतदेवममृतं वेद' इति यच्छब्दः किं सङ्कोचेन वस्वादिव्यतिरिक्तविषयः, उतासङ्कुचितवृत्तिरिति, किं तस्या देवताया स्तद्विद्योपसंहारसामर्थ्यमस्ति, नेति किं मधुविद्याया वस्वादिदेवतामात्रमुपास्यम्, उत तदर्थं ब्रह्मेति, किं वसुत्वमात्रं मधुविद्याफलं, उत ब्रह्मप्राप्तिपर्यन्तं वसुत्वमिति। यदा वसुत्वमात्रं फलं तदा वस्वादिदेवतामात्रस्योपास्यत्वेन तस्या देवतायास्तद्विद्योपसंहारसामर्थ्याभावात्। यच्छब्दस्य तद्व्यतिरिक्तविषयत्वात्तत्रानधिकार इति यदा ब्रह्मप्राप्तिपर्यन्तं वसुत्वं फलं तदा तदवस्थब्रह्मण उपास्यत्वेन तद्विद्योपसंहारसामर्थ्याद्यच्छब्दस्य तद्व्यतिरिक्तविषयत्वाभावात्तस्या देवतायास्तस्यां विद्यायामस्त्यधिकार इति॥

ननु तदवस्थब्रह्मण उपास्यतया सिद्धान्तश्चेत् प्रतर्दनविद्यान्यायेन गतार्थत्वादारम्भवैयर्थ्यम्। नैवम् तत्र प्रतिपाद्यविशेषस्यैव निरूपितत्वात्। नहीन्द्रस्य तस्यां विद्यायामधिकारोऽस्ति नेति निरूपितम्। अतोऽधिकारनिरूपणार्थमारम्भणीयत्वमिति। किंच तत्रोपक्रममात्रे जीवलिङ्गं, अवयविनो महावाक्यस्य परमात्मलिङ्गभूयस्त्वादवयविविरोधेऽवयविमात्रस्य दुर्बलत्वाद्राद्धान्तउक्तः। इहतूपसंहारमात्रे परमात्मलिङ्गं, नतु महावाक्यरूपेऽवयविनि अतोऽधिकरणमारम्भणीयम्

नन्वेवंसत्युपक्रमापेक्षयोपसंहारदौर्बल्यात्। राद्धान्तानुपपत्तेरनारम्भणीयता स्यात्। नैवम् उपक्रमोपसंहारयोर्मिथो विरोधेनोपक्रमार्थपरित्यागे प्राप्तेहि तत्प्राबल्येनोपसंहारबाधः, इहतूपक्रमावगतार्थपरित्यागहेतुत्वभावान्नोपसंहारबाधः। कथं तर्हि संशयोत्थानं, अर्थित्वाद्यसम्भवब्रह्मोपनिषत्त्वश्रवणाभ्यां संशयः। असम्भवादिति। अर्थित्वसामर्थ्ययोरिति शेषः। कर्मकर्तृविरोधात् सामर्थ्याभावइत्याह–महीति प्राप्तफलत्वादार्थित्वाभाव इत्याह–नचेति। आदित्यवस्वादयइत्यादिशब्देन

श्रीभाष्यम्

मधुविद्यायाम् ऋग्वेदादिप्रतिपाद्यकर्मनिष्पाद्यस्य रश्मिद्वारेण प्राप्तस्य रसस्याश्रयतया लब्ध मधुव्यपदेशस्यादित्यस्यांशानां वस्वादिभिर्भुज्यमानानामुपास्यत्वं वस्वादित्वं प्राप्यं श्रूयते 'असौ वा आदित्यो देवमधु' (छां.३.१.१) इत्युपक्रम्य 'तद्यत्प्रथमममृतं तद्वसव उपजीवन्ति' (३.६.१) इत्युक्त्वा 'स य एतदमृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति' (३.६.३) इत्यादिना ॥

## सू-३१ ज्योतिषि भावाच्च (१-३-३१)

'तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' (बृ.६.४.१४) इति ज्योतिषि परस्मि

श्रुतप्रकाशिका

मरुद्रुद्रसाध्या विवक्षिताः। वस्वादित्यमरुद्रुद्रसाध्यगणा एकैकंप्रतिदिश्यमुपरि स्थित्वा आदित्यं प्रधानमनुभवन्ति, वस्वादीनामेवोपास्यत्वं वस्वादित्वस्यैव प्राप्यत्वं च किं श्रूयत इत्यपेक्षाया कर्मकर्तृविरोधं प्राप्तफलत्वं च श्रुत्योपन्यासेन विशदयति मधुविद्यायामित्यादिना। ऋग्वेदादीति। 'अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठते' इति वचनार्थोऽभिप्रेतः आदित्यस्यांशानां वस्वादिभिर्भुज्यमानानामुपास्यत्वमिति । वस्वादिभिर्भोक्तृभिस्सहतद्भोग्यभूताः आदित्यांशाः उपास्या इत्यर्थः ॥

ननु कथं कर्मकर्तृविरोधः, स्वात्मविषयमपिह्यनुसन्धानं सुकरम्, भूमविद्याधीतायां प्राणविद्यायां च कर्मकर्तृविरोधाभावश्च भवदभिमतः, उच्यते, नतावत् स्मृतिसंततिमात्रमुपासनं घटादिस्मृतिसंततेरप्युपासनशब्दवाच्यत्वप्रसङ्गात्। अतः प्रकृष्टवस्तुविषयस्मृतिसततिरेवोपासनं, नामाद्याशापर्यन्तोपासनेषु नामादीनामन्तवत्फलप्रदानामपि प्रकर्षवत्त्वं विवक्षितम्। वस्वादीनां तु स्वस्मात्प्रकृष्टत्वाभावात् स्वापेक्षया प्रकृष्टविषयमुपासनं स्वस्मिन्कर्तुं नघटते। प्राणविद्यायामप्यवस्थाभेदेनोपास्यप्रकर्षस्सम्भवति बद्धावस्थ उपासकः, निरतिशयभोग्य मुक्तावस्थस्वरूपं ह्युपास्यं, तच्च बद्धादतीव प्रकृष्टम्। उभयविषयपरविद्यायाऽपि स्वात्मांशे कर्मकर्तृविरोधोऽप्यवस्थाभेदेनैव परिहृतः। मधुविद्यायां तु वस्वादीनामेवोपास्यत्वं, नतु परिशुद्धावस्थाना अतोऽवस्थाभेदेनाप्याविरोधस्य दुर्वचत्वात् कर्मकर्तृविरोध इति। यद्वा स्वयमेव स्वाभीष्टसम्प्रदानाय कृतेन फलार्थिना पुरुषेणोपास्या देवतास्वोपासनप्रीता फलार्थिने फलंदिशति, वस्वादीनां तु स्वोपासनजनितस्वप्रीत्या स्वस्य फलप्रदत्वमयुक्तमिति उपासनप्रीणनीयत्वाकारेण कर्मकर्तृविरोधः, यद्वा एकस्यैव फलप्रदत्वफलार्थित्वरूपविरोधगर्भत्वात्, कर्मकर्तृविरोध इति स्थिते सामर्थ्याभावः, अतश्शक्तत्वाशक्तत्वविशिष्टप्रीणनीयत्वप्रीणयितृत्वफलप्रदत्वार्थित्वरूपविरोधगर्भत्वात् कर्मकर्तृविरोधः, ईदृशविरोधः प्राणविद्यायामपि स्थितएवात्र वक्ष्यमाणन्यायोपजीवनेन परिहार्य इति। प्राणविद्यायां ब्रह्मात्मकत्वेनोपासनस्याविवक्षितत्वेऽपि वस्तुतो जीवान्तर्यामिणः परस्य प्रीतिजननद्वारा स्वर्गार्थपश्वादेरिव फलप्रदत्वमित्येतावता वैषम्यं प्रकर्षापकर्षगर्भकर्मकर्तृविरोधस्य ब्रह्मात्मकतया परिहारस्तु समानः। अतः प्राणविद्याप्येतन्न्यायसापेक्षेति तत्र विरोधस्यापरिहृतत्वात् तन्निदर्शनस्य सामर्थ्याभावस्यात्र पूर्वपक्षहेतुतयोपन्यासः। इत्यादिना यथोक्तार्थः श्रूयते इत्यन्वयः ॥

## सू-३१ ज्योतिषि भावाच्च (१,३-३१)

श्रीभाष्यम्

ब्रह्मणि उपासनं देवानां श्रूयते। देवमनुष्योभयसाधारणे परब्रह्मोपासने देवानामुपासक त्वकथनं देवानामितरोपासननिवृत्तिं द्योतयति। अत एव वस्वादीनामनधिकारः

इति प्राप्तेऽभिधीयते—

## सू-१-३-३२ भावं तु बादरायणोऽस्ति हि (१.३.३२)

आदित्यवस्वादीनामपि तेष्वधिकारभावं भगवान् बादरायणो मन्यते। अस्तिह्यादित्यवस्वादीनामपि स्वावस्थब्रह्मोपासनेन वस्वादित्वप्राप्तिपूर्वकब्रह्मप्रेप्सासम्भवः। इदानीं विवस्वादीनामपि सतां कल्पान्तरेऽपि वस्वादित्वप्राप्तिश्चापेक्षिता भवति। अत्र हि कार्यकारणोभयावस्थब्रह्मोपासनं विधीयते, 'असौ वा आदित्यो देवमधु' (छां.३.१.१) इत्यारभ्य 'अथ तत ऊर्ध्वं उदेत्य' (३.११.१) इत्यतः प्रागादित्यवस्वादिकार्यविशेषावस्थं ब्रह्मोपास्यमुपदिश्यते; 'अथ तत ऊर्ध्वं उदेत्य' (३.११.१) इत्यादिना आदित्यान्तरात्मतयाऽवस्थितं कारणावस्थमेव ब्रह्मोपास्यमुपदिश्यते। तदेव कार्यकारणोभयावस्थं ब्रह्मोपासीनः कल्पान्तरे वस्वादित्वं प्राप्य तदन्ते कारणं परं ब्रह्मैवाप्नोति। 'न ह वा अस्मा उदेति न निम्लोचति सकृद्दिवा हैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद' (छां.३.११.३) इति छन्दस्नाया मधुविद्याया ब्रह्मोपनिषत्त्वश्रवणाद्ब्रह्मप्राप्तिपर्यन्तवस्वादित्वफलस्य वस्वादिभोग्यभूतादित्यांशस्य विधीयमानमुपासनं तदवस्थस्यैव ब्रह्मण इत्यवगम्यते।

श्रुतप्रकाशिका

तत किमित्यत्राह—देवमनुष्येति। देवा एव ज्योतिरुपासते देवा ज्योतिरेवोपासत इति वाक्यभङ्गी स्यात्, तत्र न प्रथम कल्पो युज्यते, मनुष्याणामनधिकारप्रसङ्गात्। तस्माज्ज्योतिरेवोपास्यमित्यर्थ, अन्यथा विशेषवचनवैयर्थ्यं स्यादिति भावः॥

## सू-३२ भावं तु बादरायणोऽस्ति हि (१.३.३२)

अक्षरार्थमाह—आदित्येत्यादिना। अर्थि वसामर्थ्याभाव परिहरति अस्तिहीति। स्वावस्थब्रह्मोपासनशब्देन कर्मकर्तृविरोधः परिहृत, वस्वादि वस्य प्राप्तत्वान्नार्थित्वसम्भव इत्यत्राह—इदानीमिति। उपासनस्य ब्रह्मपर्यन्तत्वे फलस्य ब्रह्मप्राप्तिपर्यन्तत्वे प्रतिपाद्येसतिहि कर्मकर्तृविरोधाभाव, प्राप्तफल वामावश्च तत्कथमित्यत्राह—अत्रहीति। आदित्यादिनामतद्रूपविशिष्टजीवशरीरक ब्रह्मकार्यावस्थ तदुपासन विहितमित्याह—असौवा आदित्यइत्यादिना। इदानीमादित्यादिनामरूपभाजोऽपि सृष्टे पूर्वमादित्यादिनामरूपरहितजीवमात्रस्यान्तर्यामिब्रह्मकारणावस्थ तदुपासन विधीयत इत्याह—अथ तत ऊर्ध्वउदेत्येत्यादिनेति। ब्रह्मोपासन विहितचेत् कथ तद्विरुद्धश्रवणफलमित्यत्राह—तदेवमिति। उदाहृत वाक्ये कारणावस्थादित्यस्यैवोपासन वस्वादित्वमात्रफलप्राप्तिश्च प्रतीयते, नत्वादित्यादिशरीरकब्रह्मोपासन, तत्प्राप्तिश्चेत्यत्राह—न हवा। 'ब्रह्मोपनिषद वेद ब्रह्मविद्या वेद।' ब्रह्मोपासन करोतीत्यर्थ। 'ओदनपाक पचति' इतिवत्

### श्रीभाष्यम्

अत एवंविधमुपासनमादित्यवस्वादीनामपि सम्भवति। एवञ्च ब्रह्मण एवोपास्यत्वात् 'तं देवा ज्योतिषां ज्योतिः' (बृ.६.४.१६) इत्यप्युपपद्यते। तदाह वृत्तिकारः—'अस्ति हि मध्वादिषु सम्भवो ब्रह्मण एव सर्वत्र निदाध्यत्वात्' इति॥

### इति मध्वधिकरणम्

### श्रुतप्रकाशिका

उपसंहरति अतएवमिति। ब्रह्मोपासनपरत्वेन येन्व्याख्यातं तन्मतादस्य प्रामाणिकत्वं दर्शयति तदाह वृत्तिकारइति॥

परेऽन्ये च 'मध्वादिष्वसम्भवात्' इत्यादिसूत्रत्रयं 'तदुपर्यपि' इत्यादिभिस्सूत्रैरेकाधिकरणं मन्वाना एवं व्याचक्षते, ब्रह्मव्यतिरिक्तविषयेषु मध्वादिविद्याविशेषेषु अर्थित्वाद्यसम्भवात् सर्वासु विद्यास्वनधिकारं जैमिनिर्मन्यते। कथं क्वचिदनधिकारादन्यत्राप्यनधिकारः नहि राजसूयानधिकारिणो ब्राह्मणस्य बृहस्पतिसवानधिकार इति शङ्कायामादित्यादिज्योतिषि मण्डलाद्याकारत्वादचेतनेऽपि सवित्रादिशब्दप्रयोगसद्भावात् अग्न्यादीनां चाचेतनत्वान्मन्त्रार्थवादयोरन्यपरत्वेन विग्रहादिमत्त्वाभावेन च अर्थित्वसामर्थ्याभावाच्चानधिकारः, इति सूत्रद्वयं व्याख्याय 'भावं तु' इति तृतीयसूत्रेण मन्त्रार्थवादयोरपि प्रतीयमानार्थे प्रामाण्योपपादनमुखेन अर्थित्वादिसद्भावाद्विद्याधिकारोऽस्तीत्युच्यते इति। तदयुक्तम् वृत्तिकारानभिमतत्वादध्याहारसापेक्षत्वादपेक्षितार्थापरीक्षणायोगात् कृतकरत्वप्रसङ्गादधिकरणान्तरैक्याच्च। तत्र वृत्तिकारानभिमतिर्भाष्ये कण्ठोक्त्या दर्शिता, तत्र हेतुरितरहेतुजातम्। असम्भवान्मध्वादिष्वनधिकारं मन्यत इति अनध्याहारेण योजनासम्भवेऽपि मध्वादिष्वसम्भवात् कुत्रानधिकार इत्यपेक्षायां सर्वासु विद्यास्वप्यनधिकार इत्यध्याहारेण योजनाऽनुपपन्ना। 'सकृद्दिवाहैवास्य भवति य एतामेवं ब्रह्मोपनिषदं वेद' इति ब्रह्मविद्यात्वं तदनुगुणफलं चावगम्यते, वस्वादीनामुपास्यत्वं च प्रतीयते कथमिदं घटत इति व्युत्पन्नशब्दस्य संशयो भवति, तस्मादियम्ब्रह्मविद्या वा ब्रह्मविद्यावेति निरूपणमपेक्षितम् तस्यानिरूपितत्वात् बुभुत्सिता परीक्षण स्यात् 'तदुपर्यपि' इति सूत्रेणैव मन्त्रार्थवादयोर्विग्रहादावप्रामाण्यस्य परिहृतत्वेन 'ज्योतिषि' इत्यादिसूत्रद्वयस्यान्यपरत्वशङ्कापरिहारपरत्वेन व्याख्यानस्य कृतकरत्वं च स्यात् 'संभवात्' इत्युक्तस्यार्थित्वादिसम्भवरूपस्य हेतोरसम्भवव्युदासाधीनात्मलाभ वाद दसूत्रेण परिहृतत्वमवगम्यते, अनन्तरमेव युगपदनेकत्र सन्निविरोधादिपरिहारश्च विग्रहादिसिद्धनिबन्धनत्वादन्यपरत्वस्य परिहृतत्वं दर्शयति। यद्याद्यसूत्रेणासम्भवशङ्कापरिहारौ नविवक्षितौ तर्हि तच्छङ्कापरिहारपरेण 'ज्योतिषि' इत्यादिसूत्रद्वयेनाद्यसूत्रानन्तरेण भवितव्यम् स्वपक्षसाधकोपन्यासानन्तरमेव तद्दोष्यशङ्कापरिहारस्याधिकरणान्तरेष्वपि दृश्यमानत्वात्, यथा 'ईक्षतेर्नाशब्दम्' 'गौणश्चेन्नात्मशब्दात्' यथा 'ज्योतिश्चरणाभिधानात्' 'छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगमात्' इति 'आनुमानिकमप्येकेषाम्' इति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च 'सूक्ष्मं तु तदर्हत्वात्' इति च। ततो भिन्नाधिकरणत्वं युक्तम्॥

अधिकरणभेदमभ्युपगम्य वसुसमुदायस्योपास्यत्वं एकैकवस्वोरुपासकत्वं रुद्रादिष्वप्येवं समुदायस्यैव भेदादुपास्योपासकभावः उपास्यत्वं च वस्वादिभोग्यादित्यांशमात्रस्य, न तु ब्रह्मणः फलं च वस्वादिभावमिति कैश्चिदुक्तम् तदपवर्गरूपफलब्रह्मोपनिषत्त्वश्रवणविरुद्धात् वृत्तिकारस्यानभिमतमित्यनादरणीयम्॥

ननु 'तदुपर्यपि' 'मध्वादिष्वसम्भवात्' इत्यधिकरणद्वयेन किंप्रयोजनम्। देवानां देवताविशेषाणां च

### श्रुतप्रकाशिका

अर्थित्वसामर्थ्यसम्भवनिर्णयस्य मनुष्याणां प्रयोजनं तेनविनाप्यमीषामुपासनोपपत्तेः। नच देवानां किमपि प्रयोजनं, तेषां स्वर्गायपदुनरदेहादिमत्त्वेऽर्थित्वसद्भावेचाधिकरणन्यायनिरपेक्षनिर्णयकत्वादिति । उच्यते परंब्रह्म सामान्येन देवाना-मप्युपास्यं फलप्रदं च देवताविशेषाणामप्युपासनविशेषेदपास्यं फलविशेषप्रदं चेत्येवंविधेश्वर्यविशिष्टत्वेन मनुष्यैरपास्ये-ब्रह्मणोऽनुसन्धेयत्वात्तथाऽनुसन्धानमेव प्रयोजनमिति ॥

## इति मध्वधिकरणम्

## अथ एतद्गर्भे मध्वधिकरणम्

### गूढार्थसङ्ग्रहः

देवताधिकरणे भूतार्थवादानां स्वार्थे प्रामाण्यमभ्युपेत्य देवताविग्रहः परैरभ्युपगतः तत्र प्रमाणान्तराविरोधमात्र-मेव तावन्मात्रेणोपक्षीणतया तात्पर्यकल्पनमनपेक्षितमिति वाचस्पतिः—अवान्तरतात्पर्यं वर्तत इति विवरणकाराः एवं संक्षेपशारीरककारात्अपि व्यावहारिकत्वमात्रमेवेति सर्वेषामभिमतम् । 'इन्द्रो मायाभिः पुरुरूप ईयत' इति श्रुत्या बहु-रूपाणां मायिकत्वेन व्यावहारिकत्वमेव, नतु पारमार्थिकमिति सर्वाद्वैतिनः 'अरूपवदेवहि' इति सूत्रमनुकूलमिति च प्रमाणान्तराविरोधमभिधाय षड्विधतात्पर्यलिङ्गैः व्यावहारिकत्वकल्पन वेदाप्रामाण्ये दीर्घभ्रमजनकतया पर्यवस्यति (स्वप्न-सृष्टिवाक्यवत् जगत्सृष्टिवाक्यमिति ब्रह्मसिद्धिः) अतः देवताविग्रहस्यार्थवादैरङ्गीकारे तस्य पारमार्थिकाङ्गीकार एव वेद-प्रामाण्यं निर्वहति ॥

मधुविद्यायां कर्मकर्तृविरोधादनधिकारः जैमिनिसम्मतः। अयमेवार्थः परैरप्यादृतः 'ज्योतिषिभावाच्च' इत्यत्र ज्योतिः पदं मण्डलपरम् अचेतनस्योपासकत्व नसंभवति ज्योतिश्शब्दः मण्डलपर इति वदन्ति, 'ज्योतिर्दर्शनात्' इत्यत्र परमा-त्मपरत्वमङ्गीकुर्वन्ति। ज्योतिश्शब्दस्य शास्त्रप्रसिद्धपरमात्मपरत्वमेव युक्तमित्यङ्गीकृत्य ब्रह्मविद्यादिषु कर्मकर्तृविरोधात् तत्रानधिकारः पूर्वपक्षसम्मतः। 'भावं तु' इति सिद्धान्तसूत्रे पूर्वपक्षिसमतार्थस्यैव निरसनमभिप्रेतमिति मधुविद्याया-मेवाधिकार इति बादरायणसिद्धान्तः। 'भाव तु बादरायणोऽस्तिहि' इत्यत्र मधुविद्यायाः ब्रह्मविद्यात्वेन तत्राधिकार मात्रोऽपि विवक्षितः। 'य एतां ब्रह्मोपनिषदं वेद' इति अत्रैव वाक्ये ब्रह्मशब्दस्य वेदार्थकत्वमुक्तं परैः। तथासति ब्रह्मशब्दस्य वैयर्थ्यमेव। अतः कार्यकारणोभयावस्थमेव श्रीभाष्यकारोक्त साधु ॥

अयमेवार्थः सूत्रकृत्सम्मतः। मधुविद्यायामनधिकारशङ्कया तत्राधिकारसाधनमेव क्रियते। उक्तसूत्रेषु पूर्वपक्ष-मात्रपरसूत्रमेव नास्तीत्यभिनिविष्टाः नव्याः—प्राप्तफले अनधिकारः जैमिनिसम्मतः। मोक्षार्थं विद्यायामधिकार इति सिद्धान्त यन्ति एवमुक्तः प्राप्तफलमोक्षेतदुभयार्थसूत्रनस्यैवाभावात् तथा वर्णनमभिनिवेशमूलमेव। तदेवं 'मनुष्याधिकारवत्' इत्यत्रायोगव्यवच्छेदो विवक्षितः। अन्ययोगव्यवच्छेदो नविवक्षित इति सिद्धम् ॥

## इति मध्वधिकरणम्



अथ वेदान्तसारः

## सू=३० मध्वादिष्वसम्भवादनधिकारं जैमिनिः [१.३.३०]

मधुविद्यादिषु वस्वादिदेवानामेव उपास्यत्वात् प्राप्यत्वाच्च, तत्र वस्वादीनां कर्मकर्तृभावविरोधेन उपास्यत्वासम्भवात्, वसूनां सतां वसुत्वं प्राप्तमिति प्राप्यत्वासम्भवाच्च, तत्र वस्वादीनामनधिकारं जैमिनिर्मेने ॥

## सू—३१ ज्योतिषि भावाच्च (१.३.३१)

'तंदेवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' (बृ.६.४.१६) इति ज्योतिषि परस्मिन्ब्रह्मणि देवानां साधारण्येन प्राप्तत्वेऽपि अधिकारमात्रवचनात् अन्यत्र वस्वाद्युपासने अनधिकारो न्यायसिद्धो गम्यते ॥

## सू=३२ भावं तु बादरायणोऽस्ति हि (१.३.३२)

मधुविद्यादिष्वपि वस्वादीनामधिकारभावं भगवान् बादरायणो मन्यते । अस्तिहि वस्वादीनां सतां स्वावस्थब्रह्मण उपास्यत्वसम्भवः, कल्पान्तरे वसुत्वादेः प्राप्यत्वसम्भवश्च । 'एकलएव मध्ये स्थाता' (छां.३.११.१) इत्यादिना आदित्यस्य कारणावस्थां प्रतिपाद्य 'यएतामेव ब्रह्मोपनिषदं वेद' (३.११.१) इति मधुविद्यायाः ब्रह्मविद्यात्वमाह— अतः कार्यकारणोभयावस्थं तत्रोपास्यम् ; कल्पान्तरे वस्वादित्वमनुभूय अधिकारावसाने ब्रह्मप्राप्तिर्न विरुद्धा ॥

इति वेदान्तसारः



अथ वेदान्तदीपः

## सू–३० मध्वादिष्वसम्भवादनधिकारं जैमिनिः [१.३.३०]

छान्दोग्ये–'असौ वा आदित्यो देवमधु' (छां.३.११.१) इत्युपक्रम्य 'तद्यत्प्रथमममृतं तद्वसव उपजीवन्ति' (३.६.१) इत्युक्त्वा 'स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति' (३.६.३) इत्यादिना ऋग्यजुस्सामादिवेदोदितकर्मसंपाद्यरसाधारतया मधुमयस्यादित्यस्य पूर्वदक्षिणपश्चिमोत्तरोर्ध्वांशान्वसुरुद्रादित्यमरुत्साध्यनाम्नां देवगणानां भोग्यत्वेनाभिधाय, तैर्भुज्यमानाकारणादित्यांशानुपास्यानुपदिश्य तानेवाऽदित्यांशान् तथाभूतान्प्राप्यानुपदिशति । एवमादिषूपासनेषु वस्वादित्यानामधिकारोऽस्ति, नवेति संशयः । नास्त्यधिकार इति पूर्वःपक्षः, वस्वादीनामुपास्यान्तर्गतत्वेन कर्मकर्तृभावविरोधात्, प्राप्यस्य वसुत्वादेः प्राप्तत्वाच्च । राद्धान्तस्तु–ब्रह्मणएव तदवस्थस्योपास्यत्वाद्वस्वादीनां सतां स्वावस्थब्रह्मानुसन्धानाविरोधात्, कल्पान्तरे वसुत्वादेः प्राप्यत्वाविरोधाच्च वस्वादीनामधिकारसम्भवति इति । सूत्रार्थस्तु—मधुविद्यादिषु वस्वादीनामनधिकारं जैमिनिर्मन्यते, असम्भवात् वस्वादीनामेवोपास्यानामुपासकत्वासम्भवात्, वसुत्वादेः प्राप्तत्वादेव प्राप्यत्वासम्भवाच्च ॥

## सू—३१ ज्योतिषि भावाच्च [१.३.३१]

'तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' (बृ.६.४,१६) इति ज्योतिषि परस्मिन्ब्रह्मणि देवमनुष्ययोरधिकारसाधारण्ये सत्यपि, ज्योतिषां ज्योतिः परब्रह्म देवा उपासते इति विशेषवचनं वस्वादीनां कर्मकर्तृभावविरोधाच्चेषु तेषामनधिकारं द्योतयति। देवाः इति सामान्यवचनं च वस्वादिविशेषविषयमित्यवगम्यते, अन्येषामविरोधात् ॥

## सू–३२ भावं तु बादरायणोऽस्ति हि (१.३.३२)

तुशब्दः पक्षं व्यावर्तयति। वस्वादीनां मधुविद्यादिष्वधिकारसद्भावं भगवान् बादरायणो मन्यते, अस्ति हि वस्वादीनामेवोपास्यत्वं प्राप्यत्वं च। इदानीं वसूनामेव सतां कल्पान्तरे वसुत्वस्य प्राप्यत्वसम्भवात्प्राप्यत्वं सम्भवति। स्वात्मनां ब्रह्मभावानुसन्धानसम्भवादुपास्यत्वं च सम्भवति। 'य एतामेव ब्रह्मोपनिषद्वेद' (छां.३.११.१) इति कृत्स्नाया मधुविद्यायाः ब्रह्मविद्यात्वमवगम्यते ॥

इति वेदान्तदीपः

अथ अधिकरणसारावली

स्यादेवं देवमात्रे मनुज इव परोपास्तिमात्रे तथाऽपि
स्वस्यैवाराध्यभावस्वपदमपि फलं यत्र नात्राधिकारः।
मैवं सर्वान्तरात्मा स्वतनुभृदिति चोपासते मुक्तिकामाः
कामादावर्तते तु स्वपदमपि फलं कल्पमन्वन्तरादौ ॥

॥ इति मध्वधिकरणं समाप्तम् ॥



### अथ एतद्गर्भे अपशूद्राधिकरणम्

### श्रीभाष्यम्

## सू-३१ शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि [१-३-३३]

ब्रह्मविद्यायां शूद्रस्याप्यधिकारोऽस्ति नवेति विचार्यते ; किं युक्तम् ? अस्तीति । कुतः अर्थित्वसामर्थ्यप्रयुक्तत्वादधिकारस्य, शूद्रस्यापि तत्सम्भवात् । यद्यप्यग्निविद्यासाध्येषु कर्मस्वनग्निविद्यत्वाच्छूद्रस्यानधिकारः ; तथाऽपि मनोवृत्तिमात्रत्वाद्ब्रह्मोपासनस्य तत्राधिकारोऽस्त्येव । शास्त्रीयक्रियापेक्षत्वेऽप्युपासनस्य तत्तद्वर्णाश्रमोचितक्रियाया एवापेक्षितत्वाच्छूद्रस्यापि स्ववर्णोचितपूर्ववर्णशुश्रूषैव क्रिया भविष्यति । ' तस्माच्छूद्रोयज्ञेऽनव-

### अथ एतद्गर्भे अपशूद्राधिकरणम्

### श्रुतप्रकाशिका

## सू—३२ शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि (१.३.३३)

मनुष्यव्यतिरिक्तवस्वादिदेवताविशेषाणामर्थित्वसामर्थ्यसम्भवादधिकारोऽस्तीत्युक्तम् । अथार्थित्वसामर्थ्ययोः प्रयोजकत्वे मनुष्यविशेषाणां शूद्राणामप्यधिकारस्स्यादिति शङ्कयासङ्गतिरित्याह—ब्रह्मविद्यायामिति । किं ब्रह्मविद्यायां शूद्रस्याधिकारोऽस्ति, नेति विचारः । तदर्थं तस्य तदुपसंहारसामर्थ्यमस्ति नेति, किं ब्रह्मविषयमनोवृत्तिरूपा ब्रह्मविद्याऽनधीतवेदस्यापि संभवति, नेति ? किं वेदादेव ब्रह्मावगतिः उतेतिहासपुराणाभ्यामपि ? सम्भवतीति किं तयोर्वेदोपबृंहणं कुर्वतोरेव ब्रह्मावगतिहेतुत्व उत स्वातन्त्र्येणेति ? किं जानश्रुतेश्शूद्रेत्यामन्त्रणमितिहासपुराणयोर्निरपेक्षब्रह्मावबोधकत्वमुपोद्बलयति, नेति । किं तत्र शूद्रशब्दो रूढ्या जातिपरः, उत यौगिकतया शोकवत्परइति । यदा रूढः तदा शूद्रशब्दस्येतिहासपुराणयोर्निरपेक्ष्योत्तम्भकतया तयोस्स्वतन्त्र्येण ब्रह्मावगतिहेतुत्वात् ब्रह्मविषयस्मृतिसन्ततिरनधीतवेदस्यापि सम्भवतीति सामर्थ्यलाभात् शूद्रस्याप्यधिकारस्सम्भवतीति पूर्वःपक्षः । यदा शूद्रशब्दो यौगिकः तदा शूद्रेत्यामन्त्रणस्य इतिहासपुराणयोर्ब्रह्मावबोधननैरपेक्ष्यावगमकतया स्वातन्त्र्येण ब्रह्मावबोधकत्वाभावाद्वेदादेव ब्रह्मावगतिरित्यनधीतवेदस्य तदसम्भवेन सामर्थ्याभावान्न ब्रह्मोपासनाधिकार इति राद्धान्तः ॥

ननु कर्मकण्डापशूद्राधिकरणे शूद्रस्य वैदिकसर्वकर्मस्वनधिकार उक्तः, तत्कथमत्र तत्सम्भव इत्यत्राह—यद्यपीति विद्या वेदविद्या अध्ययनम् । अग्निः आहितः परिहरति तथाऽपीति । ननु विद्यायाः कर्माङ्गत्वं वक्ष्यते तत्कथं शास्त्रब्रह्मविद्यायाः सामर्थ्यमित्यत्राह—शास्त्रीयेति । ननु ' तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः ' इत्यत्र यज्ञग्रहणस्योपलक्षणार्थत्वाद्विद्यायामप्यधिकारोसिद्ध्यति । नह्यसावर्थः श्रुत्येकसमधिगम्यः येन यावद्वचनता स्यात् परिसङ्ख्या वा, किंतु न्यायसिद्धः, न्यायश्चाग्निविद्यासाध्येष्वनाग्निविद्यस्याधिकारानुपपत्तिरूपः कर्मोपासनसाधारणः, अतोऽनधिकार इत्यत्राह—तस्माच्छूद्रइति । सत्यमसावनुवादः, नैतावता ब्रह्मविद्याऽनधिकारः, अग्निविद्यासाध्यकर्मविषयत्वान्न्यायस्य, यज्ञादि-

## श्रीभाष्यम्

फलतः ' (यजु.का.७.१.१.१) इत्यग्निविद्यासाध्ययज्ञादिकर्मानधिकार एव न्यायसिद्धोऽनूद्यते । नन्वनधीतवेदस्याश्रुतवेदान्तस्य ब्रह्मस्वरूपतदुपासनप्रकारानभिज्ञस्य कथं ब्रह्मोपासनं सम्भवति ? उच्यते—अनधीतवेदस्याश्रुतवेदान्तवाक्यस्यापीतिहासपुराणश्रवणेनापि ब्रह्मस्वरूपतदुपासनज्ञानं सम्भवति । अस्ति च शूद्रस्यापीतिहासपुराणश्रवणानुज्ञा ' श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः ' (भारते.शान्ति.मोक्ष) इत्यादौ । दृश्यन्ते चेतिहासपुराणेषु विदुरादयो ब्रह्मनिष्ठाः । तथोपनिषत्स्वपि संवर्गविद्यायां शूद्रस्यापि ब्रह्मविद्याधिकारः प्रतीयते शुश्रूषुं हि जानश्रुतिमाचार्यो रैक्वः शूद्रेत्यामन्त्र्य तस्मै ब्रह्मविद्यामुपदिशति–' आजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथाः ' ((छां.४.२.५) इत्यादिना । अतश्शूद्रस्याप्यधिकारस्सम्भवति ॥

इति प्राप्त उच्यते–न शूद्रस्याधिकारस्सम्भवति, सामर्थ्याभावात् ; नहि ब्रह्मस्वरूपतदुपासनप्रकारमजानस्तदङ्गभूतवेदानुवचनयज्ञादिष्वनधिकृतस्योपासनोपसंहारसामर्थ्यसम्भवः ; असमर्थस्य चार्थित्वसद्भावेऽप्यधिकारो न सम्भवति ; असामर्थ्यं च वेदाध्ययना-

## श्रुतप्रकाशिका

कर्मणामेवाग्निविद्यासाध्यत्वात् ब्रह्मविद्यायास्तन्निरपेक्षत्वाच्चेत्यर्थः । अत्रार्थादेवान्तरचोद्यं भवति, यज्ञाधिकारो नास्तीत्यनेन उपासनाधिकारोऽनुमतो भवतीत्यभिप्रायेण यज्ञादिकर्मानधिकार एवेत्युक्तम् न्यायवाक्यसिद्धोऽनूद्यत इति । कर्मकाण्डापशूद्राधिकरणन्यायसिद्ध इत्यर्थः । माभूदग्निसाध्ययज्ञापेक्षा ब्रह्मविद्यायाः, तथाऽप्यध्ययनसाध्यवेदजन्यज्ञानापेक्षाऽस्तीति चोदयति–नन्विति । श्रावयेदिति । प्रयोज्याभावे प्रयोजकासिद्धेः प्रयोज्योपादानमर्थसिद्धमिति भावः । नच ' अश्वायकामं याजयेत् ' इतिवत् प्रयोज्यव्यापारविधिः अधिकारविशेषाश्रवणात्, एतदभिप्रायेणेतिहासपुराणश्रवणानुज्ञेत्युक्तम् । यदात्वेवसिद्धं श्रवणं तदा सामर्थ्याद्विचारोऽपि सिद्धः, इतिहासपुराणयोस्संशयविपर्ययग्रस्तत्वे सति सम्यग्ज्ञानानुपपत्तेः, अतो निरपवादश्शूद्रस्याप्यधिकारो ब्रह्मविद्यायाम् । नचवाच्यं यज्ञादिकर्मणामपीतिहासपुराणेषूपदिश्यमानत्वात्तत्रापि शूद्राधिकारप्रसङ्ग इति । कर्मणामितिहासपुराणेषु सामान्यतः कीर्तनेऽपि विशेषोपदेशाभावात्, वैदिकेषु विशेषोपदेशेषु शूद्रस्यानधिकारस्सिद्ध इति यदि ब्रूयात्, नेदमितिहासपुराणविषयम् श्रवणानुज्ञानमर्थज्ञानावधिकम् । किंतु ' श्मशानवच्छूद्रपतितौ ' इति प्रतिषिद्धस्य समीपपाठस्य प्रतिप्रसवमात्रमिति, तत्र ' य इदं शृणुयान्नित्यम् ' इत्युपक्रम्य ' शूद्रस्सुखमवाप्नुयात् ' इति श्रवणफलनिर्देशात् श्रवणकीर्तनेहि यथायोग्यमन्वीयेते ' शूद्रयोनावहं जातो नातोऽन्यद्वक्तुमुत्सहे ' इति ह्युक्तम् । हेत्वन्तरमाह—दृश्यन्ते चेति । कर्मकाण्डेऽपशूद्राधिकरणेऽनधिकारो निर्णीतश्चेत् किमत्र चिन्तनीयमिति शङ्कायां ब्रह्मोपासनेऽपशूद्राधिकरणन्यायप्रवृत्तौ तत्रापरिहृतामाधिक्ययुक्तिमाह—तथोपनिषत्स्वपि संवर्गेति ॥

राद्धान्तमारभते—इतिप्राप्त इति । संवर्गविद्यावाक्यगतशूद्रशब्दनिर्वाह एव शेषः, अन्यः पूर्वपक्षहेतुजात सूत्रकाराभिप्रेत स्वयमुपन्यस्य प्रथमं व्युदस्य पश्चात् सूत्रमवतारयिष्यन् प्रथमं पूर्वपक्षहेतून्प्रतिक्षिपति न शूद्रस्येत्यादिना । सामर्थ्याभावमुपपादयति नहीति । अर्थित्वं ह्यस्तीत्यत्राह–असमर्थस्य चेति । उपासनोपायश्रवणधारणादिक्षमत्वलक्षणं सामर्थ्यं तस्यापि लोकसिद्धमित्यत्राह—असामर्थ्यं चेति । अलौकिकसामर्थ्याभावादित्यर्थः । ब्रह्मोपासनविधिना शूद्रस्याप्यधिकारः कल्प्यः, यथा रथकारादीनां विधिबलेन तत्तत्कर्माधिकारस्तदपेक्षितमन्त्राध्ययनाधिकारश्च सिद्ध्यतीत्यत्र इ–

## श्रीभाष्यम्

भावात्; तथैव हि त्रैवर्णिकविषयाध्ययनविधिसिद्धस्वाध्यायसम्पाद्यज्ञानलाभेन कर्मविधयो ज्ञानतदुपायादीनपरान् स्वीकुर्वन्ति। तथा ब्रह्मोपासनविधयोऽपि। अतोऽध्ययनविधिसिद्धस्वाध्यायाधिगतज्ञानस्यैव, ब्रह्मोपासनोपायत्वाच्छूद्रस्य ब्रह्मोपासनसामर्थ्यासम्भवः; इतिहासपुराणे अपि वेदोपबृंहणं कुर्वती वेदोपायभावमनुभवतः, न स्वातन्त्र्येण। शूद्रस्येतिहासपुराणश्रवणानुज्ञानं, पापक्षयादिफलार्थम्; नोपासनार्थम्। विदुरादयस्तु भवान्तराधिगतज्ञानप्रमोषात् ज्ञानवन्तः प्रारब्धकर्मवशाच्चेदृशजन्मयोगिन इति तेषां ब्रह्मनिष्ठत्वम्॥

## श्रुतप्रकाशिका

यथैव हीति। ज्ञानतदुपायादीनित्यादिशब्देनाध्ययनव्रतोपनयनादय उच्यन्ते। अपरान् अत्रैवर्णिकगतान् ज्ञानतदुपायादीनपेक्षन्त इत्यर्थः। विधयस्स्ववैयर्थ्यपरिहारायानुष्ठातृसापेक्षाश्चानुष्ठानस्य ज्ञानपूर्वकतया ज्ञानतद्धेतुभूताध्ययनोपनयनादीनपेक्षन्ते तत्रानन्यार्थं स्वयं क्लेशसाध्यतया प्रयोजनसाकाङ्क्षं सन्निहितत्रैवर्णिकगतज्ञानं बलात्त्वा कर्मविधिभिस्सम्बध्यते तत् कर्मविधयोऽत्रैवर्णिकगतज्ञानादिनिरपेक्षत्वात्तदधिकारं न कल्पयन्ति। एवं ब्रह्मोपासनविधयोऽपि त्रैवर्णिकगताध्ययनसिद्धानन्यार्थसाकाङ्क्षज्ञानतो लब्धानुष्ठानतयाऽन्यथासिद्धत्वान्न शूद्राधिकारं कल्पयन्ति। अनन्यथासिद्धं हि कल्पकम्। किञ्च अध्ययनस्यापि प्रयोजकतया कल्पनागौरवं स्यात् 'रथकारोऽग्नीनादधीत' इति विधिरध्ययनसिद्धज्ञानत्रैवर्णिकैरनिर्वृत्तानुष्ठानतया अनन्यथासिद्धत्वादधिकारं कल्पयतीति वैषम्यम्। किञ्च रथकारादीनां 'रथकारोऽग्नीनादधीत' इति विधिवाक्येनैवाधिकारित्वेन विशेषतश्श्रुतत्वात्तदपेक्षितमन्त्राध्ययनाधिकारमात्रं कल्प्यम्; इह विशेषतश्शूद्रमुद्दिश्योपासनविधानाभावादुपासनाधिकारस्तदौपयिकाध्ययनाधिकारश्च कल्प्य इति गौरवं स्यात् अतोऽनधिकार इति। संवर्गविद्यायां शूद्रशब्दश्च नोपासनाधिकारज्ञापकः रथकारादिशब्दवद्विधिवाक्यगतत्वाभावात्, तथा सति अनधिकारकण्ठोक्तेस्स्यात् शूद्रशब्दोऽर्थवादगतः॥

नन्वर्थवादस्यापि स्वार्थे प्रामाण्यमुक्तम्, सत्यं, तत्तु बाधकाभावे सति भवति वैदिकविधीनामध्ययनसिद्धस्वाध्यायजन्यज्ञानसापेक्षत्वं बाधकम्। अध्ययनस्यापि प्रयोजकत्वे गौरवं स्यादित्युक्तम्। वक्ष्यमाणो रूढिप्रतिकूललिङ्गसद्भावोऽवयवशक्त्यनुकूललिङ्गसद्भावश्च बाधकः। रूढिप्राबल्यमर्थाविरोधेऽनुकूललिङ्गसद्भावे च भवति नत्वर्थविरोधे, अतएव हि 'गङ्गायां घोषः' इत्यत्र गङ्गापदस्य लक्षणा 'रथकारोऽग्नीनादधीत' इत्यत्रापि 'सौधन्वानसृभवश्शूरचक्षसः' इति सौधन्वत्वमनुकूललिङ्गं दृश्यते ब्राह्मणादेश्च शिल्पनिषेधोऽवगम्यते। अतोऽर्थविरोधात् शूद्रशब्दस्य रूढिर्दुर्बला। अतोऽनधिकारः अयञ्चार्थः 'शुगस्येति' सूत्राभिप्रेत इह प्रतिपत्तिसौकर्यायोक्तः॥

नन्वेवमितिहासपुराणद्वारा शूद्रस्यापि ब्रह्मज्ञानं सम्भवतीत्यत्राह—इतिहासेति। उपबृंहणीयवेदज्ञानानधिकारादुपबृंहणमात्रेण उपासनोपयोगिज्ञानपौष्कल्यं न सम्भवति, नहि व्याख्येयानधिकारिणो व्याख्यानमात्रेण पुष्कलज्ञानसम्भव इति दृष्टसामर्थ्यवैकल्यम्; 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति वेदार्थविशदीकारहेतुतयैव तदवगमविधानादङ्गतया विहितस्य स्वतन्त्रतयोपादाने तज्जन्यज्ञानस्य पुस्तकपाठादिलब्धवेदार्थज्ञानस्येव शास्त्रविरोधाददृष्टसामर्थ्यवैकल्यं च, अतस्तदविरोधस्य न्याय्यत्वाच्छ्रावणविध्यवैयर्थ्याच्च, शूद्रस्य श्रवणानुज्ञानं पुण्यकथाऽवगतिद्वारेण पापक्षयफलार्थं नतूपासनार्थमित्यर्थः। यद्येवं वेदवाक्यार्थज्ञानमुपासनाङ्गं कथं तर्हि विदुरादीनामुपासनसम्भव इत्यत्राह—विदुरादयस्त्विति। तेषामप्युपासने प्रथमप्रवृत्तिर्न शूद्रजन्मनि अपितु पूर्वजन्मसिद्धैव पाश्चात्येषु जन्मनि प्राक्तनज्ञानप्रमोषाभावादवर्जनीय

## श्रीभाष्यम्

यत्तु संवर्गविद्यायां शुश्रूषोश्शूद्रेति सम्बोधनं शूद्रस्याधिकारं सूचयति इति, तत्रेत्याह–' शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि '। शुश्रूषोर्जानश्रुतेः पौत्रायणस्य ब्रह्मज्ञानवैकल्येन हंसोक्तानादरवाक्यश्रवणात्तदैव ब्रह्मविदो रैक्वस्य सकाशं प्रत्याद्रवणाच्च शुगस्य सञ्जातेति हि सूच्यते। अतस्स शूद्रेत्यामन्त्र्यते; न चतुर्थवर्णत्वेन। शोचतीति हि शूद्रः। ' शुचेर्दश्च ' (उणादिषु) इति रप्रत्यये धातोश्च दीर्घे चकारस्य च दकारे शूद्र इति भवति। अतश्शोचितृत्वमेवास्य शूद्रशब्दप्रयोगेन सूच्यते; न जातियोगः। जानश्रुतिः किल पौत्रायणो बहुद्रव्यप्रदो बह्वन्नप्रदश्च बभूव। तस्य धार्मिकाग्रेसरस्य धर्मेण प्रीतयोः कयोश्चिन्महात्मनोरस्य ब्रह्मजिज्ञासामुत्पिपादयिषितोः हंसरूपेण निशायामस्याविदूरे गच्छतोरन्यतर इतरमुवाच 'भो भोयि भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षीत्' (छां.४.१.२) इति। एवं जानश्रुतिप्रशंसारूपं वाक्यमुपश्रुत्य परो हंसः प्रत्युवाच ' कम्बर एनमेतत्सन्तं सयुग्वानमिव रैक्वमात्थ ' (४.१.३) इति। कं सन्तमेनं जानश्रुतिं सयुग्वानं रैक्वं ब्रह्मज्ञमिव गुणश्रेष्ठमेतदात्थ; स ब्रह्मज्ञो रैक्व एव लोके गुणवत्तरः; महता धर्मेण संयुक्तस्याप्यस्य जानश्रुतेरब्रह्मज्ञस्य को गुणः, यद्गुणजनितं तेजो रैक्वतेज इव मां दहेदित्यर्थः। एवमुक्तेन परेण कोऽसौ रैक्व इति पृष्टः लोके यत्किञ्चित्साध्वनुष्ठितं कर्म, यच्च सर्वचेतनगतं विज्ञानम्, तदुभयं यदीयज्ञानकर्मान्तर्भूतम्, स रैक्व इत्याह। तदेतद्धंसवाक्यं ब्रह्मज्ञानविधुरतया आत्मनिन्दागर्भं तद्वत्तवाच रैक्वप्रशंसारूपं जानश्रुतिरुपश्रुत्य तत्क्षणादेव क्षत्तारं रैक्वान्वेषणाय प्रेष्य तस्मिन्विदित्वा आगते स्वयमपि

## श्रुतप्रकाशिका

तदनुज्ञप्तिमात्रमेवेत्यर्थः। विदुरादीनामपीतिहासपुराणश्रवणात् ज्ञानसिद्धिरिति यदितरैरुच्यते तदयुक्तम्

> धर्मव्याधादयोऽप्यन्ये पूर्वाभ्यासाज्जुगुप्सिते। वर्णावरत्वे संप्राप्तास्संसिद्धिं श्रमणी यथा॥

इति शौनकवचनविरोधात् एवमर्थसिद्धस्सूत्रकाराभिप्रेतो हेत्वन्तरपरिहार उक्तः, अथ प्रधानयुक्तिपरिहारपरं सूत्रमवतारयितुमाह—यत्त्विति। शोचितृत्वं शूद्रशब्दार्थः तत्र शोककारणं शोककार्यं च हेतुत्वेनाह— शुश्रूषोरित्यादिना। अनादरवाक्यश्रवणं शोककारणं आद्रवणं तत्कार्यम्। शूद्रशब्दस्य शोचितृत्ववाचकत्वं कथमित्यत्राह–शुचेर्दश्चेतीति। रक्प्रत्ययः प्रकरणसिद्धश्चकाराकृष्टः. ' अमितम्योर्दीर्घश्च ' इति सूत्रे दीर्घश्चेत्यंशोऽनुवर्तत इति भावः॥ परैर्निरुक्तप्रक्रियया आद्रवणमप्यन्तर्भाव्य शूद्रशब्दनिर्वाहः कृतः। मुख्यानिर्वाहे सम्भवति सोऽनुपपन्न इति भावः। पाणिनीयनिर्वाहो मुख्यः तदनन्तरमौणादिकः ततो नैरुक्तः तत्रौणादिकनिर्वाहस्य सम्भावितत्वात् स एवात्र कृतः अनादरवाक्यश्रवणस्य आद्रवणस्यापि शूद्रशब्दवाच्यत्वं नसूत्रविवक्षितम् उपपादकतयोपादानस्य द्वयोरपि तुल्यत्वात्। शुच एव ह्युपपद्यते प्रतीयते, प्रथमान्तनिर्देशात्। श्रवणद्रवणशब्दौ हि पञ्चम्यन्तौ, तस्माच्छोक एव शूद्रशब्दप्रवृत्तिनिमित्तम्। अनादरवाक्यश्रवणादीनां वैशद्यार्थमुपन्यस्यति जानश्रुतिः किलेति। भल्लाक्षः हंसः समं दिवा स्वर्गेण समं स्वर्गेऽपि तत्तेजः प्रसृतमित्यर्थः; यद्वा दिवसेन सममित्यर्थः, निशायामित्युक्तत्वात् माप्रसाङ्क्षीः, माप्रसक्तस्त्वाः माप्रधाक्षीत् मा दहेदित्यर्थः परो हंस इति। श्रुतौ परशब्दो हंसवाचीति भावः। हंसान्तरवाक्यस्यानादरगर्भतां व्यनक्ति कं सन्तमिति। सयुग्वानमित्यस्यार्थमाह–गुणश्रेष्ठमिति। यद्वा युग्वा शकटं तद्वन्तमित्यर्थः, गुणश्रेष्ठमिति प्रकरणसिद्धार्थोक्तिः। ' उपास्स ' इति मध्यम

श्रीभाष्यम्

रैक्वमुपसद्य गवां षट्शतं निष्कमश्वतरी रथं च रैक्वायोपहृत्य रैक्वं प्रार्थयामास ' अनुम -एतां भगवो देवतां शाधि यां देवतामुपास्से ' (छां.४.१.२) इति त्वदुपास्यां परां देवतां ममानुशाधीत्यर्थः । स च रैक्वस्स्वयोगमहिमविदितलोकत्रयो जानश्रुतेर्ब्रह्मज्ञानविधुरतानि-मित्तानादरगर्भहंसवाक्यश्रवणेन शोकाविष्टतां तदनन्तरमेव ब्रह्मजिज्ञासयोद्योगं च विदि-त्वाऽस्य ब्रह्मविद्यायोग्यतामभिज्ञाय चिरकालसेवां विना द्रव्यप्रदानेन शुश्रूषमाणस्यास्य यावच्छक्तिप्रदानेन ब्रह्मविद्या प्रतिष्ठिता भवतीति मत्वा तमनुगृह्णन् तस्य शोकाविष्टतामु-पदेशयोग्यताख्यापिकां शूद्रशब्देनामन्त्रणेन ज्ञापयन्निदमाह-' अहहारे त्वा शूद्र तवैव सह गोभिरस्तु ' (छां.४.२.३) इति । सह गोभिरयं रथस्तवैवास्तु । नैतावता मह्यं दत्तेन ब्रह्म जिज्ञासया शोकाविष्टस्य तव ब्रह्मविद्या प्रतिष्ठिता भवतीत्यर्थः । स च जानश्रुतिर्भूयोऽपि स्वशक्त्यनुगुणमेव गवादिकं धनं कन्यांच प्रदायोपससाद । स रैक्वः पुनरपि तस्य योग्यता-मेव ख्यापयन् शूद्रशब्देनामन्त्र्याह—' आजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथा ' (छां ४.२.५) इति । इमानि धनानि शक्त्यनुगुणान्याजहर्थ ; अनेनैव द्वारेण चिरसेवया विनाऽपि मां त्वदभिलषितं ब्रह्मोपदेशरूपवाक्यमालापयिष्यसीत्युक्त्वा तस्मा उपदिदेश । अतः शूद्र शब्देन विद्योपदेशयोग्यताख्यापनार्थं शोक एवास्य सूचितः । न चतुर्थवर्णत्वम् ॥

## सू–२४ क्षत्रियत्वगतेश्च (१-३-३४)

' बहुदायी ' ' (छां.४.१.१) इति दानपतित्वेन ' बहुपाक्यः ' इत्यादिना ' सर्वत एव मेतदन्नमत्स्यन्ति ' (छां.४.१.१) इत्यन्तेन बहुतरपक्वान्नप्रदायित्वप्रतीते· सहस्त्रजिहानएव

श्रुतप्रकाशिका

पुरुषनिर्देशाभिप्रायं व्यञ्जयन्नाह— त्वदुपास्यामिति । यदुपासनात्तवेदृशी प्रशस्तिर्जाता तं मे ब्रूहीत्यभिप्राय इत्यर्थः चिरकालेति चिरकालसेवा यावच्छक्तिप्रदानं वा ब्रह्मविद्या प्रतिष्ठा हेतुरित्यर्थः तमनुगृह्णन् नतु रागादित्यर्थः आज हर्थेति । आजहार भवानिति भवच्छब्दाध्याहारेण छान्दसव्यत्ययेन वा श्रुतियोजनेत्यभिप्रायः । यद्यपि दक्षाश्वमेधाना जहारेत्यादिष्वाङ्पूर्वस्य हरतेरर्थान्तरदर्शनेन नानार्थत्वसम्भवाद नूनं प्रतिगृहीतवानसीत्युत्तमपुरुषतया व्याख्यातुं श क्यते । तथाऽपि ' अग्नयेसमिधमाहार्षम् ' ' अथामेध्येनोमध्वाजहार ' इति दानार्थतया वैदिकप्रयोगप्राचुर्यदर्श नात् ' अनेनैव मुखेनालापयिष्यथा ' इत्यालापनहेतुतया प्रतिसंधीयमानस्याहरणस्य स्वरसत आलापन समानकर्तृक-ताप्रतीतेश्च मध्यमपुरुषत्वेन व्याख्यातम् ॥

## सू–३४ क्षत्रियत्वगतेश्च (१,३-३४)

शूद्रशब्दस्य यौगिकार्थानुकूलहेतुरुक्तः, अथ रूढिसिद्धार्थनिरुद्धहेतुरुच्यते । सजिहानः आसनमुञ्झन् उत्तिष्ठ न्नेवेत्यर्थः ॥

उत्तरसूत्रमवतारयति तदेवमिति ।–

श्रीभाष्यम्

क्षत्तारमुवाच ' (४.१.५) इति क्षत्तृप्रेषणाद्बहुग्रामप्रदानावगतजनपदाधिपत्याच्चास्य जानश्रुतेः क्षत्रियत्वप्रतीतेश्च न चतुर्थवर्णत्वम् ॥

तदेवमुपक्रमगताख्यायिकायां क्षत्रियत्वप्रतीतिरुक्ता । उपसंहारगताख्यायिकायामपि क्षत्रियत्वमस्य प्रतीयत इत्याह—

## सू—३५ उत्तरत्र चैत्ररथेन लिंगात् [१.३.३५]

अस्य जानश्रुतेरुपदिश्यमानायामस्यामेव संवर्गविद्यायामुत्तरत्र कीर्त्यमानेनाभिप्रतारिनाम्ना चैत्ररथेन क्षत्रियेणास्य क्षत्रियत्वं गम्यते । कथम् ? ' अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे ' (छां.४.३.५) इत्यादिना ' ब्रह्मचारिन्नेदमुपास्महे ' (४.३.७) इत्यन्तेन कापेयाभिप्रतारिणोर्भिक्षमाणस्य ब्रह्मचारिणश्च संवर्गविद्यासम्बन्धित्वं प्रतीयते । तेषु चाभिप्रतारी क्षत्रियः, इतरौ ब्राह्मणौ । अतोऽस्यां विद्यायां ब्राह्मणस्य तदितरेषु च क्षत्रियस्यैवान्वयो दृश्यते ; न शूद्रस्य । अतोऽस्यां विद्यायामन्विताद्द्विकाद्ब्राह्मणादन्यस्य जानश्रुतेरपि क्षत्रियत्वमेव युक्तम् ; न चतुर्थवर्णत्वम् । नन्वस्मिन्प्रकरणेऽभिप्रतारिणश्चैत्ररथत्वं क्षत्रियत्वं च न श्रुतम् ; तत्कथमस्याभिप्रतारिणश्चैत्ररथत्वम् ? कथं वा क्षत्रियत्वम् ? तत्राह—लिङ्गात्-इति । ' अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिम् ' (छां.४.३.५) इत्यभिप्रतारिणः कापेयसाहचर्याल्लिङ्गादस्याभिप्रतारिणः कापेयसम्बन्धः प्रतीयते ; अन्यत्र च ' एतेन वै चैत्ररथं कापेया अयाजयन् ' (ताण्ड्य.२.१२.५)इति कापेयसम्बन्धिनश्चैत्ररथत्वं श्रूयते ; तथा चैत्ररथस्य क्षत्रियत्वं ' तस्माच्चैत्ररथो नामैकः क्षत्रपतिरजायत ' (शतपथ.११.५.३.१३) इति ; अतोऽभिप्रतारिणश्चैत्ररथत्वं क्षत्रियत्वं च गम्यते ॥

श्रुतप्रकाशिका

## सू-३५ उत्तरत्रचैत्ररथेन लिंगात् (१.३.३५)

कथमिति । चैत्ररथः क्षत्रियश्चेज्जानश्रुतिरपि क्षत्रियस्स्यादिति नहि नियम इत्यर्थः । उत्तरमाह-अथहेति । परिविष्यमाणौ सूदेन भोज्यमानौ ब्रह्मचारिणा भिक्षणं कापेयाभिप्रतारिणोस्त्रैवर्णिकत्वलिङ्गमित्यर्थसिद्धम् । एकत्र ब्राह्मणक्षत्रियजातिद्वयसम्बन्धितयाऽवगतायामन्यत्रापि ब्राह्मणसम्बन्धितया निर्णीतायां तत्सम्बन्धिपुरुषान्तरान्वयसन्देहे सत्यप्रायन्यायात्तस्य पुरुषस्य ब्राह्मणक्षत्रिययोरन्यतरत्वे पारिशेष्येण क्षत्रियत्वं च निश्चीयत इत्यर्थः । चैत्रंलिङ्गादिति पदव्याख्यातु चोद्यमुखेनाकाङ्क्षां दर्शयति नन्विति । अभिप्रतारिणश्चैत्ररथत्वं तस्य क्षत्रियत्वं च नावगतमित्यर्थः । किमत्र लिङ्गं विवक्षितमित्यत्राह—अथहेति । कापेयसाहचर्यात् कापेयसहपाठादित्यर्थः , कापेयसहपाठबलेन कापेयसम्बन्धसिद्धः तेन तत्पुरोहितकस्य चैत्ररथत्वं सिद्धं तेन क्षत्रियत्वमवगतमित्यर्थः ॥

उत्तरसूत्रसङ्गतिमाह-तदेवमिति । शूद्रशब्दस्य रूढिसिद्धार्थविरोधिलिङ्गं यौगिकार्थानुगुणलिङ्गं चेत्युभयविधलिङ्गमपि शूद्रानधिकारज्ञापकमित्यर्थः ।

श्रीभाष्यम्

तदेवं न्यायविरोधिनि शूद्रस्याधिकारे लिङ्गं नोपलभ्यत इत्युक्तम्, इदानीं न्यायसिद्ध शूद्रस्यानधिकारश्रुतिस्मृतिभिरनुगृह्यत इत्याह-

## सू--३६ संस्कारपरामर्शात्तदभावाभिलापाच्च (१.३.३६)

महाविद्योपदेशेषूपनयनसंस्कारः परामृश्यते-' उप त्वा नेष्ये ' (छां.४.४.५) ' तं ह्योप निन्ये ' (आपस्तम्बश्रौत) इत्यादिषु। शूद्रस्य चोपनयनसंस्काराभावोऽभिलप्यते ' न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति ' [म.१०.१२६] 'चतुर्थो वर्ण एकजातिर्न च संस्कारमर्हति' (गौत.१०.अ.९.सू) इत्यादिषु ॥

## सू--३७ तदभावनिर्धारणे च प्रवृत्तेः (१.३.३७)

' नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहर ' (छां.४.४.५) इति शुश्रूषोर्जाबालस्य शूद्रत्वाभावनिर्धारणे सत्येव विद्योपदेशप्रवृत्तेश्च न शूद्रस्याधिकारः ॥

## सू--३८ श्रवणाध्ययनार्थप्रतिषेधात्( १.३.३८)

शूद्रस्य वेदश्रवणतदध्ययनतदर्थानुष्ठानानि प्रतिषिध्यन्ते ' पद्यु ह वा एतच्छ्मशानं यच्छूद्र स्तस्माच्छूद्रसमीपे नाध्येतव्यम् ' ( ) ' तस्माच्छूद्रो बहुपशुरयज्ञीयः '

श्रुतप्रकाशिका

इदानीमिति। अयमनधिकारः श्रुतिस्मृतिभिरनुगृह्यत इत्याहत्यर्थः ॥

## सू--३६ संस्कारपरामर्शात्तदभावाभिलापाच्च (१.३.३६)

संस्कारपरामृश्यता ततः किमित्यत्राह-शूद्रस्येति। ' न शूद्रे पातकं किञ्चित् ' सन्ध्यावन्दनाद्यभावनिमित्त पाप नास्तीत्यर्थः। चतुर्थो वर्ण एकजातिः नतु द्विजातिरित्यर्थः ॥

## सू--३७ तदभावनिर्धारणे च प्रवृत्तेः (१.३.३७)

तच्छब्दस्य पूर्वसूत्रप्रकृतसंस्कारवाचितायां एतत्सूत्रविषयवाक्यानुगुण्याभावात्तच्छब्दः परमप्रकृतपरामर्शीत्याह— शूद्रत्वाभावेति ॥

## सू--३८ श्रवणाध्ययनार्थप्रतिषेधात् [१.३.३८]

अर्थशब्देन तदनुष्ठानं विवक्षितम्। पद्यु जङ्गमम् समीपोच्चारणप्रतिषेधादेव श्रवणाध्ययनप्रतिषेधोऽर्थसिद्धः। अर्थानुष्ठानप्रतिषेधं दर्शयति तस्माच्छूद्र इति। ननु तत एवार्थानुष्ठाननिषेधोऽपि सिद्धः, तस्य साक्षादेवत्वश्रो श्रूयते,

श्रीभाष्यम्

इति । बहुपशुः पशुसदृश इत्यर्थः । अनुपशृण्वतोऽध्ययनतदर्थज्ञानतदर्थानुष्ठानानि नसम्भवन्ति ; अतस्तान्यपि प्रतिषिद्धान्येव ॥

## सू—३९ स्मृतेश्च (१.३.३९)

स्मर्यते च श्रवणादिनिषेधः ' अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीरभेदः ' (गौतमध.२.१२.३) इति, ' नचास्योपदिशेद्धर्मं नचास्य व्रतमादिशेत् ' (मनु.४.८०) इति च ; अतश्शूद्रस्यानधिकार इति सिद्धम् ॥

येतु निर्विशेषचिन्मात्रं ब्रह्मैव परमार्थः । अन्यत्सर्वं मिथ्याभूतम्, बन्धश्चापरमार्थिकः स च वाक्यजन्यवस्तुयाथात्म्यज्ञानमात्रनिवर्त्यः तन्निवृत्तिरेव मोक्षः—इति वदन्ति ; तैर्ब्रह्मज्ञाने शूद्रादेरनधिकारो वक्तुं न शक्यते ; अनुपनीतस्य अनधीतवेदस्याश्रुतवेदान्तवाक्यस्यापि यस्मात्कस्मादपि निर्विशेषचिन्मात्रं ब्रह्मैव परमार्थोऽन्यत्सर्वं तस्मिन्परिकल्पितं मिथ्याभूतमिति वाक्याद्वस्तुयाथात्म्यज्ञानोत्पत्तेः, तावतैव बन्धनिवृत्तेश्च । न च तत्त्वमस्यादिवाक्येनैव ज्ञानोत्पत्तिः कार्या, न वाक्यान्तरेणेति नियन्तुं शक्यम् ; ज्ञानस्यापुरुषतन्त्रत्वात् सत्यां सामग्र्यामनिच्छतोऽपि ज्ञानोत्पत्तेः । नच वेदवाक्यादेव वस्तुयाथात्म्यज्ञाने सति

श्रुतप्रकाशिका

तत्र किं प्रणाड्युपजीवनेनेति पृथगुच्यते पशुबाहुल्यवत्त्व यज्ञार्हत्वौपयिकं कथमनेनायज्ञीयत्वसिद्धिरित्याशङ्कयाव्युत्पत्त्यर्थं बहुपशुशब्दं व्याचष्ट पशुसदृशइत्यर्थइति । ईषदसमाप्तपशुः इति वक्तव्ये सदृशशब्दग्रहणं ईषदसमाप्तेस्सादृश्यपर्यवसानज्ञापनार्थं ' विभाषासुपोबहुच्पुरस्तात्तु ' इति पाणिनीयसूत्रेणेषदसमाप्त्यर्थं बहुच्प्रत्ययस्तस्य पुरस्तात् प्रयोगश्च विहितः । अध्ययनादिनिषेधोऽर्थसिद्धोऽपीत्याह—अनुपशृण्वतइति । ' शूद्रो नाधीयीत ' इति वाक्यमप्यनुसन्धेयम् । अनेन यत्र विशेषनिषेधादन्यत्र वैदिके कर्मणि शूद्रस्याधिकाराशङ्का च निरस्ता भवति ॥

## सू—३९ स्मृतेश्च [१-३-३९]

अथहेत्यादि । अध्ययनादौ प्रायश्चित्तस्मरणमुपदेशनिषेधस्मरणञ्चानधिकारज्ञापकत्वात्तदुभयमपि स्मृतिशब्दविवक्षितमिति भावः, ' रथकारोऽग्नीनादधीत ' इत्यादिषु रूढिर्योगमपहरतीति न्यायेन रूढार्थः स्वीकृतः तदपवादोऽर्थविरोधः । अनुकूललिङ्गसद्भावे विरोधिलिङ्गाभावे च रूढेः प्राबल्यं विरोधिलिङ्गसद्भावस्तदपवाद इत्युक्तं भवति, ' रथकारोऽग्नीनादधीत ' इत्यत्रापि सौधन्वनानृभव इत्यनुकूललिङ्गं ह्युपलभ्यत इति । अस्मिन्नधिकरणे परेषामनवकाशं दर्शयति येत्वित्यादिना । अनुपनीतस्येति । नहि ' नायं सर्पो रज्जुरेषा ' इति वाक्यात् भ्रमनिवृत्तेरुपनयनादिसापेक्षेतिभावः ' तत्त्वमसि ' इत्यतिरिक्तवाक्येन ज्ञानं नोत्पद्यत इत्यत्राह—नचेति । अपुरुषतन्त्रत्वे हेतुमाह—सत्यामिति । व्यतिरिक्तवाक्येनोत्पन्नमपि ज्ञानं नानिवर्तकं भवतीत्यत्राह—नच वेदवाक्यादिति । येनकेनापीति सा-

## श्रीभाष्यम्

बन्धनिवृत्तिर्भवतीति शक्यं वक्तुम् येनकेनापि वस्तुयाथात्म्यज्ञाने सति निवृत्तेः ; पौरुषेयादपि निर्विशेषचिन्मात्रं ब्रह्म परमार्थोऽन्यत्सर्वं मिथ्याभूतमिति वाक्यात् ज्ञानोत्पत्तेस्तावतैव भ्रमनिवृत्तेश्च । यथा पौरुषेयादप्तवाक्याच्छुक्तिकारजतादिभ्रान्तिर्ब्राह्मणस्य शूद्रादेरपि निवर्तते, तद्वदेव शूद्रस्यापि वेदवित्सम्प्रदायागतवाक्याद्वस्तुयाथात्म्यज्ञानेन जगद्भ्रमनिवृत्तिरपि भविष्यति । 'नचास्योपदिशेद्धर्मम्' [मनु.४.८०] इत्यादिना वेदविदश्शूद्रादिभ्यो न वदन्तीति च न शक्यं वक्तुम् , तत्त्वमस्यादिवाक्यावगतब्रह्मात्मभावानां वेदशिरसि वर्तमानतया दग्धाखिलाधिकारत्वेन निषेधशास्त्रकिङ्करत्वाभावात् , अतिक्रान्तनिषेधैर्वा कैश्चिदुक्ताद्वाक्याच्छूद्रादेः ज्ञानमुत्पद्यत एव । न चवाच्यं शुक्तिकादौ रजतादिभ्रमनिवृत्तिवत्पौरुषेयवाक्यजन्यतत्त्वज्ञानसमनन्तरं शूद्रस्य जगद्भ्रमो न निवर्तत इति । तत्त्वमस्यादिवाक्यश्रवणानन्तरं ब्राह्मणस्यापि जगद्भ्रमानिवृत्तेः। निदिध्यासनेन द्वैतवासनायां निरस्तायामेव तत्त्वमस्यादिवाक्यं निवर्तकज्ञानमुत्पादयतीति चेत् पौरुषेयमपि वाक्यं शूद्रादेस्तथैवेति न कश्चिद्विशेषः । निदिध्यासनं हि नाम ब्रह्मात्मभावाभिधायिवाक्यं यदर्थप्रतिपादनयोग्यम् तदर्थभावना ; सैव विपरीतवासनां निवर्तयतीति दृष्टार्थत्वं निदिध्यासनविधेः। वेदानुवचनादीन्यपि विविदिषोत्पत्तावेवोपयुज्यन्त इति शूद्रस्यापि विविदिषायां जातायां पौरुषेयवाक्यान्निदिध्यासनादिभिर्विपरीतवासनायां निरस्तायां ज्ञानमुत्पत्स्यते । तेनैवापारमार्थिको बन्धो निवर्तिष्यते । अथवा तर्कानुगृहीतात्प्रत्यक्षादनुमानाच्च निर्विशेषस्वप्रकाशचिन्मात्रप्रत्यग्वस्तुन्यज्ञानसाक्षित्वं, तत्कृतविविधविचित्रज्ञातृज्ञेयविकल्परूपं कृत्स्नं जगच्चाध्यस्तमिति निश्चित्यैवंभूतपरिशुद्धप्रत्यग्वस्तुन्यनवरतभावनया विपरीतवासनां निरस्य तदेव प्रत्यग्वस्तु साक्षात्कृत्य शूद्रादयोऽपि विमोक्ष्यन्त इति मिथ्याभूतविचित्रैश्वर्यविचित्रसृष्ट्यादलौकिकानन्तविशेषावलम्बिना वेदान्तवाक्येन न किंचित्प्रयोजनमिह दृश्यत

## श्रुतप्रकाशिका

मान्येनार्थशरीरोक्तिः । पक्षमाह—पौरुषेयादपीति । भ्रमनिवृत्तेः न्याय्यत्वादित्यर्थः । सपक्षमाह—यथेति । ततः किमित्यपेक्षाया दृष्टान्तोऽक्तमर्थं पक्षेऽतिदिशति तद्वदिति । शङ्कान्तरमुक्त्वा परिहरति नचेत्यादिना । वेदशिरसि वेदान्ते ननिष्ठत्वात् । यद्वा वेदस्यापि शिरसि निहितचरणत्वादिति यावत् निषेधशास्त्रकिङ्करत्वाभावादित्यनेन

दग्धाखिलाधिकारत्वात् ब्रह्मज्ञानाग्निना मुनिः । वर्तमानश्श्रुतेर्मूर्ध्नि नैव स्याद्वेद किङ्करः ॥

इति नैष्कर्म्यसिद्धि ग्रन्थस्सार्यते, मुखान्तरेण ज्ञानोदयसम्भवमाह—अतिक्रान्तेति । प्रत्यक्षविरोधमाशङ्क्य परिहरति नचेत्यादिना । शूद्रस्य निदिध्यासनेऽनधिकाराद्वाक्यार्थज्ञानोत्पत्त्या बन्धनिवृत्तिरित्यत्राह—निदिध्यासनहीति । नहि निदिध्यासनमदृष्टद्वारा किञ्चित्करोति, निवर्त्यसत्यत्वप्रसङ्गात् अदृष्टद्वारा किञ्चित्करत्वे सतिहि यज्ञादाविव शूद्रस्यानधिकारः नच तदस्ति । अतो 'नाय सर्पः' इति वाक्येन सर्पमिथ्यात्ववासनायामिव शूद्रादेरपि निदिध्यासनेऽधिकारो न निषेद्धुं शक्यत इति भावः । शूद्रस्य यज्ञादिकर्मानधिकारात्तत्सापेक्षं वाक्यार्थज्ञानं न जायत इत्यत्राह—वेदानुवचनादीन्यपीति । शूद्रस्यापि जन्मान्तरानुष्ठितयज्ञादिकर्मणस्सञ्जातविविदिषस्य शूद्रजन्मनि निदिध्यासनमाप्तवाक्यावगताद्वैतविषयं कर्तुं शक्यमिति भावः । मुखान्तरेण ज्ञानसम्भवमाह—अथवेति । तर्कानुगृहीतादिति । स्वदुक्तानां प्रमा-

## श्रीभाष्यम्

इति शूद्रादीनामेव ब्रह्मविद्यायामधिकारस्सुशोभनः। अनेनैव न्यायेन ब्राह्मणादीनामपि ब्रह्मवेदनसिद्धेरुपनिषच्च तपस्विनी दत्तजलाञ्जलिस्स्यात्। नच वाच्यं नैसर्गिकलोकव्यवहारे भ्राम्यतोऽस्य केनचिदयं लौकिकव्यवहारो भ्रमः, परमार्थस्त्वेवमिति समर्पिते सत्येव प्रत्यक्षानुमानवृत्तबुभुत्सा जायत इति तत्समर्पिका श्रुतिरप्यास्थेयेति। यतो अमयमीशानां साङ्ख्यादय एव प्रत्यक्षानुमानाभ्यां वस्तुनिरूपणं कुर्वन्तः प्रत्यक्षानुमानवृत्तबुभुत्सां जनयन्ति। बुभुत्सायां च जातायां प्रत्यक्षानुमानाभ्यामेव विविक्तस्वभावाभ्यां नित्यशुद्धस्वप्रकाशाद्वितीयकूटस्थचैतन्यमेव सत् अन्यत्सर्वं तस्मिन्नध्यस्तमिति सुविवेचनम्। एवंभूते स्वप्रकाशे वस्तुनि श्रुतिसमधिगम्यं विशेषान्तरं च नाभ्युपगम्यते। अध्यस्तातद्रूपनिवर्तिनी हि श्रुतिरपि त्वन्मते। नच सत आत्मन आनन्दरूपताज्ञानायोपनिषदास्थेया, चिद्रूपताया एवं सकलेतरातद्रूपव्यावृत्ताया आनन्दरूपत्वात्। यस्य तु मोक्षसाधनतया वेदान्तवाक्यैर्विहितं ज्ञानमुपासनरूपम् तच्च परब्रह्मभूतपरमपुरुषप्रीणनम् तच्च शास्त्रैकसमधिगम्यम् उपासनदशाखंचोपनयनादिसंस्कृतानीतस्वाध्यायजनितं ज्ञानं विवेकविमोकादिसाधनानुगृहीतमेव स्वोपायतया स्वीकरोति, एवंरूपोपासनप्रीतः पुरुषोत्तम उपासकं स्वाभाविकात्मयाथात्म्यज्ञानदानेन कर्मजनिताज्ञानं नाशयन्बन्धान्मोचयतीति पक्षः। तस्य यथोक्तया नीत्या शूद्रादेरनधिकार उपपद्यते॥

### इति अपशूद्राधिकरणम्

## श्रुतप्रकाशिका

णानुपपत्तिप्रमेयानुपपत्त्यादीनां तर्कार्णवगमोहि नश्रुत्यपेक्ष इति भावः। सुशोभनइति। इतःपूर्वमविद्यमानमीश्वरेशितव्यादिभेदज्ञानं जनयद्वेदवाक्यं हित्वा केवलाद्वैतज्ञानजनकतर्कावलम्बिनामेव ब्रह्मविद्याधिकारस्सुलभ इत्यर्थः। श्रुतिवैयर्थ्यमनुपपत्त्यन्तरमाह—अनेनैवेति। 'अप्राप्ते हि शास्त्रमर्थवत्' अतः प्राप्तार्थत्वात् भेदज्ञानजनकत्वाच्च ब्राह्मणादेरपि श्रुतिरनादरणीयेत्यर्थः। तपस्विनी शोचनीया देशकालवताद्यनेकनियमवतीति भावः। नचेति। नैसर्गिकशब्दोऽनादित्वपरः प्रबाधकत्वेन श्रुतिरपेक्षितेति शङ्काग्रन्थार्थः। दूषयति यतइति। साङ्ख्यहैरण्यगर्भनैयायिकवैशेषिकबौद्धार्हतादिभिरेव प्रत्यक्षानुमानादिमूलेन वस्तुनिरूपणं प्रसक्तम्, अतो न श्रुत्यपेक्ष इत्यर्थः। सुविवेचमिति। विवेकं हि श्रुत्यपेक्षा इतिभावः तर्कागोचरविशेषान्तरसिद्ध्यर्थं श्रुत्यपेक्षेत्यत्राह—एवंभूतइति। श्रुतेः सात्त्विकविशेषानवबोधकत्वमुपपादयति अध्यस्तेति। आनन्दज्ञानाय तदपेक्षेत्यत्राह—नचेति। असुखव्यावृत्तिरानन्दत्वं तत्सकलेतरव्यावृत्तिमात्रतयैव सिद्ध्यतीत्यर्थः स्वपक्षे सर्वमुपपन्नमित्याह—यस्यत्विति॥

### इति अपशूद्राधिकरणम्



## अथ एतद्गर्भे अपशूद्राधिकरणम्

### गूढार्थसंग्रहः

' मनुष्याधिकारत्वात् ', इत्यनान्ययोगव्यवच्छेदो नास्तीति निरूपितमधिकरणद्वयेन, तथा अयोगव्यवच्छेदोऽपि नास्तीति साधनायेदमधिकरणम् ' आजहारेमाञ्शूद्र इत्यत्र शूद्रशब्दस्य जातिविशिष्ट-रूढत्वेन तद्भङ्गे मानभावात् तस्यापि ब्रह्मविद्यायामधिकारः रथकारशब्दस्य रूढ्या कर्मण्यधिकारवत् । प्रकृतेऽप्यध्ययनाभावेऽपि इतिहासपुराणाभ्या ज्ञानस्योदयादिति पूर्वःपक्षः एवमेवाक्षेपः मतत्रयेऽप्यविशिष्टः । शूद्रशब्दस्य यौगिकत्वमेवेत्यपि सर्वसंमत् सूत्र योगार्थनिरूपणपरमित्यपि । तत्र ' शुगस्य तदनादरश्रवणात्तदाद्रवणात् ' इत्यत्र शोकः आद्रवणचेत्युभय शूद्रशब्दार्थ इत्युभे वदतः, तत्र शोकएव योगार्थ इति सिद्धान्तः । अनादरश्रवण शोकहेतु आद्रवण शोककार्यमपि शोकज्ञापकं भवति, उभयोः कार्यकारणभावापन्नत्वेन साम्येन समुच्चयासंभवात् चशब्दप्रयोगः शुगस्येत्यत्र यस्य शोकः सएव शूद्रः शोकोऽस्यास्तीति व्युत्पत्त्या सएव शूद्रशब्दार्थः तदाद्रवणात् इत्यत्र तदाआद्रवणादिति छेदः अनादरश्रवणानन्तरमेव शोकः ततः अव्यवधानेनाद्रवणोक्त्या शोकातिशयस्सूच्यते—इतरमतद्वये शोकातिशयसूचक न वर्तते आद्रवणात् इत्याङाउपसर्गेण 'द्रुगतौ' इति धात्वर्थः योगार्थत्वेन विवक्षित इति नैव निश्चेतुं शक्यते, किंच सूच्यतेहि इत्यनन्तरं वर्तते उभयोर्योगार्थत्वाभ्युपगमे अर्थद्वयस्यापि सूचनमावश्यकम् शोकस्यैव सूचन नत्वाद्रवणस्य आङुपसर्गेण द्विवारं गमनं बोध्यते तेनापि शोकातिशयः प्रतीयते । एवं वदता सूत्रकारेण योगार्थस्य पूर्वमुपस्थितिस्थले रूढेर्भङ्ग इति न्यायस्सूचितः । 'शुचेर्दश्च इति प्रक्रिययोणादिप्रत्ययान्तश्शूद्रशब्दः उणादयो बहुळमिति पाणिनिना स्वसंमतेः प्रदर्शनेन नैरुक्तापेक्षया औणादिकत्वकल्पनमेव युक्तम् । औणादिकत्वेऽपि जातिवाचकत्वव्यवच्छेदो न संभवतीति नव्यानामाक्षेपश्चानवकाशः । सूत्रकृतैव रूढिनिरसनार्थं योगार्थप्रदर्शनेन रूढ्यपेक्षया योगार्थस्य प्राबल्यसूचनेन रूढिमात्रावलम्बनेन पूर्वपक्षस्यानवकाश इति सिद्धान्तितत्वात् । अव्युत्पत्तिपक्षे जातिविशिष्टापरित्यागस्याभिप्रेतत्वात् अव्युत्पत्तिपक्षे रूढिरेव । सूत्रकृता व्युत्पत्तिपक्ष एव स्वीकृतः सूत्रमेव निरुक्तिपरमित्युभयोःसंमतम् सूत्रव्यतिरिक्तनिरुक्तिः उभाभ्यामपि नोदाहृता सूत्रघटकपञ्चम्यन्तपद द्वयार्थस्य सूत्रघटकप्रथमान्तार्थशोकहेतुत्वमिति पदस्वारस्य सिद्धान्ते । मतद्वये शोकाद्रवणयोरुभयोः शूद्रशब्दार्थ वाभ्युपगमेन उभाभ्यां चतुर्थजातिर्न विवक्षिता इत्येव सिद्धान्तस्य करणीयतया एकस्य प्रथमान्तता अन्यस्य पञ्चम्यन्तता इत्य स्वारस्यम् । उभयसमतार्थं. यदि सूत्रकृतो विवक्षितस्स्यात् ' तदनादरश्रवणात् शुचा तदाद्रवणात्सूच्यतेहि ', इत्येव सूत्रमवर्तिष्यत ' राजा पौत्रायणः शोकात् शूद्रेति मुनिनोदितः ' इति छान्दोग्यभाष्योदाहृतपाद्मवचनेन शोकस्य एकस्यैव निमित्तत्वञ्चोक्तम् । सूत्रे एकस्यैव प्रवृत्तिनिमित्तता ' शुगस्य' इत्यत्र स्थानश्रुते. शोकः विवक्षितइति कथनेन सूचितम् । ' तदनादरश्रवणात्—तदाद्रवणात् ' इत्यत्र तच्छब्दयोः न्यायरक्षामणौ अन्यार्थत्वकथनेनापि शोकहेतुपरत्वमेवोभयोः सूच्यते । यद्यपि न्यायरक्षामणौ 'उणादिषु सिद्धान्ते प्राचीनासमतपाठकल्पन'मित्यादयो दोषा उक्ताः ॥

तथाऽपि ब्रह्मविद्याऽऽभरणे—' तथा च शुचा शुच प्रतिवाऽऽद्रवणात् शूद्रइति पद पृषोदरवादित्वाद्यौगिक द्रष्टव्यम् । रुज द्रावयतीति रुद्र इत्यादिवत् औणादिकप्रत्ययेन वा यथाकथञ्चित् नैरुक्तप्रक्रियया प्रकृतिप्रत्ययविभागः कल्पनीयः', इति औणादिकप्रक्रिया अङ्गीकृता । एव ' मुसेरक् ' (उणादौ.२.पाद.१८९) ' अमितम्योर्दीर्घश्च ' (१८४) ' अदेर्दीर्घश्च ' (१८५) ' शुचेर्दश्च ' (१८६) इति पाठः सिद्धान्तकौमुद्यामादृत । ' अदेर्दीर्घश्च ' ' शुचेर्दश्च ' इति सूत्रद्वय मनोरमायामप्युपात्तम् । ' आह हरित्वा शूद्रेति श्रुतौतु रूढेर्बाधात् योग एव पुरस्कृतः । तथाचोत्तरतन्त्रे भगवताव्यासेन सूत्रितम् 'शुगस्य तदनादरश्रवणात् इति' इत्यनेनं शुगस्य' इतिसूत्रे औणादिकः योगएव भट्टोजिदीक्षितैः मनोरमायां स्वीकृतः । तद्व्याख्याने लघुशब्दरत्ने च ' शुच रातीति शूद्रः ।' अतोऽनुपसर्गे' इति कः पृषोदरादित्वाद्वर्णव्यत्यय इतिभावः' इत्युक्तम् । ब्रह्मविद्याऽऽभरणे यथाकथञ्चित् नैरुक्तप्रक्रियया, इत्युक्तया नैरुक्तप्रक्रियायाः नादरस्सूच्यते ॥

## गूढार्थसङ्ग्रहः

यद्यपि परिभाषेन्दुशेखरे—' नन्वतः कृकमीत्यत्र कमिग्रहणेन सिद्धे कंसग्रहणं व्यर्थमत आह—उणादयोऽव्युत्पन्नानि प्रातिपदिकानि इति इदमेवास्या ज्ञापकमिति कैयटादयः । कमेस्तु न कसोऽनभिधानात् । युवोरनाकावित्यादौ भाष्ये स्पष्टा । 'ण्वुल् तृचौ' इत्यादौ भाष्ये व्युत्पन्नानीत्यपि । इदं शाकटायनरीत्या पाणिनेस्त्वव्युत्पत्तिपक्ष एवेति शब्देन्दुशेखरे निरूतम् । आयनेयीति सूत्रे भाष्ये स्फुटमेतत् ' इति नागेशेनोक्तम् । अत्र वाक्यार्थचन्द्रिकाव्याख्याया—'केचित्तु जातिव्यक्तिपक्षयोरिव उभयोरपि पक्षयोर्द्वयोर्व्यवस्थया प्रकृतशास्त्रे आश्रयणं युक्तम् । 'उणादयोऽव्युत्पन्नानि' इत्ययमतिदेशः, न तु वस्तुस्थितिकथनम् । आतिदेशिकस्यानित्यत्वाच्च व्युत्पन्नत्वमप्यत्र शास्त्रे निर्बाधम् । अयामन्तेति सूत्रमत्रैवार्थे प्रमाणमित्युच्यताम् । अतएव 'प्रत्ययस्य लुक्' इति सूत्रे कैयटेन उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ' इति भाष्यमुपादाय 'कंसग्रहणादुणादिप्रत्ययान्तानि प्रातिपदिकानि क्वचिद्व्युत्पत्तिकार्यं लभन्ते' इत्यर्थ उक्तः । किञ्च सर्वथैव प्रकृतशास्त्रे व्युत्पत्तिपक्षमनङ्गीकुर्वतां 'ण्वुतृचौ न धातुलोप, आर्धधातुके,ऽपृक्तस्य' इत्यादिषु बहुप्रदेशेषु व्युत्पत्तिपक्षाश्रयणं भगवतः पतञ्जलेरसंबद्धं स्यात् । राज्ञी शकटीत्यादौ 'वृद्धिकारयदाचिन' इति ङीप्प्रत्ययस्य सर्पिषा यजुषेत्यादौ प्रत्ययनिबन्धनस्य षत्वस्य प्रतिदीव्नेत्यादौ धातुत्वनिबन्धनस्य दीर्घस्य च समर्थनं क्लेशोऽपि, तस्मात् आयनेयनयीनीयिय: सूत्रस्थं प्रागुक्तं भाष्यं पक्षान्तरेण परिहाराभिप्रायकं नत्वत्र शास्त्रे व्युत्पत्तिपक्षाभावपरमिति योजनीयम् ॥

अतएव 'इसुसोस्सामर्थ्ये' इतिसूत्रे श्लोकवार्तिककारैः—' अथचेत् कृदन्तमेतत्ततोऽधिकेनैव मे प्राप्तिः । वाक्ये च मे विभाषाप्रतिषेधो न प्रकल्प्येत ' अथचेत्सम्बन्धिशब्दं नित्ये सत्वे तदा विभाषेयम् । सिद्धं च मे समासे प्रतिषेधार्थेऽयत्नोऽयम्' इत्यनेन षत्वविधावुभयोरपि पक्षयोः निर्वाह उपपादित इत्याहुः ' इत्युक्तम् । अतएव 'अखिलभुवनजन्मस्थेम' इत्युपक्रमे स्थेमशब्दोऽपि साधुः ॥

अत्र 'उणादयो बहुलम्' इति सूत्रमेव विवक्षितम् । उणादिषु 'हृ भृ धृ सृ स्तृ शृभ्य इमनिच्' (५९७) इति सूत्रे कतिपयधातुभ्यः इमनिच्चं विधानेऽपि बहुलग्रहणात् स्थाधातोरपि इमनिचि स्थेमेति रूपम् । अत एव न्यायवार्तिकतात्पर्यटीकाया 'स्थेमानं च भावानामुपपादयिष्यते' इत्यादि, तात्पर्यपरिशुद्धौ च संशयपरीक्षाया 'बौद्धादेः निश्चितक्षणिकत्वादेरपि झटिति विघटितसाधनस्य प्रतिवादिसाधनात् परितो निरस्तविभ्रमाशङ्कात् संशयविनाऽपि स्थेमादिनिर्णयोत्पत्तेः' इति, 'निरस्थेमानो दशाननकीर्तयः' इत्यनर्घराघवे षष्ठाङ्के (३६.श्लो) महाकविप्रयोगाः' इत्यादयश्च सङ्गच्छन्ते ॥

उपक्रमोक्तलिङ्गस्य सद्भावेऽपि एकसूत्र कृत्वोत्तरलिङ्गेन क्षत्रियत्वनिर्णयश्च न युक्तः, अतः उपक्रमोक्तलिङ्गानुसारेण पृथगेव सूत्रं कृतम् क्षत्रियत्वमेवासिद्धमित्यत्राह—उत्तरत्रेति । अतएव चशब्दोऽपि नावकाशः । 'क्षत्ता राजान्तःपुररक्षकः' इति कोशात् क्षत्तृप्रेषणं चात्रानुकूलम् । अन्ययोत्तरत्रेत्यस्य वैयर्थ्यमेव, क्षत्रियत्वगतेश्चेति चकारेण प्रथमसूत्रोक्तहेतु समुच्चीयते तृतीयसूत्रे चकाराभावेन तृतीयान्तपञ्चम्यन्ततया पदद्वयनिर्देशेन च पूर्वोक्तहेतुसमुच्चयो न विवक्षितः, किंतु पूर्वोक्तहेतूपष्टम्भकत्वमात्रम् । उपक्रमविरोधो नास्तीति सूचनाय उत्तरत्रेति चैत्ररथेन लिङ्गात् इति नवीनार्थं तथैव सूत्रकृतो विवक्षितं चे चैत्ररथाल्लिङ्गादित्येवावक्ष्यत विभक्तिभेदेनार्थभेदं सूच्यते समभिव्याहृतशब्दस्यापि नाध्याहारः उत्तरत्र चैत्ररथेन क्षत्रियत्वगतेरिति सूत्रार्थः । उत्तरत्रेति सप्तम्या वाक्यप्रतिपाद्यत्वं बोध्यते स्वसम्बन्धित्वेन वाक्यप्रतिपाद्यचैत्ररथेनेति पर्यवसितं, तेन जानश्रुतिः क्षत्रियः क्षत्रियत्वेन निर्णीतचैत्ररथसम्बन्धित्वेनोत्तरवाक्यप्रतिपादितत्वात् । उपक्रमवाक्ये क्षत्रियत्वसाधकहेतुवत् अयमपि हेतुः पर्यवसन्नः तेनोपक्रमप्राबल्येनोपक्रमाविरोधः उपसंहारस्य नास्तीति सिद्धम् । उत्तरत्र चैत्ररथेनेत्यत्र क्षत्रियत्वसाधकहेतोः कथं क्षत्रियत्वमिति शङ्कानिरासाय लिङ्गादिति—संस्कार

## गूढार्थसङ्ग्रह

मर्शादित्यादिसूत्रद्वये विशेषो नास्ति अत , भाष्योक्तार्थे केनाप्याक्षेपो न कृत. । श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्चेति मतद्वयेप्येकं सूत्र, स्यते. श्रवणादिनिषेधादितिपरे तथासति स्मृतेरित्यस्य प्रागेव निर्देश उचित, च-दोऽप्यस्वरस, स्मृतेश्चेति चशब्देन श्रवणाध्ययनार्थप्रतिषेध श्रुतावुक्त इति सूच्यते, एव हेतुद्वयपरे वे स्मृतेश्चेतीतरसूत्रवत् अस्या पृथक्सूत्रत्वमेव युक्तम् भाष्योदाहृतवाक्ये शतपथताण्ड्यब्राह्मणयोरन्वेषणीये—

इति अपशूद्राधिकरणम्

अथ वेदान्तसारः

### सू–३३ शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि [१-३-३३]

' आजहारेमाञ्शूद्र ' (छां ४.२.५) इत्यादौ ब्रह्मोपदेशे शिष्यप्रति शूद्रेत्यामन्त्रणेन शिष्यस्य हंसवाक्यश्रवणाप्रभव शुक्सञ्जातेति सूच्यते । शोचनाच्छूद्र , न जातियोगेन कुत ? तदनादरश्रवणात्—हंसेन रैक्वं प्रति स्वस्मिनकृत अनादरवाक्यश्रवणात् तदेवाचार्यंप्रति आद्रवणात् हिशब्दो हेतौ , यतश्शूद्रेत्याम त्रण जातियोगेन अतश्शूद्रस्य , ब्रह्मोपासनाधिकारो न सूच्यते ॥

### सू–३४ क्षत्रियत्वगतेश्च (१,३-३४)

शुश्रुषो 'क्षत्रियत्वगतेश्च' न जातियोगेन शूद्रेत्यामन्त्रणम् , उपक्रमे ' बहुदायी ' (छा ४ १ १) इत्यादिना दानपति त्वबहुपक्वान्नदादित्वबहुग्रामप्रदानैरस्य हि क्षत्रियत्व गम्यते ॥

### सू–३५ उत्तरत्रचैत्ररथेन लिंगात् (१.३.३५)

उपरिष्टादस्यां विद्यायां ब्राह्मणक्षत्रिययोरेवान्वयो दृश्यते ' अथह शौनकञ्च कापेयमभिप्रतारिणञ्च ' (छां ४.३.५) इत्यादौ । अभिप्रतारीहि चैत्ररथ , अभिप्रतारिण चैत्ररथ त्वम् क्षत्रिय त्व च कापेयसाहचर्य लिङ्गादवगम्यते । प्रकरणान्तरेहि कापेयसहचारिणश्चैत्ररथत्व क्षत्रियत्व चावगतम् ' एतेन चैत्ररथ कापेया अयाजयन् ' (ताण्ड्य २० १२ ५) इति, ' तस्माच्चैत्ररथो नामैक क्षत्रपतिरजायत ' (शत ११.५.३ १३) इति च । अतश्च अय शिष्य न शूद्र ॥

### सू–३६ संस्कारपरामर्शात्तदभावाभिलापाच्च (१.३.३६)

विद्योपक्रमे ' उपत्वा नेष्ये ' (छा ४.४५) इत्युपनयनपरामर्शात् शूद्रस्य तदभावाभिलापाच्च न शूद्रस्य ब्रह्मविद्याऽधिकार. । ' नशूद्रे पातक किंचित् न च संस्कारमर्हति ' (मनु १० १२६) इति संस्कारोहि निषिद्ध ॥

### सू–३७ तदभावनिर्धारणे च प्रवृत्तेः (१.३.३७)

'नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहर' (छां.४.४.५) इति शूद्रत्वाभावनिश्चय एव उपदेश इति शूद्रस्य नाधिकारः ॥

## सू—३८ श्रवणाध्ययनार्थप्रतिषेधात् (१.३.३८)

शूद्रस्य श्रवणाध्ययनादीनि हि निषिध्यन्ते 'तस्माच्छूद्रसमीपे नाध्येतव्यम्' इति अनुपशृण्वतोऽध्ययनादि च न संभवति ॥

## स्मृतेश्च [१-३-३९]

स्मर्यते हि शूद्रस्य वेदश्रवणे दण्डः 'अथ हास्य वेदमुपशृण्वतः त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्, उदाहरणे जिह्वाच्छेदः, धारणे शरीरभेदः' (गौ.१२.४) इति ॥

इति वेदान्तसारः

अथ वेदान्तदीपः

## सू—३३ शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि (१.३.३३)

ब्रह्मविद्यायां शूद्रस्याप्यधिकारोऽस्ति नेति संशयः । अस्तीति पूर्वःपक्षः, अर्थित्वसामर्थ्यसंभवात्, शूद्रस्यानग्नित्वेऽपि मनोवृत्तिमात्रत्वादुपासनस्य संभवति हि सामर्थ्यम् । ब्रह्मस्वरूपतदुपासनप्रकारज्ञानञ्च इतिहासपुराणश्रवणादेव निष्पद्यते । अस्ति हि शूद्रस्यापीतिहासपुराणश्रवणानुज्ञा 'श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः' (महाभारते.शा.मोक्ष) इति । तथा तत्रैव विदुरादीनां ब्रह्मनिष्ठत्वं दृश्यते । उपनिषत्स्वपि 'आजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथाः' (छा.४.२.५) इति शूद्रशब्देनामन्त्र्य ब्रह्मविद्योपदेशदर्शनाच्छूद्रस्याप्यधिकारः सूच्यते । राद्धान्तस्तु उपासनस्य [illegible] वैदिकत्वेऽप्यनधीतवेदस्य शूद्रस्य उपासनोपायभूतज्ञानासंभवात् न सामर्थ्यसंभवः । कर्मविधिवदुपासनाविधयोऽपि त्रैवर्णिकविषयाध्ययनगृहीतस्वाध्यायोत्पन्नज्ञानमेवोपासनोपायतया स्वीकुर्वते । इतिहासादयोऽपि स्वाधीतवेदस्य ज्ञानं द्रढयन्तीति ततोऽपि नास्य ज्ञानलाभः । श्रवणानुज्ञा तु पापक्षयादिफला । विदुरादीनां तु भवान्तरवासनया ज्ञानलाभ इति निष्ठत्वम् । शूद्रेत्यामन्त्रणमपि न चतुर्थवर्णत्वेन ; अपितु ब्रह्मविद्यावैकल्याच्छुगस्य सञ्जातेति । अतो न शूद्रस्याधिकारः, सूत्रार्थस्तु—ब्रह्मविद्यावैकल्येन हंसोक्तानादरवाक्यश्रवणात् रैक्वाचार्यं प्रत्याद्रवणाच्चाचार्येण तस्य शुश्रूषोर्जानश्रुतेः शुगस्य सूच्यते । हिशब्दो हेतौ । यस्मादस्य शुक्सूच्यते, अतश्शोचनाच्छूद्र इति कृत्वा आचार्यो रैक्वः जानश्रुतिं शूद्रेत्यामन्त्रयते ; न जातियोगेनेत्यर्थः ॥

## सू—३४ क्षत्रियत्वगतेश्च (१-३-३४)

अस्य शुश्रूषोः क्षत्रियत्वावगतेश्च न जातियोगेन शूद्रत्वामन्त्रणम् । प्रकरणप्रक्रमे हि 'श्रद्धादेयो बहुदायी' (छां.४.१.१) इत्यादिना दानपतित्वबहुतरपक्वान्नदायित्वक्षत्तृप्रेषणबहुग्रामादिप्रदानैरस्य जानश्रुतेः शुश्रूषोः क्षत्रियत्वं प्रतीतम् ॥

## सू—३५ उत्तरत्र चैत्ररथेन लिङ्गात् [१.३.३५]

उपरिष्टाच्चास्या विद्यायां ब्राह्मणक्षत्रिययोरेवान्वयो दृश्यते ' अथह शौनकं च कापेयमभिप्रतारिणं च ' (छां.४.३.५) इत्यादिना अभिप्रतारीहि चैत्ररथः क्षत्रियः । अभिप्रतारिणश्चैत्ररथत्वं क्षत्रियत्वं च कापेयसाहचर्याल्लिङ्गादवगम्यते प्रकरणान्तरेहि कापेयसहचारिणः चैत्ररथत्वं क्षत्रियत्वं चावगतम् ' एतेन वै चैत्ररथं कापेया अयाजयन् ' (ताण्ड्य.२०.१२.५) इति ' तस्माच्चैत्ररथो नामैकः क्षत्रपतिरजायत ' (शत.११.५.३.१३) इति च । अतोऽस्यां विद्यायामन्वितो ब्राह्मणादितरो जानश्रुतिरपि क्षत्रियो भवितुमर्हति ॥

## सू—३६ संस्कारपरामर्शात्तदभावाभिलापाच्च (१.३.३६)

विद्योपदेशे ' उपत्वा नेष्ये ' (छां.४.४.५) इत्युपनयनसंस्कारपरामर्शात्, शूद्रस्य तदभाववचनाच्चानधिकारः, ' न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति ' (मनु.१०.१२.६) इतिहि निषिध्यते ॥

## सू—३७ तदभावनिर्धारणे च प्रवृत्तेः (१.३.३७)

' नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहर ' (छां.४.४.५) इति शुश्रूषोर्जाबालस्य शूद्रत्वाभावनिश्चय एवोपदेशे प्रवृत्तेः नाधिकारः ॥

## सू—३८ श्रवणाध्ययनार्थप्रतिषेधात् [१.३.३८]

शूद्रस्य श्रवणाध्ययनादीनिहि प्रतिषिध्यन्ते ' तस्माच्छूद्रसमीपे नाध्येतव्यम् ' इति अनुपशृण्वतोऽध्ययनादिर्न संभवति ॥

## सू—३९ स्मृतेश्च (१.३.३९)

स्मर्यते च शूद्रस्य वेदश्रवणादौ दण्डः ' अथ हास्य वेदमुपशृण्वतः त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीरभेदः ' (गौतम.१२.३) इति ॥

इति वेदान्तदीपः

### अथ अधिकरणसारावळी

जैमिन्युक्तापशूद्राधिकरणसरणेर्नास्ति विद्याभिलब्धिः
शूद्रादीनां तथाऽपि स्मृतपरभजनाधिक्रिया जाघटीति ।
श्रोतृत्याद्भारतादेस्स्वजनि समुचितैः कर्मभिश्चेत्ययुक्तं
प्राप्ते ब्रह्मोपदेशे ह्युपनयनपरामर्शनादि प्रसिद्धम् ॥
शूद्राणां भारतादेश्श्रवणमनुमतं पापशान्त्यादिसिद्ध्यै
वेदार्थापातबुद्धिर्यदनधिकरणा नोपबृंहेत तैस्सः ।
विद्यास्थानानि शूद्रैर्मुरभिदकथयत् पाण्यपाय द्विसप्त-
न्यस्तपाठ्यानि तस्मान्न हि विकलधियां स्यादुपास्त्यधिकारः ॥

गीतं शूद्रादिकानामपि परभजनं केवलं स्वार्हधर्म-
धर्मव्याधस्तुलाधृग्विदुर इति च ते प्राग्भवाभ्याससिद्धाः ।
वक्ता शूद्रेति जानश्रुतिमभिमुखयन् शोकमस्य व्यनक्ति
क्षत्रप्रेषादिलिङ्गैस्स्फुटतरविदितं क्षत्रियत्वं हि तस्य ॥

धूमत्वेति प्राच्यवाक्यप्रकृत इह भवेन्मुक्त आकाशनामा
यन्धेऽसौ नामरूपे वहति तदनु च ब्रह्मभावे जहाति ।
इत्यन्वाय्यं पुरोक्तः पुनरयमभिसम्भाव्य एव ह्युपात्तो
ब्रह्मत्वं न ह्यवस्था श्रुतिषु च युगपज्ज्ञातृतादिर्विभक्तः ॥

विश्वात्मानन्तभूमा नियमनधृतिकृन्मुक्तभोग्यस्वभावो
दह्रस्वाधारसर्वो हृदयपरिमितावस्थया सर्वयन्ता ।
देवादीनामुपास्यो वसुमुखविबुधैस्स्वात्मभावेन सेव्य-
शूद्राद्योपास्त्यनर्हः प्रभुरिह बुबुधे नामरूपैककर्ता ॥

**॥ इति अपशूद्राधिकरणं समाप्तम् ॥**

---

अथ प्रमिताधिकरणशेषः

श्रीभाष्यम्

तदेवं प्रसक्तानुप्रसक्तमधिकारस्यं प्रकृतस्याङ्गुष्ठप्रमितस्य भूतभव्येशितृत्व- ब्रह्मभावोपपादनं हेत्वन्तरमाह—

**सू-४० कम्पनात् (१.३.४०)**

अथ प्रमिताधिकरणशेषः

श्रुतप्रकाशिका

तदेवमिति । देवादीनामधिकारनिरूपणं प्रसक्तम् इतराधिकरणद्वयमनुप्रसक्तम् । परब्रह्मभावोपपादनमिति । 'ईशानो भूतभव्यस्य' इत्यवगतस्य नियमनस्य जगत्सर्वमिति सर्वविषयत्वेन कार्यकम्पनज्ञापनादुपपादनं ईशानशब्दस्यास्वरसनिर्वाहे चिकीर्षितेऽपि तस्य विरोधीत्यर्थः । नन्वधिकारनिरूपकं 'तदुपर्यपि' इत्याद्यधिकरणत्रयं तृतीयस्य चतुर्थे पादे निवेश्यम् । सत्यं तथाऽपि ब्रह्मत्वातिशयात् समन्वयाध्याये निवेशितम् । मनुष्याधिकारप्रसङ्गेन तावत् प्रसक्तिः स्थिता, कार्यभूतदेवादीनां प्रामाणिकत्वसमर्थनं ब्रह्मणः परमकारणत्वोपयोगिकार्यकारणादस्यादित्यादिचेतनान्तर्यामिण उपास्यत्वं मधुविद्यायामुक्तम् अपशूद्राधिकरणे च संवर्गविद्यायाः परमात्मविषयत्वोपपादनम् अतः कारणानुवर्तिनो निरूपणस्य समन्वयलक्षणसङ्गतत्वात् अत्राप्यस्मिन्पादे मनुष्याधिकारदेवाद्यधिकरणत्रयं निवेशितमिति ॥

श्रीभाष्यम्

'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' (कठ.२.४.१२) 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा' (२.६.१७) इत्यनयोर्वाक्ययोर्मध्ये 'यदिदं किञ्च जगत्सर्वं प्राण एजति निस्सृतम् महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति। भयादस्याग्निस्तपति भयात्तपति सूर्यः। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः' (२.६।२,३) इति कृत्स्नस्य जगतोऽग्निसूर्यादीनां चास्मिन्नङ्गुष्ठमात्रे पुरुषे प्राणशब्दनिर्दिष्टे स्थितानां सर्वेषां ततो निस्सृतानां तस्मात्सञ्जात-महाभयनिमित्तम् एजनं कम्पनं श्रूयते। तच्छासनातिवृत्तौ किं भविष्यतीति महतो भया-

श्रुतप्रकाशिका

## सू—४० कम्पनात् (१-३-४०)

इदं सूत्र 'प्राण एजति' इति वाक्यविषयमधिकरणान्तरं ये वर्णयन्ति तान्प्रतिक्षिपति। अनयोर्वाक्ययोर्मध्य इति। परमात्मपरत्वेनोपपादितवाक्यद्वयमध्यगतत्वादस्य वाक्यस्य अस्मिन्नेवात्मनि 'य एतद्विदुरमृतास्ते भवन्ति' इत्यमृतत्वप्राप्तिहेतुत्वावगमात्, प्राणशब्दस्य परमात्मवाचकत्वस्यानेकाधिकरणन्यायसिद्धत्वाच्च पूर्वपक्षानुदय इति भावः। प्राणः कम्पनात् इत्यश्रवणात् सूत्रस्वारस्यं च, ननु प्रकरणात् प्राणशब्दश्रुतिर्बलीयसी धूमतेजो जलमरुत्सन्निपातरूपमेघात्मना परिणतस्य वायोरशनिरूपेण विवर्तनाद्वज्रशब्दश्रुतिश्च तत्साधिका वायुनिमित्तमेव च महद्भयानकं वज्रमुद्यत इति ह्यर्थः। अमृतत्वहेतुताचोपपद्यते 'वायुरेव व्यष्टिर्वायुस्समष्टिरपपुनर्मृत्युं जयति य एवं वेद' इति श्रुतेः अतोऽधिकरणान्तरं कार्यमिति। उच्यते पूर्वापरपर्यालोचनेन परमात्मतया निर्णीतेषु प्रकरणेषु मुख्यप्राणलिङ्गे तद्वाचकशब्दे सत्यपि परमात्मन एव प्रतिपाद्यत्वं 'प्राणस्तथाऽनुगमात्' इत्यत्र निर्णीतम्। अचेतनरूपप्रधानस्यापि मोक्षहेतुत्वानुपपत्तिः 'तन्निष्ठस्य मोक्षोपदेशात्' इत्यत्रोक्ता, तत्कथं तत्कार्यैकदेशप्राणशानस्य मोक्षहेतुत्वशङ्कोदयः, वायोरशनिकारणत्वेऽपि प्राणशब्दस्य वायुमात्रवाचित्वाभावात्तन्मुख्यार्थस्य मुख्यप्राणस्याशनिकारणत्वाभावाच्च वज्रशब्देन न वायुवृत्तिप्राणशङ्का भवति। उद्यतशब्दोऽप्यशनिशङ्काविरोधी; अशनिर्हि निपतति आयुधमेव ह्युद्यतं भवति, यथा 'तेनेन्द्रो वज्रमुदयच्छत्' इति। अतोऽधिकरणान्तरत्वमयुक्तम्॥

नन्वेवं परमात्मपरत्वानिश्चयात् स्वपक्षेऽपि सूत्रवैयर्थ्यमितिचेन्न उक्तहेतूत्तम्भनरूपप्रयोजनस्य दर्शितत्वात्। सूत्रे चशब्दाभावोऽनन्तरपूर्वाधिकरणशेषत्वभ्रमानुदयार्थः; नत्वधिकरणान्तरत्वात् 'प्राणः' इति सप्तम्यन्तपदसामर्थ्यात्' स्थितानामित्यध्याहारः। कुतो निस्सृतामित्यपेक्षायां प्रकृतस्यैवापादानत्वमाह—तत इति। कुत एजतीत्यपेक्षायां प्रकृतस्यैव भयनिमित्तत्वमाह—तस्मादिति। भय आगाम्यनिष्टावसिज्ञानरूपदुःखम्। एजनं तत्कार्यम्। श्रुतिसूत्रयोरभिन्नार्थत्वं ज्ञापयति एजनं कम्पनमिति। 'एजृ कम्पने' इति हि धातुः। प्रत्यवायभयात् स्वस्वकार्येषु प्रवृत्तिः कंपनं तदेहाप्यवगम्यते 'भयादस्याग्निस्तपति' इति तपनस्य भयादित्ययोः कार्यम् धावति शब्दः इन्द्रादीनां स्वस्वव्यापारपरः। भयं विवृण्वन्वाक्यार्थं योजयति तच्छासनेति। महतो भयादिति भयशब्दो भयानकपरः, लक्षणाप्रवृत्त्यादिनिमार्थः। वज्रादिवोद्यतादिति। वज्रशब्द आयुधपरः नाशनिपरः उद्यतशब्दविरोधि त्वादिति भावः। वज्रादिवेति इवशब्देन श्रुतिवाक्ये वज्रशब्द उपचारादभ्रष्टस्ये वर्तते, अध्याहारादपि भोगसिद्धिः

## श्रीभाष्यम्

वज्रादिवोद्यतात्कृत्स्नं जगत्कम्पत इत्यर्थः । 'भयादस्याग्निस्तपति' 'महद्भयं वज्रमुद्यतम्' (कठ.२:६..३,२) इति पञ्चम्यर्थे प्रथमा । भयञ्च परस्य ब्रह्मणस्स्वभावः 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (बृ.५.८.९) 'भीषाऽस्माद्वातःपवते । भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चमः' (तै.आ.८.१) इति परस्य ब्रह्मणः पुरुषोत्तमस्यैवंविधैश्वर्यावगतेः ॥ इतश्चाङ्गुष्ठप्रमितः पुरुषोत्तमः—

## सू-४१ ज्योतिर्दर्शनात् (१.३.४१)

तयोरेवाङ्गुष्ठप्रमितविषययोर्वाक्ययोर्मध्ये परमब्रह्मासाधारणं सर्वतेजसां छादकं सर्व-

### श्रुतप्रकाशिका

स्यादिति वज्रशब्दस्य तत्तुल्यार्थत्वं फलतो दर्शितम् । कथं हेत्ववगम इत्यत्राह—भयादस्येति । कथं प्रथमायाः पञ्चम्यर्थत्वमित्यत आह—महद्भयं वज्रमुद्यतमितीति । न वज्रं भयदृष्टान्तः दृष्टान्तदार्ष्टान्तिकवैषम्यात् । भयमव्यवधानेन कम्पनहेतुः वज्रं तु भयद्वारा तद्धेतुः, अतो वज्रं भयहेतुदृष्टान्तः उद्यताद्वज्रादिव परमपुरुषात् सञ्जातेन भयेन कृत्स्नं जगत्कम्पत इत्यर्थः तस्मात्सञ्जातमहाभयनिमित्तमेजनमिति पूर्वग्रन्थैकार्थ्यात् । एवतर्हि प्रथमान्तपदसामानाधिकरण्यस्वारस्यभङ्गः इवशब्दाध्याहारश्च स्यात् तदुभयानादरेणार्थवर्णने किं निबन्धनमित्यत्राह— भयादस्येति । अनन्तरवाक्ये 'भयादस्य' इति भयतद्धेतुवाचिपदयोर्वैयधिकरण्यदर्शनात् भयपदस्य पञ्चम्यन्तत्वदर्शनात् । पूर्वापरवाक्ययोरैकार्थ्ये न्यायत्वाद्दृष्टान्तदार्ष्टान्तिकसामञ्जस्याच्चेत्यर्थः ॥

ननु भयशब्देन भयानकलक्षणा न्याय्या, गङ्गापदादिषु प्रकृत्यंशेन प्रकृत्यन्तरार्थलक्षणाया दृष्टत्वात् प्रथमाया हेत्वर्थलक्षणाऽयुक्ता, विभक्तीनां विभक्त्यन्तरार्थे लक्षणाया अदर्शनात् तथानुशासनविरोधात् पञ्चम्याधिकरणे हि बहुत्वविवक्षामात्रं न तु विभक्त्यन्तरार्थलक्षणा । अतो भयानकं वज्रमिव ब्रह्म यतस्तस्मात् कृत्स्नं जगत्कम्पत इत्येव हि योजना अतआह–महद्भयं वज्रमुद्यतमितीति । 'सुपां सुलुक्' इत्यादिसूत्रेण सर्वविभक्तिषु प्रथमायाः विहितत्वात् इयं प्रथमा पञ्चम्यर्थवाचिनीत्यर्थः । वचनव्यत्ययो वा अयमभिप्रायः योजनाद्वयेऽपि इवशब्दाध्याहारो वज्रशब्दस्यामुख्यत्वं वाऽवश्यं भवेत् । प्रथमान्तयोजनाया प्रथमाविभक्तिस्वारस्यं सामानाधिकरण्यस्वारस्यं चाधमं स्यात् भयशब्दस्य तद्धेतुलक्षणाश्रयणे यत्तच्छब्दाध्याहारः, पदैकवाक्यतायां सम्भवन्त्यां तत्प्रहाणेन वाक्यैकवाक्यभावाङ्गीकार इति त्रयो दोषाः । योजनान्तरे प्रथमायाः पञ्चम्यर्थताश्रयणास्वारस्यं सामानाधिकरण्यभङ्गश्च द्वौ दोषौ, भयपदप्रातिपदिकमुख्यत्वं यत्तच्छब्दानध्याहारः, पदैकवाक्यता 'भयादस्य' इत्यनन्तरवाक्यैकरूप्यञ्चेति चत्वारो गुणाः । अतो दोषभूयस्त्वगुणलाघवयुक्तनिर्वाहादपि दोषलाघवगुणभूयस्त्वयुक्तनिर्वाहपरमिति । कृत्स्नजगद्भयावहत्वलक्षणस्य प्रशासनस्य परमात्मधर्मत्वं श्रुत्यन्तरप्रसिद्धमित्युपपादयति अयं चेति ॥

## सू=४१ ज्योतिर्दर्शनात् [१.३.४१]

एतत्प्रकरणस्य ब्रह्मपरत्वमेव युक्तमिति दर्शयति वाक्ययोर्मध्य इति । 'न तत्र सूर्यः' इत्यादिमन्त्रे पूर्वार्धस्यार्थमाह—सर्वतेजसां छादकमिति । उत्तरार्धस्य पूर्वपादार्थमाह—

## श्रीभाष्यम्

तेजसां कारणभूतमनुग्राहकं चाङ्गुष्ठप्रमितस्य ज्योतिर्दृश्यते 'नतत्र सूर्यो भाति न चन्द्रतारकं नेमाविद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ' [कठ.२.५.१५] इति। अयमेव श्लोक आथर्वणे परं ब्रह्माधिकृत्य श्रूयते। परज्योतिष्ट्वं च सर्वत्र परस्य ब्रह्मणश्श्रूयते। यथा 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते ' [छां.८.१२ २] ' तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ' (बृ.६.४।१४)'अथ यदतः परो दिवो ज्योतिर्दीप्यते ' (छां.३.१३.७) इत्यादिषु। अतोऽङ्गुष्ठप्रमितः परं ब्रह्म ॥

### इति प्रमिताधिकरणशेषः

### श्रुतप्रकाशिका

सर्वतेजसां कारणभूतमिति। अनुमान पक्षाद्धानम्। तेन कार्यकारणभावसिद्ध, पौर्वापर्यनियमो हि कार्यकारणभाव इति भाव। चतुर्थपादार्थमाह—अनुग्राहकमिति। 'यस्यादित्यो भामुपयुज्य भाति ' इत्यादि श्रुतिश्चानुग्राहकत्वे प्रमाणम् ज्योतिर्दृश्यत इति। ज्योतिः दीप्तिः 'ज्योतिष्मद्भ्राजमानं महस्वत् ' इति प्रयोगात् ॥

ननु कथं कारणत्वानुग्राहकत्वे सम्भवतः तद्धि प्राकृततेजो विसजातीयम्। सजातीयतेजो हि तेजसां कारणमनुग्राहकं च दृष्टं, यथा दीपो दीपान्तरस्य, दीपादिप्रभा च चाक्षुषप्रभाया इति। उच्यते निमित्ततया कारणत्वोपपत्तिः, उपादानत्वे हि साजात्यापेक्षा। आहङ्कारिकस्य विजातीयस्यापि चक्षुषस्तेजोद्रव्येणाप्यायनं च दृष्टम्। निमित्तत्वं च तेजःकारणभूतवस्त्वनुग्राहकतया भवति। यथा कालस्य निमित्तत्वं कारणवस्त्वनुग्राहकतया, यथा च सलिलदहनातपादीनां घटोत्पत्तौ निमित्तत्वं मृद्द्रव्यसंयोगेन तत्र किञ्चित्करतया भवति, एवमप्राकृततेजोऽपि प्रकृततेजस उत्पत्तौ तदुपादानद्रव्यस्यानुग्राहकतया निमित्तं भवतीत्यभ्युपगन्तव्यम् प्रमाणबलात् उपरमेऽपि तेजस्त्वकार्यकरणसामर्थ्यस्य तत्सम्बन्धात्तस्य वा तदनुग्राहकं यथा चाक्षुषस्य चन्द्रातपादिः, यथा शुष्ककण्ठस्य वाग्व्यवहारे पानीयास्वादनं यथा मनसो धारणग्रहणस्मरणादिपाटवे सम्यगाहारः उक्तलक्षणकारणत्वानुग्राहकत्वाभिप्रायेण भगवता पराशरेण मूर्तब्रह्मशब्दवाच्यदिव्यविग्रहविशिष्टत्वमुक्त्वा 'ततो जगज्जगत्तस्मिन् स जगच्चाखिलं मुने ' इत्युच्यते। सजगदिति सामानाधिकरण्यं धारकत्वनिबन्धनम् अस्य वाक्यस्य परोक्तार्थोऽनुपपन्नः ॥

तथा हि सूर्यादीभिरप्रकाश्यत्वं न पूर्वार्धस्यार्थः, भातिशब्दस्य ज्ञानवाचित्वाभावात् स हि दीप्त्यर्थः 'भा दीप्तौ ' इति हि धातुः। किञ्च यदि भासयितृत्वं निषिध्यते तदा ब्रह्मविषयज्ञानहेतुत्वनिषेध इति च स्वेष्टहानिः इह च भानमेव निषिध्यते न भासयितृत्वं, यदि णिजन्तत्वान्तर्भावमिष्टं तदा तत्रेति सप्तमी न घटते कर्मत्वस्यैव प्राप्तत्वात्। अतोऽर्थान्तरानुपपत्तेः—

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता। यदि भाः सदृशी सा स्यात् भासस्तस्य महात्मनः ॥

इति स्मृत्यानुगुण्याच्च, तद्दीप्तिसाक्षात्कारसम्भवे तेजोऽन्तराणामभिभूतत्वमेवात्र प्रतिपाद्यम्। तृतीयपादे आविद्यान्धकारस्फुरणाधीनमन्यस्फुरणमुच्यत इति चायुक्तम् तमिति पुल्लिङ्गान्तस्य तच्छब्दस्य चिदचिद्व्यावर्तकानन्तगुणविशिष्टपरमपुरुषपरत्वात्, तद्भिन्नभासमानस्यास्य नुपपत्तेश्च अस्वप्रकाशस्फुरणायोगात्, सर्वेश्वरादिगुणको निर्देशः परमपुरुषे हि मुख्यः प्रकृतः कठवल्ल्यामाद्यन्तयोः अन्तर्यामिणा सर्वनियन्त्रा सर्वाधारो विष्णुशब्दवाच्यपरब्रह्मात्मा परः स एव पुरुषः प्रकृतः

## श्रुतप्रकाशिका

श्वेताश्वतरे च सहस्रशीर्षत्वसहस्राक्षत्वादिमान् स्वाभाविकपरेशानत्वोत्पत्त्यादिगुणकस्सर्वप्रवर्तको महापुरुषः प्रकृतः। सर्वेशत्वादयश्च गुणास्समस्तचिदचिद्व्यावर्तकाः, तैर्विशिष्ट एव तच्छब्देन परामृश्यते न वस्तुमात्रे तच्छब्दस्य प्रकृतप रामर्शित्वस्वारस्यभङ्गात् पुल्लिङ्गनिर्देशस्य प्रकृतपुरुषविषयत्वज्ञापकत्वाच्च, अतः ' तमेव भान्तम् ' इति तद्भासियोगस्य स्वाभाविकत्वं नित्यत्वमप्रतिहतत्वमितरतेजसां तद्धेतुकत्वं चोक्तम् ' तमेव भान्तं-सं भान्तम् ' एवेति ह्यन्वयः, तमेवे त्यन्वयेसति व्यवच्छेद्य तेजोऽन्तरासम्भवात् । तथाऽन्वयेऽपि नविरोधः, यद्यधिष्ठानापुरणाधीनस्वतस्त्वपुरणमित्युच्येत तदा ' तस्य भासा सर्वमिदं विभाति ' इति पुनरुक्तिश्च स्यात् । तस्य दृप्तिरूपज्ञानेन सर्वं भातीत्यर्थ इतिचेन्न, भाशब्दस्य दृप्तिज्ञानवाचित्वाभावात् । अतो भगवत्तेजस्सर्वतेजोऽनुग्राहकत्वमेव चतुर्थपादार्थः । अतः प्रकरणस्यदवम वर्गश्रुतिपुरुषशब्दप्रत्यभिज्ञापितादित्यवर्णश्रुतिप्रसिद्धादित्यविग्रहद्वारकनिरवधिकदीप्तिविशिष्टोऽनेन मन्त्रेण प्रतिपाद्यते । परमात्मपरतया निर्णीतप्रकरणस्थतया प्रत्यभिज्ञायमानत्वाच्चास्य मन्त्रस्य परमात्मसाधकत्वमित्याह—अयमेव श्लोकइति एव शब्दतः प्रत्यभिज्ञानं हेतुतयोक्तम् अर्थतः श्रुत्यन्तरप्रत्यभिज्ञानं चास्य मन्त्रस्य परमात्मत्वसाधकत्वोपपादकमित्य- भिप्रायेणाह—परज्योतिष्ट्वंचेति । आदिशब्देन ' तच्छुभ्रं ज्योतिषां ज्योतिः ' ' नारायणपरो ज्योतिः ' इत्या द्यभिप्रेतम् । एवं स्वपक्षसाधकतया श्रुत्यन्तरस्थवाक्यत्रयोपादानेन अर्थात्परपक्षव्युदासश्च सिद्धः परैः त्वत्रिद सूत्रं ' एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय ' इत्यादिवाक्यविषयमधिकरणान्तरं व्याख्यातम् । तत्र च ज्योतिश्शब्दस्यादित्य- परत्वं पूर्वपक्षीकृत्य परब्रह्मपरत्वं सिद्धान्तितम् । तदयुक्तम् पूर्वपक्षानुत्थानात् । ज्योतिश्शब्दश्रुतिर्हि प्रकरणाद्बलीयसी, अत उत्थानमितिचेन्न किं ज्योतिश्श्रुतिरादित्यासाधारण्यात्तत्साधिका उत साधारण्येऽपि प्रवृत्तिनिमित्तभूतप्रकाशकत्वपौ- ष्कल्याद्वा, नप्रथमः ' आपो ज्योतिश्च पञ्चमम् ' ' अग्निर्ज्योतिरहश्शुक्लः ' ' ज्योतींषि शुक्राणि च यानि लोके ' ज्योतींषि विष्णुर्भुवनानि विष्णुः ' इति बह्वर्थसाधारणतया प्रयुज्यमानत्वात् । नद्वितीयः ' नारायणपरोज्योतिः ' तच्छुभ्रं ज्योतिषां ज्योतिः ' ' तं देवा ज्योतिषां ज्योतिः ' इति नारायण एव प्रवृत्तिनिमित्तपौष्कल्यदर्शनादि- त्यभिप्रायः ' तंदेवा ज्योतिषाम् ' इति वाक्यमुपात्तम् ' ज्योतिषां ज्योतिः ' इत्युक्तत्वात् ज्योतिष्ट्वं तत्प्रकर्षश्च ह्यव- गम्यते, अतो ज्योतिश्शब्दस्य साधारण्य भगवत्येव प्रवृत्तिनिमित्तपौष्कल्य च तेन सिद्धम् । आदित्यासाधारण्याभ्युपग मेऽपि कृतकरत्वज्ञापनाय ' अथ यदतःपरः ' इति वाक्यमुदाहृतम् ' अथ यदतः परो दिवो ज्योतिर्दीप्यते ' इत्ये- तद्वाक्यविषयेण ' ज्योतिश्चरणाभिधानात् ' इत्यधिकरणेन ज्योतिश्शब्दश्रुतेः परिहृतत्वात् । तत्रहि ' पादोऽस्यविश्वा भूतानि ' इति प्रकरणम् स्थितमपि तदनादृत्य ज्योतिश्शब्दस्य तमः प्रतिद्वन्द्विनि प्रसिद्धतया आदित्यविषय व पूर्वपक्षे सं परिहृतं च अतःकृतकरत्वम् । परशब्दविशेषितज्योतिश्शब्दोऽपि नादित्ये रूढः, परत्वस्य निरतिशयस्य तस्मिन्नसम्भ वादेव गुणयोगादपि नादित्यप्रतीतिः । उत्थानश्रुतिः स्वाश्रुतिश्च पूर्वपक्षहेतुरितिचेन्न परब्रह्मविषयत्व एव तयोरुपपत्ते, वक्ष्यमाणत्वात् । माऽस्तु तयोः परब्रह्मविषयत्वसंभवः तथाऽपि नारम्भणीयता ' उत्तराच्चेदाविर्भूतस्वरूपस्तु ' इति सूत्रेणास्य वाक्यस्य परब्रह्मप्राप्तिप्रतिपादकत्वस्य समर्थितत्वात् ' यत्तत्परंज्योतिरुपसम्पत्तव्यं श्रुतं तत्परंब्रह्म तच्चाप- हतपाप्मत्वादिधर्मकं तदेव च जीवस्य पारमार्थिकं रूपम् ' इतिहि तैरुक्तम् । ' श्रुतिकृतं विवेकज्ञानं शरीरा त्समुत्थानं विवेकज्ञानफलं स्वरूपेणाभिनिष्पत्तिः ' इति समुत्थानादिश्रुतिनिर्वाहश्च तैस्तत्रैव कृतः । अतःकृतकरत्व दहरपरब्रह्मोपसंपत्त्याऽविर्भूतस्वरूपविषयत्वस्य दर्शनमुपजीव्य दहराकाशस्य परमात्मत्वं तत्र समर्थितमिति चेत् तर्हि ' उत्त- राच्चेत् ' इति सूत्रानन्तरं ' ज्योतिर्दर्शनात् ' इतिसूत्रं निवेशयितव्यम् हेतुप्रयोगानन्तरमेव हेत्वसिद्धेः परिहरणीयत्वात्

## श्रुतप्रकाशिका

अपहतपाप्मत्वादिगुणकस्यात्मनो वक्तव्यत्वेनानुवृत्तिदर्शनेनहि तदसिद्धिरिति परिह्रियते । दृष्टं च तत्रैवैतत् 'अपहतपाप्मत्वादिगुणकमात्मानं प्रस्तुत्य एतन्त्वेव ते भूयोऽनुव्याख्यास्यामि' इति तत्र कृत्स्नस्य स्वप्नसुषुप्तयादिपर्यायक्रमेण परमार्थस्वरूपाविर्भावोपदेशपरमिदं वाक्यमिति तत्र तैरेव प्रतिपादनात् तदप्रतिपादने चास्य वाक्यस्याविर्भूतस्वरूपविषयत्वासिद्धेः. अतः कृतकरत्वमन्यथा तत्रैव तत्सूत्रनिवेशनं वा प्रसज्येत् ॥

अपरेत्वाहुः—शरीरादुत्थानस्य स्वेन रूपेणाभिनिष्पत्तेश्च मध्ये श्रूयमाणा परंज्योतिःप्राप्तिरादित्यप्राप्तिः अर्चिरादिमार्गप्रत्यभिज्ञानात् । तत्रह्यादित्यप्राप्तिर्मध्ये श्रूयते । आदित्यस्य परत्वं चानिराघ्रेक्षेयतीति पूर्वपक्षोत्थानमिति तद्प्यत एव निरस्तम् 'उत्तराच्चेत्' इति सूत्र एवास्य वाक्यस्य परब्रह्मोपसम्पत्त्याऽविर्भूतस्वरूपात्मविषयत्वस्य समर्थितत्वादिति ॥

### इति प्रमिताधिकरणशेषः

### अथ प्रमिताधिकरणशेषः

### गूढार्थसङ्ग्रहः

'कम्पनात्' पूर्वाधिकरणत्रयेण हृद्यपेक्षयात्विति प्रमिताधिकरणगुणभूतेन 'अन्ययोगाऽयोगव्यवच्छेदश्च मनुष्याधिकारत्वात्' इत्यत्र न विवक्षित इति निर्णयेन शब्दादेवेति सूत्रार्थनिर्णयः सम्पन्नः । तस्यैव बुद्धिस्थतया 'कम्पनात्' इत्यनेन तदधिकरणे यत् साध्यतया विवक्षितं तदेव दृढीक्रियते 'अङ्गुष्ठप्रमितः परमात्मा कम्पनात्' अत्राप्येवेत्यस्यानुषङ्गः तत्रतु शब्दो हेतुः अत्रत्वर्थः । अङ्गुष्ठप्रमितविषयवाक्यमध्यपतितत्वेनास्यैव विषयवाक्यत्वं विवक्षितम् सूत्रे वज्रशब्दः प्राणशब्दश्च नैव वर्तते, अध्याहारेणैव परैः नव्यैश्चार्थो वर्णनीयः । सिद्धान्ततु प्रमिताधिकरणशेषतया तत्रत्यपदानुषङ्गेनैवार्थवर्णनं युक्तम् । अत्र 'य एतद्विदुरमृतास्ते भवन्ति' इत्युक्तया मोक्षहेतुज्ञानविषयत्व 'पूर्वपक्षिसम्मतार्थो न घटत इत्यवश्यं वक्तव्यार्थं विज्ञाय कम्पनात् इति हेतूक्तिः मतद्वयेऽपि नसमञ्जसा ॥

'ज्योतिर्दर्शनात्' अङ्गुष्ठप्रमितस्य हृदि स्थितिं प्रतिपाद्यते सैव 'अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव' इत्यादौ सर्वभूतान्तरात्मपदेनोक्ता । सैवोत्तरत्राङ्गुष्ठप्रमित इत्यादिनोक्ता । 'तदेतदिति मन्यन्ते अनिर्देश्यं परमं सुखम्' इत्यादौ मुक्तप्राप्यं सुखं प्रतिपादितम्, तदनन्तरं 'किमु भाति विभाति वा' इति प्रश्नः तदुत्तरं 'न तत्र सूर्यो भाती'ति प्रतिवचनम् । अस्यां श्रुतौ पूर्वमग्निसूर्यादीनां यः साम्यमुक्तः तत्तुल्यताशङ्कनेनोपपत्ती प्रतिवचने स्वादित्य अग्निसूर्यादि प्रकाशविरहस्थले परमात्मप्रकाशः प्रतिवचने प्रतिपाद्यते । एतेन एतत्प्रकाशविशिष्टस्यैव निरतिशयसुखरूपत्वं 'नित्यो नित्यानाम्' इति श्रुतौ 'तेषां सुखं शाश्वतं नेतरेषाम्' इत्यत्रात्मज्ञानिवतां यत्सुखमुक्तं तदेव प्रतिवचने निर्धारितं भवति । 'यदिदं किंच जगत्सर्वम्' इतिश्रुतौ 'य एतद्विदुरमृतास्ते भवन्ति' इत्युत्तरवाक्यम् एतद्वेद्यायाथात्म्यनिर्णयं, निरतिशयसुखज्ञानेन निरतिशयसुखस्वरूपनिर्णयश्च भवतीति निरतिशयदीप्तिविशिष्टसुखरूपत्वम् [illegible] सिद्धम् 'ज्योतिर्दर्शनात्' इत्यत्रेदमेव विषयवाक्यम्, ज्योतिश्शब्दः मेदिनीकोशात् प्रकाशपरः न हि तदर्थे दृष्टमेव वाक्य मुदाहार्यमिति नियमः मुण्डकोपनिषदि—'न तत्र सूर्यो भाती'त्यतःपूर्वं 'तच्छुभ्रं ज्योतिषां ज्योतिः' इति श्रूयते, अतः भासकत्वेनेव ज्योतिषां ज्योतिष्ट्वं वाच्यमिति सर्वसम्मतम् ज्योतिर्भासप्रतिपादने 'न तत्र सूर्यो भाती'त्यनेन कृतबृहत्प्रामाण्यस्यार्थस्य विशदितत्वेन एतद्विशेषणाभावेन 'ज्योतिर्दर्शनात्' इत्यत्र शब्दात् इत्यनेन पाठे दर्शनादिति पु-

## गूढार्थसंग्रहः

त्तम् । अनेनोपनिषदन्तरप्रसिद्धिरपि द्योतिता भवति तेनविनाऽक्षेपस्य नावसरः । सिद्धान्ते प्रमिताधिकरणे परया तत्प्र दानमेवानुग्रहःकार्यः । एतेन ' अथ यदत परो दिवो ज्योतिः ' इत्यत्र दीप्तिविशिष्ट यज्ज्योतिः निरतिशयमाविशिष्टमेवेति श्रुतिद्वये मुक्तप्राप्य ज्योतिरिति विवक्षितमिति सिद्ध्यति ।

एतेन ' एष सम्प्रसादः—परंज्योतिः ' इत्यत्र परत्वमेतादृशमपि विवक्षितमिति सिद्ध तेन ' सउत्तम पुरुषः ' इति वाक्यश्रवणेनाभेदो विवक्षित इति नपरया शङ्काऽवकाशः । ' तेषां सुखं शाश्वत नेतरेषाम् ' इति पूर्वमनेकमुक्त प्राप्यरूपनिरतिशयसुखस्वप्रतिपादनानन्तरं तस्य निरतिशयमाविशिष्टत्वप्रतिपादनेन तस्य निरतिशयमाविशिष्टमपि विवक्षितम् । ' त दवा ज्योतिषां ज्योति ' इत्यत्र ज्योतिषामवभासकानामप्यवभासकत्वप्रतिपादनेन ज्योतिश्शब्दोऽभासक परः । अवभासकत्व परमा मन्यत्र पुष्कलम् एतदेव दृढीकृत ' नतत्र सूर्यो भाती त्यादिना । ' अथ यदत परः ' इत्यत्र ' ज्योतिश्चरणाभिधानात् ' इतिसूत्र दीप्तिविशिष्टज्योतिःप्रतिपादनात् दीप्तिरपि विशेषः प्रतिपादितः । दीप्तिविशिष्टस्यास्या श्रुतौ विवरणम् । एतेन ' न तत्र सूर्यो भाती'त्यादौ प्राप्यस्वरूपमेव विवक्षितम् । तेन ' पर ज्योतिः ' इत्यनेनाप्यैक रूपता । कठवल्ल्या 'तेषां सुख शाश्वम्–अनिर्देश्य परम् सुखम् ' इति सुखत्वेनैव प्रतिपादितमेवात्र प्रतिपाद्यते श्वेताश्व तरेऽपि–' नित्योनित्यानाम् ' इत्यनन्तरमस्याश्श्रुतेरभिधानात् ॥

इति प्रमिताधिकरणशेषः



अथ वेदान्तसारः

प्रासङ्गिकं परिसमाप्य प्रकृतमनुसरति–

## सू–४० कम्पनात् (१.३.४०)

अङ्गुष्ठमितप्रकरणमध्ये ' यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम्, ' (कठ.२.६.२) इत्यादिना अभिहिताङ्गुष्ठप्रमितप्राणशब्दनिर्दिष्टजानतभयात् वज्रादिवोद्यतात् अग्निवायुसूर्य इन्द्रप्रभृतिक कृत्स्नजगत्कम्पनात् अङ्गुष्ठप्रमितः परम पुरुष इति निश्चीयते ॥

## सू–४१ ज्योतिर्दर्शनात् (१.३.४१)

त प्रकरण ' नतत्र सूर्यो भाति ' (कठ.२.५.१५) इत्यारभ्य ' तस्य भासा सर्वमिद विभाति ' (२.५.१५)इति भादशब्दाभिहितस्य अनवधिकातिशयज्योतिषो दर्शनाच्च अङ्गुष्ठप्रमित परमपुरुषः ॥

इति वेदान्तसारः



### अथ वेदान्तदीपः

प्रासङ्गिकं पारिसमाप्य प्रकृतं परिसमापयति–

## सू—४० कम्पनात् (१-३-४०)

अङ्गुष्ठप्रमितप्रकरणमध्ये 'यदिदं किञ्च जगत्सर्वं प्राण एजति निस्सृतम्। महद्भयं वज्रमुद्यतम्—' (कठ.२.६.२) 'भयादस्याग्निस्तपति' (२.६.३) इत्यादौ प्राणशब्दनिर्दिष्टाङ्गुष्ठप्रमितजनितभयनिमित्तादग्निवायुसूर्यप्रकृतिकृत्स्नजगत्कम्पनाच्छ्रूयमाणादङ्गुष्ठप्रमितः परमात्मैवेति निश्चीयते ॥

## सू—४१ ज्योतिर्दर्शनात् (१.३.४१)

अस्मिन्नेव प्रकरणे तत्सम्बन्धितया 'न तत्र सूर्यो भाति' (कठ.२.५.१५) इत्यारभ्य 'तस्य भासा सर्वमिदं विभाति' इति सर्वेषां छादकस्यानवधिकातिशयस्य भाश्शब्दाभिहितस्य ब्रह्मभूतस्य परस्य ज्योतिषो दर्शनाच्च अङ्गुष्ठप्रमितः परमात्मा ॥

इति प्रमिताधिकरणशेषः

---

### अथ अर्थान्तरत्वादिव्यपदेशाधिकरणम्

श्रीभाष्यम्

## सू—४२ आकाशोऽर्थान्तरत्वादिव्यपदेशात् (१-३-४२)

छान्दोग्ये श्रूयते—'आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा' (छां.८.१४.१) इति। तत्र संशयः

### अथ अर्थान्तरव्यपदेशाधिकरणम्

श्रुतप्रकाशिका

## सू—४२ आकाशोऽर्थान्तरत्वादिव्यपदेशात् (१.३.४२)

पूर्वं दहराकाशस्य परब्रह्मत्वे साध्यमाने 'अल्पश्रुतेः इति चेत्तदुक्तम्' इति सूत्रेणाल्पश्रुतिः परिहृता। अल्पश्रुतिप्रसङ्गेनाङ्गुष्ठप्रमितस्य परत्वं साधितम्, तत्प्रसङ्गेनाधिकरणत्रयमुक्तम्। अथ पूर्वप्रकृतदहरविद्याया मुक्तिस्थत्वेन तदनन्तरभूतस्य 'आकाशो ह वै नाम' इत्यादिप्रकरणस्य जीवपरत्वमाशङ्क्य परिह्रियत इति सङ्गतिः। मुक्तस्य प्रकृतत्वान्मुक्त-

## श्रीभाष्यम्

**किमयमाकाशशब्दनिर्दिष्टो मुक्तात्मा ? उत परमात्मा इति । किं युक्तम् ? मुक्तात्मेति । कुतः ? 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि' (छां.८.१३.१) इति मुक्तस्यानन्तरप्रकृतत्वात्, 'ते यदन्तरा' (८.१४.) इति च नामरूपविनिर्मुक्तस्य तस्याभिधानात्; स एव हि देवादिरूपाणि**

## श्रुतप्रकाशिका

त्मपरमात्मविषयसंशयमाह—किमयमिति । परैस्तु भूताकाशः पूर्वपक्षः तथा च सत्यनारम्भणीयमेव स्यात् 'आकाश स्तल्लिङ्गात्' इत्यनेनैव चरितार्थत्वात् । तत्र हि 'अस्य लोकस्य का गतिरित्याकाश इतिहोवाच' इत्याकाशश्रुत्या भूताकाशपरत्वमाशङ्क्य सर्वभूतकारणत्वज्यायस्त्वपरायणत्वादीनां भूताकाशेऽन्वयानर्हत्वात् बहुश आकाशशब्दाभ्यासे सत्यपि तद्बाधेन परमात्मपरत्वं निर्णीतम्, इहापि नामरूपयोः निर्वोढृत्वब्रह्मशब्दामृतत्वादिराकाशस्य ब्रह्मत्वं निश्चीयत इति न वैषम्यम् । दहराकाशस्य तदन्तर्वर्त्यन्वेष्टव्यान्तरप्रतीतेरन्वेष्टव्यत्वस्यैव तत्रत्यपरमात्मलिङ्गत्वम् नतु दहराकाशस्येति शङ्काविशेषसम्भवाद्दहराधिकरणोत्थानं युक्तम् । इहतु न तथा शङ्का दृश्यते ॥

नन्ववकाशप्रदानद्वारा नामरूपनिर्वहणहेतुत्वमाकाशस्य युज्यते अतः स्ववाक्ये परमात्मलिङ्गाभावो वैषम्यमिति । उच्यते किमत्र स्ववाक्ये परमात्मलिङ्गाभावः स्वरसार्थस्वीकारेण वर्ण्यते, उत क्लिष्टार्थकल्पनया । न प्रथमः स्वयमप्यन्येन निर्वाह्यनामरूपस्याकाशस्य सर्वनामरूपनिर्वोढृत्वानुपपत्तेः, तस्य च परमात्मलिङ्गभूतस्य स्ववाक्यस्थत्वेन 'सर्वाणि ह वा इत्यादिवाक्यादविशेषात् । न द्वितीयः अवकाशप्रदानद्वारा सर्वभूतोत्पत्तिकारणत्वस्याप्याकाशे सम्भाविततया स्ववाक्ये परमात्मासाधारणाभावस्य तत्र चात्र चाविशेषात् । अपरैस्तु ब्रह्मशब्दस्य मुक्तात्मपरत्वं वदद्भिरेवाकाशशब्दस्य भूताकाशपरत्वं पूर्वपक्षितम् तत्राप्याकाशविषयनिरूपणस्य कृतकरत्वं तुल्यम् । अतः परपक्षे पूर्वपक्षानुदय एव, अतः परमात्मलिङ्गानां भूताकाशेऽन्वयानर्हतया आकाशशब्दस्य यौगिकार्थे ग्राह्ये सत्यनन्तरपूर्ववाक्ये मुक्तात्मनः प्रकृतत्वान्नामरूपनिर्वोढृत्वादिलिङ्गाच्च मुक्तात्मपरमात्मविषयत्वेन संशयोत्थानं [illegible] — तत्रेति । किमाकाशशब्दनिर्दिष्टो मुक्तः ? उत परमात्मेति संशयः । तदर्थं धूत्वा शरीरमिति मुक्तस्यानन्तरप्रकृतत्वमाकाशशब्दस्य मुक्तपरतामवगमयति नेति किं मुक्तस्य नामरूपनिर्वोढृत्वं सम्भवति नेति किमत्र नामरूपनिर्वोढृत्वं नामरूपभक्तया उत नामरूपव्याकर्तृतयेति । किं 'ते यदन्तरा' इति निर्देशः कर्तृतया निर्वोढृत्वमुपपादयति नेति, यदा नोपपादयति तदा नामरूपमात्रत्वमेव तन्निर्वोढृत्वमिति तस्य जीवेऽपि बन्धदशायां सम्भवेन मुक्तात्मनः प्रकृतत्वमाकाशशब्दस्य मुक्तपरत्वावगमकमित्याकाशो मुक्तात्मेति पूर्वःपक्षः । यदा 'ते यदन्तरा' इति निर्देशः कर्तृतया नामरूपनिर्वोढृत्वमुपपादयति, तदा नामरूपनिर्वोढृत्वं नाम तत्कर्तृत्वरूपमिति तस्य मुक्तात्मन्यसम्भवान्मुक्तात्मनः पूर्वप्रकृतत्वेऽप्यस्मिन्वाक्ये मुक्तात्मनोऽवगत्यनुपपत्तेराकाशशब्दनिर्दिष्टः परमात्मेति राद्धान्तः । ते यदन्तरेति । उभयोर्मध्यस्थं वास्तदस्पृष्टं च फलितम् मध्यस्थस्यान्यतरपक्षपाताभावात् । तेन पूर्वोक्तमुक्तप्रत्यभिज्ञानादि[illegible] । [illegible] नामरूपनिर्वोढृत्वं कथमित्यत्राह—नामरूपेति । नामरूपयोर्निर्वहितेति मुख्यनुवादः नत्वर्थानुवादः, उपलक्षणतयाऽभिमतं निर्वोढृत्वं पूर्वावस्थायामपि नासीत्यत्राह—सएषहीति । नामरूपनिर्वोढृत्वं न नामरूपकर्तृत्वम् अपितु नामरूपमात्रत्वम् वहनहि धात्वर्थः, उपसर्गाणामानार्थत्वसम्भवात् नितरां वोढृत्वं निर्वोढृशब्दार्थः स्यादिति पूर्वपक्षिणोऽभिप्रायः । तर्हि कथं अमृतत्वादिकमित्यत्राह—

श्रीभाष्यम्

नामानि च पूर्वमविभक्तस्यैव नामरूपविनिर्मुक्ता साम्प्रतिक्यवस्था 'तद्ब्रह्म तदमृतम्' (८-१४.१) इत्युच्यते। आकाशशब्दश्च तस्मिन्नप्यसङ्कुचितप्रकाशयोगादुपपद्यते। ननु दहरवाक्यशेषत्वादस्य स एव दहराकाशोऽयमिति प्रतीयते। तस्य च परमात्मत्वं निर्णीतम्। मैवम् प्रजापतिवाक्यव्यवधानात्। प्रजापतिवाक्ये च प्रत्यगात्मनो मुक्तयवस्थान्तं रूपमभिहितम् अनन्तरं च 'विधूय पापम्' (८.१३.१) इति स एव मुक्तावस्थः प्रस्तुतः। अतोऽत्राकाशो मुक्तात्मा ॥

इति प्राप्त उच्यते–'आकाशोऽर्थान्तरत्वादिव्यपदेशात्' इति। आकाशः परं ब्रह्म; कुतः? अर्थान्तरत्वादिव्यपदेशात्। अर्थान्तरत्वव्यपदेशस्तावत् 'आकाशो ह वै नामरूपयोर्निर्वहिता' [८.१४.१] इति नामरूपयोर्निर्वोढृत्वं बद्धमुक्तोभयावस्थात्प्रत्यगात्मनोऽर्थान्तरत्वमाकाशस्योपपादयति। बद्धावस्थस्स्वयं कर्मवशान्नामरूपे भजमानो न नामरूपे निर्वोढुं शक्नुयात्; मुक्तावस्थस्य जगद्व्यापारासम्भवात् न नितरां नामरूपनिर्वोढृत्वम्। ईश्वरस्य तु सकलजगन्निर्माणधुरन्धरस्य नामरूपयोर्निर्वोढृत्वं श्रुत्यैव प्रतिपन्नम् 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छां.६.३.२) 'यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः। तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते' (मु.१.१.९) 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते' (तै.पु) इत्यादिषु। अतो निर्वाह्यनामरूपात्प्रत्यगात्मनो नामरूपयोर्निर्वोढाऽयमाकाशोऽर्थान्तरभूतः परमेव ब्रह्म। तदेवोपपादयति 'ते यदन्तरा' (छां.८.१४.१) इति। यस्मादयमाकाशो नामरूपे अन्तरा ताभ्यामस्पृष्टोऽर्थान्तरभूतः, तस्मात्तयोर्निर्वोढा अपहतपाप्मत्वात्सत्यसङ्कल्पत्वाच्च निर्वहितेत्यर्थः। आदिशब्देन ब्रह्मत्वात्मत्वामृतत्वानि गृह्यन्ते। निरुपाधिकबृहत्त्वादयो हि परमात्मन एव सम्भवन्ति; तेनात्राकाशः परमेव ब्रह्म। यत्पुनरुक्तं 'धूत्वा शरीरम्' (छां.८.१४.१) इति मुक्तोऽनन्तरप्रकृतः इति; तन्न 'ब्रह्मलोकमभिसम्भवानि' इति परस्यैव ब्रह्मणोऽनन्तरप्रकृतत्वात्।

श्रुतप्रकाशिका

तस्यैवेति। सांप्रतिकीति। 'नामरूपविमोक्षणानन्तरकालभाविन्यवस्था तस्य कालस्य प्रकृतत्वात् सांप्रतिकी चुच्यते ॥

राद्धान्ते व्यपदेशस्तावदिति। प्रदर्श्यत इतिशेषः। यद्वा नामरूपयोर्निर्वहितेति व्यपदेश इत्यन्वयः 'अर्थान्तरत्वशब्दस्तदुपपादकं धर्मं लक्षयति अर्थान्तरत्वमाकाशस्योपपादयति' इति ह्युक्तम्। भेदकधर्मव्यपदेशादित्यर्थं नामरूपयोरित्यादि। नामरूपनिर्वोढृत्वं च स्पष्टभेदकधर्मः अवयवशक्त्या निर्वोढृशब्दस्य वहनमात्रपरत्वादपि रूढिमपहरतीति न्यायात् कर्तृपरत्वं युक्तमितिभावः। नन्वेवसति 'ते यदन्तरा' इति कथं मुक्तस्यान्तरमभिधानमित्याह—तदेवोपपादयति ते यदन्तरेतीति। कर्मकृतनामरूपभाक्त्वाभावात्तयोः स्वेच्छया निर्वोढा परमात्मा नहि कर्माधीनचेष्टितस्य बद्धस्य जगद्व्यापारानुगुणसङ्कल्पादिरहितस्य मुक्तस्य च नामरूपनिर्वोढृत्वं सम्भवतीत्यर्थः। निर्वहितेति श्रुतिस्थपदानुकारः। आदिशब्दार्थमाह–आदिशब्देनेति। निरुपाधिकशब्दोऽनवच्छिन्नपरः उपाधिकृतं छेदकः जीवस्य ज्ञानतो बृहत्त्वं तच्च परमात्मप्रसादायत्तम्, बृहत्त्वादयइति। धर्मा इतिशेषः धूत्वेत्यादि। अत्रैव लोको ब्रह्म लोकः, प्रथमानिर्दिष्टस्याभिसंभवितुः प्राधान्येन प्राकरणिकत्वाद्रस्यपेऽपि लिङ्गबलात् प्राकरणिकत्वस्यास्वरसः हेतु

### श्रीभाष्यम्

यद्यप्यभिसम्भवितुर्मुक्तस्याभिसम्भाव्यतया परं ब्रह्म निर्दिष्टम्, तथाऽप्यभिसम्भवितुर्मुक्तस्य नामरूपनिर्वोढृत्वाद्यसम्भवादभिसम्भाव्यं परमेव ब्रह्म तत्र प्रत्येतव्यम्। किञ्च आकाशशब्देन प्रकृतस्य दहराकाशस्यात्र प्रत्यभिज्ञानात्, प्रजापतिवाक्यस्याप्युपासकस्वरूपकथनार्थत्वादुपास्य एव दहराकाशः प्राप्यतयेहोपसंह्रियत इति युक्तम्। आकाशशब्दश्च प्रत्यगात्मनि न क्वचिद् दृष्टचरः। अतोऽत्राकाशः परं ब्रह्म॥

अथ स्यात्—प्रत्यगात्मनोऽर्थान्तरभूतमात्माऽन्तरमेव नास्ति, ऐक्योपदेशात्, द्वैतप्रतिषेधाच्च; शुद्धावस्थ एव हि प्रत्यगात्मा परं ब्रह्म परमेश्वर इति च व्यपदिश्यते; अतः प्रकृतान्मुक्तात्मनोऽभिसम्भवितुर्नार्थान्तरमभिसम्भाव्यो ब्रह्मलोकः, अतो नामरूपयोर्निर्वोढा आकाशोऽपि स एव भवितुमर्हतीति; अत उत्तरं पठति—

## सू—४३ सुषुप्त्युत्क्रान्त्योर्भेदेन [१.३.४३]

### श्रुतप्रकाशिका

इत्यभिप्रायेणाह—यद्यपीति। अवान्तरप्रकरणेन पूर्ववाक्यस्य जीवस्वरूपपरत्वमभ्युपेत्य परिहृतम्, वस्तुतस्तु दहरे कर्तुत्व उपक्रान्तमहाप्रकरणबलात् पूर्ववाक्यमपि न जीवपरम्, किन्तु तस्य परमप्राप्यभूतपरब्रह्मपरं वक्तव्यमित्याह—किञ्चाकाशेति। प्रजापतिवाक्यस्य व्यवधायकत्वशङ्काव्यावृत्त्यर्थमाह—प्रजापतिवाक्यस्येति। हेत्वन्तरमाह—आकाशशब्दश्चेति।

उत्तरसूत्रमवतारयितुं शङ्कामाह—अथ स्यादिति। ननु कथमात्मान्तरमेव नास्तीत्युच्यते, त्रिपादीह्यन्ययोगव्यवच्छेदपरा प्रथमपाद एव चिदचिद्विलक्षणवस्तुसद्भावसमर्थनेत? उच्यते—सिद्धिस्तावदुभयविधा साधकप्रमाणसद्भावाधीना बाधकप्रमाणव्युदासाधीना च, बाधकप्रमाणव्युदासेन साधकसत्तायत्ता सिद्धिः स्थेयसी भवति तदभावे साधकमात्राधीना सिद्धिरस्थिरा, अस्थिरं चासत्कल्पम्। अत्र प्रथमे पादे साधकसद्भावाधीनसिद्धौ दर्शितायामप्यैक्योपदेशभेदनिषेधरूपबाधकव्युदसनस्य सूत्रकारैरित:पूर्वमकृतत्वात्, साधकाधीनसिद्धेरस्थिरप्रायत्वाच्छङ्कोत्थानम्। प्रत्यगात्मनोऽर्थान्तरभूतमात्मान्तरं दृढप्रमाणसिद्धं न भवतीत्यर्थः। चतुर्थपादेऽपीदमन्यदेश उक्तार्थाभिप्रायो वेदितव्यः॥

यद्वा त्रिपाद्या अन्ययोगव्यवच्छेदपरत्वं प्राचुर्येणेत्यभिप्रायेणेति नानुपपत्तिः। ऐक्योपदेशात् द्वैतप्रतिषेधाच्चेति। मुक्तप्राप्यतयोक्तस्य ब्रह्मलोकशब्दनिर्वाच्यतया बृहदारण्यके प्रत्यभिज्ञायमानस्य 'एकधैवानुद्रष्टव्यम्' 'स वा एष महानज आत्मा योऽयं विज्ञानमयः' 'नेह नानाऽस्ति किञ्चन' इति जीवैक्यप्रतिपादनात् भेदनिषेधाच्चेत्यर्थः। तत्रापि 'एष ब्रह्मलोकः सम्राडिति होवाच' इति प्रकरणावसाने तस्य परमात्मनो ब्रह्मलोकशब्दनिर्देशोऽवगम्यते, चशब्दसमुच्चये ऐक्योपदेशभेदनिषेधयोः प्रत्येकं भेदविरोधित्वात्। इतरेतरयोगे वा चशब्दः एकस्यान्यपरत्वशङ्कानिवारकत्वात् भेदनिषेधस्य नामरूपयोर्निर्वोढेति पूर्ववद्यथाश्रुत्यनुवादः, अतएवाह—नामरूपयोर्निर्वोढृत्वमिति स्वग्रन्थे निर्दिष्टम्। आपाततोऽर्थान्तरत्वे प्रतीतेऽपि न तत्सिद्धमङ्गीकर्तव्यमिति शङ्काग्रन्थस्यार्थः॥

## सू—४३ सुषुप्त्युत्क्रान्त्योर्भेदेन [१.३.४३]

श्रीभाष्यम्

व्यपदेशादिति वर्तते, सुषुप्त्युत्क्रान्त्योः प्रत्यगात्मनोऽर्थान्तरत्वेन परमात्मनो व्यपदेशात् प्रत्यगात्मनोऽर्थान्तरभूतः परमात्माऽस्त्येव। तथा हि वाजसनेयके "कतम आत्मा योऽयं विज्ञानमयः प्राणेषु" (बृ.६.३.७) इति प्रकृतस्य प्रत्यगात्मनस्सुषुप्त्यवस्थायामकिञ्चिज्ज्ञस्य सर्वज्ञेन परमात्मना परिष्वङ्ग आम्नायते "प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" (६.३.२१) इति तथोत्क्रान्तावपि "प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन्याति" (६.३.३५) इति। न च स्वपत उत्क्रामतो वा किञ्चिज्ज्ञस्य तदानीमेव स्वेनैव सर्वज्ञेन सता परिष्वङ्गान्वारोहौ संभवतः न च क्षेत्रज्ञान्तरेण तस्यापि सर्वज्ञत्वासम्भवात्॥

इतश्च प्रत्यगात्मनोऽर्थान्तरभूतः परमात्मेत्याह—

## सू—४४ पत्यादिशब्देभ्यः (१.३.४४)

अयं परिष्वञ्जकः परमात्मा उत्तरत्र पत्यादिशब्दैर्व्यपदिश्यते 'सर्वस्याधिपतिस्सर्वस्य वशी सर्वस्येशानः। स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्। एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय। तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति एतमेव विदित्वा मुनिर्भवति। एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' (बृ.६.४.३२), 'स वा एष महानज आत्माऽन्नादो वसुदानः' (६.४.

श्रुतप्रकाशिका

सूत्रस्याकाङ्क्षां पूरयति व्यपदेशादिति वर्ततइति। यथा "अथ शब्दानुशासनम्" इत्यत्र 'केषां शब्दानाम्' इत्युक्ते समस्तस्याप्यनुशासनपदस्य विभागेनानुषङ्गः तथेहापीति भावः। सूत्रे "सुषुप्त्युत्क्रान्त्योः" इति सप्तमी कस्य कस्मिन्निदं इत्यत्राह—प्रत्यगात्मनइति। अर्थान्तरत्वव्यपदेशरूपहेतुवादि देशाङ्कापरिहारपरत्वादस्य सूत्रस्यार्थसिद्धम् साध्यनिर्देशं दर्शयति अर्थान्तरभूतइति। अवान्तरार्थप्रतिज्ञात्वात् सूत्रे कण्ठोक्त्यभावः प्रधानार्थप्रतिज्ञनस्त्वत्र प्रायेण कण्ठोक्तिरुपलभ्यते। देहस्य प्राज्ञपरिष्वक्तत्वशङ्काव्यावृत्त्यर्थं 'विज्ञानमयः प्राणेषु' इति प्रकृतमित्युक्तम्। उत्सर्जन्—शरीरम्। इतिशब्दः, क्षेत्रज्ञान्तरेण परिष्वङ्गान्वारोहावाशङ्क्याह—नचेति॥

मुक्तावस्थेनात्मान्वारोह इत्यत्राह—इतश्चेति।

## सू—४४ पत्यादिशब्देभ्यः [१-३-४४]

सूत्रे 'पत्यादिशब्देभ्यः' इति निर्दिष्टत्वात्तदनुरोधाय श्रौतपाठक्रमानादरेण 'सर्वस्याधिपतिः' इति वाक्यं प्रथममुदाहृतं सूत्रे च तथा निर्देशः किमर्थं इतिचेत्, उच्यते कर्मसंबन्धनिषेधमुखेन सर्वेश्वरत्वादिगुणानां निरुपाधिकत्वज्ञापकस्य 'स न साधुना कर्मणा भूयान्' इत्यादिवाक्यस्य पूर्वं 'सर्वस्याधिपतिः' इत्यादिवाक्य पश्चात् 'एष भूताधिपतिः' इति वाक्यम्। [illegible] पूर्वापरवाक्यानां च तत्क्रमेण कोडीकरणार्थमव्याहतरूपतात्पर्यलिङ्गज्ञापनाय च 'पत्यादिशब्देभ्यः' इति निर्देशः। अधिपत्यादीत्यनुक्तिः 'पतिं विश्वस्यात्मेश्वरम्' इत्यादि-

श्रीभाष्यम्

२४) ' अजरोऽमृतोऽभयो ब्रह्म ' (६.४.२५) इति । एते च पतित्वजगद्विधरणत्वसर्वेश्वरत्वादयः प्रत्यगात्मनि मुक्तावस्थेऽपि न कथञ्चित्सम्भवन्ति । अतो मुक्तात्मनोऽर्थान्तरभूतो नामरूपयोर्निर्वहिताऽऽकाशः । ऐक्योपदेशस्तु सर्वस्य चिदचिदात्मकस्य ब्रह्मकार्यत्वेन तदात्मकत्वायत्त इति ' सर्वं खल्विदं ब्रह्म तज्जलान् ' (छां.३.१४.१) इत्यादिभिर्वाक्यैः प्रतिपाद्यत इति पूर्वमेव समर्थितम् । द्वैतप्रतिषेधश्च तत एवेत्यनवद्यम् ॥

॥ इति शारीरकमीमांसाभाष्ये प्रथमाध्यायस्य तृतीयः पादः ॥

श्रुतप्रकाशिका

मिरस्य प्रकरणस्यैकार्थ्येन विशेष्यस्य परमात्मनो नारायणत्वद्योतनार्था अतएवास्य परिष्वक्तः परमात्मेति भाष्ये खल्वु ' पातिविश्वस्य ' इति । प्रकरणस्य ' तस्याशिखाया मध्ये परमात्मा व्यवस्थितः ' इति परमात्मशब्दः स्फोरयति । मुमुक्षूपास्यत्वरूपमहागुणवाचिशब्दत्वात् पत्यादिशब्देरुह ' तमेतम् ' इत्यादिवाक्यमुपात्तम् ' अन्नादः ' अन्नदः आदिरत्योदिशब्दोक्तानां धर्माणां मुक्तव्यावर्तकत्वं दर्शयति । एतेचेति । मुक्तस्य जगद्व्यापाररहितत्वान्नसम्भवतीत्यर्थः, किं जीवमात्रादर्थान्तरत्वे विप्रतिपत्तिः ? उत मुक्तादर्थान्तरत्व इति विकल्पे प्रथमं शिरःपूर्वसूत्रेण प्रत्युक्तम् अनेनतु द्वितीयं शिर इति विभागः । यद्वा सूत्रद्वयोक्तैर्धर्मैर्मुक्तव्यावृत्तिसिद्धिः कथमित्यत्राह—एतेचेति । एतच्छब्दः सूत्रद्वयोदाहृतगुणपरः अतआदिशब्दे परिष्वङ्गान्वारोहावन्तर्भूतौ सुषुप्त्युत्क्रान्त्योः परिष्वङ्गस्यान्वारोहस्य च जगद्व्यापारान्तर्भूतत्वान्मुक्तस्य तद्रहितत्वाच्च, तौच तस्मिन्नसम्भवतः एते अकर्मसंपाद्या इति चाभिप्रायः । ' स न साधुना कर्मणा भूयान् ' इति श्रुतत्वात् । तेन बद्धात्मन्यसम्भवः मुक्तैश्वर्यस्य जगद्व्यापारवर्ज्यत्वात् मुक्तात्मन्यसम्भव इत्यर्थः एवमनेन सूत्रद्वयेन परमात्मनश्चिदचिद्वैलक्षण्ये प्रमाणदार्ढ्यस्योपपादितत्वात् ऐक्योपदेशभेदनिषेधौ तदनुरोधेन वर्णनीयाविति शङ्काबीजं परिहृतं भवति । एतावदेवैतदधिकरणकृत्यम्, एवं प्रबलतरभेदश्रुत्यनुरोधेन निर्वाहे कर्तव्ये सत्यैक्योपदेशभेदनिषेधयोर्मुख्यतयाऽपि निर्वाहे प्राप्ते सूत्रकारैरेव श्रुतितोऽर्थतश्च वक्ष्यमाणं श्रुतिसिद्धं मुख्यनिर्वाहं तत्रतत्र प्रसङ्गे पूर्वमपि स्वेनोक्तमिह स्मारयति ऐक्योपदेशस्त्विति । कार्यकारणैक्यनिबन्धनः न तु जीवेश्वरैक्यनिबन्धन इत्यर्थः । ततएव कार्यकारणैक्यादेव ऐक्योपदेशशेषत्वात् भेदनिषेधश्रुतिश्च कुतर्कसिद्धकार्यकारणभेदप्रतिषेधपरेत्यर्थः; भेदनिषेधस्य प्रकार्यैक्यनिबन्धनत्वमप्यर्थसिद्धम् । प्रकारिप्रकारिभावस्य च कारणत्वनिर्वाहकत्वात् । तदारम्भणाधिकरणे कार्यकारणैकत्वसमर्थनं श्रौतं तेनैक्योपदेशस्य मुख्यत्वमार्थम् । सामानाधिकरण्यस्य शरीरशरीरिभावनिबन्धनत्वं ' अवस्थितेरिति काशकृत्स्नः ' इति वक्ष्यते तत्राकृतिनयगोचरतया मुख्यत्वसमर्थनं चिद्विषयमचिद्विषयं च ' अंशो नानाव्यपदेशात् ' ' उभयव्यपदेशात् ' इत्यधिकरणद्वयेन कृतम् । एव वक्ष्यमाणो मुख्यनिर्वाह इह स्मारितः । पादद्वयोक्तमर्थमभिप्रेत्याह—इत्यनवद्यमिति ॥

परैस्तु ' सुषुप्त्युत्क्रान्त्योः ' इत्यादिसूत्रद्वयं बृहदारण्यके ' कतम आत्मा योऽयं विज्ञानमयः ' इत्यादिप्रकरणविषयमधिकरणान्तरत्वव्याख्यातम् । तत्रचोपक्रमे ' योऽयं विज्ञानमयः प्राणेषु ' इति शारीरलिङ्गदर्शनादुपसंहृरिष

## श्रुतप्रकाशिका

' स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु ' इति शरीरापरित्यागोन्मध्ये च सुषुप्त्यादिसांसारिक तत्तदुपस्थाप्रतिपादनादत्र संसारिस्वरूपं प्रतिपाद्यमिति पूर्वपक्षं कृत्वा ' सुषुप्त्युत्क्रान्त्योः ' प्राज्ञाद्भेदव्यपदेशेन पत्यादिशब्दैश्चासंसारिस्वरूपं प्रतिपाद्यमिति सिद्धान्त उक्तः । उपक्रमादिषु शारीरलिङ्गकथनानुवदनम् तस्य परेण ब्रह्मणैक्योपदेशार्थं कृतम् ' योऽयं विज्ञानमयः ' ' सवा एष महानज आत्मा ' इति परमेश्वरेणैकत्वमुपदिश्यते । ' अतऊर्ध्वं विमोक्षायैव ब्रूहि ' इति पदेपदे प्रश्नात् ' अनन्वागतस्तेन भवत्यसङ्गोह्ययं पुरुषः ' इति पदेपदे पुण्येनानन्वागतत्वादिकथनरूपप्रतिवचनाच्च । असंसारिस्वरूपप्रतिपादनपरत्वसिद्धिरिति शारीरलिङ्गदर्शनपरिहारश्चोक्तः । एवमधिकरणभेदवर्णनमयुक्तम् । द्वितीयतृतीयपादान्तर्गताधिकरणान्तसूत्रवैरूप्यात् निरूपणीयाभावाच्च । नह्यत्र सूत्रद्वये प्रतिज्ञावाक्यं श्रूयते विवक्षिततत्प्रकरणस्थधर्मिवाचिशब्दाभावात् प्रतिक्षेप्यव्युदासकशब्दाभावाच्च, ' ईक्षतेर्नाशब्दम् ' ' आनन्दमयोऽभ्यासात् ' ' अन्तस्तद्धर्मोपदेशात् ' इतिहि सूत्रशैली, अतोऽत्र तथाभावाभावादध्याहारस्स्यात्, सचानध्याहारेण निर्वाहे सम्भवत्यनुपपन्नः । इह च पूर्वप्रकृतसाध्यहेतुसमर्थकत्वेऽध्याहारोऽनपेक्षित । चतुर्थेऽपि पादेऽधिकरणान्तरारम्भेषु धर्मिवाचिपदाश्रयण नदोषः, तत्र प्रधानादेः प्रतिपाद्यत्वव्युदासपरत्वाद्धर्मिवाचिपदनैरपेक्ष्यात् ' आनुमानिकमप्येकेषाम् ' इतिचेन्नेति ' न सङ्ख्योपसंग्रहादपि ' इति च व्युदसनप्रतिज्ञा श्रूयते । नेति पदस्योत्तरत्र अनुषङ्गेऽपि नदोषः । प्रधानादिपरत्वव्युदासस्य परमात्मपरत्वोपपादनशेषत्वात् परमात्मपरत्वस्य प्राधान्येन प्रतिपिपादयिषितत्वात् सर्वत्र तद्विवक्षाया प्रतिज्ञावाक्यश्रवणात् क्वचिदध्याहारदर्शनेऽपि गत्यन्तरसद्भावे सति स्वल्पमात्र इव निर्वाहेऽनुपपन्नः । अतःपरमात्मपरत्वसमर्थनपराधिकरणवैरूप्यादयुक्तम् । निरूपणीयाभाव च अधिकरणान्तरत्वे दूषणम् सन्देहोहि न्यायप्रवृत्तिः यत्रैकस्मिन्वाक्ये प्रकरणे वा परस्परविरुद्धार्थद्वय प्रधानप्रतिपाद्यतया प्रतीयते, तत्र सन्देहेसति न्यायावतारः इह च तादृशसंशयविषयो न दृश्यते ॥

तथाहि जाग्रत्स्वप्नाद्यवस्थाप्रतिपादकवाक्यानां जीवविषयत्वे न संशयपदं, नच तदपाकर्तुं शक्यम् अतस्तन्निरूपणपरत्वमधिकरणस्यायुक्तं ' असङ्गोह्ययं पुरुषः ' इत्यादिवाक्यानां शुद्धस्वरूपपरत्वमपि नसन्देहपदम्, निरवधिकानन्दनिरङ्कुशैश्वर्यप्रतिपादकानां ' स एको ब्रह्मलोक आनन्दः ' ' सर्वस्य वशी सर्वस्येशानः ' इत्यादिवाक्यानां परमात्मपरत्वेऽपि नसन्देह अत एतत्समर्थनमपेक्षितम् । समानाधिकरणवाक्यानां ब्रह्मात्मकत्वोपदेशपरत्वेऽपि नाविशय इति न तत्समर्थनार्थमधिकरणारम्भो युक्त । जीवस्वरूपकथन ब्रह्मात्मकत्वविधानायानुवाद इत्ययमर्थो निरूप्य इति चेन्न, प्रामाण्यानां वाक्यानामनुवादकत्वस्य अप्रामाण्यानां विधायकत्वस्य च स्वत एव स्पष्टत्वात् । नह्यत्र ' अग्निर्हिमस्य भेषजम् ' इत्यस्य वाक्यस्यानुवादकत्वं ' स्वर्गकामो यजेत ' इति वाक्यस्य विधित्वं चात्र निरूपणीयम् अतो जीवरूपकथने प्राप्तविशेषणोक्तेरनुवादत्वं नसमर्थनीयम् अप्राप्तधर्मप्रतिपादनस्य विधित्वं च न साध्यम् । विहितधर्मनिषेधेन स्वरूपैक्यप्रतिपादन चानुपपन्नम् । सूत्राक्षरप्रातिकूल्याच्च, नद सूत्रद्वय ब्रह्मात्मकत्वोपदेशसमर्थनपरं भेदसमर्थनपरं च इत्यक्षरस्वारस्यादवगम्यते ॥

नच मृषावादाभिमत ब्रह्मात्मकत्वमस्मिन्प्रकरणे दृश्यते ' स वा एष महानज आत्मा योऽयं विज्ञानमय स एषोऽन्तर्हृदयआकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानस्सर्वस्याधिपति ' इतीश्वरत्वाद्युपदेशपरवाक्यमात् तन्मतेऽधिष्ठानतादात्म्य प्रदर्शन, नहीश्वरोऽशेषजगदध्यासाधिष्ठान ईश्वरत्वादिप्रामाण्यदर्शनात्, न हि रज्ज्वादिरारोपितस्य कश्चिदभूदृष्टनाम्नुवाराधिष्ठानम् । किंच ईश्वराध्यस्तजीवदर्शनं नेश्वरकर्तृकम् ईश्वरस्य सर्वज्ञतया स्वारो

## श्रुतप्रकाशिका

विनाकारविषयभ्रमानुपपत्तेः । नचान्यकर्तृक अधिष्ठानभूतेश्वरस्य सद्यायंगोचरत्वात् । अधिष्ठानानवभासेऽप्यस्तप्रतीति रुपपद्यते, घटस्सन् पटस्सन् इति सन्मात्रमेवाधिष्ठानतयाऽनुवृत्तमवभासत इति च तदीयप्रक्रिया नावीश्वरोऽधिष्ठानतया प्रतीयत इति, अनरसर्पभूदलनयोरन्योऽन्यतादात्म्यापदेशवत् जीवेश्वरतादात्म्योपदेशोऽनुपपन्नः । ईश्वरधर्मांश्च अविवक्षिता इतिचेत् पदानां लक्षणा, किंच अप्राप्तानां धर्माणामनुवादासम्भवाद्विहितस्य निषेधायोग त ' एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल ' इति तात्पर्यलिङ्गदर्शनाच्च हेत्वा धर्माणामविवक्षितत्व दुर्वचम् । सिद्धान्त्यभिमततु तादात्म्य तदुपपादनचोत्तरत्र निरूपयिष्यते । अतस्सूत्राक्षरप्रातिकूल्यात् सद्यायविषयाभावात् स्वामितार्थशरीरस्यानुपपन्न वात् प्रामाणिकतादात्म्यनिरूपणस्यान्यत्र क्रियमाण वान्चाकाशशब्दनिर्दिष्टस्यपरमात्म वोपपदक सूत्रद्वयमिति सिद्धम् ॥

यादवप्रकाशपक्षेऽपि निरूपणीयाभावादनारम्भणीयत्वदोष. स्थित: । पूर्वपक्षसिद्धान्तदर्शनप्रकारश्चानुपपन्न:, परिष्वङ्गानारोहाभ्यां प्राज्ञस्यात्मनदशारीराद्भेदः स्थित इति विषयशोधकमात्र सूत्र व्याख्याय स प्राज्ञ: किं मोक्ता विद्याकर्माधिशयलब्धो जीव. उत पर इति विशय मोक्तुर्विशानमयस्य प्रकरणस्थतया वाक्यविज्ञानवादीनां विद्याकर्मलब्धतया जीवत्वमुक्त्वा पत्यादिशब्दानां शाखान्तरे परमात्मविषय यदर्शनादन्यत्र सुषुप्तौ परमात्मनि संपत्तिश्रवणाच्च परमात्म व साधितम् तत्र तावदाद्यसूत्रव्याख्यानमयुक्तम्, विषयशोधकत्वमात्रे सूत्रवैयर्थ्यात् । पूर्वपक्षपरत्वे शब्दस्य हेतोर्विरुद्धत्वात् मोक्तुः प्रकृततया कर्माधीनैश्वर्यं वस्य पूर्वपक्षहेतोरशब्दत्वाच्च तच्छङ्काव्युदसनासमर्थभेदानुभाषणे प्रयोजनाभावात् सूत्रवैयर्थ्यम् । किंच शारीरात् भेदकौ परिष्वङ्गानारोहौ प्राज्ञकर्तृकौ श्रूयत । प्राज्ञ व च स्वाभाविक, पति वादयश्च स्वाभाविका एवात्र प्रतिपाद्यन्ते उपाध्यनुक्तेः तथैव ' स न साधुना कर्मणा भूयान् ' इत्युपनिषच्च । अत स्तद नादत्य पत्यादिशब्दानां शाखान्तरप्रसिद्धया परमात्म साधक वोचित्यद्वरा । स्तुद्वदत्सवादस्तु यद्यपि प्र स्य त्वकारणत्वावगमकः तथाऽपि कारणस्य चिदचिद्वैलक्षण्यतु सवादनिरपेक्षहेतुः प्राज्ञत्व निरुपाधिकैश्वर्यवत्त्व च, यद्यन्यहेतुक निरङ्कुशैश्वर्यमपि श्रुत्यन्तरसवादसपेक्ष, तर्हि श्रुत्यन्तरेषु कथमाश्वास. तत्रापि सवादान्तरापेक्षणेऽनवस्था स्यात् । परस्परश्रुत्यपेक्षणेऽन्योऽन्याश्रयस्स्यात् । अतोऽधिकरणान्तरकल्पन तन्निर्वहणचानुपपन्नम् । अतस्सूत्रत्रयमेवाधिकरणम् ॥

### इति अर्थान्तरत्वादिव्यपदेशाधिकरणम्



## गूढार्थसंग्रह

' ज्योतिर्दर्शनात् ' इतिसूत्रे सर्वावभासकज्योतिष. विवक्षितत्वेन ' परज्योतिः ' इत्यत्र ज्योतिषः तादृशतया मुक्तप्राप्यं ज्योतिरेव 'नतत्र सूर्यो भाति' इत्यत्र विवक्षितम् । मुण्डके च ज्योतिषा ज्योतिष्ट्वनिरूपणार्थं प्रवृत्तायाः 'नतत्र सूर्यो भाति ' इति श्रुतेरनन्तर मुक्तस्य शानेन ब्रह्मसाम्यमपि प्रतिपाद्यते । दहरविद्याया अपहतपाप्मत्वाद्यष्टकविशिष्टत्वेन परमात्मानमभिधाय जीवस्यापि तद्धर्मवत्त्वेन प्रजापतिविद्याया प्रतिपादितत्वेन मुक्त: समानधर्मा बुद्धिस्थ इति प्रजापतिवाक्यानन्तरवाक्ये ' आकाशोह वै नामरूपयोर्निर्वहिता ' इति परमात्मन्यप्याकाशशब्दस्यरूढ्या प्रवृत्तेरसम्भवेन योगेनैव प्रवृत्तेः आकाशाधिकरणे निर्णीततया ' धूत्वा शरीरमकृतं कृतात्मा ' इति तदनन्तरपूर्वश्रुतौ 'मुक्तस्य प्रस्तुतत्वेन प्रस्तुते मुक्ते परमात्मत्वेन बुद्धिस्थाकाशशब्दयोगार्थोऽपि सम्भवति । मुण्डके च ' नाम

## गूढार्थसंग्रहः

रूपादिमुक्तः——दिव्यम्' इत्यभिधानेन 'ते यदन्तरा तद्ब्रह्म' इत्यत्र नामरूपविमोक एव विवक्षित इत्याक्षेपे प्राप्ते अर्थान्तरत्वाधिकरणं प्रारभ्यते ॥

अन्यः अर्थः अर्थान्तरम् पूर्वं नामरूपसम्बद्धः यः जीवः सः परमात्माधीनसङ्कल्पनामरूपवानेव, तस्य नामरूपविनिर्मोकोऽपि सङ्कल्पाधीनः, इति तद्विलक्षण एव नामरूपयोर्निर्वहिता 'ते यदन्तरा' इत्यत्र विवक्षितः। निर्वोढा इत्यर्थः नामरूपसम्बद्धस्य जीवस्य तदभावमात्रेण तन्निर्वोढृत्वं सम्भवति 'ते यदन्तरा' इत्यत्र कर्ममूलकनामरूपसम्बन्धाभाव एव विवक्षितः। ततो जीवाद्वैलक्षण्यम् मुक्तस्य पूर्वं नामरूपसम्बन्धसत्त्वेन कालभेदेनैव 'ते यदन्तरा' इत्यस्योपपत्तिर्वाच्या; न तु सार्वदिकं सम्भवति। अतः 'ते यदन्तरा' इत्यस्य नामरूपस्पर्शसामान्याभावस्यैव विवक्षितत्वेन तेनाप्यर्थान्तरम् 'तद्ब्रह्म' इत्युत्तरत्र वर्तते, ब्रह्म वादेरसम्भव इत्यर्थः। एतेन आदिपदेन पूर्वमुक्तस्य यस्याश्रुतौ प्रतिपादनं तस्यामेव मुक्तप्राप्यत्वेनाभिधानेन प्राप्यब्रह्मनिरूपणपरत्वमस्य वाक्यस्येति प्रकरणमपि उक्तम् समानधर्मवत्त्वस्य मुक्तस्य सत्त्वेऽपि नामरूपनिर्वोढृत्वकथनेनैव मुक्तगतधर्मसामान्यस्यापि निर्वाहकत्वम्-परमात्मन एव विवक्षितम्। ब्रह्मशब्दार्थबृहत्त्वे मुक्तधर्मभूतज्ञानविकासस्यान्तर्भूततया परमात्मसङ्कल्पाधीन एव प्रकाशः तस्येति निरुपाधिकप्रकाशवान् परमात्मैव ॥

आकाशशब्देन प्रस्तुतस्य आकाशशब्दार्थस्यैव 'सुषुप्त्युत्क्रान्त्योः' जीवभेदप्रतिपादनात् जीवानां 'पत्यादिशब्देभ्यः' स्वामित्वप्रतिपादनाच्च जीवभिन्नः परमात्मैव विवक्षित इत्यभिप्रायेणैव सूत्रत्रयमेतदधिकरणे सूत्र्यते। ज्योतिःशब्दार्थे पूर्वं बुद्धिस्थतया ब्रह्मसमानधर्मवत्त्वेन प्रतिपन्ने मुक्तेऽपि प्रकाशमानत्वप्रकाशकत्वयोः सम्भवेन शङ्काशब्दार्थे ज्ञानिरासः पूर्वसूत्रेण कृतः। प्रमिताधिकरणेऽपि 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा—ज्योतिरिवाधूमकः ईशानो भूतभव्यस्य' इत्यत्र जीवानुवादेनैव भूतभव्येशितृपरमात्माभेदः अभिधीयते ॥

उपसंहारे 'अङ्गुष्ठमात्रः—हृदये सन्निविष्टः—तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण' इत्यत्र पूर्वार्धे जीवपरम् 'तं स्वाच्छरीरात्' इत्यत्र शरीरात्पृथक्करणं विवक्षितम् 'तं शुक्रममृतम्' इत्यत्र जीवस्य परमात्माभेदः उपसंहारे जीवमनूद्य परमात्मोपसंहारेण 'अङ्गुष्ठमात्रः' इति पूर्वमपि जीवमनूद्य परमात्माभेद एव विधीयते। किंच 'ज्योतिर्दर्शनात्' इति सूत्रे 'परज्योतिः' इति श्रुतेरपि विवक्षितत्वेन 'स उत्तमः पुरुषः' इत्यत्र मुक्तस्य परमात्माभेदप्रतिपादनेन जीवभिन्नस्य परस्यैवाभावेन जीववैलक्षण्यं न सिद्ध्यतीति शङ्कायां 'सुषुप्त्युत्क्रान्त्योः' इति सूत्रद्वयम्। 'सुषुप्त्युत्क्रान्त्योः' इत्यत्र 'प्राज्ञेनात्मना सम्परिष्वक्तः, प्राज्ञेनात्मनाऽन्वारूढः' इति श्रुतिद्वयं परैरप्युदाहृतम्। अजातशत्रुब्राह्मणान्ते सुषुप्तं प्रस्तुत्य 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते' इत्यभिधाय 'हिता नाम नाड्यः द्वासप्ततिसहस्राणि इत्यादिकमुक्तम्। ज्योतिर्ब्राह्मणे 'हिता नाम नाड्यः' इत्यादिकमभिधाय तदनन्तरं विद्यायामन्यते अथ यत्र देव इव राजेव अहमेवेदं सर्वोऽस्मीति मन्यते' इत्यानन्तरं प्राज्ञेनात्मना सम्परिष्वक्तः, न बाह्यं किंचन वेद नान्तरम्' इति तदुत्तरं तद्ब्राह्मणान्ते 'प्राज्ञेनात्मनाऽन्वारूढः उत्सर्जन् याति' इति श्रूयते, अत्रोभयत्राजातशत्रुब्राह्मणान्ते सुषुप्तौ आकाशशब्दार्थपरमात्मसम्बन्धिन एव हितानामनाडीसम्बन्धप्रतिपादनेन ज्योतिर्ब्राह्मणे सुषुप्तौ हितानामनाडीसम्बन्धस्य पूर्वमभिधानेन चाकाशशब्दार्थपरमात्मसम्बन्धी जीव एव विवक्षित इति स्फुटम्। तदन्ते 'प्राज्ञेनान्वारूढः' इत्यत्रापि स एव विवक्षितः। आकाशशब्दार्थपरमात्मसम्बन्धी जीवः परमात्मनो भिन्न एव, सुषुप्तौ परमते अन्तःकरणादिलयस्य प्रतिपादनेन 'सलिल एको द्रष्टा अद्वैतो भवति' इत्येकत्वस्य विवक्षणेन 'अन्यार्थं तु जैमिनिः' इति सूत्रभाष्ये सुषुप्तौ लयानन्तरं प्रबोधे सर्वैः वेदान्तिभि

(१.३.) गूढार्थसङ्ग्रहः

ध्यानेन सुषुप्तौ जीवभेदस्य परमात्मनि स्पष्टं श्रुतिषु प्रतिपादनेन तत्सिद्धान्तः श्रुत्याद्यननुगुण इति स्पष्टम्। 'कतम आत्मा योऽयं विज्ञानमयः' इति पूर्वप्रस्तुतजीवस्य 'स वा एष महानज आत्मा योऽयं विज्ञानमयः' इत्यत्र परमात्मा ऽभेदएव बुबोधयिषित इति शङ्कानिरासाय 'पत्यादिशब्देभ्यः' इति ॥

'स वा एष महानजः' इत्यस्यामेव श्रुतौ 'यएषोऽन्तर्हृदय आकाशः, सर्वस्य वशी' इत्याद्यभिधानेन पूर्वस्मात् भिन्नत्वेन प्रभुपरमेव निर्दिश्य 'सर्वस्य वशी, सर्वस्याधिपतिः' इति जीवाधिपतित्वाभिधानेन 'स वा एष महानज आत्मा' इत्यत्र जीवस्य परमात्माभेदः सर्वथा न घटत इति सिद्धम्। आकाशशब्दार्थस्यैव सूत्रद्वये जीवभेदस्य प्रतिपादनेनात्र सूत्रद्वये अधिकरणभेदकल्पना अनुचिता। एवञ्च 'स उत्तमः पुरुषः' इत्यत्रापि प्राप्य एव पुरुषः प्रतिपिपादयिषितः। 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा' इत्यत्र 'पुरुषान्नपरं किञ्चित्' इत्यादौ पुरुषशब्दस्य परमात्मपरत्वस्य परेषामपि सम्मततया 'स वा अयं सर्वासु पूर्षु पुरिशयः' इत्यत्रोक्तनिर्वचनसिद्धार्थस्य तत्रैव सम्भवेन 'अर्भकौकस्त्वात्' इति सूत्रे अङ्गुष्ठप्रमितत्वस्य हृदयपरिमाणनिबन्धनत्वोक्तया परमात्मपरत्वे विरोधाभावेन 'जनानां हृदये सन्निविष्टः' इत्यत्र सर्वजनहृदयवृत्तित्वस्य एकस्यैव प्रतिपादनेन 'सर्वस्यचाहम्' इति गीतानुसारेण जीवे सर्वजनहृदयसम्बन्धस्यासम्भवेन पूर्वार्धे परमात्मैव विवक्षितः। 'तं स्वाच्छरीरात्' इत्यत्र पुरुषशब्दस्य सर्वशरीरबोधकत्वेन स्वशरीरस्थात् चेतनादिव जीवादपि पृथक्करणं विवक्षितम् सविशेषस्यामृतत्वं न सम्भवतीत्याक्षेपपरिहाराय 'तं विद्याच्छुक्रममृतमिति' जीवस्यैव जननमरणयोरसम्भवे का कथा परमात्मनः? धर्मधर्मिसम्बन्धानां भिन्नतया सम्बन्धिविनाशेऽपि धर्मिणः न नित्यत्वहानिः— इत्याशयः। 'प्राज्ञेनात्मना' इति श्रुत्युक्तसपरिष्वङ्गाविरोधार्थं। 'सलिल एको द्रष्टा' इत्यत्र नैव वर्णयितुं शक्यः— 'ततोऽन्यद्विभक्तं यत्पश्येत्' इति सुषुप्तिप्रकरणे वाक्यसत्त्वेनाद्वैतशब्दस्य पृथगवभासानर्हनीरक्षीरसम्श्लेषरूपाविभाग एवेति सूत्रकाराशयः॥

इति अर्थान्तरत्वादिव्यपदेशाधिकरणम्

अथ वेदान्तसारः

## सू—४२ आकाशोऽर्थान्तरत्वादिव्यपदेशात् (१.३.४२)

'आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' (छां.८.१४.१) इत्यादिना निर्दिष्ट आकाशः 'धूत्वा शरीरमकृतं कृतात्मा' (८.१३.१) इति प्रकृतात्प्रत्यगात्मनः परिशुद्धादर्थान्तरभूतः परमपुरुष, नामरूपयोः निर्वोढृत्वतदस्पर्शत्वार्थान्तरत्वामृतत्वादिव्यपदेशात्॥

तत्त्वमस्यादिनैक्योपदेशात् प्रत्यगात्मनो नार्थान्तरभूत परमपुरुष इत्याशङ्क्याह—

## सू—४३सुषुप्त्युत्क्रान्त्योर्भेदेन (१.३.४३)

'प्राज्ञेनात्मना सम्परिष्वक्तः नबाह्यं किंचन वेद नान्तरम्' (बृ.६ ३.२१) 'प्राज्ञेनात्मनाऽन्वारूढः' (६.३. ३५) इति सुषुप्त्युत्क्रान्त्योः बाह्यान्तरविषयानभिज्ञात्प्रत्यगात्मनः प्राज्ञमेव प्राकृतया भेदेन व्यपदेशादर्थान्तरभूत एव॥

## सू–४४ पत्यादिशब्देभ्यः (१.३.४३)

परिष्वङ्गके प्राज्ञे श्रूयमाणेभ्यः पत्यादिशब्देभ्यश्चायमर्थान्तरभूतः ‘सर्वस्याधिपतिः सर्वस्य वशी सर्वस्येशानः’, (बृ.६.४.२२) इति उत्तरत्र श्रूयते, ऐक्योपदेशेऽपि ‘अवस्थितेरिति काशकृत्स्नः’ (छा.१.४.२२) इत्यनेन जीवस्य शरीरभूतस्याऽऽत्मतयाऽवस्थितेरिति स्वयमेव परिहरिष्यति ॥

इति वेदान्तसारः

अथ वेदान्तदीपः

## सू—४२ आकाशोऽर्थान्तरत्वादिव्यपदेशात् (१-३-४२)

छान्दोग्ये—‘आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृत स आत्मा’ (छा.८.१४.१) इत्यत्राकाशशब्दनिर्दिष्टः किं मुक्तात्मा उत परमात्मा ? इति संशयः । मुक्त इति पूर्वपक्षः ‘धूत्वा शरीरमकृत कृतात्मा ब्रह्मलोकमभिसंभवानि’ (८.१३.१) इति मुक्तस्यानन्तरप्रकृतत्वात् । राद्धान्तस्तु—‘नामरूपयोर्निर्वहिता ते यदन्तरा’ इति स्वयमस्पृष्टनामरूपतया नामरूपयोर्निर्वोढृत्वेन श्रूयमाणोऽयमाकाशो बद्धमुक्तोभयावस्थात् प्रत्यगात्मनोऽर्थान्तरत्वात्परमात्मैव । सूत्रार्थस्तु आकाशः परमात्मा, तस्य नामरूपयोर्निर्वोढृत्वतदस्पर्शलक्षणार्थान्तरत्वव्यपदेशात् ; प्रत्यगात्मनो ह्यर्थान्तरभूत एव नामरूपयोर्निर्वोढा बद्धावस्थस्तावन्नामरूपाभ्यां स्पृष्टस्तत्परवशश्चेति न निर्वोढा ; मुक्तस्यापि जगद्व्यापाररहितत्वान्न निर्वोढृत्वम् आदिशब्देन निरुपाधिकब्रह्मत्वामृतत्वात्मत्वादीनि गृह्यन्ते ; तानि निरुपाधिकानि मुक्तस्यापि न संभवन्ति ॥

ननु तत्त्वमस्यादिनैक्यव्यपदेशात् ‘नेह नानाऽस्ति’ इति भेदप्रतिषेधाच्च न प्रत्यगात्मनोऽर्थान्तरभूतः परमात्मेत्याशङ्क्याह—

## सू—४३ सुषुप्त्युत्क्रान्त्योर्भेदेन (१-३-४३)

‘व्यपदेशात्’ इति वर्तते ‘प्राज्ञेनात्मना संपरिष्वक्तः’ (बृ.६.३.२१) ‘प्राज्ञेनात्मनाऽन्वारूढः’ (६.३.३५ इति सुषुप्त्युत्क्रान्त्योः सुप्तसकलविशेषविज्ञानात् प्रत्यगात्मनस्तदानीमेव सर्वज्ञतया, भेदव्यपदेशात्प्रत्यगात्मनोऽर्थान्तरभूत एव परमात्मा ॥

## सू—४४ पत्यादिशब्देभ्यः (१.३.४४)

परिष्वङ्गके प्राज्ञे श्रूयमाणेभ्यः पत्यादिशब्देभ्यश्चायं प्रत्यगात्मनोऽर्थान्तरभूतः परमात्मा ‘सर्वस्याधिपतिः सर्वस्य वशी सर्वस्येशानः’ इत्यादौ ऐक्योपदेशभेदप्रतिषेधौ तु ब्रह्मकार्यत्वनिबन्धनाविति ‘तज्जलानिति—सर्वं खल्विदं ब्रह्म’ (छां.३.१४.१) इत्यादिश्रुतिभिरेव व्यक्तौ ॥

इति वेदान्तदीपः

इति अर्थान्तरत्वादिव्यपदेशाधिकरणम्

इति श्री शारीरकमीमांसाभाष्ये प्रथमाध्यायस्य तृतीयःपादस्समाप्तः

श्रीमते रामानुजाय नमः

श्रीशारीरकमीमांसाभाष्ये प्रथमाध्याये

## चतुर्थः पादः

### अथ आनुमानिकाधिकरणम्

श्रीभाष्यम्

## सू-१ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च (१-४-१)

उक्तं परम ार्थलक्षणमोक्षसाधनतया जिज्ञास्यं जगज्जन्मादिकारण ब्रह्माचिद्वस्तुनः प्रधानदेश्चेतनाच्च बद्धमुक्तोभयावस्थाद्विलक्षणं निरस्तसमस्तहेयगन्धं सर्वज्ञं सर्वशक्ति सत्यसङ्कल्पं समस्तकल्याणगुणात्मकं सर्वान्तरात्मभूतं निरङ्कुशैश्वर्यमिति ।

### अथ आनुमानिकाधिकरणम्

श्रुतप्रकाशिका

## सू-१ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च (१-४-१)

प्रथमपादश्चिदचिद्विलक्षणकारण वाक्योगव्यवच्छेदपरः, अन्ययोगव्यवच्छेदपरायां त्रिपाद्यामस्पष्टस्पष्टजीवादिलिङ्गकवाक्यविषयौ द्वितीतृतीयौ स्पष्टतरजीवादिप्रतिपादकवाक्यविषयश्चतुर्थ इति पादसङ्गतिः द्वितीयपादारम्भे कथिता। सूत्रकारैस्तु अन्ययोगव्यवच्छेदस्य त्रिपादीकृत्यत्व चतुर्थपादारम्भे कण्ठोक्तम् 'आनुमानिकमप्येकेषाम्' इति सूत्रम् । अतो भाष्यकारश्चतुर्थपादारम्भे त्रिपाद्यर्थस्पष्टीकरणमुखेन सङ्गतिं विवक्षन् प्रथमपादार्थानुभाषणपूर्वकं द्वितीयतृतीययोरर्थं वृत्तं दर्शयति उक्तमिति । प्रधानादेरित्यादिशब्देन प्राण काशादिग्रहण विलक्षणमित्यन्तेन प्रथमपादार्थ उक्तः, वैलक्षण्यचोभयलिङ्गतयेति दर्शयन् द्वितीतृतीययोरप्यर्थं दर्शयति निरस्तेत्यादिपदैः । समस्तशब्देन चिद्गतमचिद्गतं च हेयं विवक्षितम्, गन्धशब्देन मुक्तव्यावृत्तिः, समस्तकल्याणगुणात्मकमिति पद धर्मिस्वरूपपरम्, सर्वशक्तीत्यादिपदैर्द्वितीयपादार्थस्सूचितः 'यस्सर्वज्ञ.' 'भारूपस्सत्यसङ्कल्प.' इत्यादिवाक्यजातंहि तद्विषयः । अन्तर्यामिवैश्वानरद्युभ्वाद्यधिकरणश्चिद्ममर्थमाह––सर्वान्तरात्मभूतमिति । 'एष सर्वभूतान्तरात्मा' इति सुबालोपनिषद्यन्तर्यामिविषयतया श्रूयमाणत्वात् 'पद्भ्यां पृथिवीह्येष सर्वभूतान्तरात्मा' इति मुण्डकोपनिषद्वाक्यस्य पक्षत्वेनोप यास्तत्त्र समर्थनाच्च । निरङ्कुशैश्वर्यमिति तृतीयपादार्थसूचन 'एतस्य वा अक्षरस्य प्रशासने गार्गि' 'ईशानो भूतभव्यस्य' 'सर्वस्य

## श्रीभाष्यम्

इदानीं कापिलतन्त्रसिद्धाब्रह्मात्मकप्रधानपुरुषादिप्रतिपादनमुखेन प्रधानकारणत्वप्रतिपादनच्छायाऽनुसारीण्यपि कानिचिद्वाक्यानि कासुचिच्छाखासु सन्तीत्याशङ्क्य ब्रह्मैककारणत्वस्थेम्ने तन्निराक्रियते । कठवल्लीष्वाम्नायते—' इन्द्रियेभ्य परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ।, महतः परमव्यक्तमव्यक्तात्पुरुष परः । पुरुषान्नपरं किञ्चित्सा काष्ठा सा परागतिः ' (कठ.१.३.१०.११] इति । तत्र सन्देहः–किं कापिलतन्त्रसिद्धमब्रह्मात्मकं प्रधानमिहाव्यक्तशब्देनोच्यते, उतन इति । किं युक्तम् ? प्रधानमिति कुत. ? ' महतःपरमव्यक्तमव्यक्तात्पुरुषः परः ' (१.३.११) इति तन्त्रसिद्धतत्वप्रक्रियाप्रत्यभिज्ञानेन तस्यैव प्रतीतेः, ' पुरुषान्नपरं किञ्चित्सा काष्ठा सा परा गतिः ' (१.३.११) इति पञ्चविंशकपुरुषातिरिक्ततत्वनिषेधाच्च । अतोऽव्यक्तं कारणमिति प्राप्तम् । तदिदमुक्तम्—आनुमानिकमप्येकेषामिति चेत्-इति । एकेषां शाखिनां शाखास्वानुमानिकं प्रधानमपि कारणमाम्नायत इति चेत्-

## श्रुतप्रकाशिका

वशी सर्वस्येशानः ' इत्यादिवाक्यजातंहि तद्विषयं । वर्तिष्यमाणमाह—इदानीमिति । प्रधानकारणत्वप्रतिपादनच्छायानुसारिणीति । न केवलं लिङ्गप्रतिपादकानि, किंतु लिङ्गिनामेव प्रधानादीनां जगत्कारणत्वप्रतिपादनशङ्काऽस्पदानीति अतो जीवादिविषयतया. स्पष्टतरत्वमिति भावः। प्रधानपुरुषादिप्रतिपादनमुखेन प्रधानकारणत्वप्रतिपादनच्छायाऽनुसारिणीति । प्रधानपुरुषादिस्वरूपप्रतिपादनप्रकारः तन्त्रार्थप्रत्यभिज्ञापकः, तेन प्रधानकारणत्वप्रतिपादनफलितमित्यर्थः ॥

ब्रह्मैककारणत्वस्थेम्न इत्यत्र एकशब्देन विपाद्या अन्ययोगव्यवच्छेदपरत्वं सूचितम् । स्थेम्न इत्यनेन चतुर्थपादार्थस्सूचितः, पूर्वपादद्वयप्रतिपन्नस्यान्ययोगव्यवच्छेदस्य स्थैर्यमस्मिन्पादे प्रधानादिकारणत्वप्रतिपादनव्युदसने कृते हि भवति । अत्रानन्तरपूर्वाधिकरणे मुक्तादपि वैलक्षण्यमुक्तम्—तदुक्तं प्रत्यगात्मनः परस्य निर्देशादिति शङ्कया अवान्तरसङ्गतिरिति चार्थसिद्धम् बद्धमुक्तोभयावस्थाद्विलक्षणमिति ह्युक्तम् । विषयमाह—कठवल्लीष्विति । तन्त्रसिद्धतत्त्वक्रमप्रत्यभिज्ञाभावजनकानि वाक्यानि विषयः । तन्त्रसिद्धक्रमतद्विपर्ययप्रतीतिभ्यां संशयः, सिद्धान्ते अव्यक्तशब्दस्य प्रधानवाचकत्वाभावात् उत नेति संशयशिरोऽन्तरं कृतम् अन्यथा उत ब्रह्मात्मकं प्रधानमितिहि शिरोऽन्तरं वक्तव्यम् । कठवल्ल्यामब्रह्मात्मकप्रधानकारणत्वप्रतिपत्तिरस्ति नवेति प्रथमविचारोऽभिप्रेतः । तदर्थं ' इन्द्रियेभ्य परा ' इत्यत्राव्यक्तशब्दः किमब्रह्मात्मकप्रधानपरः उत नेति विचारः, तदर्थं किमस्मिन्मन्त्रे तन्त्रसिद्धतत्त्वगणनक्रमप्रत्यभिज्ञानमस्ति नेति तदर्थमव्यक्तात्पूर्वापरनिर्दिष्टमहत्पुरुषशब्दाभ्यां महज्जीवतत्त्वे निर्दिश्येते उत जीवपराविति । किञ्चेन्द्रियादिशब्दैः पूर्ववाक्यस्थरूपकरूपितेन्द्रियादिप्रतिपत्तिरस्ति नेति । किमत्र परत्वं कारणभावेन उत वशीकार्यतयेति । यदा कारणभावेन तदा रूपितेन्द्रियादिप्रतिपत्त्यभावेन महापुरुषशब्दयोर्महज्जीवतत्त्वसमर्पकतया तान्त्रिकप्रक्रियाप्रत्यभिज्ञानात् अव्यक्तशब्देनाब्रह्मात्मकं प्रधानमुच्यत इति तस्यैव कारणत्वं प्रतीयत इति पूर्वपक्षः । सिद्धान्ते तु यदा वशीकार्यतया परत्वं विवक्षितं, तदा पूर्वरूपितेन्द्रियादिप्रतिपत्त्या महत्पुरुषशब्दयोर्जीवपरमात्मपरत्वेन तन्त्रसिद्धप्रक्रियाप्रत्यभिज्ञानाभावादव्यक्तशब्दो नाब्रह्मात्मकप्रधानपर इति न तस्यात्र कारणत्वप्रतीतिरिति फलितोभावः । शङ्काया अनुसूत्रत्वमाह—तदिदमुक्तमिति । शङ्काऽनुवादिनं सूत्रखण्डं व्याचष्टे-एकेषामित्यादिना ॥

## श्रीभाष्यम्

अत्रोत्तरं नेति । नाव्यक्तशब्देनात्महात्मकं प्रधानमिहाभिधीयते । कुतः ? शरीररूपक विन्यस्तगृहीतेः शरीराख्यरूपकविन्यस्तस्य अव्यक्तशब्देन गृहीतेः । आत्मशरीरबुद्धिमन-इन्द्रियविषयेषु रथिरथादिभावेन रूपितेषु रथरूपणेन विन्यस्तस्य शरीरस्यात्राव्यक्तशब्देन ग्रहणादित्यर्थः । एतदुक्तं भवति-पूर्वत्र हि ' आत्मानं रथिनं विद्धि शरीरं रथमेव च बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च । इन्द्रियाणि हयानाहुः विषयांस्तेषु गोचरान् ' इत्यादिना ' सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ' (१.३.९) इत्यन्तेन संसाराध्वनः पारं वैष्णवं प्रेप्सन्तमुपासकं रथित्वेन तच्छरीरादीनि च रथरथाङ्गत्वेन रूपयित्वा यस्यैते रथादयो वशे तिष्ठन्ति, स एवाध्वनः पारं वैष्णवं पदमाप्नोतीत्युक्त्वा, तेषु रथादिरूपितशरीरादिषु यानि येभ्यो वशीकार्यतायां प्रधानानि, तान्युच्यन्ते ' इन्द्रियेभ्यः पराः ' (१.

## श्रुतप्रकाशिका

परिहारखण्डं व्याचष्टे–शरीराख्येति । शरीरमेव रूपकविन्यस्तं रूप्यतेऽनेनेति रूपकं दृष्टान्तः । रूपकत्वेन विन्यस्तं रूपितमित्यर्थः शरीरं हि रथत्वेन रूपितम् ' शरीरं रथमेव च ' इति । ननु रूपकविन्यस्तशरीरगृहीतेरिति वक्तव्यम् विशेषणस्य पूर्वनिपातितत्वादिति शङ्कापरिहाराय शरीराख्येत्युक्तम् । अस्मिन्वाक्ये रूपकविन्यस्तं वस्तुप्राधान्येन विवक्षितं विशेषणापेक्षया विशेष्यं प्रधानम् अतो रूपकविन्यस्तपदं विशेष्यसमर्पकम् कीदृश तदित्यपेक्षायां शरीराख्यं रूपकविन्यस्तमिति शरीरशब्देन तद्विशेष्यते यथा खण्डशब्देन गौः अतो रूपकविन्यस्तप्राधान्याभिप्रायः शरीरशब्दपूर्वनिपात इत्यभिप्रायः । कानि कथं रूपितानीत्यत्राह—आत्मेति । रूपकाभिधायिवाक्ये किं रथिरथादिभावेन रूपितानामत्र ग्रहणम् तत्राप्यव्यक्तशब्देन शरीरस्य ग्रहणमिति च कथमवगम्यते रथ्यादित्वेन रूपितानामस्मिन्वाक्ये कीर्तनं किमर्थमित्यत्राह–एतदुक्तमिति । आत्मानम् इत्यादिक रूपकाभिधायिवाक्यम् । तेषामत्र ग्रहणं वशीकार्यतया प्राधान्यज्ञापनार्थं स्वशब्दैरेव प्रत्यभिज्ञानाद्रथिरथादिभावेन रूपितानामत्र ग्रहणमिति ज्ञातम् । पारिशेष्यादव्यक्तशब्देन शरीरग्रहणमितीदमर्थजातमुच्यते पूर्वत्र हीत्यादिना । रूपणस्य प्रयोजनमाह—यस्यैत इति । वशीकार्यत्वज्ञापनाय रथिरथादिभावेन रूपणमित्यर्थः । रूपकरूपितानामिह ग्रहणं वशीकार्यतायां प्राधान्याप्राधान्यज्ञापनार्थमित्याह—यानि येभ्य इत्यादिना ।

ननु वशीकार्यतया प्राधान्यस्य विवक्षितत्वं कथमवगम्यते उच्यते–' इन्द्रियेभ्यः पराः ' इत्यादिमन्त्रे परशब्दस्तावदान्यवचनः अर्थेभ्य इन्द्रियादीनां भेदस्य लोकसिद्धत्वेन उपदेशवैयर्थ्यात् । अतः परशब्दः प्रकर्षपरः, प्रकर्षश्च न तावत्कारणत्वनिबन्धनः अर्थानामिन्द्रियकारणत्वभावात् इन्द्रियाणां विषयसिद्ध्यर्थतया तच्छेषत्वात् साध्यात्वलक्षणः प्रकर्ष इति च न वाच्यम् ; तथासत्यर्थापेक्षया मनसः परत्वायोगात् । नचान्तरङ्गत्वलक्षणः प्रकर्षः इन्द्रियमनोबुद्धीनां तत्सम्भवेऽपि इन्द्रियापेक्षया बाह्यानामर्थानां परत्वायोगात् । अतः पारिशेष्याद्रथिरथादिभावरूपणेन उपरनो ग्रहणया यगमात् तत्रैव–

यस्त्वविज्ञानवान्भवत्ययुक्तेन मनसा सह । तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥
यस्तु विज्ञानवान्भवति युक्तेन मनसा सह । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥
यस्त्वविज्ञानवान्भवत्यमनस्कस्सदाऽशुचि । न स तत्पदमाप्नोति संसारं चाधिगच्छति ॥

### श्रीभाष्यम्

३.१०) इत्यादिना। तत्र हयत्वेन रूपितेभ्य इन्द्रियेभ्यो गोचरत्वेनरूपिता विषयाः वशीकार्यत्वे पराः यद्येन्द्रियस्यापि विषयसन्निधावेन्द्रियाणां दुर्निग्रहत्वात्। तेभ्योऽपि परं प्रग्रहरूपितं मनः, मनसि विषयप्रवणे विषयासन्निधानस्याप्यकिंचित्करत्वात्। तस्मादपि सारथित्वरूपिता बुद्धिः परा, अध्यवसायाभावे मनसोऽप्यकिंचित्करत्वात्। तस्या अपि रथित्वरूपित आत्मा कर्तृत्वेन प्राधान्यात्परः, सर्वस्यचास्यात्मेच्छायत्तत्वादात्मैव महानिति च विशेष्यते। तस्मादपि रथरूपितं शरीरं परम्, तदायत्तत्वाज्जीवात्मनस्सकलपुरु-

### श्रुतप्रकाशिका

यस्तु विज्ञानवान्भवति समनस्कस्सदा शुचिः। सतु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥

इतीन्द्रियादिवशीकारावशीकारयोरर्थानर्थदर्शनात्, 'यच्छेद्वाङ्मनसी प्राज्ञ' इतीन्द्रियादीनां वशीकारप्रकारदर्शनाच, अस्मिन्मन्त्रे वशीकार्यताया प्राधान्यं परशब्देन विवक्षमित्यवगम्यते। तत्रार्थादीनामिन्द्रियादिभ्यः परत्वमुपपादयति–तत्रेति ॥

ननु 'अष्टौ ग्रहाः अष्टावतिग्रहाः' इति घ्राणजिह्वावाक्चक्षुश्श्रोत्रमनोहस्तत्वगिन्द्रियाणां ग्रहत्वम्, गन्धरसनामरूपशब्दकामकर्मस्पर्शाख्यानां विषयाणामतिग्रहत्वं च श्रुतं, तस्माद्ग्रहेभ्य इन्द्रियेभ्यः अतिग्रहशब्दोक्तनामर्थानां परत्वं किं न स्यात्। उच्यते–यदि ग्रहेभ्योऽतिग्रहाणां परत्वमिह विवक्षितम् तदा अर्थेभ्यो मनसः परत्वकथनमनुपपन्नम् मनसो ग्रहान्तर्गतत्वात्। अर्थानामतिग्रहशब्दोक्तत्वाच, अतस्सन्निधाविन्द्रियाणां दुर्निग्रहत्वापादनमेव अर्थानां वशीकार्यत्वे परत्वं तद्वशीकरणं च असन्निधापनं, हेयतया ज्ञापनं च तेभ्योऽपीति। स्वावधानाभावे विषयासन्निधेरकिंचित्करत्वहेतुकं मनसः प्राधान्यम् तस्य वशीकरणं नाम तस्य मुहुर्मुहुर्विषयदोषचिन्तनेन तेभ्यो निवर्तनशीलत्वम् 'अभ्यासेन च कौन्तेय वैराग्येण च गृह्यते' इति ह्युक्तम्। तस्मादपीति। बुद्धिशब्दोऽध्यवसायरूपज्ञानविशेषपरः, नत्वन्तःकरणपरः

यदा कर्मगुणापेता बुद्धिर्मनसि वर्तते। व्यवसायगुणोपेता तदा सम्पद्यते मनः ॥

इत्यादिषु बुद्धिशब्दस्यान्तःकरणपरत्व तत्कार्यभूतव्यवसायस्य पृथङ्निर्देशादिभिरवधीयते। इहतु बुद्धिशब्दस्य भावार्थत्वस्वारस्यात्तदपवादाभावाच्च व्यवसायपरत्वमिति अध्यवसायाभावशब्दं प्रयुञ्जानस्याभिप्रायः ॥

यद्वा बुद्धिशब्दोऽन्तःकरणपरः इदानीमध्यवसायाभाव इत्यनेन तत्कार्यभूताध्यवसायाभाव इयुक्त स्यात् अल्पास्थिरत्वदुस्साधत्वदुःखमिश्रत्वादिदोषदर्शनेन विषयाणां हेयत्वाध्यवसायोऽध्यवसायशब्देन विवक्षितः। तदभावेऽन्यत्र व्यासङ्गादिना कश्चिद्विषये प्रावण्यरहितमपि मनः कदाचित्तत्प्रवणमपि स्यात् अतो बुद्धेः परत्वम्। तस्याश्च वशीकरणं, नामविषयदोषदर्शनसशीलनेन तद्दृढीकरणरूप मनोनिवर्तनपाटवापादनम्। आत्मकर्तृत्वेन प्राधान्यात्परइति। कर्तृत्वेन अध्यवसायस्याश्रयत्वेन बुद्धिशब्दस्यान्तःकरणपरत्वपक्षेतूपकरणित्वेनेत्यर्थः। अणोरात्मनः कथ महच्छब्दविशेष्यत्वमित्यत्राह—सर्वस्यचेति। अस्य सर्वस्य इन्द्रियादेरध्यवसायपर्यन्तस्य इन्द्रियाणि जेतव्यानि, सम्यगर्थविषयोऽध्यवसायस्सम्पाद्य इत्येवंरूपेच्छायत्तत्वादित्यर्थः। अनेनात्मनो वशीकरण नामात्मस्वरूप यथाऽभ्याध्यवसायप्रावण्यरूपेच्छापादनमेवेति च फलितम्। तस्मादपिरथरूपितं शरीरंपरमिति। शरीरस्य परत्व नाम स्वगतगुणोन्मेषानुगुणमात्मगतज्ञानापादकत्वम् रजस्तमोऽनुदयसत्त्वप्राचुर्यकरपरिशुद्धाहारेण सत्त्वोद्रिक्तापादनं शरीरस्य वशीकरणमित्यर्थः। जीवे-

## श्रीभाष्यम्

पार्थसाधनप्रवृत्तीनाम् । तस्मादपि परस्सर्वान्तरात्मभूतोऽन्तर्याम्यध्वनः पारभूतः परमपुरुषः यथोक्तस्यात्मपर्यन्तस्य समस्तस्य तत्सङ्कल्पायत्तप्रवृत्तित्वात् । स खल्वन्तर्यामितयोपासनस्यापि निर्वर्तकः 'परात्तु तच्छ्रुतेः,' (शारी.३.३.४०) इति हि जीवात्मनः कर्तृत्वं परमपुरुषायत्तमिति वक्ष्यते । वशीकार्योपासननिर्वृत्त्युपायकाष्ठाभूतः परमप्राप्यश्च स एव तदिदमुच्यते ' 'पुरुषान्नपरं किञ्चित्सा काष्ठा सा परा गतिः' (कठ.१.३.११) इति । तथाचान्तर्यामिब्राह्मणे 'य आत्मनि तिष्ठन्' (बृ.५.५.२२) इत्यादिभिस्सर्वं साक्षात्कुर्वन्सर्वं नियमयतीत्युक्त्वा 'नान्योऽतोऽस्ति द्रष्टा' (५.७.२३) इति नियन्त्रन्तरं निषिध्यते, भगवद्गीतासु च 'अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् । विविधा च पृथक्चेष्टा दैवं चैवात्र पञ्चमम्' (गी.१८.१४) इति । दैवमत्र पुरुषोत्तम एव 'सर्वस्य चाहं हृदि सन्निविष्टो मत्तस्स्मृतिर्ज्ञानमपोहनं च' (१५.१५) इति वचनात् । तस्य च वशीकरणं तच्छरणागतिरेव 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ तमेव

## श्रुतप्रकाशिका

इत्याविद्याकल्पितत्वात् अविद्यासञ्ज्ञमव्यक्त जीवात्पर तत्कार्यत्वाच्छरीरस्य परत्वमुपचर्यत इति केचिदुक्तम् तदयुक्त, कारणगतपरत्वस्य कार्ये उपचरणे सामर्थ्याभावात् । जीवभेदस्याविद्याकल्पितत्वाभावाच्च आत्मपर्यन्तस्य स्वावधिकस्य ॥ यद्वा जीवपर्यन्तस्येत्यर्थः नास्मिन्वाक्ये वशीकार्यतया परत्वे निर्दिष्टक्रमो विवक्षितः, किंतूपकरणीयतया प्राधान्यम् अत एवेह 'आत्मानं रथिनं विद्धि' इति शरीरात्पूर्वनिर्देशः । उपासनोपकरणकोटिनिवेशः परस्य कथ अत्यन्तत्वात् परस्य पुरुषत्वमात्र श्रुत न परमत्वं तत्कथमश्रुतपरमशब्दार्थाङ्गीकार इत्यत्राह—सखल्विति । उपासननिर्वाहकत्वात् वशीकार्यत्वमित्यर्थः 'सा काष्ठा' इति श्रुतिवाक्यखण्ड व्याचष्टे वशीकार्योपासनेति । वशीकार्यशब्द उपायविशेष्यक: रूपितेष्वर्थेषु परत्वेन रूपितस्य पदस्यात्राकथनाद्वक्ष्यमाणपरिशेषासिद्धिशङ्का परिहर्तु 'सा परा गतिः' इत्यनेनैव पारत्वरूपितपदस्यापि प्रतिपादितत्वमाह— परमेति । 'पुरुषान्नपरं किञ्चित्' इत्युपायकोटिकाष्ठाभूतस्मात्परं न विद्यत इति व्यतिरेक उक्तः 'सा काष्ठा' इत्यनेन अयमेवोपायकाष्ठाभूत इत्यन्वय उक्तः, इन्द्रियादीनामप्युपायभूतत्वमात्रमस्तीति तद्व्यावृत्त्यर्थं 'परागतिः' इति प्राप्यत्वमुच्यत इत्यर्थः 'यस्मात्परं नापरमस्ति' इत्यादिश्रुत्यैकार्थ्यावगमात् स्वस्मात् परान्तररहितस्य परमात्मत्वमर्थसिद्धमिति चाभिप्रायः । सर्वनियामकादस्मात्पर इत्यादेन उपायकाष्ठात्वोपपादनार्थमन्तर्यामिब्राह्मणमुपादीयते तथेति । दैवमिति कर्मवाऽकर्माराध्यमिन्द्रादिकं वा विवक्षितं स्यात् इत्यत्राह दैवमत्रेति । 'न दैवंकेशवात्परम्'—

श्रूयतां परमं दैवं दुर्विज्ञेयं मयापि च । नारायणस्तु पुरुषो विश्वरूपो महाद्युतिः ॥

नारायणस्यचाङ्गानि सर्वदैवानि पाभवन् । अन्यानि सर्वदैवानि तस्याङ्गानि महात्मनः ॥

इत्यादिप्रयोगादित्यभिप्रायः । परमपुरुषस्याप्युपासननिर्वर्तकत्वमस्तु, कथं सर्वस्मात्परस्य अनीश्वरेण संसारिणा वशीकर्तुं शक्यत्व शक्यत्वेऽपि तत्प्रकारोऽपि क्वचिच्छ्रूयेत नच श्रूयते 'यच्छेद्वाङ्मनसी प्राज्ञ.' इत्यादवनुपलम्भोरित्यत्राह— तस्य चेति । 'यच्छेद्वाङ्मनसी' इत्यादौ तस्य वशीकार्यत्वश्रवण दर्शयिष्यते । कस्मादव्यक्तशब्देन शरीराद्यरूपकविन्यस्ताभिधान रूपकविन्यस्ताभिधानान्तर किं न स्यादिति शङ्कायामव्यक्तशब्देन शरीरस्याभिधानं पारिशेष्यादित्य—

## श्रीभाष्यम्

शरणं गच्छ ' (गी.१८.६१.,६२) इति । तदेवम् ' आत्मानं रथिनं विद्धि ' [क२.१.३.३] इत्यादिना रथ्यादिरूपकविन्यस्ता इन्द्रियादयः ' इन्द्रियेभ्यः परा ह्यर्था ' (१.३.१७) इत्यत्र स्वशब्दैरेव प्रत्यभिधीयन्ते, न रथरूपितं शरीरमिति परिशेषात्तदव्यक्तशब्देनोच्यत इति निश्चीयते । अतः कापिलतन्त्रसिद्धस्य प्रधानस्य प्रसङ्ग एव नास्ति । नचात्र तत्तन्त्रसिद्धप्रक्रियाप्रत्यभिज्ञा ' इन्द्रियेभ्यः परा ह्यर्था ' (१.३.१७) इतीन्द्रियेभ्योऽर्थानां शब्दादीनां परत्वकीर्तनात् । नहि शब्दादय इन्द्रियाणां कारणभूतास्तद्दर्शने । ' अर्थेभ्यश्च परं मनः ' (कठ १.३.१०) इत्यपि न तत्तन्त्रसङ्गतम्, अकारणत्वादेव ; तथा ' बुद्धेरात्मा महान्परः ' (१.३ १०] इत्यप्यसङ्गतम् ' बुद्धिशब्देन महत्तत्त्वस्याभिधानाभ्युपगमात् । नहि महतो महान्परस्सम्भवति । महत आत्मशब्देन विशेषणं च न सङ्गच्छते । अतो रूपकविन्यस्तानामेव

## श्रुतप्रकाशिका

तदेवमात्मानमिति । प्रधानप्रतिपादकत्वमङ्गीकृत्य तस्य ब्रह्मात्मकत्वाब्रह्मात्मकत्वविवादोऽपि क्वचिदस्तीति तद्व्यावृत्त्यर्थं प्रसङ्ग एव नास्तीत्युक्तम् । वशीकार्यतया परत्वमुपपादितं, कारणत्वेन परत्वस्यानुपपत्तिमाह—नचात्रेति । प्रत्यभिज्ञानाभावमुपपादयति इन्द्रियेभ्यइति । तदेव विवृणोति नहीति । अकारणत्वादेवेति । ' इन्द्रियेभ्यः पराह्यर्था' इत्यत्र तन्त्रप्रक्रियाप्रत्यभिज्ञानव्युदासहेतोरेवेत्यर्थः । अहङ्कारद्वारा बुद्धेः मनःकारणत्वसम्भवात् ' मनसस्तु पराबुद्धिः' इत्येतत्क्लिष्टगत्या शक्यमिति तदनादरेण ' बुद्धेरात्मा ' इत्यत्रानुपपत्तिमाह—तथेति । बुद्धिशब्देन महत्तत्त्वमभिधीयतां, ततः किमित्यत्राह—नहीति । समष्टिव्यष्टिविभागेन परत्वोपपत्तिरिति चेत्, तत्कल्पनेन निर्वाहयितुमशक्यत्वात्, इन्द्रियादिषु चार्थान्तरेषु समष्टिव्यष्टिविभागादर्शनात् रूपकवाक्ये पृथङ्निर्देशाभावाच्च अनुपपत्त्यन्तरमाह—महत आत्मशब्देनेति आत्मशब्दः स्वतश्चेतनैकान्तः अगत्या क्वचित्तस्याचेतनपरत्वाश्रयणम् । अवयवशक्त्या स्वकार्यव्याप्तिपरत्वेऽपि महत्त्वादपि प्रधान एवावयवार्थप्रकर्षात् महत आत्मशब्दाविशेष्यत्वमयुक्तमित्यर्थः ॥

नन्‍ु उद्भवहर्तारमनश्चैव मनस्सदसदात्मकम् । मनसश्चाप्यहङ्कारमभिमन्तारमीश्वरम् ॥
महान्तमेवचात्मानं सर्वाणि त्रिगुणानि च ।

इति स्मृतितद्धप्रक्रियाप्रत्यभिज्ञानान्महच्छब्दो महत्तत्त्वपरः नत्वात्मविशेषक इति चेत् न श्रुताविन्द्रियार्थमनोबुद्धिमहतां परत्वस्य चोक्तत्वादहङ्कारस्यानुक्तत्वात् स्मृतौ मनोऽहङ्कारमहतामेवोक्तत्वादिन्द्रियार्थबुद्धीनां परत्वस्य चानुक्तत्वात् श्रुतौ स्मृत्यर्थप्रत्यभिज्ञानाभावान्मनसोऽहङ्कारमुद्भवहेत्यस्य तन्त्रप्रक्रियाविरोधप्रतीतेः, पूर्वपक्षिणैव परिचोदनस्यायुक्तत्वाच्च ॥

ननु महच्छब्दस्यात्मविशेषणत्वेऽपि ' महतःपरम् ' इति निर्देशेनयुक्तम् अपि त्वात्मन इत्येव निर्देष्टव्यमितिचेन्न, विशेषणवाचिपदेनापि प्रकृतविशेष्याभिधानदर्शनात् देवदत्तायज्ञदत्तश्च प्रगतियोऽयम् श्वारूढः श्वारूढाद्विष्णुमित्र इति अवृद्धसेवी पुरुषो मूढः मूढादमूढ आदरणीयः इत्यादौ रूपकविन्यस्तानामेव ग्रहणमित्येतद्भाष्यमेतदुक्तं भवतीत्यनेनाभिहितम् । इति शब्दाप्रयोगोऽतिविप्रकर्षात् दर्शयतिचेति सूत्रखण्डोपादानम् । तदेव वशीकार्यत्वे परत्वमेव ' एष ' इत्यादिश्रुतेः ' न प्रकाशते ' इत्युक्ते कथमित्यपेक्षाया

यस्त्वविज्ञानवान्भवत्ययुक्तेन मनसा सह । तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथे ॥
यस्त्वविज्ञानवान्भवत्यमनस्कस्सदा शुचिः । न स तत्पदमाप्नोति संसारञ्चाधि गच्छति ॥

श्रीभाष्यम्

ग्रहणम्। दर्शयतिच तदेव 'एष सर्वेषु भूतेषु गूढोऽऽत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ' (१.३.१२) ' यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि । ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ' (१.३.१३) इति । अजितग्राह्याभ्यन्तरकरणस्यैव परमपुरुषस्य दुर्दर्शत्वमभिधाय हयादिरूपितानामिन्द्रियादीनां वशीकारप्रकारोऽयमुच्यते । ' यच्छेद्वाङ्मनसी ' (१.३.१३) वाचं मनसि नियच्छेत् वाक्पूर्वकाणि कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि मनसि नियच्छेदित्यर्थः । वाक्छब्दे द्वितीयायाः ' (कठ.१.३.१३) 'सुपांसुलुक्' [पाणिनि.२.१.३९] इति लुक् ' मनसी ' इति सप्तम्याश्छान्दसो दीर्घः ' तद्यच्छेत् ज्ञानआत्मनि ' [१.३.१३] तन्मनो बुद्धौ नियच्छेत । ज्ञानशब्देनात्र पूर्वोक्ता बुद्धिरभिधीयते । ज्ञान आत्मनि ' [१.३.१३) इति व्यधिकरणे सप्तम्यौ। आत्मनि वर्तमाने ज्ञाने नियच्छेदित्यर्थः।

श्रुतप्रकाशिका

इति प्राकरणिकवाक्योपजीवनेन प्रकाश्यत इत्यस्यार्थमाह–अजितग्राह्येति । वाक्छब्दस्यसर्वेन्द्रियोपलक्षणार्थं इत्याह–वाक्पूर्वकाणीति । नन्विदमयथाश्रुतमिव व्याख्यानम् नह्यत्र वाक्छब्दो द्वितीयान्तो मनश्शब्दश्च सप्तम्यन्तश्श्रूयत इत्यत आह–वाक्छब्दइति ॥

ननु वाक्छब्दात्परस्याः द्वितीयायाः ' सुपांसुलुक् ' इत्यनुशासनेन स्वादेशाश्रयणेन द्वितीयान्तत्वं किं न स्यात् न स्वादेशेऽपि ' हल्ङ्याब्भ्योदीर्घात्सुतिस्यपृक्तं हल् ' इति सूत्रेण वाक्छब्दस्य हलन्ततया सुलोपस्य प्राप्तत्वात् स्वादेशाङ्गीकारेऽपि लुकि पर्यवसानं स्यात्, तत्र द्वितीयास्थाने स्वादेशमाश्रित्य तस्य लोपकल्पनाद्वरं द्वितीयाया एव लुगाश्रयणमिति । सप्तम्येकवचनान्तस्य मनश्शब्दस्य दीर्घान्तत्वं कथमित्यत्राह–मनसी इति सप्तम्याः छान्दसो दीर्घइति । ' ईदूतौ च सप्तम्यर्थे ' इति प्रकृतिभावानुसरणाभिप्रायेणो मनसी इति निर्देशः ॥

ननु ' इयाडियाजीकाराणामुपसङ्ख्यानम् ' इत्युपसङ्ख्यानवशादीकारान्तत्वसंभवे कथं छान्दसत्वाश्रयणमिति चेत् उपसङ्ख्यानेन निर्वाहासम्भवादिति ब्रूमः । नहि ' वाङ्मनसी ' इत्यत्र वाक्च मनश्चेत्यर्थसम्भवति ' अचतुरविचतुर ' इत्यादिसूत्रेणाजन्ततया वाङ्मनसे इति प्राप्तत्वात् । अथ तत्रापि छान्दसत्वबलेन समासान्तो नाद्रियेत तथासति यथोक्तनिर्वाहे क: प्रद्वेषः, न च निर्वाहद्वयतुल्यता पूर्वोक्तस्य प्रकरणानुगुण्यादेकवचनोपपत्तेश्च, ' यच्छेत् ' इत्युक्तस्य नियमनस्य सप्तम्यपेक्षा प्रकरणसिद्धा ' तद्यच्छेत् ज्ञान आत्मनि, ज्ञानमात्मनि महति नियच्छेत् तद्यच्छेच्छान्तआत्मनि ' इतिहि श्रूयते । वाक्च मनश्चेत्यर्थोऽभिमतश्चेत् तदिति पुनः परामर्शश्च नघटते ते इति द्विवचनान्ततयाहि निर्देष्टव्यम् । अत उक्तनिर्वाह एवोपपन्न ' तद्यच्छेज्ज्ञान आत्मनि ' इति वाक्य मनसोऽहङ्कारे नियमनपरं केचिद्व्याचक्षते तदनुपपन्नं मन्वान आह–तन्मनो बुद्धौ नियच्छेदिति । अहङ्कारपरत्वम्स्वरस बुद्धिपरत्वं तु स्वरसमित्यभिप्रायेणाह–ज्ञानशब्देनेति । पूर्वोक्ता बुद्धिः अनात्मा मविषयेह्योपादेयताध्यवसायः, ज्ञानसामान्यवाचिशब्दस्य ज्ञानविशेषवाचित्वं मुख्यमिति भावः । आत्मशब्दस्मानाधिकरण्य ज्ञानशब्दस्य बुद्धिपरत्वं कुत इत्यत्राह— –ज्ञान आत्मनीति। आत्मशब्दस्य स्वतश्चेतनैकान्तत्वादनन्तरवाक्यस्यात्मशब्दस्यास्य चैकरूपार्थत्वे स्वारस्याच्च सामानाधिकरण्यमात्रस्वारस्यमुपेक्ष्यमित्यभिप्रायः । वैयधिकरण्यफलितमाह–आत्मनि वर्तमानइति । सप्तम्यर्थस्य स्फुटीकरणाय वर्तमानपदमध्याहृतम् । ज्ञानशब्दस्याहङ्कारपरत्वाश्रयणे किंशब्दस्वारस्यात् उतार्थवशात । नप्रथमः दर्शोत्तरत्वात्, नापि द्वितीयः, अर्थसामर्थ्यादर्शनात् । मनो महतोर्मध्यगतत्वमर्थसामर्थ्यमितिचेत् यदि शब्दतः प्रत्यभिज्ञानाभावेऽपि ज्ञानक-

## श्रीभाष्यम्

'ज्ञानमात्मनि महति नियच्छेत्' बुद्धिं कर्तरि महत्यात्मनि नियच्छेत्। 'तद्यच्छेच्छान्त आत्मनि' [१.३.१३] तं कर्तारं परस्मिन् ब्रह्मणि सर्वान्तर्यामिणि नियच्छेत्। व्यत्ययेन तदिति नपुंसकलिङ्गता। एवंभूतेन रथिना वैष्णवं पदं गन्तव्यमित्यर्थः॥

अव्यक्तशब्देन कथं व्यक्तस्य शरीरस्याभिधानम्? तत्राह—

# सू-२ सूक्ष्मं तु तदर्हत्वात् (१.४.२)

## श्रुतप्रकाशिका

ब्दो मनो महतोर्मध्यगतत्वरूपार्थसामर्थ्यादहङ्कारपरः। तर्हि तुल्यन्यायत्वात् 'मनसस्तु परा बुद्धिः' इत्यत्रापि बुद्धिशब्दस्याहङ्कारपरत्व। तदप्यस्त्विति न वाच्यम्; स्वग्रन्थविरोधात् 'अथ बुद्धिशब्देनाहङ्कारं ब्रूयुः तथाऽपि तन्त्रसिद्धस्याहङ्कारस्य प्रत्यभिज्ञानोपपद्यते बुद्धिशब्देन व्यवहाराभावात् महच्च न तन्त्रसिद्धमिह प्रत्यभिज्ञायते,आत्मशब्देन सामानाधिकरण्यात्' इतिहि आनुमानिकसूत्रव्याख्याने तैरुक्तम्। अथोच्येत, तत्र यद्यपि मनो महतोर्मध्यगतो बुद्धिशब्दः तथाऽपि नाहङ्कारपरः महच्छब्दस्यात्मशब्दोपपदपीडितत्वेन महत्तत्त्वाभिधायकत्वाभावादिति॥

तर्ह्यत्रापि सत्यप्यन्महच्छब्दस्यापि आत्मशब्दोपपीडितत्वेन महत्तत्त्वोपस्थापकत्वाभावान्मनो महतोर्मध्यगतत्वरूपमर्थसामर्थ्यं न विद्यते। यद्यत्रोपपदं न पीडकम्, तर्हि तत्रापि पीडनासामर्थ्यात् 'मनसस्तु परा बुद्धिः' इत्यप्यहङ्कार उक्तः स्यात्, ततश्चाधिकरणप्रयासवैयर्थ्यमेव स्यात् तन्त्रप्रक्रियास्थिरत्वसिद्धिरित्यलमनेन। ज्ञानमात्मनीत्यस्यार्थमाह बुद्धिमिति। वाचो मनसि नियमनं, मनोऽननुगुणप्रवृत्तिवैमुख्यापादनम्। मनसो बुद्धौ नियमनं अध्यवसायाननुगुणप्रवृत्तितापादनं बुद्धिः अर्थेषु हेयताध्यवसायरूपा, तस्या बुद्धेरात्मनियमनं नाम सत्त्वोपादेयतया साक्षात्कार्य इत्येतदर्थं विषयत्वापादनं शान्ते स्वतऊर्मिषट्कप्रतिभटे शान्त आत्मनि महत आत्मनो जीवस्य नियमनं नाम तच्छेषताप्रतिपत्तिः सैव परस्यापि वशीकरणं भवति। न तदिति निर्देष्टव्यम् आत्मशब्दस्य पुंलिङ्गत्वाच्छब्दस्य चात्मपरामर्शित्वादित्यत्राह—व्यत्ययेतदिति। नपुंसकलिङ्गतेति। अत्र तदिति व्याख्येयपद 'सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि नसिद्ध्यति बाहुलकेन' इति शाब्दैरुक्तलिङ्गव्यत्ययेन तदिति नपुंसकलिङ्गतेत्यर्थः॥

नन्वस्मिन्मन्त्रे रूपकरूपितानां वशीकरणप्रकार उच्यत इत्युक्तम् विषयाणां शरीरस्य चात्र नियमनानुक्तेरितिचेन्न, तन्नियमनस्यार्थसिद्धत्वात्। विषयाणां नियमनं हि नाम तदसन्निधापनं, शरीरस्य नियमनं नाम सात्त्विकाहारेण परिशोधनं नहि दूरतोऽनुज्झितविषयस्य दुष्टाहारसेवामलिनमनस इन्द्रियादिनियमनं संभवति, अतोऽर्थसिद्धस्येह कण्ठोक्त्यभावः तन्निमित्तमिदं विषयसन्निधिपरिवर्जनं सात्त्विकाहारसेवनं च योगाद्युत्पादनकाले सम्पाद्यम् तदानीं च चक्षुरादिकर्मज्ञानेन्द्रियाणां नात्यन्तव्यापारनिषेधः। अत्यन्तनिषेधस्तु योगकाल एव कर्तव्यस्य नियमनस्यास्मिन्मन्त्रे विधानात् 'इन्द्रियेभ्य' इत्यस्मिन्मन्त्रेऽपि वशीकार्यत्वे परत्वं विवक्षितमिति तन्त्रसिद्धकार्यकारणतत्त्वप्रत्यभिज्ञानाभावात् रूपकरूपितेषु परिशिष्टं शरीरमव्यक्तशब्देनोच्यत इति स्थितम्॥

उत्तरसूत्रशङ्कामाह—अव्यक्तेति। पारिशेष्याच्छरीराव्यक्तशब्दयोरैकार्थ्येऽवश्यमाधिनिश्चिते उपक्रमाधिकरणन्यायेन उपक्रान्तशरीरशब्दानुगुणमव्यक्तशब्दे नेये तत्राव्यक्तशब्दस्य वृत्तिः कथमित्यपेक्षायामाहेत्यभिप्रायः॥

श्रीभाष्यम्

भूतसूक्ष्ममव्याकृत ह्यवस्थाविशेषमापन्नं शरीर भवति; तदव्याकृतमिह शरीरावस्थमव्यक्तशब्देनोच्यते। तदर्हत्वात्—तस्याव्याकृतस्याचिद्वस्तुन एव विकारापन्नस्य रथवत्पुरुषार्थसाधनप्रवृत्त्यर्हत्वात्॥

यदि भूतसूक्ष्ममव्याकृतमभ्युपगम्यते; कापिलतन्त्रसिद्धोपादाने कः प्रद्वेषः तत्रापि हि भूतकारणमेवाव्यक्तमित्युच्यते; तत्राह—

## सू—३ तदधीनत्वादर्थवत् (१.४.३)

परमकारणभूतपरमपुरुषाधीनत्वात्प्रयोजनवद्भूतसूक्ष्मम्। एतदुक्तं भवति न वयमव्यक्तं तत्परिणामविशेषांश्च स्वरूपेण नाभ्युपगच्छामः; अपितु परमपुरुषशरीरतया तदात्मकत्व-

श्रुतप्रकाशिका

## सू—२ सूक्ष्मं तु तदर्हत्वात् (१.४.२)

द्रव्यैक्यलक्षणसम्बन्धात् कार्ये कारणशब्दोपचार इत्याह—भूतसूक्ष्ममिति। कारणभूताव्यक्त कार्यशरीर शब्दोपचारः किं न स्यादित्यत्राह—तदर्हत्वादिति व्याख्येयसूत्रे तच्छब्दस्य प्रतिव्यक्ति निर्दिष्ट। सूक्ष्म च स्व शब्देनोपस्थापित स्थूलावस्थ शरीरमव्यक्तशब्दाविषयतया बुद्धिस्थम् अनन्तरचाचिद्द्रव्यपरामर्श इति भाव। अ स्याद्यानुगतवस्तुलक्षणानिमित्तमाकारमाह—अचिद्वस्तुनइति। ज्ञानसङ्कोचविकासरूपाकारापत्ति अद्वस्तुनोऽप्यरि तद्व्यावृत्त्यर्थमचिद्वस्तुन एव विकारापन्नस्य युक्तम्। अहेय कार्यापेक्ष तद्विशेष प्रकरणासङ्गममभिप्रेत्याह—पुरुषार्थेति औपचारिके त्वविशेषेऽपि पुरुषार्थप्रवृत्त्यनर्हत्वरूपायावरोधात, ततएवाव्यक्तस्य तत्कार्य मायागाश्च न कारण कार्यो चाराच्छरीरशब्दो भूतसूक्ष्मपरत्वेन व्याख्यात इत्यर्थः॥

यादवप्रकाशीयास्तु—सूक्ष्म शरीरमिह गृह्यते तस्याव्यक्तशब्दार्हत्वात्। पूर्वत्रापि तदेव रथत्वेन रूपित लोकान्त रप्राप्तेरपि विवक्षितत्वादिति व्याचक्षते। तदयुक्तम् उपक्रमस्थशरीरशब्दस्य स्वरसतः स्थूलशरीरप्रतिपादकहेतुत्वात् 'यच्छे द्वाङ्मनसीप्राज्ञ' इत्यादिना पुरुषार्थसाधनप्रवृत्तिविशेषप्रतिपादनेन पुरुषस्यावहन्तुर्वर्हे वर्शि रथत्वेन रूप णमित्यवगमाच्च। पुरुषार्थसाधनप्रवृत्त्यर्हं नहि स्थूलशरीरस्य लोकान्तरप्राप्ति फलानुभवार्थेति तत्साधनस्य सूक्ष्मदेहस्य नोपायानुष्ठानार्हता। अतोऽव्यक्तशब्दमात्रस्वारस्यादपि उपक्रमस्थशरीरशब्दस्वारस्यादुपायदशायामुपयोगप्रतीतिस्वारस्याच्च यथोक्त एव सूत्रार्थ इत्येतदभिप्रायेणाह—रथवत्पुरुषार्थसाधनप्रवृत्त्यर्हत्वादिति॥

उत्तरसूत्रशङ्कामाह—यदीति। भूतकारणमेवेति। त्वयाऽपि यदभ्युपेत भूतकारणत्वेन तदेवेति भाव।

## सू—३ तदधीनत्वादर्थवत् [१-४-३]

नहि प्रयोजनवत्त्वाप्रयोजनवत्त्वे चादित प्रधानाङ्गीकार प्रधानवाददूषण च स्यादिति तदेव परिहृत नवतीत्यत्राह—एतदुक्तमिति। तदात्मकत्वविरहेणेति। नाभ्युपगच्छाम इत्यन्वय तदधीनशब्दस्य प्रवृत्तिमात्रे

## श्रीभाष्यम्

विरहेण तदात्मकत्वेनैव हि प्रकृत्यादयस्स्वप्रयोजनं साधयन्ति ; अन्यथा स्वरूपस्थितिप्रवृत्तिभेदास्तेषां न स्युः ; तथाऽनभ्युपगमाय तन्त्रसिद्धप्रक्रियानिरसनम् इति । श्रुतिस्मृत्योर्हि जगदुत्पत्तिप्रळयवादेषु परमपुरुषमहिमवादेषु प्रकृतिविकृतिपुरुषास्तदात्मकास्सङ्कीर्त्यन्ते ; तथा 'पृथिव्यप्सु लीयते' (सुबाल.२.स) इत्यारभ्य 'तन्मात्राणि भूतादौ लीयन्ते । भूतादिर्महति लीयते, महानव्यक्ते लीयते, अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते । तमः परे देव एकीभवति' इति तथा 'यस्य पृथिवी शरीरं यस्यापश्शरीरं यस्य वायुश्शरीरं

## श्रुतप्रकाशिका

तादर्थ्यपरत्वशङ्काव्यावृत्त्यर्थं परमपुरुषशरीरतया तदात्मकत्वेनेत्युक्तम् । तेन प्रवृत्तौ पराधीनत्वेऽपि स्वतोऽस्तित्वं कुलालानपेक्षदण्डचक्रादिव्यावृत्तिः । स्वातन्त्र्येण किं नाभ्युपगम्यत इत्यपेक्षायामर्थस्थितिमाह–तदात्मकत्वेनैव हीति । हिशब्दप्रमाणप्रसिद्धिद्योतकः । स्वप्रयोजनं, स्वकार्यं प्रकृतेः कार्यं हि महदादि महदादीनामपि तत्तत्कार्यमेव प्रयोजनम् । पुरुषस्य भोगापवर्गरूपं वा उक्तमर्थमुपपादयति अन्यथेति । अन्यथा तदात्मकत्वविरहे स्वरूपस्थितिप्रवृत्तिभेदास्तेषां न स्युरिति । 'नतदस्ति विना यत्स्यात्' 'मयि सर्वमिदं प्रोतम्' 'मत्तस्सर्वं प्रवर्तते' इत्यादिभिः स्वरूपस्थितिप्रवृत्तितादर्थ्यसिसिद्धिः । स्वरूपं व्यवहारार्हत्वं मानसं वा प्रत्यक्षार्हत्वं वा, तस्य कालान्तरावच्छिन्नाकारविरहः स्थितिः । प्रवृत्तिः कार्योत्पत्त्यनुगुणव्यापारः । स्वरूपस्थिती न स्यातां ततश्च प्रवृत्त्यभावः कैमुत्यन्यायसिद्ध यथा शरीरस्याविशेषे इत्यर्थे सूत्रे अर्थवच्छब्दस्तदुपयुक्तार्थतादर्थ्यस्यापि प्रदर्शनार्थः, अर्थोपयोगित्वात् प्रवृत्तेः प्रवृत्त्युपयोगित्वाच्च स्वरूपस्थित्योरित्यभिप्रायः । पूर्वोक्तव्याघातस्य परिहृतत्वं दर्शयति तथाऽनभ्युपगमादेवेति । अब्रह्मात्मकत्वप्रधानवाद एव दूष्यः ब्रह्मात्मकं प्रधानं स्वीकृतमिति नव्याहतिरित्यभिप्रायेण प्रक्रियानिरसनमित्युक्तम् । हिशब्दाभिप्रेतं तदात्मकत्वे प्रमाणं दर्शयति श्रुतिस्मृत्योर्हीति । प्रळयश्रुतिः 'पृथिव्यप्सु लीयते' इत्यादि महिमवादश्रुतिः 'यस्य पृथिवी शरीरम्' इत्यादि, प्रळयश्रुतेरपि 'तमएकीभवति' इत्येतदन्तत्वात्तदात्मकत्वसिद्धिः, 'तस्मात्तमस्सजायते' इत्युत्पत्तिवाक्यं द्रष्टव्यम् । उत्पत्तिपूर्वकत्वात् सृष्टेः प्रळयश्रुत्युपादानं सृष्टेरप्युपलक्षणार्थम् । शरीरस्य जीवात्मापेक्षया परत्वं कथमिति शङ्कायां जीवस्य शरीराधीनप्रवृत्तित्वाज्जीवापेक्षया शरीरस्यपरत्वं यथेन्द्रियेभ्योऽर्थानां परत्वमिति परिहारपरमिदं सूत्रमितरैर्व्याख्यातम् तदयुक्तम् । अपेक्षितविधेरनपेक्षितविधानदौर्बल्यात् नहि वेदान्तिभिः प्रकृतिः स्वरूपेण नाभ्युपगम्यते अतस्तदभ्युपगमतद्विरोधयोर्व्याघातः परिहर्तव्य इति तत्परिहारापेक्षणमपेक्षितं करणं स्यात् ॥

ननु शरीरस्य जीवात्परत्वानुपपत्तिशङ्का परिहर्तव्या, अतो नानपेक्षितविधानं स्यादिति चेत् एव तर्हीन्द्रियेभ्यः कथमर्थानां परत्वमिति शङ्कायाश्च परिहर्तव्यत्वात् तत्परिहाराय सूत्रान्तरं प्रणेयं स्यात् । सा च 'अर्थवत्' इत्यनेन परिजिहीर्षितेति चेत्, तर्हि 'अर्थवत्' इति दृष्टान्ततयोक्तिर्न घटते । अर्थेभ्यो मनसः परत्वं कथमिति शङ्कापरिहाराय सूत्रान्तरं कर्तव्यं च स्यात् । अर्थमनोबुद्ध्यादीनां परत्वं यथाकथञ्चित् व्यवहारप्राधान्यादिविवक्षया निरूढमिति न तत्र परिहर्तव्यमिति चेत् अव्यक्तस्य परत्वमपि यथाकथञ्चिन्निरूढमिति न सूत्रापेक्षा । केन युक्तिबलेन यथाकथञ्चिन्निर्वाह इति चेत् अर्थमनोबुद्ध्यादीनां यथाकथञ्चित्परत्वनिर्वाहकेन युक्तिबलेन प्रकरणपारिशेष्याभ्यामर्थसूक्ष्मविवक्षितस्य प्रकृतशब्दस्य रूपकविन्यस्तशरीरविषयत्वनिश्चयबलेनेति चेत् तेनैवाव्यक्तस्यापि निर्वाह आहत्सूत्रेणैव सिद्ध इत्यनपेक्षितविधानमेव स्यादेव । अत उक्तार्थपरमेवेदं सूत्रम् ॥

श्रीभाष्यम्

यस्य तेजश्शरीरं यस्य वायुश्शरीरं यस्याकाशश्शरीरं यस्याहङ्कारश्शरीरं यस्य बुद्धिश्शरीरं यस्याव्यक्तं शरीरं यस्याक्षरं शरीरं यस्य मृत्युश्शरीरम् एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः (७.खण्ड) तथा ' भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयंमे भिन्ना प्रकृतिरष्टधा । अपरेयमितस्त्वन्यां प्रकृतिं विद्धिमे पराम् जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ एतद्योनीनि भूतानि सर्वाणीत्युपधारय । अहं कृत्स्नस्य जगतः प्रभवः प्रळयस्तथा । मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ' (गी.७.४,५,६,७) इति, व्यक्तं विष्णुस्तथाऽव्यक्तं पुरुषः काल एव च (वि.१.२.तं८) ' प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी ।।पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि। परमात्मा च सर्वेषामाधारः परमेश्वरः'(वि.६.४.३९.४०) इति च

## सू—४ ज्ञेयत्वावचनाच्च (१-४-४)

यदि तन्त्रसिद्धमिहाव्यक्तमविवक्षिष्यत्, ज्ञेयत्वमवक्ष्यत् ; व्यक्ताव्यक्तज्ञविज्ञानात् ' मोक्षं वदद्भिस्तान्त्रिकैस्तेषां सर्वेषां ज्ञेयत्वाभ्युपगमात् न चास्य ज्ञेयत्वमुच्यते ; अतो न तन्त्रसिद्धस्येह ग्रहणम् ॥

' अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् । अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ' (कठ.१.३.१५) इत्यव्यक्तस्य ज्ञेयत्वमनन्तरमेव वदतीयं श्रुतिरिति चेत्–तन्न प्राज्ञ ,—परमपुरुष एव ह्यत्र श्लोके निचाय्यत्वेन प्रतिपाद्यते, ' विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ' (१.३.९) ' एष सर्वेषु भूतेषु गूढोऽत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया

## सू—५ वदतीतिचेन्न प्राज्ञो हि प्रकरणात् (१-४-५)

श्रुतप्रकाशिका

## सू—४ ज्ञेयत्वावचनाच्च (१.४.४)

व्यक्ताव्यक्तज्ञविज्ञानादिति सांख्यग्रन्थ एव स्ववाक्ये निवेशितः ॥

## सू—५ वदतीतिचेन्न प्राज्ञो हि प्रकरणात् [१.४.५]

अव्यक्तस्य ज्ञेयत्वमिति । व्यक्तधर्मभूतशब्दादिनिषेधानामव्यक्तपर्यवसानस्य योग्यत्वात्, महतःपरत्वोक्तेश्च सामान्येन यत्तच्छब्दाभ्यांनिर्दिष्टमपि कारणमव्यक्तमिति भावः । विज्ञानसारथिरिति । अनेन ज्ञेयस्य प्राज्ञस्य परमपुरुषासाधारणविष्णुशब्देन प्रकृतत्वं दर्शितम् । एष सर्वेष्विति । ' निचाय्य ' इत्युक्तस्य ज्ञानस्य ' दृश्यते ' इति पदेन प्राज्ञविषयतया प्रकृतत्वं दर्शितम् अवान्तरचोद्यपरिहारपरेऽस्मिन्सूत्रे परमप्रकृतपूर्वपक्षयुक्तिनिरासश्चार्थसिद्ध इत्याह–अत

श्रीभाष्यम्

-- क्ष्मदर्शिभिः ' (१.३.१२) इति प्राज्ञस्यैव प्रकृतत्वात्। अत एव ' पुरुषान्नपरं किञ्चित् ' ( .३.११) इति न पञ्चविंशकपुरुषातिरिक्ततत्त्वनिषेधः । तस्य च परमपुरुषस्याशब्दत्वादयो धर्माः ' यत्तदद्रेश्यमग्राह्यम् ' (मु १.६) इत्यादिश्रुतिप्रसिद्धाः। ' महतः परम् ' इत्यपि ' बुद्धेरात्मा महान्परः ' इति पूर्वप्रकृताज्जीवात्मनः परत्वमेवोच्यते ॥

## सू–६ त्रयाणामेवचैवमुपन्यासः प्रश्नश्च (१.४.६)

अस्मिन्प्रकरणे ह्युपायोपेयोपेतॄणां त्रयाणामेव चैवमुपन्यासः ज्ञेयत्वेनोपन्यासः, तद्विषयश्च प्रश्नो दृश्यते, नान्यस्याः क्वादे। तथाहि नचिकेता मुमुक्षुस्सन्मृत्युप्रदत्ते वरत्रये प्रथमेन वरेणात्मनः पुरुषार्थयोग्यतापादिनीमात्मनि पितुस्समनस्कतां प्रतिलभ्य द्वितीयेन मोक्षोपायभूतां नाचिकेताग्निविद्यां वव्रे–' स त्वमग्निं स्वर्ग्यमध्येऽपि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम्। स्वर्गलोका अमृतत्व भजन्त एतद्द्वितीयेन वृणे वरेण ' (कठ.१.१.१३) इति।

श्रुतप्रकाशिका

एवेति। व्यक्तधर्मनिषेधामव्यक्तपर्यवसानचोद्यस्यादृश्यत्वाद्यधिकरणे परिहृतत्वमाह— तस्य चेति। महतः परत्वादव्यक्त मिह विवक्षितमित्यत्राह–महत इति। इन्द्रियादिपरिकरस्य स्वलक्षणप्राधान्यविवक्षाऽतिशयात् महच्छब्देन आत्मनिर्देशः॥

प्रकरणस्य प्राज्ञैकपरत्वं नास्ति प्रधानस्यापि प्रतिपाद्यमानत्वात्। तस्मात् प्राज्ञपरत्वं न प्रधानपरत्वविरोधीत्यत्राह–सूत्रकारः

## सू–६ त्रयाणामेवचैवमुपन्यासः प्रश्नश्च [१.४.६]

प्रथमचशब्दो हेतुसमुच्चये द्वितीयश्चशब्दः प्रश्नोपन्यासयोस्समुच्चये कथमत्र उपन्यासः, प्रश्नवाक्यं हि मुक्तमात्रविषयमिति शङ्कायां प्रतिवचनप्रकारेण प्रश्नार्थस्य विशदत्वात् प्रश्नवाक्येऽपि [illegible] पश्चादुक्तिः अस्मिन्नित्यादि। त्रयाणामिति पदमग्निजीवपरमात्मपरं परैर्व्याख्यातमिति [illegible] उपायेति। एवमुपन्यास इति व्याख्येयपदम्। एवपदं व्याचष्टे ज्ञेयत्वेनेति। ' ज्ञेयत्वावचनाच्च ' इति पूर्वसूत्रस्थज्ञेयत्वमेवशब्देन परामृश्यत इत्यर्थः, तदुपपादयति तथाहीति। प्रथमवरवरणं द्वितीयपादे ' अत्ता चराचरग्रहणात् ' इत्यधिकरणे विस्तृतत्वादिह प्रतिलभ्येत्यनेन संक्षिप्तं तत्र संक्षिप्तत्वाद्द्वितीयवरवरणं विस्तरेण दर्शयति द्वितीयेनेति मोक्षोपायभूतामिति। नाचिकेताग्निविद्याया मोक्षोपायत्वमग्निद्वारा भवति, [illegible] परमात्मनस्स्वात्मानुसन्धान [illegible]। तथाहि तदुभयं श्रूयते ' लोकादिमग्निं तमुवाच तस्मै ' इत्युपक्रम्य ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति ' ' त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवंविद्वांश्चिनुते नाचिकेतम्। स मृत्युपाशान्पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके ' इति वाक्येन परमात्मस्वात्मानुसन्धानपूर्वकाग्निविद्याज्ञानपूर्वकं चित्वा तस्य शोकातिगत्वमुक्तम् ' यो वा एतां ब्रह्मजज्ञात्मभूतां चितिं विदित्वा चिनुते नाचिकेतम्। स एव भूत्वा ब्रह्म ब्रह्मात्मभूतः करोति तथैव पुनर्न जायते ' इति वाक्येन [illegible] अनुसन्धानपूर्वकमग्निचयनस्यापुनर्भवहेतुभूतब्रह्मोपासनद्वारा मोक्षप्राप्तिहेतुत्वम्, तृतीयवरवरण [illegible] द्वितीय

## श्रीभाष्यम्

स्वर्गशब्देनात्र परमपुरुषार्थलक्षणो मोक्षोऽभिधीयते, 'अमृतत्वं भजन्ते' (कठ.१.१.१३) इति तत्रस्थस्य जननमरणाभावश्रवणादुत्तरत्र क्षयिफलकर्मनिन्दादर्शनाच्च; 'त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत्तरति जन्ममृत्यू' (१.१.१७) इति च प्रतिवचनात्। तृतीयेन वरेण मोक्षस्वरूपप्रश्नद्वारेणोपायस्वरूपमुपेतृस्वरूपमुपायभूतकर्मानुगृहीतोपासनस्वरूपं च पृष्टम्-'येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके। एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः' (१.१.२०) इति। एवं मोक्षे पृष्टे तदुपदेशयोग्यतां परीक्ष्योपदिदेश, 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' (कठ,१.२.१२) तदेवं

## श्रुतप्रकाशिका

स्वरणश्लोकमुपादाय तत्र व्याख्येयस्य स्वर्गपदस्य प्रकृतार्थं व्याचष्टे स्वर्गेति। मोक्षशब्दो मोक्षस्थानपरः, लोकशब्दसामानाधिकरण्यात् भाष्ये तत्रस्थस्य इति वक्ष्यमाणत्वाच, सर्वशब्दस्य मोक्षवाचित्वोपपादकः परमपुरुषार्थलक्षणशब्दः स्वर्गशब्दस्य प्रकृष्टसुखोपलक्षणत्वात् मोक्षस्य निरवधिकानन्दरूपत्वाच्च, स्वर्गशब्दवाच्यत्वमिति भावः। प्रसिद्धस्वर्गपरत्वं किं न स्यादित्यत आह—अमृतत्वमिति। तत्रस्थस्येति। 'स्वर्गलोका' इति बहुव्रीहिः निरतिशयसुखरूपपरमव्योमस्था इति भावः मोक्षवाचित्वे हेत्वन्तरमाह-उत्तरत्रेति। द्वितीयवरवरणप्रश्ने 'श्वोऽभावामर्त्यस्य यदन्तकैतत् सर्वेन्द्रियाणां जरयन्ति तेजः। अपि सर्वं जीवितमल्पमेव' इति तथा 'जीविष्यामो यावदीशिष्यसि त्वं वरस्तु मे वरणीयस्स एव' इति नचिकेतसैव क्षयिफलस्य निन्दितत्वात् क्षयिफलविमुखेन [illegible] पपत्तेरित्यर्थः॥

द्वितीयवरवरणप्रतिवचनावगतं हेत्वन्तरमाह-त्रिणाचिकेतइति। त्रिणाचिकेतः 'अयं वाव यः पवते', इत्याद्यनुवाकत्रयाध्यायी, त्रिकर्मकृत् यजनाध्ययनदानकृत्। पाकयज्ञहविर्यज्ञसोमयज्ञकृद्वा त्रिभिः अग्निभिर्हेतुभिः। सन्धि परमात्मोपासनेन संबन्ध प्राप्य जन्ममृत्यू तरतीत्यर्थः 'करोति तद्येन पुनर्न जायते' इत्यनेनैकार्थ्यात् [illegible]र्शयेनेति। 'येयं प्रेते' इति मन्त्रस्य देहातिरिक्तजीवस्वरूपमात्रप्रश्नपरत्वव्युदासायाह—मोक्षेति। अत्रोपायेपियप्रश्नो गर्भितइति भावः, प्रतिवचनप्रकारेण प्रश्नार्थस्यावगन्तव्यत्वात् 'प्रेते परित्यक्तचरमशरीरे' इत्यर्थः 'न प्रेत्य संज्ञाऽस्ति' इति प्रयोगात्। अन्यथा पूर्ववरद्वयवरणानुपपत्तिर्हेतुः पूर्वमुक्तत्वादिषु कष्टोक्तः। इद च विस्तरेणोपपादयिष्यामः। आसन्प्रकरणे नाचिकेतो मरणं मानुप्राप्तिः' इति मरणशब्दश्चरमशरीरवियोगपरः उक्तहेतोरेव

पञ्चविंशतितत्त्वज्ञः परमात्मा भवेत्मृत। समुक्तस्तन्यसन्तानात् परेण समतां व्रजेत्॥

इति परमात्मसाम्यापन्ने मुक्ते मृतशब्दस्य कपिलासुरिसंवादे प्रयुक्तत्वात्। 'देवैरत्रापि विचिकित्सितं पुरा' इत्यारभ्य 'धृत्या धीरो नचिकेतोऽत्यस्राक्षीः' इत्यन्तेनोच्यमान दुरवगमत्वविविधप्रलोभनप्रश्नप्रतिषेधादिकमभिप्रेत्याह—तदुपदेशयोग्यतां परीक्ष्येति। 'दुर्दर्शं द्रष्टुमशक्यम्। कुत, गूढं गुणत्रयतिरोहितत्वात् अनुप्रविष्टं शरीरानुप्रविष्टं तथापि गुहाहितं हृदयगुहागत गह्वरेष्ठ, गह्वरेष्ठम् तदन्तर्गते वस्तुनि स्थितम् जीवान्तःस्थितमित्यर्थः। जहातीत्युपदिदेशेत्यन्वयः 'येय प्रेते' इत्यादिवाक्यस्य जीवमात्रप्रश्नपरत्वे परमात्मविषयतया प्रतिवचनवैघट्यं स्यादित्यभिप्रायः। अस्मिन्वाक्ये स्वोक्तमर्थत्रितयमपि विशदयति तदेवमिति। 'अध्यात्मयोगशब्दः प्राशस्त्यरूपविषयोगात्...

### श्रीभाष्यम्

**सामान्येनोपदिष्टा नाचिकेताः प्रीतस्सन् ' देवं मत्वा ' (१.२.१२) इत्युपास्यतया निर्दिष्टस्य प्राप्यभूतस्य देवस्य ' अध्यात्मयोगाधिगमेन ' इति वेदितव्यतया निर्दिष्टस्य प्राप्तुः प्रत्यगात्मनश्च ' मत्वा धीरो हर्षशोकौ जहाति ' (१.२.१२) इति निर्दिष्टस्य ब्रह्मोपासनस्य च स्वरूपविशोधनाय पुनः पप्रच्छ—' अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ' (१.२.१४) इति । एवं सकलेतरार्तानागतवर्तमानसाध्यसाधनसाधकविलक्षणे त्रये पृष्टे प्रथमं प्रणवं प्रशस्य तद्वाच्यं प्राप्यस्वरूपं तदन्तर्गतं च प्राप्तृस्वरूपं वाचकरूपं चोपायं पुनरपि सामान्येन व्यापयन्प्रणवं तावदुपदिदेश**

### श्रुतप्रकाशिका

भिप्रयन्नाह—**वेदितव्यतयेति** । ' **तं दुर्दर्शम्** ' इति मन्त्रेण त्रितयमप्युक्तं चेत् श्रोतव्याभावात् पुनःप्रश्नानुपपत्तिरिति शङ्काऽपनोदनाय प्रश्नाकाङ्क्षा प्रयोजने दर्शिते **सामान्येनेति । स्वरूपविशोधनाय पुनःपप्रच्छेति** च । **पुनःपप्रच्छ** इति पाठः उपायोपेयोपेतॄणां त्रयाणामपि सामान्येनोपदिष्टत्वात् स्वरूपशोधनाकाङ्क्षाऽपि सर्वसाधारणी तत्कथं '**अन्यत्र धर्मात्** ' इति मन्त्रेण परमात्ममात्रविषयप्रश्न इति शङ्कायां प्रश्नस्य त्रितयविषयत्वमनुभाषणव्याजेन दर्शयन् तदनन्तरमन्त्रस्यापि त्रितयविषयत्वमाह—**एवं सकलेतरेति** । कालत्रयसम्बन्धित्वंहि वक्ष्यमाणत्रितयस्याप्यस्ति तत्कथं विलक्षणत्वमिति शङ्काव्युदासार्थं इतरशब्दः वर्तमानशब्देन कृताकृतशब्दो व्याख्यातः प्रारब्धमसमाप्तंहि वर्तमानमुच्यते—अन्यत्र इति वैलक्षण्यं विवक्षितम् । धर्मः उपायः, धर्मादन्यत्र प्रसिद्धोपायविलक्षण उपाय इत्यर्थः, अधर्मः धर्मेतरः, उपेयः । अधर्मादन्यत्र प्रसिद्धसाध्यविलक्षणं फलमित्यर्थः । अस्मादिति बुद्धिस्थस्त साधको विवक्षितः । उपायोपेता अहं प्रसिद्धोपेतृसाधकविलक्षणः साधकावस्थायामितरफलविरक्तत्वात् , फलदशायामाविर्भूतगुणाष्टकविशिष्टस्वरूप वाच । कृताकृतादिति धर्मादीनां विशेषणम् । कृताकृताद्धर्मादेर्विलक्षणं यत् भूताद्भव्याच्च धर्मादेर्विलक्षणं यदित्यर्थः ॥

यद्वा धर्मादधर्माच्च अन्यत्र यदित्युपासनप्रश्नः, पुण्यापुण्यरूपसाधनविलक्षणादुपासनस्य कृताकृताद्भूतात् भव्याच्चान्यत्र यदिति कालापरिच्छिन्नमुपेयं पृष्टम् । उपेतुरपि चेतनस्य नित्यत्वात् प्राप्यान्तर्भावाच्च, तत एव तस्यापि तन्त्रेण प्रश्नः । तदन्तर्गतं च प्राप्तृस्वरूपमितीहि वक्ष्यते त्रयइति । यत्तच्छब्दौ त्रितयपराविति भावः ॥

ननु धर्माधर्मासाध्यत्रिकालवर्तिविलक्षणपरमात्मविषयोऽयं मन्त्रः, किं न स्यात् ? उच्यते—धर्मादन्यत्रेत्युक्ते तदसाध्यत्वं प्रतीयते, नद्यदृष्टादन्यद्दृष्टमित्युक्ते सत्यदृष्टासाध्यत्वं दृष्टस्य प्रतीयते । धर्माधर्मादिविलक्षणब्रह्मविषयप्रश्नस्त्वयादिति चेन्न, प्रयोजनाभावात् कृताकृताद्भूताद्भव्याच्चान्यत्रेत्यनेन कालपरिच्छिन्नार्थविलक्षणं वस्तुदृष्टं स्यात् , ततश्च धर्माधर्मवैलक्षण्यप्रश्नं विफल एव, धर्माधर्मयोरपि कालपरिच्छिन्नत्वा [illegible] इतरोपायोपेतृ [illegible] । **प्रणवं प्रशस्येति** । ' **सर्वे वेदा** ' इत्यादिनादमयोच्चपरब्रह्मप्रतिपादकतया प्रशस्येत्यर्थः, ' **तत्ते पदं संग्रहेण ब्रवीम्योमिति** ' इति प्रणवेन ब्रह्मप्रतिपादनमुच्यते । **प्राप्यस्वरूपमिति** । पदशब्दः पद्यत इति व्युत्पत्त्या प्राप्यवाचीति भावः । तदन्तर्गतं प्रणववाच्यान्तर्गतम् प्रणववाच्यैकदेशम् प्रणवैकदेशवाच्योऽप्युपेता जीवः ॥

यद्वा प्राप्ये प्रणववाच्ये परमात्मनि प्रकारतयाऽन्तर्गतमित्यर्थः । परिशुद्धजीवस्य प्राप्यान्तर्भावात् पदशब्दवाच्यान्तर्भूतत्वमिति भावः । **वाचकरूपंचोपायमिति** । उपायोपायत्वं प्रणवस्योपायत्वं, उपायोहि ध्यानं वाचकशब्दश्च

### श्रीभाष्यम्

' सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येत ! (कठ.१.२.१५) इति। एवमुद्दिश्य पुनरपि प्रणवं प्रशस्य प्रथमं तावत्प्राप्तुः प्रत्यगात्मनस्स्वरूपमाह—' न जायते म्रियते वा विपश्चित् ' (कठ.१.२. १८) इत्यादिना प्राप्यस्य परस्य ब्रह्मणो विष्णोस्स्वरूपम् ' अणोरणीयान् ' (१.२.२०)इत्यादिना 'क इत्था वेद यत्र सः' (१.२,२५) इत्यन्तेनोपदिशन्मध्ये 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ' (१.२.२३) इत्यादिनोपायभूतस्योपासनस्य भक्तिरूपतामप्याह ' ऋतं पिबन्तौ ' (१.३.१) इति चोपास्यस्योपासकेन सहावस्थानात्सूपासतामुक्त्वा ' आत्मानं रथिनं विद्धि ' (१.३.३) इत्यादिना ' दुर्गं पथस्तत्कवयो वदन्ति ' (१.३.१४) इत्यन्तेनोपासनप्रकारमुपासीनस्य च वैष्णवपरमपदप्राप्तिमभिधाय ' अशब्दमस्पर्शम् ' (१.३.१५ इत्यादिनोपसंहृतम्। अतस्त्रयाणामेवात्र ज्ञेयत्वेनोपन्यासः प्रश्नश्च, तस्मान्नेह तान्त्रिकस्याव्यक्तस्य ग्रहणम् ॥

### श्रुतप्रकाशिका

वाप्यसरणोपायः ' ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ' ' ओमित्यात्मानं ध्यायथ ' ' ओमित्यनेनैवाक्षरेण परमपुरुषमभिध्यायीत ' इति ध्यानोपायत्वंहि प्रणवस्यावगम्यते ' तपांसि ज्ञानप्रधाना उपरिभागा ',

ननु तत्ते पदं ब्रवीमि इति तात्पर्यस्वरूपपरत्वंहि प्रतीयते, तत्कथं [illegible] प्रश्नं। जिज्ञासु प्रतिज्ञाते तदनुबन्धिनां जिज्ञास्यत्वसिद्धिः, तदुपयुक्तत्वादुत्तरत्र निरूप्यमाणत्वाच्च अर्थतः प्रतिज्ञातत्वसिद्धिरितिचेत् इहापि ब्रह्मवेदनोपयोगित्वात् उत्तरत्र प्रतिपाद्यमानत्वाच्च, उपायोपेयोरपि प्रतिपाद्यत्वम्। न [illegible] किंतु पदशब्दव्याख्यानान्तर्भावश्च दर्शितः ' एतद्ध्येवाक्षरं ब्रह्म ' इत्यादि वाक्याभिप्रायेण ह—पुनरपि प्रणवं प्रशस्येति ' नजायते म्रियते वा विपश्चित् ' इत्यादिमन्त्रद्वयस्य परमात्मपरत्वानुपपत्तिं मन्वान आह—प्राप्तु प्रत्यगात्मनइति का पुनरनुपपत्तिः ? उच्यते इद मन्त्रद्वय तावदेकविषयम् ' न हन्यते हन्यमाने शरीरे ' इत्येतद्विवरणरूपत्वात् द्वितीयमन्त्रस्य। ' हन्ता चेत् ' इति मन्त्रश्च जीवविषय एव लोकस्य परमात्मनि हन्तृहन्तव्यभावप्रतिपत्त्यभावात् तत्प्रतिषेधानुपपत्तेः। परमात्माहि प्रत्यक्षागोचरः, कथं तस्मिन्वध्यतादिप्रतिपत्तिः, अहमेनं हन्मि अयं मां हन्तुमागच्छति इति वध्यघातुकभावाभिमानोहि जीवविषय एव देहिनां ॥

ननु ' नास्य जरयैतज्जीर्यते न वधेनास्य हन्यते ' इति यत्परमात्मन्यपि हननप्रतिषेध उपपद्यते इहतु लोकभ्रान्तिरनूद्य प्रतिषिध्यते ' हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्, उभौ तौ न विजानीतो' इति परमात्मनि वध्यघातुकभ्रान्तिर्न कस्याचिदप्यस्ति अतोऽनुवादनिषेधावनुपपन्नौ ' न जायते ' इति मन्त्रश्च तेनैकार्थः, अतो मन्त्रद्वयमपि जीवविषयम्. ' अणोरणीयान् ' इत्यादेरर्थमाह—प्राप्यस्येति। ' न जायते म्रियत ' इत्यादिना ' अणोरणीयान् ' इत्यादिना च जीवपरयोस्स्वरूपे कथिते ' ऋतं पिबन्तौ इति मन्त्रेण तयोः प्रतिपादनवैयर्थ्यशङ्कापरिहारायाह—सूपासतामुक्त्वेति। एतद्वाक्यस्योपादानं परकृतव्याख्याननिरासफलकतयेति वक्ष्यामः। उपसंहृतमिति प्रकृतोपसंहारस्यापेक्षितत्वादर्थान्तरपरत्वस्याशङ्कितत्वाच्चेति भावः। सूत्रार्थं निगमयति—अतस्त्रयाणामिति। सूत्रार्थ [illegible] षेय स्मा स्रेहेति ॥

## श्रुतप्रकाशिका

ननु 'त्रयाणाम्' इति अग्निजीवपरमात्मपरं किं न स्यात् तथा हि प्रश्नोपन्यासो दृश्येते 'स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि' 'येऽयं प्रेते' 'अन्यत्र धर्मात्' इति त्रयाणां क्रमेण प्रश्नः 'लोकादिमग्निं तमुवाच 'तस्मै या इष्टकाः' 'हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् । यथा हि मरणं प्राप्य आत्मा द्रवति गौतम नजायते म्रियते वा विपश्चित्' इति प्रतिवचनं च जीवविषयप्रश्नस्य परमात्मविषयप्रतिवचनवैरूप्यं प्रश्नस्य विवक्षितत्वादुपपत्तेरिति । उच्यते—अत्रासतिविरोधेऽपि भाष्यकारोक्तार्थ एव युक्ततरः । तथाहि जीवस्तादुपेता परमात्मा प्राप्यः, अग्निविद्या च ब्रह्मोपासनाङ्गत्वेन उपायान्तर्भूता तदन्तर्भावश्च प्राकरणिकत्वादयैर्दर्शितः । अत्रापि पृथगेव विवक्षितत्वे अग्निजीवपरमात्मतदुपासनानां चतुर्णां प्रतिपाद्यत्वदर्शनात् 'त्रयाणामेव' इत्यवधारणमयुक्तम्, अतोऽग्नेरप्युपायान्तर्भावविवक्षाऽङ्गीकर्तव्या, तथासत्युपायोपेयोपेतॄणामेव व्याख्यानं युक्ततरं, उपासनोपदेशश्चात्र स्फुटतरमुपलभ्यते, 'नायमात्मा प्रवचनेन लभ्यः' 'नाविरतो दुश्चरितात्' इत्यादिना केवलश्रवणादिविलक्षणः परमात्मवरणीयताहेतुभूतः प्रकृष्टज्ञानविशेषो हि उपायतयाऽभिधीयते, अवधारणं प्राधान्यव्यावृत्तिपरम् उपायस्योपेयप्राप्त्यर्थतया परमात्मन्यन्तर्भावात् त्रित्वाविरोध इतिचेत् तर्हि त्रयाणामुपन्यासः प्रधानस्याप्रतिपाद्यत्वे हेतुरेव न भवितुमर्हति, अर्थान्तरान्तर्भावसहत्वात् प्रश्नोपन्याससमुच्चयस्त्रयाणामेव नह्युपायस्य प्रश्नो दृश्यते, अतोऽवधारणोपपत्तिरिति चेन्न, अस्मिन्प्रकरणे प्रश्नोपन्याससमुच्चयस्य प्रतिपाद्यत्वे हेतुत्वाभावाभावात्तदभावेन प्रतिपाद्यत्वाभावस्य दुर्वचत्वात् । उपायोऽप्रष्टव्योपन्यस्तः सोऽप्यर्थतः प्रकृष्ट इति; प्रश्नोपन्याससमुच्चयोऽस्मिन् प्रकरणे प्रतिपाद्यत्वे हेतुरितिचेत्, तर्हि चतुर्णामिति वक्तव्यम् । शब्दतोऽर्थतश्चतुर्णां प्रश्नोपन्याससम्भवात् यदि कण्ठोक्त्यैव प्रश्नोपन्याससमुच्चयो विवक्षितः, तस्य प्रतिपाद्यत्वे प्रयोजकत्वाभावस्य प्रतिपाद्यमानोपायस्य एव दृष्टतया समुच्चयाभावस्याप्रतिपाद्यत्वे हेतुत्वायोगात् ॥

किंच 'येऽयं प्रेते' इत्यस्य देहातिरिक्तजीवसद्भावासद्भावप्रश्नविषयत्वं चानुपपन्नं देहातिरिक्तात्मसद्भावनिश्चयरहितस्य पितृसौमनस्याग्निविद्यावरकरयोरनुपपत्तेः, अग्निप्रश्नवाक्य एव 'स्वर्गलोका अमृतत्वं भजन्ते' इति देहातिरिक्तात्मज्ञानवत्त्वमवगम्यते । तत्प्रतिवचनएव 'त्रिकर्मकृत्तरति जन्ममृत्यू' 'करोति तयेन पुनर्नजायते' इत्यपवर्गरूपपुरुषार्थोपयोगित्वमग्निविद्याया अवगतं कुतो देहातिरिक्तात्मसंदेहसम्भवः । तस्मादपवर्गप्रकारविशेष एव संदेहसम्भवः अतस्तत्प्रकारविशेषप्रश्नपरत्वम् 'येऽयं प्रेते' इत्यादिवाक्यस्य युक्तम् यदीदं देहातिरिक्तात्मसद्भावासद्भावप्रश्नपरम् 'अस्य' 'तं दुर्दर्शम्' इति परमात्मविषयप्रतिवचनं च नघटते, जीवपरयोरैक्यज्ञापनार्थं तथा प्रतिवचनमितिचेन्न परमात्मविषयप्रतिवचनएव 'ऋतं पिबन्तौ सुकृतस्य लोके' इति जीवपरयोर्भेदप्रतिपादनेन तद्विरुद्धार्थाभिप्रायकल्पनाऽनुपपत्तेः । नच भेदानुवादः सर्वज्ञताद्याकारेण जीववैलक्षण्यस्य लौकिकप्रमाणागोचरत्वात्, विहितस्य निषेधायोगाच्च । नच बुद्धिजीवपरोऽयं मन्त्रः 'गुहां प्रविष्टौ' इत्यस्य मन्त्रस्य बुद्धिजीवपरत्वं पूर्वपक्षीकृत्य जीवपरमात्मपरत्वस्य भगवद्भिरेवास्य गौर्द्वितीय इति न्याये सिद्धान्तितत्वात् 'यदेवेह तदमुत्र यदमुत्र तदन्विह' इति हृदयायतन उपास्यतया स्थितस्य परमपुरुषस्यादित्यमण्डलवर्तिना ऐक्यप्रतिपादनमिति न जीवपरयोरैक्यप्रतीतिः 'मृत्योः स मृत्युमाप्नोति' इति वाक्यमुपसंहारगतमेतदपेक्षया दुर्बलम्, भेदसामान्यनिषेधरूपत्वाद्विहितभेदविशेषस्याप्रतिषेधात्, अतश्श्रुतभेदविरुद्धाभिप्रायकल्पनाऽयोगात् प्रतिवचनवैयर्थ्यमेव । किंच 'येऽयं प्रेत' इति प्रथमखण्डस्य प्रश्नः प्रतिप्रश्नान्तरव्यवहितस्य पञ्चमखण्डस्थस्य 'हन्त इदं प्रवक्ष्यामि' इति वाक्यस्य प्रतिवचनत्वायुक्तम् अर्थक्रमः पाठक्रमात् बलीयानिति तेन तद्बाध इतिचेन्न, मध्ये जीवविषयवाक्यस्य सद्भावात् । तच्च दर्शितम् ॥

श्रीभाष्यम्

## सू—७ महद्वच [१.४.७)

यथा 'बुद्धेरात्मा महान्परः' (कठ.१.३.१०) इत्यत्रात्मशब्दसामानाधिकरण्यान्न तन्त्रसिद्धं महत्तत्त्वं गृह्यते ; एवमव्यक्तमात्मनः परत्वेनाभिधानान्न कापिलतन्त्रसिद्धं गृह्यत इति स्थितम् ॥

इति आनुमानिकाधिकरणम्

श्रुतप्रकाशिका

किंच 'यन्मयं च जमद्ब्रह्मन्' इत्यादाविव यदा प्रतिवचनाव्यवहिताः प्रश्नाः प्रश्नाव्यवहितानि च प्रतिवचनानि स्युः, तदा क्रमतो उत्तरयने, को देवदत्तः दण्डी, को यज्ञदत्तः ? कुण्डली, को विष्णुमित्रः कमण्डलुमान् इति चैकैकप्रश्नानन्तर तत्तत्प्रतिवचनदर्शनात् यज्ञदत्तप्रश्नोत्तरस्य देवदत्तप्रश्नोत्तरत्वकल्पनवत् क्रमकोपकल्पकमन्यत् तानुपपन्नम् 'येऽयं प्रेते' इति सजीवसद्भावासद्भावगात्रप्रश्न इत्युक्तम् , अतः 'येऽयं प्रेते' इति श्लोकशब्दतोऽर्थतश्च मोक्षानुबन्धितया ज्ञातव्यार्थत्रयविषयः । तथा च सति 'तं दुर्दर्शम्' इत्यादि प्रतिवचनमतीव घटते, 'अन्यत्रधर्मात्' इति पुनःप्रश्नाकाङ्क्षा तस्यार्थश्च दर्शिता, अर्थत्रयस्यैकश्लोकेन पृष्टत्वस्य विवक्षितत्वात् प्रतिवचनाच्च 'त्रयाणामेव' इत्यवधारणं च युक्तम्। अतएव 'न जायते' इति जीवविषयवाक्यस्य 'अणोरणीयान्' इति परविषयवाक्यस्य 'नायमात्मा' इत्युपायविषयवाक्यस्य न प्रतिवचनत्वं सुघटितम् । प्रश्नप्रतिवचनान्तराव्यवहितत्वं च सिद्ध्यति एकप्रश्नेनैवार्थत्रयस्य पृष्टत्वे सूत्रस्थप्रश्नोपन्यासशब्दगतैकवचनस्वारस्यं च भवति नह्युपन्यासः प्रश्नाश्चेत्युक्तम् । यतः 'येऽयं प्रेते' इति प्रश्नोऽर्थत्रयविषयः, अतएवेह प्रश्नसाम्यमोमनाविद्याऽविद्याविभागकथनादिकं क्लेशोऽपदद्यते, अतो यथोक्त एव सूत्रार्थः ॥

## सू—७ महद्वच [१.४.७]

तन्त्रसिद्धमहत्तत्त्वाग्रहणे सूत्राभिप्रेतं हेतुमाह—आत्मशब्दसामानाधिकरण्यादिति ॥

इति आनुमानिकाधिकरणम्

अथ आनुमानिकाधिकरणम्

गूढार्थसङ्ग्रहः

## सू—१ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च (१-४-१)

अत्रापि ना एकेषामिति अनेन ब्रह्माभ्युपगमस्सूच्यते । सिद्धान्तेऽप्ययमर्थः सम्मतः त्रिपाद्या अन्ययोगव्यवच्छेदपरत्वात् । प्रथमपादेऽपि प्रकृतिजीववैलक्षण्यमभिधीयते । इह ब्रह्मलक्षणलक्ष्यताऽवच्छेदकनिर्णयार्थं तत्पादप्रवृत्तिः ।

## गूढार्थसंग्रहः

चिदचिद्वैलक्षण्यसिद्धौ अचिज्जीवापेक्षया उत्कर्षः सिद्ध्यति। तत्सिद्ध्यनन्तरं प्रथमपादान्ते 'उपासात्रैविध्यात्' इत्यनेन अचिज्जीवस्वधर्मकोपासनोक्त्या आचिज्जीवापेक्षयोत्कर्षः सम्यगवबोधितो भवति। अनन्तरं पूर्वप्रस्तुतात्चिज्जीवयोः लक्षणतिप्रसङ्गनिरसनमुखेनान्ययोगव्यवच्छेदः प्रतिपादनीय इति *'सर्वत्र प्रसिद्धोपदेशात्'* इत्यादि त्रिपादी प्रवृत्ता। तत्रैतत्पादे परिसमाप्तिसूचनायापि अपीत्युक्तं सूत्रे, तेनापिशब्देन ब्रह्माभ्युपगमसूचनं सिद्धान्ते सुतरां सङ्गतम् 'ईक्षतेर्नाशब्दम्' इत्यत्राशब्दनिर्देशतात्पर्यं तदधिकरण एव सम्यक् निरूपितम्। पूर्वत्र त्रिपाद्या 'नानुमानम्' आनुमानशब्दप्रयोगः नत्वानुमानिकमिति। अयमाशयः अनुमानेन चरतीत्यानुमानिकम्। 'चरति' (पा.सू.४.४.८) इति ठक् 'ठस्येकः' (पा.सू.७.३.५०) इतीकादेशः। आनुमानमित्यत्राणप्रत्ययः तेनानुमानगम्यमित्यर्थः अनुमानेन चरतीत्युक्तौ चरति, गच्छतीति बहुकार्यात्मना गच्छतीत्यर्थसूचनेन तन्त्रसिद्धप्रक्रिया प्रत्यभिज्ञापनं सूच्यते तेन तत्प्रतिपादनच्छायानुसारीणि इति भाष्योक्तपदार्थस्सूचितः॥

अत्राव्यक्तमहदादिशब्दानां सत्त्वात् कार्यकारणभावेन कापिलतन्त्रे प्रतिपादितानामत्र विन्यासेन तन्त्रसिद्धपदार्थग्रहणशङ्का। **शरीररूपकविन्यस्तगृहीतेरिति** प्रकरणेन शरीररूपकविन्यस्तानां प्रकरणात् गृहीतेरित्यर्थः॥

अयमाशयः—प्रकरणचेदं 'यच्छेद्वाङ्मनसी प्राज्ञः' इत्यनेन वागादिनियमनपरम् नियमनेसति 'इन्द्रियेभ्यःपरा ह्यर्था अर्थेभ्यश्च परमनः' इत्यादिकमुपपद्यते। अत उभयोस्सामरस्यमत्र विवक्षितम्। अतः 'इन्द्रियेभ्य.परा' इत्यत्र नियमनेन वशीकार्यत्वे परत्वक्रमप्रतिपादने तात्पर्यम्। 'बुद्धेरात्मा महान्परः महतःपरमव्यक्तम्' इत्यत्राव्यक्तशब्दो वर्तते। अत्र महच्छब्दः न महत्तत्त्वपरः तस्यात्मत्वाभावात्। 'महतःपरमव्यक्तम्' इत्यत्रापि जीवादपरत्वेनाव्यक्तस्य विवक्षितम्। एवं च 'आत्मानं रथिनं विद्धि शरीरं रथमेव च' इत्यत्र जीवानन्तरं शरीरस्योक्तिः अत्र च जीवानन्तरमव्यक्तस्योक्तिः। अनन्तरं *'बुद्धिं तु सारथिं विद्धि मनःप्रग्रहमेव च। इन्द्रियाणि हयानाहुः विषयांस्तेषु गोचरान्'* 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिः बुद्धेरात्मा महान्परः' इति व्युत्क्रमेणाभिधानं विषयनियमनेन वशीकार्यताक्रमप्रदर्शनार्थं नियमनेन वशीकरणक्रमः इन्द्रियार्थादीनां वशीकरणं शरीरवशीकरणमन्तरा न संभवति। अतः शरीरवशीकरणमेव प्रथमं कार्यम्। एवं च न साङ्ख्याभिमतप्रधानपरत्वप्रतिपादनं युक्तम्॥

*अत्र पुरुषशब्दार्थपर्यालोचनेन पुरुषवशीकरणमपि निर्णेयम्। पुरुषशब्दः 'स यत्पूर्वोऽस्मात्' इति(बृ)श्रुत्यनुसारेण* जगत्कारणं सर्वपापदाहकः सर्वशरीरीति अर्थत्रितयमभिधत्त इति पूर्वमेव बृहदारण्यकश्रुत्यर्थविवरणावसरे समुपपादितम्। तत्र जगत्कारणं सर्वशरीरीत्यर्थद्वयेन सृष्टिकालिकानुप्रवेशनिबन्धनशरीरत्वं सिद्ध्यतीत्यर्थः प्रागेवोपपादितः। 'सर्वस्य चाहं हृदि सन्निविष्टः मत्तस्स्मृतिर्ज्ञानमपोहनं च।' इति गीतायामप्ययमर्थः स्फुटः। एवञ्चोपासनस्यापि ज्ञानविशेषतया उपासननिर्वृत्युपायकाष्ठारूपत्वं *भगवत एव सिद्धम् उपासनस्यापि ज्ञानविशेषरूपत्वात्। 'ईश्वरस्सर्वभूतानां* हृद्देशेऽर्जुन तिष्ठति। तमेव शरणं गच्छ सर्वभावेन भारत। तत्प्रसादात्परां शान्तिमचिरेणाधिगच्छति' इत्यत्र शरणागतिः प्रतिपादिता 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्।' इत्यत्रापि स्थानविशेषप्राप्तिरेव विवक्षिता 'सत्योपनिषदं पुरुषम्' 'विज्ञानमानन्दं ब्रह्म रातिर्दातुःपरायणम् तिष्ठमानस्य तद्विदः' इति श्रुत्योरर्थोऽपि [illegible]। पुरुषशब्दस्य *पुरूणि ददातीति सर्वफलदातृत्वमपि तस्यार्थः, स्वात्मपर्यन्तम् [illegible]। 'परायणम्' इत्यत्रापि उपायप्राप्य*त्वमुभयं विवक्षितम्। सर्वपापदाहकत्वेनापीदं सूच्यते, अतः परमप्राप्यत्वमप्यत्र सिद्ध्यति। 'सा काष्ठा सा परा गतिः' इत्यत्र गतिशब्दः प्राप्यपरः। तदिदमभिमाषि भगवता भाष्यकृता, वशीकार्योपासननिर्वृत्त्युपायकाष्ठाभूतः परमप्राप्यश्च पुरुष' इत्यारभ्य इति 'तस्य च वशीकरणं तच्छरणागतिरेव।' आदितः सूत्रपाठः परपक्षे सिद्धान्तिना चैकरूप एव॥

## गूढार्थसंग्रहः

नवीनास्तु आद्यसूत्रे अव्यक्तशब्दार्थः विष्णुः । द्वितीयसूत्रे सूक्ष्मत्वमपि तस्यैव, 'तदधीनत्वादर्थवत्' इति सूत्रम् 'अव्यक्तात्पुरुषः परः' इत्यत्र प्रधानगताव्यक्तत्वस्य परमात्माधीनत्वात् प्रधानगताव्यक्तत्वनियामकत्वेन अव्यक्तत्वस्य विवक्षितम् । तथा च 'अव्यक्तात्' इति पञ्चम्याहि पुरुषगतपरत्वं प्रत्यव्यक्तस्यावधित्वमवगम्यते इति यदेव लभ्यते । नच तदस्यास्तीत्यनेन समवाय एव प्राप्नोतीति नियमोऽस्ति तत्स्वामित्वेनाप्युपपत्तेः । तदश्च यद्गतं परत्वं प्रत्यवधित्वं तस्यावरत्वमर्यादापद्यताम् परन्तु यत्स्वामिकं तस्यावरत्वादिकं प्रति स्वाम्यमेवार्धादापद्यत इति नकारोऽर्थः इति सुधायामभिहितम्' इति वदन्ति 'महतः परमव्यक्तम्' इत्यत्राव्यक्तशब्देन यदि परमात्मा बोध्यते तर्हि 'अव्यक्तात्पुरुषः परः' इत्युत्तरत्राव्यक्तात् विष्णोः पुरुषो विष्णुः पर इत्यर्थस्स्यात । तथा च स्वस्मात् परत्वं कथम्? पूर्वमव्यक्तशब्दस्य विष्णुपरत्वम् उत्तरत्राव्यक्तशब्दस्य प्रधानपरत्वं कथम्? पूर्वं यद्धर्मविशिष्टस्योपस्थितिस्तद्धर्मविशिष्टस्यैवोत्तरत्रापि प्रतीतिरसर्वसंमता । तथा च स्वस्य स्वस्मात् परत्वमेवैतद्वाक्यात्प्रतीयत इति सर्वानुभवसिद्धम् 'आनुमानिकमप्येकेषाम्' इति सूत्रे अनुमानसिद्धानामव्यक्तमहदादीनां प्रतीतिः स्फुटा । 'अव्यक्तात्पुरुषः परः', पुरुषान्न परं किञ्चित्' इत्यत्र पञ्चविंशकपुरुषानिषेध इति पूर्वपक्षः । अत्राव्यक्तमहदादीनां न साङ्ख्यमतसिद्धानां विवक्षा श्रुतौ सम्मता । किंतु शरीररूपकविन्यस्तानामेव ग्रहणम् । शरीररूपकविन्यासे बीजन्तु 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिः बुद्धेरात्मा महान्परः ॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥' इति, अत्र परत्वं वशीकार्यत्वे । अतएव क्रमव्यत्यासः जनानां बुद्धिसौकर्याय पूर्वं आत्मानम् इत्यादिव्यत्यासः, अत्रतु वशीकार्यं परं पराक्रमः, वशीकार्यत्वं तस्येन्द्रियाण्यवश्यानि तस्येन्द्रियाणि वश्यानीति पूर्वमेव प्रक्रान्तम् तद्विस्तरः 'इन्द्रियेभ्यः परा' इत्यादिः । 'पुरुषान्नपरं किञ्चित्' इत्यस्यानन्तरं 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' 'यच्छेद्वाङ्मनसी प्राज्ञः' इत्यादिना वागादिनियमनमुच्यते । इत्थं च नियमननिबन्धनैव वशीकार्यता, तत्र क्रमतात्पर्यं भाष्यएव स्पष्टम् तत्र पुरुषोऽपि वशीकार्येषु प्रधान इति प्रतिपादितः । तद्वशीकरणमेवात्रैकेषां शाखिनां शाखाया इत्युक्तम । अतएवैकेषा'मित्यस्य सार्थक्यम् अग्निना एकेषामित्युक्त्या च ब्रह्मसद्भावः प्रतिपाद्यत इति पूर्वमेवोक्तम । एवं च ब्रह्मप्रधानैवेयं शाला तद्वशीकरणक्रमोपयोगितया शरीररूपकविन्यस्तानां ग्रहणम् । अत्र तन्त्रसिद्धक्रमो न विवक्षितः । अतश्च 'आनुमानिकम'पीत्यपिशब्देन सूचितब्रह्मण एव प्राधान्यम् नत्वानुमानिकस्येति सूत्रतात्पर्यनिष्कर्षः । इदमेव 'दर्शयति च' इति सूत्रखण्ड एव दर्शयति, रूपकविन्यस्तानां ग्रहणं वशीकरणोपयोगितया सूत्रखण्डो दर्शयतीत्यर्थः ॥

'त्रयाणामेवचैवमुपन्यासः प्रश्नश्च' अत्र अग्निजीवपरमात्मानो विवक्षिताः, 'सत्वमग्निं स्वर्ग्यमध्येषि मृत्यो' (काठ,१.१.१३) 'येऽयं प्रेते विचिकित्सा मनुष्ये (१.१.२०) अन्यत्र धर्मादन्यत्राधर्मात्' (१.२.२४) इति श्रुतिभिः क्रमशः सोऽर्थः प्रतिपाद्यते इति शङ्कराचार्यः । पितृसौमनस्याग्निपरमात्मान इत्यानन्दतीर्थाः । पितृसौमनस्यविषये आशिषप्रार्थनं च प्रश्नत्वमिष्यते, इति वचनमुपन्यस्य तस्यापि प्रार्थनरूपत्वमुपपादितम् । द्वयोः प्रश्नः यथा तथा प्रश्नाभावात् पितृसौमनस्य परित्यक्तं शङ्कराचार्यैः 'सत्वमग्निं स्वर्ग्यमध्येषि मृत्यो' इत्यत्र यद्यपि स्वर्ग्याग्निप्रश्नो विद्यते । 'स्वर्गलोका अमृतत्वं भजन्ते' इति नाग्निविद्यायाः फलम् 'त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत्तरति जन्ममृत्यू' इत्यत्र जन्ममृत्युतरणमुक्तम । अनन्तरं 'अशब्दमस्पर्शमरूपगन्धं निचाय्य तं मृत्युमुखात्प्रमुच्यते' इति 'विद्यामेतां योगविधिं च कृत्स्नं ब्रह्मप्राप्तो विरजोऽभूद्विमुक्तः' इत्यन्ते वक्ष्यते । ब्रह्मविद्यायाः फलमेव मुक्तिः, अमृतत्वं नाचिकेताग्निविद्याऽङ्गभूता भवति इत्याङ्गिनःफलमेव । 'दर्शयति च' इति सूत्रखण्डे इन्द्रियादिवशीकरणं मोक्षोपायोपासननिर्वृत्त्युपयोगित

## गूढार्थसङ्ग्रहः

वेति पूर्वमेवाभिहितम् । अतस्त्रयाणामित्यत्र जीवपरमात्मनोरुपासनस्य च विवक्षा युक्ता । नाचिकेताग्निविद्याया अङ्गत्वेन अङ्गिफल एव पर्यवसानात् अतः उपासनं उपासकः उपास्य उपायः उपेता उपेयंचेति त्रयं विवक्षितम् । एवं च भगवदुक्तार्थएव सूत्रतात्पर्यं स्वरसम् । ' ज्ञेयत्वावचनाच्च ' ' वदतीति चेन्न प्राज्ञोहि प्रकरणात्' इति सूत्रद्वयमपि अत्रार्थेऽनुकूलम् ॥

परैः (शं.सू.भाष्ये) नहि प्रष्टव्यभेदात्प्रश्नभेदः जीवब्रह्मणोरभेदात् ' मृत्योरस मृत्युमाप्नोति यइह नानेव पश्यति इत्यत्रैव तदङ्गीकारे दोषाभिधानाच्च । विद्याऽविद्याविभागस्याङ्गीकृततया अविद्यानिबन्धनएव भेदः ' विद्याभीप्सिन नचिकेतसं मन्ये ' इत्यत्रैवाभिधानाच्च इत्याद्यभिहितम् । सूत्रे श्रुतौ वाऽपि रज्जुसर्पदृष्टान्तो नोक्तः । सूत्रे 'त्रयाणाम्' इति निर्देशं कुर्वतस्सूत्रकारस्यायमाशयः । पूर्वत्र ' गुहां प्रविष्टावात्मानौहि तद्दर्शनात् ' इति सूत्रं कठवल्लीविषयकमेव, ' द्वासुपर्णा ' इति मन्त्रः परैरेवोदाहृतः । तन्मन्त्रविचारस्तु ऋग्वेदस्यैतन्मन्त्रोत्तरवाक्यपर्यालोचनया पितापुत्रश्चेत्युभावपि विवक्षिताविति तत्रैव सूत्रे निर्धारितम् । अत्रापि जीवपरमात्मनोः पितृपुत्रस्थानीयतया राजकुमारनयेन पुत्रभूतजीवस्य पितृस्थानीयपरमात्मप्राप्तिरित्यर्थः न चालयितुं शक्यते । ' विद्याऽभीप्सिनं नचिकेतसं मन्ये ' इत्युक्त्या ' नत्वा कामा बहवो लोलुपन्ते ' इत्यत्र अङ्गिभूतविद्यैव विवक्षिता, नाचिकेताग्निविद्यातु तदङ्गभूता ' विद्यामेतां योगविधिं च कृत्स्नाम् ' इत्युत्तरत्र वक्ष्यते । योगश्च ध्यानानन्तरकालसमाधिः । इत्थं च ' देवं मत्वा हर्षशोकौ जहाति ' इत्यत्र ध्यानसामान्यवाचिनः मनधातोर्विशेषे विश्रान्तिः । ध्यानं उपासनं चैकमेव । इत्थं च ब्रह्मप्राप्त इत्युक्त्या ब्रह्मणः प्राप्यत्वेनोपेयत्वं प्राप्ता उपेता अङ्गिभूतध्यानमेवोपायः । इत्थंचैषां त्रयाणामेव विवक्षा परोक्तविद्याऽविद्याविभागेन भेदो नघटते । अन्ते फलस्य तथैवोक्तेः, ' शतंचैका च अमृतत्वमेति इत्यत्रैव वक्ष्यते । गतिद्वारकस्य मोक्षस्यात्र स्फुटम् । अतो ब्रह्मप्राप्तिरसिद्धा ' मृत्योस्स मृत्युमाप्नोति—नेह नानाऽस्ति ' इत्यनयोः परोक्तार्थो नघटत इति प्रथमाधिकरण एव निरूपितम् । उपायोपेयोपेतृविषयक प्रश्नत्रयं भाष्य एव स्फुटम् ॥

नवीनास्तु—' त्रीन्वारान् वृणीष्व ' इति श्रुतौ विद्यमानं त्रिशब्दमनुसृत्य सूत्रे त्रयाणामित्युक्तम् । अतः त्रयाणामपि प्रश्नेन प्रतिवचनेन च भिन्नभिन्नेन श्रुतिवाक्यबोधितेन भाव्यम् । भवत्सिद्धान्ते ' प्रब्रूहित्वं श्रद्दधानाय ' प्रेते ब्रवीमि ' इत्याग्निविषयकप्रश्नप्रतिवचनयोस्सत्त्वात् तस्य च त्रितयव्यतिरिक्तत्वादेवकारसङ्गतिः ' शरीररूपकविन्यस्त'त्यत्र विशेषणवाचित्वेन पूर्वनिपातः प्रसाध्यते इत्यादि वदन्ति । अत्र ' वरान्वृणीष्व ' इति गुरूक्त्यनन्तरं वराणां वरणं अतो नायं प्रश्नः ' वराणामेव वरस्तृतीयः ' इत्यत्रैव एतद्विद्यामनुशिष्टस्त्वयाऽहमिति तृतीयवरवरण काल एव प्रश्नो विद्यते । तत्र ! अस्तीत्येके नायमस्तीतिचैके ' इति प्रश्नबीजभूतः संशयोऽपि प्रदर्शितः, तेनात्रैव प्रश्न इति स्फुटम् । अन्यत्र तु संशयो नप्रदर्शितः, वादिविप्रतिपत्त्या संशयेन प्रश्नः ? ततश्शिष्यपरीक्षण ' येऽयं प्रेते ' इत्यनन्तरं ' विद्याभीप्सिन स नाचिकेतसं मन्ये ' ' त्वादृङ्नो भूयान्नचिकेतः प्रष्टा इति विवृतगुरुग्रन्थनचिकेतसं मन्ये इत्यनन्तरमेव ' अन्यत्र धर्मादन्यत्राधर्मात्' इति पूर्वोक्तशिष्टप्रश्नविस्तरः प्रश्नस्यात्रैव स्फुटत्वात् । भिन्नवाक्येन प्रश्नप्रतिवचने करणीये इतिसूत्रे नोक्तम् 'विद्यामेतां योगविधिं च ' इत्याद्युपायादित्रितयनिरूपणं स्फुटम् । अतः नवीनोक्तार्थस्य नावकाशः, एवकारस्यापि नवैयर्थ्यं त्रयाणामेव प्रश्नात् पूर्वं संशयहेतुत्वाभावेन प्रश्नरूपत्वाभावात् त्रीन्प्रश्नान् इति श्रुतावभावाच्च न तयोःप्रश्नरूपता । 'एष मग्निम्' इत्यत्र प्रश्नो दृश्यते । अथापि ' विद्यामेतां योगविधिं च कृत्स्नाम् ' इत्यत्र योगस्य ध्यानस्याङ्गभूताग्निविद्या । त्रिणाचिकेतः इत्यत्राप्यङ्गिद्वारैव तरणं विवक्षितम् । अङ्गिनो यत्फल तदङ्गस्य तस्योपायभूतध्यान प्रश्नप्रत्यानन्तर्यो म.

## गूढार्थसङ्ग्रहः

सतीति नैवकारविरोधः । रूपकविन्यस्तशब्दः पूर्वनिपातप्रसङ्गापादनमपि नयुज्यते, शरीरस्य रूपकविन्यस्तानाचित्यर्थः । शरीररूपकविन्यस्तेत्यस्य एवमर्थाङ्गीकारे शरीरस्यापि रूपकविन्यस्तत्वेनानौचित्यशङ्का न मनस इन्द्रियत्वेऽपि 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' इत्यादौ यथा मनसः पृथगिन्द्रियोक्तिः प्राधान्यतात्पर्येण तथाऽपि शरीरस्य प्राधान्येन तथोक्तिः, वश्यतया पूर्वोक्तेषु शरीरवशीकरणमेव प्रधानम् । तेन 'इन्द्रियेभ्यःपरा' इत्यादौ प्रधानभूतं यच्छरीरत्वेन विवक्षितं तदेवाव्यक्तशब्दार्थः । 'रूपकविन्यस्तशरीरगृहीतेः' इति यदि सूत्रं स्यात् तदा शरीरस्यैकस्यैव ग्रहणं स्यात् 'रूपकविन्यस्तेति च' व्यर्थं स्यात् । ततश्च 'इन्द्रियेभ्यःपरा' इत्यादिवशीकरणप्रत्यभिज्ञापनं न स्यात् 'विन्यस्ते'त्यत्र वि इत्युपसर्गवशीकरणोपयोगितया व्याप्ततात्पर्येण । यद्यपि 'आत्मानं रथिनं विद्धि' इत्यत्र मनः प्रथमं निर्दिष्टो यन्ते, अतः आत्मनः वशीकार्यत्वे परत्वमिति प्रतीयते, तथाऽपि 'बुद्धेरात्मा महान्परः महतःपरमव्यक्तम्' आत्मनोऽन्यस्यापि तस्य परत्वोक्तिः, आत्मानन्तरपाठितशरीरस्यैव परत्वम् । एतत्सूत्रे 'प्राप्यस्य ब्रह्मणो रूपम्, प्राप्तुश्च प्रत्यगात्मनः प्रत्युपायं फलञ्चैव तथा प्राप्तिविरोधि च । वदन्ति सकला वेदाः सेतिहासपुराणकाः' इतीममर्थमभिप्रेत्य इति संप्रदायोऽपि सुस्थः । एतेन निर्विशेष नात्र विवक्षितम् । गतेः प्राप्तेश्च प्रतिपादनादिति सूत्राकाराशयासिद्धः ॥

उपक्रमे 'आत्मानं रथिन विद्धि' इत्यत्रात्मशब्दस्य जीवपरत्वेन 'बुद्धेरात्मा महान्परः' इत्यत्रापि आत्मशब्दो जीवपरः आत्मशब्दस्य चेतनएव प्रसिद्धेः । एतेनात्मशब्दः स्वरूपपर इति नवीनोक्तिर्निरवकाशा ॥

इति आनुमानिकाधिकरणम्

अथ वेदान्तसारः

## सू-१ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च (१-४-१)

एकेषा कठानां शाखाया आनुमानिक प्रधानमपि जगत्कारणत्वेन 'महतः परमव्यक्तम्' (कठ.१.३.११) इत्युच्यते इतिचेत्–न पूर्वत्र 'आत्मानं रथिनं विद्धि' (१.३.३) इत्यादिपूपायोपासनेषु वशीकार्यत्वाय रथिरथादिरूपकविन्यस्तेषु शरीराख्यरूपकविन्यस्तस्याप्यव्यक्तशब्देन गृहीत. 'इन्द्रियेभ्यःपरा ह्यर्थाः' (१.३.१०) इत्यादिनाहि वशीकार्यत्वेनहि परा उच्यन्ते तथाचोत्तरत्र श्रुतिरेव दर्शयति 'यच्छेद्वाङ्मनसी प्राज्ञ.' (१.३.१३) इत्यादिना ॥

## सू-२ सूक्ष्मं तु तदर्हत्वात् (१.१.१)

सूक्ष्मं अव्यक्तेन शरीरावस्थं कार्यार्हमित्यव्यक्तशब्देन शरीरमेव गृह्यते ॥ यदि रूपकविन्यस्तानामेव ग्रहणम् किमर्थम् ? 'अव्यक्तात्पुरुषःपरः' (कठ.१.३.११) इत्यत आह—

## सू-३ तदधीनत्वादर्थवत् (१.४.३)

पुरुषाधीनत्वादात्मशरीरादिकं अर्थवत्—उपासननिवृत्तये भवति। पुरुषोऽन्तर्यामी सर्वमात्मादिकं प्रेरयन् उपासनोपाय येन वशीकार्यकाष्ठा प्राप्स्यति 'सा काष्ठा सा परा गतिः' (१.३.११) इत्युच्यते ॥

## सू—४ ज्ञेयत्वावचनाच्च (१.४.४)

अत्राव्यक्तस्य 'ज्ञेय त्वावचनाच्च' न कापिलमव्यक्तम् ॥

## सू—५ वदतीतिचेन्न प्राज्ञो हि प्रकरणात् (१-४-५)

'अशब्दमस्पर्शम्' इत्यारभ्य 'निचाय्य तम्' (कठ १ ३ १५) इति वदतीतिचेन्न 'तद्विष्णोः परमं पदम्' (१.३ ९) 'एष सर्वेषु भूतेषु गूढोऽत्मा न प्रकाशते (१.३ १२) इत्यादिना प्रकृत प्राज्ञोहि 'निचाय्य तम' (१.३ १५) इति ज्ञेय उच्यते ॥

## सू—६ त्रयाणामेवचैवमुपन्यासः प्रश्नश्च [१.४.६]

उपास्योपासनोपासकानात्रयाणामेवास्मि प्रकरणे ज्ञेयत्वेन उपन्यास प्रश्नश्च, न प्रधानादे। 'अध्यात्मयोगाधिगमेन देवं मत्वा' (कठ.१.२.१२) इत्यादुपन्यास 'येऽयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके' इत्यादिकश्च प्रश्न

## सू—७ महद्वच्च [१.४,७)

'बुद्धेरात्मा महान्परः' (१.३.१०) इत्यात्मशब्दाद्यथा न तान्त्रिको महान्, तथाऽव्यक्तमपीति ॥

इति वेदान्तसार

---

अथ वेदान्तदीप

## आनुमानिकमप्येकेषामितिचेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च

कठवल्लीषु—'इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मनः। मनसश्च परा बुद्धिर्बुद्धेरात्मा महान्परः॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः। पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः॥' (१ ३.१०) इत्यत्र किं साङ्ख्योक्तं प्रधानमव्यक्तशब्दाभिधेयम् ? उत नेति संशय। प्रधानमिति पूर्वं पक्ष। 'महतः परम्' इत्यादितत्तन्त्रप्रक्रियाप्रत्यभिज्ञानात्, 'पुरुषान्नपरं किञ्चित्' (१ ३ ११) इति पञ्चविंशकपुरुषातिरिक्त तत्त्वनिषेधाच्च। राद्धान्तस्तु—नाव्यक्तशब्देन प्रधानमिह गृह्यते। पूर्वत्र 'आत्मानं रथिनं विद्धि शरीरं रथमेव च' (१ ३ ३) इत्यादिना उपासनानिवृत्तये वशीकार्येन्द्रियादीनां प्रतिपादनाय ये आत्मशरीरबुद्धिमन इन्द्रियविषया रथिरथसारथिप्रग्रहहयगोचरत्वेन रूपिता, तेषु वशीकार्य परा 'इन्द्रियेभ्य परा' (१.३.१०) इत्यादिनोच्यते, तत्रेन्द्रियादय स्वशब्दैरेव गृह्यन्ते, रथत्वेन रूपितं शरीरमिहाव्यक्तपरिणामत्वेनाव्यक्तशब्देन गृह्यत इति नेह तत्तन्त्रप्रक्रियाप्रत्यभिज्ञा च। 'अव्यक्तात्पुरुषः परः' (१.३ ११) इति च न

पञ्चविंशकः ; अपितु प्राप्यः परमात्मैव । अन्तर्यामितयोपासनस्याप्युपायभूत इति सइह वशीकार्यकाष्ठात्वेन 'पुरुषान्न परं किञ्चित्' (१.३.११) इत्युक्तः ॥

सूत्रार्थस्तु—एकस्यां कठानां शाखायाम् आनुमानिकं प्रधानं जगत्कारणत्वेन 'महतःपरमव्यक्तम्' (१.३.१०) इत्याम्नायते इति चेत्—तत्र अव्यक्तशब्देन शरीराख्यरूपकविन्यस्तस्य गृहीतेः—पूर्वत्रात्मादिषु रथिरथादिरूपकविन्यस्तेषु रथत्वेन रूपितस्य शरीरस्यात्राव्यक्तशब्देन गृहीतेरित्यर्थः । अतो वशीकार्यत्वे परा इहोच्यन्ते, दर्शयति च एनमर्थं—वाक्यशेषः इन्द्रियादीनां नियमनप्रकारं प्रतिपादयन् 'यच्छेद्वाङ्मनसी' इत्यादिः ॥

कथमव्यक्तशब्दस्य शरीरं वाच्यं भवतीत्याशङ्क्याह—

## सू—२ सूक्ष्मं तु तदर्हत्वात् (१.४.२)

तुश०दोऽवधारणे । सूक्ष्मम् अव्यक्तमेवावस्थान्तरापन्नं शरीरं भवति, तदवस्थस्यैव कार्यार्हत्वात् ॥

यदि रूपकविन्यस्ता आत्मादय एव वशीकार्यत्वे पराः 'इन्द्रियेभ्यःपराः' (कठ.१.३.१०) इत्यादिना गृह्यन्ते; तर्हि 'अव्यक्तात्पुरुषः परः पुरुषान्नपरं किञ्चित्' (१.३.११) इति पुरुषग्रहणं किमर्थमित्यत आह—

## सू-३ तदधीनत्वादर्थवत् [१-४-३]

अन्तर्यामिरूपेणावस्थितपुरुषाधीनत्वादात्मादिकं सर्वं रथिरथत्वादिना रूपितम् अर्थवत् प्रयोजनवद्भवति । अत उपासननिर्वृत्तौ वशीकार्यकाष्ठा परमपुरुष इति तदर्थमिह रूपकविन्यस्तेषु परिगृह्यमाणेषु पुरुषस्यापि ग्रहणम् । उपायनिर्वृत्युपायकाष्ठा पुरुषः प्राप्यश्चेति 'पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः' (१.३.११) इत्युक्तम् भाष्यप्रक्रियया वा नेयमिदसूत्रम्—परमपुरुषशरीरतया तदधीनत्वाद्भूतसूक्ष्ममव्याकृतमर्थवदिति तदिहाव्यक्तशब्देन गृह्यते ; नाब्रह्मात्मकं स्वनिष्ठं तन्त्रसिद्धम्—इति ॥

## सू—४ ज्ञेयत्वावचनाच्च (१-४-४)

यदि तन्त्रसिद्धप्रक्रियेहाभिप्रेता ; तदाऽव्यक्तस्यापि ज्ञेयत्वं वक्तव्यम् । 'व्यक्ताव्यक्तज्ञविज्ञानात्' (साङ्ख्यकारिका.२.श्लो) इतिहि तन्त्रप्रक्रिया । नह्यव्यक्तमिह ज्ञेयत्वेनोक्तम् अतश्चात्र न तन्त्रप्रक्रियागन्धः ॥

## सू—५ वदतीतिचेन्न प्राज्ञो हि प्रकरणात् [१.४.५]

'अशब्दमस्पर्शम्' इत्युपक्रम्य 'महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते' (कठ.१.३.१५) इति प्रधानस्य ज्ञेयत्वमनन्तरमेव वदतीयं श्रुतिरितिचेत्—तत्र 'अशब्दमस्पर्शम्' (१.३.१५) इत्यादिना प्राज्ञःपरमपुरुष एव ज्ञेयोच्यते 'सोऽध्वनःपारमाप्नोति तद्विष्णोः परमं पदम्' (१.३.९) 'एषु सर्वेषु भूतेषु गूढोऽत्मा न प्रकाशते' (१.३.१२) इति प्राज्ञस्यैव प्रकृतत्वात् ॥

## सू—६ त्रयाणामेवचैवमुपन्यासः प्रश्नश्च (१.४.६)

अस्मिन्प्रकरणे 'येऽयं प्रेते विचिकित्सा मनुष्ये' इत्यारभ्याऽऽसमाप्तेः परमपुरुषतदुपासनोपासकानां त्रयाणामेवोपक्षेपे। तेन उत्तरार्थः प्रश्नस्य दृश्यते, न प्रधानादेस्तात्त्विकस्यापि । अतश्च न प्रधानमिह ज्ञेयत्वेनोक्तम् ॥

## सू—७ महद्वच्च (१.४.१)

यथा 'बुद्धेरात्मा महान्परः' (कठ.१.३.१०) इत्यादिवाक्यदृष्टमहानात्मशब्देन न तात्त्विकं महत्तत्त्वं गृह्यते, एवमव्यक्तशब्देनापि न तात्त्विकं प्रधानम् ॥

इति वेदान्तदीपः

### अथ अधिकरणसारावली

निर्णीतं वाक्यजातं परविषयतया स्पष्टजीवादिलिङ्गं
तत्सच्छायानुसारि प्रथयति तु वचस्तत्परन्तुर्यपादे ।
पद्भिर्द्वाभ्यां च तत्र प्रशमयति नयैस्साङ्ख्ययोगोक्तिशङ्कां
षट्को जाघट्ट इत्थं कथितनिगमनं त्वष्टमं केचिदूचुः ॥
द्वाभ्यां क्षेप्यं प्रधानं कपिलमतमथ त्वेकतोऽन्योक्तसङ्ख्या
तुर्येणाव्याप्तुतोक्तेरपि विभुरवधिस्स्थाप्यते द्वारवृत्त्या ।
शुद्धाशुद्धौ च जीवावधिकरणयुगेऽनन्तरं वारणीयौ
शेषं तत्रान्तरोक्तेश्वरनिरसनकृत्तुर्यपादाष्टकेऽस्मिन् ॥
अक्षाद्यव्यक्तनिष्ठं जडमथ पुरुषं तत्त्वकाष्ठां विविच्य
ब्रूते वल्ली कठानां परमतपठितां प्रक्रियामित्ययुक्तम् ।
तत्रस्यानेकवाक्योदितविविधवशीकार्यमुख्यक्रमोक्ते-
र्दृष्टान्तात्मा विष्णुरुक्तः पर इह पुरुषः प्रत्यभिज्ञाप्यते च ॥
नह्यर्था इन्द्रियाणां प्रकृतिरथ मनोहेतुरेवात्र चेष्टं
बुद्धिश्चैतत्र सूते नच महति महाज्ञायते बुद्धिसंज्ञः ।
भोक्तुर्युक्तम्महत्त्वं महति नहि भवेदात्मता पारिशेष्या
त्स्वव्यक्तोक्तिश्शरीरे तदिह न कपिलप्रक्रिया प्रत्यभिज्ञा ॥

॥ इ ति आ नु मा नि का धि क र णं स मा प्त म् ॥



## अथ चमसाधिकरणम्

### श्रीभाष्यम्

### सू=८ चमसवदविशेषात् (१.४.८)

अत्रापि तन्त्रसिद्धप्रक्रिया निरस्यते, न ब्रह्मात्मकानां प्रकृतिमहदहङ्कारादीनां स्वरूपम् श्रुतिस्मृतिभ्यां ब्रह्मात्मकानां तेषां प्रतिपादनात्। यथा आथर्वणिका अधीयते—'विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्। ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः॥ सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत्। गौरनाद्यन्तवती सा जनित्री भूतभाविनी। सितासिता च रक्ता च सर्वकामदुघा विभो। पिबन्त्येनामविषमामविज्ञाताः कुमारकाः। एकस्तु पिबते देव स्वच्छन्दोऽत्र वशानुगाम्। ध्यानक्रियाभ्यां भगवान्भुङ्क्तेऽसौ प्रसभं विभुः। सर्वसाधारणीं दोग्ध्रीं पीड्यमानां तु यज्वभिः' (मन्त्रिकोपनिषदि) 'चतुर्विंशतिसङ्ख्यातमव्यक्तं व्यक्तमुच्यते' इति। अत्र प्रकृत्यादीनां स्वरूपमभिहितम्;

## अथ चमसाधिकरणम्

### श्रुतप्रकाशिका

### सू=८ चमसवदविशेषात् [१.४.८]

कार्यशरीरवाचिपदस्य रूपके श्रवणात् तदव्यक्तशब्देनोच्यत इत्युक्तम्। अत्र तु कार्यशरीरवाचिशब्दाश्रवणात्कारणं प्रधानमेवोच्यत इति शङ्कया सङ्गतिः, व्याख्यानान्तरैर्गौणवृत्त्या तेजोऽबन्नपरत्वेन व्याख्यातम्। किमिदं वाक्यं प्रधानपरं, उत तेजोऽबन्नपरमिति विचारश्च कृतः, तद्दूषयितुं किं श्रुत्यन्तरस्वारस्यार्थमेव व्याख्यातम्? उत वाक्यस्वारस्यार्थमिति विकल्पमभिप्रेत्य स्ववाक्यस्वारस्याभावमुत्तरत्र वक्ष्यन् प्रथमं प्रधानस्य प्रामाणिकतया तन्निरासे श्रुत्यन्तरास्वारस्यज्ञापनाय प्रधानविषयवाक्यजातमुदाहर्तुमाह— अत्रापीति। विकारजननीमित्यादि। अष्टरूपां 'भूमिरापोऽनल.' इत्याद्युक्तप्रकारेण अजां उत्पत्तिरहितां ध्रुवां नाशरहितां ध्यायते परमात्मना सङ्कल्परूपज्ञानेन ज्ञायते अध्यासिता अधिष्ठिता, तन्यते विस्तार्यते, स्थूलावस्था क्रियते। समष्टिभूतरूपेण क्रियते। प्रेर्यते व्यष्टिसृष्ट्यर्थं प्रेर्यते पुरुषार्थं पुरुषाणामर्थनीय भोग्यभोगोपकरणभोगस्थानरूपं जगत् सूयते। गौरित्यादि। जनित्री भूतभाविनी इति समष्टिव्यष्टिसृष्टिरुच्यते सितासिता च रक्ता च गौण्या वृत्त्या सत्त्वरजस्तमोमयी। यद्वा तेजोऽबन्नद्वारा सितासिता रक्ता। विभो. ईश्वरस्य सर्वकामदुघा, लीलारसदोग्ध्री। अविषमां भोक्तृकर्मानुगुणपरिणामित्वादपक्षपातिनीम् अविज्ञाताः स्वात्मदेहेभ्यो विविच्यापरिज्ञाताः एकस्त्विति। कर्मवश्यबहुभोक्तृव्यावृत्त्यर्थं एकः स्वच्छन्द इत्युक्तम्। ध्यानक्रियाभ्यां सङ्कल्पसर्गादिव्यापाराभ्यां 'ऐक्षत' 'असृजत' इति द्वयमपि हि श्रूयते पीड्यमानां तु यज्वभिरिति। यजमाना हि मातरं क्षीरक्षरणार्थं पीडयित्वा भुञ्जते, तद्वत्कर्मवश्यैरात्मभिर्भोक्तृफलानुरूपं परिणाम्यमानामित्यर्थः। अत्रेति। प्रकृत्यादीनां प्रकृतिपुरुषमहदादीनां स्वरूपमभिहितम्। एषु वाक्येष्वीश्वरप्रतिपादनं प्रधानादीनां [illegible] इति भावः। ब्रह्मात्मकप्रधानपरवाक्यान्युक्तानि॥

## श्रीभाष्यम्

यदात्मकाश्चैते प्रकृत्यादयः, स परमपुरुषोऽपि ' तं षड्विंशकमित्याहुस्सप्तविंशमथापरे । पुरुषं निर्गुणं साङ्ख्यमथर्वशिरसो विदुः ' (मन्त्रिकोपनिषदि) इति प्रतिपाद्यते ; अपरेचाथ र्वणिका.–'अष्टौ प्रकृतयष्षोडश विकाराः ' ( ) इत्यधीयते ; श्वेताश्वतराश्चैवं प्रकृति-पुरुषेश्वरस्वरूपमामनन्ति ' संयुक्तमेतत्क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः । अनी-शश्चात्मा बध्यते भोक्तृभावात् । ज्ञात्वा देवं मुच्यते सर्वपाशैः ' (श्वे.१.८,९) ' ज्ञाज्ञौ द्वाव-जावीशनीशावजा ह्येका भोक्तृभोगार्थयुक्ता । अनन्तश्चात्मा विश्वरूपोह्यकर्ता त्रयं यदा विन्दते ब्रह्ममेतम्' (श्वे.१.९) 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः । तस्या-भिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः' (श्वे.१.१०) इति ; तथा 'छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति । अस्मान्मायी सृजते विश्वमेतत्तस्मिं श्चान्यो मायया सन्निरुद्धः ॥ मायां तु प्रकृतिं विद्या मायिनं तु महेश्वरम् । तस्यावयवभू-तैस्तु व्याप्तं सर्वमिदं जगत् ' (४.९,१०) इति । तथोत्तरत्रापि 'प्रधानक्षेत्रज्ञपतिर्गुणेशस्सं-सारमोक्षस्थितिबन्धहेतुः ' (६.१६) इति ; स्मृतिरपि 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभा वपि । विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् । कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते पुरुषस्सुखदुःखानां भोक्तृत्वे हेतुरुच्यते । पुरुषः प्रकृतिस्थोऽपि भुङ्क्ते प्रकृतिजान्गुणान् । कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु' (गी.१३.१९,२०,२१) ' सत्त्वं रजस्तम इतिगुणा प्रकृतिसम्भवाः । निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ' (गी.१४.५) तथा ' सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् । कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् । प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः । भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् '[९.७,८] 'मयाऽ ध्यक्षेण प्रकृतिस्सूयते स चराचरम् । हेतुनाऽनेन कौन्तेय जगद्धि परिवर्तते ॥ ' [९.१०] इति। तस्मादब्रह्मात्मकत्वेन कापिलतन्त्रसिद्धा प्रकृत्यादयो निरस्यन्ते । श्वेताश्वतरोपनिषदि

## श्रुतप्रकाशिका

अथ तदन्तर्यामिभगवत्प्रतिपादक वाक्य दर्शयितुमाह— यदात्मका इति । षड्विंशत्व कालस्य विंशतिदैवे प्रकृतितद्विकारेष्वन्तर्भावात् । सप्तविंशत्वं कालस्य तदनन्तर्भावविवक्षया पञ्चविंशकस्यैव लब्धैश्वर्यः कश्चिदुक्तः पञ्चविंश-मात्रप्रदर्शनार्थमुक्तमष्टौ प्रकृतय इति । अत्रापि वाक्यान्तरैकार्थ्यात् [illegible] सिद्धमिति भावः । [illegible] विकाराः । अवयवभूतैः, अंशभूतैः शरीरभूतैरित्यर्थः । स्मृतिं दर्शयति स्मृतिरपीति । एवं प्रधानस्य प्रामाणिकत्वात् [illegible] परत्वेन व्याख्यानमनुपपन्नमित्युक्तम् । [illegible] इत्यादि त । प्रकृत्यादय इत्यादिशब्देन महदादिरुच्यते । [illegible] विषयादिकं दर्शयति श्वेतेति। प्रकृतेरेव कर्तृत्वप्रतीतिजनकवाक्यजात [illegible]

श्वेताश्वतर–' अजामेकाम् ' इति मन्त्रेण अजाशब्दो यौगिकः किमब्रह्मात्मकप्रकृतिपरः ? उत ब्रह्मात्मकप्रकृति-परः इति विचारः । अत्राजशब्दश्रवणमात्रेण किमजायास्तात्पर्येण सह [illegible] नेति तैत्तिरीयके ' अजामेकाम्' इति मन्त्रे प्रतिपन्नाया अजायाः किं ज्योतिरुपक्रमा वर्णास्ति नेति, किमजा ज्योतिरुपक्रमा वे विकल्पते नेति, यदा वि

### श्रीभाष्यम्

श्रूयते 'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' (श्वे.४.५) इति। तत्र संदेहः—किमस्मिन् मन्त्रे केवला तन्त्रसिद्धा प्रकृतिरभिधीयते, उत ब्रह्मात्मिका इति। किं युक्तम्? केवलेति। कुतः 'अजामेकाम्' (४.५) इत्यस्याः प्रकृतेरकार्यत्वश्रवणात्, 'बह्वीः प्रजाः सृजमानां सरूपाः' (४.५) इति स्वातन्त्र्येण सरूपाणां बह्वीनां प्रजानां स्रष्टृत्वश्रवणाच्च इति॥

एवं प्राप्तेऽभिधीयते—'चमसवदविशेषात्'—न जायत इत्यजेत्यजात्वमात्रप्रतिपादनात्तन्त्रसिद्धाब्रह्मात्मकाजाग्रहणे विशेषाप्रतीतेः; चमसवत् यथा 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' (बृ.४.२.३) इत्यस्मिन्मन्त्रे चमसस्य भक्षणसाधनत्वमात्रं चमसशब्देन प्रतीयत इति न तावन्मात्रेण चमसविशेषप्रतीतिः, यौगिकशब्दानामर्थप्रकरणादिभिर्विनाऽर्थविशेषे परिनिश्चयायोगात्; तत्र 'यथेदं तच्छिरः एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' (बृ.४.२.३) इत्यादिना वाक्यशेषेण शिरसश्चमसत्वनिश्चयः;

### श्रुतप्रकाशिका

धेते, नेति यदा विरुध्येते तदा तैत्तिरीयकमन्त्रसिद्धाया अजाया ज्योतिरुपक्रमात्वाभावेन तदैकार्थ्यात् अजां सृजमानामिति पदयोः स्वातन्त्र्येण स्रष्टृत्वावगमकत्वात् श्वेताश्वतरमन्त्रस्थाजाशब्दोऽपि ब्रह्मात्मकत्वशून्यप्रकृतिपरः। यदा न विरुध्येते तदा तैत्तिरीयकमन्त्रप्रसिद्धाया अजाया ज्योतिरुपक्रमात्वेन तदैकार्थ्यमजां सृजमानामिति पदयोः स्वतन्त्रस्रष्टृत्वावगमकत्वाभावात् श्वेताश्वतरमन्त्रस्थोऽजाशब्दोऽपि ब्रह्मात्मकप्रकृतिपर इति। अजामिति। ब्रह्मात्मकत्वपक्षेऽजात्वं न सम्भवति तत्कार्यत्वाभ्युपगमादित्यर्थः। स्वातन्त्र्येणेति। 'सृजमानाम्' इति कर्तरि शानच्, स्वतन्त्रः कर्ता अतो न ब्रह्मपरतन्त्रत्वमित्यर्थः॥

एवंप्राप्तइति। अत्रापि कापिलतन्त्रसिद्धप्रक्रिया निरस्यत इत्युपक्रमस्य प्रतिज्ञावाक्यमनुषज्यत इति मत्वा हेतुमाह—नजायतइतीति। अथवा नजायत इतीत्यादिना हेतुपदं विवृण्वन् 'चमसवत्' इति सौत्रपदं प्रतिज्ञापरं मन्यमानः तेन हेतुपदस्यान्वयं दर्शयति चमसवदिति। विशेषाप्रतीतेरित्यन्तं हेतुपदव्याख्यानम्। अवयवशक्त्याऽजात्वमात्रप्रतिपादनेन विशेषाप्रतीतेश्चमसवदिति। वाक्यान्तरमन्तरेण विशेषतो निर्णेतुमशक्या भवतीत्यर्थः तदेव विवृणोति यथार्वागिति। अस्य यथाशब्दस्य तथात्रापीति भाष्येणान्वयः। चमसशब्दार्थं विशदयति भक्षणसाधनत्वमात्रमिति। चम्यतेऽनेनेति चमसशब्दव्युत्पत्तिरिति भावः; मात्रशब्देन विशेषव्यावृत्तिः इति शब्दो हेतुपरः, विशेषप्रतीत्यभावादित्यर्थः, विशेषप्रतीत्यभावे चमसस्साधर्म्यदृष्टान्ततया व्याख्यातः 'चमसवत्' इत्यनेन अर्थसिद्धं दृष्टान्तदार्ष्टान्तिकसाधारणाकारं हेतुं दृष्टान्तोपपादकत्वेन दर्शयति यौगिकशब्दानामिति। साधारणावयवार्थबोधकानां यौगिकशब्दानामित्यभिप्रायः, तेनासाधारणावयवार्थबोधकशब्दभिदादिशब्दव्यावृत्तिः, अर्थः वक्तृतात्पर्यम् आदिशब्दः समाख्याविशेषशब्दादिपरः विशेषनिश्चयायोगादित्यस्य पूर्ववाक्येनान्वयः, अवयवशक्तेः साधनमात्रप्रत्यायकत्वादर्थप्रकरणादिभिर्विना विशेषनिश्चयायोगात् चमसशब्देन यथा न चमसविशेषप्रतीतिरित्यर्थः॥

ननु यथा चमसविशेषो वाक्यशेषावसेयः, तद्वदजाविशेषोऽपि हेत्वन्तरेण निर्णेतुं शक्यत इति शङ्कायां परपक्षे निश्चयस्याशक्यतां दर्शयितुं स्वपक्षे विशेषनिश्चयप्रकारमाह—तत्र यथेदं तच्छिरइति। यथा इति श्रुतिपदम्।

### श्रीभाष्यम्

तथाऽत्राप्यर्थप्रकरणादिभिरेवाजा निर्णेतव्या ; नचात्र तन्त्रसिद्धाजाग्रहणहेतवोऽर्थप्रकरणादयो दृश्यन्ते ; नचास्यास्स्वातन्त्र्येण स्रष्टृत्वं प्रतीयते, ' बह्वीःप्रजास्सृजमानाम् ' इति स्रष्टृत्वमात्रप्रतीतेः । अतोऽनेन मन्त्रेण नाब्रह्मात्मिकाऽजाऽभिधीयते ॥

ब्रह्मात्मकाजाग्रहण एव विशेषहेतुरस्तीत्याह—

## सू—९ ज्योतिरुपक्रमा तु तथा ह्यधीयत एके (१.४.९)

तुशब्दोऽवधारणार्थः ; ज्योतिरुपक्रमैवैषाऽजा ; ज्योतिः ब्रह्म ' तं देवा ज्योतिषां ज्योतिः ' (बृ.६.४.१६) ' अथ यदतः परो दिवो ज्योतिर्दीप्यते ' (छां.३.१३.७) इत्यादिश्रुतिप्रसिद्धेः । ज्योतिरुपक्रमा ब्रह्मकारणिकेत्यर्थः । तथाह्यधीयत एके। हीति हेतौ, यस्मादस्या अजाया ब्रह्म कारणिकत्वमेके शाखिनः तैत्तरीया अधीयते ' अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्यजन्तोः '[तै.नारायण.१२) इति हृदयगुहायामुपास्यत्वेन सन्निहितं ब्रह्माभिधाय ' सप्त प्राणाः प्रभवन्ति तस्मात् ' इत्यादिना सर्वेषां लोकानां ब्रह्मादीनां च तत उत्पत्तिमभिधाय सर्वकारणीभूताऽजा तत उत्पन्नाऽभिधीयते ' अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् । अजोह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः इति । सर्वस्य तद्व्यतिरिक्तस्य वस्तुजातस्य तत उत्पत्त्या

### श्रुतप्रकाशिका

दृष्टान्ते दर्शितस्य न्यायस्य दार्ष्टान्तिकेऽप्यवर्जनीयत्वमाह—तथात्रापीति । यथा ' अर्वाग्बिलश्चमसः ' इति मन्त्रे न चमसविशेषप्रतीतिः, तत्र विशेषनिश्चयश्च निश्चायकवाक्यान्तराधीनः तथाऽत्रापि निश्चायकान्तरेण अजाविशेषनिश्चयः कार्य इत्यर्थः । ततः किमित्यत्राह—नचात्रेति । ' सृजमानाम् ' इति स्वातन्त्र्येण स्रष्टृत्वप्रतीतिर्विशेषनिश्चायिकेत्यत्राह—नचास्या इति । स्वातन्त्र्येण ईश्वराधिष्ठितत्वमन्तरेणेत्यर्थः । स्रष्टृत्वमात्रप्रतीतेरिति । स्वव्यापाराश्रयत्वलक्षणं स्वातन्त्र्यमेव प्रत्ययवाच्यं, नत्वपरप्रेर्यत्वरूपमिति मात्रशब्दाभिप्रायः । रथो गच्छतीत्यत्र कर्तृप्रत्ययो हि स्वव्यापाराश्रयत्वरूपस्वातन्त्र्यं रथस्यावगमयति, नत्वपरप्रेर्यत्वं अपरप्रेर्यत्वलक्षणस्वातन्त्र्यप्रतीत्यभ्युपगमेऽपि तादृशस्वातन्त्र्यलक्षणं कर्तृत्वं किं प्रकृत्याश्रयम् उताजाशब्दवाच्यप्रकृतिशरीरकब्रह्माश्रयमिति विषये प्रकृतिमात्राश्रयमिति निश्चायकाभावश्च मात्रशब्दाभिप्रेतः।यदि ब्रह्मात्मकत्वं प्रामाणिकस्यात् तदानीमिह प्रतीयमान स्वातन्त्र्यलक्षणकर्तृत्वं हि तद्द्वारतया ब्रह्मण्यविरोधित्वात्

उत्तरसूत्रमवतारयति—ब्रह्मात्मिकेति ।

## सू-९ ज्योतिरुपक्रमा तु तथा ह्यधीयत एके [१-४-९]

तुशब्दस्य पक्षव्यावर्तकत्वं पूर्वपक्षव्युदासाय व्याचष्टे तुशब्द इति । इतरोऽर्थव्यावृत्यर्थं श्रुतिप्रसिद्ध्यनुरोधेन व्याचष्टे, ज्योतिर्ब्रह्मेति । तदेव दर्शयति तं देवा इति । ब्रह्मकारणत्वपरतां प्रकर्षेण दर्शयति । अणोरणीयानिति । नहि ' अजामेकाम् ' इत्यस्मिन्मन्त्रे उत्पत्तिः प्रतीयत इत्यत्राह—सर्वस्येति । यथा ' इष्टोऽदजति पर्दिर्यजति तनूनपातं यजति ' इत्यादिष्वश्रूयमाणफलेऽपि ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' इत्यादिप्रकरणस्थफलं तदङ्गत्वं निश्चीयते प्रयाजादिप्रकरणस्यास्याप्युत्पत्तिसिद्धेत्यर्थः । अस्मिन्मन्त्रे न प्रकृतिर्विवक्षिता, प्रकृतिप्रकरणस्य पूर्वमेवाविच्छेदात् , अत—

श्रीभाष्यम्

तदात्मकत्वोपदेशे प्रक्रियमाणेऽभिधीयमानत्वात्प्राणसमुद्रपर्यन्तादिवदेषाऽप्यजा यह्वीनां सरूणां प्रजानां स्रष्ट्री कर्मवश्येनाऽऽत्मना भुज्यमाना अन्येन विदुषात्मना त्यज्यमाना च ब्रह्मण उत्पन्ना ब्रह्मात्मिकाऽयगन्तव्येत्यर्थः। अतो यावदशेषाघ्रस्वरि केषवच्छन्दोगतरीयादेतत्सरूपात्प्रत्यभिज्ञायमानार्थाद्धोपयाऽनियमिताऽजा ब्रह्मात्मिकेति निश्चीयते। इहापि प्रकरणोपक्रमे 'किं कारणं ब्रह्म' (श्वे.१.१) इत्यारभ्य 'ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम्' (१.३) इति परब्रह्मशक्तिरूपाया अजाया अवगतेः, उपरिष्टाच्च 'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः' (४.९) 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' 'यो योनिं योनिमधितिष्ठत्येकः' (४.१०,११) इति च तस्या एव प्रतीतेर्नास्मिन्मन्त्रे तन्त्रसिद्धस्वतन्त्रप्रकृतिप्रतिपत्तिगन्धः॥

कथं तर्हि ज्योतिरुपक्रमाया लोहितशुक्लकृष्णरूपाया अस्याः प्रकृतेरजात्वम् अजाया कथं ज्योतिरुपक्रमात्वमित्यत्राह—

## सू—१० कल्पनोपदेशाच्च मध्वादिवदविरोधः (१-४-१०)

प्रसक्ताशङ्कानिवृत्त्यर्थश्चशब्दः। अस्याः प्रकृतेरजात्वं ज्योतिरुपक्रमात्वं च न विरुध्यते; कुतः? कल्पनोपदेशात्। कल्पनं क्लृप्तिः सृष्टिः; जगत्सृष्ट्युपदेशादित्यर्थः।

श्रुतप्रकाशिका

'जहात्येनां भुक्तभोगामजोऽन्यः' इत्युक्तस्य मुक्तस्योत्पत्त्यनुपपत्तेश्चेत्यत्राह—यह्वीनामिति। न सृष्टिप्रकरणविच्छेद इत्यर्थः, 'यस्माज्जाता नपरा नैव किंच नास' इत्युत्तरत्रापि सृष्ट्यनुवृत्तेरिति चार्थसिद्धम्। सर्वस्य तद्व्यतिरिक्तस्य वस्तुजातस्य तत उत्पत्त्या तदात्मकत्वोपदेशे प्रक्रियमाण इति युक्तम्। मुक्तात्मकीर्तनं तु [illegible] संसारवरण विच्छेदात् यथा बद्धात्मकीर्तनमित्यभिप्रेत्याह—कर्मवश्येनात्मना भुज्यमानाऽन्येन विदुषात्मना त्यज्यमानाचेति। एवं तन्त्रसिद्धाजात्वविरोधिज्योतिरुपक्रमात्वं शाखान्तरे दर्शितम्। अथ 'सृजमानाम्' इति पदप्रतीतस्वातन्त्र्यविरोधि ब्रह्मात्मकत्वं स्वप्रकरणे दर्शयति। इहापीति। शक्तिरूपायाः, अपृथक्सिद्धविशेषणरूपायाः कार्योपयोग्यपृथक्सिद्धि [illegible] यणाहि शक्तिः। योनिं जगद्योनिभूतां प्रकृतिमित्यर्थः तस्या एव ब्रह्मात्मिकाया एव स्वतन्त्रप्रकृतिप्रतिपत्तिगन्धइति। न केवलं शाखान्तरैकार्थ्यात् स्वप्रकरणाच्च ब्रह्मात्मकत्वावगमादिति भावः॥

उत्तरसूत्रशङ्कामाह—कथंतर्हीति। लोहितशुक्लकृष्णाकारं हि कार्यावस्थायामुपपद्यते, तदानीं ज्योतिरुपक्रमात्वाङ्गीकारे अजात्वानुपपत्तिः, अजात्वे ज्योतिरुपक्रमात्वानुपपत्तिरित्यर्थः—

## सू—१० कल्पनोपदेशाच्च मध्वादिवदविरोधः [१.४.१०]

प्रसक्तेति। चस्त्वर्थ इत्यर्थः। अविरोधशब्दार्थमाह—अस्याइति। अकल्पितस्य कल्पनारोपणपरत्वव्युदासाय कल्पनशब्दस्य सृष्टिवाचित्वं धातोस्सृष्टिवाचित्वेन दर्शयति कल्पनं क्लृप्तिरिति। क्लृप्तिशब्दं विशदयति सृष्टिरिति। क्लृप्त शिल इत्यादिप्रयोगो लोकसिद्ध इति मत्वा श्रौतप्रयोगं दर्शयति—

श्रीभाष्यम्

यथा 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' (तै.नारा १.१३) इति कल्पनं सृष्टिः। अत्रापि 'अस्मान्मायी सृजते विश्वमेतत्' [४.९] इति जगत्सृष्टिरुपदिश्यते। स्वेनाविभक्तादस्मात्सूक्ष्मावस्थात्कारणान्मायी सर्वेश्वरस्सर्वं जगत्सृजतीत्यर्थः। अनेन कल्पनोपदेशेनास्याः प्रकृतेः कार्यकारणरूपेणावस्थाद्वयान्वयोऽवगम्यते। सा हि प्रलयवेलायां ब्रह्मतापन्ना अविभक्तनामरूपा सूक्ष्मरूपेणावतिष्ठते, सृष्टिवेलायां तद्भूतसत्त्वादिगुणा विभक्तनामरूपाऽव्यक्तादिशब्दवाच्या तेजोबन्नादिरूपेण च परिणता लोहितशुक्लकृष्णाकारा चावतिष्ठते। अतः कारणावस्थाऽजा, कार्यावस्था ज्योतिरुपक्रमेति न विरोधः। मध्वादिवत् यथेश्वरेणादित्यस्य कारणावस्थायामेकस्यैवावस्थितस्य कार्यावस्थायामृग्यजुस्सामाथर्वप्रतिपाद्यकर्मनिष्पाद्यरसाश्रयतया वस्वादिदेवताभोग्यत्वाय मधुत्वकल्पनमुदयास्तमयकल्पनं च न विरुध्यते। तदुक्तं मधुविद्यायाम् 'असौ वा आदित्यो देवमधु' (छां.३.१.१) इत्यारभ्य 'अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता' (३.११.१) इत्यन्तेन, एकल एकस्वभावः। अतोऽनेन मन्त्रेण ब्रह्मात्मिकाऽजैवाभिधीयते, न कापिलतन्त्रसिद्धेति सिद्धम्॥

अन्ये त्वस्मिन्मन्त्रे तेजोबन्नलक्षणाऽजैकाभिधीयत इति वदन्ते। ते प्रष्टव्याः—किं तेजोबन्नान्येव तेजोबन्नात्मिकाऽजैका, उत तेजोबन्नरूपं ब्रह्मैव, किं वा तेजोबन्नकारणभूता काचित्—इति। प्रथमे कल्पे तेजोबन्नानामनेकत्वात् 'अजामेकाम्' इति विरुध्यते।

श्रुतप्रकाशिका

यथेति। 'प्राकल्पयद्यो भुवनानि सप्त' इत्यादिस्मृतिप्रयोगश्च प्रसिद्धः। अतो ज्योतिः कल्पनशब्दौ वैदिकशब्दनिर्देशानुसारिणौ। तथा निर्देशश्च मुनिसमाधि 'सम्प्रसादादध्युपदेशात्' 'समानो ज्योतिषा' इत्यादिषु दर्शनात्। अजा ज्योतिरुपक्रमात्वयोरविरोधसिद्धिं दर्शयति। अनेनेति। अवस्थाद्वय त्रिगुणेति साहीति। ब्रह्मताऽपन्ना कारणावस्थब्रह्मताऽपन्ना॥

ननु कथं प्रकृतेर्ब्रह्मतापत्तिः, नह्यन्यद्द्रव्यं द्रव्यान्तरं भवति। सत्यं नात्र केवलप्रकृतेर्ब्रह्मतापत्तिर्विहिता, किंतु प्रकृतिशरीरकब्रह्मणः कारणावस्थाप्राप्तिः। भाष्ये प्रकृत्युपस्थापकसेति पदहि ब्रह्मण्यं ते कारणावस्थब्रह्मैव प्रकृतिशब्देनाभिधीयत ब्रह्मव्यतिरिक्तवस्त्वन्तराभावादिति प्रकृत्यधिकरणे वक्ष्यमाणत्वात्। कार्यावस्था ज्योतिरुपक्रमेति। कार्याऽवस्थाऽजाशरीरकं ब्रह्म कारणमित्यर्थः। सूत्रोक्तं व्याचष्टे मध्विति। उदयास्तमयमधुकल्पनानि तदभावश्चादित्य। वस्थाद्वयेन यथोपपन्नानि तथाऽजा ज्योतिरुपक्रमात्वे अवस्थाभेदेन प्रकृत्यानैक्यधर्मिण्यवबद्धत्यर्थः। एकस्य ईश्वरेणैकस्य अविभक्तनामरूपस्येत्यर्थः —'ज्योतिरुपक्रमेत्यादि सूत्रद्वयस्य परास्तमथ निराह्विक्षिदुत्तप्र प्रथमस्य सूत्रस्यार्थं दूषयति, अन्ये त्विति। दूषयितुं विकल्पयति किमिति। अत्र वत्र परिकल्प्यमाना वस्तु किं सर्वेऽस्मा वस्त्यः। अजा चैकत्व सिद्ध्यर्थं ब्रह्मकारणत्वादानुगुण्यार्थं च ब्रह्मानुबन्धि ब्रह्म मध्यम शिरा दर्शितम्। तेजोऽबन्नरूपं तेजोऽबन्नादस्य ब्रह्म किमकच्छागत्वेन कल्प्य इत्यर्थः। तेजोऽबन्नकारणभूता काचिदिति। तत्राबन्नवाचकशब्देन, अधिष्ठितात्कारणभूता काचिदेकाजात्वेन किं रूप्यतेत्यर्थः। प्रथम शिरा दूषयति प्रथमइति। एकत्वविरोधपरिहारमाशङ्क्याह—

### श्रीभाष्यम्

न च वाच्यं तेजोऽबन्नानामनेकत्वेऽपि त्रिवृत्करणेनैकतापत्तिरिति। त्रिवृत्करणेऽपि बहुत्वानपगमात्, 'इमास्तिस्रो देवताः' [छां.६.३.[illegible]] 'तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' (६.३.३) इति प्रत्येकं त्रिवृत्करणोपदेशात्। द्वितीयः कल्पो विकल्प्यः किं तेजोऽबन्नरूपेण विकृतं ब्रह्मैवाजा पदम्; किं वा स्वरूपेणावस्थितमविकृतमिति। प्रथमः कल्पो बहुत्वानपायादेव निरस्तः। द्वितीयेऽपि 'लोहितशुक्लकृष्णाम्' (श्वे.४.५) इति विरुध्यते। स्वरूपेणावस्थितं ब्रह्म तेजोऽबन्नलक्षणमिति वक्तुमपि न शक्यते। तृतीये कल्पेऽप्यजाशब्देन तेजोऽबन्नानि निर्दिश्य तत्तत्कारणावस्थोपस्थापनीयेत्यास्थेयम्। ततो वरमजाशब्देन तेजोऽबन्नकारणावस्थायाः श्रुतिसिद्धाया एवाभिधानम्। यत्पुनरस्याः प्रकृतेरजाशब्देन छागत्वपरिकल्पनमुपदिश्यत इति; तदप्यसङ्गतं, निष्प्रयोजनत्वात्। यथा 'आत्मानं रथिनं विद्धि' (कठ.१.३.३) इत्यादिषु ब्रह्मप्राप्त्युपायताख्यापनाय शरीरादिषु रथादिरूपणं क्रियते; यथा चादित्ये वस्वादीनां भोग्यत्वख्यापनाय मधुत्वकल्पनं क्रियते; तद्वदस्यां प्रकृतौ छागत्वपरिकल्पनं क्वोपयुज्यते; न केवलमुपयोगाभाव एव, विरोधश्च; कृत्स्नजगत्कारणभूतायाः स्वस्मिन्नादिकालसंबद्धानां सर्वेषामेव चेतनानां निखिलसुख-

### श्रुतप्रकाशिका

नच वाच्यमिति। कुत इत्यत्राह—त्रिवृत्करणेऽपीति। बहुत्वानपगममुपपादयति इमा इति। न समुदायैकत्वम् अपि तु समुदायत्रयमेवेत्यर्थः। द्वितीयं शिरो विकल्पयति किमिति। तेजोऽबन्नरूपेण ब्रह्मणो विकाराः किमजाशब्देनोच्यन्ते—उत स्वरूपमिति विकल्पग्रन्थार्थः। प्रथमे शिरसि अस्य बहुत्वादेव विरोधमाह—प्रथम इति। मध्यमे शिरसि द्वितीयकल्पं दूषयति द्वितीयेऽपीति। ब्रह्मस्वरूपे लोहितशुक्लकृष्णत्वाभावात् श्रुत्यस्वारस्यमित्यर्थः। तेजोऽबन्नादिसर्वात्मकस्य ब्रह्मणः किं नोपपद्यत इत्यत्राह—स्वरूपेणेति॥

यद्वा सूत्रस्वारस्यमप्याह—स्वरूपेणेति। 'ज्योतिरुपक्रमे' इति हि सौत्रपदम्, ज्योतिरुपक्रमशब्दस्तेजोऽबन्नवाचीति हि तैर्व्याख्यातम्। नहि ब्रह्मस्वरूपं तेजोऽबन्नशब्दवाच्यम् अतः सूत्रास्वारस्यमित्यर्थः। तेजोऽबन्नावस्थाविशिष्टं ब्रह्म अजाशब्दवाच्यमितिपक्षे किमस्याविशिष्टस्य सद्वारकं अद्वारकं वा अद्वारकत्वे लोहितशुक्लकृष्णत्वविरोधः 'अजामेकां लोहितम्' इति श्रुतेः। सद्वारकत्वे असत्पक्ष एव परिगृहीतः स्यात् इति विकल्पपरिहारयोः स्पष्टत्वादनुक्तिः। प्रथमविकल्पितशिरस्त्रयं तृतीयं शिरो दूषयति तृतीय इति। लोहितशुक्लकृष्णवाजा वैकत्वसिद्ध्यर्थमयं पक्षस्तदाश्रितः। तत्र दूषणमुच्यते अजाशब्देनेति। तेजोऽबन्नानामवाचकस्य अजाशब्दस्य तेजोऽबन्नपरत्वमारोप्य तेन तत्कारणस्य लक्षणयोपस्थापनादपि मुख्यवृत्त्या कारणप्रतिपादनपरत्वाश्रयणं युक्तमित्यर्थः, 'कल्पनोपदेशात्' इति सूत्रस्य परोक्तमर्थं दूषयति यत्पुनरस्या इति। सर्वत्र रूढितोऽवयवशक्तया वा प्रतिपाद्यमानमुख्यार्थपरिग्रहस्स्वतःप्राप्तः, गौणार्थपरिग्रहस्तु मुख्यार्थानुपपत्त्या क्रियते। तत्रौचित्यातिशयलाभोऽनेकपदमुख्यार्थबाधाद्विधा प्रयोजनम्। तत्र मुख्यार्थानुपपत्त्यभावः प्रदर्शितः, अजात्वज्योतिरुपक्रमात्वयोरवस्थाभेदेनाविरोधश्चोक्तः। अतोऽर्थौचित्यलाभरूपप्रयोजनाभावं दूषणमाह—निष्प्रयोजनत्वादिति। प्रयोजनाभावस्य दूषणत्वज्ञापनाय कल्पनस्य प्रयोजनसिद्ध्यर्थतां दर्शयति यथाऽऽत्मानमिति। विरोधं दर्शयति कृत्स्नेति।






श्रीभाष्यम्

दुःखोपभोगापवर्गसाधनभूतायाः अचेतनायाः अत्यल्पप्रजासर्गकरागन्तुकसङ्गमचेतनविशेषैकरूपात्यल्पप्रयोजनसाधनत्वपरित्यागाहेतुभूतस्वसंबन्धिपरित्यागसमर्थचेतनविशेषरूपच्छागस्वभावख्यापनाय तद्रूपत्वकल्पनं विरुद्धमेव। 'अजामेकाम्' 'अजोह्येकः' (कठ.१.३ ३) '*अजोऽन्यः*' इत्यत्राजाशब्दस्य विरूपार्थकल्पनं च न शोभनम्। सर्वत्र छागत्वं परिकल्प्यत इति चेत् 'जहात्येनां भुक्तभोगामजोऽन्यः [१.३.३] इति विदुष आत्यन्तिकप्रकृतिपरित्यागं कुर्वतोऽनेनचाऽन्येन वा पुनरपि संबन्धयोग्यच्छागत्वपरिकल्पनमत्यन्तविरुद्धम् ॥

इति चमसाधिकरणम्

श्रुतप्रकाशिका

एकरूपेति। दुग्धादिरेव प्रयोजनमित्यर्थः अचेतनाया इत्यनेन स्वसंबन्धिपरित्यागासामर्थ्यं सिद्धमिति तत्प्रत्यनीकाकारमाह—स्वसम्बन्धीति। परिमितकार्यकरत्वादिरत्र विरोध उक्तः। दूषणान्तरमाह—अजामिति। अर्थैकरूप्यं शङ्कते—सर्वत्रेति। तत्र विरोधान्तरमाह—जहातीति। एवमर्थौचित्यलाभरूपप्रयोजनाभावो दर्शितः। सर्वत्र छागत्वपरिकल्पनशङ्कोपन्यासेनैवानेकपदान्तरमुख्यार्थत्वसिद्धिरूपप्रयोजनाभावश्च फलितः। एवं हेत्वभावात् प्रयोजनाभावाच्च छागत्वपरिकल्पनं व्युदस्तम् ॥

ननु नात्र विरोधः कार्यकारित्वप्रयोजनसाधनत्वचेतनसङ्गादिमात्रस्य विवक्षितत्वात्। नहि दृष्टान्तगतसर्वधर्माणां विवक्षानियमोऽस्ति तथासति सर्वत्र दृष्टान्तोपन्यासभङ्गप्रसङ्गात् 'गौरनाद्यन्तवती' 'आत्मानं रथिनं विद्धि' इत्यादिषु च प्रकृत्यादेर्गोत्वादिपरिकल्पनं दृश्यते, तच्च सर्वथा साधर्म्यविवक्षाया न घटत इति। उच्यते— 'आत्मानं रथिनं विद्धि' इत्यत्र पृथगेव रूप्यरूपकवाचिपदश्रवणात् रूपकानङ्गीकारे रूपकवाचिपदवैयर्थ्यप्रसङ्गात् येन कारणेन साधर्म्यं योग्यं प्राप्त्युपायतादिरूपं तदाकारमात्रं तत्र विवक्षितमिति निश्चितं प्रयुक्तपदवैयर्थ्यपरिहारार्थं 'अजामेकाम्' इति वाक्येतु रूप्यरूपकवाचिपदद्वयाश्रवणात् अर्थौचित्यं नावगम्यते, तेन गौणवृत्त्यनङ्गीकारेऽपि नवैयर्थ्यम् 'गौरनाद्यन्तवती' इत्यत्र रूप्यवाचिपदाश्रवणात् अजाशब्दवद्गोशब्दस्यावयवशक्त्या प्रकृत्युपस्थापनासामर्थ्याच्च गत्यभावाद्गौणीवृत्तिराश्रिता 'अनाद्यन्तवती' 'सर्वकामदुघे' इत्याद्युचितविशेषणश्रवणादर्थौचित्यमवगम्यते। अजाशब्देतु न तथा गत्यन्तराभावः, उचितावयवार्थसंभवात्। उचितविशेषणं च रूढिसिद्धाऽजात्वार्थके न श्रूयते पुंल्लिङ्गाजशब्दयोश्चामुख्यत्वं 'बह्वीः प्रजाः' इत्यादिपदानां सङ्कोचश्च विफलः। अतः प्रयुक्तपदवैयर्थ्यपरिहारपदान्तरस्वारस्यार्थौचित्यसद्भावासद्भावरूपवैषम्यात् 'आत्मानं रथिनं विद्धि' इत्यादिवद्दूषणपरत्वमनुक्तम्। कार्यकारित्वाद्यर्थमात्रविवक्षायामर्थविरोधाभावो यदुक्तं, स चेन्मुख्ययैव वृत्त्या लभ्यते तदा गौणवृत्तिपरिग्रहो निष्फलत्वादनुपपन्नः। एवं परोक्तस्य 'ज्योतिरुपक्रमे' इत्यादिसूत्रार्थस्य एकशब्दार्थविरोध उक्तः, 'कल्पनोपदेशात्' इति सूत्रस्याजाशब्दास्वारस्य दूषणतयोक्तम्। यद्यपि ज्योतिरुपक्रमाशब्देन तेजः प्रमुखत्वं, कल्पनाशब्देनारोपितजन्मादावोक्तं च परोक्तं सूत्राक्षरानुगुणमिव प्रतीयते, तथाऽप्यनुपपत्तिपराहतम्। अस्मदुक्तार्थेतु वैदिकनिर्देशसमाधिना स्वरसतरत्वं, अपि भिदा 'चमसवदविशेषात्' इति सूत्रं परस्यास्वरसं चमसशब्दस्य यौगिकत्वात् रूढार्थदृष्टान्तपरत्वाभावाच्च ॥

इति चमसाधिकरणम्